संस्कृत-संशोधन-संसद्-ग्रन्थमाला

# श्री भाष्यम्

भगवद्रामानुजविरचितं शारीरकमीमांसाभाष्यम्

(विमर्शात्मकं सम्पादनम्)

चतुर्थसम्पुटः

# ŚRĪBHĀṢYAM

ŚĀRĪRAKAMĪMĀṂSĀBHĀṢYAM

(Critical Edition)

Volume IV

प्रकाशनस्थानम्

संस्कृत-संशोधन-संसद्

(यादवाद्रिः) मेलुकोटे-५७१ ४३१

१९९१

# श्रीभाष्यम्

[शारीरकमीमांसाभाष्यम्]

चतुर्थसम्पुटम्

# ŚRĪBHĀṢYAM

ŚĀRĪRAKAMĪMĀṂSĀBHĀṢYAM

Volume IV

श्रीभाष्यम् (चतुर्थसम्पुटः)
भगवद्रामानुजग्रन्थमालानिगमः
संस्कृत-संशोधन-संसत्,
मेलुकोटे-५७१ ४३१

प्रमुखसम्पादकः
एम्. ए. एस्. राजन्, ऐ.ए.एस्. (निवृत्तः)
अध्यक्षः

प्रधानसम्पादकः
प्रो. एम्. ए. लक्ष्मीताताचार्यः, एम्.ए., सि.ए.इ.,
निर्देशकः

प्रकाशनस्थानम्
संस्कृत-संशोधन-संसत्, यादवाद्रिः

प्रथमं संस्करणम् : १९९१

प्रतयः : १०००



मूल्यम् : 170.00

मुद्रणस्थानम् :
विवेक मुद्रणालयः,
८९१/२, नारायणशास्त्री वीथी,
मैसूरु-५७० ००४

The Academy of Sanskrit Research Series

# ŚRĪBHĀṢYAM

## ŚĀRĪRAKAMĪMĀṂSĀBHĀṢYAM

(Critical Edition)

Vol. IV

*Published by*

THE ACADEMY OF SANSKRIT RESEARCH

MELKOTE-571 431

1991

SRĪBHĀSYAM Vol. IV

A Project of the Academy of Sanskrit Research, Melkote

*General Editor :*

**M. A. S. Rajan**, I.A.S. (Retd.)

President

*Chief Editor :*

**Prof. M. A. Lakshmithathachar**

Director

*Publisher :*

The Academy of Sanskrit Research, Melkote

First Edition : 1991

Copies : 1000



*Price :* Full Calico—Rs.

Half Calico—Rs.

*Printed at :*

Vivek Printers

891/2, N. S. Road

Mysore-570 004

# कार्यनिर्वाहकमण्डली

प्रमुखसम्पादकः

एम् . ए. एस्. राजन्, ऐ.ए.एस्. (निवृत्तः)

प्रधानसम्पादकः

एम् . ए. लक्ष्मीताताचार्यः, एम् .ए., सि.ए.इ.

न्यायविद्वान्, राष्ट्रभाषा प्रवीणः

सम्पादकः, निगमाध्यक्षश्च

एन्. एस्. रामभद्राचार्यः

प्राचीनन्याय-नवीनन्याय-अलङ्कारविद्वान्

विश्रान्तनवीनन्यायोपाध्यायः

# FOREWORD

It is with a feeling of satisfaction that the Academy is placing in the hands of the esteemed public this final volume (Volume IV) of the critical edition of Sribhashyam. The three earlier volumes were released in 1985, 87 and 90 respectively. The present volume covers chapters 3 & 4 of Sribhashyam. While chapter 3 deals with the pathway to the goal of life (*Sadhana*) the concluding chapter explains the goal itself (*Phala*).

The exposition of the path towards, and the nature of, final emancipation (*Moksha*) is a sequel to the explanation of the nature of ultimate reality (*tattva*) which is the subject of the first two chapters ; these chapters were presented in the first three volumes of the series. The present volume has followed the same mode of presentation as the earlier ones.

To say just a word about the objective of the Academy in bringing out the works of Sri Ramanuja in the present series, I may be permitted to quote from an earlier foreword (Volume III) :

" *The basic aim of the Academy is to offer the principal works of* Visistadvaita *in authoritative, well-referenced user-friendly edition. The signal contribution of these volumes are in their appendices (which) provide in condensed form all the adjuncts and facilities needed by the scholarly reader. We hope that this series has come up to their expected standards* ".

It is my pleasure to congratulate Vidwan N.S. Ramabhadracharya who has led the project throughout, for having completed his onerous responsibility with excellence. My thanks are due to the associate scholars and proof-readers who have co-operated whole-heartedly in completing this project.

The Academy is grateful to the distinguished scholars who, as members of the scrutiny committee have contributed in maintaining the high standards of execution of critical editions.

Prof. M. A. Lakshmithathachar, the Director has guided the team of scholars of the Academy in fulfilling the task of publication of this principal work of Sri Ramanuja. I am beholden to him on behalf of the Academy.

On behalf of the Academy, it is my duty to tender our thanks to the State and Central Governments who have continued to provide generous financial aid for publications planned by the Academy.

My sincere thanks are also due to M/s. Vivek Printers, Mysore, who have done their work with meticulous care.

October 1991 **M. Ạ. S. Rajan**
Bangalore President

## PREFACE

It gives me great pleasure and satisfaction in presenting this final volume of SRIBHASHYAM in the hands of the lovers of Indian philosophy. The first volume of this work was published in 1985 and the subsequent volumes were released later. The fourth and final volume is published in 1991.

The philosophy of Upanisads is beautifully treated by Ramanuja in his magnum opus SRIBHASHYAM which is written as a commentary on the *Brahmasutras* of *Badarayana*. This philosophy was later termed as *Visistadvaita* or *Savisesadvaita* by his followers. In the first three volumes consisting of chapters 1 and 2, the concept of Brahman is brought out in a succinct manner dispelling all the doubts regarding its nature and attributes. In this fourth volume, the third and the fourth chapters which expound the *Sadhana* and *Phala* respectively are covered.

In *Sadhanadhyaya* the means to attain salvation viz., *Bhakti* finds a clear exposition. The pathway to redemption (*Sadhana*) is gaining the knowledge of Him through intense devotion (*Bhakti*) as illustrated in chapter 3.

Chapter 4—*Phaladhyaya* exemplifies the ultimate goal of life (*purusartha*) stating that the path of the devout as discussed earlier leads to final emancipation—*Moksha*. The nature of *Moksha* that was propounded earlier in chapter 1 is elaborated in this concluding chapter. Thus, according to Ramanuja, knowledge of God which culminates in the experience of enternal ecstacy by enjoying life in Brahman here and hereafter, can be attained through intense devotion (*paramabhakti*).

I am grateful indeed to the team of scholars who have put in sincere efforts in editing, scrutinising and seeing the work through the press. Thanks are due to Vidwan N. S. Ramabhadracharya who completed preparation of the book in manuscript form and Vidwan N. S. Janardanacharya for the proof reading.

I am indebted to our President Sri M. A. S. Rajan for his timely advice in running the administration and to all the members of the Managing Committee for their guidelines in running this research organisation on right lines. I express my sincere thanks to the Secretary, Sri Gururaj, who worked upto March '91 and to Sri N. R. Venkatesh, Secretary of the Academy since April '91 and Commissioner for Religious and Charitable Endowments in Karnataka State. I am indeed thankful to M/s. Vivek Printers of Mysore for their good printing work.

October 1991 **M. A. Lakshmithathachar**
Melkote Director

# एतत्पुस्तकस्थविषयसूचनी

पृ.सं.



—o—

॥ श्रीः ॥

# प्रास्ताविकम्—श्रीभाष्यचतुर्थसम्पुटस्य

ओं नमो महद्भ्यः । प्रणम्य भगवन्तं नारायणं किञ्चिदिदं प्राप्तावसरं प्रस्तूयते—जीवस्य तावत् अनादेः सन्तन्यमानात् कालपूगात् असङ्ख्येयात् संसारचक्रे निरन्तरं सान्तत्येन भ्राम्यतः, यादृच्छिकेन भगवतैकेनैव वेत्तुमर्हेण सुकृतविशेषपरिपाकेण प्राप्तमानुषभावस्य तत्त्वहितपुरुषार्थानावेद्य स्वाभाविके निःसंसारे अवस्थाविशेषे स्थापनमुद्दिश्य वेदानारभ्य सर्वाणि शास्त्राणि वात्सल्यमयेनाशयविशेषेण प्रावर्तन्तेति विदुषामविगीता विचारसरणिः निश्चप्रचं जोघुष्यते निबन्धेषु ॥

आवेदनीयानां तत्त्वादीनां विषये च विविधाः दार्शनिक्यो मर्यादाः विजृम्भन्ते । तासु तावत् काल्पनिकसत्यासत्यविभागविदूरा नित्यसत्यमर्यादा विशिष्टाद्वैतिनाम् । स्थूलसूक्ष्माख्यकार्यकारणावस्थानिरूपकैः चेतनाचेतनैः विशेष्यतां विशेषणतां च प्राप्तैः नित्याविनाभूतं परं ब्रह्मैव परमं तत्त्वम् । तत्प्राप्त्युपायावलम्बनमेव परमं हितम् । तत्प्राप्तिरेव च परमश्चरमश्च पुरुषार्थ इति—एतत्समयसिद्धोऽर्थः । अयं च समयः न केवलं साङ्केतिकः । अपि तु—चेतनः समं—ज्ञानादिभिर्गुणैः स्वेन सदृशं परमात्मानं याति सम्यक् एति प्राप्नोति वा येन सः समयः । अथवा अन्तर्भावितण्यर्थेन 'या' धातुना समशब्दस्य समसने कृते, सर्वत्र समं (समोऽहं सर्वभूतेषु) अविषमस्वभावं परमात्मानं यापयतीति 'समयः' इति व्युत्पत्तिचिन्तनेन परमात्मसाम्यसम्पत्तिहेतुभूतसुगमोपायप्रतिपादनपरोऽयं समयः । चिन्तने अनुष्ठाने उपदेशने च अक्लेशकरोऽयं जीवनसहजोऽयं समयः ।

येन अमायमनुसृतेन, अध्वनां श्रेष्ठोऽध्वा तत्पतिश्च करुणाधिपाधिपः, नैव दुष्प्रापो भवेत् । अयं च नैसर्गिकैकस्वरूपोऽपि जन्मान्तरागतसंस्कारविदूरैः न सुगमो भवेत्—इति तर्कप्रवणमतीनामपि संस्काराधानाय, अव्याजकारुण्यकबलितस्वान्तेन कृष्णद्वैपायनात्मना कृष्णेन ग्रथितं न्यायकलापरूपं शारीरकमीमांसाख्यं शास्त्ररत्नं, स्वकीयेन फणितिरूपेण फणामणिनिभेन भाष्येण अप्रतिहतानुसृतस्वाभाविकप्रभमकरोद्भगवान् अनन्तावतारो रामानुजाख्यो गुरुवरः ।

तत्र च लक्षणचतुष्कपरिमिते अस्मिन् शास्त्रे—आदिमेन समन्वयनाम्ना लक्षणेन, परमं तत्त्वं, सर्ववेदान्तप्रतिपाद्यतया समन्वितं प्रतिपादितम्। द्वितीयेन च अविरोधनाम्ना लक्षणेन—तदेव तत्त्व, यैः कैरपि प्रमाणभूतैर्वचोभिः प्रमाणानुग्राहकैस्तर्कैश्च अधर्षणीयस्वरूपतया दृढीकृतं तत्त्वग्राहिणां चेतसि। येन च दार्ढ्येन पुरुषार्थावाप्त्युद्यमशीलानां सतां साधनानुष्ठानौपयिकी प्रवृत्तिः, यावदायुषमस्खलिता सती सम्प्रसादयेदेवैनं परमं पुरुषम्। येन च सम्प्रसदनेन, अनुष्ठितशास्त्रोक्तोपायश्चेतनः, तेन आत्मेश्वरेण जगत्पतिना अवाप्तसयुग्भावः, अनाहिते निरुपाधिके स्वरूपतः प्राप्ते आनन्दे संलग्नस्वीयस्वरूपस्वभावः सन्, दुरितपवनप्रेरिते आधिव्याधिमये जन्मचक्रे पुनर्नावर्तेत।

**तृतीय-तुरीयाभ्यां च** साधन-फलनामभ्यां द्वाभ्यामध्यायाभ्यां पादाष्टकपरिमिताभ्यामन्वर्थनामभ्यां परमपुरुषार्थापवर्गादिशब्दबोध्यस्य अनवधिकस्वाभाविकानन्दस्य निश्शेषाविद्यातत्कार्यनिबर्हणप्रभवस्य साधनभूतः ध्यानोपासनाद्यपरपर्याय उपायः, तत्साध्यं परमं फलं चेत्युभयं चिन्तितं भवति। उक्तं चैतत् सेनेश्वरार्यैः—'संराधनं तस्य फलोपभोगः' (इत्यध्यायद्वयार्थः) 'सदोषत्वमदोषत्वं जीवस्य च परस्य च। तृतीयेन परोपास्तिः इतिकर्तव्यताऽपि च॥ उपास्त्यनुष्ठानविधा गत्युपक्रम एव च। गतिमार्गप्रकारश्च फलं चाऽपि चतुर्थतः॥ इति पादाष्टकार्थश्च। श्रीमद्भिर्वेदान्ताचार्यैरपि—'दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथोपासारोहप्रभावो क्रमसरणिफलान्यन्तिमे चिन्तितानि॥' इति; 'निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः पापच्छिद्ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चाऽत्र वेद्यः' इति; 'पादाभ्यामत्र पूर्वं जनयति भविनां ब्रह्मविद्याधिकारं पश्चात्तेषामुभाभ्यां वदति बहुविधां तामशेषैः सहाऽङ्गैः। ऐश्वर्यादौ विरक्तिं निरवधिविभवे पूरुषे चाऽभिलाषं विद्याभेदावलम्बं तदुपकरणमप्याह पादैः क्रमेण॥' इति। 'इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायः सहाङ्गैस्तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति। स्थूले देहेऽस्य सिध्येद्यदिह वदति तत्पादयुग्मेन पूर्वं निष्क्रान्तस्याऽथ यत् स्यात् परिगणयति तत् पादयुग्मान्तरेण' इति चेत्येतैः पद्यैर्विवृतम्॥

तच्च परमपुरुषसायुज्यावाप्तिसाधनं, प्राप्यपरमपुरुषव्यतिरिक्तार्थेषु अलग्नान्तःकरणतारूपं वैराग्यम्, प्राप्ये च परे तत्त्वे सुसंलग्नचेतस्स्वरूपो रागश्चेत्यादिपरिकरयुतमुपासनम्। तच्चोपासनं ध्यान-भक्त्याद्यपरपर्यायं तत्तद्विधिविशेषसिद्धप्रकारानुरोधिविशिष्टं चिन्तनमेव।

यदेव च चिन्तनं, प्राप्यं परमपुरुषं प्रीतं कुर्वत्, अनादिकालसंचितैरागोभिः कलुषितस्यास्य चेतनस्य विषये, कारुण्यसंवलितां क्षमामयीं दृष्टिं परमपुरुषस्यापादयत्, एनं निरस्तसमस्तप्रतिबन्धकमापाद्य अतिरोहितस्वपरप्रकाशासङ्कुचितविकसितज्ञानप्रसरं अविपर्यस्ततत्त्वावबोधमहिम्न अपुनरशङ्कनीयभगवदाज्ञोल्लङ्घनं नित्यानन्दैकभाजनं च कृत्वा, साधनानुगुणफलभागिनं करोतीति शम् ।। कृष्णार्पणमस्तु ।।

इदं च समग्रश्रीभाष्यसम्पादनकर्म अधीतिनामुपकाराय आचार्यानुग्रहाय च भूयादित्याशास्महे—

इति सम्पादकः क्रतुनाथवंश्यः

**एन्. एस्. रामभद्राचार्यः**

प्राच्यनव्यन्यायालङ्कारविद्वान् अधीतवेदान्तश्च

सं.सं. संसत्-मेलुकोटे

शुक्लसंवत्सरः

ज्येष्ठबहुलद्वादशी शुक्रवासरः

30-6-1989

## (संस्करणेऽस्मिन् समायोजिता अंशाः)

महतां विदुषामध्येतॄणां च करकमलेषु साधन-फलाध्यायजुष्टमिमं चतुर्थसम्पुटात्मकं भगवद्रामानुजविरचितशारीरकमीमांसाभाष्यग्रन्थं संस्कृतसंशोधनसंसत् प्रकाशयार्पयतीति प्रमोद-भरितान्तःकरणाः स्मः। अस्मिंश्च संस्करणे नूतने, एतत्कालानुगुण्येन अध्येतॄणामानुकूल्य-सम्पादनमेव विमर्शात्मकसम्पादनस्य परमं फलमिति मन्वानैः, अस्माभिः श्रीभाष्यग्रन्थयथा-श्रुताध्ययन-तच्चिन्तन-पारायणादिभिः अर्थग्रहण-धारणादेः सहकारिणी विशिष्टा योजना आहता। सा चैवं वर्तते—

I ग्रन्थारम्भात्पूर्वम्—

1 सामान्यविषयसूचनी

2 सम्पूर्णग्रन्थस्थविषयाणां सूचनी

3 प्रत्यध्यायमादौ-अध्याय-तद्गतपादार्थानामनुक्रमणी

(1) तत्र–अध्यायनाम,अध्यायार्थः, अध्यायगताधिकरणसंख्यासूत्रसङ्ख्ये

(2) अध्यायगताः पादाः (तत्तन्नाम्ना सह) पादानामर्थाः, तत्तत्पादगताधि-करण-सूत्र संख्ये

(3) तत्पादारम्भात्पूर्वम्—तत्तत्पादगताधिकरणार्थसूचनी

I पादनाम, पादार्थः, पादगताधिकरणसूत्रसङ्ख्ये

II अधिकरणनाम (आदितः तत्पादे च अधिकरणक्रमसंख्यया सह) तदधि-करणस्थसूत्रसंख्या, अधिकरणानामर्थाः।

II श्रीभाष्यग्रन्थे—

1 अध्यायनाम, अध्यायार्थः, अध्यायगताधिकरणसूत्रसंख्ये,

2 पादनाम, पादार्थः पादगताधिकरणसूत्रसंख्ये,

3 अधिकरणनाम, आदितोऽधिकरणसंख्यया तदध्याय तत्पादीयाधिकरणसंख्यया च अधिकरणार्थः, अधिकरणगतसूत्राणां संख्या, अधिकरणे विचारिता विद्या, श्रुतिस्थानेन सह।

4 सूत्रम्, तस्यादितः तदध्यायतत्पादयोश्च क्रमिकसंख्या, सूत्रस्यान्ते (पू) (सि) इति पूर्वपक्षसिद्धान्तसूचना,

5 श्रीभाष्यमूलग्रन्थः (आवश्यकैर्विरामचिह्नैः सह)

6 प्रतिविषयं शीर्षिकादानम् (विषयविभागानुरोधिपङ्क्ति-पदसन्ध्यादि विभजनेन)

7 प्रमाणानां ग्रन्थपक्तिभ्यः पृथक् प्रमाणतासूचकचिह्नेन प्रमाणस्थान सूचकचिह्नैश्च सह (प्रमाणाकरनिर्देशः तत्रत्याध्याय-खण्ड मन्त्राणां तथा यथायोग्यम्)

III ग्रन्थटिप्पण्याम् —

1 श्रुतप्रकाशिका-भावप्रकाशिकादिभ्य उद्धृत्य अर्थग्रहणमात्रौपयिको भागः

2 (अधः) सङ्क्षेपेण धारणौपयिकः सूत्रार्थः ।

3 ब्रह्मसूत्रपद्यमालिकानाम्न्याः सूत्राक्षरार्थसङ्क्षेपपरायाः कारिकायाः लेखः ।

4 श्रीभाष्यगतानां विविधपाठानां निर्देशः ।।

(२) अनुबन्धे च श्रीभाष्याध्ययनसहकारिणि —

(क) (1) शारीरकन्यायकलापसङ्ग्रहः । (अस्मदीयया पदार्थविवृत्या सह) (श्रीसेनेश्वरार्यकृतः ; केवलाधिकरणार्थसङ्क्षेपपरः श्लोकरूपः) ।।

(2) तत्त्वसारः । (श्रीमद्भिः वात्स्यवरदार्यैः विरचितः आवश्यकांशविचारणा-निर्धारणपरः । अस्मदीयया पदार्थविवृत्या सहितः) ।।

(3) अधिकरणसारावलिः । (श्रीमद्भिः वेदान्ताचार्यैः विरचिता । विचारपूर्णतया अधिकरणार्थानां निष्कृष्य प्रदर्शनपरा । अस्मदीयया पदार्थविवृत्या सह) ।

(4) अधिकरणार्थसङ्ग्रहः । (दोड्डयाचार्यापरनामधेयैः चोलसिंहपुरवास्तव्यैः श्रीमद्भिः श्रीनिवासाचार्यैः विरचितः । गद्यरूपः) ।।

(5) नयसङ्गतिमालिका । (श्रीमद्भिः महामहोपाध्याय-पण्डितरत्नादिबिरुदभूषितैः लक्ष्मीपुरं श्रीनिवासाचार्यैः विरचिता । केवलं पूर्वापरसाङ्गत्यप्रदर्शनपरा श्लोकरूपा) ॥

(ख) (1) प्रमाणार्थकोषः । (श्रीभाष्योदाहृतानि प्रमाणानि अकाराद्यनुक्रमशः सङ्गृह्य संयोज्य सस्थाननिर्देशं लेखः । उपनिषद्भाष्यादीन् ग्रन्थानवलोक्य यथायोग्यं प्रमाणाशयं शब्दार्थग्रहणानुरोधितया विशिष्टतात्पर्यानुसन्धानानुकूलतया च सरलैः स्वीयैः व्याख्याकारीयैश्च शब्दैः सङ्क्षिप्य विशदीकरणम्) ॥

(2) पदकोषः । (चिन्तनोपयोगितया आवश्यकशब्दार्थधारणाद्युपयोगी अकारादिक्रमानुरोधी कोषः । अर्थविवरणाय नैकेषु श्रीभाष्यगतेषु शब्देषु व्याख्यास्थानि प्रतिपदानि, नैकेषु च शब्देषु स्वयमेव च विषयानुगुणं विचिन्त्य योजितानि प्रतिपदानि) ॥

(3) सिद्धान्तोक्तयः । (श्रीभाष्यगतचर्चांशप्रहाणेन निर्णीतार्थानुसन्धानोपयोगिनां भागानामेकत्र योजनम्) ॥

(ग) (1) I सङ्केताक्षरविवरणी । II प्रमाणसंख्याविवरणी च

(2) श्रीभाष्यतद्व्याख्येयसूत्रेषु परिदृश्यमानानि नामानि ।

(3) ग्रन्थानां तत्कर्तॄणां च नामानि ।

(4) उदाहृतग्रन्थनामानि । विशिष्टानि च कानिचन पदानि, अधिकरणसूत्रश्लोकानामकाराद्यनुक्रमणी च ।

(5) शोधनिका ।

## श्रीभाष्यचतुर्थसम्पुटार्थमुपयुक्तानि
## पुस्तकानि

| | | | | |
|---|---|---|---|---|
| 1 | श्रीभाष्यम् | श्री धर्माधिकारि चक्रवर्त्यय्यंगार्यैः मुद्रापितम्, श्रुतप्रकाशिकायुक्तम् | आन्ध्रलिपिः, | मैसूरु |
| 2 | ,, | श्री उत्तमूर् वीरराघवाचार्यैः सव्याख्यं मुद्रापितम् | दे. | मद्रास् |
| 3 | ,, | ,, भाष्यार्थदर्पणयुतम् | ,, | ,, |
| 4 | ,, | मूलमात्रम् श्री अ. वी नरसिंहाचार्यैः मुद्रापितम् (वेदान्तदीप-वेदान्तसाराधिकरणसारावलीभिः सह) | ,, | ,, |
| 5 | रामानुजग्रन्थमाला | श्री अण्णङ्गराचार्यैः मुद्रापितम् | दे. | काञ्ची |
| 6 | ,, | ,, आन्ध्रलिपिः | | ,, |
| 7 | श्रुतप्रदीपिका | श्रीभाष्यव्याख्या श्रीश्रीनिवासराघवन् महोदयैः सम्पादिता, | | पुदुकोट्टै |
| 8 | भावप्रकाशिका | टि. टि. देवस्थानं तिरुपति उत्तमूर् स्वामिभिः सम्पादिता, | दे | |
| 9 | श्रीभाष्यप्रकाशिका | श्री तिरुमलिशै श्रीनिवासाचार्यैः विरचिता, | | मद्रास् |
| 10 | शारीरकशास्त्रार्थदीपिका | श्रीरङ्गरामानुजस्वामिभिः विरचिता | दे. | कुम्भघोणम् |
| 11 | नयमयूखमालिका | श्री अप्पयदीक्षितवर्यैर्विरचिता | ,, | ,, |
| 12 | दर्शनोदयः | श्री लक्ष्मीपुरं श्रीनिवासाचार्यैर्विरचिता | ,, | मैसूरु |
| 13 | शारीरकाधिकरणरत्नमाला | श्री कपिस्थलं देशिकाचार्यैर्विरचिता | ,, | पुदुकोट्टै |
| 14 | शारीरकन्यायकलापसङ्ग्रहः | श्रीसेनेश्वरार्यैर्विरचितः | ,, | ,, |
| 15 | तत्त्वसारः | मूलमात्रम् | दे. | बेङ्गलूर् |
| 16 | ,, | सारास्वादिनीव्याख्या | ग्रं | कुम्भघोणम् |
| 17 | ,, | रत्नसारिणीव्याख्या | दे. | मद्रास् |
| 18 | ,, | वात्स्यवरविस्य उत्तमूर् स्वामी | दे. | ,, |

| | | | | |
|---|---|---|---|---|
| 19 | अधिकरणसारावलिः | अ.वी. नरसिंहाचार्यः | दे. | मद्रास् |
| 20 | ,, | अण्णङ्गराचार्यः दे.ग्र. माला | ,, | काञ्ची |
| 21 | ,, | चिन्तामणि-पदयोजनाभ्यां सह अहोबिलस्थानम्, | | श्रीरङ्गम् |
| 22 | ,, | सारार्थरत्नप्रभाभ्यां सह उत्तमूर् स्वामी, | | मद्रास् |
| 23 | ईशावास्योपनिषत् | उत्तमूर् स्वामी | | ,, |
| 24 | केनाद्युपनिषदः | ,, | | ,, |
| 25 | छान्दोग्योपनिषत् | ,, | | ,, |
| 26 | बृहदारण्यकोपनिषत् | उत्तमूर् स्वामी | दे. | तिरुपति |
| 27 | तैतिरीयाद्युपनिषदः | ,, | ,, | मद्रास् |
| 28 | ईशाद्युपनिषदः | गोपालानन्दस्वामिभाष्ययुताः | | उ.प्र. |
| 29 | अष्टोत्तरशतोपनिषदः | उपनिषद्ब्रह्मयोगिव्याख्यायुताः | | मद्रास् |
| 30 | दशोपनिषद्भाष्यम् | I II रङ्गरामानुजभाष्ययुतम् वन.कृ. स्वामी | | कुम्भ |
| 31 | दशोपनिषदः | मूलम् | तेलुगु | मैसूरु |
| 32 | तैत्तिरीयोपनिषत् | भावमुक्तावली | दे. | काञ्ची |
| 33 | वेदार्थसङ्ग्रहः | तात्पर्यदीपिका | ते. | मद्रास् |
| 34 | ,, | ,, | दे. | तिरुपति |
| 35 | गीताभाष्यम् | तात्पर्यचन्द्रिकायुतम् उत्तमूर् स्वामी | ,, | मद्रास् |
| 36 | ,, | ,, स्वामिनारायणजीयर् | ,, | आन्ध्र प्र. |
| 37 | श्रीविष्णुपुराणम् | सव्याख्यम् | तेलुगु | मद्रास् |
| 38 | ,, | हिन्दी अनुवादेन | दे. | गोरखपुर |
| 39 | तैत्तिरीयसंहिताः | भट्टभास्करभाष्ययुताः | दे. ओ.आर्.ऐ. | मैसूरु |
| 40 | ,, ब्राह्मणम् | ,, | ,, | ,, |
| 41 | ,, यारण्यकम् | ,, | ,, | ,, |
| 42 | अध्वरमीमांसाकुतूहलवृत्तिः | मण्डनमिश्रः | | दिल्ली |

| | | | | |
|---|---|---|---|---|
| 43 | मीमांसान्यायप्रकाशः | श्री अभ्यं. वसुदेवाशास्त्री | | पूना |
| 44 | जैमिनीयन्यायमालाविस्तरः आनन्दाश्रमः | | | ,, |
| 45 | काशिकावृत्तिः I–II | | चौखम्बाप्रेस् | काशी |
| 46 | सिद्धान्तकौमुदी | बालमनोरमायुता | | मदरास् |
| 47 | अमरकोशः | | | काशी |
| 48 | वैजयन्तीकोशः | मूलम् | ,, | ,, |
| 49 | हलायुधः | | | लखनऊ |
| 50 | शब्दकल्पद्रुमः I To 5 | | | काशी |
| 51 | ब्रह्मसूत्रशाङ्करभाष्यम् | सव्याख्यम् मोतीलाल बनारसीदास | | काशी |
| 52 | श्रीभाष्यम् I | संस्कृत संशोधन संसत् | | मेलुकोटे |
| 53 | ,, II | | | |
| 54 | जैमिनिसूत्रवृत्तिः | | मेडिकल् हाल् , | कलकत्ता |
| 55 | उपनिषद्वाक्यकोशः | | | बाम्बे |

## पाठान्तरार्थमुपात्तपुस्तकानि तेषां सङ्केतश्च

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1 | श्रीभाष्यम् | मू. ताल | ग्रं | विद्वान् अरैयर् रामशर्मा | | मेलुकोटे | अ |
| 2 | ,, | ,, | ,, | ,, ,, जग्गू सुदर्शनाचार्यः | | ,, | आ |
| 3 | ,, | श्रु.प्र. व्याख्या. | कागदपत्रं तेलुगु. | सं. कालेज्, | | मेलुकोटे | इ |
| 4 | ,, | ,, | ,, | विद्वान् मुडुम्बै नरसिंहाचार्यः | | ,, | ई |
| 5 | रामानुजग्रन्थमाला श्री प्र.भ. अण्णङ्गराचार्यः | | | | | काञ्ची | क |
| 6 | श्रीभाष्यम् | श्रु.प्र. व्याख्या | तेलुगु | चेङ्गल्वरायः | | मद्रास् | ख |
| 7 | ,, | ,, | ,, | धर्माधिकारि चक्रवर्त्य्यङ्गार्यः | | | ग |
| 8 | ,, | सव्याख्यम् | दे. | धरणीधरशास्त्री | | बृन्दावनम् | घ |
| 9 | ,, | ,, | ,, | उत्तमूर्स्वामी | | मद्रास् | ङ |
| 10 | ,, | मूलम् | ,, | अ. वी. नरसिंहाचार्यः | | ,, | च |
| 11 | ,, | सव्याख्यम् | दे. | भा. रामानुजाचार्यः | | काञ्ची | छ |
| 12 | ,, | द्राविडानुवादः | ,, | ए. वि. गोपालाचार्यः | | कुम्भ | ज |
| 13 | ,, | रा. ग्रन्थमाला | ते. | प्र. भ. अण्ण.स्वामी | | काञ्ची | झ |
| 14 | ,, | श्रु. गूढार्थ संग्रहाभ्यां परकालस्थानम् | दे. | श्री अभिनवरङ्गनाथस्वामी | | मै. | ट |
| 15 | ,, | मूलमात्रम् | दे. | धनीरामशास्त्री | | मथुरा | ठ |
| 16 | ,, | कन्नडानुवादेन | क. | होळेनरसीपुर | | हासनजिल्ला | ड |
| 17 | ,, | हिन्दी अनुवादः | दे. | वडुवूर रङ्गनाथार्यः | | प्रयागः | ढ |
| 18 | ,, | मूलम् | दे. | | | काशी | ण |
| 19 | ,, | हस्तप्रति | दे. | अलवार राजधानी | | | त |
| 20 | ,, | ,, | , | रामचन्द्रस्वामिजीग्रन्थालयः | | | थ |

| | | | | | | |
|---|---|---|---|---|---|---|
| 21 | श्रीभाष्यम् | हस्तप्रति | दे. | महाराजग्रन्थसङ्ग्रहालयः | बिकानेर | द |
| 22 | ,, | ,, | ,, | कलकत्ता | | ध |
| 23 | ,, | ,, | सव्याख्यम् | | काशी | न |
| 24 | ,, | मूलमात्रम् | | अभ्यं वासुदेवशास्त्री | पूना | वा |
| 25 | ,, | सव्याख्यम् | तेलुगु | श्रीपेरुम्बूदूर | | — |

—o—

## *[उदाहृता ग्रन्थाः तेषां सङ्केताक्षरविवरणी]

[प्रमाणस्थानावगमकसङ्ख्याबोधिनी]

| | | |
|---|---|---|
| मुण्ड.उ. | मुण्डकोपनिषत् | |
| भ.गी. | भगवद्गीता | अध्यायश्लोकयोः सङ्ख्याद्वयेन |
| ताण्ड्य.ब्रा. | ताण्ड्यमहाब्राह्मणम् | अध्याय-प्रश्न-मन्त्राणां सङ्ख्यात्रयेण |
| बृ.उ. | बृहदारण्यकोपनिषत् | अध्याय-ब्राह्मणमन्त्राणां ,, |
| छां.उ. | छांदोग्योपनिषत् | ,, ,, ,, ,, |
| ऐत.आर. | ऐतरेयारण्यकम् | ,, ,, ,, ,, |
| ऐत.उ. | ऐतरेयोपनिषत् | अध्यायखण्ड-मन्त्राणां तिसृभिः |
| तै.ना.उ. | तैत्तिरीयनारायणोपनिषत् | अनुवाकमन्त्रयोः द्वाभ्यां |
| आप.श्रौ. | आपस्तम्बश्रौतसूत्रम् | प्रश्न-खण्ड-सूत्राणां सङ्ख्यात्रयेण |
| ब्र.सू. | ब्रह्मसूत्रम् | अध्याय-पाद-सूत्राणां ,, |
| द.स्मृ. | दक्षस्मृतिः | |
| तै.उ.आन. | तैत्तिरीयोपनिषत् आनन्दवल्ली | अनुवाक-मन्त्रयोः द्वाभ्यां |
| तै.ब्रा. | तैत्तिरीयब्राह्मणम् | अष्टक-प्रश्न-अनुवाक-मन्त्राणां चतुष्केण |
| पू.मी.सू. | पूर्वमीमांसासूत्राणि | अध्याय-पाद-सूत्राणां त्रयेण |
| श्वे.उ. | श्वेताश्वतरोपनिषत् | अध्याय-मन्त्रयोः द्वाभ्यां |
| अग्नि.ब्रा. | अग्निरहस्यब्राह्मणम् | काण्ड-अध्याय-ब्राह्मण-मन्त्राणां चतुष्केण |
| कठ.उ. | कठोपनिषत् | वल्ली-मन्त्रयोः द्वाभ्यां सङ्ख्याभ्यां |
| बृ.उ.मा.पा. | बृहदारण्योपनिषन्माध्यन्दिनपाठः | अध्याय-ब्राह्मण-मन्त्राणां त्रयेण |
| अग्नि.ब्रा.का.पा. | अग्निरहस्यब्राह्मणकाण्वपाठः | — |
| कौषी.उ. | कौषीतक्युपनिषत् | अध्याय-मन्त्रयोः |
| याज्ञ.प्रा. | याज्ञवल्क्यीयप्रायश्चित्ताध्यायः | श्लोकस्य एकसङ्ख्या |

* एष भागः सिद्धान्तोक्त्यनन्तरं संयोजनीय आसीत् । परं अत्रैव मुद्रितः ।

| | | |
|---|---|---|
| तै.उ.भृ. | तैत्तिरीयोपनिषत् भृगुवल्ली | अनुवाक-मन्त्रयोः द्वाभ्यां |
| आथ.समा. | आथर्वणिकः समाचारग्रन्थः | — |
| तै.सं. | तैत्तिरीयसंहिता | काण्ड-प्रश्न-अनुवाक-मन्त्राणां चतुष्केण |
| ऐत.म.ब्रा. | ऐतरेयमहाब्राह्मणम् | तिसृभिः ब्राह्मण-अध्याय-मन्त्राणां |
| वि.पु. | विष्णुपुराणम् | ,, अंश-अध्याय-श्लोकानाम् |
| ईशो | ईशावास्योपनिषत् | एकया मन्त्रस्य |
| गौ.स्मृ. | गौतमस्मृतिः | — |
| तै.उ.शी. | तैत्तिरीयोपनिषत् शीक्षावल्ली | अनुवाक-मन्त्रयोः द्वाभ्यां |
| क.सू. | कल्पसूत्रम् | — |
| अग्नि.र. | अग्निरहस्यम् | — |
| वा.रा. | वाल्मीकिरामायणम् | काण्ड-सर्ग-श्लोकानां तिसृभिः |
| म.स्मृ. | मनुस्मृतिः | अध्याय-श्लोकयोः द्वाभ्यां |
| याज्ञ.स्मृ. | याज्ञवल्क्यस्मृतिः | अध्याय-श्लोकयोः ,, |
| आप.ध.सू. | आपस्तम्बधर्मसूत्रम् | प्रश्न-पटल-खण्ड-सूत्राणां चतसृभिः |
| ऐत.आर.उ. | ऐतरेयारण्यकोपनिषत् | आरण्यक-अध्याय-खण्ड-मन्त्राणां चतुष्केण |
| प्रश्न.उ. | प्रश्नोपनिषत् | प्रश्नमन्त्रयोः द्वाभ्यां |
| कठ.सं. | कठसंहिता | — |
| शाट्या.शा. | शाट्यायनशाखा | — |
| मुद्ग.उ. | मुद्गलोपनिषत् | खण्ड-मन्त्रयोः द्वाभ्याम् |
| पै.व. | पैङ्गिवचनम् | — |
| सार.ब्रा. | सामरहस्यब्राह्मणम् | — |
| वाज.प्र.ब्रा. | वाजसनेयप्रवर्ग्यब्राह्मणम् | — |
| पू.मी.सं. | पूर्वमीमांसासङ्कर्षकाण्डः | — |
| तै.आर. | तैत्तिरीयारण्यकम् | प्रश्न-अनुवाक-मन्त्राणां तिसृभिः |

| | | |
|---|---|---|
| लौ.प्र. | लौकिकः प्रयोगः | प्रश्न-अनुवाक-मन्त्राणां तिसृभिः |
| कौ.म.ब्रा. | कौषीतकमहाव्रतब्राह्मणम् | — |
| पू.मी.न्या. | पूर्वमीमांसान्यायः | — |
| जाबा.उ. | जाबालोपनिषत् | खण्ड-मन्त्रयोः द्वाभ्यां |
| पा.धा. | पाणिनीयधातुपाठः | एकया धातोः |
| गौत.ध.सू. | गौतमधर्मसूत्रम् | प्रश्नादि |
| आथ. | आथर्वशाखा | — |
| तै.उ.आन.शा. | आनन्दवल्लीशान्तिपाठः | — |
| ब्र.प. | ब्रह्मसूत्रपद्यमालिका | — |
| आग्ने.पु. | आग्नेयपुराणम् | तिसृभिः सङ्ख्याभिः |

—o—

श्रीः

## श्रीभाष्यतृतीयाध्यायस्थविषयसूचनी

[इति तृतीयाध्यायगतविषयाणामनुक्रमसूचनी]

श्रीरस्तु



## श्रीभाष्यचतुर्थाध्यायस्थविषयसूचनी

—o—

विषयाणां सूचनीयं रामभद्रेण योजिता ।
रामानुजीये श्रीभाष्ये प्रीयतां तेन चाच्युतः ॥



॥ श्रीः ॥

(गुरुपरम्परास्तुतिः)

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ १ ॥

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गव-महापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥ २ ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो रामानुजस्य चरणौ शरणं प्रपद्ये ॥ ३ ॥

(स्वाचार्यप्रभृति भगवद्रामानुजार्यपर्यन्तं स्वस्वसम्प्रदायानुसारं गुरुपरम्परामनुसन्धाय, रामानुजाचार्यप्रणतिपद्यमनुसन्धाय, ततः भगवत्पर्यन्तं यथासम्प्रदायं गुरुपरम्परा अनुसन्धेया । दिङ्मात्रमिह दर्शितम् )

अस्मद्गुरुपरम्परायै नमः ।

श्रीः

ओम्

श्रीः

## [शान्तिपाठाः अनुसन्धेयाः]

ओम्। वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्, आविरावीर्म एधि। वेदस्य म आणीस्थः, श्रुतं मे मा प्रहासीः। अनेनाऽधीतेनाऽहोरात्रान् सन्दधामि। ऋतं वदिष्यामि, सत्यं वदिष्यामि। तन्मामवतु, तद्वक्तारमवतु। अवतु माम्, अवतु वक्तारमवतु वक्तारम्॥ ओं शान्तिः शान्तिः शान्तिः

ओम्। शं नो मित्रः शं वरुणः। शंनो भवत्वर्यमा। शंन इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्माऽसि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि*। ऋतं वदिष्यामि*। सत्यं वदिष्यामि*। तन्मामवतु*। तद्वक्तारमवतु।* अवतु माम्* अवतु वक्तारम्*॥ ओं शान्तिः शान्तिः शान्तिः

ओम्। सहनाववतु। सहनौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ओं शान्तिः शान्तिः शान्तिः

ओम्। पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥
ओं शान्तिः शान्तिः शान्तिः

ओम्। आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदम्, माऽहं ब्रह्म निराकुर्याम्। मा मा ब्रह्म निराकरोत्। अनिराकरणमस्तु, अनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्माः, ते मयि सन्तु ते मयि सन्तु॥
ओं शान्तिः शान्तिः शान्तिः

ओम्। भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्तिनः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्तिनो बृहस्पतिर्दधातु॥
ओं शान्तिः शान्तिः शान्तिः

ओम्। नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममाऽमुष्य ओम्॥ ओं शान्तिः शान्तिः शान्तिः

ॐ

---

* सूचनाः—उत्तरशान्तिपाठे अत्रैतावान् विशेषः—'ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्' इति। अन्यत्सर्वं समानम्]

ॐ

# श्रीभाष्यम्

श्रीभगवद्रामानुजविरचितं शारीरकमीमांसाभाष्यम्

—०—

तृतीयाध्याय-चतुर्थाध्यायौ ॥

## चतुर्थः सम्पुटः

॥ श्रीः ॥

[अध्याय—तद्गतपादार्थानामनुक्रमणी]

## (३) तृतीयः साधनाध्यायः

**अध्यायार्थः**—अतिक्रान्ताध्यायद्वयेन विचारितस्य निखिलजगदेककारणस्य परमपुरुषार्थभूतस्य परस्य ब्रह्मणः प्राप्तौ उपायतया वेदान्तैर्विहितानां नानाविधानां विद्यानां चिन्तनम् ।

[अत्र पादाः—४. अधिकरणानि—५५. सूत्राणि—१८२.]

### १. वैराग्यपादः [अधिकरणानि—६. सूत्राणि—१७.]

**पादार्थः**—संसारचक्रे परिवर्तमानस्य देहिनो जीवस्य जाग्रदवस्थाशेषभूतानां अपुरुषार्थभूतानां दोषाणामनुचिन्तनम्; वैराग्यार्थम् ।

### २. उभयलिङ्गपादः. [अधिकरणानि—८. सूत्राणि—४०.]

**पादार्थः**—संसरतो जीवस्य स्वप्न-सुषुप्ति-मूर्च्छारूपाणामवस्थानां परीक्षापूर्वकम्, प्राप्यभूतस्य ब्रह्मणः दोषगन्धराहित्यं समस्तकल्याणगुणाकरता च विचार्येते; प्राप्यतृष्णार्थम् ।

### ३. गुणोपसंहारपादः. [अधिकरणानि—२६. सूत्राणि—६४.]

**पादार्थः**—विविधशाखास्वाम्नातानां विद्यारूपाणां ब्रह्मोपासनानां मिथो गुणोपसंहार-विकल्पयोर्निर्णयाय विद्याभेदाभेदयोः चिन्तनम्; असन्दिग्धानुष्ठानसिद्ध्यर्थम् ।

### ४. अङ्गपादः. [अधिकरणानि—१५. सूत्राणि—५१.]

**पादार्थः**—मोक्षोपायतया वेदान्तविहितानां ब्रह्मोपासनात्मिकानां विद्यानां अङ्गभूतानां कर्मादीनां चिन्तनम्; निरन्तरायोपायस्वरूपनिष्पत्त्यर्थम् ॥

—o—

॥ श्रीः ॥



## तृतीये साधनाध्याये प्रथमः वैराग्यपादः

(अधि. १–६. सू. १–२७)

**पादार्थः**—संसारचक्रे परिवर्तमानस्य देहिनो जीवस्य जाग्रदवस्थाशेषभूतानां दोषाणामपुरुषार्थभूतानां चिन्तनम् ; वैराग्यार्थम् ॥

(69) १. **तदन्तरप्रतिपत्त्यधिकरणम्**—(३–१–१) [सू. 1–7] पञ्चाग्निविद्याविषयम् (छां. उ. 5-3-10)

देहात् देहान्तरं गच्छतां जीवानां गतागती, देहारम्भहेतुभूतैः भूतसूक्ष्मैः सहैव ॥

(70) २. **कृतात्ययाधिकरणम्**—(३–१–२) [सू. 8–11]

परलोके सुकृतफलभूतं भोगमनुभूय तस्माल्लोकात् इमं लोकं प्रत्यवरोहतो जीवस्य न केवलस्य अवरोहः ; किन्तु भुक्तशिष्टकर्मसहितस्यैव ॥

(71) ३. **अनिष्टादिकार्यधिकरणम्**—(३–१–३) [सू. 12–21]

इष्टापूर्त-दत्तकारिव्यतिरिक्तानां केवलपापिनां चेतनानां गतागती, चन्द्रारोहावरोहौ विनैव भवतः ॥

(72) ४. **तत्स्वाभाव्यापत्त्यधिकरणम्**—(३–१–४) [सू. 22]

सुकृतफलभोगावसाने परस्माल्लोकादिमं लोकमवरोहतो जीवस्य श्रुत्युक्तः आकाशादिभावः, आकाशादिसादृश्यापत्तिरूप एव ॥

(73) ५. **नातिचिराधिकरणम्**—(३–१–५) [सू. 23]

जीवस्याऽवरोहणकाले आकाशादिषु स्थानेषु गतिः अतिशैघ्र्येणैव ; न विलम्बेन ॥

(74) ६. **अन्याधिष्ठिताधिकरणम्**—(३–१–६) [सू. 24–27]

अवरोहतो जीवस्य श्रुत्यवगतो व्रीह्यादिभावः, व्रीह्यादिसंश्लेषमात्रम् ; न व्रीह्यादिशरीरकत्वम् ॥

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥



# श्री भा ष्य म्

## श्रीभगवद्रामानुजविरचितं शारीरकमीमांसाभाष्यम्



### तृतीयः साधनाध्यायः ॥ ३ ॥

[अधिकरणानि—55. सूत्राणि—182]

[अध्यायार्थः—परमकारण-परमपुरुषार्थभूतपरब्रह्मणः प्राप्त्युपायतया वेदान्तविहितानां विद्यानां चिन्तनम् ]

### (9) प्रथमः वैराग्यपादः ॥ ३–१ ॥

[अधिकरणानि—6. सूत्राणि—27]

[पादार्थः—संसारचक्रे परिवर्तमानस्य जीवस्य जाग्रदवस्थाशेषभूतानां अपुरुषार्थभूतानां दोषाणां चिन्तनम् ]

### (69) तदन्तरप्रतिपत्त्यधिकरणम् ॥ ३–१–१ ॥ [सू. 1–7 सि.]

(पञ्चाग्निविद्याविषयम्—छां. उ. 5-3-10)

[अधिकरणार्थः—देहात् देहान्तरं गच्छतां जीवानां गतागती देहारम्भहेतुभिर्भूतसूक्ष्मैः सहैव]

## २८८. तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्न-निरूपणाभ्याम् ॥ ३–१–१ ॥

---

[सूत्रार्थः । तदन्तरप्रतिपत्तौ—जीवः, देहान्तरप्राप्तौ, संपरिष्वक्तः—देहान्तरारम्भहेतुभूतैर्भूतसूक्ष्मैः संश्लिष्ट एव सन्, रंहति—गच्छति, प्रश्ननिरूपणाभ्याम्—पञ्चाग्निविद्याप्रकरणस्थप्रश्नोत्तराभ्याम् एवं निश्चीयते ॥]

'देहाद्देहान्तरप्राप्तावात्मा गच्छति सूक्ष्मकैः । भूतैरेव परिष्वक्तः प्रश्न-प्रत्युक्तिदर्शनात्॥'(श्र.प. 288)

[सङ्गत्यर्थं पूर्वोत्तरद्विका(सिद्ध-साध्या)र्थसङ्क्षेपः]

अतिक्रान्ताध्यायद्वयेन — 'निखिलजगदेककारणं निरस्तनिखिलदोषगन्धम् अपरिमितोदारगुणसागरम्, सकलेतरविलक्षणं ब्रह्म, मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्ति'—इत्ययमर्थः, स्मृतिन्यायविरोधपरिहार-परपक्षप्रतिक्षेप-वेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्यस्वरूपसंशोधनैः तद्दुर्धर्षणत्वहेतुभिः सह स्थापितः। अतः अध्यायद्वयेन [1]ब्रह्मस्वरूपं[1] प्रतिपादितम् ॥

उत्तरेणेदानीम् — तत्प्राप्त्युपायैः सह प्राप्तिप्रकारः चिन्तयितुमिष्यते ॥

[तृतीयाध्यायार्थसंक्षेपः]

तत्र [2]तृतीयेऽ[2]ध्याये-उपायभूतोपासनविषया चिन्ता-वर्तते। उपासनारम्भाभ्यर्हितोपायश्च-प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं, प्राप्यतृष्णा चेति, तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु संचरतः, जाग्रतः, स्वपतः, सुषुप्तस्य, मूर्च्छतश्च दोषाः; [3]परस्य[3] ब्रह्मणः तद्रहितता, कल्याण[4]गुणकरत्वं[4] च प्रथम द्वितीययोः पादयोः प्रतिपा[5]द्यन्ते[5] ॥

[प्रकृताधिकरणीयः ? शयः]

तत्र-देहाद् देहान्तरं गच्छन् अयं जीवः, [6]देहान्तरा[6]रम्भहेतुभिः भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छति? उत न?—इति चिन्तायाम्;

---

'इत्ययमर्थः' इत्यस्मात्पूर्वं प्रथमाध्यायार्थः सङ्क्षिप्तः। **निखिलेत्यादि**विशेषणानां पूर्ववदर्थः। **स्मृतिन्यायेति**, द्वितीयाध्यायस्य प्रथम-द्वितीयपादार्थसङ्क्षेपः। **वेदान्तवाक्येत्यादिना**, तृतीय-तुरीयपादार्थः सङ्क्षिप्तः। एवं किञ्चिद्विस्तरेण अध्यायद्वयार्थः उक्तः। **अतः** इति, प्रथमद्विकस्य अनुगतमर्थं सङ्ग्रहेणाऽऽह ॥

**उत्तरेणेति** उत्तरद्विकार्थसङ्क्षेपः। **इदानीम्**—विषये सिद्धे, इत्यर्थः। प्रथमद्विके सिद्धस्वरूपविषयचिन्ता कृता। द्वितीये तु साध्यस्वरूपविषयचिन्ता क्रियते-इत्यर्थः ॥

**तत्रेति**, तृतीय-चतुर्थयोः साधन-फलविषयकतया सक्रमः तृतीयाध्यायार्थः। **अभ्यर्हितम्**—अन्तरङ्गम्। अत्र 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्यस्यार्थोऽभिप्रेतः। लोकान्तरेषु सञ्चरतो दोषाश्चिन्त्यन्ते। तत्र जागराद्यवस्थस्य दोषाः फलिताः ॥

---

**तत्रेति**। किं देहान्तरं गच्छन् जीवः भूतसूक्ष्मैः सम्परिष्वक्तो रंहति? उत असम्परिष्वक्तः?—इति। 'वेत्थ यथा पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति' 'इति तु

---

[1] ब्रह्मणःस्वरूपं—च.  [2] तृतीया—च.  [3] परस्य च—च.  [4] करता—इ. वा.
[5] द्यते—पा.  [6] देहा—द.

[सयुक्तिकः पूर्वः पक्षः]

यत्र यत्र जीवो याति, तत्र तत्र भूतसूक्ष्माणां सुलभत्वात्, असम्परिष्वक्तो यातीति –प्राप्तम् । पश्चादपि पूर्वपक्षबीजानि उपन्यस्य निरसि'ष्यति[1] ॥

[सूत्रतः सिद्धान्तस्वरूपवर्णनम्]

तत्र सिद्धान्तमाह—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः—इति । 'संज्ञामूर्तिक्लृप्तिः' (ब्र. सू. 2-4-17) इति मूर्तिशब्देन देहः प्रस्तुतः । सः तच्छब्देन परामृश्यते । तदन्तरप्रतिपत्तौ—देहान्तरगमने, भूतसूक्ष्मैः [2]सम्परि'ष्वक्तः जीवो रंहति—गच्छतीत्यर्थः ।

कुतः ? । प्रश्न-निरूपणाभ्याम्—प्रश्न-प्रतिवचनाभ्याम् ।

[सूत्रोपात्तयोः प्रश्न-प्रतिवचनयोः निरूपणम्]

पञ्चाग्निविद्यायाम्, एवं प्रश्न-प्रतिवचने आम्नायेते—श्वेतकेतुं किल आरुणेयं,

---

पञ्चम्यामाहुतावापः पुरुषवचसः' इति प्रश्न-प्रतिवचने, किं संपरिष्वक्तस्य रंहणं गमयतः ? न ?—इति । किं श्रद्धादिशब्दैः यथाप्रसिद्धि स्वार्था उच्यन्ते ? उत भूतसूक्ष्मपरिष्वक्तो जीवः ?—इति । पितृयाणेन पथा निवर्तने, 'एष सोमो राजा' इति 'सोम' शब्दस्य सोमदेहजीवपरत्वं, किं 'तस्या आहुतेः सोमो राजा' इति सोमशब्दस्य सोमदेहजीवपरतामवगमयति ? न ? इति । 'तं देवा भक्षयन्ति' इति प्रतिपन्नं भक्षणम्, 'एष सोमो राजा' इति सोमशब्दस्य सोमदेहजीवपरत्वविरोधि ? उत अविरोधि ?—इति (विचाराः) ॥ यदा विरोधि ; तदानीम् 'एष सोमो राजा' इति 'सोम' शब्दस्य जीवविषयत्वाभावेन, श्रद्धादिशब्दानामपि प्रसिद्धार्थपरतया, प्रश्न-प्रतिवचनयोः परिष्वङ्गावगमकत्वाभावात्, असम्परिष्वक्तो रंहति—इति पूर्वः पक्षः । यदा भक्षणं जीवपरत्वाविरोधि ; तदा तत्पूर्ववाक्यस्थसोमशब्दस्य जीवपरतया श्रद्धाहुत्यनन्तरवाक्यस्थसोमशब्दस्याऽपि जीवपरत्वात्, श्रद्धादिशब्दानामपि अबादिद्रव्यसंसृष्टजीवपरत्वेन प्रश्न-प्रतिवचनयोः जीवस्य भूतसूक्ष्मपरिष्वङ्गावगमकत्वात् संपरिष्वक्तो रंहति—इति सिद्धान्तः ॥

---

[1] ष्यते—श.   [2] परि—त. श.

पाञ्चालः प्रवाहणः, कर्मिणां गन्तव्यदेशं, पुनरावृत्तिप्रकारं, देवयान-पितृयाणपथव्यावर्तने, अमुष्य लोकस्य [1]अप्राप्तारं[1] च वेत्थ?—इति पृष्ट्वा, इदमपि पप्रच्छ;

'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति?' (छां. उ. 5-3-3)

इति। ततः इमं [2]पश्चिमं[2] प्रश्नं [3]प्रतिब्रुवंश्च[3], द्युलोकम् अग्नित्वेन रूपयित्वा,

'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा [4]सम्भवति[4]' (छां. उ. 5-4-2)

इत्यादिना,—'देवाख्याः जीवस्य प्राणाः, अग्नित्वेन[5]रूपिते[5]द्युलोके, श्रद्धाख्यं वस्तु प्रक्षिपन्ति, सा च श्रद्धा, सोमराजाख्यामृतमयदेह[6]रूपेण[6] परिणमते। तं च अमृतमयं देहं, त एव प्राणाः, पर्जन्ये अग्नित्वेन [7]रूपिते[7] प्रक्षिपन्ति। स च देहः तत्र [8]प्रक्षिप्तः[8], वर्षं भवति। तच्च वर्षं त एव प्राणाः, पृथिव्याम् अग्नित्वरूपितायां प्रक्षिपन्ति। तच्च तत्र [9]प्रक्षिप्तम्[9] अन्नं भवति। तच्च अन्नं, त एव, पुरुषे अग्नित्वरूपिते प्रक्षिपन्ति। तच्च तत्र रेतो भवति। तच्च त एव, योषायाम् अग्नित्वरूपितायां प्रक्षिपन्ति। तच्च तत्र [10]प्रक्षिप्तं[10] गर्भो भवति'—इत्युक्त्वा आह—

'इति तु पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति' (छां. उ. 5-9-1)

इति। पञ्चम्यामाहुतौ हुतायाम्, आपः 'पुरुष' शब्दाभिलप्या भवन्तीत्यर्थः।

---

पञ्चाग्नीत्यादिना, प्रकरणस्य अनेकप्रश्न-तत्प्रतिवचनक्रमरूपतां दर्शयति, अर्थान्तरव्यवधानशङ्कानिवृत्त्यर्थम्। [तेन] 'प्रश्नानन्तरं भूतसूक्ष्मपरिष्वङ्गपरं प्रतिवचनं न दृश्यते' इति न शङ्का। व्यावर्तने—व्यावर्तकाकारौ। 'इत्यादिना' इत्यस्य 'उक्त्वाह' इत्युत्तरत्राऽन्वयः। श्रद्धाशब्देन भूतसूक्ष्मावस्थाविशेष उच्यते। 'अमृतमयदेह' शब्दः, 'सोमराज'शब्दव्याख्यानम्। **प्राणाः**—मुख्यप्राणाः इन्द्रियाणि च। **प्रक्षिपन्तीति**। प्राणाधीनः प्रक्षेपः होमत्वेनोपचरितः इत्यभिप्रायः। पुरुषवचसः इति बहुव्रीहिसमासेन सम्बन्धमात्रं प्रतीतम्। तत्र 'पुरुष'शब्दः स्वरूपपरः। 'वचः' शब्दो वाचकपरः। अतः 'समासप्रतिपन्नः सम्बन्धः, वाच्यवाचकभावाख्यविशेषरूपः' इति दर्शयितुं 'पुरुषशब्दाभिलप्याः' इत्युक्तम्॥

---

[1] प्राप्तारं—थ. [2] पञ्चमं—द. [3] प्रब्रुवंश्च—द. [4] भवति—थ.
[5] निरूपिते—त. [6] स्वरूपेण—थ. [7] निरूपिते—त. [8] प्रतिक्षिप्तः—त. परिक्षिप्तः—थ. [9] प्रतिक्षिप्तम्—थ. [10] प्रतिक्षिप्तम्—थ.

[उक्तार्थसिद्धेर्निगमनम्]

[1]एवमुक्ते[1]—पूर्वास्वप्याहुतिषु अनुवर्तमानानामेव अपां सूक्ष्मरूपाणाम्, इदानीं पुरुषाकारत्वं भवति—इत्युक्तं भवति। अतः एवं प्रश्नप्रतिवचनाभ्यां, 'देहहेतुभूतैः भूतसूक्ष्मैः सह तत्र तत्र याति' इति गम्यते ॥ १ ॥

[अद्भिः परिष्वङ्गवचसः सर्वभूतसूक्ष्मपरिष्वङ्गपरता]

ननु—'आपः पुरुष[2]वचसः[2] (छां. उ. 5-9-1) इत्युक्ते, अपां पुरुषाकार-परिणामप्रतीतेः, गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते। [3]अतः[3] कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्गः इति ?; 'तत्राऽऽह[4]—

## २८९. त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३-१-२ ॥ (सि)

'तु' शब्दः चोद्यं व्यावर्तयति। [5]देहारम्भ[5]काणाम् अपां केवलानाम्, न

---

एवमिति। प्रश्न-प्रतिवचनवाक्ययोरुभयोरपि, 'पञ्चम्यामाहुतौ आपः पुरुषवचसः' इत्युक्ते, होतव्यद्रव्याकाङ्क्षायां, स्ववाक्यस्थतया संनिहिताः आप एव, होम्यत्वेन स्वरसतः प्रतीताः। वाक्यान्तरस्था श्रद्धा, सोमराजरूपेण परिणामस्य अयोग्या। अतः साऽपि अपामेव ज्ञापिका। एवं प्रश्न प्रतिवचनवाक्यस्वारस्यात्, प्रसिद्धश्रद्धायाः अयोग्यत्वाच्च पञ्चस्वाहुतिषु अपां होम्यत्वेनाऽनुवृत्तिरस्तीति, तासामेव पुरुषवचस्त्वमित्यर्थः॥ आद्यं सूत्रं पञ्चाग्निविद्याप्रतिवचनविषयमेव ; (न पञ्चाग्निविद्या-पितृयाणविषयम्) पितृयाणविषयवाक्यस्य, 'अश्रुतत्वादिति चेन्न' (ब्र. सू. 3-1-6) इत्यत्रोदाहरणीयत्वात् इति भाष्यकाराभिप्रायः ॥१॥

त्र्यात्मकेति। प्रथमस्य पञ्चम्यन्तपदस्य, संपरिष्वक्तो रंहतीत्यन्वयो दर्शितः शङ्काग्रन्थस्थ'परिष्वङ्ग'शब्देन। द्वितीयपञ्चम्यन्तपदस्य प्रतिज्ञावाक्यं सामर्थ्यादध्याहृतम् ;

---

[सूत्रार्थः। त्र्यात्मकत्वात्—अपां त्रिवृत्करणतः भूतत्रयात्मकत्वात्, (तथा) भूयस्त्वात्तु—देहे लोहितादिरूपेणाधिक्यादपि, 'आपः पुरुषवचसः' इति अपामेव विशेष-तोऽभिधानम् ॥]

'त्र्यात्मकत्वात्तु भूतानां त्रिवृत्करणतस्तथा। आधिक्याद्व्यपदेशः स्यान्नाम्भसा याति केवलम्॥' (ब्र॰प॰) 289)

---

[1] अत एवमुक्ते—आ. [2] वचसो भवन्ति—ध॰ द. [3] तत्र—द॰
[4] तत्र प्राह—वा. [5] देहारम्भि—त.

देहारम्भसंभवः; देहाद्यारम्भा[1]य हि![1]—

'तासां त्रिवृतं त्रिवृत[2]मेकैकामकरोत्[2]' (छां. उ. 6–3–3)

इति त्रिवृत्करणम्। केवलानाम् अपां श्रवणं तु, तासां भूयस्त्वात्। देहे च लोहितादिभूयस्त्वेन, आरम्भकेषु अपां भूयस्त्वं गम्यते ॥ २ ॥

[प्राणगतिश्रवणान्यथानुपपत्त्याऽपि भूतसूक्ष्मपरिष्वङ्गसिद्धिः]

## २९०. प्राणगतेश्च ॥ ३–१–३ ॥ (सि)

इतश्च—'भूतसूक्ष्मपरिष्वक्तस्य गमनम्'—इति गम्यते। उत्क्रामति जीवे, [3]प्राणानां तदनुगतिः[3] श्रूयते—

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं
सर्वे प्राणा अनूत्क्रामन्ति' (बृ. उ. 6–4–2)

इति। स्मर्यते च—

'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। (भ. गी. 15–7)
शरीरं यदवाप्नोति यच्चाऽप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥' (भ. गी. 15–8)

इति। न च—निराश्रयाणां गतिरुपपद्यते—इति, तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिः, अभ्युपगन्तव्या ॥ ३ ॥

---

केवलानामिति। वैशेष्यादिति सूत्रे, त्रिवृत्कृतेष्वपि एकैकस्याधिक्यात्, तन्निबन्धनः तद्व्यवहारः इत्युक्तम्। अत्र तु तदाधिक्यमपामस्तीति दर्शयितुं सूत्रारम्भः ॥ २ ॥

'इतश्चेति' अवान्तरसाध्यान्वयव्यावृत्त्यर्थम् ॥ ३ ॥

---

[सूत्रार्थः। प्राणगतेश्च—इन्द्रियाणां जीवेन सह गमनश्रुतेरपि ज्ञापकात्, जीवः भूतसूक्ष्मैः सम्परिष्वक्त एव सन् देहाद् देहान्तरं गच्छति ॥]

'इन्द्रियाणां तेन गतेस्तदाधारतया तनोः। भूतसूक्ष्मशरीरेण गच्छतीति च गम्यते॥' (ब्र. प. 290)

---

[1] यैव हि—वा. [2] मेकैकाम्—9. [3] तदनुगतिः प्राणानाम्—थ.

[वागादीनां प्राणानामग्न्याद्यप्ययश्रुतेर्गौणतया निर्वाहः]

२९१. **अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३-१-४ ॥** (सि)

'यत्राऽस्य पुरुषस्य मृतस्याऽऽग्निं वागप्येति,

वातं प्राणश्चक्षुरादित्यम्' (बृ. उ. 5-2-13)

इत्यादिना, प्राणानां जीवमरणकाले अग्न्यादिषु अप्ययश्रवणात्, न तेषां जीवेन सह गमनमिति, 'गतिश्रुतिः[1] अन्यथा नेया—इति चेत्!

न; भाक्तत्वात् अग्न्यादिषु अप्ययश्रवणस्य।

कथं भाक्तत्वम्?

'ओषधीर्लोमानि वनस्पतीन् केशाः' (बृ. उ. 5-2-13)

इति, अनपियद्भिः लोमादिभिः सह श्रवणात्। [2]अतः[2] चक्षुराद्यप्ययश्रुतिः, अधिष्ठातृदेवतापक्रमणपरा ॥ ४ ॥

---

'यत्रे'त्यादिः श्रुतिः।

**अनपियद्भिः**—ओषधिषु वनस्पतिषु च अप्ययरहितैः। तत्र हि! केशादेरप्ययश्रुतिः, तत्तद्देवतापक्रमणपरा; तथेदमित्यर्थः। **ओषधीर्लोमानि**—लोमाभिमानिदेवता ओषध्यभिमानिदेवतामप्येतीति। लोमाभिमानित्वं विहाय केवलम् ओषध्यभिमानी भवतीत्यर्थः। **अग्निमिति**। वागभिमानिनी वह्न्यभिमानिनीमप्येति— वागभिमानित्वरूपं विहाय केवलाग्निर्भवतीत्यर्थः ॥ ४ ॥

---

[सूत्रार्थः। **अग्न्यादिगतिश्रुतेः**—अग्न्यादिरूपेष्वर्थेषु वागादिकानाम् अप्ययस्य श्रुतितोऽवगमात्, प्राणगतिर्न मुख्या, **इति चेन्न**—एवं शङ्कनमयुक्तम्, **भाक्तत्वात्**—अग्न्यादिगतिश्रुतेरौपचारिकतया नेयत्वात्]

**'अग्न्यादिषु गतिश्रुत्या जीवेन गमनं कथम्। तेषाम्? इति न वक्तव्यमभिमानिपरा हि सा॥' (ब्र.प. 291)**

---

[1] श्रुतिः—द. [2] ततः—त.

[प्रथमहोमे अपाम् अश्रवणशङ्का ; श्रद्धाशब्देन अपामभिधानात्परिहारश्च]

## २९२. प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥३-१-५॥(सि)

यदुक्तम्—'अद्भिः सूक्ष्माभिः [1]भूतान्तर[1]संसृष्टाभिः परिष्वक्तो जीवो गच्छति' इति प्रश्न-प्रतिवचनाभ्याम् अवगम्यते—इति ;

तन्नोपपद्यते ; द्युलोकाग्निविषये प्रथमे होमे, अपां [2]होम्यत्वा[2]श्रवणात् ।

'[3]तस्मिन्नेतस्मिन्नग्नौ[3] देवाः श्रद्धां जुह्वति' (छां उ. 5-4-2)

इति, श्रद्धैव हि ! होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन श्रुता । अतः न आपः तत्र होम्याः—इति चेत् !

न ; यतः ताः—आप एव 'श्रद्धा' शब्देन तत्राऽभिधीयन्ते ।

कुतः ? प्रश्न-प्रतिवचनोपपत्तेः ।

[प्रश्न-प्रतिवचनयोरुपपादनम् ]

'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां. उ. 5-3-3) इति प्रश्नस्य, प्रतिवचनोपक्रमे हि ! श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता । तत्र यदि 'श्रद्धा' शब्देन आपो नोच्येरन् ! ततः अन्यथा प्रश्नः, अन्यथा प्रतिवचनमिति असङ्गतं स्यात् ।

'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः' (छां. उ. 5-9-1)

इति [4]प्रतिवचन[4]निगमनं च श्रद्धायाः अप्त्वमेव [5]सूचयति[5] । 'वेत्थ यथा' इति हि ! प्रश्नगतः प्रकारः, 'इति तु पञ्चम्याम्' इति 'इति' शब्देन, परिहारे निगम्यते ।

---

निगम्यत इति । प्रश्नगतस्य प्रकारस्य प्रतिवचनान्ते निगमनात्, मध्येऽपि तत्प्रकार

---

[सूत्रार्थः । **प्रथमे**—पञ्चाग्निविद्योक्ते आद्ये होमे, **अश्रवणात्**—अपां होम्यत्वश्रवणाभावात्, भूतान्तरसंसृष्टानामपां जीवेन सह गमनं न युज्यते, **इति चेन्न**—एवं शङ्कनमयुक्तम्, हि—यतः, **ता एव**—आप एव आद्ये होमे श्रद्धाशब्दोक्ताः, **उपपत्तेः**—तथा सत्येव प्रश्नोत्तरोपपत्तः ॥ ]

'अपामश्रवणाद्धोमे प्रथमेनेति चेन्न हि । ते श्रद्धां जुह्वतीत्युक्ता आप एवोपपत्तितः ॥' (अ.प. 292)

---

[1] भूतान्तरैः—द.　[2] होमत्वा—आ.　[3] तस्मिन्नग्नौ—त. भ.
[4] प्रतिवचने—द.　[5] साधयति—इ. न.

श्रद्धा-[1]सोमराज[1]-वर्षा-ऽन्न-रेतो गर्भरूपेण अपां परिणाममुक्त्वा हि! 'एवमापः पुरुषवचसः' इति निगम्यते ।

['श्रद्धा' शब्दस्य अप्परत्वोपपत्तिः]

'श्रद्धा' शब्दस्य च अप्सु [2]वैदिक[2]प्रयोगो दृश्यते—

'अपः प्रणयति । श्रद्धा वा आपः' (तै.ब्रां 3-2-4-33)?

इति ।

'श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा [3]सम्भवति[3]' (छां.उ. 5-4-2) इति सोमाकारेण परिणामश्च, अपामेव उपपद्यते । अतः—भूतान्तरसंसृष्टाभिरद्भिः सम्प[4]रिष्वक्तो जीवो[4] रंहति—इत्युपपन्नम् ।। ५ ।।

[श्रुतौ जीवस्याश्रवणात् अप्परिष्वक्तजीवगमनासिद्धिशङ्का-परिहारौ]

## २९३. अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।। ३-१-६ ।। (सि)

यत्पुनः उक्तम्—'अद्भिः सम्परिष्वक्तो जीवः याति' इत्ययमर्थः, [5]एतस्माद्वाक्यात्[5] अवगम्यते—इति ; तत् नोपपद्यते ; [6]अस्मिन्[6] वाक्ये जीवस्य अश्रवणात् । अत्र हि! श्रद्धादय एव [7]अम्बवस्था[7]विशेषाः होम्यत्वेन श्रुताः ; न तु जीवः तत्परिष्वक्तः—इति चेत्!

---

एव उपपादितः स्यादित्यर्थः । अपामेवेति । न तु मनोवृत्तिविशेषस्य ; तस्य सोमाकारपरिणामं प्रति उपादानत्वायोगादित्यभिप्रायः ।। ५ ।।

---

[सूत्रार्थः । अश्रुतत्वात्—श्रुतिवाक्ये जीवगमनस्याकथनात्, (उक्तमिदं न युज्यते) इति चेन्न—एवं शङ्कनमनुचितम्, इष्टादिकारिणाम्—इष्टापूर्ताद्यनुष्ठातॄणाम्, प्रतीतेः—उत्तरश्रुतिवाक्ये अवगमात् जीवश्रवणात् ।।]

'अश्रुतत्वान्न जीवस्य परिष्वङ्गः कथं च तैः । इति चेन्नाऽत्र यज्ञादिकारिणां गमनश्रुतेः ।।' (भ प. 29

---

1 सोम—द. 2 वैदिकः—त. थ. म. 3 भवति—त. 4 रिष्वक्तो—त. भ.
5 एतद्वाक्यादेव—द. 6 एतस्मिन्—इ. न. 7 अवस्था—त.

तन्न; इष्टादिकारिणां प्रतीतेः। [1]अस्मिन्नेव[1] वाक्ये हि! उत्तरत्र—'ब्रह्मज्ञान-विधुरेष्टापूर्त-दत्तकारिणः, द्युलोकं प्राप्य सोमराजानो [2]भवन्ति[2]। पुण्यकर्मावसाने च, पुनरागत्य गर्भं प्राप्नुवन्ति'—इत्युच्यते;

'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभि[3]सम्भवन्ति[3]' (छां. उ. 5-10-3)

इत्यारभ्य,

'पितृलोकादाकाशम्, आकाशाच्चन्द्रमसम्। एष सोमो राजा [4]तद्देवाना[4]मन्नम्। तं देवा भक्षयन्ति'। (छां. उ. 5-10-4)

'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाऽध्वानं पुनर्निवर्तन्ते' (छां. उ. 5-10-5)

'यो यो ह्यन्नमत्ति यो रेतः [5]सिञ्चति[5] तद्भूय एव भवति' (छां. उ. 5-10-6)

इति। अत्राऽपि द्युलोकाग्नौ,

'श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति' (छा उ. 5-4-2)

इति, तदेकार्थत्वात् श्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तम्—इति गम्यते। देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दः, विशेष्ये जीवे एव पर्यवस्यति। अतः 'संपरिष्वक्तो जीवो याति' इत्युपपद्यते ॥ ६ ॥

[सोमराजपदस्य जीवपरत्वाभावशङ्का-परिहारौ]

न नु च—'तं देवा भक्षयन्ति' (छां. उ. 5-10-3) इति देवैर्भक्ष्य[6]माणत्व[6]-

---

**अस्मिन्नेव वाक्ये**—महावाक्ये इत्यर्थः। **सोमराजानः**—दिव्यदेहाः। **पूर्तम्**—खातादिकर्म। **इत्युपासते**—उक्तप्रकारेण अनुतिष्ठन्ति। **सम्भवन्तीति**। भवतिः प्राप्तिवाची। परस्मैपदित्वं तु छान्दसम्। यद्वा—सत्तार्थो भवतिरेव उपसर्गवशात् (सम्) प्राप्त्यर्थः। यावत्सम्पातमिति 'सम्पात' शब्देन, 'संपतति अनेन स्वर्गम्' इति व्युत्पत्त्या कर्माऽभिधीयते। **तद्भूय एव भवति**—तद्योगी भवतीत्यर्थः। **'अत्रापीति'**। उभयत्र 'सोमराजशब्देन प्रत्यभिज्ञानात् ऐकार्थ्यम्। अस्फुटजीवसम्बन्धस्य पूर्ववाक्यस्य, स्फुटजीवसम्बन्धेन उत्तरवाक्येन ऐकार्थ्यात् उक्त एवार्थः इत्यर्थः। **देहस्येति**। श्रद्धा-सोमादिशब्दैः तत्तदवस्थदेहविशिष्ट-वचनं लाक्षणिकं[स्यात् !] इत्यत्र [उत्तरमिदम्] ॥ ६ ॥

[1] तस्मिन्नेव—न. [2] भवन्तीति—वा. [3] संविशन्ति—द.
[4] देवाना—त. [5] सिञ्चतीति—द. [6] माण—थ.

वचनात्, 'सोमो राजा' (छां. उ. 5-10-4) इति, न जीव उच्यते; जीवस्य अनदनीयत्वात्; तत्राऽऽह—

## २९४. भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ३-१-७ ॥

'वा' शब्दः चोद्यं व्यावर्तयति। इष्टादिकारिणः अनात्मवित्त्वात्, सः देवानां भोगोपकरणत्वेन, इह अमुत्र च वर्तते। इह [1]इष्टादिना[1] तदाराधनं कुर्वन् उपकरोति। आराधनप्रीतैः देवैः दत्तम् अमुं लोकं प्राप्य, तत्र तत्समानभोगः तदुपकरणं भवति।

'यथा [2]पशुः एवं[2] स देवानाम्' (बृ. उ. 3-4-10)

इति, अनात्मविदः देवानामुपकरणत्वं दर्शयति श्रुतिः।

स्मृतिरपि,—आत्मविदां ब्रह्मप्राप्तिम्, अनात्मविदां च देवभोग्यत्वं दर्शयति—

'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' (भ. गी. 7-23)

इति। अतः—जीवस्य देवानां भोगोपकरणत्वाभिप्रायम्, अन्नत्वेन भक्ष्यत्ववचनम्। अतः तद् भाक्तम्। तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते—

'न वै देवा अश्नन्ति न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति' (छां.उ. 3-6-1)

इति। तस्मात्—भूतसूक्ष्मैः सम्परिष्वक्तो जीवो रंहति इति सिद्धम्॥ ७॥

इति तदन्तरप्रतिपत्त्यधिकरणम्॥ १॥

---

'इहेत्यादिना' इह च अमुत्र च भोगोपकरणत्वं विवृणोति। अमुत्र तत्सेवकत्वात्, तद्भोगोपकरणत्वात्। सेवमानस्य दर्शनमेव, तेषां भोगः, 'एतदेवाऽमृतं दृष्ट्वा तृप्यन्ति' इति न्यायात्। तस्मादिति अधिकरणार्थमुपसंहरति॥ ७॥

[सूत्राणि—१ तदन्तर. २ त्र्यात्मक. ३ प्राण. ४ अग्न्यादि. ५ प्रथमे. ६ अश्रुत. ७ भाक्तं वा.]

इति तदन्तरप्रतिपत्त्यधिकरणम्॥ १॥

---

[सूत्रार्थः। **भाक्तं वा**—(जीवस्य देवैर्भक्ष्यमाणत्ववचनं) गौणमेव; न मुख्यम्, (तदुक्तिश्च) इष्टादिकारिणाम्—इष्टापूर्तादिकर्मपराणाम्, **अनात्मवित्त्वात्**—आत्मज्ञत्वाभावात्, **तथाहि**—अनात्मविदो देवभोगोपकरणत्वरूपं प्रकारमेव हि, **दर्शयति**—गीतास्मृतिः स्पष्टयति॥]

'तं देवा भक्षयन्तीति भक्षणं गौणमेव हि। अनात्मवित्त्वात् तेषां तु पशुतुल्यत्वकीर्तनात्॥' (अ.प. 294)

---

[1] इष्टापूर्तादिना—ज. [2] पशुरेव—त.

(70) कृतात्ययाधिकरणम् ॥ ३–१–२ ॥ [सू. 8–11 सि.]

[अधिकरणार्थः—सुकृतफलमनुभूय अमुष्माल्लोकान्निवर्तमानस्य भुक्तशेषेण कर्मणा सहैव जीवस्य प्रत्यवरोहः]

## २९५. कृतात्ययेऽनुशयवान् दृष्ट-स्मृतिभ्यां यथेतमनेवं च ॥ ३-१-८ ॥

[सङ्गतिप्रतिपादनम् विषयश्च]

केवलेष्टापूर्तदत्तकारिणां, धूमादिना [1]पितृयाणेन[1] पथा गमनम्, कर्मफलावसाने पुनरावर्तनं च आम्नातम्—

'यावत्सम्पातमुषित्वा, अथैतमेवाऽध्वानं पुनर्निवर्तन्ते' (छां. उ. 5–10–3)

इति ।

[अधिकरणीयः संशयः]

तत्र प्रत्यवरोहन् जीवः, किम् अनुशयवान् प्रत्यवरोहति ? उत न ?—इति संशय्यते ।

[पूर्वः पक्षः सयुक्तिकः]

किं युक्तम् ? कर्मणः कृत्स्नस्य उपभुक्तत्वात्, न अनुशयवान्—इति प्राप्तम् । अनुशयो हि ! उपभुक्तशिष्टं कर्म । तच्च कृत्स्न[2]फल[2]भोगे सति न अवशिष्यते ।

'यावत्सम्पातमुषित्वा' (छां. उ. 5–4–5)

---

'केवलेति' विषयसिद्ध्यर्थम् अवान्तरसङ्गत्यर्थं च । यावत्संसारं प्रकृतिसंबन्धः अवर्जनीयः इत्युक्तम् । तद्धेतुकर्मसंबन्धोऽप्यवर्जनीय इत्युच्यते इति सङ्गतिः ।

अमुष्माल्लोकान्निवर्तमानः, किं सानुशयो निवर्तते ? उत निरनुशयः ? इति चिन्ता । 'यावत्सम्पातम्' 'प्राप्यान्तम्' इति च वाक्यं, किं सानुशयस्य निवर्तनं निरुणद्धि ? न ? इति । 'संपात-कर्म' शब्दौ, किं कर्ममात्रपरौ ? उत फलप्रदानप्रवृत्तकर्मपरौ ? । 'तद्य इह

---

[सूत्रार्थः । कृतात्यये—अनुष्ठितस्य कर्मणः फलभोगेन क्षये सति, अनुशयवान्—भुक्तशिष्टकर्मयुक्त एव सन् जीवः प्रत्यवरोहति, यथेतम्—इतो लोकात् गत्यनुगुणम्, अनेवं च—अन्यथापि च, दृष्टस्मृतिभ्याम्—श्रुति-स्मृतिभ्यामेवमवगम्यते ॥]

'कृतकर्मात्यये जीवः भुक्ताच्छिष्टेन कर्मणा । यथागतं चाऽन्यथा चाऽप्यवरोहति शब्दतः ॥' (ब्र.प. 295)

---

[1] पितृयानेन—द. [2] फलोप—त.

इति वचनात्, कृत्स्नोपभोगश्च [1]ज्ञायते[1]। ‘संपतन्ति अनेन [2]स्वर्गं लोकम्[2]’ इति, सम्पातः—कर्मोच्यते। श्रुत्यन्तरं च—

‘प्राप्याऽन्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्।

तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे ॥’ (बृ. उ. 6-4-6)

इति ॥

[सिद्धान्तस्य प्रतिपादनम्]

एवं प्राप्ते, अभिधीयते—‘अनुशयवान् प्रत्यवरोहति’—इति।

कुतः? दृष्ट स्मृतिभ्याम्। श्रुति स्मृतिभ्यामित्यर्थः। श्रुतिस्तावत्—

‘तद्य इह रमणीयचरणाः अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्; ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा’ (छां उ. 5-10-7)

‘अथ य इह कपूयचरणाः अभ्याशो ह यत् ते कपूयां योनिमापद्येरन्; श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा’ (छां. उ. 5-10-7)

इति प्रत्यवरूढान् प्रति श्रूयते। ‘अमुष्माल्लोकात् प्रत्यवरूढेषु रमणीयकर्माणः,

---

रमणीयचरणाः’ इत्यादि वाक्यं, किं संपातादिशब्दस्य फलप्रदानप्रवृत्तकर्मपरतामवगमयति? न? इति। किम् अत्र ‘चरण’ शब्दः आचारपरः? उत सुकृत-दुष्कृतपरः? इति।

यदा स आचारपरः तदा, तेन वाक्येन सम्पातादिशब्दस्य फलप्रदानप्रवृत्तकर्मपरत्वानवगमात्, ‘यावत्सम्पात’मित्यादिवाक्यस्य सानुशयनिवर्तनविरोधितया निरनुशयो निवर्तते—इति स्यात्! यदा ‘चरण’शब्दः सुकृत-दुष्कृतपरः; तदा ‘तद्य इह रमणीयचरणाः’ इत्यादिवाक्यैकार्थ्येन संपातादिशब्दस्य फलदानप्रवृत्तकर्मपरत्वावगमात्, ‘यावत्सम्पातम्’ इत्यादिवाक्यस्य सानुशयनिवर्तनाविरोधितया, ‘सानुशयो निवर्तते’ इति सिध्यति।

**कृतात्यये**—कृतस्य कर्मणः अनुभवेन विनाशे। **तच्चेति**, तच्छब्दः, कर्ममात्रपरः। **सम्पतन्तीति**। ‘यावत्सम्पात’मित्यस्य ‘यावत्पतनम्’ इत्यर्थश्चेत्! वाक्यवैयर्थ्यमित्यभिप्रायः॥

‘दृष्ट’ शब्देन प्रत्यक्षश्रुतिर्विवक्षिता। **अभ्याशः** इति पदं ‘दि(वि)शः’ इतिवत् प्रथमाबहुवचनम्। अभि आङ् पूर्वात् ‘अशू-व्याप्तौ’ (पा. धा. ११६४) इति धातोः एवं रूपं भवति। **ये इह अभ्याशः**—अभ्यागन्तारः, **ते रमणीयचरणाः यत्**—साधुकर्म-

---

[1] विज्ञायते—द. [2] स्वर्गलोकम्—ज.

रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते ; कपूयचरणाः—कुत्सितकर्माणः, कुत्सितां श्व-सूकर-चण्डालादियोनिं प्रतिपद्यन्ते' इति, प्रत्यवरूढानां पुण्य-पाप[1]कर्मयोगं[1] दर्शयति ।

स्मृतिरपि—

'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः, प्रेत्यकर्मफलमनुभूय, [2]ततः शेषेण[2] विशिष्ट-देश-जाति कुल-रूपाऽऽयुः—श्रुत-वित्त-वृत्त-सुख-[3]मेधसः,[3] जन्म प्रतिपद्यन्ते । विष्वञ्चः, विपरीताः नश्यन्ति'—(गौ. ध. सू. 2-11-12, 13)
इति । तथा,

'ततः परिवृत्तौ कर्मफलशेषेण जातिं, रूपं, वर्णं, बलं, मेधां, प्रज्ञां, द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते । तत् चक्रवत् उभयोर्लोकयोः सुख एव [4]वर्तते[4]'
(आप. ध. सू. 2-1-2-3)

इति । 'यावत्सम्पात'मिति, फलदानप्रवृत्तकर्मविशेषविषयम् । 'यत्किंचेह करोत्ययम्' इतीदमपि, तद्विषयमेव । अभुक्तफलानाम् अकृतप्रायश्चित्तानां च कर्मणाम्, कर्मान्तर-फलानुभवान्नाशोपि अनुपपन्नः । अतः अमुं लोकं गताः, सानुशया एव,

---

कारिणो यदि ; ते रमणीयां योनिमापद्येरन् इत्यर्थः । एवमुत्तरत्र द्रष्टव्यम् । '**अभ्याशः**' इति पदं प्रत्यवरूढवाचि ।

**स्मृतिरपि इति,** गौतमापस्तम्बवचनमुदाहृतम् । स्वर्गार्थकर्मव्यतिरिक्तम् ऐहिकफलं कर्मान्तरम् अप्रवृत्तफलम्—**अनुशयः** इति, तद्व्यवच्छेदः. '**फलदानप्रवृत्त**' शब्देन विवक्षितः ॥

**अभुक्तेत्यादि** । स्वर्गार्थकर्मैकदेशस्य तत्राऽभुक्तत्वं च, 'स्वर्गकामो यजेत' इति श्रुतिस्वारस्यविरुद्धम् । यत्र तु स्वर्ग-नरकाद्युपभुक्तकर्मशेषेण योन्यन्तरप्राप्तिः वचनसिद्धा ; तत्र 'अनेकशरीरारम्भफलकत्वम् एकस्य कर्मणः' इति वचनबलात् अभ्युपगन्तव्यम् । तस्मात् आमुष्मिके कर्मजाते उपभुक्ते, अवशिष्टम् ऐहिकफलं कर्मान्तरजातम्—अनुशयः । तद्वन्तः अवरोहन्तीति । **प्रायश्चित्तेति** । पुण्यकर्मणः मुमुक्षवपेक्षया पापस्थानीयस्य प्रायश्चित्तं ब्रह्मविद्या ।

---

[1] कर्मभोगं—वा.   [2] तच्छेषेण—द   [3] मेधसो हि—पा   [4] वर्तन्ते—थ.

यथेतम् अनेवंच पुनर्निवर्तन्ते—आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्तन्ते इत्यर्थः ।

[आरोहणावरोहणक्रमयोः विवरणम्]

आरोहणं [1]हि[1]! धूम-रात्र्यपरपक्ष-दक्षिणायन-षण्मास-पितृलोकाकाश-चन्द्रक्रमेण। अवरोहणं तु, चन्द्रमसः स्थानात् आकाश-वायु-धूमाभ्र-[2]मेघक्रमेण[2] । तत्र आका[3]शाव-रोहणात्[3] यथेतम् । वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्च अनेवम् ॥ ८ ॥

['चरण' शब्दस्य पुण्य-पापपरत्वाभावशङ्का-परिहारौ]

## २९६. चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥३-१-९॥(पू)

'रमणीयचरणाः, कपूयचरणाः' इति न 'चरण' शब्देन पुण्य-पापरूपं कर्म अभिधीयते; 'चरण' शब्दस्य लोक-वेदयोः आचारे प्रसिद्धेः ।

लौकिकाः खलु! 'चरणम्, आचारः, शीलम्, वृत्तम्' इति पर्यायान-[4]भिमन्यन्ते[4] । वेदे च,

'यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि' (तै. उ. शी. 11-2)
यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि' (तै. उ. शी. 11-2)

इति चरण-कर्मणी भेदेन व्यपदिश्येते । अतः चरणात्—शीलात् योनिविशेषप्राप्तिः; न अनुशयात्—इति चेत्!

---

यथेतम्—यथागतम् । 'इण्-गतौ' इति धातुः ॥ ८ ॥

वेदे चेति पृथङ्निर्देशः, भिन्नार्थत्वकृतः इत्यर्थः । अनवद्यानि कर्माणीति यागाद्युच्यते । सुचरितानीति आचार उच्यते इति पूर्वपक्षिणोऽभिप्रायः ।

---

[सूत्रार्थः । चरणात्—'रमणीयचरणाः' इत्यादौ चरणशब्दात् शीलमेवाभिधीयते; न पुण्यपापे इति चेन्न—इति शङ्कनं नोचितम्; तदुपलक्षणार्थेति—चरणपदरूपा श्रुतिः उपलक्षणतया पुण्यपापावगत्यर्थेति, कार्ष्णाजिनिनामा आचार्योऽभिप्रैति ॥]

'आचारवाचिचरणश्रुत्या कर्मात्र नेति चेत् । कर्मोपलक्षणार्थेति कार्ष्णाजिनिरथाब्रवीत् ॥' (ब्र.प. 296)

---

[1] च—वा. [2] क्रमेण—थ. [3] शारोहणात्—त. थ. [4] मिधीयन्ते—द.

[1]तन्न;[1] 'चरणश्रुतिः कर्मोपलक्षणार्था' इति (हि) कार्ष्णाजिनिराचार्यो मन्यते; [2]केवलादाचारात्[2] सुख-दुःखप्राप्त्यसम्भवात्। सुख-दुःखे हि! पुण्य-पापरूपकर्मफले॥९॥

[आचारवैफल्यात् तद्विधानानर्थक्यशङ्का-परिहारौ]

## २९७. आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३-१-१० ॥ (सि)

एवं तर्हि!—अफलत्वात् आचारस्य स्मृतिविहितस्य, आनर्थक्यमेव—इति चेत्! तन्न; तदपेक्षत्वात् पुण्यस्य कर्मणः। [3]आचारवत[3] एव पुण्यकर्मस्वधिकारः;
'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः [4]सर्वकर्मसु[4]' (द. स्मृ. 2–27) (दक्षस्मृति)
'आचारहीनं न पुनन्ति वेदाः' (व. स्मृ. 6–3) (वसिष्ठस्मृति)
इत्यादिवचनेभ्यः। अतः चरणश्रुतिः कर्मोपलक्षणार्था—इति कार्ष्णाजिनेरभिप्रायः॥१०॥

['चरण' शब्दाभिधेयत्वं पुण्य-पापकर्मणोरेवेति बादार्याशयः]

## २९८. सुकृत-दुष्कृते एवेति तु बादरिः ॥ ३-१-११ ॥

'पुण्यं कर्म आचरति, पापं कर्म आचरति' इति, कर्मणि चरतेः प्रयोगात्,

---

पुण्यपापरूपकर्मफले इति। आचाराङ्गकानुष्ठितपुण्यापुण्यफले इत्यर्थः॥ ९॥

'अतः–प्रायः' इति, एतत्सूत्रार्थं पूर्वसूत्रार्थेन सङ्गमयति॥ १०॥

'कर्मणि चरतेः प्रयोगात्' इति 'आचार' शब्दस्य साधारण्यं दर्शयति।

---

[सूत्रार्थः। आनर्थक्यमिति चेत्—सन्ध्याद्याचाराणां विधानवैयर्थ्यमिति शङ्कनम्, —ननोचितम्, तदपेक्षत्वात्—पुण्यकर्मसिद्धेः आचारसापेक्षत्वात्॥]

'आचारस्य त्वकर्मत्वे वैयर्थ्यमिति चेन्न हि। आचाराणामपेक्ष्यत्वात् कर्मणेति तु मन्यते॥' (ब्र.प. 297)

[सूत्रार्थः। सुकृ....एव—पुण्य-पापाख्ये कर्मणी एव, 'चरण' शब्दबोध्ये; इति तु बादरिः—इत्येव बादरिर्मनुते॥]

'श्रुतौ चरणशब्देन पुण्य-पापे तु कर्मणी। साक्षादेवोदिते एवं बादरिर्मनुते मुनिः॥' (ब्र.प. 298)

---

[1] न—वा.
[2] केवलाचारात्—वा.
[3] आचारता—त. थ. न.
[4] सर्वकर्मणि—वा.

पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन, गोबलीवर्दन्यायेनोपपत्तेः; 'मुख्ये संभवति न लक्षणा न्याय्या' इति, 'सुकृत-दुष्कृते एव चरणशब्दाभिधेये' इति बादरिराचार्यो मन्यते ।

[अस्मिन् विषये बादरिमतस्यैव बादरायणमतत्वम्]

[1]अत्र[1] बादरिमतमेव स्वमतम्; आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधि[2]कारसम्पादनं फलम्[2]—इति तु स्वीकृतम् । अतः [3]सानुशया[3] एव प्रत्यव[4]रोहन्ति[4] ॥ ११ ॥

इति कृतात्ययाधिकरणम् ॥ २ ॥

—o—

कर्मानुष्ठाने प्रयोगादित्यर्थः । 'पृथङ्....विषयत्वेन' इति, पृथङ्निर्देशस्य अन्यथासिद्धिमाह । 'अनवद्यानि कर्माणि' इति, प्रत्यक्षश्रुतिसिद्धं कर्मोक्तम् । 'अस्माकं सुचरितानि' इति, आचारानुमितश्रुतिसिद्धं कर्मोक्तम् । 'मुख्ये' इति, कार्ष्णाजिनिमताद्वैषम्यम् । आचारानुमितेति, कार्ष्णाजिनिमते स्वीकृतांशमाह । 'अतः' इति, अधिकरणार्थोपसंहारः॥११॥

[सूत्राणि—१ कृतात्यये. २ चरणा. ३ आनर्थक्य. ४ सुकृत.]

इति कृतात्ययाधिकरणम् ॥ २ ॥

—o—

[1] अत्र च—न. अतः—द. [2] कारसम्पादनम्—च. कारोपादानम्—थ.
[3] सानुशय—न. [4] रोहति—न.

(71) अनिष्टादिकार्यधिकरणम् ॥ ३-१-३ ॥ [सू. 12-21]

[अधिकरणार्थः—केवलपापकारिणां चन्द्रारोहावरोहौ विनैव गतागती]

## २९९. अनिष्टादिकारिणामपि च श्रुतम् ॥ ३-१-१२ ॥ (पू.)

[सङ्गतिः, अधिकरणविचार्यांशश्च]

केवलेष्टापूर्त-दत्तकारिणः चन्द्रमसं गत्वा सानुशया एव निवर्तन्ते—इत्युक्तम् ।

इदानीम्—अनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति ? न ?—इति चिन्त्यते । ये विहितं न कुर्वन्ति; [1]ये च निषिद्धं[1] कुर्वन्ति; ते उभयेऽपि पापकर्माणः—अनिष्टादिकारिणः ।

---

केवलेति । प्रकृतिसम्बन्ध-तद्धेतुकर्मसम्बन्धयोः अवर्जनीयत्वमुक्तम् । तत्र कर्मसम्बन्धेऽपि साधुकर्मसम्बन्धनियमो नास्तीत्युच्यते इति सङ्गतिः ।

किम् अनिष्टादिकारिणः, यमयातनामनुभूय चन्द्रमसं गत्वा निवर्तन्ते ? उत न ? इति । 'ये वै के चे'ति वाक्यं, तेषां चन्द्रप्राप्तिम् अवगमयति ? न ? इति । किम् अत्र 'सर्वे' शब्दः प्रेतमात्रविषयः ? उत इष्टादिकारीप्रेतविषयः ? इति । किं पितृयाणगमनम् अनिष्टादिकारिणामपि ? उत इष्टादिकारिणामेव ? इति । किम् 'अथ य इमे' इत्युपक्रमः, पितृयाणस्य इष्टादिकारिविषयतामवगमयति ? न ? इति । किम् अनिष्टादिकारिणां पंचमाहुतिमन्तरेण पुरुषत्वसम्पत्तिरस्ति ? न ? इति । किं तृतीयस्थानमुपन्यस्य ऊर्ध्वलोकासंपूरणवचनं, तस्य पुरुषत्वनिष्पत्तेः पंचमाहुत्यनपेक्षतामवगमयति ? न ? इति ॥ [विचाराः] ॥

यदा नावगमयति, तदा पुरुषत्वसम्पत्तेः पञ्चमाहुतिसापेक्षत्वेन, 'य इमे ग्रामे' इत्युपक्रमस्य, पितृयाणस्येष्टादिकारिविषयत्वानवगमकतया तस्य अनिष्टादिकारिणामपि प्राप्तत्वात्,

---

[सूत्रार्थः । अनि....मपि—पापकर्मणामपि, (गतागती चन्द्रारोहपूर्विके एव) श्रुतं च—'चन्द्रमसमेव ते सर्वे' इति हि श्रुतौ स्पष्टमुक्तम् ।।]

'गच्छन्ति ते सर्व इति श्रुत्यानिष्टादिकारिणाम् । अपि चान्द्रमसप्राप्तिर्भवतीति विशङ्कते ॥' (ब्र.प. 299)

---

[1] ये च अविहितं—द. निषिद्धं च—च.

[पूर्वपक्षारम्भः सयुक्तिकः]

किं युक्तम्? तेऽपि चन्द्रमसं गच्छन्ति—इति।

कुतः? तेषामपि हि? तद्गमनं श्रुतम्;

'ये वै के चाऽस्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ.उ. 1-9) इति, अविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥

[पुण्य-पापकारिणोरुभयोरपि गतितौल्यशङ्का-परिहारौ]

[1]एवं तर्हि![1] सुकृत-दुष्कृतकारिणो[2]रुभयोरपि[2] अविशिष्टैव गतिः स्यात्! नेत्याह—

## ३००. संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३-१-१३ ॥ (पू)

---

'सर्वे' इति शब्दस्य प्रेतमात्रविषयतया, 'ये वै के चे'त्यादि वाक्येन सर्वेषां चन्द्रप्राप्त्यवगमात्, अनिष्टादिकारिणोऽपि यातनानुभवानन्तरं चन्द्रमसं गत्वा निवर्तन्ते—इति।

यदा परलोकासंपूरणवचनं तृतीयस्थानस्य देहनिष्पत्तेः पञ्चमाहुत्यनपेक्षतामवगमयति, तदा पुरुषत्वसम्पत्तेः पंचमाहुत्यनपेक्षतया 'य इमे' इत्युपक्रमस्यापि पितृयाणस्येष्टादिकारि-विषयत्वावगमकतया तस्य अनिष्टादिकारिणामप्राप्तत्वात्, 'सर्व' शब्दस्य इष्टादिकारिप्रेतविषय-तया, 'ये वै के च' इत्यादिवाक्येन सर्वेषां चन्द्रप्राप्त्यनवगमात्, अनिष्टादिकारिणः न चन्द्रम-सं गच्छन्ति इति सिध्यति ॥

**'इष्टादि'** शब्देन इष्टापूर्ते उच्येते। अत्र देहारंभस्य पञ्चमाहुत्यपेक्षारूपश्रुत्यर्थापत्तिश्च अभिप्रेता ॥ १२ ॥

**अविशिष्टैवेति**। पापस्य निष्फलत्वं स्यादित्यर्थः ॥

---

[सूत्रार्थः। **इतरेषाम्**—अनिष्टादिकारिणाम्, **संयमने**—यमशासने, **अनुभूय तु**—पापप्रयुक्ताः यातनाः अनुभूयैव, **आरोहावरोहौ**—चन्द्रारोहः तस्मादवरोहश्च; **तद्गतिदर्शनात्**—यमसंनिधिगतेः श्रुतिषु स्पष्टोक्तेः ॥]

'चन्द्रारोहावरोहौ तु यातनां यमशासने। अनुभूयैवेतरेषामिति तद्गतिदर्शनात् ॥' (ब्र.प. 300)

---

[1] एवं—द. [2] रुभयोः—पा.

'तु' शब्दः शङ्कां व्यावर्तयति । इतरेषाम्—अनिष्टादिकारिणाम्, चन्द्रारोहावरोहौ, संयमने-यमशासने, तत्प्रयुक्तयातनाः अनुभूयैव ; नाऽन्यथा ।

कुतः ?—तद्गतिदर्शनात्—दृश्यते हि ! पापकर्मणां यमवश्यतया तद्गमनम् ;

'अयं लोको नास्ति पर [1]इति मानी[1] पुनः पुनर्वशमापद्यते मे' (कठ.उ. 2-6)

'वैवस्वतं [2]सङ्गमनं[2] जनानां यमं राजानम्' (तै. आर. 6-1-1)

इत्यादिषु ।। १३ ।।

[अविशेषेण सर्वेषां यमवश्यतास्मृतिः]

## ३०१. स्मरन्ति च ॥ ३-१-१४ ॥ (पू)

स्मरन्ति च, सर्वेषां यमवश्यतां पराशरादयः ;

'सर्वे चैते वशं यान्ति यमस्य [3]भगवन् किल[3]' (वि. पु. 3-7-5)

इत्यादिषु ॥ १४ ॥

[पापकारिभिर्गन्तव्याः सप्त नरकाः]

## ३०२. अपि सप्त ॥ ३-१-१५ ॥ (पू)

पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपि स्मरन्ति ॥ १५ ॥

---

संयमने इति निमित्ते सप्तमी । यमाज्ञयेत्यर्थः । अयं लोक इति । अत्र अमुत्र च सुखं नास्तीत्यर्थः ॥ १३ ॥

'तद्गतिदर्शनात्' इत्यत्रोदाहृते वाक्ये पापफलानुभवाश्रवणात् चोद्यं तदवस्थम्—इति शङ्कायां स्मरन्ति चेति सूत्रम् ॥ १४ ॥

अपि सप्तेति । नरकविषयवचनानां प्रसिद्ध्यतिशयात् अनुपादानम् ।। १५ ॥

---

[सूत्रार्थः । स्मरन्ति च—सर्वेषामेव च पापकारिणां अवर्ज्यं यमवश्यत्वं स्मृतिषु वर्णयन्त्यपि मुनयः ।।]

'सर्वे चैव वशं यान्ति यमस्य भगवन् किल । इति स्मृत्या च तेषां तु यमवश्यत्वशंसनात् ॥' (ब्र.प. 301)

[सूत्रार्थः । इतरेषाम्—अनिष्टादिकारिणाम्, सप्ताऽपि—रौरवादीन् सप्तसंख्यान् नरकानपि प्राप्यत्वेन ऋषयः स्मरन्ति ।। ]

'सप्त चैषां रौरवादिलोका इति च गम्यते । यातनां त्वनुभूयाऽथो तत्राऽपि गतिरुच्यते ॥' (ब्र.प. 302)

---

[1] इमानि—त. [2] संयमनं—ग. [3] भगवान्—त.

[सप्तलोकेषु यमसम्बन्धोपपत्तिः]

ननु—सप्तसु लोकेषु गच्छतां, कथं यमसदनप्राप्तिः ? ; अत आह—

३०३. **तत्राऽपि तद्व्यापारादविरोधः ॥ ३–१–१६ ॥** (पू)

तेष्वपि सप्तसु यमाज्ञयैव गमनात्, अविरोधः ॥ १६ ॥

[पूर्वपक्षोपसंहरणम्]

अतः—अनिष्टादिकारिणामपि यमलोकं प्राप्य, स्वकर्मानुरूपं यातनाश्च अनुभूय, पश्चात् चन्द्रारोहावरोहौ स्तः—

[सिद्धान्तारम्भः]

इति प्राप्ते, उच्यते—

३०४. **विद्या–कर्मणोरिति तु प्रकृतत्वात् ॥३-१-१७॥** (सि)

'तु' शब्दः पक्षव्यावृत्त्यर्थः । 'अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्ति'—इत्येतत् नोपपद्यते । कुतः ?—विद्या-कर्मणोरिति । विद्या-कर्मणोः फलभोगार्थत्वात्, देवयान-पितृयाणयोः ॥

[विद्याप्रसङ्गस्य दृष्टान्तार्थत्वम्]

एतदुक्तं भवति—अनिष्टादिकारिणां, यथा विद्याविधुरत्वात् देवयानेन पथा

---

लोकेषु—स्थानेषु । यमसदनप्राप्तिवचनानि पुराणादिषु पठ्यन्ते ; तन्निबन्धना इयं शङ्का । यमाज्ञयेति । व्यापारः प्रशासनरूपः [इत्यर्थः] । यमसदन–नरकप्राप्त्योः क्रमात् अविरोधः इत्यर्थः ॥ १६ ॥

भोगार्थत्वादिति । सम्बन्धसामान्यविषया षष्ठी । तादर्थ्यं च तत्फलभोगार्थत्वम् ।

---

[सूत्रार्थः । तत्राऽपि—सप्तस्थानेष्वपि, तद्व्यापारात्—यमाज्ञयैव गमनात्, अविरोधः—यमसदनप्राप्तिपरवाचः विरोधाभावः ॥]

'यमस्य शासनादेव पापिनां यातना भवेत् । तत्राऽपि तत्स्मृतेरेवेत्यविरोधं च शङ्कते ॥' (ब्र.प. 303)

[सूत्रार्थः । विद्या....रिति तु—देवयान-पितृयाणयोः विद्या-कर्मफलानुभवार्थत्वमित्ययमंशः, प्रकृतत्वात्—तयोः प्रक्रमपूर्वकम् वर्णनात् ज्ञायते ॥]

'अनिष्टादिकृतां नैव पितृयाणपथाद्गतिः । विद्यायाः सुकृतस्याऽपि फलं मार्गद्वयं श्रुतम् ॥' ब्र प. 304)

गमनं न सम्भवति ; तद्वदेव इष्टापूर्त-दत्तविधुरत्वात् पितृयाणेन चन्द्र[1]गमनमपि[1] न सम्भवति—इति ॥

[उक्तविभागावगमकप्रदर्शनम्]

देवयान-पितृयाणयोः विद्याविषयत्वं पुण्यकर्मविषयत्वं च, कथमवगम्यते ? इति चेत् !—प्रकृतत्वात् तयोः । प्रकृता हि ! देवयाने विद्या, [2]पितृयाणे[2] च कर्म ;

'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते' (छां. उ. 5-10-1)

इत्युक्त्वा,

'तेऽर्चिषमभिसंभवन्ति, अर्चिषोऽहः' (छां. 5-10-1)

इत्यादिना देवयानवचनात्,

'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' (छां. उ. 5-10-3)

इत्युक्त्वा,

'ते धूममभि[3]सम्भवन्ति[3]' (छां. उ. 5-10-3)

इत्यादिना पितृ[4]याण[4]वचनाच्च ।

'ये वै के चाऽस्माल्लोकात् प्रयन्ति ; चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ.उ. 1-9)

[5]इत्येतदपि[5] वचनम्, 'य इष्टादिकारिणः ते सर्वे' इति परिणेयम् ॥ १७ ॥

[पापकर्मिणां चन्द्रगमनाभावे शरीरानारम्भशङ्का-परिहारौ]

ननु—पापकर्मणां चन्द्रगमनाभावे, पञ्चमाहुत्यसम्भवात् शरीरारम्भ एव नोपपद्यते ।

'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां. उ. 5-9-1)

[6]इति हि[6] ! शरीरारम्भः श्रूयते । 'सा चाऽऽहुतिः चन्द्रप्राप्तिपूर्विका' इति दर्शितम् ।

---

इतिश्च हेतौ इत्यर्थः । विद्याविषयत्वम् [इत्यादौ] 'विषय' शब्देन फलं विवक्षितम् । विषिण्वन् (विशिंषन्) हि विषयः ॥

परिणेयम्—निर्वाह्यम् ॥ १७ ॥

---

[1] गमनं—द. [2] पितृयाने—त. [3] संविशन्ति—द.
[4] यान—त. [5] इत्यपि—वा. [6] इति—थ. न.

अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहौ अवश्याभ्युपेत्यौ—इत्यत आह—

## ३०५. न तृतीये तथोपलब्धेः ॥ ३-१-१८ ॥ (सि)

न [1]तृतीयस्य[1]स्थानस्य शरीरारम्भाय [2]पञ्चमा[2]हुत्यपेक्षा ।

कुतः ?—तथोपलब्धेः— । 'तृतीयस्थान' शब्देन केवलपापकर्माण उच्यन्ते । तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते—

'वेत्थ [3]यथाऽसौ[3] लोको न सम्पूर्यते' (छां. उ. 5-3-3)

इत्यस्य प्रश्नस्य प्रतिवचने,

'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति ।

एतत्तृतीयं स्थानम् । तेनाऽसौ लोको न सम्पूर्यते' (छां. उ. 5-10-8)

इति, तृतीयस्थानस्य द्युलोकारोहावरोहाभावेन द्युलोकासम्पूर्तिवचनात्, अस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा । 'पञ्चम्यामाहुतौ' (छां. उ. 6-3-1) इति च, अपां पञ्चमाग्निसम्बन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति; नाऽन्यन्निवारयति; अवधारणाश्रवणात् ॥ १८ ॥

---

सम्पूर्यते—प्राप्यते । कतरेण च न—केनचित् । जायस्व म्रियस्वेति । [एवमाकारस्य] ईश्वरशासनस्यानुवर्तीनि इत्यर्थः । स्थानशब्दवाच्यत्वं कर्मफलानुभवाश्रयतया । पञ्चम्यामिति अत्यन्तायोगव्यवच्छेद एव; न अन्ययोगव्यवच्छेदः इत्यर्थः । तत्र हेतुः अवधारणाश्रवणादिति ॥ १८ ॥

---

[सूत्रार्थः । तृतीये—तृतीयस्थानशब्दितानां देहारम्भे, न—पञ्चमाहुत्यपेक्षा नैव वर्तते, तथोपलब्धेः—अनपेक्षाया एव श्रुतौ दर्शनात् ॥]

'तृतीयस्थानवाच्यानां पापिनां नैव विद्यते । पञ्चमाहुत्यपेक्षा तु नेति देहाय च श्रुतेः ॥' (ब्र.प. 305)

---

[1] तृतीय—च. [2] न पञ्चमा—ग. [3] यथा केनाऽसौ—च.

[मनुष्येष्वपि केषुचित् देहारम्भे पञ्चमाहुत्यनपेक्षा]

## ३०६. स्मर्यतेऽपि च लोके ॥ ३-१-१९ ॥ (सि)

पुण्यकर्मणामपि केषांचित्, पञ्चमाहुत्यनपेक्षया देहारम्भः, लोके स्मर्यते द्रौपदी-धृष्टद्युम्नप्रभृतीनाम् ॥ १९ ॥

[पञ्चमाहुत्यनपेक्षया देहारम्भस्य श्रुतितोऽपि सिद्धिः]

## ३०७. दर्शनाच्च ॥ ३-१-२० ॥ (सि)

[1]श्रुतावपि[1] दृश्यते केषाञ्चित् पञ्चमाहुत्यनपेक्षया देहारम्भः ;
'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति ;
आण्डजम् जीवजम् उद्भिज्जम्' (छां. उ. 6-3-1)
इति । [2]एवम्[2] उद्भिज्ज-स्वेदजयोर्भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ॥ २० ॥

---

**पुण्यकर्मणामिति** । स्मर्यतेऽपीति 'अपि' शब्दसूचितमाह । पुण्यकर्मस्वपि अयं नियमो भज्यते ; किं पुनः पापकर्मसु इति भावः । सूत्रार्थसमुच्चयपरः 'च' शब्दः इति, स्फुटत्वात् अनुक्तिः । **लोक** शब्दः प्रसिद्ध्यतिशयद्योतनार्थः ॥ १९ ॥

**त्रीण्येवेति** । बीजत्रैविध्यं तत्कार्यभूतत्रैविध्येन । जीवजम्—जरायुजम् । **उद्भिज्ज**-शब्दार्थ एव वक्ष्यमाणसूत्रानुरोधेन विवृतः **उद्भिज्ज-स्वेदजयोरिति** ॥ २० ॥

---

[सूत्रार्थः । **लोकेऽपि**—इतिहासादिप्रसिद्धे लोकिके जनेऽपि, **स्मर्यते**—पञ्चमाहुत्यनपेक्षासिद्धदेहवत्ता भारतादौ स्मर्यते च]

'पुण्यकर्मवतां चाऽपि केषांचिद् देहसंभवे । पञ्चमाहुत्यपेक्षा न द्रौपद्यादिषु दृश्यताम् ॥' (ब्र.प. 306)

[सूत्रार्थः । **दर्शनाच्च**—(केषुचित् भूतेषु पञ्चमाहुतिमनपेक्ष्य देहारम्भस्य) श्रुतितोऽप्यवगमात् ॥]

'पञ्चमाहुत्यभावेन जायस्वेत्यादिदर्शनात् । उद्भिज्जस्वेदजानां तु देहोत्पत्तिस्तथा भवेत् ॥' (ब्र.प. 307)

---

[1] चकारात् श्रुतावपि—त. थ. न. [2] एषु—अ.

[उद्भिज्जशब्देन स्वेदजानां सङ्ग्रहः]

ननु—[1]स्वेदजानाम् अत्र[1] [2]न सङ्कीर्तन[2]मस्ति ; 'त्रीण्येव बीजानि' (छां. उ. 6-3-1) इति वचनात् ; तत्राह—

## ३०८. तृतीयशब्दावरोधः संशोकजस्य ॥ ३-१-२१ ॥ (सि)

संशोकजस्य—स्वेदजस्यापि, '[3]आण्डजं[3] जीवजमुद्भिज्जम्' (छां. उ. 6-3-1) इत्यत्र 'तृतीयेन—'उद्भिज्ज' शब्देन,[4] अवरोधः—सङ्ग्रहः विद्यते इत्यर्थः । अतः केवलपापकर्मणां चन्द्रप्राप्तिः न सम्भवति ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

—o—

---

उद्भिज्जस्य पञ्चमाहुतिनिरपेक्षत्वसम्प्रतिपत्तेः, पृथिव्यूष्मजत्वायोनिजत्वपापोत्तरत्वसाम्याच्च 'तृतीय' शब्देन सङ्ग्रहः । न तु प्रथमेन द्वितीयेन चेति भावः ॥ २१ ॥

[सूत्राणि । अनिष्टादि, संयमने, स्मरन्ति, अपि, तत्रापि, विद्या, न तृतीये, स्मर्यते, दर्शना, तृतीय]

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

—o—

---

[सूत्रार्थः । संशोकजस्य—स्वेदजस्य क्रिम्यादेः, तृतीयशब्देन—श्रुत्युक्तेषु तृतीयेन उद्भिज्जशब्देन, अवरोधः—संग्रहः चिन्तनीयः ॥]

'उद्भिज्जमिति शब्देन स्वेदजस्याऽपि संग्रहः । श्रुत्युक्तेन तृतीयेन ह्यण्डजाज्जीवजात्परम् ॥' (ब्र.प. 308)

---

[1] स्वेदजानाम्—अ. म.  [2] असंकीर्तनम्—आ.

[3] अण्डजं—आ.  [4] तृतीयशब्देन—त. थ.

(72) तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ३-१-४ ॥

[अधिकरणार्थः—अवरोहतो जीवस्य श्रुत्युक्तः आकाशादिभावः आकाशादिसादृश्यरूपः]

## ३०९. तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३-१-२२ ॥ (सि)

[उक्तार्थानुवादः सङ्गत्यर्थम्]

इष्टादिकारिणः भूतसूक्ष्म[1]परि[1]ष्वक्ताः सानुशयाः, [2]चन्द्रमसोऽव[2]रोहन्ति—इत्युक्तम् । अवरोहप्रकारश्च,

'अथैतमेवाऽध्वानं पुनर्निवर्तन्ते [3]यथेत[3]माकाशम् आकाशाद्वायुम्' ।

'वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छां. उ. 5-10-5, 6)

इति वचनात्, 'यथेतमनेवं च' (ब्र. सू. 3-1-8) इत्युक्तम् ॥

[प्रकृतो विचारणीयोंऽशः]

तत्र अस्य आकाशादिप्रतिपत्तौ, देव-मनुष्यादिभाववत् आकाशादिभावः ? उत [4]तत्सादृश्यापत्ति[4]मात्रम् ?—इति विशये,

---

अभ्रमिति जलधारणावस्था ; 'अपो बिभर्ति' इति । मेघ इति वर्षोन्मुखावस्था ; 'मिह-सेचने' इति धातोः । आकाशादिभावः—आकाशादिशरीरकत्वम् । सादृश्यापत्तिः—आकाशात् पृथङ्निर्देशानर्हः तत्संसर्गः । किम् आकाशादिभावः देव-मनुष्यादिभाववत् आकाशादिशरीरत्वापत्तिः ? उत तत्सादृश्यापत्तिमात्रम् ?—इति । किम् अत्र सामानाधिकरण्यं मुख्यम् ? उत गौणम् ? इति । मुख्यत्वापवादोऽस्ति ? न ? इति । अपवादाभावे मुख्यत्वात्

---

[सूत्रार्थः । तत्स्वाभाव्यापत्तिः—(अवरोहतो जीवस्याकाशादिभावः) आकाशादिसादृश्यप्राप्तिरेव ; न तु आकाशादिभावः, उपपत्तेः—तस्यैव युक्तियुक्तत्वात् ॥ ]

'अवरोहेऽस्य जीवस्य तत्तत्सादृश्यमात्रतः । वियद्वाय्वादिवचनं न भोगायेति निश्चयात् ॥' (ब्र.प. 309)

---

[1] सम्परि—वा. [2] चन्द्रमसमव—वा.

[3] यथेत—थ. [4] तत्सादृश्य—अ. तत्स्वाभाव्यापत्ति—आ.

[पूर्वः पक्षः सदृष्टान्तः]

श्रद्धावस्थस्य सोमभाववत्, अविशेषात् आकाशादिभावः—इति प्राप्ते,

[सिद्धान्तार्थः सयुक्तिकः]

तत्स्वाभाव्यापत्तिरेव—इत्युच्यते। तत्स्वाभाव्यापत्तिः—तत्सादृश्यापत्तिरित्यर्थः। कुत एतत्?—उपपत्तेः—। सोमभावमनुष्यभावादौ हि! सुख-[1]दुःखोप[1]-भोगाय तद्भावः। अत्र तु, आकाशादौ सुख-दुःखोपभोगाभावात् तद्भावानुपपत्तेः, तदापत्तिवचनं तत्संसर्ग[2]कृत[2]तत्सादृश्यापत्त्यभिप्रायम् ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

—o—

---

आकाशादिहेतुत्वं स्यात्। अपवादसद्भावे सामानाधिकरण्यस्य अमुख्यत्वात् आकाशादि-सादृश्यापत्तिमात्रमिति भवति। अविशेषात्—प्रकरणस्थत्वाविशेषात्। तत्सं....प्रायमिति। तत्संसर्गहेतुकनेदकस्थूलाकाराभावपरमित्यर्थः ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

—o—

---

[1] दुःख—न. [2] कृतं—वा.

(73) नातिचिराधिकरणम् ॥ ३-१-५ ॥

## ३१०. नाऽतिचिरेण विशेषात् ॥ ३-१-२३ ॥ (सि)

[अधिकरणार्थः—जीवस्य अवरोहकाले आकाशादिषु स्थानेषु शीघ्रा गतिः]

[सङ्गति-विचार-पूर्वपक्षाः]

आकाशप्राप्तिप्रभृति यावद् व्रीह्यादिप्राप्ति, किं तत्र तत्र नाऽतिचिरं तिष्ठति ? उत अनियमः ? —

इति विशये,

नियमहेत्वभावात् अनियमः—

[सिद्धान्तः सूत्रार्थतः]

इति प्राप्ते,

उच्यते—नातिचिरेण—इति ।

कुतः ? विशेषात् । उत्तरत्र व्रीह्यादिप्राप्तौ,

'अतो वै खलु दुर्निष्प्रपतरम्' (छां. उ. 5-10-6)

इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात् ; पूर्वत्र हि ! आकाशादिप्राप्तौ [1]अचिरं[1] निष्क्रमणं गम्यते । 'दुर्निष्प्रपतरम्' इति, [2]छान्दसः[2] 'त' शब्दलोपः । [3]दुर्निष्प्रपततरम्[3]—[4]दुर्निष्क्रमणतर[4] इत्यर्थः ॥ २३ ॥

इति नातिचिराधिकरणम् ॥ ५ ॥

—o—

---

आकाशप्राप्तीत्यादि सङ्गतिसूचनम् ।

आकाशादिषु कञ्चित्कालं तिष्ठति ? उत अनतिचिरेण निष्क्रामति ? । व्रीह्यादिभावे दुर्निष्प्रपततरत्वाभिधानं, किम् अन्यत्र नातिचिरनिष्क्रमणम् अवगमयति ? न ? इति ।

अनवगमकत्वे नियमाभावः । अवगमकत्वे नाऽतिचिरनियमः । 'नाऽतिचिर' शब्देन आकाशादौ किञ्चिद्विलम्बः, व्रीह्यादौ अतिविलम्बश्च द्योतितौ ॥ २३ ॥

इति नातिचिराधिकरणम् ॥ ५ ॥

—o—

---

[सूत्रार्थः । नातिचिरेण—(अवरोहतो जीवस्य आकाशादिषु गतिः) अतिशैघ्र्येण, विशेषात्—अन्यत्र विलम्बितगतेः उत्तरत्र विशेषत उक्तत्वात् ॥ ]

'व्रीह्यादिभावे जीवस्य चिरनिर्गमनश्रुतेः । अन्यत्र त्वचिरेणैव ह्यागच्छति च चेतनः ॥' (ब्र.प. 310)

---

[1] अचिर—अ. [2] छन्दसत्वात्—न. [3] दुर्निष्क्रमतरम्—द. [4] दुःखनिष्क्रमणम्—द.

## (74) अन्याधिष्ठिताधिकरणम् ॥ ३–१–६ ॥ (सू. 24–27)

[अधिकरणार्थः—अवरोहतो जीवस्य व्रीह्यादिभावः, व्रीह्यादिसंश्लेषमात्रम् ; न व्रीह्यादिशरीरकं जन्म]

### ३११. अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३-१-२४ ॥ (सि)

[सङ्गति-विषययोः प्रदर्शनम्]

'अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्ते' इति श्रूयते—

'मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयः

तिलमाषा 'इति जायन्ते[1] ' (छां. उ. 5–10–6)

इति ।

[तन्नत्यो विचारांशः प्रकृतः]

ते किम्, अन्यैर्भोक्तृभिः व्रीह्यादिशरीरैः अधिष्ठितान् व्रीह्यादीन् आश्लिष्यन्ति ? उत ते भोक्तारः व्रीह्यादिशरीराः जायन्ते ?—इति विशये,

[पूर्वः पक्षः युक्तिसहितः]

'जायन्ते' इति वचनात्, 'देवो जायते, मनुष्यो जायते' इतिवत्, व्रीह्यादिशरीरा एव—

[सिद्धान्तार्थः सौत्रार्थविवरणतः]

इति प्राप्ते, उच्यते—अन्याधिष्ठिते—इति । जीवन्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव ।

---

अवेति । अवरोहतां जीवानां व्रीहियवादिभावः, किं देव-मनुष्यादिभाववत् तच्छरीरकत्वम् ! उत व्रीहियवादिसंश्लेषमात्रम् ?—इति । 'कपूयचरणाः' इत्यादिवत् कर्मनिर्देशाभावः, किं संश्लेषमात्ररूपतामवगमयति ? न ? इति । अनवगमकत्वे व्रीह्यादिशरीरकत्वम् ; अवगमकत्वे

---

[सूत्रार्थः । अन्याधिष्ठिते—(श्रुत्युक्तो व्रीह्यादिभावो जीवस्य) जीवान्तरेणाधिष्ठिते संश्लेषरूप एव, पूर्ववदभिलापात्—आकाशादिभाववदेव व्रीह्यादिभावस्याप्युक्तेः ॥ ]

'अन्याधिष्ठित एवस्याद्व्रीह्यादौ पूर्ववत् स्थितिः। अनुभाव्यान्तराभावान्मध्ये तत्राऽवरोहतः॥' (ब्र.प.311)

---

[1] जायन्ते – च.

कुतः ? पूर्ववदभिलापात्—आकाशादिमेघपर्यन्तवत् केवल[1]तद्भावाभि[1]लापात् । यत्र हि ! भोक्तृत्वमभिप्रेतम् ; तत्र तत्साधनभूतं कर्म अभिलप्यते ;

'रमणीयचरणाः.....कपूयचरणाः' (छां. उ. 5-10-6)

इति । इह च आकाशादिवत् नाभिलप्यते कर्म । फल[2]दाने[2]प्रवृत्तस्य स्वर्गोपभोग्यफलस्य इष्टादेः कर्मणः, स्वर्गोपभोगादेव समाप्तत्वात् । [3]अनारब्धस्य[3] 'रमणीयचरणाः.... कपूयचरणाः' (छां. उ. 5-10-6) इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च । अतः आकाशादिभाववचनवत्, व्रीह्यादिभावेन जन्मवचनम् औपचारिकम् ॥ २४ ॥

[स्वर्गोपभोगोपधायककर्मणः पापत्वशङ्का]

[तत्परिहारश्च सूत्रतः]

## ३१२. अशुद्धमिति चेन्न शब्दात् । ३-१-२५ ॥ (सि)

नैतदस्ति—यत् अन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम् । भोक्तृत्वहेत्वभावात् न व्रीह्यादिभावेन जन्म—इति ; भोक्तृत्वहेतुसद्भावात् । स्वर्गोपभोग्यफलं [4]इष्टादि[4] कर्मैव, अशुद्धम्—पापमिश्रम्, [5]अग्नीषोमीयादि[5]हिंसायुक्तत्वात् । हिंसा च,

'न हिंस्यात् सर्वा भूतानि' ( ? )

इति निषिद्धत्वात् पापमेव ॥

---

संश्लेषमात्रम्—इति ॥ समाप्तत्वात्—'यावत्सम्पातमुषित्वा' इति वचनात् । मध्ये—प्रकरणमध्ये । कर्मान्तराभावात्—कर्मान्तरश्रवणाभावात् । मनुष्यादिजन्मनिमित्तं कर्मैव, तदुपयोगित्वात् व्रीह्यादिप्राप्तिहेतुः ; न तु कर्मान्तरमित्यभिप्रायः ॥ व्रीह्यादिशरीरकाश्च जीवाः, तल्लवनदशायामेवाऽपक्रामन्ति ; लवन-शोषण-पेषण-पचनाभ्यवहाराद्यवस्थासु अनुवर्तमानत्वं, न तच्छरीराणां जीवानाम् ; किन्तु तत्संश्लिष्टानामेवेति ॥ २४ ॥

---

[सूत्रार्थः । अशुद्धमिति चेत् न—(स्वर्गादिफलोपभोगहेतुभूतं कर्म पशुहिंसादियुक्तत्वात्) पापमिश्रम् इति शङ्कनं तु नोचितम्, शब्दात्—पशुसंज्ञपनस्य हिंसारूपत्वाभावबोधकात् 'न वा उ वेतन्म्रियसे न रिष्यसि' इत्येवमादिरूपात् वैदिकात् शब्दात् ज्ञापकात् ॥]

'पश्वादिर्हिंसया स्वर्गं प्राप्तानां शिष्टकर्म च । अशुद्धमिति भोगश्चेन्न तच्छुद्धमिति श्रुतेः ॥' (ब्र.प. 312)

---

[1] भावाभि—त. न. [2] प्रदाने—ग. दान—त. थ. [3] अनालब्धस्य—वा.

[4] इष्टादिकं—द. [5] अग्नीषोमीय—त. थ. न.

[हिंसानिषेधस्य औत्सर्गिकत्वायोगः]

न चाऽत्र, पदाहवनीयादिवत् उत्सर्गापवादभावः सम्भवति ; भिन्नविषयत्वात् । अग्नीषोमीय[1]हिंसाविधिः[1], हिंसायाः क्रतूपकारकत्वं बोधयति । 'न हिंस्यात्' इति तु, हिंसायाः प्रत्यवायफलत्वम् ।

[प्रभाकरोक्तः परिहारः, तद्दूषणं च]

अथोच्येत—अग्नीषोमीयादिषु विधितः प्रवृत्तेः, न तद्विषयं निषेधविधिः आस्कन्दति ; रागप्राप्तविषयत्वात् तस्य—इति ।

नैवम् ; इहाऽपि रागप्राप्तेः अविशिष्टत्वात् ।

'स्वर्गकामो यजेत' (तै. सं. 2-5-5)

इत्येवमादौ हि ! कामिनः कर्तव्यतया यागाद्युपदेशात्, यागादेः स्वर्गसाधनत्वमवगम्य, फलरागत एव यागादौ प्रवर्तते । अग्नीषोमीयादिष्वपि, तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य, रागादेव प्रवर्तते ।

लौकिक्यामपि हिंसायां, केनचित् प्रमाणेन हिंसायाः [2]स्वसमीहित[2]साधनत्व-

---

**पापमिश्रमिति** । 'अशुद्धि' शब्दस्य अशुद्धियुक्तवाचित्वात्, पापस्य अशुद्धिरूपत्वाच्च पापमिश्रमित्युक्तम् । **न चेति** । [अनेन] भाट्टोक्तं, मृषावादिभिश्च तदनुरोधादुपन्यस्तम्, उत्सर्गापवादन्यायमनूद्य दूषयति । **भिन्नेति** । 'आहवनीये जुहोति' इति वाक्येन, होमत्वात् आहवनीयस्य स्थानत्वं प्राप्तम् । एवम् अनेकहोमविषयवाक्यद्वये अन्यतरानुष्ठानगर्भः अन्यतरपरिग्रहविरोधः अस्त्येव । अतः तयोः उत्सर्गापवादसम्भवः । अत्र तु भिन्नविषयत्वात् विरोधाभावेन, न उत्सर्गापवादभावः इत्यर्थः । **अग्नीषोमीयेति** । क्रतूपकारकत्वविषयम् एकं वाक्यम् ; अन्यत्तु प्रत्यवायफलविषयम् । अतो न विरोधः । यथा 'क्षीरं पित्तोपहतस्य रक्षकम् ; प्रमेहोपहतस्य बाधकम्' इति वाक्ये न विरोधः तद्वत् । यदि प्रत्यवायफलत्व-तदभावपरं वाक्यद्वयं ; तदा विरोधः स्यात् । न तदस्ति । अतः नाऽयमुत्सर्गापवादन्यायविषयः इत्यर्थः ।

**अग्नीषोमीयादिष्वपीति** । हिंसास्वित्यर्थः । **लौकिक्यामपीति** लौकिक-वैदिकहिंसयोर्विशेषमाह । फलसाधनभावग्राहिप्रमाणवैषम्यमेव ; रागप्राप्तिस्तु तुल्येत्यर्थः ।

---

[1] हिंसादिविधिः—त. थ.    [2] समीहित—द.

मवगम्य, रागात् प्रवर्तते—इति न कश्चन विशेषः ।

तथा नित्येष्वपि कर्मसु,

'सर्ववर्णानां स्वधर्मानुष्ठाने परम् अपरिमितं सुखम्' (आप. ध. सू. 2-1-2-2)

इत्यादिवचनात् फलसाधनत्वमवगम्य, रागादेव प्रवृत्तिरिति, तेषामपि अशुद्धियुक्तत्वम् ।

[शङ्कोपसंहारः]

अतः [1]इष्टादीनां[1] पापमिश्रत्वेन अशुद्धियुक्तानां, स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय, हिंसांशस्य फलं, व्रीह्यादिस्थावरभावेनाऽनुभूयते । स्थावरभावं च पापफलं स्मरन्ति—

'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' (म. स्मृ. 12-9)

इति । अतः व्रीह्यादिभावेन, भोगाय 'अनुशयिनो[2] जायन्ते—इति चेत् !

[सिद्धान्तशङ्कादूषणम्, सूत्रोत्तरखण्डेन]

तन्न । कुतः ? शब्दात्—अग्नीषोमीयादेः संज्ञपनस्य, स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् । पशोर्हि ! संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति—

' हिरण्यशरीरः [3]ऊर्ध्वः[3] स्वर्गं लोकमेति ' ( ? )

इत्यादिकम् । अतिशयिताभ्युदयसाधनभूतो व्यापारः, अल्पदुःखदोऽपि न हिंसा ; प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः—

'न वा उ वेतन्म्रियसे न रिष्यसि देवान् [4]इदेषि[4] पथिभिः सुगेभिः ।

यत्र यन्ति सुकृतो नाऽपि दुष्कृतस्तत्र त्वा देवः सविता दधातु ॥' (तै.सं. 4-6-9)

इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि, रक्षकमेव वदन्ति ; पूजयन्ति च तज्ज्ञाः ॥ २५ ॥

---

सर्ववर्णानामित्यादि आपस्तम्बसूत्रम् । श्रीविष्णुपुराणे च तत्तदाश्रमधर्मानुष्ठायिनां फलविशेषा उक्ताः । तेषामिति । नित्यकर्मादीनामपि संवत्सरपश्वालम्भनादिभिः अशुद्धियुक्तत्वमित्यर्थः । अतिशयितेति । दुःखहेतुरपि पशुसंज्ञपनं न हिंसेत्याशयः । तथा चेति । न केवलं स्वर्गलोकगमनेन अहिंसात्वकल्पनम् । किन्तु अहिंसात्वं कण्ठोक्तं चेति भावः ॥

चिकित्सकं चेति । हिंसात्वे सति हि ! उक्तदोषसम्भवः । हिंसात्वाभावादेव दूरोत्सारितो दोषः । अयमेव समीचीनो दुष्प्रधर्षणः परिहारः । अतः श्येनाग्नीषोमीयवैषम्यं चेदमेव ; अल्पदुःखदोऽपि अतिशयिताभ्युदयसाधको व्यापारः-रक्षणम् । अनर्थोदर्को व्यापारः-हिंसेत्यर्थः ॥ २५ ॥

---

[1] इष्टानां—थ.   [2] अनुशायिनो—थ.   [3] और्ध्वं—द.   [4] उदेषि—त.

[अवरोहतो जीवस्य रेतः सेकमिव व्रीह्यादावपि संश्लेष एव]

## ३१३. रेतः सिग्योगोऽथ ॥ ३-१-२६ ॥ (सि)

इतश्च औपचारिकं व्रीह्यादिजन्मवचनम् । व्रीह्यादिभाववचनानन्तरम्, 'यो यो ह्यन्नमत्ति [1]यो रेतः[1] सिञ्चति, [2]तद्भूय एव[2] भवति' (छां.उ. 5-10-6) इति रेतःसिग्भावः अनुशयिनां श्रूयमाणः, यथा तद्योगमात्रं प्रतिपादयति ; तद्वत् व्रीह्यादिभावोऽपीत्यर्थः ॥ २६ ॥

[शरीरप्राप्तेः योनिप्राप्त्यनन्तरभाविता]

## ३१४. योनेः शरीरम् ॥ ३-१-२७ ॥ (सि)

योनिप्राप्तेः पश्चादेव, [3]अनुशयिनां[3] शरीरप्राप्तिः, तत्रैव सुखदुःखोपभोगसद्भावात् । ततः प्राक्, आकाशादिप्राप्तिप्रभृति [4]तद्योग[4]मात्रमेवेत्यर्थः ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये
तृतीयस्याऽध्यायस्य प्रथमः पादः ॥ १ ॥

---

अनन्तरम् इत्यन्तेन 'अथ' शब्दो व्याख्यातः । तद्भूय एव भवति । 'सः' इत्याध्याहारः । भूयः—पश्चात् तद्भवति—रेतः सिग् भवति—रेतःसिग्योगी भवतीत्यर्थः । तत्तद्भावस्य औपचारिकत्वप्रकरणम् अविच्छिन्नमिति भावः ॥ २६ ॥

योनिप्राप्तिः—योषिद्योनिप्राप्तिः । तत्रैवेति । संसारिजीवशरीरं चेत् । भोगार्थमेव । न चेद्भोगार्थम् । तर्हि न तत् संसारिशरीरमितिभावः ॥ २७ ॥

[सूत्राणि—१ अन्या. २ अशुद्ध. ३ रेतः. ४ योनेः]

इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति प्रथमः पादः ॥ १ ॥

—o—

[सूत्रार्थः । अथ—व्रीह्यादिभावप्राप्त्यनन्तरोक्तः, रेतःसिग्योगः—रेतःसेक्त्रा पुरुषेण योग इव, व्रीह्यादिभावोपि संश्लेषमात्रमेव ॥]

'रेतः सिञ्चति तद्भूयो भवतीति श्रुतेरिह । रेतःसिचा यथा योगो व्रीह्यादिषु तथा भवेत् ॥' (अ.प. 313)

[सूत्रार्थः । योनेः—पञ्चमाहुत्यात्मकयोनिप्राप्त्यनन्तरमेव ; न पूर्वम्, शरीरम्—जीवेन संश्लिष्टस्य शरीरताप्राप्तिः ॥]

'योनिप्राप्तेः परस्ताद्धि शरीरं प्राप्यते पुनः । कर्मणामुपभोगाय यत्र तत्र च योनिषु ॥' (अ. प. 314)

---

[1] यो यो रेतः— [2] तद्भूयोऽपि—थ. [3] अनुशायिनां—थ. [4] तत्तद्योग—आ.वा.

॥ श्रीः ॥

[तृतीयाध्यायीयद्वितीयपादाधिकरणार्थसूचनी]

## तृतीये साधनाध्याये द्वितीयः उभयलिङ्गपादः (३–२)

(अधिकरणानि—८. सूत्राणि—४०)

[पादार्थः—प्राप्यस्य ब्रह्मणः निरस्तनिखिलदोषता, निखिलकल्याणगुणाकरता च]

(75) १. **सन्ध्याधिकरणम्**—[सू. 1–6] (बृहदारण्यकीया दहरविद्या–बृ.उ. 6–3–10)
जीवेन स्वप्नानुभाव्या अर्थाः परमात्मनैव सृष्टाः ॥

(76) २. **तदभावाधिकरणम्**—[सू. 7-8]
सुप्तस्य जीवस्य हितानाडी-पुरीतत्—परमात्मरूपं स्थानत्रयम् ॥

(77) ३. **कर्मानुस्मृतिशब्दविध्यधिकरणम्**—[सू. 9]
जाग्रद्दशातः सुषुप्तिं प्राप्तो जीवः, स एव प्रबुध्यते ; नान्यः ॥

(78) ४. **मुग्धाधिकरणम्**—[सू. 10]
जीवस्य मूर्च्छाख्या अवस्था मरणायाऽर्धसम्पत्तिः ॥

(79) ५. **उभयलिङ्गाधिकरणम्**—[सू. 11–25] (मूर्तामूर्तब्राह्मणविद्या. बृ.उ. 4–3–1)
सर्वत्र व्याप्तस्यापि ब्रह्मणः निखिलहेय प्रत्यनीकत्व-समस्तकल्याणगुणाकरत्वयोः नैव विरोधः ॥

(80) ६. **अहिकुण्डलाधिकरणम्**—[सू. 26–29]
चिद्ब्रह्मणोरिव अचिद्ब्रह्मणोरप्यंशांशिभावात्, जगतः ब्रह्मरूपत्वोपपत्तिः ॥

(81) ७. **पराधिकरणम्**—[सू. 30–36]
परं ब्रह्मैव सर्वस्मात्परम् ; न च ततोऽन्यत् परमस्ति ॥

(82) ८. **फलाधिकरणम्**—[सू. 37–40]
ऐहिकामुष्मिकरूपसर्वफलदातृत्वं यागोपासनादिभिः आराधितस्य परमात्मन एव ; न केवलं कर्मोपासनादेः ॥

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## तृतीयस्याऽध्यायस्य

## (10) द्वितीयः उभयलिङ्गपादः ॥ ३-२ ॥

[अधिकरणानि—8. सूत्राणि—40]

[पादार्थः—परस्य ब्रह्मणः निरस्तनिखिलदोषता समस्तकल्याणगुणाकरता च]

### (75) सन्ध्याधिकरणम् ॥ ३-२-१ ॥ (सू. 1-6)

[बृहदारण्यकदहरविद्या 6-3-10]

[अधिकरणार्थः—स्वप्नानां जीवानुभाव्यानामर्थानां परमात्मसृष्टत्वम् ]

### ३१५. सन्ध्ये सृष्टिराह हि ! ॥ ३-२-१ ॥ (पू)

[पादसङ्गतिप्रदर्शनम्, विषयवाक्यं च]

एवं—कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम् । इदानीम्—अस्य स्वप्नावस्था परीक्ष्यते । स्वप्नमधिकृत्य श्रूयते—

---

'जन्मादी'त्यादिशब्देन, सुख-दुःखानुभवो विवक्षितः । **दुःखित्वमिति** । 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नाऽस्ति निर्वृतिः' इति सुखानुभवेऽपि दुःखित्वमेवेति भावः । **स्वप्नमधिकृत्येति** विषयवाक्यस्थस्य 'तत्र' पदस्य व्याख्यानाय । 'स्वप्नं पश्यति' इति

---

[सूत्रार्थः । **सन्ध्ये**—स्वाप्नार्थविषयिणी, **सृष्टिः**—उत्पादनक्रिया (जीवस्यैव) **हि**—यतः, **आह**—श्रुतिरेवाह 'स हि कर्ता' इति ॥ ]

'स्वप्नस्थाने जीव एव सृजतीति च चोद्यते । सृजते स हि कर्तेति श्रुतिराह हि तत्र च ॥' (अ.प. 315)

'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति। अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ [1]वेशान्तान्[1] पुष्करिण्यः। स्रवन्त्यः सृजते। सहि कर्ता' (बृ. उ. 6-3-10)

इति ॥

[अधिकरणीयः संशयः]

तत्र संशयः—किमियं रथादिसृष्टिः [2]जीवेनैव[2] क्रियते? आहोस्वित् ईश्वरेण?—इति ॥

[पूर्वः पक्षः सयुक्तिकः]

किं युक्तम्?—'सन्ध्ये सृष्टिः जीवेन'—इति।

कुतः? सन्ध्यं—स्वप्नस्थानमुच्यते;

'सन्ध्यं तृतीयं स्वप्नस्थानम्' (बृ. उ. 6-3-9)

इति वचनात्। सा तु [3]जीवेनैव[3] क्रियते; 'सृजते', 'स हि कर्ता' इत्याह हि। स्वप्नदृक् जीव एव तत्र प्रतीयते ॥ १ ॥

---

हि प्रकृतम्' आनन्दः—अनुकूलविषयजा प्रीतिः। मुत्—स्वकीयत्वबुद्धिजा प्रीतिः। प्रमुत्—तद्विनियोगजा प्रीतिः। तत्रेति। स्वाप्नार्थसृष्टिः जीवकर्तृका? उत परमात्मकर्तृका?। 'स हि कर्ता' इति किं जीवः परामृश्यते? उत परः?। प्रजापतिवाक्योदितसत्यसङ्कल्पत्वं (किं) जीवस्य स्रष्टृत्वमुपपादयति? न? इति। स्वाप्नार्थमात्रेषु जीवस्य सङ्कल्पाविर्भावकल्पनम् उपपद्यते? न? इति॥ यदा उपपद्यते, तदा तस्यैव स्रष्टृत्वोपपत्तेः, 'सहि' इति जीवपरामर्शात् जीवकर्तृत्वं स्यात्। यदा आविर्भावकल्पनम् अयुक्तम्; तदा स्रष्टृत्वानुपपत्तौ, 'सः' इति जीवपरामर्शायोगात्, परमात्मकर्तृत्वमिति भवति 'स्वप्नं पश्यती'ति हि प्रकृतो जीवः 'स' इत्युच्यते इति भावः ॥ १ ॥

---

[1] वेशान्ताः—च.　[2] जीवेन—द.　[3] जीवेन—द.

[जीवस्यैव स्वाप्नार्थनिर्मातृत्वे श्रुत्यन्तरम्]

३१६. निर्मातारं चैके पुत्रादयश्च ॥ ३-२-२ ॥ (पू)

किं च-एनं जीवं, स्वप्ने कामानां निर्मातारम्, एके शाखिनः अधीयते—

'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (कठ. उ. 5-8)

इति। पुत्रादयश्च तत्र, काम्यमानतया 'काम'शब्देन निर्दिश्यन्ते; [1]न इच्छामात्रम्[1]। पूर्वत्र हि!—

'सर्वान् कामांश्छन्दतः प्रार्थयस्व' (कठ. उ. 1-26)

'शतायुषः पुत्र-पौत्रान् वृणीष्व' (कठ. उ. 1-24)

इति पुत्रादय एव कामाः [2]प्रकृताः[2] ॥

[पूर्वपक्षार्थनिगमनम्]

अतः रथादीन् जीवः स्वप्ने [3]सृजति[3]। जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम्। अतः उपकरणाद्यभावेऽपि सृष्टिरुपपद्यते ॥ २ ॥

[सिद्धान्तसूत्रम् सविवरणम्]

इति प्राप्ते, अभिधीयते—

३१७. मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३-२-३॥(सि)

---

निर्मातारमिति 'स्वप्नार्थकर्तृत्वं श्रुत्यन्तरे श्रूयते' इत्याशङ्कायामिदं सूत्रम्। पुत्रादयश्चेति जीवलिङ्गं दर्शयति।

जीवस्य चेति। अपरिकरस्य जीवस्य कथं सृष्टिः? इत्यत्र [समाधानम्]। 'सन्ध्ये सृष्टिः' 'निर्मातारम्' इति सूत्रद्वयं पूर्वपक्षविषयम् ॥ २ ॥

मायामात्रम्—आश्चर्यरूपमेव। अनाश्चर्यरूपं न किंचिदपीत्यर्थः ॥

---

[सूत्रार्थः। एके—कठाः, निर्मातारम्—जीवमेव स्वाप्नार्थानां स्रष्टारम्, अधीयते च—स्वशाखायां पठन्ति 'पुरुषो निर्मिमाणः' इति ॥]

'कामानां स्वप्नकाले स्यान्निर्माता जीव एव तु। वदन्त्येके शाखिनश्च पुत्रादीन् 'काम' शब्दतः॥' (ब्र.प. 314)

[सूत्रार्थः। मायामात्रं तु—(स्वाप्नम् अर्थजातं) अत्याश्चर्यभूतं सत् परमपुरुषसृष्टमेव; न जीवसृष्टम्, कार्त्स्न्येना....पत्वात्—तस्मिन् काले जीवस्य अनाविर्भूतसत्यसङ्कल्पत्वादिमत्त्वात् ॥]

'स्वप्ने यत् सृष्टमाम्नातं तदिदं ब्रह्मणा कृतम्। आश्चर्यभूतं जीवे न सत्यसङ्कल्पता तदा ॥' (ब्र.प. 315)

---

[1] न इच्छा—द. [2] ०कृताः—श्रा. [3] सृजतीति—पा.

'तु' शब्दः पक्षं व्यावर्तयति । स्वप्ने रथ-पुष्करिण्याद्यर्थजातं, मायामात्रं—परमपुरुषसृष्टमित्यर्थः । 'माया'शब्दो हि! आश्चर्यवाची ;

'जनकस्य कुले जाता देवमायेव निर्मिता' (वा.रा.बा. 1–27)

इत्यादिषु [1]तथा दर्शनात्[1] अत्राऽपि,

'न तत्र रथा न रथयोगा न पन्थानः'—

सकलेतर[2]पुरुषानु[2]भाव्यतया [3]न भवन्ती[3]त्यर्थः ।

'अथ रथान् रथयोगान् पथः सृजते'—

स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजते इति, आश्चर्यरूपत्वमेवाऽऽह ।

[जीवे ईदृश्याः सृष्टेः अयोगः]

एवंविधाश्चर्य[4]रूपा[4] सृष्टिः, सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते ; न जीवस्य । [5]तस्य सत्य[5]सङ्कल्पत्वादियुक्तस्याऽपि, संसारदशायां कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात्, न जीवस्य [6]तथाविधाश्चर्य[6]सृष्टिरुपपद्यते ।

'कामं कामं पुरुषो निर्मिमाणः' (कठ.उ. 5-8)

इति च, परमपुरुषमेव निर्मातारमाह ।

---

परमपुरुषसृष्टम् इति, 'तु' शब्दसिद्धार्थ उक्तः । मायाशब्दो हि इति मिथ्याव्यावृत्त्यर्थम् । देवमायेवेति । देवस्य आश्चर्यरूपा शक्तिः मूर्तिमतीवेत्यर्थः । अत्रापि.... मेवाहेति । स्वाप्नार्थानां पूर्वकालीनाभावः मिथ्यात्वं च लोकसिद्धमिति, तदुभयपरत्वे, 'न भवन्ती'ति वाक्यवैयर्थ्यम् । मिथ्यात्वपरत्वे 'सृज' धात्वस्वारस्यं च स्यात् । प्रसिद्धरथाद्यनुभवस्य प्रतिषेधेऽपि, वाक्यवैयर्थ्यं स्यात् ; स्वप्ने [लोकसिद्धानां] तेषामननुभूतत्वस्य लोकसिद्धत्वात् । स्वप्नदृष्टानां हि जाग्रद्दृष्टेभ्योऽन्यत्वं लोकसिद्धम् । अतः तत्परिहाराय प्रसिद्धरथादिभावप्रतिषेधेन विजातीय-विचित्रार्थसृष्टिपरत्वं वाक्यस्य अवर्जनीयम् । तथासति तद्वैजात्यम् अर्थवशात् सकलेतरानुभाव्यत्व-तत्कालमात्रावस्थायित्वरूपमिति ।

'एवंविधेति' मायाशब्दः व्याख्यातः । तेन सह प्रतिज्ञाखण्डार्थ [उच्यते अनेन] । तस्येत्यादिना हेतुखण्डं व्याचष्टे । कामं काममिति णमुलन्तं पदम् । संकल्प्येत्यर्थः ।

---

[1] दर्शना—का. [2] पुरुषानु—ड. [3] भवन्ती—ड.
[4] भूता—द. [5] सत्य—द. [6] तथाविध—श.

'य एषु सुप्तेषु जागर्ति' (कठ.उ. 5–8)

'तदेव शुक्रं तद् ब्रह्म तदेवाऽमृतमुच्यते ।

तस्मिँल्लोकाः श्रिताः सर्वे तदु नाऽत्येति कश्चन ॥' (कठ.उ. 5–8)

इति उपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः ।

'अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता' (बृ.उ. 6–3–10) इति च तया श्रुत्या ऐकार्थ्यात्, परमपुरुषमेव कर्तारमाह ॥ ३ ॥

[ जीवस्वभावगतस्य धर्मस्यापि अनाविर्भावे हेतुः ]

स्वाभाविकं चेत् जीवस्य अपहतपाप्मत्वादिकं ; कुतः तत् न अभिव्यज्यते ? इत्यत आह—

## ३१८. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धाविपर्ययौ ॥ ३-१-४ ॥ (सि)

'तु' शब्दः शङ्काव्यावृत्त्यर्थः। पराभिध्यानात्–परमपुरुषसङ्कल्पात्, अस्य-जीवस्य, स्वाभाविकं रूपं तिरोहितम्। अनादिकर्मपरम्परया कृतापराधस्य हि ! अस्य, स्वाभाविकं कल्याणरूपं परमपुरुषः तिरोधापयति। ततः—तत्सङ्कल्पादेव हि ! अस्य—जीवस्य, बन्ध मोक्षौ श्रुतौ—

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' (तै.उ.आन. 7–2.)

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' (तै.उ.आन. 7–2)

'एष ह्येवाऽऽनन्दयाति' (तै.उ.आन. 7–2)

'भीषाऽस्माद्वातः पवते' (तै.उ.आन. 8–2)

इत्यादिषु ॥ ४ ॥

---

[अनेन] पूर्वपक्षयुक्तिं परिहरति ॥ ३ ॥

अनादिकर्मेति, परस्य नैर्घृण्यप्रसङ्गपरिहारमाह । तत इति । बन्धस्य तत्सङ्कल्पायत्तत्वे, तदन्तर्गतः तिरोभावश्च तत्सङ्कल्पकृतः इति सिद्धमित्यर्थः ॥ ४ ॥

---

[सूत्रार्थः। **तिरोहितम्**-जीवस्य स्वाभाविकं रूपं तिरोधानं प्राप्तमित्येतत्, **पराभिध्यानात्तु**-परमपुरुषसङ्कल्पादेव, **ततो हि**—तत्सङ्कल्पादेव हि, **अस्य**—जीवस्य, **बन्ध-विपर्ययौ**—बन्ध-मोक्षौ भवतः ॥]

'अनादिकृतपापेन ब्रह्मसङ्कल्पतस्तदा । तिरोहितं सत्यतादि बन्धमोक्षौ ततोऽस्य हि ॥' (ब्र.प. 318)

[ तिरोधानहेतुप्रदर्शनम् ]

## ३१९. देहयोगाद्वा सोऽपि ॥ ३-२-५ ॥ (सि)

सोऽपि—[1]तिरोभावोऽपि', देहयोगद्वारेण वा भवति ; सूक्ष्माचिच्छक्तियोगद्वारेण वा सृष्टिकाले, देहावस्थेन अचिद्वस्तुना संयोगाद्भवति। प्रलयकाले, नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात्। अतः अनभिव्यक्तस्वरूपत्वात्, स्वप्ने जीवः—न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति ( 1)

'तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ' (कठ.उ. 5-8)

इति 'सर्वेषु सुप्तेषु जागरणं, सर्वलोकाश्रयत्वम्' [2]इत्यादयो हि ![2] परमपुरुष[3]स्यैव[3] सम्भवन्ति। अतः जीवानाम् अल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यानर्थान् उत्पादयति ॥ ५ ॥

[ स्वप्नस्य शुभाद्यर्थसूचकत्वतः जीवसृष्टत्वायोगः ]

## ३२०. सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३-२-६ ॥

इतश्च [4]स्वाप्ना अर्थाः[4], न जीवसङ्कल्पपूर्वकाः ; यतः स्वप्नः, [5]अभ्युदयाऽनभ्युदययोः[5] सूचकः श्रुतेरवगम्यते—

---

योगाद्वेति। भगवत्सङ्कल्पस्य द्वारभूतं प्रकृत्यादिकमित्यर्थः। सृष्टीति। 'वा' शब्दः न तुल्यविकल्पवाची ; अपि तु व्यवस्थितविकल्पवाचीत्यभिप्रायः। अचिच्छक्तीति शक्तिशब्देन भगवदपृथक्सिद्धविशेषणत्वं विवक्षितम्। अत इति। अल्पाल्पकर्मानुभवार्थम् अस्थिरतत्तद्वस्तुसृष्टिः इत्यर्थः ॥ ५ ॥

सूचकश्चेति। जीवस्य स्वाप्नसृष्टिमात्रोपयोगिसत्यसङ्कल्पत्वाद्याविर्भावः तदानीं स्यादिति

---

[सूत्रार्थः। सोऽपि—तिरोभावोऽपि, देहयोगाद्वा—देहयोगद्वारेण वा अचिच्छक्तियोगद्वारेण वा भवति ॥]

'तिरोभावो गुणानां तु सृष्टौ देहस्य योगतः। प्रलये प्रकृतेर्योगमात्रेणैव तथा भवेत् ॥ (ब्र.प. 319)

[सूत्रार्थः। हि—यतः, सूचकश्च—स्वप्नः शुभाशुभयोः जीवसम्बन्धिनोः भविष्यदर्थयोः सूचनकार्यमपि भवति। अतः स्वाप्नोऽर्थः ईश्वरसृष्ट एव। सूचकत्वं च श्रुतेः—श्रुतिवाक्यादवगम्यते। तद्विदः—स्वप्नाध्यायविदः। आचक्षते च—स्वप्नं शुभाशुभसूचकं वर्णयन्ति च ॥ शुभादिसूचकः स्वप्न इति श्रुत्या हि दृश्यते। तद्विदां वचनाच्चैव न जीवस्याऽत्र कर्तृता ॥' (ब्र.प. 320)

---

[1] तिरोभावः—अ तिरोधानभावः—ड. [2] इत्यादयः—न. [3] स्यैव हि—न.
[4] स्वाप्नार्थाः—न. [5] दय—त.ध.

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।

समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥' (छां.उ. 5-2-9)

इति ;

'अथ स्वप्ने(म्राः)पुरुषं कृष्णं कृष्णदन्तं पश्यति । स एनं हन्ति' (ऐत.आर.3-2-4) [1]इत्यादेश्च[1] । स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते । सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते । तथा च अशुभस्य अनिष्टत्वात् शुभस्य सूचकमेव सृष्ट्वा पश्येत् । अतः [2] स्वप्ने सृष्टिः[2] ईश्वरेणैव कृता ॥ ६ ॥

इति सन्ध्याधिकरणम् ॥ १ ॥

—o—

---

शङ्काव्यावृत्त्यर्थमिदं सूत्रम् । स्वप्नाध्यायविदः—स्वप्नवाचिवेदवाक्यविदः । अतः इति, अधिकरणार्थोपसंहारः ॥ ६ ॥

[ सूत्राणि—१ संध्ये २ निर्मा ३ माया ४ परा ५ देह ६ सूच ]

इति सन्ध्याधिकरणम् ॥ १ ॥

—o—

---

[1] इत्यादयश्च—द. [2] स्वप्नसृष्टिः—त. थ.

(76) तदभावाधिकरणम् ॥ ३-२-२ ॥ (सू. 7-8)

[अधिकरणार्थः—जीवात्मनां सुषुप्तौ स्थानानि हिताख्यनाडी-पुरीतत्—परमात्मनस्त्रयोऽपि]

## ३२१. तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७ ॥ (सि)

[सङ्गतिः विषयनिर्देशश्च]

इदानीं सुषुप्तिस्थानं परीक्ष्यते। इदमाम्नायते—

'अथ [1]यत्रैत[1]त्सुप्तः समस्तः [2]सम्प्रसन्नः[2] स्वप्नं न विजानाति ;
आसु तदा नाडीषु सुप्तो भवति' (छां. उ. 8-6-3)

इति। तथा,

'अथ यदा सुषुप्तो भवति यदा न [3]कस्यचन[3] वेद, हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते, ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ. उ. 4-1-19)

इति। तथा,

'यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति' (छां. उ. 6-8-1)

इति। एवं, नाड्यः पुरीतत् ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयते ॥

[संशयः, पूर्वपक्षश्च]

किम् एषां विकल्पः? समुच्चयो वा?—इति विशये,

---

**किमिति।** नाडी-पुरीतद्-ब्रह्माणि किं जीवस्य सुषुप्तौ विकल्पेन स्थानानि? उत समुच्चयेन? किम् एषां प्रासाद-खट्वा-पर्यङ्कवत् कार्यभेदोऽस्ति? न? इति। 'सत

---

[सूत्रार्थः। **तदभावः**—स्वप्नाभावरूपा सुषुप्तिः, **नाडीषु**—हिता-पुरीतदाख्यनाडीषु, **आत्मनि च**—परमात्मनि चेति त्रिषु स्थानेषु यथायोग्यं भवति, **तच्छ्रुतेः**—त्रिस्थानकत्वस्य श्रुतिसिद्धत्वात् ॥]

'स्वप्नाभावः सुषुप्तिर्हि नाडीषु च पुरीतति। ब्रह्मणीति भवेत्तेषां सुषुप्तिस्थानता श्रुतेः ॥' (ब्र. प. 320)

---

[1] तद्यत्रैत—त. ध. यत्रैत—च.　[2] सम्पन्नः—न.　[3] कंचन—बा.

**निरपेक्षत्वप्रतीतेः, युगपत् अनेकस्थानवृत्त्यसम्भवाच्च विकल्पः—**

**[सिद्धान्तप्रदर्शनं सूत्रतः]**

**इति प्राप्ते, उच्यते—'तदभावः'—इति । तदभावः—स्वप्नाभावः, सुषुप्तिः, नाडीषु पुरीतति आत्मनि च भवति । [1]एषां[1] स्थानानां समुच्चयः—इत्यर्थः ।**

**कुतः ? तच्छ्रुतेः— त्रयाणां [2]स्थानत्व[2]श्रुतेः । न च-कार्यभेदेन समुच्चये संभवति, पाक्षिकबाधगर्भविकल्पो न्याय्यः । [3]सम्भवति च[3] प्रासाद-खट्वा-पर्यङ्कवत् नाड्यादीनां कार्यभेदः । तत्र नाडी-पुरीततौ प्रासाद-खट्वास्थानीयौ ; [4]ब्रह्म तु[4] पर्यङ्कस्थानीयम् । अतः ब्रह्मैव साक्षात् सुषुप्तिस्थानम् ।। ७ ।।**

---

आगच्छामहे' इति ब्रह्मणः प्रबोधश्रवणं, ब्रह्मणः पर्यङ्कस्थानीयतामवगमयत्, किं कार्यभेदमवगमयति ? न ? इति ॥

अनवगमकत्वे तुल्यकार्यतया युगपदनेकस्थानवृत्त्ययोगाच्च विकल्पः स्यात् । अवगमकत्वे तु प्रासाद-खट्वा-पर्यङ्कानामिव कार्यभेदात् समुच्चयः स्यात् । ततश्च परमात्मनः जीवविश्रामस्थानत्वरूपगुणनियमसिद्धिः । **युगप....भवादिति** । अणुत्वादिति भावः । **तदभाव इति** । 'यदा सुप्तः स्वप्नं न कथंचन पश्यति' इति श्रुत्यनुसारात्, 'तदभावः' इति व्यपदेशः । सूत्रस्य 'च' शब्दात् पुरीतद्विवक्षितम् ॥

**न चेति** पूर्वपक्षयुक्तिव्युदासार्थम् । **पाक्षिकेति** । 'विकल्पश्च अष्टदोषदुष्टः' इति शाबरभाष्यम् । एकैकशिरसि चत्वारो दोषाः इति शिरोद्वयेऽप्यष्टौ दोषाः । दोषाश्च बाधरूपाः । प्रथमं फलसाधनताप्रतिपत्तिबाधः, अनुष्ठानबाधः, अपूर्वोत्पत्तिबाधः, फलबाधश्चेति, एकैकशिरसि चत्वारो दोषाः । **पाक्षिकेत्यादिना** सामान्यनिर्देशः कृतः । अत्र तु यथासंभवं बाधः ; न चतुर्विधोऽपीत्यभिप्रायः । **सम्भवति चेति** । सुषुप्तौ नाड्या हृदयान्निष्क्रम्य पुरीतति शयनम्, 'प्रत्यवसृप्य' इति श्रुतेः ॥ ७ ॥

---

[1] तेषां—न. [2] स्थानानां—द. [3] संभवति—न.

[4] ब्रह्म च—त. थ.

[ ब्रह्मणः जीवप्रबोधावधिस्थानता ]

## ३२१. अतः प्रबोधोऽस्मात् ॥ ३-२-८ ॥ (सि)

यतः ब्रह्मैव साक्षात्सुषुप्तिस्थानम्, अतः अस्माद् ब्रह्मणः, एषां जीवानां प्रबोधः श्रूयमाणः,उपपद्यते ;

'सतः [1]आगम्य[1]न विदुः सत आगच्छामहे' (छां. उ. 6-10-2) इत्यादिषु ॥ ८ ॥

इति तदभावाधिकरणम् ॥ २ ॥

—o—

---

अत इति । 'अतः, अस्मात्' इति व्याख्येयं पदद्वयम् ॥ ८ ॥

[ सूत्रे—१ तदभावो    २ अतः प्रबोधोऽ ]

इति तदभावाधिकरणम् ॥ २ ॥

—o—

---

[सूत्रार्थः । अतः—परमात्मनः जीवीयसुषुप्तिस्थानत्वादेव, अस्मात्— परस्माद् ब्रह्मणः, प्रबोधः—प्रबोधः जाग्रद्दशारूपः युज्यते ॥]

'पर्यङ्कस्थानभूते तु सुषुप्तिर्ब्रह्मणीत्यतः। तस्मात् प्रबोध इत्यादिश्रुतिश्चाऽप्युपपद्यते ॥' (ब्र.प. 322)

---

[1] आगत्य—न.

## (77) कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३-२-३ ॥

[अधिकरणार्थः—जाग्रदवस्थातः सुषुप्तिदशां प्राप्त एव जीवः प्रबुध्यते ; नान्यः]

### ३२३. स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३-२-९ ॥ (सि)

[प्रकृताधिकरणीयः संशयः, पूर्वः पक्षश्च]

किं सुषुप्त एव प्रबोध[1]समये[1] उत्तिष्ठति ? उत अन्यः—इति संशये,

अस्य सकलोपाधिविनिर्मुक्तस्य, ब्रह्मणि सम्पन्नस्य, मुक्ता[2]दविलक्षणत्वेन,[2] प्राचीनशरीरेन्द्रियादिसम्बन्धाभावात्, अन्यः—इति प्राप्ते,

[सिद्धान्तार्थः सूत्रतः]

उच्यते—'स एव तु'—इति। 'तु' शब्दः पक्षं व्यावर्तयति। स एव उत्तिष्ठति। कुतः ?—'कर्मानुस्मृतिशब्दविधिभ्यः'—।

(1) कर्म तावत्–सुषुप्तेन पूर्वकृतं पुण्य-पापरूपं, तत्त्वज्ञानात् प्राक् तेनैव भोक्तव्यम्।

---

किमित्यादि। सङ्गतिः स्फुटा ॥ किं सुषुप्तादन्यः प्रबोधे उत्तिष्ठति ? उत स एव ? इति। किं सुषुप्तौ सर्वोपाधिविनिर्मोकः अस्ति ? उत न ? इति। किं कर्मा-ऽनुस्मृति-शब्द-विधयः, सकलोपाधिविनिर्मोकाभावम् अवगमयन्ति ? न ? इति।

न गमयन्ति चेत्! सकलोपाध्यभावात्, ब्रह्मणि सम्पन्न इति, अन्य उत्तिष्ठति। गमयन्ति चेत्! सर्वोपाधिविनिर्मुक्तब्रह्मसम्पत्त्यभावात्, स एवोत्तिष्ठतीति स्यात्। सकलेति। अत्र 'न कञ्चन पाप्मानं स्पृशति' इति श्रुतिरभिप्रेता। ब्रह्मणि सम्पन्नस्येति, 'सता सोम्य

---

[सूत्रार्थः। स एव तु—(स्वापानन्तरं प्रबोधं प्राप्नुवन्) सुषुप्त एव जीवः ; नाऽन्यः। कर्मा .... विधिभ्यः—सुषुप्तजीवीयकर्मणः तेनैव अवश्यं भोक्तव्यत्वात्, प्रबोधानन्तरं स एवाऽहमिति प्रत्यवमर्शात्, यद्यद्भवन्ति तदाभवन्तीति श्रुतेः, मोक्षार्थोपायविधिसाफल्यावश्यं-भावाच्च ॥]

'मुक्तिर्न सम्पत्तिरियमागच्छति स एव तु। कर्मानुस्मृतिशब्देभ्यो मोक्षोपायविधेः पृथक् ॥' (ब्र.प. 323)

---

[1] समयेऽपि—त. थ. [2] दविलक्षणत्वे—थ.

(2) अनुस्मृतिरपि—'य एवाऽहं सुप्तः, स एव [1]प्रबुद्धो[1]ऽस्मि'—इति ।

(3) शब्दोऽपि—'सुषुप्तप्रबुद्धः स एव'—इति दर्शयति ;

'त इह व्याघ्रो वा सिंहो वा वृको वा [2]वराहो वा[2] कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति [3]तदाभवन्ति[3]' (छां.उ. 6–10-2)

इति । (4) विधयश्च मोक्षार्थाः, सुषुप्तस्य मुक्तत्वे अनर्थकाः स्युः ।

न च—असौ सर्वोपाधिविनिर्मुक्तः आविर्भूतस्वरूपः ;

'तद्यत्रैतत् सुषुप्तः' (छां. उ. 8–11–2)

इति [4]सुषुप्तं[4] प्रकृत्य,

'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहस्मीति, नो एवेमानि भूतानि, विनाशमेवाऽपीतो भवति ; नाऽहमत्र भोग्यं पश्यामि' (छां.उ. 8–11–1)

इति वचनात् । [5]मुक्तस्य च[5],

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8–13–4)

'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' (छां. उ. 8–12–3)

'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7-25–2)

'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' (छां.उ. 7–26–2)

इति सर्वज्ञत्वादि श्रूयते ।

---

तदा सम्पन्नो भवति' इति वाक्यमभिप्रेत्योक्तम् । यद्यदिति । पूर्वं ये यथा भवन्ति ; ते तथा भवन्तीत्यर्थः । [तत् आभवन्तीति श्रुतौ पदच्छेदः । अतः फलितार्थकथनमिदं 'तथा' शब्दघटनेन—इति. भा. प्र.]

'विनाशमेवाऽपीतो भवति' इति वाक्ये, ज्ञानसङ्कोचो विवक्षितः । मुक्तस्येति । सुषुप्तौ, सर्वप्रवृत्तिशून्यत्व-ज्ञानसङ्कोचौ अभिहितौ । मुक्तस्य तु, तदुभयं विपरीतमित्यर्थः ।

---

[1] प्रतिबुद्धोऽ—ग. ङ. न. [2] वराहो वा – त. थ. [3] तत्तथा भवन्ति—त. थ.
[4] सुप्तं – वा. [5] मुक्तस्य—त.थ.

**अतः, सुषुप्तः संसरन्नेव [1]आयस्त[1]सर्वकरणः, ज्ञान-भोगाद्यशक्तः, [2]विश्रम[2]स्थानं परमात्मानम् उपसम्पद्य आश्वस्तः, पुनर्भोगाय उत्तिष्ठति ॥ ९ ॥**

**इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥**

—o—

---

**अत इत्यादिः**, 'न कंचन पाप्मानं स्पृशति' इति श्रुतेरर्थः ॥ **ज्ञान-भोगाद्यशक्त इति।** आदिशब्देन अनुष्ठानमुक्तम् । 'न कञ्चने'ति अनुष्ठानाशक्तिर्विवक्षिता । सुखदुःखानुभवादिकालुष्य-राहित्यम् , विश्रान्त्यर्थं परमात्मनि सम्पत्तिः, कर्मानुष्ठानवैधुर्यं चाऽभिहितम् । न तु सर्वोपाधिविनिर्मोक्षपूर्वकब्रह्मप्राप्तिरित्यर्थः । सति सम्पत्तिर्नाम शरीरेन्द्रियाधिष्ठातृत्वादि-व्यापारान्तरराहित्येन ब्रह्मणि स्थितिमात्रं विवक्षितम्, सदा सति सम्पन्नत्वात् आत्मस्वरूपस्य ॥९॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

—o—

---

[1] अपास्त—वा. [2] विश्राम—तु. ध. न.

(78) मुग्धाधिकरणम् ।। ३-२-४ ।।

[ अधिकरणार्थः—देहिनो मूर्च्छावस्थास्वरूपनिर्णयः ]

## ३२४. मुग्धेऽर्धसम्पत्तिः परिशेषात् ।। ३–२–१० ।। (सि)

[ विचारणीयो विषयः संशय-पूर्वपक्षौ च ]

मुग्धमधिकृत्य चिन्त्यते—

किम् इयं मूर्च्छा, सुषुप्त्यादिष्वन्यतमा अवस्था ? उत अवस्थान्तरम् ? इति विशये, सुषुप्त्यादीनाम् अन्यतमावस्थायामेव मूर्च्छाप्रसिद्धयुपपत्तेः, अवस्थान्तरकल्पने प्रमाणाभावात्, अन्यतमावस्था—

[ सूत्रार्थवर्णनपूर्वकं सिद्धान्तः ]

इति प्राप्ते,

उच्यते—मुग्धेऽर्धसम्पत्तिः—इति । मुग्धे पुरुषे या तस्याऽवस्था, सा मरणाय अर्धसम्पत्तिः ।

कुतः ? परिशेषात् ।

न तावत् स्वप्न-जागरौ ; ज्ञानाभावात् ।

---

**किमित्यादि।** किं मूर्च्छा नाम जाग्रत्-स्वप्न-सुषुप्तीनाम् अन्यतमावस्था ? उत अवस्थान्तरम् ? । किं लक्षणतो भेदः अध्यवसातुं शक्यते ? न ? इति ।। अशक्यत्वे अन्यतमत्वम् । शक्यत्वे अवस्थान्तरत्वम् ।।

**सुषुप्त्यादीनामिति** आदिशब्देन जागर-स्वप्न-मरणावस्थाः गृह्यन्ते। **प्रसिद्ध्युपपत्तेः**-

---

[सूत्रार्थः । **मुग्धे**—मूर्च्छिते पुरुषे विद्यमाना अवस्था, **अर्धसम्पत्तिः**—मरणस्यार्धावस्थात्मिका, **परिशेषात्**— (जाग्रत्-स्वप्न-सुषुप्ति-मरणानां बाधेन परिशिष्टावस्थारूपत्वावश्यंभावात् ]

'मरणायाऽर्द्धसम्पत्तिर्मूर्च्छेति मरणेतरा । उत्थानाभावनियमाद्यभावात्परिशेषतः ' (ब्र प. 324)

निमित्तवैरूप्यात् आकारवैरूप्याच्च, न सुषुप्ति-मरणे। निमित्तं हि! मूर्च्छायाः, अभिघातादिः। [1]पारिशेष्यात्[1], मरणायाऽर्द्धसम्पत्तिः—मूर्च्छा। मरणं हि सर्वप्राण-देहसम्बन्धोपरतिः। सूक्ष्मप्राणदेहसम्बन्धावस्थितिः—मूर्च्छा ॥ १० ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

—o—

'मूर्च्छा' शब्दप्रयोगोपपत्तेः इत्यर्थः। उपपत्तिश्च ज्ञानलोपस्य अविशेषात्। अभिघातादिरिति आदिशब्देन, अत्यन्तानिष्टश्रवणादि अभिप्रेतम्।

वैरूप्यादिति। निमित्तवैरूप्यात् सुषुप्तिव्यावृत्तिः। आकारवैरूप्यात् मरणव्यावृत्तिः। 'न सुषुप्तिमरणे' इत्युक्तेरासन्नतया सुषुप्ति-मरणयोः धीस्थत्वात् पारिशेष्यमुक्तवान्। पश्चात् मरणान्तर्भावशङ्कायाम् आकारवैरूप्यं विवृतम्। सुषुप्तौ प्राणो भूयिष्ठमुपलभ्यते। मूर्च्छायाम् अल्पः किञ्चिदुपलभ्यते, मृतौ न किञ्चिदपि। बाह्यवायुना भूयिष्ठमाप्यायितः सुषुप्तौ। मूर्च्छायां किंचिदाप्यायितः। अनाप्यायितस्य प्राणस्य उपलम्भानर्हत्वात् ॥ १० ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

—o—

[1] पारिशेष्येण—न.

(79) उभयलिङ्गाधिकरणम् ॥ ३-२-५ ॥ (सू. 11-25)

[मूर्तामूर्तब्राह्मणविद्या बृ.उ. 4-3-1]

[अधिकरणार्थः — सर्वत्र व्याप्तिमत्यपि ब्रह्मणि निखिलहेयप्रत्यनीकता समस्तकल्याणगुणाकरता च]

## ३२५. न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥३-२-११॥ (सि)

[सङ्गतिप्रदर्शनम्]

दोषदर्शनात् वैराग्योदयाय, जीवस्य अवस्थाविशेषाः निरूपिताः।

इदानीं ब्रह्मप्राप्तितृष्णाजननाय, [1]प्राप्यस्य ब्रह्मणः[1] निर्दोषत्व-कल्याणगुणात्मकत्वप्रतिपादनाय, आरभते।

[संशयप्रतिपादनम्]

तत्र [2]जागर-[2]स्वप्न सुषुप्ति-मुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ताः जीवस्य ये

---

दोषेति। [यद्यपि] द्वितीयपादप्रतिपाद्ये, परमात्मनो निर्दोषत्व-कल्याणगुणाकरत्वे [एव; अथापि] स्वप्न-सुषुप्तिनिरूपणेन, परमात्मनः स्वाप्नविचित्रार्थस्रष्टृत्वं सुषुप्तिस्थानत्वं च आकारद्वयं प्रतिपादितं भवतीति, परमात्मगुणसिद्धेः, अस्मिन् पादे तन्निरूपणम्। मूर्च्छादिनिरूपणं तु पूर्वपादे निरवकाशत्वात्, सुषुप्तिनिरूपणसापेक्षत्वाच्च, अत्र कृतम्। **आरभत इति।** सूत्रकारः इति शेषः।

**स्थानेषु**—अवस्थासु इत्यर्थः। सुषुप्त्यादिस्थानेषु स्थितस्य जीवशरीरकस्य परस्य, जीवगताः अपुरुषार्थाः किं प्रसज्यन्ते ? न ? इति चिन्त्यते। देहादिसम्बन्धस्य अपुरुषार्थहेतुत्वं, किं तद्वस्तुस्वभावप्रयुक्तम् ? उत कर्मविशेषकृतम् ? इति। किं परमात्मविषया उभयलिङ्गश्रुतिः, अपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य, कर्मनिबन्धनताम् अवगमयितुं प्रभवति ? न ? इति।

---

[सूत्रार्थः। **परस्य**—परमात्मनः, **स्थानतोऽपि**-सदोषचराचरात्मकजगद्रूपस्थानसम्बन्धादपि, **न**-दोषसंस्पर्शो न भवति; **हि**-यतः, **सर्वत्र**-श्रुत्यादिसर्वप्रमाणेषु, **उभयलिङ्गम्**-निर्दोषत्व-कल्याणगुणात्मकत्वरूपासाधारणधर्मद्वयमेव दृश्यते॥]

'परस्य ब्रह्मणो दोषः स्थानतोऽपि न विद्यते। यतो निर्दोषकल्याणगुणतोभयलिङ्गता॥ (ब्र.प. 325)

---

[1] प्राप्यब्रह्मणः—त.थ. [2] जागरण—द.

दोषाः ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्र तत्राऽवस्थितस्य सन्ति? न?—इति विचार्यते।

[ पूर्वः पक्षः ]

किं युक्तम्? सन्ति—इति।

---

परस्य उभयलिङ्गत्वश्रुतिः, किम् अन्यथासिद्धा? उत न? इति। परस्य उभयलिङ्गत्वं, जीववत् अवस्थाभेदेन वा अतात्त्विकत्वेन वा निर्वोढुं शक्यम्? न? इति। तत्र अवस्थाभेदेन निर्वहणार्थं चिन्त्यते—परस्य उभयलिङ्गत्वम्, किं तिरोधानार्हम्? न? इति। नाम-रूपव्याकरणश्रुत्यवगतः ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं, किं परस्य कर्मवश्यताम् अवगमयति? न? इति। अतात्त्विकत्वेन निर्वाहार्थम् इत्थं त्रेधा चिन्त्यते—जलसूर्यादिदृष्टान्तः, परस्य किम् अध्यासमूलाविद्यादिदोषसम्बन्धम् अवगमयति? न? इति। 'अथात आदेशो नेति नेति' इति निषेधः, किं प्रकृतसर्वाकारविषयः? उत सङ्कुचितः? इति। ज्ञानानन्दस्वरूपत्वव्यपदेशः, किं परस्य सार्वज्ञ्य—सत्यसङ्कल्पत्वादिगुणाश्रयत्वं प्रतिक्षिपति? न?—इति च [विचाराः]

विचार्यत इति। यदा ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं, परस्य कर्मवश्यतामवगमयति; तदा परस्य उभयलिङ्गत्वं तिरोधानार्हम् अवस्थाभेदेन निर्वाह्यं स्यात्। यदा जलसूर्यादिदृष्टान्तः, परस्य अविद्यादिदोषसंसर्गज्ञापकः; यदा च 'नेति नेती'ति निषेधः प्रकृतसर्वाकारविषयः; यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशः, सार्वज्ञ्यादिप्रतिक्षेपकः; तदा उभयलिङ्गत्वम् अतात्त्विकत्वेन निर्वोढुं शक्यं स्यात्। एवम् उभयथानिर्वाहसम्भवात् उभयलिङ्गत्वश्रुतिः अन्यथासिद्धेति अपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मकृतत्वं व्यवस्थापयितुं सा न प्रभवतीति, अकर्मवश्यत्वेऽपि परस्य देहादिसंबन्धात् अपुरुषार्थान्वयः स्यात्॥

यदा तु ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वं, न परस्य कर्मवश्यत्वमवगमयति; तदा तस्य उभयलिङ्गत्वं तिरोधानानर्हतया अवस्थाभेदेन निर्वोढुमशक्यं स्यात्। यदा जलसूर्यादिदृष्टान्तः परस्य अविद्यादोषसंसर्गं न ज्ञापयति; यदा च 'नेति नेती'ति निषेधः सङ्कुचितविषयः; यदा च ज्ञानानन्दस्वरूपत्वव्यपदेशः ज्ञातृत्वादिगुणाश्रयत्वं न प्रतिक्षिपति; तदा अतात्त्विकत्वेन निर्वोढुमशक्यं स्यात्। अतः उभयलिङ्गत्वश्रुतेः उभयथाप्यन्यथासिद्धत्वाभावात्, अपुरुषार्थस्य वस्तुस्वभावप्रयुक्ततां व्युदस्य कर्मविशेषप्रयुक्तत्वं सा व्यवस्थापयितुं प्रभवतीति, अकर्मवश्यस्य परमात्मनः देहादिष्ववस्थितस्यापि, न अपुरुषार्थादिदोषान्वयप्रसङ्ग इति॥

कुतः ? तत्तदवस्थशरीरे अवस्थानात् ॥

[ शङ्कितस्य दोषसम्बन्धस्य अयोगाक्षेप-परिहारौ ]

ननु—

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र. सू. 1-2-8)

'स्थित्यदनाभ्यां च' (ब्र. सू. 1-3-6)

इत्यादिषु, परस्य अकर्मवश्यत्वेन दोषाभाव उक्तः। तत् कथम् अकर्मवश्यस्य परस्य ब्रह्मणः, तत्तत्स्थानसम्बन्धात् दोष उच्यते ?

इत्थमुच्यते— 'कर्माण्यपि देहसम्बन्धमापादयन्ति, अपुरुषार्थजननानि भवन्ति' इति,

'देहयोगाद्वा' (ब्र. सू. 3-2-5)

इत्यत्रोक्तम्। तच्च देहसम्बन्धस्य अपुरुषार्थत्वेन भवति। इतरथा, कर्माण्येव दुःखं जनयिष्यन्ति ; किं देहसम्बन्धेन ?। अतः अकर्मवश्यत्वे सत्यपि, नानाविधाशुचिदेहसम्बन्धः अपुरुषार्थ एव ॥

अतः, [1]तन्नियमनार्थं[1] स्वेच्छया [2]तत्प्रवेशे[2]ऽपि, अपुरुषार्थसम्बन्धः अवर्जनीयः। पूय-शोणितादिमज्जनं हि! स्वेच्छाकारितमपि अपुरुषार्थ एव।

[पूर्वपक्षार्थनिगमनम्]

अतः—यद्यपि, जगदेककारणं [3]सर्वज्ञत्वादि[3] कल्याणगुणाकरं च ब्रह्म ; तथापि,

'यः पृथिव्यां तिष्ठन्' (बृ. 5-7-3)

'य आत्मनि तिष्ठन्' (बृ. 5-7-22)

---

तत्तदिति। तच्छब्दः जागरादिपरः। जागरादिहेतुता शरीरस्याऽवस्था। तच्चेत्यादि। यथा राजकोपस्य वधादिहेतुत्वेऽपि, द्वारभूतखड्गप्रहारस्य वधं प्रति साक्षाद् हेतुत्वं ; तथेहापि द्वारभूतदेहसम्बन्धः अपुरुषार्थः इत्यभिप्रायः ॥

अतस्तदिति। कर्मवश्यत्वादृते स्वेच्छया प्रवेशेऽपि, अपुरुषार्थसम्बन्धः वस्तुस्वभावायत्तत्वात्, अवर्जनीयः। यथा अनन्याधीनस्य स्वयमेव असिना स्वच्छन्दतोऽपि शिरश्छेदः अपुरुषार्थ एव ; तद्वत्—[इत्याशयः]।

---

[1] तत्तन्नियमनार्थं—त.   [2] तत्तत्प्रवेशे—त.   [3] सर्वज्ञतादि—त. थ.

'यश्चक्षुषि तिष्ठन्' (बृ. उ. 5-7-18)

'यो रेतसि तिष्ठन्' (बृ. उ. 5-7-23)

इत्यादिवचनात्, तत्र तत्राऽवस्थितस्य तत्तत्सम्बन्धरूपाः अपुरुषार्थाः सन्ति—इति ॥

[सिद्धान्तारम्भः सूत्रार्थविवरणतः]

एवं प्राप्ते, प्रचक्ष्महे—'न स्थानतोऽपि परस्य'—इति। न पृथिव्यात्मादि-स्थानतोऽपि परस्य ब्रह्मणः, अपुरुषार्थगन्धः सम्भवति।

कुतः?—उभयलिङ्गं सर्वत्र हि—। यतः सर्वत्र—श्रुति-स्मृतिषु परं ब्रह्म, उभयलिङ्गम्—उभयलक्षणमभिधीयते। निरस्तनिखिलदोषत्व-कल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः।

'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां. उ. 8-1-5)

'समस्तकल्याणगुणात्मकोऽसौ स्वशक्ति'लेशोद्धृतभूतसर्गः[1]।' (वि.पु. 6-5-84)

तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः।' (वि.पु. 6-5-85)

'परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।' (वि.पु. 1-22-53)?

'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्।' (वि.पु. 1-22-53)

इत्यादिश्रुति-स्मृतिभ्यः, उभयलक्षणं हि! ब्रह्म अवगतम् ॥ ११ ॥

## ३२६. भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३-२-१२ ॥ (सि)

---

इत्यर्थ इति। निर्दोषत्व-श्रुतिवत् कल्याणगुणाकरत्वश्रुतिरपि दोषशङ्कानिरासोपयोगिनी; कल्याणगुणानां दोषप्रतिपक्षरूपत्वादिति भावः ॥ ११ ॥

---

[सूत्रार्थः। भेदात्—(स्वाभाविकनिर्दोषत्ववतोऽपि ब्रह्मणः जीवस्येव) अवस्थाभेदकृतः अपुरुषार्थयोगः, इति चेन्न—एवं शङ्कनं न साधु, प्रत्येकम्—अन्तर्यामिब्राह्मणस्थे एकैकस्मिन्नपि पर्याये, अतद्वचनात्—अपुरुषार्थविरोधिनोऽमृतत्वस्य स्पष्टमुक्तेः ॥]

'अवस्थाभेदतो दोषो जीवस्येव परस्य चेत्। नैवं स्यात् तत्र तत्रैव ह्यमृतत्वश्रुतेर्बलात् ॥' (ब्र.प. 326)

---

[1] लेशादुद्धृतभूतवर्गः—अ. क. ख. ग. घ. ङ.

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्याऽपि, देवादिदेहयोगरूपावस्थाभेदात् अपुरुषार्थयोगः; तथा अन्तर्यामिणः परस्याऽपि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य, तत्तद्देवादिशरीरयोगरूपावस्थाभेदात् अपुरुषार्थयोगः अवर्जनीयः —इति चेत् !,

तन्न;—'प्रत्येकमतद्वचनात्'— ।

'यः पृथिव्यां तिष्ठन्' (बृ.उ. 5-7-7)

'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा. 5-7-26)

इत्यादिषु प्रतिपर्यायम्,

'स त आत्माऽन्तर्याम्यमृतः' (बृ.उ. 5-7-7 to 28)

इति अन्तर्यामिणः अमृतत्व[1]वचनेन,[1] तत्र तत्र स्वेच्छया नियमनं कुर्वतः तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत् स्वरूपं तिरोहितमिति,

'पराभिध्यानात्तु तिरोहितम्' (ब्र.सू.3-2-4)

इत्यत्रोक्तम् ।

[अपुरुषार्थयोगस्य कर्मायत्तत्वाभावेऽपि; वस्तुस्वभावायत्तत्वशङ्का-परिहारौ]

ननु–स्वेच्छया कुर्वतोऽपि तत्तद्वस्तु[2]स्वभावायत्ता[2]पुरुषार्थसम्बन्धोऽवर्जनीयः— इत्युक्तम् !

नैतद्युक्तम्; न हि ! अचिद्वस्त्वपि, स्वभावतः अपुरुषार्थ[3]स्वरूपम्[3] ।

---

यथेति । उभयलिङ्गत्वश्रुतिः जीवस्याप्यस्ति । तत्र अवस्थाभेदेन हि तन्निर्वाहः । तद्वत् परमात्मनोऽपीत्यर्थः । **प्रतिपर्यायमिति** । 'अमृत' शब्दस्य सकृदुक्तिश्चेत्, नित्यत्वपरत्वं स्यात्; असकृदावृत्तत्वात्, प्रतिपर्यायमुक्ततत्तद्वस्तुगतदोषविशेषसम्बन्धराहित्यमेव, तदभिप्रेतमित्यर्थः । **जीवस्य त्विति** । तिरोधानादेः श्रुतिसिद्धत्वात् जीवविषया उभयलिङ्गत्वश्रुतिः सङ्कोचिता । परमात्मनस्तु अन्याधीनतिरोधानादिश्रुत्यभावात्, तद्विषया उभयलिङ्गत्वश्रुतिः, असङ्कुचितवृत्तिरित्यर्थः ।

**न हीति** । वस्तुस्वभावायत्तत्वे सति हि ! अपुरुषार्थत्वप्रसङ्गः । तदेव नास्तीत्यर्थः । **अचिद्वस्त्वपीति** । न केवलं क्षेत्रज्ञस्यैव अपुरुषार्थसम्बन्धः औपाधिकः । अचेतनस्याऽपि

---

[1] वचनात्—न. [2] स्वभावायत्तोऽ—द. [3] रूपम्—वा.

कर्मवश्यानां तु कर्मस्वभावानुगुण्येन, परमपुरुषसङ्कल्पात् एकमेव वस्तु, कालभेदेन पुरुष[1]भेदेन च[1] सुखाय दुःखाय च भवति। वस्तुस्वरूप[2]प्रयुक्त[2] तु तादृूप्ये, सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात्! न चैवं दृश्यते। तथा चोक्तम्—

'नरक स्वर्गसंज्ञे वै पाप-पुण्ये द्विजोत्तम।
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च॥ (वि.पु. 2-6-46)
कोपाय च यतस्तस्माद्[3]वस्तु वस्त्वात्मकं[3]कुतः?।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते॥ (वि.पु. 2-6-47)
तदेव कोपाय यतः प्रसादाय च जायते।
तस्माद् दुःखात्मकं नास्ति न च किंचित् सुखात्मकम्॥' (वि.पु. 2-6-48)

[ जीव-परवैलक्षण्यदृढीकरणम् ]

इति। अतः जीवस्य कर्मवश्यत्वात्, तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एव अपुरुषार्थः स्यात्। परस्य तु ब्रह्मणः स्वाधीनस्य, स एव सम्बन्धः, तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात्॥ १२॥

---

अपुरुषार्थत्वं न स्वभावप्रयुक्तमिति, 'अपि' शब्दस्य भावः। **एकमेव वस्त्विति**। अग्न्यादिषु हेमन्तादिकालापेक्षया सुख-दुःखहेतुत्वं दृष्टम्। पुरुषभेदेन एकमेव वस्तु स्वकीयत्व-परकीयत्वबुद्ध्या सुख-दुःखकरं दृष्टम्। यथा धान्यादिषु, तद्वदित्यर्थः। **तादृूप्ये**—सुख-दुःखादिहेतुत्वे इत्यर्थः। न हि! एकस्य विरुद्धस्वभावद्वयान्वय उपपन्नः इत्यर्थः॥

**तथा चेति**। न केवलं सुखादिहेतुतायाः कर्मकृतत्वम्, उपपत्त्या कल्प्यम्; कण्ठोक्तमपीत्याशयः। **नरकेति**। नरकस्वर्गसंज्ञत्वं प्राप्ताप्राप्तविवेकेन पाप-पुण्यकृतमित्यर्थः। **तदेवेति**। एकस्यैव वस्तुनः एकपुरुषं प्रति कालभेदेन सुखादिहेतुत्वमुक्तम्। **अत इति**। तस्मात् परतन्त्रस्य जीवस्य, कर्मानुगुणभगवत्सङ्कल्पायत्तः अपुरुषार्थसम्बन्ध इत्यर्थः। **परस्येति**। स्वतन्त्रस्य स्वयं स्वापुरुषार्थापादनायोगात्, ईश्वरस्येदं लीलोपकरणतया पुरुषार्थभूतमित्यर्थः॥ १२॥

---

[1] भेदेन—त.थ. [2] प्रयुक्तत्वे ...द [3] वस्त्ववस्त्वात्मकं—द.

[ ब्रह्मणि देहादिसम्बन्धेऽपि अपुरुषार्थायोगः श्रुतिकण्ठोक्तः ]

## ३२७. अपि चैवमेके । ३-२-१३ ॥ (सि)

अपि च-एके शाखिनः, एकस्मिन्नेव देहसंयोगे, जीवस्य-अपुरुषार्थं, परस्य तु[1]तदभावं[1]नियमन[2]रूपैश्वर्यायत्त[2]दीप्तियोगं च, स्वशब्देनाऽधीयते—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥' (मुण्ड.उ. 3-1-1) इति ॥ १३ ॥

[ विधिनिषेधशास्त्रपर्यवसानभूमित्वं, 'देव-मनुष्यादीन् प्रति परमात्मभूतस्यैवेति नामरूपव्याकरणश्रुतितः सिध्यति, इति शङ्का-तत्परिहारौ ]

अथ स्यात्—

'अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6-3-2) इति, ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति, ब्रह्मणोऽपि तदात्मभूतस्य देव-मनुष्यादि-रूपत्वं[3]तन्नाम[3]भाक्त्वं चाऽस्ति । ततश्च, 'ब्राह्मणो यजेत' इत्यादिविधि-निषेधशास्त्रगोचरत्वेन, कर्मवश्यत्वमवर्जनीयम्—इति ; तत्राह—

---

स्वशब्देनेति । पूर्वसूत्रे अनिगदव्याख्याना श्रुतिरुदाहृता । अत्र स्पष्टार्थं श्रुतिरुदाह्रियते इत्यभिप्रायः । सुपर्णेति 'पर्ण' शब्देन अप्राकृतविग्रहो ज्ञानं वा अभिधीयते ॥ १३ ॥

अवर्जनीयमिति । अपुरुषार्थसम्बन्धः कर्माधीनोऽस्तु ; कर्मवश्यत्वं परमात्मनोऽपि संभवतीत्यर्थः ॥

---

[सूत्रार्थः । अपि च—किंच, एके—शाखाविशेषाध्यायिनः, एवम्—एकदेहावस्थितयोः जीवस्य अपुरुषार्थयोगं, परस्य तदभावमैश्वर्ययोगं च अधीयते]

'एकदेहस्थितस्याऽपि न भोक्तृत्वं परात्मनः । 'द्वासुपर्णा' इति श्रुत्याऽधीयते चैकशाखिनः' ॥ (ब्र.प.327)

---

[1] तदभाव—द.  [2] रूपैश्वर्यायत्तं—वा.  [3] तत्तन्नाम—वा.

३२८. अरूपवदेव हि! तत् प्रधानत्वात् ॥ ३-१-१४ ॥ (सि)

देवादिशरीरानुप्रवेशे[1]तेन[1]रूपेण युक्तमपि, अरूपवदेव तत्–ब्रह्म, रूपरहित-तुल्यमेव। जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वम्, अस्य न विद्यते इत्यर्थः।

कुतः? [2]निर्वाह[2]कत्वेन प्रधानत्वात्।

'आकाशो ह वै नाम-रूपयोर्निर्वहिता, ते यदन्तरा तद् ब्रह्म' (छां.उ. 8-14-1) इति, सर्वानु[3]प्रवेशेऽपि[3]नाम-रूपकार्यास्पर्शेन नाम-रूपयोर्निर्वोढमेव ब्रह्मणः प्रतिपादयति।

[ तत्तदन्तर्यामित्वकृतकर्मवश्यत्वावश्यम्भावाक्षेप-समाधाने ]

ननु—[4]तच्छरीरक[4]त्वेन तदन्तर्यामित्वे, कथम् 'अरूपवत्' इति रूपसम्बन्धरहित-तुल्यत्वमुच्यते?

इत्थम्; यथा जीवस्य तत्तज्जन्यसुख-[5]दुःख भाक्त्वेन[5] तत्तद्रूपसम्बन्धः; तथा तदभावात्[6]परस्य[6] [7]अरूपवत्त्वम्[7]। विधि-निषेधशास्त्राण्यपि [8]कर्मवश्यमेव[8]अधिकुर्वन्ति।

---

नाम-रूपकार्यास्पर्शेनेति 'ते यदन्तरा' इत्यस्यार्थमाह।

नन्विति। तत्तद्बुद्धिशब्दपर्यवसानं हि! तत्तदनुप्रवेशकार्यम्। बुद्धि-शब्दविषयत्वेन कर्मवश्यत्वं च अवश्यम्भावि। तत् कथं कार्यास्पर्श? इत्यर्थः।

यथेत्यादि। सुख-दुःखादिकार्यविशेषस्य अस्पर्श उच्यते; न तु नियमनादेः इत्यर्थः। विधिनिषेधेति। यथा 'शुक्ल' शब्दस्य गुणिपर्यन्ताभिधानस्वारस्येऽपि, 'घटस्य शुक्लः' इति वाक्ये अर्थानुपपत्त्या, 'शुक्ल'शब्दो धर्ममात्रपरः; तथा 'ब्राह्मणो यजेत' इत्यादिष्वपि, अर्थानुपपत्त्या जीवमात्रपर्यन्तत्वमाश्रीयते-इत्यर्थः। तथा च 'यस्य पृथिवी शरीरम्' इत्यादिषु दृष्टमिति भावः। यद्वा; ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वेऽपि, 'ब्राह्मणः शुक्लः' इतिवत्, विशेषणीभूतजीवमात्रे कर्मवश्यत्वान्वयात्, ब्रह्मणः सद्वारकं कर्मवश्यत्वमिति॥ अधिकुर्वन्तीति।

---

[सूत्रार्थः। तत्—तत्तदन्तर्यामिभूतमपि ब्रह्म, अरूपवदेव हि—रूपरहितसदृशमेव खलु, प्रधानत्वात्– नामरूपादिनिर्वाहकत्वकृतप्राधान्यात् ॥]

'शरीरस्थमपि ब्रह्म रूपाभाववदेव हि। नाम-रूपादिकरणे प्रधानत्वात् परात्मनः॥' (ब्र.प. 328)

---

[1] तेन तेन—अ.क.ख. [2] तन्निर्वाह—वा. [3] प्रवेशोऽपि—द. [4] तच्छरीर—वा.

[5] दुःखभोक्तृत्वेन—त. दुःखोपभोक्तृत्वेन—थ. [6] परस्य ब्रह्मणः—वा.

[7] अरूपत्वम्—द. रूपवत्त्वम्—वा [8] कर्मवश्यानेव—न

तस्मात्[1]अरूप[1]तुल्यमेव परंब्रह्म । ततश्च, अन्तर्यामिरूपेणाऽवस्थितमपि ब्रह्म, निरस्तनिखिलदोषत्व–कल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

[ ब्रह्मण उभयलिङ्गतायाः, श्रुत्यवगतनिर्विशेषप्रकाशरूपत्वविरोधशङ्का-तत्परिहारौ ]

ननु च —

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.1–1)

इत्यादिभिः, निर्विशेषप्रकाशैक[2]स्वरूप[2]ब्रह्म अवगम्यते । अन्यत्तु सर्वज्ञत्व-सत्यसङ्कल्पत्व-जगत्कारणत्व-सर्वान्तरात्मत्व-सत्यकामत्वादिकम् ,

[3]'नेति नेति'[3] (बृ.उ.4–3–6)

इत्यादिभिः प्रतिषिध्यमानत्वेन, मिथ्याभूतमित्यवगन्तव्यम् । तत् कथं कल्याणगुणाकरत्व निरस्तनिखिलदोषत्व[4]रूपोभय[4]लिङ्गत्वं ब्रह्मणः ?—इति ; [5]अत आह[5]—

## ३२९. प्रकाशवच्चाऽवैयर्थ्यात् ॥ ३-२-१५ ॥ (सि)

[6]यथा च,[6]

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.1–1)

---

अधिकारः—तादर्थ्यबोधनम् । तस्मादिति, सूत्रार्थमुपसंहरति । ततश्चेति परमप्रकृतार्थेनान्वयमाह ॥ १४ ॥

नन्विति । 'सत्यं ज्ञान'मिति अर्थगुणनिषेधः । ज्ञानमात्रस्य सङ्कल्पाद्याश्रयत्वायोगात् । ज्ञातुरेव हि तदाश्रयत्वम् । नेतीति श्रौतनिषेधमाह । प्रकाशवदिति । ब्रह्म ज्ञानमपि,

---

[सूत्रार्थः । प्रकाशवत्–सत्यादिवाक्यतो ब्रह्मणः प्रकाशस्वरूपत्वमिव, अवैयर्थ्याच्च—गुणविधायकवाक्यानां सार्थक्याय, ब्रह्मणःसगुणत्वमपि ।।]

'यथा ज्ञानादिवाक्यस्यावैयर्थ्यात् स्वप्रकाशता । तथैव सत्यकामादिवाक्यावैयर्थ्यतो गुणाः ॥' (ब्र.प.329)

---

[1] अनुरूप—ओ.　[2] रूपं—द.

[3] स एष आदेशो नेति—थ. एष आदेशो नेति—त स आदेशो नेति नेति—न.

[4] रूपेणोभय—आ.　[5] तत्राऽऽह—न.　[6] यथा—उ. न.

इत्यादि[1]वाक्यावैयर्थ्यात्[1], प्रकाशस्वरूपत्वं ब्रह्मणः अभ्युपगम्यते; तथा सत्यसङ्कल्पत्व-सर्वज्ञत्व-[2]सर्वजगत्कारणत्व[2]-सर्वात्मकत्व-निरस्तानिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्या-वैयर्थ्यात्, उभयलिङ्गमेव ब्रह्म ॥ १५ ॥

[सत्यादिवाक्यस्य गुणनिषेधकत्वाभावः]

## ३३०. आह च तन्मात्रम् ॥ ३-२-१६ ॥ (सि)

किं च—'सत्यं ज्ञानमनन्तम्' इत्यादिवाक्यं, ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति; नाऽन्यत् सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं [3]निषेधति[3]। 'नेति नेति' इति च '[4]निषेधस्य[4] विषयः' अनन्तरमेव वक्ष्यते ॥ १६ ॥

[गुणानां श्रुत्यादिप्रतिपन्नत्वस्पष्टीकरणम्]

## ३३१. दर्शयति चाऽथो अपि स्मर्यते ॥३-२-१७॥ (सि)

दर्शयति च [5]वेदान्तवाक्यगणः[5] कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च—

---

न गुणभूतम्; प्राधान्येन श्रुतिप्रतिपन्नत्वात् [इतिवत्] तत एव सर्वज्ञत्वादयोऽपि [ब्रह्मणः] स्वीक्रियन्ताम्। व्याप्तिविरोधोऽपि नाऽस्ति; गुणभूतज्ञानस्यैव ज्ञानाद्यनाश्रयत्वदर्शनात्। अतः सर्वमुपपन्नमिति भावः ॥ १५ ॥

नाऽन्यदिति। इतरनिषेधव्यवच्छेदपरो मात्रशब्द इत्यर्थः ॥ १६ ॥

अथोशब्दः कार्त्स्न्यपरः। [अतः] वेदान्तवाक्यगण इति। 'निष्कलं निष्क्रियं'

---

[सूत्रार्थः। तन्मात्रम्—(सत्य-ज्ञानादिश्रुतिः) ब्रह्मणः प्रकाशस्वरूपत्वमात्रम्, आह च—वदत्येव; न तु गुणान्तरनिषेधम् ॥]

('काशरूपतामात्रं सत्यं ज्ञानमिति श्रुतिः। वदत्यन्यान् गुणांस्तांस्तु न निषेधति वै यतः ॥' (ब्र.प.330)

[सूत्रार्थः। दर्शयति चाऽथो—श्रुतिवाक्यगणः इममर्थं स्पष्टं बोधयति, स्मर्यतेऽपि—स्मृतिवाक्यैरपि सोऽर्थः स्फुटीक्रियते च ॥]

'निष्कलं मामनादिं च वेत्तीत्यादिश्रुति-स्मृती। ब्रह्म ह्युभयलिङ्गं तु वदतश्च विशेषतः ॥ (ब्र.प.331)

---

[1] वाक्यार्थावैयर्थ्या—त.
[2] जगत्कारणत्व—अ. त. थ.
[3] निषेधयति—त. थ. न.
[4] निषेध—च.उ.
[5] वेदान्तगणः—घ.

'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।' ( श्वे.उ. 6–7)

'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाधिपः ।'( श्वे.उ. 6–9)

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान बल-क्रिया च ।।' ( श्वे.उ. 6–8)

'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।' (मुण्ड.उ. 1–1–9)

'भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः ।' (तै.उ.आन. 8–4)

'स एको ब्रह्मण आनन्दः' (तै.उ.आन. 9–1)

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति ।।' (तै उ.आन. 8–4)

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।' (श्वे उ. 6–19)

इत्यादि । स्मर्यते च—

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।' (भ.गी 10–3)

'विष्टभ्याऽहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।' (भ.गी. 10–42)

'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ।।' (भ.गी· 9–10)

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।' (भ.गी. 14–17)

'सर्वज्ञः सर्वकृत् सर्वशक्तिज्ञानबलर्द्धिमान् ।
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी ।।' (वि.पु· 5–1–47)

'क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ।
निरवद्यः 'परः प्राप्ते'[1]र्निरधिष्ठोऽक्षरः क्रमः ।।' (वि·पु. 5–1–48, 49)

इत्यादि । अतः सर्वत्रावस्थितस्यापि ब्रह्मणः उभयलिङ्गत्वात्, तत्तत्स्थानप्रयुक्ता दोषाः न परं ब्रह्म स्पृशन्ति ।। १७ ।।

---

इत्याद्युपादानेन श्रौतनिषेधः परिहृतः । गुणविशेषविधाने सति सामान्यनिषेधस्य विहितव्यतिरिक्तविषयत्वात् । गुणविशेषनिषेधे सति सामान्यनिषेधस्य तत्पर्यवसायित्वाच्च ॥१७॥

---

[1] परप्राप्ति—त, परप्राप्तः—द.

[ ब्रह्मणि स्थानसम्बन्धायत्तदोषभाक्त्वाभावस्य, शास्त्रस्थजलबिम्बितसूर्योपमासङ्गतिः ]

## ३३२. अत एव चोपमा सूर्यकादिवत् ॥ ३–२–१८ ॥ (सि)

यतो नानाविधेषु स्थानेषु [1]स्थितस्याऽपि[1] परस्य ब्रह्मणः, न तत्प्रयुक्तदोषभाक्त्वम्; अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् [2]परमात्मा[2] तत्र तत्रावस्थितोऽपि निर्दोष इति, शास्त्रेषु उपमा क्रियते—

'आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥' (याज्ञ.स्मृ.पा. 3–144)
'एक एव हि! भूतात्मा [3]भूते भूते[3] व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' (अमृ.उ. 12)

इत्यादिषु ॥ १८ ॥

[ जलसूर्यदृष्टान्तवैषम्यशङ्का ]

अत्र चोदयति—

## ३३३. अम्बुवदग्रहणात् तु न तथात्वम् ॥ ३–२–१९ ॥ (पू)

'तु' शब्दः चोद्यं द्योतयति। 'अम्बुवत्' इति सप्तम्यन्ताद् वतिः। अम्बु-दर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते; [4]न तथा[4] पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते।

---

आत्मैक इति। एकस्वभाव इत्यर्थः ॥ १८ ॥

---

[सूत्रार्थः। अत एव च—ब्रह्मणः स्थानकृतदोषभाक्त्वाभावादेव, सूर्यकादिवत् उपमा—जलबिम्बिते सूर्यादिदृष्टान्तसाङ्गत्यम् ॥]

'सर्वत्रोभयलिङ्गत्वात् जलसूर्योपमा कृता। ब्रह्मणः शास्त्रतश्चेति जलाधारेष्विवांशुमान् ॥ (ब्र.प.332)

[सूत्रार्थः। अम्बुवत्....(सूर्यादेः) जले इव, अग्रहणात्—ब्रह्मणः पृथिव्यादौ भ्रमात्मक-ग्रहणाभावात्, न तु तथात्वम्—नैव दृष्टान्तभूतजलसूर्यसाम्यम् ॥]

'वस्त्वभावेऽप्यम्भसीवाऽग्रहणाद्ब्रह्मणः स्थितेः। सर्वेषु वस्तुषु ब्रह्म सदोषमिति शङ्कते ॥ (ब्र.प.333)

---

[1] अवस्थितस्याऽपि—द. [2] परमात्माऽपि—आ.
[3] जीवे जीवे—आ. [4] तथा न – द.

[1]अम्ब्वादिषु हि![1] सूर्यादयः, भ्रान्त्या तत्रस्था[2]इव[2]गृह्यन्ते ; न परमार्थतः तत्रस्थाः।
इह तु

'यः पृथिव्यां तिष्ठन्' (बृ.उ. 5-7-3)

'योऽप्सु तिष्ठन्' (बृ.उ. 5-7-4)

'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा. 5-7-22)

[3]इत्येवमादिना[3]परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते। अतः सूर्यादेः अम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गः, [4]तत्र तत्र[4] स्थित्यभावादेव। अतो न तथात्वम्—दार्ष्टान्तिकस्य[5]न[5]दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥

[आपादितस्य दृष्टान्तवैषम्यस्य परिहारः]

परिहरति—

## ३३४. वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ ३-२-२० ॥ (सि)

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परस्य ब्रह्मणः, स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धि ह्रासादिदोषभाक्त्वमात्रं, सूर्यादिदृष्टान्तेन निवर्त्यते।

कथमिदमवगम्यते?

---

न तथात्वमिति। पृथिव्यादिषु परमार्थतः स्थित्यभ्युपगमे, दार्ष्टान्तिकस्य परमात्मनः दृष्टान्ततुल्यत्वाभावात्, तुल्यत्वसिद्ध्यर्थं पृथिव्यदिषु स्थितेः अपरमार्थत्वमभ्युपेत्यमिति तात्पर्यम् ॥

निवर्त्यत इति। सर्वत्र स्थितेः अपरमार्थत्वे सति, आकाशदृष्टान्तो न घटते।

---

सूत्रार्थः। अन्तर्भावात् ब्रह्मणः पृथिव्यादिषु अन्तर्यामितया अवस्थानमात्रात्, शङ्क्यमानम्, वृद्धि-ह्रासभाक्त्वम्—तत्तद्वस्तुगतोपचयापचयभागित्वमेव (अत्र निवर्त्यम्), उभय-सामञ्जस्यात्—घटाकाश-जलाधारगतसूर्यरूपदृष्टान्तद्वयसाङ्गत्याय एवं वर्णनीयम्, दर्शनाच्च—विवक्षितांशमात्रे साम्यस्य 'सिंहो माणवकः' इत्यादौ उपलब्धेः ॥]

'स्थानतो ह्रास-वृद्ध्यादिभाक्त्वं चात्र निषिध्यते। आकाश-सूर्यदृष्टान्तद्वयाञ्जस्याच्च लोकतः॥'(ब्र.प. 334)

---

[1] अम्ब्वादिषु—थ. [2] इति—त.थ. [3] इत्यादिना—आ.थ.
[4] तत्र—त थ. [5] न तु—थ.

उभयसामञ्जस्यादेवम्—उभयदृष्टान्तसामञ्जस्यात् एवमिति निश्चीयते ।

'आकाशमेकं हि ! यथा घटादिषु पृथग्भवेत्' (याज्ञ. स्मृ. प्रा. 3-144)

'जलाधारेष्विवांशुमान्' (याज्ञ. स्मृ. प्रा. 3-144)

इति दोषवत्सु अनेकेषु वस्तुषु, वस्तुतः अवस्थितस्य आकाशस्य, वस्तुतः अनवस्थितस्य अंशुमतश्च [1]उभयस्य दृष्टान्त[1] [2]स्योपादानं[2] हि !, परमात्मनः पृथिव्यादिगतदोषभाक्त्व-निवर्तनमात्रे प्रतिपाद्ये, समञ्जसं भवति । घट-करकादिषु यथा वृद्धि-ह्रासभाक्षु पृथक् पृथक् संयुज्यमानमपि आकाशं, वृद्धि-ह्रासादिदोषैः न [3]स्पृश्यते[3] ; यथा च जलाधारेषु विषमेषु [4]दृश्यमानः[4] अंशुमान्, तद्गतवृद्धि-ह्रासादिभिः न स्पृश्यते ; तथा अयं परमात्मा, पृथिव्यादिषु [5]नानाकारेषु[5] अचेतनेषु [6]चेतनेषु च[6] स्थितः, तत्तद्गतवृद्धि-ह्रासादिदोषैः असंस्पृष्टः । सर्वत्र वर्तमानोऽपि एक एव अस्पृष्टदोषगन्धः [7]कल्याण-गुणा[7]कर एव ॥

[उभयसामञ्जस्यस्पष्टीकरणम्]

[8]एतदुक्तं[8] भवति—यथा—जलादिषु वस्तुतोऽनवस्थितस्य अंशुमतः, हेत्वभावात् जलादिदोषानभिष्वङ्गः ; तथा—पृथिव्यादिष्ववस्थितस्यापि परमात्मनः, दोषप्रत्यनीका-कारतया दोषहेत्वभावात्, न दोषसम्बन्धः—इति ॥

[दृष्टान्तस्य विवक्षितसाम्यमात्रे पर्यवसानम्]

दर्शनाच्च—। दृश्यते चैवं ; सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्यात् दृष्टान्तोपादानम्—[9]'सिंह इव[9]माणवकः' इत्यादौ । अतः, स्वभावतो निरस्त-निखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य, पृथिव्यादिस्थानतोऽपि न दोषसम्भवः ॥ २० ॥

---

पारमार्थ्ये तु जलसूर्यादिदृष्टान्तो न घटते । तस्मात् उभयदृष्टान्तानुयायी आकारः वृद्धि-ह्रासादिदोषभावः स्वीकार्यः इत्यर्थः ॥

**एतदिति** । दृष्टान्तद्वयेऽपि, देश-काल-स्वभाव संनिकर्षत्रयसमुदायाभावः, दोषास्पर्शे अनुयायी हेतुः । संनिकर्षत्रयसमुदायः दोषसंस्पर्शहेतुः । देशविप्रकर्षस्योदाहरणं जलसूर्यादि । स्वभावविप्रकर्षस्य आकाशः । देशविप्रकर्षवत् स्वभावविप्रकर्षोऽपि दोषास्पर्शहेतुरिति दर्शयितुं दृष्टान्तद्वयोपादानमित्यर्थः ॥ २० ॥

---

1 उभयदृष्टान्त—त. थ. 2 स्वापादनं—थ. 3 संस्पृश्यते—न.

4 दृश्यमानोऽपि—द. 5 नानाप्रकारेषु—द. 6 चेतनेषु—थ.

7 कल्याणा—आ. 8 तद्युक्तं— . 9 सिंहो—अ.

[ 'नेति नेति' वाक्याद्ब्रह्मणि सर्वविशेषनिषेधादुभयलिङ्गत्वासिद्धिशङ्का-तत्परिहारौ ]

अथ स्यात्—

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च ' (बृ.उ. 4-3-1)

इति प्रकृत्य, समस्तं स्थूल-सूक्ष्मरूपं प्रपञ्चं, ब्रह्मणो रूपत्वेन परामृश्य,

'तस्य ह वैतस्य पुरुषस्य रूपं यथा [1]माहारजनं[1] वासः' (बृ.उ. 4-3-6)

इत्यादिना आकारविशेषं चाऽभिधाय,

'अथाऽत आदेशो नेति नेति । न ह्येतस्मादिति नेत्यन्यत् परमस्ति' (बृ.उ.4-3-6)

इति, सर्वं प्रकृतं ब्रह्मणः प्रकारम् 'इति' शब्देन परामृश्य, तत् सर्वं प्रतिषिध्य, 'सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म; विशेषास्तु, एवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिताः' इति दर्शयति । अतः, कथम् उभयलिङ्गत्वं ब्रह्मणः ?—इति; [2]अत्राह[2]—

## ३३५. प्रकृतैतावत्त्वं हि! प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३-२-२१ ॥ (सि)

नैतदुपपद्यते—यत् ब्रह्मणः प्रकृतविशेषवत्त्वं, 'नेति नेति' इति प्रतिषिध्यते—इति । तथा सति, [3]भ्रान्ति[3]जल्पितायमानत्वात् । न हि ! ब्रह्मणो [4]विशेष[4]णतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेन उपदिश्य, पुनः तदेव अनुन्मत्तः [5]प्रतिषेधति[5] ।

यद्यपि, निर्दिश्यमानेषु [6]केचन पदार्थाः[6] प्रमाणान्तरप्रसिद्धाः ; तथापि, तेषां ब्रह्मणः प्रकारत्वम्, [7]अप्रज्ञातमेव[7] । इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं च [8]अज्ञातम्[8] । अतः तेषामनुवादासम्भवात् अत्रैवोपदिश्यन्ते । अतः तन्निषेधो नोपपद्यते । यस्मादेवं,

---

महारजनम्—कुसुम्भः । 'अतः....नोपपद्यते' इत्यन्तेन, सूत्रस्थ 'हि' शब्दाभि-

---

[सूत्रार्थः । प्रकृतैतावत्त्वं हि—पूर्वप्रक्रान्तमूर्तामूर्ताख्यप्रकारवत्तामात्ररूपाम् इयत्तामेव खलु, प्रतिषेधति—'नेति नेती'ति श्रुतिः (ब्रह्मणः) निरस्यति, (यतो हि) ततः—प्रकृतापेक्षया, भूयः—(ब्रह्म) अधिकगुणयोगितया, ब्रवीति च— उक्तश्रुतिवाक्यशेषः 'न ह्येतस्मादिति' इत्यादिर्भागः स्फुटं प्रतिपादयत्यपि ॥]

'प्रकृतैतावत्त्वमात्रं नेति नेति निषिध्यते । ततोऽधिकगुणाढ्यत्ववचनाद् ब्रह्मणस्त्विह ॥' (ब्र.प. 335)

---

[1] महारजनं—अ.  [2] तत्राह—द.  [3] भ्रान्त—अ.  [4] विशेष—द.
[5] प्रतिषेधयति—थ.  [6] केचन—व.  [7] अप्रतिज्ञातमेव—न.  [8] अप्रज्ञातम्—द. न.

तस्मात्, प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधति, इदं वाक्यम्। [1]ये[1] ब्रह्मणो विशेषाः प्रकृताः; तद्विशिष्टतया [2]ब्रह्मणः प्रतीयमाना[2]इयत्ता, 'नेति नेति' इति प्रतिषिध्यते। नेति नेति—नैवं नैवम्। उक्तप्रकार[3]मात्रविशिष्टं[3] न भवति ब्रह्म। उक्तप्रकार-विशिष्टतया या ब्रह्मण इयत्ता प्रकृता, सा अत्र 'इति' शब्देन परामृश्यते—इत्यर्थः। यतश्च निषेधानन्तरं, ब्रह्मणः भूयो गुणजातं [4]ब्रवीति[4]; अतश्च प्रकृत[5]विशेषणयोगित्व-मात्रं[5] ब्रह्मणः प्रतिषेधति। ब्रवीति हि! भूयोगुणजातम्;

'न ह्येतस्मादिति नेत्यन्यत् परमस्ति। अथ नामधेयं सत्यस्य सत्यमिति।

प्राणा वै सत्यम्, तेषामेष सत्यम्' (बृ.उ. 4-3-6)

[ उक्तवाक्यशेषस्यार्थविशदीकरणम् ]

इति।

अयमर्थः—[6]'इति न' इति[6] यद् ब्रह्म प्रतिपादितं, तस्मादेतस्मात् अन्यद्वस्तु परं न ह्यस्ति। ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्च उत्कृष्टं नास्तीत्यर्थः। तस्य च ब्रह्मणः, 'सत्यस्य सत्यम्' इति नामधेयम्। तस्य च निर्वचनम्; [7]'प्राणावै[7] सत्यं, [8]तेषामेष[8] सत्यम्' इति। 'प्राण' शब्देन प्राणसाहचर्यात् जीवाः परामृश्यन्ते। [9]ते तावत्[9] सत्यम्; वियदादिवत् स्वरूपान्यथाभावरूपपरिणामाभावात्। [10]तेषामेष[10]सत्यम्—तेभ्योऽपि एष परमपुरुषः सत्यम्; जीवानां कर्मानुगुण्येन ज्ञानसङ्कोच-[11]विकासौ[11] विद्येते; परमपुरुषस्य तु अपहतपाप्मनः, तौ न विद्येते। अतः तेभ्योऽपि एषः सत्यम्॥

---

प्रेतार्थ उक्तः। नैवं नैवमिति। उक्तप्रकारमात्रविशिष्टतया ब्रह्मण इयत्ता कृता। साऽपि प्रकार एवेति, सा 'इति' शब्देन परामृश्यते इत्यर्थः॥

अनन्तर शब्देन [सूत्रस्थः] 'ततः' शब्दो व्याख्यातः। 'भूयः' शब्देन भूयिष्ठत्वमुच्यते।

अयमर्थः इत्यारम्भः, 'न ह्येतस्मात् इत्यत्र निषेधपरत्वं प्रतीयते; न गुणपरत्वम्, स्वरूपस्य सत्यत्वमात्रं चेति शङ्काव्यावृत्त्यर्थम्। स्वरूपतो गुणतश्चोत्कृष्टमित्यनेन,

---

1 ये तु—न. 2 प्रतीयमाना—द 3 मात्रं—थ.
4 प्रब्रवीति—द. 5 विशेषयोगित्वमात्रं—वा. विशेषणमात्रयोगित्वं—द.
6 इति नेति नेति—वा. 7 प्राणा वाव वै—त. थ. 8 तेषामेव—थ.
9 तेवाव—त. थ. 10 तेषामेष—थ. 11 विकाशौ—वा.

[ सूत्रार्थोपसंहारः ]

[1]अतश्चैवं[1] वाक्यशेषोदित[2]गुणजात[2]योगात्, 'नेति नेति' इति, ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते; अपि तु पूर्वप्रकृतेयत्तामात्रम्। अतः उभयलिङ्गमेव परं ब्रह्म ॥ २१ ॥

[ ब्रह्म-तद्गुणानां प्रमाणान्तरागोचरता ]

ब्रह्मणः प्रमाणान्तरागोचरत्वेन, तत्सम्बन्धितया मूर्तामूर्तादिरूपानुवादेन तन्निषेधासंभवात्, प्रकृतेयत्ताप्रतिषेध उक्तः। तदेव प्रमाणान्तरागोचरत्वं द्रढयति—

## ३३६. तदव्यक्तमाह हि! ॥ ३-२-२२ ॥ (सि)

तत् ब्रह्म, प्रमाणान्तरेण [3]नैव[3] व्यज्यते। आह हि शास्त्रम्—

'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' (तै.ना.उ. 1–10)

'न चक्षुषा गृह्यते नाऽपि वाचा' (मुण्ड. उ. 3–1–8)

इत्यादि ॥ २२ ॥

[निदिध्यासनार्थं ब्रह्मोपदेशपरे वाक्ये अनुवादकत्वायोगः]

हेत्वन्तरं चाह—

## ३३७. अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३–२–२३ ॥ (सि)

---

अचेतन-जीव व्यावृत्तिः ॥ २१ ॥

अव्यक्त शब्दं प्रधानपरत्वव्यावृत्त्यर्थं व्याचष्टे ॥ २२ ॥

---

[सूत्रार्थः। तत्—ब्रह्मस्वरूपम्, अव्यक्तम्—प्रमाणान्तरागम्यमिति, आह हि—शास्त्रं वदति खलु! ॥]

'ब्रह्मस्वरूपं केनाऽपि माणेन न गृह्यते। एवं न पश्यतीत्यादिश्रुतिराह हि काचन ॥' (ब्र.प. 336)

[सूत्रार्थः। अपि—अपि च, संराधने—संप्रीतिजनके उपासने कृते एव ब्रह्मणः साक्षात्कारो भवतीति, प्रत्य....भ्याम्—श्रुतिस्मृतिभ्यामवगम्यते ॥]

'एकेन ध्यानयोगेन गृह्यते परमः पुमान्। 'यमेवैष' इति श्रुत्या तथा स्मृत्या च गम्यते ॥' (ब्र.प. 337)

---

[1] ततश्चैवं—न.    [2] गुणव्रात—घ.    [3] न—अ.

अपि च, संराधने—सम्यक्प्रीणने, भक्तिरूपापन्ने निदिध्यासने एव, अस्य साक्षात्कारः ; नाऽन्यत्र—इति श्रुति-स्मृतिभ्यामवगम्यते—

'नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।।' (मुण्ड.उ. 3-2-3)
'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं 'पश्यते[1] निष्कलं ध्यायमानः ।'
(मुण्ड.उ. 3-1-8)

इति श्रुतिः । स्मृतिरपि—

'नाऽहं वेदैर्न तपसा न दानेन न चेज्यया ।' (भ.गी. 11-53)
'भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।।' (भ.गी. 11-54)

इति । 'भक्तिरूपापन्नमेवोपासनं—संराधनं [2]तत्प्रीणनम्[2]' इति पूर्वमेवोक्तम् । अतः निदिध्यासनाय ब्रह्मस्वरूप[3]मुपदिशत्[3], 'द्वे वाव ब्रह्मणः' (बृ.उ. 4-3-1) इत्यादिशास्त्रं, ब्रह्मणः मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नाऽनुवदितुं क्षमम् ।। २३ ।।

[ब्रह्मणः मूर्तामूर्तादिवैशिष्ट्यस्य वामदेवादियोगिप्रत्यक्षगोचरतया, निषेधस्य प्रकृतैतावन्मात्रविषयता]

## ३३८. प्रकाशादिवच्चाऽवैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ।।३-२-२४।।

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति, न मूर्तामूर्तादिविशिष्टत्वम् ; यतः साक्षात्कृत-परब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवत्—ज्ञानानन्दादिस्वरूपवत्, मूर्तामूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते—

---

भक्तिरूपेति । साक्षात्कारः, भक्त्या अस्तु [नाम] ; ततः संराधनेन साक्षात्कारस्य किं [भवेत् ?] इत्यत्र [समाधानायेदम् ।] [भक्तिरूपतां प्राप्तं निदिध्यासनमेव संराधनमिति तत् साक्षात्कारहेतुभूतमेवेति] ।। २३ ।।

---

[सूत्रार्थः । प्रकाशादिवच्च—(वामदेवादिसाक्षात्कारगोचरतायाः) ज्ञानानन्दादिस्वरूपविषयकत्वादेव च, अवैशेष्यम्—ब्रह्मस्वरूपगतमूर्तामूर्तादिजगद्विषयकत्वेऽपि अविशेषः, प्रकाशश्च—ब्रह्मतद्गुणादिसाक्षात्कारोऽपि, कर्मण्यभ्यासात्—ध्यानक्रियायां नैरन्तर्ययुक्तादसकृदावर्तनाद्भवति।।]

'ध्यानकर्मणि चाऽभ्यासाद्दर्शनं चोपजायते। ज्ञानानन्दाद्यवैशेष्याद्विभूतीनां च केषुचित् ॥' (ब्र.प. 338)

---

[1] पश्यति—श. [2] तस्य प्रीणनम्—श. [3] मुपादिशत्—न.

'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च' (बृ उ. 3-4-10) इत्यादि। ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च, तेषां वामदेवादीनां संराधनात्मके कर्मणि अभ्यासादुपलभ्यते। तद्वच्च, अभ्यस्तसंराधनानां तेषां, मूर्तामूर्तादिविशिष्टत्वमपि अविशेषेण प्रतीयते इत्यर्थः ॥२४॥

[ब्रह्मणः कल्याणगुणवत्तानिर्णयेन उभयलिङ्गत्वोपसंहारः]

उक्तं ब्रह्मण उभयलिङ्गत्वम् उपसंहरति—

३३९. **अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३-२-२५ ॥** (सि)

अतः-उक्तैर्हेतुभिः, ब्रह्मणः अनन्तेन कल्याणगुणेन विशिष्टत्वं सिद्धम्। तथा हि सति, उभयलिङ्गं ब्रह्म उपपन्नं भवति ॥ २५ ॥

इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

—o—

---

**ब्रह्मस्वरूपभूतेति।** उपासनेन साक्षात्कृतत्वादेव हि! प्रकाशानन्दादेः पारमार्थ्यम्; न तु भ्रान्तिसिद्धत्वम्। तद्वत् मूर्तामूर्तप्रपञ्चविशिष्टतादेरपि उपासनेन साक्षात्कृतत्वात् पारमार्थ्यम् इत्यर्थः ॥ २४ ॥

**अत इति।** अस्मिन्नधिकरणे अवान्तरशङ्का तत्परिहारबाहुल्यात्, साध्यप्रतिपत्ति-व्याकुलता स्यादिति परमसाध्योपसंहारेण तन्निवृत्त्यर्थं सूत्रम् [इति] अभिप्रायः। **तथा हि सतीति।** इयत्तानिषेधपरत्वे सति, न केवलम् उभयलिङ्गत्वाबाधः; अपि तु उभयलिङ्गत्व-मुपपादितं भवति हीत्यर्थः। ये तु-उभयलिङ्गत्वं पूर्वपक्षीकुर्वन्ति, तन्मते इदं सूत्रं न घटते; उभयलिङ्गत्वसमर्थनेनोपसंहारात् ॥ २५ ॥

[सूत्राणि— १ न स्थानतो. २ अपि चैव. ३ अरूपव. ४ प्रकाशव. ५ आह च
६ दर्शयति. ७ अत एव. ८ अम्बुवद. ९ वृद्धिह्रास. १० प्रकृतैता.
११ तदव्यक्त. १२ अपि संरा. १३ प्रकाशादि. १४ अतोनन्ते.

इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

—o—

---

[सूत्रार्थः। अतः-एतावता उक्तैर्हेतुभिः, **अनन्तेन**-असङ्ख्यातेन कल्याणगुणजातेन योगः ब्रह्मणो निश्चितः, **तथाहि**!—कल्याणगुणजातवत्त्वे सिद्धे सति हि।, **लिङ्गम्**—परं ब्रह्म उभयलिङ्गमित्येतत् उपपत्तिमद्भवति ॥]

['अतोऽनन्तेन कल्याणगुणजातेन योगतः। परस्य स्वप्रकाशस्योभयं लिङ्गं समञ्जसम्' (ब.प.039)]

(80) अहिकुण्डलाधिकरणम् ॥ ३-२-६ ॥ (सू. 26-29)

[ अधिकरणार्थः—अचिद्-ब्रह्मणोरपि चिद्-ब्रह्मणोरिव अंशांशिभावः ]

## ३४०. उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३-२-२६ ॥ (पू)

[ अवान्तरसङ्गतिप्रदर्शनम् विचारणीयो विषयश्च]

मूर्तामूर्तात्मकस्य 'अचित्प्रपञ्चस्य'[1] ब्रह्मणो रूपत्वम्,

'द्वे वाव ब्रह्मणो रूपे' (बृ.उ. 4-3-1)

[2]इत्यादिश्यते[2]।

'अथात आदेशो नेति नेति' (बृ.उ. 4-3-6)

इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते।

'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' (बृ.उ. 4-3-6)

इति, 'ब्रह्मणोऽन्यत् उत्कृष्टं [3]नाऽस्ति[3]'-इति प्रतिपादितम्। तदुपपादनाय,

'अथ नामधेयं सत्यस्य सत्यमिति, प्राणा वै सत्यं तेषामेष सत्यम्'(बृ.उ. 4-3-6)

इति, प्राणशब्दनिर्दिष्टेभ्यः चेतनेभ्योऽपि एष सत्यमिति, कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तम्। तथा

'प्रधान-क्षेत्रज्ञपतिर्गुणेशः' (श्वे.उ.6-16)

---

अचित्प्रपञ्चस्येति। चिदचिदात्मकप्रपञ्चकथने अचित्प्रपञ्चोऽपि कथितः स्यादित्यर्थः। न तु अन्ययोगव्यवच्छेदः ; सङ्गत्युपयोगित्वेन अचित्प्रपञ्चोपादानं कृतम्। तथा प्रधानेति। [अनेन] रूपत्वं विवृतं भवति ; ईश्वरत्वादिकथनात् नियाम्यत्वलक्षणविभूतित्वमेव रूपत्वमिति, रूपत्व-

---

[सूत्रार्थः। अहिकुण्डलम्—सर्पस्यैव सतः वर्तुलत्वात्मककुण्डलितावस्थेन (ब्रह्मणः अचिद्भावः); उभयव्यपदेशात् तु—श्रुतिषु जगद्-ब्रह्मणोर्विषये नानात्वस्य एकत्वस्येति उभयस्याऽपि स्पष्टं प्रतिपादनात्॥]

'जगतो ब्रह्मणा साकं द्वैताद्वैतोपदेशतः। पृथक्त्वं चास्य चैकत्वमहिकुण्डलवद् भवेत्॥' (ब्र.प. 340)

---

[1] चित्प्रपञ्चस्य—द.  [2] इत्यादिनोपदिश्यते—आ.  [3] नह्यस्ति—घ.ङ.वा.

'पतिं विश्वस्याऽऽत्मेश्वरम्' (तै.ना.उ. 11-3)

'नित्यो नित्यानां चेतनश्चेतनानाम्' (श्वे.उ. 6-13)

इत्यादिश्रुतेश्च, अयमर्थोऽवगम्यते। तस्य अचिद्वस्तुनः, ब्रह्मरूपत्वप्रकारः इदानीं चिन्त्यते, ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्—

[विचारोपयोगी संशयः]

किम् अस्य अचिद्वस्तुनः ब्रह्मरूपत्वम्, अहिकुण्डलन्यायेन? उत प्रभा-प्रभावतोरिव एकजातियोगेन? उत जीवस्येव विशेषण-विशेष्यतया अंशांशिभावेन?—इति॥

[पौनरुक्त्यशङ्कानिरासः]

इह स्थाप्यमानं विशेषण-विशेष्यभावम् अङ्गीकृत्य;

'प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्' (ब्र.सू. 1-4-23)

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू. 2-1-15)

इत्यत्र, सूक्ष्म[1]चिदचिद्वस्तु[1]विशिष्टाद् ब्रह्मणः स्थूलचिदचिद्विशिष्टस्य उत्पत्तिः, अनन्यत्वं चोक्तम्॥

[तदृष्टान्तः पूर्वः पक्षः]

किं युक्तम्? अहिकुण्डलवत्—इति।

कुतः? उभयव्यपदेशात्।

'ब्रह्मैवेदं सर्वम्' (नृसिं.उ.ता. 7-3)? (बृ.उ. 4-5-1)?

'आत्मैवेदं सर्वम्' (छां.उ. 7-25-2)

इति तादात्म्यव्यपदेशात्;

---

विशदीकारात्। **अहिकुण्डलन्यायेन**—एकद्रव्यावस्थाविशेषेणेत्यर्थः। **प्रभा-प्रभावद्** दृष्टान्तोपादानं, गुण-प्रधानभावाभिप्रायेण। **जीवस्येवेति**। 'अंशो नाने'त्यत्र अंशांशिभावः, जीव-ब्रह्मणोः; अत्र अचिद्ब्रह्मणोः इति भिदेत्यभिप्रायः।

**इह स्थाप्यमानमिति** पौनरुक्त्यशङ्कानिरासार्थम्।

**उभयव्यपदेशात्** किम् अचिद्वस्तुनो ब्रह्मस्वरूपत्वम्, अहि-कुण्डलन्यायेन? उत

---

[1] चिदचिद्—थ.

'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनु[1]प्रविश्य[1]' (छां.उ. 6-3-2) इत्यादिभेदव्यपदेशाच्च ; अहेः कुण्डलभाव-[2]ऋजुभाववत्[2], तस्यैव ब्रह्मणः संस्थानविशेषा एव अचिद्वस्तूनि ॥ २६ ॥

[ पूर्वपक्षान्तरसूत्रम् ]

## ३४१. प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३-२-२७ ॥ (पू)

'वा' शब्दः [3]पक्ष[3]व्यावृत्त्यर्थः । ब्रह्मस्वरूपस्यैव अचिद्रूपेणाऽवस्थाने भेदश्रुतयः, ब्रह्मणः अपरिणामित्ववादिन्योऽपि बाधिता भवेयुः । [4]अतः[4], यथा तेजस्त्वेन प्रभा-[5]तदाश्रय[5]योर्भिन्नयोरपि तादात्म्यम् ; एवम् अचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः ॥ २७ ॥

---

प्रभा-तदाश्रययोरिव एकजातियोगेन ? उत विशेषण-विशेष्यभावरूपेण अंशांशित्वेन ?—इति । 'महानज आत्मा' इत्यादिषु, ब्रह्मणि अचिद्धर्मप्रतिषेधः, कृत्स्नोपादानतादिप्रतिपादनं च, विशेषण-विशेष्यभावेन ब्रह्मरूपत्वं प्रपञ्चस्य अवगमयति ? न ?—इति ॥

न चेत् ! पूर्वोक्तपक्षद्वयसिद्धिः । अवगमयति चेत् ! तृतीयपक्षसिद्धिः ।

[अहेरिति । कुण्डलभावः, सृष्टौ । ऋजुभावः, प्रकृतिरूपतायाम् ।

(भा. द.)] ॥ २६-२७ ॥

---

[सूत्रार्थः । तेजस्त्वात् -तेजस्त्वाख्यैकजातियोगात्, प्रकाशाश्रयवद्वा—प्रभातद्वतोरिव वा, ब्रह्मस्वरूपैकजातियोगतः जगद् ब्रह्मणोः भेदसहं तादात्म्यम् ॥]

'प्रभायास्तद्वतश्चाऽपि तेजस्त्वेन यथैकता । प्रपञ्च-ब्रह्मणोस्तद्वदिति केषांचिदाशयः ॥' (ब्र. प. 341)

---

[1] प्रविश्य नामरूपे व्याकरवाणि—वा.

[2] रज्जुभाववत्—अ. आ.

[3] पक्षद्वय—न.

[4] यतः—द.

[5] तदाश्रयभिन्न—आ. ख. ग. छ. ज

[ सिद्धान्तसूत्रम् ]

## ३४२. पूर्ववद्वा ॥ ३-२-२८ ॥ (सि)

'वा' शब्दः, पक्षद्वयव्यावृत्त्यर्थः। एकस्यैव द्रव्यस्य, अवस्थाविशेषयोगेऽपि, ब्रह्मस्वरूपस्यैव [1]अचिद्द्रव्यरूपत्वात्[1], उक्तदोषात् अनिर्मोक्षः।

अथ प्रभा-तदाश्रययोरिव अचिद्-ब्रह्मणोः ब्रह्म(त्व)?जातियोगमात्रम्! ; एवं तर्हि, अश्वत्व-गोत्ववत् ब्रह्माऽपि ईश्वरे चिदचिद्वस्तुनोश्च अनुवर्तमानं सामान्यमिति, सकलश्रुतिस्मृतिव्यवहारविरोधः। पूर्ववदेव—

'अंशो नानाव्यपदेशात्' (ब्र·सू· 2-3-42)

'प्रकाशादिवत्तु नैवं परः' (ब्र·सू· 2-3-45)

इति जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेन, अचिद्वस्तुनो ब्रह्मांशत्वम्।

[ अंशांशिनोरभेदस्य मुख्यता ]

विशिष्टवस्त्वेकदेशत्वेन अभेदव्यवहारो मुख्यः। विशेषण-विशेष्ययोः स्वरूप-

---

**पूर्ववत्** इत्युक्ते, प्रथमपक्षपरिग्रहशङ्का स्यादिति, तद्व्यावृत्त्यर्थं, **पक्षद्वयव्यावृत्त्यर्थः**, इत्युक्तम्। **उक्तदोषात्**—अपरिणामित्वश्रुतिबाधादित्यर्थः।

**अथेत्यादि**। चिदचिदीश्वरेषु ब्रह्मणि च ब्रह्मत्वं नाम जातिः किम् अनुवर्तते? उत ब्रह्मैव जातिः चिदचिदीश्वरेषु?—इति विकल्पः। प्रथमे, ईश्वरवाचिपदैः जगत्सामानाधिकरण्यं न स्यात्। जातिवाचिपदैर्हि! सामानाधिकरण्यम्; न व्यक्तिवाचिभिः। न हि 'खण्डो गौः' इतिवत्, 'खण्डो मुण्डः' इति सामानाधिकरण्यम्। द्वितीये, जगत्कारणत्व-तदाधारत्व-सर्वज्ञत्वादि-गुणाश्रयत्वादि नोपपद्यते इत्यर्थः। **सकल...विरोध इति**। अनेन शिरोद्वयेऽपि दूषणद्वयं

---

[सूत्रार्थः। **पूर्ववद्वा**—पूर्वं ब्रह्मांशतया निर्णीते जीवे इवैव अचित्प्रपञ्चेऽपि ब्रह्मप्रतिभेदाभेदोभयव्यपदेशः, पृथक्पदार्थत्व-पृथक्सिद्ध्यनर्हत्वकृतः सङ्गत एव॥]

'एकजात्यादियोगाच्च नानयोरैक्यसंभवः। जीवस्येवाऽचेतनस्याऽपृथक्स्थित्यांऽशता हरेः॥' (ब्र.प. 342)

---

[1] अचिद्रूपत्वात्—घ.ङ. अचिद्द्रव्यस्वरूपत्वात्—श्रा.

स्वभावभेदेन [1]भेदव्यवहारो[1]मुख्यः। ब्रह्मणो निर्दोषत्वं [2]च रक्षितम्[2]। [3]तदेवं,[3] प्रकाश-जाति-गुण-शरीराणां मणि-व्यक्ति-गुण्यात्मनः प्रति, [4]अपृथक्सिद्धि[4]लक्षण-विशेषणतया यथा अंशत्वम्; तथा इह जीवस्य अचिद्वस्तुनश्च, ब्रह्मप्रति अंशत्वम् ॥२८॥

[ ब्रह्मणः अचिद्धर्मनिषेधस्य उक्तार्थसाधकता ]

## ३४३. प्रतिषेधाच्च ॥ ३–२–२९ ॥ (सि)

'सवा एष महानज आत्माऽजरोऽमरः' (बृ.उ. 6-4-25)

'नाऽस्य जरयैतज्जीर्यति' (छां.उ. 8-1-5)

इत्यादिभिः, ब्रह्मणः अचिद्धर्मप्रतिषेधाच्च, विशेषण-विशेष्यत्वेनैव अंशांशिभावः—इत्यर्थः।

[विशिष्टाद्वैतेनोक्तार्थोपसंहारः]

अतः, 'सूक्ष्मचिदचि[5]द्वस्तुविशिष्टं[5] कारणभूतं ब्रह्म; स्थूल[6]चिदचिद्वस्तुविशिष्टं[6] कार्यभूतं ब्रह्म' इति, 'कारणात् कार्यस्य अनन्यत्वं; कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञातता' इत्यादि सर्वमुपपन्नम्। [7]ब्रह्मणो निर्दोषत्वं च[7] रक्षितम्। ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन च, उभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥

इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

—०—

विवक्षितम्। ब्रह्मजातियोगेति वा ब्रह्मत्वजातीति वा पाठो निरीक्ष्यः ॥ २८ ॥

अतः सूक्ष्मेति। स्वरूपपरिणामाभावे, कथं कारणात् कार्यस्याऽनन्यत्वम् इत्यादय उपपद्यन्ते?—[इति शङ्काया नावकाशः इत्याशयः] इत्यादि सर्वम् इत्यत्र 'आदि' शब्देन समानाधिकरणशब्दादिर्विवक्षितः ॥ २९ ॥

[सूत्राणि—१ उभय, २ प्रकाशा, ३ पूर्ववद्वा, ४ प्रतिषेधा]

इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

—०—

[सूत्रार्थः। प्रतिषेधाच्च—जरा-मरणाद्यचेतनधर्माणां ब्रह्मण्यविद्यमानत्वस्य श्रुत्या ज्ञापनादपि, ब्रह्मणो जगदभेदो विशेषणत्वकृतः न दोषावहः ॥ ]

'आत्माऽजरोऽमृत इति ह्यचिद्धर्मनिषेधतः। अपृथक्स्थितियोगेन तयोरंशांशिकल्पना ॥ (ब्र प.343)

[1] भेदव्यवहारोऽपि—वा. [2] रक्षितम्—न. [3] तदेव—अ.

[4] अपृथक्सिद्ध—त. पृथक्सिद्ध्यनर्ह—वा.

[5] द्विशिष्टं—थ. [6] चिदचिद्विशिष्टं—थ. [7] निर्दोषत्वं च ब्रह्मणो—त. थ.

(81) पराधिकरणम् ॥ ३-२-७ ॥ (सू. 30-36)

[ अधिकरणार्थः—सर्वस्मात्परं परं ब्रह्मैव ; न तु ततोऽपि परं किंचिदस्ति-इति निर्णयः ]

## ३४४. परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३-२-३०॥ (पू)

[ अवान्तरसङ्गतिः ]

**इदानीम्—अस्मात् परस्मात् जगन्निमित्तोपादानरूपपरमकारणात्, परब्रह्मणः परमपि किंचित् तत्त्वमस्तीति, कैश्चित् हेत्वाभासैः आशङ्क्य, निराक्रियते ; अस्य उपास्यस्य निर्दोषत्वानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वस्थेम्ने ।**

[ अधिकरणारम्भार्था शङ्का ]

**[1]तत्रेयमाशङ्का[1]—यदिदं परं ब्रह्म उभयलिङ्गम्; एतस्मात् निखिलजगत्कारणात् परमपि, किञ्चित्तत्त्वमस्ति ।**

**कथम्?**

---

अस्मादिति. [सूत्रस्थस्य] 'अतः' शब्दस्य व्याख्यानम् । **परस्मादिति**, 'न स्थानतोऽपि परस्ये'ति सूत्रे 'पर' शब्दनिर्दिष्टः [अत्र] प्रकृतः इति ज्ञापयितुम् । **परब्रह्मणः** इत्यत्र 'पर' शब्दः, परमकारणत्वप्रयुक्तोत्कर्षवाची । यद्वा—'परस्मा'दिति पदेन, प्राप्यतया परत्वं विवक्षितम् । 'परब्रह्मणः' इत्यत्र परत्वं, स्वकार्यापेक्षया । **परमकारणादिति**. कारणान्तर-राहित्यम् । **निर्दोषत्वा....स्थेम्ने**—अस्य उपास्यस्य उभयलिङ्गत्वस्थेम्ने इत्यर्थः । अन्यथा प्राप्यत्व-तदुपयोगिभोग्यगुणजातवैकल्ये सति, न ह्युभयलिङ्गत्वपौष्कल्यसिद्धिरिति भावः ।

---

[सूत्रार्थः । **अतः**—परमकारणतया निर्णीतात् परब्रह्मणोऽपेक्षया, **परम्**—उत्कृष्टं किंचिदन्यत्तत्त्वमस्तीति गम्यते, **सेतून्मा .... शेभ्यः**—'एतं सेतु'मिति अस्य तरितव्यत्वेन, 'चतुष्पाद्ब्रह्म' इति, अस्य पादचतुष्टयपरिमितत्वेन, 'अमृतस्यैष सेतु'रिति, प्राप्यममृतं प्रति अस्य प्रापकत्वरूपसम्बन्धवत्तया, 'ततो यदुत्तरत'मिति, एतदपेक्षया उत्कृष्टेऽन्यस्मिन् भेदस्य च व्यपदेशात् ज्ञापकात् ।]

'सेतून्मानाप्तिसम्बन्धभेदानां व्यपदेशतः । ब्रह्मणः परमेव स्यात् प्राप्यं पूर्णं तु कूलवत् ॥ (ब प.344)

---

[1] अत्रेयमाशङ्का—वा. अत्रेयं शङ्का—न.

'अथ य आत्मा स सेतुर्विधृतिः' (छां.उ. 8-4-1)

इति, अस्य परस्य सेतुत्वव्यपदेशात् । 'सेतु'शब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेः, इतोऽन्यत् अनेन 'प्राप्तव्यमस्ति इति'गम्यते । तथा,

'एतं सेतुं तीर्त्वा [2]अन्धः सन् अनन्धो[2] भवति' (छां.उ. 8-4-2)

इति तरितव्यता च अस्याभिधीयते । अतश्च अन्यत् प्राप्यमस्ति ।

उन्मानव्यपदेशाच्च । उन्मितं—परिमितम् इदं परं ब्रह्म ;

'चतुष्पाद् ब्रह्म',

'षोडशकलम्'

इति, उन्मानव्यपदेशात् । स चाऽयम् उन्मानव्यपदेशः ; तेन सेतुना प्राप्यस्य अनुन्मितस्य, [3]अस्तितां[3] द्योतयति ।

तथा सम्बन्धव्यपदेशश्च—सेतु-सेतुमतोः प्रापकत्व-प्राप्यत्वलक्षणो दृश्यते ;

'अमृतस्य परं सेतुं दग्धेन्धनमिवाऽनलम्' (श्वे.उ. 6-19)

'अमृतस्यैष सेतुः' (मुण्ड.उ. 2-2-5)

---

पूर्वाधिकरणे, उभयलिङ्गत्वस्येम्ने निर्दोषत्वविषयनिरूपणं कृतम् । अत्र तु कल्याण-गुणास्पदत्वविषयनिरूपणमित्युक्तं भवति ॥

उभयलिङ्गात् ब्रह्मणः परं किमस्ति ? न ?—इति । अस्य परत्वे, सेतून्मानादिव्यपदेशाः उपपन्नाः ! न वा ? इति । अनुपपन्नत्वे, परान्तरमस्ति । उपपन्नत्वे, परान्तरं नास्तीति सिध्यति ॥

'सेतु'व्यपदेशः असङ्करकरत्वाभिप्रायः स्यात्—इति शङ्कायां, **तथेत्यादि** ॥

[चतुष्पात्—प्रकाशवान्, अन्तवान्, ज्योतिष्मान्, आयतनवान् इति चतुष्पात् । प्राची-प्रतीची-दक्षिणोदीचीनाम्न्यः, पृथिव्यन्तरिक्ष द्युलोक समुद्राख्याः, अग्नि-सूर्य चन्द्र विद्युदाख्याः, प्राण चक्षुः श्रोत्र मनआख्याश्च षोडशकलब्रह्मविद्यास्थाः कलाः] (भा.द.) (छां.उ. 4-4) ।

**सम्बन्धेति** । पूर्वं केवलसेतुशब्दः ; अत्र प्रतिसम्बन्धिनिर्देशसहितसेतुशब्दनिर्देशः ।

---

[1] प्राप्तव्यस्यास्तित्वं—वा. प्राप्तव्यं—आ.ड.च. [2] भय सन्नन्धो—पा.

[3] अस्तित्वं—वा.

इति । अतश्च परात्परमस्ति ।

भेदेन च, परात्परं व्यपदिश्यते ;

‘ परात्परं पुरुषमुपैति ’ (मुण्ड.उ. 3-2-5)

‘ परात्परं यन्महतो महान्तम् ’ ( तै.ना.उ. 1-5)

इति च । तथा,

‘ तेनेदं पूर्णं पुरुषेण सर्वम् ’ ( तै.ना.उ.　　) ( श्वे.उ. 3-9)

‘ ततो यदुत्तरतरं तदरूपमनामयम् ’ ( श्वे उ. 3-10)

इति । अतः एभ्यो हेतुभ्यः, परस्माद् ब्रह्मणः परमपि किञ्चिदस्तीति गम्यते—इति ॥३०॥

[सिद्धान्तारम्भः सेतुव्यपदेशोपपादनं च]

एवं प्राप्ते, अभिधीयते—

३४५. **सामान्यात्तु ॥ ३-२-३१ ॥** (सि)

‘ तु ’ शब्दः पक्षं व्यावर्तयति ।

यत्तावदुक्तम्—[1]सेतु[1]व्यपदेशात् परात्परमस्ति–इति ; तन्नोपपद्यते । न ह्ययमत्र किंचि[2]त्प्राप्यं[2]प्रति सेतुरुच्यते ;

‘ एषां लोकानामसम्भेदाय ’ (छां.उ. 8-4-1)

---

परात्—जगत्कारणात् श्रुतावपि पञ्चम्यन्तः परशब्दः कारणविषय इति पूर्वपक्षिहृदयम् । (श्रु.प्र.) ॥ ३० ॥

---

[सूत्रार्थः । सामान्यात्तु—परमात्मनि ‘सेतु’व्यपदेशः, विधृति-सर्वमर्यादासंरक्षणकृतसेतुसादृश्यादेव ; न तु तरितव्यत्वात् ॥]

सेतुशब्दस्ततो ह्यन्यत् सूचयेन्नात्र किंचन । सेतुसाम्याद्विधरणाच्छब्दोऽयं ब्रह्मवाचकः ॥ ’ (ब्र.प. 345)

---

[1] सेतुत्व—वा.　　[2] त्प्राप्तं—श्रा.

इति सेतुसामान्येन सर्वलोका[1]सङ्करकरत्व[1]श्रुतेः । 'सिनोति-बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातम् असङ्कीर्णम्' इति 'सेतु'रुच्यते ।

'एतं सेतुं तीर्त्वा' (छां.उ. 8-4-2)

इति तरतिश्च प्राप्ति[2]वचनः[2]; यथा—'[3]वेदान्तं[3] तरति'—इति ॥ ३१ ॥

[उन्मानव्यपदेशस्य उपासनानुकूल्यार्थता]

## ३४६. बुद्ध्यर्थः पादवत् ॥ ३-२-३२ ॥

योऽयं 'चतुष्पाद् ब्रह्म, षोडशकलम्'

'पादोऽस्य विश्वा भूतानि' (तै.आर. 3-12)

इति उन्मानव्यपदेशः, सः बुद्ध्यर्थः—; उपासनार्थः ।

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

इत्यादिभिः, जगत्कारणस्य ब्रह्मणः अपरिच्छिन्नत्वावगमात्, स्वतः उन्मितत्वासम्भवात् । जगत्कारणत्वं हि तस्यैव श्रूयते—

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

'सोऽकामयत । बहु स्यां प्रजायेयेति' (तै.उ.आन. 6-2)

इति । अतः यथा,

---

'सेतुसामान्येने'त्यत्र सामान्यशब्दो भावप्रधानः । सर्वलोकासङ्करकारित्वस्य 'एषां लोकानामसम्भेदाये'ति श्रुतौ साधारणधर्मत्वेन श्रवणात् तद्गुणयोगेन तत्र सेतुशब्दो गौणः इत्यर्थः (भा.प्र.) ॥ ३१ ॥

पादोऽस्येत्यत्र 'पाद' शब्दस्य अंशपरत्वेन स्वरूपोपदेशपरत्वात्, बुद्ध्यर्थत्वोक्तिः

---

[सूत्रार्थः । पादवत्—अखण्डेऽपि ब्रह्मणि वागादीनां पादत्वमिव, बुद्ध्यर्थः—'चतुष्पाद ब्रह्म' इति ब्रह्मणि परिमितत्वव्यपदेशोऽपि उपासनार्थः ॥]

'चतुष्पादादि चोन्मानं त्वत्र वाक्पादवद्भवेत् । उपासार्थमनन्तस्य नाऽतोऽन्यत् परमिष्यते ॥' (ब्र.प. 346)

---

[1] सङ्करत्व—अा. ग.   [2] वचनम्—अा.   [3] देवतां—द.

'वाक् पादः प्राणः पादः [1]चक्षुः पादः श्रोत्रं पादः[1]' (छां.उ. 3–18–2)

इत्यादिना ब्रह्मणो (मनसो) [2]वागादिपाद[2]व्यपदेशः, उपासनार्थः ; एवमयमपि ॥३२॥

[अनुन्मितस्य उन्मितत्वानुसन्धानसाङ्गत्यम् ]

स्वयमनुन्मितस्य, कथं उपासनार्थतयापि उन्मानसम्भवः ; ? तत्राऽऽह—

३४७. **स्थानविशेषात् प्रकाशादिवत्** ॥ ३–२–३३ ॥ (सि)

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्, तत्सम्बन्धितया उन्मितत्वानुसन्धानं संभवति ; यथा [3]प्रकाशाकाशादेः[3]विततस्य, वातायन-घटादिस्थानभेदैः परिच्छिद्याऽनुसन्धानसंभवः, इत्यर्थः ॥ ३३ ॥

[ब्रह्मण्येकस्मिन्नेव प्राप्य-प्रापकभावोपपत्त्या अन्यस्य परात्परस्याऽसिद्धिः]

३४८. **उपपत्तेश्च** ॥ ३-२-३४ ॥ (सि)

---

प्रौढवादेनेति द्रष्टव्यम् । **ब्रह्मणः....उपासनार्थ इति** । अध्यात्मब्रह्मप्रतीकस्य मनसः, अधिदैवतब्रह्मप्रतीकस्य आकाशस्य च वागादिपादत्वव्यपदेशो यथा (तयोः) वागादिपादत्वासम्भवात्, उपासनार्थः ; तथा ब्रह्मणोऽपि चतुष्पात्त्व-षोडशकलत्वाद्युपदेशः उपासनार्थः इति भावः (भा. प्र.) ॥ ३२ ॥

---

[सूत्रार्थः । **प्रकाशादिवत्**—सर्वत्र प्रसृतस्याऽपि प्रकाशाकाशादेः वातायनादिस्थानविशेषसम्बन्ध इव, **स्थानविशेषात्**—(अपरिच्छिन्नस्याऽपि ब्रह्मणः) वागादिस्थानविशेषसम्बन्धात् उन्मितत्वोपपत्तिः ॥ ]

'अवच्छिद्याऽनुसन्धानं तत्तत्स्थानविशेषतः । प्रकाशाकाशयोर्यद्वद्वातायन-घटादिषु ॥' (ब्र.प. 347)

[सूत्रार्थः । **उपपत्तेश्च**—प्राप्यस्य ब्रह्मणः स्वं प्रति प्रापकत्वस्य स्वस्मिन्नेव युक्तत्वादपि, सम्बन्धव्यपदेशस्य परान्तराबोधकत्वम् ॥ ]

'अमृतस्यैष सेतुःस्यात् परंब्रह्मामृतस्य च । स्वस्यैव प्राप्तये हेतुरतः सम्बन्धसंङ्गतिः ॥' (ब्र.प. 350)

---

[1] चक्षुः पादः—आ. चक्षुः पादो मनः पादः—अ. चक्षुष्पादः—वा.

[2] वागादिपदव्यपदेशः—आ. [3] प्रकाशादेः—अ.

यदुक्तम्—'अमृतस्यैष सेतुः' इति प्राप्य-प्रापकसम्बन्धव्यपदेशात् प्रापकात् [1]परं प्राप्यम[1]स्ति इति,

तन्न; प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैव उपायत्वोपपत्तेः ।

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥' (कठ.उ. 2-23) इति, अनन्योपायत्वश्रवणात् ॥ ३४ ॥

[ श्रुतित एव परस्यान्यस्य निषेधात् परान्तरासिद्धिः ]

## ३४९. तथाऽन्यप्रतिषेधात् ॥ ३-२-३५ ॥ (सि)

यत् पुनरुक्तम्—

'ततो यदुत्तरतरम्' (श्वे.उ. 3-10)

'परात्परं पुरुषम्' (मुण्ड.उ. 3-2-8)

'अक्षरात्परतः परः' (मुण्ड.उ. 2-1-2)

[2]इत्यादिभेद[2]व्यपदेशात्, परात्परमस्ति—इति,

तत् नोपपद्यते; तत्रैव ततोऽन्यस्य [3]प्रतिषेधात्[3] ।

'यस्मात्परं नाऽपरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति 'कश्चित्[4]' (श्वे. उ. 3-9)

इति । 'यस्मादपरं परं नास्ति किंचित्'—न केनाऽपि प्रकारेण परमस्तीत्यर्थः ।

---

अनन्योपायत्वश्रवणात्—प्राप्यस्यैवोपायत्वश्रवणादित्यर्थः । 'विवृणुते तनूं स्वाम्' इत्यनेन, प्रापकत्वं प्राप्यत्वं च गम्यते ॥ ३३. ३४ ॥

तत्रैव—श्वेताश्वतरोपनिषदि (एव) ॥ यस्मादपरमिति, उपात्तवाक्यस्यान्वयमाह ।

---

[सूत्रार्थः । अन्यप्रतिषेधात्—जगत्कारणभूतब्रह्मेतरस्य 'यस्मात्पर'मिति वाक्येन निषेधात्, तथा—परं नास्तीत्येव युक्तम् ॥

'कश्चिज्ज्यायो नाऽस्ति चेत् श्रुत्या च प्रतिषेधतः । ततो यदुत्तरतरमिति ब्रह्मैव चोच्यते ॥' (अ.प. 349)

---

[1] परं—द. अन्यत्प्राप्यं—घ. [2] इत्यादि—द.

[3] परस्य प्रतिषेधात्—अ. [4] किंचित्—द.

तथाऽन्यत्राऽपि, '[1]न ह्येतस्मा[1]दिति नेत्यन्यत् परमस्ती'ति ; 'इति न' इति निर्दिष्टात् एतस्माद्ब्रह्मणोन्यत्, परं न ह्यस्तीत्यर्थः ॥

तथा,

'न तस्येशे कश्चन तस्य नाम महद्यशः' (तै.ना.उ. 1-10)

इति । तद्धि! जगदुपादानकारणतया अनन्तरमुक्तम् ;

'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।' (तै.ना.उ. 1-8)

....स आपः प्रदुघे उभे इमे' (तै.ना.उ. 1-9)

इत्यादिना ।

'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' (तै.ना.उ. 1-12)

इति च, जगत्कारणं पुरुषमेनं [2]प्रत्यभिज्ञापयति[2] ।

['ततो यदुत्तरे'ति श्रुतिवाक्यस्य उचितार्थवर्णनाय शङ्का-तत्परिहारौ]

'ततो [3]यदुत्तरतरम्[3]' (श्वे.उ. 3-10)

इति किमुच्यते ?—इति चेत् ! ; पूर्वत्र,

---

यस्मादिति पंचम्यन्तपदेन अपरशब्दस्यान्वये सति, समाधिकनिषेधः कृतः स्यात् । परशब्दस्यान्वये सति, समनिषेधो न कृतः स्यात् । तच्च अनिष्टम् । तथा सति, परमपुरुषवेदनस्यैकस्यैव अपवर्गोपायत्वं पूर्वोक्तं न सिध्यति ; समाभ्यधिकनिषेधपरश्रुत्यन्तरविरोधः ; 'अपर'शब्द-वैयर्थ्यं च स्यात् ॥

तद्धीति । [अतः] 'न तस्येशे' इति वाक्यं, जगत्कारणविषयं स्यात् इति [नाशङ्का] ॥ ''अद्भ्यः सम्भूत' इति । अत्रैव 'विद्युतः पुरुषादधि' इति पुरुषशब्दात्, विद्युद्वर्णत्वात्, अतिदिष्टेषु 'अद्भ्यःसम्भूतः' इत्यादिवाक्येषु लक्ष्मीपतित्वश्रवणात्, 'यमन्तः समुद्रे कवयो वयन्ति' इति समुद्रशायित्वश्रवणात्, 'तदक्षरे परमे व्योमन्' इति परमव्योमसम्बन्धाच्च, अवगतपरमपुरुषभावजगत्कारणत्वप्रतिपादकप्रकरणेनैकप्रकरणम्, 'हिरण्यगर्भः समवर्तताऽग्रे' इत्यादिवाक्यमपि, परमपुरुषस्यैव जगत्कारणत्वमाहेत्यर्थः । [अतो हिरण्यगर्भस्य शम्भोर्वा न जगत्कारणत्वशङ्कावकाशः ॥] अन्यथा ब्रह्मशिवयोः सृज्यत्व.संहार्यत्वश्रुतिविरोधश्च ॥

[अनन्तरम्—अव्यवहितपूर्वमन्त्रे]

ततो यदु....किमुच्यत इति । 'यस्मात्परम्' इत्यादिवाक्यस्य सङ्कोचकत्वेन परोक्तमिदं

---

[1] नह्यस्मा—द.  [2] ज्ञापयति च—न.  [3] यदुत्तरं—य.

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।

[1]तमेव विदित्वाऽतिमृत्युमेति[1] नाऽन्यः पन्था विद्यतेऽयनाय ।। (श्वे.उ. 3–8)

इति, 'परस्य ब्रह्मणो महापुरुषस्य वेदनमेव अमृतत्वसाधनम् ; नाऽन्यः अमृतत्वस्य पन्थाः' इत्युपदिश्य तदुपपादनाय,

'यस्मात् परं नाऽपरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति [2]कश्चित्[2] ।

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।। ' (श्वे.उ. 3–9)

इति पुरुषस्य[3]परत्वं[3], तद्व्यतिरिक्तस्य परत्वासम्भवं च प्रतिपाद्य,

'ततो यदुत्तरतरं तदरूपमनामयम् ।

य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवाऽपियन्ति ।। ' (श्वे·उ. 3–10)

इति, पूर्वोक्तमर्थं हेतुतो निगमयति–' यत् उत्तरतरं पुरुषतत्त्वं, तदेव अरूपम् अनामयं यतः, ततः ये एतत् पुरुषतत्त्वं विदुः ; त एव अमृता भवन्ति । अथेतरे दुःखमेव अपियन्ति'–इति ।। अन्यथा, उपक्रमविरोधः [4]अनन्तरोक्ति[4]विरोधश्च ।

'परात्परं पुरुषमुपैति दिव्यम् ' (मुण्ड.उ. 3–2–8)

---

वाक्यम् अन्यथासिद्धम्–इतीममर्थं हृदि निधाय, तस्याऽन्यथासिद्धिः कथम् ! [इत्याशयः शङ्कायाः] । 'तस्मात् सर्वगतः शिवः' इत्यस्य पूर्वपठितं 'पूर्णं पुरुषेण' इति वाक्यम् । ततः पश्चात् 'महान् प्रभुर्वै पुरुषः' इतिवाक्यम् । तदुभयानुरोधेन, सर्वानन-शिरोग्रीवत्व-गुहाशयत्व-भगवच्छब्दाद्यनुरोधेन च वर्णनीयम् । सर्वानन-शिरोग्रीवत्वादिकं हि ! 'सहस्रशीर्षं देवम्' इत्यादिषु पुरुषोत्तमासाधारणगुणत्वेनाऽवगतमित्यर्थः ।।

ततः—तस्माद्धेतोः । **अरूपमनामयम्**—कर्मकृतदेह-तत्कृतदुःखविरोधि, तापत्रय-प्रतिभटमित्यर्थः। **उपक्रमविरोधः**—'नाऽन्यः पन्थाः' इति वाक्यविरोधः । 'य एनं विदुः' इति वाक्यस्य परमपुरुषेतरवेदनपरत्वं हि ! 'नाऽन्यः पन्थाः' इत्यनेन विरुद्धम् । **अनन्तरोक्तिविरोधः**—'यस्मात्परं नाऽपरम्' इत्यादिवाक्यविरोधः । **'परात्परम्'** इत्यादिवाक्येऽपि, समष्टिपुरुषात्परत्वेन परमपुरुष उच्यते इति प्रतिज्ञा । पूर्ववाक्ये

---

[1] तमेवं विद्वानमृत इह भवति—पा. तमेवं विदित्वा—घ.ङ.च.

[2] किंचित्—द. [3] परतरत्वं—वा. परतत्वं—थ. [4] अनन्तरोक्त—वा.

इति, पूर्वत्र,

‘ अक्षरात् परतः परः ’ (मुण्ड.उ. 2-1-2)

—इति अक्षरात् अव्याकृतात् , यः परः समष्टिपुरुषः , तस्मात्परो यः अदृश्यत्वादि-गुणकः सर्वज्ञः परमपुरुषः, स एव इहाऽपि, ‘ परात्परः ’ इति, समष्टिपुरुषात् परत्वेनोच्यते ।। ३५ ।।

[ जगत्कारणात्परस्यान्यस्याभावे प्रमाणस्पष्टीकरणम् ]

## ३५०. अनेन सर्वगतत्वमायामशब्दादिभ्यः ।। ३-२-३६ ।।

अनेन-ब्रह्मणा, सर्वगतत्वम्-सर्वस्य जगतो[1]व्याप्तत्वम्[1], आयामशब्दादिभ्यः-सर्वव्याप्तिवाचिशब्देभ्यः, अवगम्यमानम् ; ‘अस्मात् परं नास्ती’त्यवगमयति । आयामशब्दस्तावत् ,

‘ तेनेदं पूर्णं पुरुषेण सर्वम् ’ (श्वे.उ. 3-9)

‘ यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।। ’ (तै.ना.उ. 11-11)

‘ नित्यं विभुं सर्वगतं सुसूक्ष्मं [2]यद्[2] भूतयोनिं परिपश्यन्ति [3]धीरा[3]ः ’

(मुण्ड.उ. 1-1-6)

---

समष्टिपुरुषविलक्षणतया प्रतिपाद्यत्वेन निश्चितस्य अदृश्यत्वादिगुणकस्य ‘ परात्पर ’ शब्देनाऽत्र प्रत्यभिज्ञानादित्यर्थः ।। ३५ ।।

---

[सूत्रार्थः । **अनेन**—परमात्मना, **सर्वगतत्वम्**—समस्तस्य विश्वस्याऽपि व्याप्तत्वम् , **आयामशब्दादिभ्यः**—परब्रह्मण एव सर्वत्र अप्रतिहतव्याप्तिप्रतिपादकेभ्यः श्रौतेभ्यः शब्देभ्योऽवगम्यते ।। ]

‘ ब्रह्मणाऽनेन सर्वस्य व्याप्यत्वमवगम्यते । सर्वव्याप्त्यर्थकैः शब्दैः पूर्णमित्यादिकैरिह ।। ’ (ब्र.प. 350)

---

[1] व्याप्यत्वम्—न. [2] तदव्ययं यद्—घ. ङ. [3] धीरा—इति—वा.

'आदि' शब्दात्,

'ब्रह्मैवेदं सर्वम्' (बृ उ 4-5-1)

'आत्मैवेदं सर्वम्' (छां.उ. 7-25-2)

इत्यादयो गृह्यन्ते । अतः इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ ३६ ॥

इति पराधिकरणम् ॥ ७ ॥

—o—

---

**इत्यादयो गृह्यन्त इति** । पूर्वसूत्रैः अधिकवस्तुवादे दूषणमुक्तम् । इह स्वपक्षे प्रमाणमुच्यते । नियन्तृत्वेन व्याप्तिज्ञापनार्थं 'नित्यं विभु'मिति श्रुतिरुपात्ता ॥ **विभुम्**— प्रभुम् । इयं श्रुतिः परमपुरुषविषया ; 'परात्परं पुरुषमुपैति दिव्यम्' 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषविषयप्रकरणस्थत्वात् ॥ **आदि शब्देन**, व्यतिरिक्ततत्त्वनिषेधपरवाक्यानि, धारकत्व-नियन्तृत्वादिपूर्वकव्याप्तिपरवाक्यानि, समानाधिकरणवाक्यानि च विवक्षितानि । सर्वविद्योपास्य-विशेषनिर्णयपरनारायणानुवाके नियन्तृतया व्याप्तिः 'अन्तर्बहिश्चे'त्यादिना, धारकत्वं 'तद्विश्व-मुपजीवती'ति, शेषित्वं 'पतिं विश्वस्ये'ति चोक्तम् । नियमनार्थव्यापन-धारण-शेषित्वैः कृत्स्नप्रपञ्चशरीरकत्वं ब्रह्मणः सिद्धम् ॥ एवमीश्वरस्य कृत्स्नप्रपञ्चशरीरकत्वसिद्ध्या, तदधिकत्वाभावे प्रमाणमुक्तं स्यात् ; तत्त्वान्तरसद्भावे सति, कृत्स्नशरीरकत्वायोगात् । किंच—'विश्वतः परमं नित्यम्' '**अन्तर्बहि ....व्याप्य**' '**विश्वमेवेदं पुरुषः**' इति त्रिविधपरिच्छेदराहित्यमुक्तम् । तथा च—सहस्रशीर्षत्वादिविशिष्टपुरुषप्रतिपादकतया एतत्समानार्थे च पुरुषनारायणे, '**यद्भूतं** यच्च भव्यम्' '**स भूमिं विश्वतो वृत्वा**' '**पुरुष एवेदं सर्वम्**' इति त्रिविधपरिच्छेदराहित्य-मुक्तम् । अतश्च अधिकवस्तुनिषेधसिद्धिः । अधिकवस्तुसद्भावे सति परिच्छेदाभावायोगात् । अतः ईदृशानि वाक्यान्यनुसन्धेयानीति भावः ॥ ३६ ॥

[सूत्राणि—१ परमतः. २ सामान्या. ३ बुद्ध्यर्थः. ४ स्थानवि. ५ उपप. ६ तथान्य. ७ अनेन सर्वग.]

इति पराधिकरणम् ॥ ७ ॥

—o—

## (82) फलाधिकरणम् ॥ ३-२-८ ॥ (सू. ३७-४०)

[अधिकरणार्थः—फलप्रदत्वम् उपासनप्रीतस्य परमात्मन एव ; न केवलस्योपासनस्य]

## ३५१. फलमत उपपत्तेः ॥ ३-२-३७ ॥ (सि)

[अवान्तरसङ्गत्यर्थमनुवादः]

उक्तम्—उपासिसिषोपजननार्थं, जीवस्य सर्वावस्थासु सदोषत्वम्, प्राप्यस्य [1]च परमपुरुषस्य[1] निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मा[2]त्परत्वं च[2]। अतः परम्, उपासनं विवक्षन्, उपासीनानां परस्मादेव अस्मात् पुरुषात् तत्प्राप्तिरूपम् अपवर्गाख्यं फलम्—इति संप्रति ब्रूते।

तुल्यन्यायतया, शास्त्रीयम् ऐहिका[3]मुष्मिकमपि[3] फलम्, अत एव परस्मात् पुरुषाद्भवतीति सामान्येन—'फलमतः'—इत्युच्यते।

---

फलमत इति। इदमधिकरणं सिद्धान्तोपक्रमम्। प्राप्यस्येति। सर्वस्मात्परत्वं प्राप्यत्वम्। तत् कल्याणगुणाकरत्वान्तर्भूतमपि, पृथगधिकरणनिरूपितत्वात् पृथगुक्तम्।

तुल्येति। सूत्रे 'मुक्ति'रिति न निर्दिष्टम्; अपि तु 'फल'मिति साधारणनिर्देशः कृतः। अतः तस्य प्रयोजनमिदम्। त्रिवर्गप्रदकर्माराध्यत्व-फलप्रदत्वयोरपि मुमुक्षोरनुसन्धेयत्वात्, तदपि अत्र निरूपितम्। अतः उपासनोपयोग्यर्थविचारानन्तरं, तदुपयोगि अर्थान्तरं निरूप्यत इति सङ्गतिरित्यर्थः। फलत्वमुक्तम्। फलप्रदत्वं च निरूप्यते—इति च सङ्गतिः। तच्च कल्याणगुण इति, पादान्तर्भावः। पूर्वमीमांसायाम् अपूर्वाधिकरणे (पू.मी. 2-1-2) द्वारमात्रं निरूपितम्। अत्र तु द्वारविशेषो निरूप्यत इति भिदा।

---

[सूत्रार्थः। फलम्—त्रिवर्गापवर्गाख्यं सर्वमपि फलम्, अतः—यागोपासनाद्याराधितात्परमपुरुषादेव लभ्यते, उपपत्तेः—तस्यैव फलप्रदतायाः युक्तत्वात् ॥]

'पारत्रिकं चैहिकं च फलं सर्वमतो भवेत्। परस्मादेव पुरुषात् क्षणध्वंसि हि कर्म तत् ॥' (ब्र.प. 351)

---

[1] परमपुरुषस्य च—त.　[2] त्परत्वम्—त.　[3] मुष्मिकादि—त. थ.

[ईश्वरस्यैव फलप्रदत्वस्य उपपन्नत्वम् ]

कुत एतत् ?—उपपत्तेः—। स एव हि ! सर्वज्ञः सर्वशक्तिः महोदारः, यागदान-होमादिभिः उपासनेन च आराधितः, ऐहिकामुष्मिकभोगजातं [1]स्वस्वरूपावाप्ति[1]-रूपं अपवर्गं च दातुमीष्टे। न हि ! अचेतनं कर्म क्षणध्वंसि, कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥

[भगवतो भोगापवर्गदत्वस्य श्रुतितोऽवगमः]

## ३५२. श्रुतत्वाच्च ॥ ३-२-३८ ॥ (सि)

'स वा एष महानज आत्मा अन्नादो वसुदानः' (बृ.उ. 6-4-24)

'एष ह्येवाऽऽनन्दयाति' (तै.उ.आन. 7-1)

इति, भोगापवर्गरूपं फलम्, अयमेव ददाति-[2]इति हि[2]! श्रूयते ॥ ३८ ॥

---

किं सापूर्वात् कर्मोपासनात् स्वर्गापवर्गफलोत्पत्तिः ? उत कर्मोपासनाराधितात् वाय्वादिदेवतारूपात् केवलाच्च ब्रह्मणः ? इति । किं 'स एवैनं भूतिं गमयति' 'यमेवैष वृणुते तेन लभ्यः' इत्यादिवाक्यशेषः वाय्वादिरूपस्य केवलस्य च ब्रह्मणः फलप्रदत्वमवगमयति ? न ? इति । किं वाक्यशेषः यथाप्रतीतार्थपरः ? उत अतत्परः ? इति । अतत्परत्वे, तत्तद्देवतारूपस्य केवलस्य च ब्रह्मणः फलप्रदत्वाभावात्, सापूर्वात् कर्मोपासनात् फलसिद्धिः स्यात् । अनन्यपरत्वे तु, देवतारूपस्य केवलस्य चेश्वरस्य फलप्रदत्वावगमकत्वात् कर्मोपासनाराधितात् तत्तद्देवतारूपात् केवलाच्च ब्रह्मणः फलसिद्धिः ॥ **सर्वज्ञत्वम्**—अर्थिनामपेक्षित-तद्विरोधि-तन्निरासादिज्ञानोपयोगि । **सर्वशक्तित्वम्**—भोग्य-भोगोपकरणादिनिष्पादनप्रतिबन्धनिरसनोपयोगि । द्वयमपि लुब्धस्य अकिञ्चित्करमिति, **महोदारत्वोक्तिः** । **नहि** इति कर्मणः अयोग्यत्वमाह ।

**श्रुतत्वाच्चेति** । केवलकर्मणः योग्यत्वाभात्, ईश्वरस्यैव योग्यत्वात्, तस्यैव फलप्रदत्वं कल्प्यमित्युक्तम् । तत् कण्ठोक्तं च—इति अस्य सूत्रस्यार्थः । **अन्नादः**—अन्नदः ॥३८॥

---

[सूत्रार्थः । **श्रुतत्वाच्च**—भगवत एव फलप्रदत्वस्य श्रुतित एव अवगमादपि स एव फलप्रदः ॥ ]

'अन्नादो वसुदानोऽथानन्दयातीति वाक्यतः । भोगापवर्गमुभयं ब्रह्मैवैतद्ददाति हि ॥' (ब्र.प. 352)

---

[1] स्वस्वरूपप्राप्ति— न. [2] इति—द.

[ एतदुपरि जैमिनिमतेन पूर्वपक्षः ]

सम्प्रति पूर्वपक्षमाह—

## ३५३. धर्मं जैमिनिरत एव ॥ ३–२–३९ ॥ (पू)

अत एव–उपपत्तेः शास्त्राच्च, याग-दान-होमोपासनरूपधर्ममेव [1]फलप्रदं,[1] जैमिनिराचार्यो मन्यते । [2]लोके हि ![2] कृष्यादिकं[3]मर्दनादिकं[3] च कर्म, साक्षाद्वा [4]परम्परया वा[4] स्वयमेव फलसाधनं दृष्टम् । एवं वेदेऽपि यागदानहोमादीनां साक्षात् फलसाधनत्वाभावेऽपि, परम्परया अपूर्वद्वारेण फलसाधनत्वमुपपद्यते ।

तथा ‘यजेत स्वर्गकामः’ (तै.सं. 2–5–5) इत्यादिशास्त्रमपि, सिषाधयिषित-स्वर्गस्य कर्तव्यतया यागादि अभिदधत्, अन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्व-[5]मवगमयति[5] ॥ ३९ ॥

[बादरायणमतेन सिद्धान्तकथनम्]

## ३५४. पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३-२-४० ॥ (सि)

‘तु’ शब्दः पक्षव्यावृत्त्यर्थः । पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं, भगवान् बादरायणो मन्यते ।

कुतः ? हेतुव्यपदेशात् ।

‘यज-देवपूजायाम्’ (पा.धा.भ्वादि.)

---

एवं वेदेपीति ।‘ स्वर्गकामो यजेते ’त्यत्र फलसाधनत्वं कल्प्यमिति न विरोधः ॥३९॥

---

[सूत्रार्थः । **धर्मम्**—अलौकिकश्रेयःसाधनत्वेन चोदनाचोदितं यागदानादिकमेव फलसाधनत्वेन, **अत एव**—श्रुत्युपपत्तिभ्यामेव, **जैमिनिः**—तन्नामा आचार्यो मन्यते ।। ]

उपपत्तेः श्रुतत्वाच्च फलदो धर्म एव हि । अपूर्वद्वारतश्चेति जैमिनिर्मनुते मुनिः ॥ (ब्र.प. 353)

[सूत्रार्थः । **पूर्वं तु**—पूर्वोक्तमेव पक्षम्, **बादरायणः**—बादरायण आचार्यः संमन्यते, **हेतुव्यपदेशात्**—आराध्यस्यैव फलहेतुतायाः, ‘स एवैनं भूतिं गमयति’ इत्यादिश्रुतितः कथनात् ॥ ]

‘पूर्वोक्तं फलदातृत्वं मनुते बादरायणः । तत्तच्छरीरकस्यैव ब्रह्मणस्त्विति शब्दतः ॥’ (ब्र.प. 354)

---

[1] फलदं—थ. [2] लोके—द. लोके च—च.छ.त. [3] गात्रमर्दनादिकं—क.घ.ङ. दानादिकं—ग.च.
[4] परम्परया—आ ग. [5] मेव गमयति—वा. मेव अवगमयति—न.

इति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव, [1]तत्तत्फल[1]हेतुतया [2]तस्मिंस्तस्मिन्नपि[2] वाक्ये व्यपदेशात् ।

'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ' (तै.सं. 2—1-1-1)

इत्यादिषु, कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एवेति, न अतत्परत्वशङ्का युक्ता । [3]एवमपेक्षितेऽपि[3] फलसाधनत्वप्रकारे शब्दादेव अवगते सति, तत्परित्यागम्, अश्रुतापूर्वादि [4]कल्पनं च[4] प्रामाणिकाः न सहन्ते ।

[कल्प्यापूर्ववादस्येव वाच्यापूर्ववादस्याऽपि अप्रामाणिकता]

लिङादयोऽपि, देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमताम् अभिदधति ; नाऽन्यत् अलौकिकम्—इति प्रागेवोक्तम् । तदेवम्,

' वायुर्वै क्षेपिष्ठा देवता ' (तै.सं. 2—1-1-1)

इत्यादिशब्दात्, वाय्वादीनां फलप्रदत्वमवगम्यते । वाय्वाद्यात्मना च परमपुरुष एव आराध्यतया फलप्रदायित्वेन च अवतिष्ठते इति श्रूयते—

' इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । (तै.ना.उ. 1-6)
तदेवाऽग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।। ' (तै.ना.उ. 1-7)

---

विध्यपेक्षित एवेति । मन्त्रार्थवादयोः प्रतीयमानार्थे तात्पर्याभावेपि, रात्रिसत्र-प्रतिष्ठाऽपगोरण-शतयातनासाध्य-साधनभावशर्कराञ्जनद्रव्यपशुविशेषादिः अर्थवादाद्युक्तोऽप्यर्थः विध्यपेक्षिततया भवद्भिरेव स्वीकृत इति भावः । [नातः] अनुष्ठेयार्थप्रकाशन-स्तुत्यन्यतरपरत्वात् न स्वार्थे प्रामाण्यम्—[इति शङ्का] एवमिति । श्रुतहानम् अश्रुतकल्पनं चानुपपन्नमित्यर्थः ।

लिङादयोऽपीति । पूर्वस्मिन् पक्षे अपूर्वमेव कल्प्यम् ; अन्यत्र तु अपूर्वं तस्य लिङ्वाच्यत्वं च कल्प्यमित्यर्थः । प्रागेव—प्रथमाधिकरण एव ।

---

[1] तत्फल—त. थ. [2] तस्मिन्नपि—द. [3] एवमपेक्षिते—द.
[4] परिकल्पनं—च. द. विकल्पनं—द.

[1]इति[1] । अन्तर्यामिब्राह्मणे च—

'यो वायौ तिष्ठन् यस्य वायुः शरीरम्' (बृ.उ. 5-7-7)

'योऽग्नौ तिष्ठन्' (बृ.उ. 5-7-5)

'य आदित्ये तिष्ठन्' (बृ.उ. 5-7-9)

इत्यादि श्रूयते । स्मर्यते च,

'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥ (भ.गी. 7-21)
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि! तान् ॥' (भ.गी. 7-22)

इति ॥

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (भ.गी. 9-24)

इति । प्रभुरिति—फलप्रदायीत्यर्थः ।

'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' (भ.गी. 7-23)

'यान्ति मद्याजिनोऽपि माम्' (भ.गी. 9-25)

इति च ॥

[ उक्तस्याऽर्थस्य लोकादृष्टानुगुण्यम् ]

[2]लोके च[2], कृष्यादिभिः विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य, तैः राजानं भृत्यद्वारेण साक्षाद्वा अर्चयन्ति । अर्चितश्च राजा, तत्त[3]दर्चनानु[3]गुणं फलं प्रयच्छन् दृश्यते ।

[4]वेदान्तास्तु[4], अतिपतितसकलेतरप्रमाण[5]सम्भावना[5]भूमिं, निरस्तसमस्ताविद्यादिदोषगन्धं, स्वाभाविकानवधिकातिशयापरि[6]मितोदार[6]गुणसागरं, पुरुषोत्तमं प्रतिपाद्य, तदाराधनरूपाणि च याग-दान-होमात्मकानि, स्तुति-नमस्कार-कीर्तनार्चन-ध्यानानि

---

वेदान्तास्त्विवति । ये तु अनुमानादिभिः विग्रहाद्यभावं साधयन्ति; तन्मते तदुक्तानुमानं, कालात्ययापदिष्टमित्यभिप्रायः । स्तुति-नमस्कारादीनां उपबृंहणसिद्धत्वात्, तेषां ध्यानेन

---

[1] इति च—द. [2] लोकादौ—द. [3] दाराधना—अ.
[4] वेदास्तु—न. [5] सम्भावन—वा. [6] मित—अ.

[1]च तदाराधनानि[1], आराधितात् परस्मात् पुरुषात् भोगापवर्गरूपं फलं च [2]वदन्तीति[2]—सर्वं समञ्जसम् ॥ ४० ॥

इति फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य

द्वितीयः पादः ॥ २ ॥

—o—

---

सह कीर्तनम् । **सर्वं समञ्जसम्**—विध्यर्थवादमन्त्राणां सामञ्जस्यम् इत्यर्थः ॥ ४० ॥

[ सूत्राणि— १ फलमतः २ श्रुतत्वा ३ धर्मं जैमिनि ४ पूर्वं तु ]

इति फलाधिकरणम् ॥ ८ ॥

इति द्वितीयः पादः ॥ २ ॥

—o—

---

[1] तत्तदाराधनानि च—न. [2] वदन्तीति च—त.

॥ श्रीः ॥

[तृतीयाध्यायीयतृतीयपादाधिकरणार्थसूचनी]

## तृतीये साधनाध्याये तृतीयः गुणोपसंहारपादः ।। ३-३ ।।

[पादार्थः—ब्रह्मोपासनानां गुणोपसंहार-विकल्पनिर्णयाय विद्याभेदाभेदचिन्ता]

(अधिकरणानि—२६. सूत्राणि—६४)

(83) १. **सर्ववेदान्तप्रत्ययाधिकरणम्**—[सू. 1-5]

विद्याविधीनामविशेषे, वैश्वानराद्याः विद्याः नानावेदान्तगता अपि अभिन्ना एव ॥

(84) २. **अन्यथात्वाधिकरणम्**—[सू. 6-9]

छान्दोग्य-वाजसनेयकगतयोरुद्गीथविद्ययोर्नानात्वमेव रूपभेदात् ॥

(85) ३. **सर्वाभेदाधिकरणम्**—[सू. 10]

छान्दोग्य-वाजसनेयकगतयोः प्राणविद्ययोरभेदः ; प्रकाराभेदात् ॥

(86) ४. **आनन्दाद्यधिकरणम्**—[सू. 11-17]

ब्रह्मासाधारणानामानन्दादिगुणानां सर्वविद्यासूपसंहारः ; उपास्यैक्यात् ॥

(87) ५. **कार्याख्यानाधिकरणम्**—[सू. 18]

'अशिष्यन्नाचामेत्' इत्यादिना न आचमनविधिः ; किन्तु 'आपोवासः' इति, अपां प्राणवासस्त्वचिन्तनमेवाऽप्राप्तं विधीयते ॥

(88) ६. **समानाधिकरणम्**—[सू. 19]

अग्निरहस्य-बृहदारण्यकस्थयोः शाण्डिल्यविद्ययोरैक्यम् ; रूपाभेदात् ॥

(89) ७. **सम्बन्धाधिकरणम्**—[सू. 20-22]

अहरहंनामकसत्यब्रह्मोपासनयोः भेदः ; अधिष्ठानभेदात् ॥

(90) ८. **सम्भृत्यधिकरणम्**—[सू. 23]

शाखाविशेषश्रुतानां सम्भृत्यादिब्रह्मगुणानां सर्वविद्यासु नोपसंहारः ॥

(91) ९. **पुरुषविद्याधिकरणम्**—[सू. 24]

छान्दोग्य-तैत्तिरीयकगतयोः पुरुषविद्ययोर्भेदः ; रूपभेदात् ।।

(92) १०. **वेदाद्यधिकरणम्**—[सू. 25]

शुक्रं प्रविध्येत्यादिमन्त्राणां न विद्याङ्गत्वम् ; किन्त्वध्ययनाङ्गत्वम् ।।

(93) ११. **हान्यधिकरणम्**—[सू. 26]

विदुष उत्क्रामतः श्रुतयोः सुकृतदुष्कृतहानोपायनयोः सर्वविद्यासु चिन्तनम् ।।

(94) १२. **साम्परायाधिकरणम्**—[सू. 27-31]

विदुषो देहादुत्क्रमणकाले एव पुण्य-पापयोर्निरवशेषेण हानिश्चिन्त्या ।।

(95) १३. **अनियमाधिकरणम्**—सू. 32]

विदुषोऽर्चिरादिगतिः सर्वविद्यासाधारणी ।।

(96) १४. **अक्षरध्यधिकरणम्**—[सू. 33-34]

अक्षरविद्योक्तानामस्थूलत्वादिब्रह्मगुणानां सर्वपरविद्यासूपसंहारः ।।

(97) १५. **अन्तरत्वाधिकरणम्**—[सू. 35-37]

उषस्तप्रश्नप्रतिवचनयोः कहोलप्रश्नप्रतिवचनयोश्च प्रतिपन्ना विद्या एकैव ।।

(98) १६. **कामाद्यधिकरणम्**—[सू. 38-40]

छान्दोग्य-वाजसनेयीययोर्दहरविद्ययोरभेदः, रूपाभेदात् ।।

(99) १७. **तन्निर्धारणानियमाधिकरणम्**—[सू. 41]

कर्माङ्गाश्रितोद्गीथोपासनादेः क्रतुषु उपादाननैयत्याभावः ।।

(100) १८. **प्रदानाधिकरणम्**—[सू. 42]

हविस्त्यागे इन्द्रादीनामिव, प्रतितद्गुणचिन्तनं परमात्मचिन्तनावृत्तिः ।।

(101) १९. **लिङ्गभूयस्त्वाधिकरणम्**—[सू. 43]

सहस्रशीर्षानुवाकस्य सर्वपरविद्योपास्यविशेषनिर्धारणपरत्वम् ।।

(102) २०. **पूर्वविकल्पाधिकरणम्**—[सू. 44-50]

अग्निरहस्योक्तमनश्चिदादीनां विद्यामयक्रत्वनुप्रवेश एव ।।

(103) २१. **शरीरे भावाधिकरणम्**—[सू. 51-52]

प्रत्यगात्मन उपासनं आविर्भूयमानगुणाष्टकवत्त्वेनैव ।।

(104) २२. **अङ्गावबद्धाधिकरणम्**—[सू. 53-54]

कर्माङ्गाश्रितानामुद्गीथाद्युपासनानां तादृशसर्वशाखीयक्रतुष्वप्यन्वयः ।।

(105) २३. **भूमज्यायस्त्वाधिकरणम्**—[सू. 55]

वैश्वानरविद्यायामात्मोपासनं समस्तावयवोपेतस्यैव ।।

(106) २४. **शब्दादिभेदाधिकरणम्**—[सू. 56]

ब्रह्मप्राप्त्येकफलानामपि वेदान्तोदितविद्यानां शब्दादिभेदतो भेदः ।।

(107) २५. **विकल्पाधिकरणम्**—[सू. 57-58]

वेदान्तोदितासु विद्यास्वन्यतमैव विद्या मोक्षार्थमनुष्ठेया ॥

(108) २६. **यथाश्रयभावाधिकरणम्**—[सू. 59-64]

उद्गीथाद्युपासनानामुपादेयत्वानियमः सुदृढः ॥

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## तृतीयेऽ(साधना)ध्याये

## (11) तृतीयः (गुणोपसंहार) पादः ।।

[अधिकरणानि 1-26 सूत्राणि 1-64]

[पादार्थः—ब्रह्मोपासनानां गुणोपसंहार-विकल्पनिर्णयाय विद्याभेदाभेदचिन्ता]

### (83) सर्ववेदान्तप्रत्ययाधिकरणम् ॥३-३-१॥ (सू 1-5)

[अधिकरणार्थः—विद्याविधिस्वरूपाणामविशिष्टत्वे, वैश्वानरविद्यादयःसर्ववेदान्तगता अपि, न भिद्यन्ते]

### ३५५. सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३-३-१ ॥ (सि)

[पादसङ्गत्यर्थमनुवादः]

उक्त-ब्रह्मोपासिसिषोपजननाय वक्तव्यं, ब्रह्मणः फल[1]दायित्व[1]पर्यन्तम् । इदानीं ब्रह्मोपासनानां गुणोपसंहार-विकल्पनिर्णयाय [2]विद्याभेदाभेद[2]चिन्ता प्रस्तूयते ।

---

उपसंहारः—अन्यत्रोक्तस्य अन्यत्रोपयोगार्थं स्वीकारः । विकल्पः—तत्र तत्रोक्तस्य तत्र तत्रैवोपयोगः । विद्यानामभेदे उपसंहारः । भेदे विकल्पः ।

---

[सूत्रार्थः । सर्व....प्रत्ययम्—विविधासूपनिषत्सु विधेयतया प्रतीयमानं ब्रह्मोपासनमपि, एकमेव; न नाना, चोदनाद्यविशेषात्—धात्वर्थविशेषविधेः, फलसंयोगस्य, वेद्यरूपस्य, विद्यानाम्नश्च अविलक्षणत्वात् ।।]

'वेदान्तेषु च सर्वेषु प्रतीतं तत्र तत्र च । दहरादिध्यानमेकं विध्याख्यानाद्यभेदतः ॥' (ब्र.प. 355)

---

[1] दायिता—अ. [2] विद्याभेद—घ.च.

[प्रथमाधिकरणकृत्यविचार्यम्]

प्रथमं तावत्-एकस्या वैश्वानरविद्यादिकायाः अनेकशाखासु श्रूयमाणायाः, किम् एकविद्यात्वम्? उत विद्याभेदः? इति चिन्त्यते।

[पूर्वः पक्षः सयुक्तिकः]

अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य च भेदकत्वात्, शाखान्तरे च उभयोरवर्जनीयत्वात्, विद्याभेदः—इति प्राप्तम्। अत एव,

'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मुण्ड.उ. 3-2-10) इति, शिरोव्रतवतां आथर्वणिकानामेव विद्योपदेशनियमः उपपद्यते। विद्यैक्ये हि! [1]विद्याङ्गस्य शिरोव्रतस्य,[1] अन्येषामपि शाखिनां प्राप्तेः नियमो नोपपद्यते॥

---

**अनेक....माणायाः**—एकसंज्ञत्वेन एकफलत्वेन श्रूयमाणायाः। पूर्वमीमांसायां शाखान्तराधिकरणे, (पू.मी. 2-4-2) 'शाखान्तरे कर्मभेदः' (पू.मी.सू. 2-4-8) इति सूत्रेण पूर्वपक्षमुक्त्वा, 'एकं वा संयोगरूपचोदनाख्याविशेषात्' (पू.मी.सू 2-4-9) इति सिद्धान्तितम्। अत्र तु स न्यायः वेदान्तवाक्येषु किं प्रवर्तते? उत न? इति संशय्य, प्रवर्तत इति निर्णीयते। नानाशाखाम्नातायाः वैश्वानरविद्यादिकायाः, किं प्रतिशाखं भेदः! उत एकत्वम्? इति। किं शाखान्तरे प्रत्यभिज्ञानम् ऐक्यमवगमयति? न? इति। शिरोव्रतवतामाथर्वणिकानां विद्योपदेशनियमः, वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायावतारं निरुणद्धि? न? इति। किं शिरोव्रतं विद्याङ्गम्? उत अध्ययनाङ्गम्? इति। विद्याङ्गत्वे, शाखान्तरनयावताग्प्रतिबन्धकत्वात्। प्रत्यभिज्ञानस्य ऐक्यानवगमकतया विद्याभेदः। अध्ययनाङ्गत्वे, शिरोव्रतस्य विद्यासु शाखान्तरनयाप्रतिबन्धकतया, प्रत्यभिज्ञानस्य ऐक्यावगमकत्वात्, विद्यैकत्वम्—इति॥

**अविशेषेति**। 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' इत्यादिषु 'जुहोति' पदस्य पुनःश्रवणेऽपि, 'दध्ने'ति विशेषः श्रूयते। तद्व्यावृत्त्यर्थमिदमुक्तम् **पुनरिति**। 'इडो यजति' 'बर्हिर्यजति' 'तनूनपातं यजति' इत्यादिषु हि! 'यजति'शब्दादेः पुनःश्रवणं भेदकं दृश्यते एकस्यामपि शाखायाम्। **अत एवेति** अधिकां पूर्वपक्षयुक्तिमाह। [अतः] शाखान्तराधिकरणसिद्धान्तयुक्तिरेवाऽत्राऽपि स्यादिति[नाशङ्का]। विद्याभेदादेवेत्यर्थः। [**शिरोव्रतम्**—शिरसि अङ्गारपात्रधारणरूपं व्रतम्]। **विद्यैक्य इति**। ब्रह्मविद्याङ्गस्य शिरोव्रतस्य अन्येषामपि शाखिनां प्राप्तिः अनिष्टा। विद्यैक्ये, तदङ्गस्य शिरोव्रतस्य, अन्येषामपि प्राप्तेः न नियमोपपत्तिः। तस्मात् न विद्यैक्यमित्यर्थः'॥

---

[1] शिरोव्रतस्य—द.

[सिद्धान्तारम्भः]

एवं प्राप्ते, उच्यते—सर्ववेदान्तप्रत्ययम् एकमुपासनम्—इति ।

कुतः ? । चोदनाद्यविशेषात् । चोदना तावत्—'उपासीत, (छां.उ. 2-2-2) विद्यात्' (बृ.उ. 3-4-5) इत्येवंजातीयकः, धात्वर्थविशेषविधिः । 'आदि' शब्देन,

'एकं वा संयोग-रूप-चोदना-ऽऽख्याऽविशेषात्' (पू.मी.सू. 2-4-9)

इति कर्मकाण्डशाखान्तराधिकरण (पू.मी. 2-4-2) सूत्रोक्ताः, संयोगरूपाख्याः गृह्यन्ते । एषां चोदनादीनाम् अविशेषात्, 'सैवेयं विद्या' इति शाखान्तरे प्रत्यभिज्ञायते ।

तथा हि ; छान्दोग्य-वाजसनेयकयोः,

'वैश्वानर[1]मुपास्ते[1]' (छां.उ. 5-18-1)

इति चोदना तावत्, एकरूपा । [2]वेद्यैक[2]निरूपणीयस्वरूपस्य विदिपर्यायस्य उपासेर्वेद्यभूतवैश्वानरैक्यात् रूपमपि अविशिष्टम् । आख्या च 'वैश्वानरविद्ये'ति, अविशिष्टा । फलसंयोगोऽपि उभयत्राऽपि ब्रह्मप्राप्ति[3]रूपः अविशिष्टः[3] । अतः एभिः प्रत्यभिज्ञानात्, शाखान्तरेऽपि विद्यैक्यम् ॥ १ ॥

[विधेयभेदायत्तविद्याभेदशङ्का-परिहारौ]

यत्तूक्तम्—अविशेषपुनश्श्रवणात् [4]प्रकरणान्तराच्च विधेय[4]भेदप्रतीतेः, न विद्यैक्यम् इति, तदनुभाष्य परिहरति—

---

**सर्व-प्रत्ययम्**—सर्वेषु वेदान्तेषु प्रतीयमानम् । **एकमिति** पदम् कर्मकाण्डस्मारणपरत्वात्, तत्रस्थं अध्याहृतम् । ऐक्यहेतुषु संयोगनिर्देशप्राथम्येऽपि चोदनायाः प्राधान्यात्, **चोदनादीति** । **धात्वर्थविशेषेति** कर्मव्यावृत्तोपासनवाचिधात्वभिप्रायेण । **विदिपर्यायस्येति** । एकस्यां 'विद्यात्' इति शाखान्तरे 'उपासीते'ति विधिपदे सति, तत्राप्यैक्यसिद्धिरित्यभिप्रायः । द्रव्य-देवते कर्मणो रूपम् । विद्यायास्तु, 'उपासीत' इति उपास्यैकनिरूपणीयत्वात् तदेव रूपम् ॥ १ ॥

---

[1] मुपासे—थ. [2] विद्यैक—थ. [3] रूपम् अविशिष्टम्—आ.

[4] प्रकरणान्तरविधेय—आ. करणान्तराद्विधेयभेदात्—थ.

## ३५६. भेदान्नेति चेदेकस्यामपि ॥ ३-३-२ ॥ (सि)

अविशेषपुनश्श्रुत्या प्रकरणान्तराच्च [1]विधेयभेदात्, न[1] विद्यैक्यम्—इति चेत्; एकस्यामपि विद्यायां, प्रतिपत्तृभेदात् पुनःश्रुतिः, प्रकरणान्तरं च उपपद्यते। यत्र हि एकस्मिन् प्रतिपत्तरि, पुनःश्रुतिः प्रकरणान्तरं [2]च विद्यते[2]; तत्र अन्यथानुपपत्त्या विधेयभेदात् विद्याभेदः। प्रतिपत्तृभेदे तु, तत्प्रतिपत्त्यर्थतया पुनःश्रुत्याद्युपपत्तेः, तत्र न विधेयान्तरसंभवः॥ २ ॥

[शाखाभेदे व्रतविशेषविधिकृतविद्याभेद-तत्परिहारौ]

यच्चोक्तम्—शिरोव्रतवतां आथर्वणिकानामेव विद्योपदेशनियमदर्शनात्, विद्याभेदः प्रतीयते—इति। [3]तत्राह[3]—

## ३५७. स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३-३-३ ॥ (सि)

नैतदस्ति—शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयति—इति; शिरोव्रतस्य

---

**भेदादिति**। शाखान्तराधिकरणसिद्धान्तसाधकहेतुः संक्षिप्तः प्रथमसूत्रे। पूर्वपक्ष-शङ्कापरिहारो द्वितीये। विधेयं सामान्यम्। विधेयविशेषः उपासनम्। **प्रतिपत्तृभेदात्** इति प्रकरणभेदाभ्युपगमे परिहारः। प्रकरणभेदो नास्तीति च परिहार्यम्। **अन्यथेति**। प्रतिपत्तृभेदाभावे अविशेषपुनःश्रवण-प्रकरणभेदयोः वैयर्थ्यरूपा अनुपपत्तिः॥ २ ॥

---

[सूत्रार्थः। **भेदात्**—अविशेषपुनःश्रुत्यादिकृताद्भेदात्, **नेति चेत्**—विद्यैक्याभाव-शङ्कनमसाधु, **एकस्यामपि**—अभिन्नत्वेन संप्रतिपन्नायामपि विद्यायाम्, प्रतिपत्तृभेदतोऽविशेष-पुनःश्रुत्यादिभेदावगमात्॥

'अविशेषपुनःश्रुत्या विद्यैक्यं नेति चेन्नहि। एकस्यामपि विद्यायां श्रोतृभेदात् पुनःश्रुतिः॥' (ब्र.प. 356)

[सूत्रार्थः। **स्वाध्यायस्य**—अधीयमानस्य वेदस्य, **तथात्वे हि**—अध्ययनजन्यसंस्कार-सम्पन्नतासिद्ध्यर्थं हि, **तन्नियमः**—आथर्वणिकेषु शिरोव्रतस्याध्ययनाङ्गतानियमः, **समाचारे अधिकाराच्च**—तन्नामकग्रन्थे शिरोव्रतस्याऽतिदेशादप्येतत् ज्ञायते। **सववच्च तन्नियमः**—यथा सवाख्यानामेकाग्निसम्बन्धिहोमानां, त्रेताग्निषु न प्रवृत्तिरिति नियमः, तद्वदिव च॥

'समाचारेऽतिदेशाच्च स्वाध्यायार्थं शिरोव्रतम्। सवहोमो यथा तेषां न त्रेतादिषु विद्यते'॥ (ब्र.प. 357)

---

[1] विधेयभेदात्—द.	[2] विद्यते—थ.	[3] अत्राह—अ.

विद्याङ्गत्वाभावात् । —'स्वाध्यायस्य तथात्वे हि ! तन्नियमः' — स्वाध्यायस्य तथात्व-सिद्ध्यर्थं-तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि ! शिरोव्रतोपदेशनियमः ; न विद्यायाः ।

कुत एतत् ?

'नैतदचीर्णव्रतो[1]ऽधीते[1]' (मुण्ड.उ. 3-2-11)

इति तस्य अध्ययनसंयोगात् । -- 'समाचारेऽधिकाराच्च'-- । समा[2]चाराख्ये ग्रन्थे[2],

'इदमपि वेदव्रतेन व्याख्यातम्' (स.ग्र.)

इत्यतिदेशात् ॥

' तेषामेवैतां ब्रह्मविद्यां वदेत ' (मुण्ड.उ. 3-2-10)

वेदविद्यामित्यर्थः । सववच्च तन्नियमः'—यथा हि ! सवहोमाः सप्तसूर्यादयः [3]शतौदन[3]-पर्यन्ताः, आथर्वणिकैकाग्निसबन्धिनः, तत्रैव[4]भवन्ति[4] ; न त्रेताग्निषु ॥ ३ ॥

[गुणोपसंहारतः विद्यैक्यस्य श्रुतिसिद्धत्वम् ]

## ३५८. दर्शयति च ॥ ३-३-४ ॥ (सि)

दर्शयति च श्रुतिः, उपासनस्य सर्ववेदान्तप्रत्ययत्वम् । तथा हि ! छान्दोग्ये—

---

स्वाध्याय .... तन्नियम इति । शिरोव्रतस्य विद्याङ्गत्वे सति हि विद्यैक्यात् सर्वशाखिनां शिरोव्रतप्राप्तिः । विद्याङ्गत्वमेव नास्ति; अध्ययनाङ्गत्वात् इत्यर्थः । वेदव्रतेनेति । शिरोव्रतेन इदमपि व्याख्यातमित्यर्थः । शिरोव्रते पुष्कलोपदेशं कृत्वा, व्रतान्तरं प्रस्तुत्य, तत्र शिरोव्रतोक्तक्रममतिदिशत् वाक्यं, शिरोव्रतं ' वेदव्रत ' शब्देन निर्दिदेश । तेषामेवेति । अध्ययनाङ्गं शिरोव्रतं तेषामेव (आथर्वणिकानामेव) इति नियमः । कथम्? सववच्चेति । कस्यचित् कर्मविशेषस्य शाखाविशेषवतामसाधारणत्वं युक्तमित्यर्थः । सप्त सूर्याः—'आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः' इत्युक्तसप्तसूर्यदेवताकं कर्म । शतौदनाख्यं च कर्म । सप्तसूर्योपक्रमाः शतौदनपर्यन्ताः होमाः, आथर्वणिकानाम् एकस्मिन्नग्नावेव क्रियन्ते ; न त्रेताग्निषु, तद्वत् नियमः इत्यर्थः ॥ ३ ॥

दर्शयतीति । तैत्तिरीयके अपेक्षिताकथनात् छान्दोग्योक्तार्थोपजीवनं सिद्धम् । तच्च

---

[सूत्रार्थः । (उपासनस्य सर्ववेदान्तप्रत्ययत्वं) तैत्तिरीयश्रुतिरपि, दर्शयति च—स्फुटं प्रदर्शयत्येव ॥]

'गुणाष्टकं तु च्छान्दोग्ये यजुष्यन्तरिति श्रुतम् । विद्यैक्यं श्रुतिरेवाऽऽह दहयोरुभयोरपि ॥ ' (ब्र.प. 359)

---

[1] ऽधीयीत—अ. [2] ख्यग्रन्थे— त.थ. [3] शतोदन — द [4] भवन्तीति—त. थ.

'तस्मिन् यदन्त[1]स्तदन्वेष्टव्यम्[1]' (छां.उ. 8-1-1)

इत्युक्त्वा,

'किं [2]तदत्र[2] विद्यते यदन्वेष्टव्यम्' (छां.उ. 8-1-1)

इति प्रश्नपूर्वकम्, अपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्यः—[3]इत्युक्तम्[3] ।

तैत्तिरीयके तु, छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य,

'तत्राऽपि [4]दह्रं[4] गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्'

(तै.ना.उ. 10-23)

इति, गुणाष्टकविशिष्टस्य परमात्मनः उपासनमुच्यते । तत् उभयत्र विद्यैकत्वेन गुणोपसंहारादेव उपपद्यते ॥ ४ ॥

[विद्यैक्यस्योपयोगः, गुणोपसंहारः]

तदेवं शाखान्तराधिकरण[5]सिद्धं[5] विद्यैक्यं स्थिरीकृत्य, तत्प्रयोजनमाह—

**३५९. उपसंहारोऽर्थाभेदात् विधिशेषवत् समाने च ॥ ३-३-५ ॥**(सि)

एवं सर्ववेदान्तेषु समाने सत्युपासने, [6]वेदान्तान्तरा[6]म्नातानां गुणानां, वेदान्तान्तरे उपसंहारः कर्तव्यः ।

---

सर्ववेदान्तप्रत्ययन्यायविषयत्वं द्योतयतीत्यर्थः ॥ ४ ॥

**समाने सति उपासने**—एकसंज्ञके एकफलके च उपासने समाने इत्यर्थः । 'गुण'-

---

[सूत्रार्थः । **समाने च**—दहराद्युपासने शाखादिभेदतोऽप्यभिन्ने सति, (तत्र) **विधिशेषवत्**—तत्तद्विद्याविधौ उपकारकत्वेन सिद्धानां गुणानामिव, **उपसंहारः**—अन्यत्र श्रुतानामपि गुणानामुपासनशेषतया स्वीकारः, **अर्थाभेदात्**—अविलक्षणात् उपकारात्, कार्य एव ; न त्याज्यः ॥]

'उपासने समाने च ह्युपकाराविशेषतः । गुणानामुपसंहारस्त्वेकस्मिन् विधिशेषवत् ॥' (ब्र.प. 359)

---

[1] स्तदुपासितव्यम्—द.　[2] तत्र—न.　[3] इत्युक्तः—त. थ.

[4] दहरं—वा　[5] न्यायसिद्धं—श.　[6] वेदान्तरा—द.

कुतः ? —'विधिशेषवत् अर्थाभेदात्' —। यथा—एकस्मिन् वेदान्ते श्रुतः वैश्वानर-दहरादिविधिशेषो गुणः, तद्विद्यासम्बन्धात् तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते ; तथा वेदान्तान्तरोदितोऽपि, तद्विद्यासम्बन्धित्वेन तदुपकारविशेषात् [1]उपसंहर्तव्य[1] इत्यर्थः । 'च' शब्दः, अवधारणे ॥ ५ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

—o—

---

शब्देन अङ्गमुच्यते । स्वशाखोक्तगुणः, तद्विद्योपकारकत्वादेव हि ! अङ्गीक्रियते । तथा शाखान्तरोक्तोऽपि गुणः, तद्विद्योपकारकत्वात् अङ्गीकार्यः इत्यर्थः ॥ ५ ॥

[सूत्राणि—१ सर्ववेदान्त, २ भेदान्नेति, ३ स्वाध्यायस्य, ४ दर्शयति, ५. उपसंहारो]

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

—o—

---

[1] उपसंहारः कर्तव्यः—द.

(८4) अन्यथात्वाधिकरणम् ॥३-३-२॥ (सू. 6-9)

[उद्गीथप्राणविद्या उद्गातृप्राणविद्या च छां.उ. 1-2 बृ.उ. 3-3]

[अधिकरणार्थः—वाजसनेयक-छान्दोग्यगतयोः उद्गीथविद्ययोर्नानात्वमेव]

३६०. **अन्यथात्वं शब्दादिति चेन्नाऽविशेषात् ॥ ३-३-६ ॥** (पू)

[अवान्तरसङ्गतिः]

एवं—चोदनाद्यविशेषात् विद्यैकत्वम्; एकत्वे च गुणोपसंहारः कर्तव्यः—इत्युक्तम्। अतः परं, काश्चन विद्याः अधिकृत्य, प्रत्यभिज्ञा[1]हेतु[1]चोदना[2]द्यविशेषः[2] अस्ति ? न ?—इति निरूप्य निर्णीयते।

[विचारणीयविषयोपस्थापनं तच्छुद्धीकरणं च]

अस्ति [3]उद्गीथ[3]विद्या, वाजिनां छन्दोगानां च। वाजिनां तावत्, 'द्वया ह प्राजापत्या देवाश्चासुराश्च' (बृ.उ. 3-3-1)

---

एवमिति। सामान्येन उपासनशास्त्रेषु सर्वशाखाप्रत्ययन्यायस्यावतीर्णत्वमुक्तम्। तत्र भेदाभेदहेतुसद्भावासद्भावौ विद्याविशेषेषु निरूप्येते — इति सङ्गतिः। वैश्वानर-विद्यादिकायाः चोदनाद्यविशेषात् विद्यैक्यमुक्तम्। अत्राऽपि तथा स्यात् — इति शङ्कया अवान्तरसङ्गतिः।

---

[सूत्रार्थः। **शब्दात्**—वाजसनेयकीयोद्गीथविद्यायामुद्गानकर्तरि, छान्दोग्यगतायां च उद्गानकर्मणि प्राणदृष्टिविधिरूपात् शब्दविशेषात्, **अन्यथात्वम्**—उभयोर्मिथो रूपभेदः, **इति चेत् न**—एवं शङ्कनं न साधु, **अविशेषात्**—उभयत्राऽपि उद्गानकर्मण्येव प्राणदृष्टिविधानेन-रूपभेदाभावात्॥]

'उद्गातरि च तत्कर्मण्यध्यासस्य विधानतः। विद्यैक्यं नेति चेन्मैवं ह्यविशेषादुपक्रमे॥' (ब्र.प. 360)

---

[1] हेतुभूत—ड. [2] दि विशेषः – ड. [3] उद्गीत—अ.

इत्यारभ्य,

'[1]ते ह देवा[1]ऊचुः ; हन्ताऽसुरान् यज्ञ उद्गीथेनाऽत्ययाम' (बृ.उ. 3-3-1)

इति, उद्गीथेन असुर[2]विध्वंसनं[2]प्रतिज्ञाय, उद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा,

'अथ हेममासन्यं प्राणमूचुः' (बृ.उ. 3-3-7)

इत्यादिना, उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा,

'भवत्यात्मना, पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद' (बृ.उ. 3-3-7)

इति, शत्रुपराजयफलाय, उद्गीथे प्राणदृष्टिर्विहिता ।

एवं छन्दोगानामपि,

'देवासुरा ह वै यत्र संयेतिरे' (छां.उ. 1-2-1)

इत्यारभ्य,

'तद्ध देवा उद्गीथमाजह्रुः ; [3]अनेनैनानभि[3]हनिष्यामः' (छां.उ. 1-2-1)

इति, उद्गीथेन असुरपराभवं प्रतिज्ञाय, तद्वदेव, उद्गीथे वागादिदृष्टौ दोषमभिधाय,

'[4]अथ ह[4] य एवाऽयं[5]मुख्यः प्राण[5]स्तमुद्गीथमुपासांचक्रिरे (छां.उ. 1-2-7)

इत्यादिना, उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा,

'यथाऽश्मानमाखणमृत्वा विध्वंसते, [6]एवं हैव[6] स विध्वंसते ; य एवंविदि पापं कामयते' (छां.उ. 1-2-8)

इति, शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता । वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणात्, वेदनविषयो विधिः कल्प्यते । उद्गीथविद्यायाः [7]क्रत्वर्थत्वेन[7] क्रतुसाद्गुण्यफलत्वेऽपि, आर्थवादिकमपि फलं [8]तदविरुद्धं[8] ग्राह्यमेवेति देवताधि-

---

**द्वयाः**—द्विविधाः । **अत्ययाम**—जयाम । **आसन्यम्**—मुख्यम् । **भवत्यात्मनेति** । अस्य द्विषन् भ्रातृव्यः अरातिः, पराभवतीत्यर्थः । **संयेतिरे**—युद्धं चक्रुः ।।

**आखणमिति** । आखन्यत इति आखणम्—मृत्पिण्डः । यथा मृत्पिण्डः अश्मानं प्राप्य विध्वंसते इत्यर्थः । **उद्गीथ ...फलत्वेऽपीति** । फलसाधनत्वश्रवणे सति हि ! विधिकल्पनम् ।

---

[1] ह वा देवा—त.न. [2] विध्वंसं—वा. [3] अनेनैतानभि—थ.
[4] अथ—थ.ल. [5] मुख्यप्राणः—न. [6] एवं ह वै—न.थ.
[7] क्रत्वर्थत्वे—द. [8] तद्विरुद्धं—थ.

**करणे** (ब्र.सू. 1–3–7) प्रतिपादितम् ।

[अधिकरणीयः संशयः]

तत्र संशय्यते–किमत्र विद्यैक्यम् ? उत न ?—इति ।

[सिद्धान्तांशस्य पूर्वपक्षतयोल्लेखः पूर्वपक्षिणः]

**किं युक्तम् ?** विद्यैक्यमिति ।

कुतः ? उभयत्र, उद्गीथस्यैव अध्यस्तप्राणभावस्य उपास्यत्वश्रवणात्, चोदनाद्यविशेषात् । फलसंयोगस्तावत् शत्रुपरिभवरूपः, न विशिष्यते । रूपमपि, अध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यात् अविशिष्टम् । चोदना च विदिधात्वर्थगता अविशिष्टा । आख्या च 'उद्गीथविद्ये'ति अविशिष्टा ॥ अत्र [1]'राद्धान्ति'च्छायया परिचोद्य परिहरति—'अन्यथात्वं शब्दादिति चेन्नाऽविशेषात्'—इति ॥

[सूत्रार्थविवरणं स्वोक्त्या]

**यदुक्त— विद्यैक्यमिति, तन्नोपपद्यते ; रूपभेदात् । रूपान्यथात्वं हि ! शब्दादेव प्रतीयते । वाजसनेयके हि—**

---

फलसाधनत्वमेव नास्ति ; उद्गीथविद्यायाः क्रतुसाद्गुण्यमेव फलमिति, अर्थवादोक्तशत्रुपराभवादौ तात्पर्याभावात् — [इति शङ्काशयः] । **प्रतिपादितमिति** । अर्थवादो हि ! स्तावकत्वेन रुचिजनकः । असता गुणेन रुचिर्न जायत इति, तत्राऽपि तात्पर्यमस्त्येवेति, 'तदुपर्यपि बादरायणः' इत्यत्र प्रतिपादितमित्यर्थः । एवं विषयशुद्धिः कृता ॥

**तत्रेति** । किम् उभयत्र विद्यैक्यम् ? उतः विद्याभेदः ? । किम् उभयत्र विद्या प्रत्यभिज्ञायते ? न ? इति । किमुभयत्र उद्गीथस्यैव उपास्यत्वम् ? उत क्वचित् उद्गीथावयवः प्रणवः ; क्वचित् उद्गाता च उपास्यः ? । 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'तेभ्य एष प्राण उदगायत्' इति वाक्यद्वयं, किम् उभयत्र विहितस्योपासनस्य उद्गीथविषयतामुद्गातृविषयतां च अवगमयति ? न ? इति । यदा नाऽवगमयति ; तदा उभयत्र उद्गीथस्यैव उपास्यत्वेन विद्याप्रत्यभिज्ञानात्, विद्यैकत्वं स्यात् । यदा तु वाक्यद्वयम् उद्गीथावयवस्य प्रणवस्य उद्गातुश्च उपास्यतामवगमयतिः तदा रूपभेदेन, छान्दोग्ये वाजसनेयके च एकविद्याप्रत्यभिज्ञानाभावात् विद्याभेदः स्यात्—इति ॥

---

[1] राद्धान्त—त.थ.

'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत्' (बृ.उ. 3-3-7)

इति, [1]उद्गानस्य[1] कर्तरि प्राणदृष्ट्या असुरपराभवमुक्त्वा,

'य एवं वेद' (बृ.उ. 3-3-7)

इति, कर्तर्येव प्राणदृष्टिः, 'एवं' शब्दादवगम्यते । छान्दोग्ये—

'[2]अथ ह य[2] एवायं [3]मुख्यः[3] प्राणः, तमुद्गीथमुपासांचक्रिरे' (छां.उ. 1-2-7)

इति, उद्गानस्य कर्मणि उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा,

'य एवंविदि पापं कामयते' (छां.उ. 1-2-8)

इति 'एवं' शब्दात्, कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अतः, एकत्र कर्तरि प्राणदृष्टि-शब्दात्, अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च, रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च, विधेयभेदे सति, केवलचोदनाद्यविशेषः अकिंचित्कर इति, विद्याभेदः—इति चेत् !

[उक्तार्थनिरसनेन पूर्वपक्षिणा विद्यैक्यदृढीकरणम्]

[3]तन्न ; अविशेषात्[3] । अविशेषेण हि ! उभयत्र उद्गीथ[4]साधनक[4]पर[5]परिभवः[5], उपक्रमे प्रतीयते । वाजसनेयके—

'ते ह देवा ऊचुः ; हन्तासुरान् यज्ञ उद्गीथेनाऽत्ययाम' (बृ.उ. 3-3-1)

इति, उपक्रमे श्रूयते । [6]छान्दोग्येऽपि[6],

'तद्ध देवा उद्गीथमाजह्रुः ; [7]अनेनैना[7]नभिहनिष्याम:' (छा.उ. 1-2-1)

इति । अतः उपक्रमाविरोधाय,

'तेभ्य एष प्राण उदगायत्' (बृ.उ. 3-3-7)

---

त्वं न .... गायत् इति । उद्गातरि प्राणदृष्टिं कृतवन्तः इत्यर्थः । एवं शब्दादिति । 'एवं वेद' 'एवंविदि' इत्यत्र, 'एवं' शब्दाभ्यां कर्तरि प्राणदृष्टिः कर्मणि प्राणदृष्टिश्च कथ्यते—इत्यर्थः । केवलेति । चोदनाद्यविशेषसमुच्चय ऐक्ये प्रमाणम् । शब्दान्तरादिष्वन्यतमं भेदकमित्यर्थः ।

तन्नेति । उपक्रमाविरोधाय उपसंहारगतः कर्तृवाचिशब्दः औपचारिकः

---

[1] उद्गायनस्य—थ. [2] अथ य—द. [3] मुख्य—अ. [3] तन्न—घ. ङ.
[4] साधनकः—वा. [5] परिभवरूपः—द. [6] छान्दोग्ये—त. थ. [7] अनेनैता—द.

इति अध्यस्तप्राणभावः उद्गीथः उद्गानकर्मभूत एव, पाकादिषु ओदनादिवत्, सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते । अन्यथा, उपक्रमगतः 'उद्गीथ' शब्दः, कर्तरि लाक्षणिकः स्यात् । अतः, विद्यैक्यम् ॥ ६ ॥

[सिद्धान्तार्थकथनम्]

इति प्राप्ते, प्रचक्ष्महे—

## ३६१. न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ३-३-७ ॥ (सि)

'न वे'ति, पक्षं व्यावर्तयति । न चैतदस्ति ; यत् विद्यैक्यमिति ।

कुतः ? प्रकरणभेदात् ।

[सिद्धान्तार्थसाधकप्रकरणभेदविशदीकारः]

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां.उ. 1-1-1)

इति, प्रकृतम् उद्गीथा'वयवभूतं'[1] प्रणवं प्रस्तुत्य,

'एतस्यैवाक्षरस्योपव्याख्यानं भवति' (छां.उ. 1-1-10)

'देवासुरा ह वै यत्र संयेतिरे' (छां.उ. 1-2-1)

---

स्यादित्यर्थः ॥ ६ ॥

**न वेत्यादि** । 'उद्गीथ'शब्दस्य कृत्स्नोद्गीथपरत्वम्, 'ओमित्येतदक्षरम्' इत्यनेन व्यावर्तितम् । पञ्चभागस्य हि साम्नः द्वितीयभागः उद्गीथः । प्रस्ताव-उद्गीथ-प्रतिहार-उपद्रव-निधनाख्याः पञ्च भागाः । तेषु द्वितीयस्य उद्गीथस्य अवयवभूतः प्रणवः । तस्य

---

[सूत्रार्थः । **न वा**—विशेषाभावं विचिन्त्य कृतमिदं उद्गीथविद्यैक्यवर्णनम् नैव सङ्गतम् ; **प्रकरणभेदात्**—विधेयार्थप्रतिपादकप्रदेशरूपस्य प्रकरणस्य भिन्नत्वाद्धेतोः विद्यैक्यायोगात् ; (एकं उद्गीथाङ्गप्रणवस्य, अपरं कृत्स्नोद्गीथस्येति विशेषसत्वात्) **परोवरीयस्त्वादिवत्**—यथा ब्रह्मदृष्ट्योपासनत्वाविशेषेऽपि एकत्र परोवरीयस्त्वेन अपरत्र हिरण्मयत्वेन विलक्षणेन गुणेन विशिष्टस्य ब्रह्मण उपासनं भिन्नविद्यात्मकं तद्वत् ।]

**'नैवं कृत्स्नोद्गीथ एतदंशो च विधिभेदतः । परोवरीयस्त्ववच्च विद्याभेद इहोच्यते ॥' (ब्र.प, 361)**

---

[1] वयवं—त. भ.

इत्यारभ्य,

‘अथ ह य एवाऽयं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे’ (छां उ. 1–2–7)

इति, उद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते। वाजिनस्तु, तादृश-प्राचीनप्रकरणाभावात्,

‘हन्ताऽसुरान् यज्ञ उद्गीथेनाऽत्ययाम’ (बृ.उ. 3–3–1)

इति कृत्स्नमुद्गीथं प्रस्तुत्य,

‘अथ हेममासन्यं प्राणमूचुः, त्वं न उद्गाय’ (बृ.उ. 3–3–7)

इत्यादि कृत्स्नोद्गीथविषयमधीयते। अतः प्रकरणभेदेन विधेयभेदः; ‘विधेयभेदे[1] च रूपभेद इति, न विद्यैक्यम्।

[सूत्रे वाशब्दप्रयोगात् रूपभेद इति]

किं च—

‘अथ ह य एवाऽयं मुख्यः प्राणः, तमुद्गीथमुपासांचक्रिरे’ (छां.उ. 1–2–7)

इति पूर्वप्रकृतः उद्गीथावयवभूतः प्रणव एव, अध्यस्तप्राणभावः छन्दोगानामुपास्यः; वाजिनां तु, कृत्स्नस्य उद्गीथस्य कर्ता उद्गाता, प्राणदृष्ट्या उपास्यः—इति।

‘अथ हेममासन्यं प्राणमूचुः, त्वं न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत्’ (बृ.उ. 3–3–7)

इति उद्गातरि प्राणाध्यासं निर्दिश्य,

‘य एवं वेद’ (बृ.उ. 3–3–7)

इति, उद्गातैव अध्यस्तप्राणभावः, उपास्यो विधीयते। अतश्च रूपभेदः।

---

उद्गीथशब्देनाऽभिधानं, स्वरविशेषसिद्ध्यर्थम्। तादृशेत्यादि। उद्गीथावयवभूतप्रणवस्यैव ‘उद्गीथ’ शब्देनाऽभिधानं न प्रकृतं वाजसनेयके; ‘ओमित्येतदक्षरमुद्गीथमुपासीत’ इतीदृश-वाक्यश्रवणात्। ‘उद्गीथ’ शब्दस्य स्वतोऽसङ्कुचितवृत्तित्वात्, कृत्स्नोद्गीथपरत्वम्। उद्गीथसम्बन्धित्वे अध्यस्तप्राणभावत्वे च समानेऽपि, उद्गीथावयव-कृत्स्नोद्गीथविषयत्व-भेदात् विद्याभेदः। प्रकरणम्—विधेयार्थप्रतिपादकप्रदेशविशेषः। तद्भेदेन विधेयभेदः। विधेय....भेद इतीति। विधेयभेदे रूपभेदः फलित इत्यर्थः॥ किं चेति। यत्तु पूर्वपक्षिणा आशङ्क्य परिहृतम्; सोऽपि सिद्धान्त एवेत्यर्थः॥

---

[1] विधेयभेदेन—द.

[उक्तार्थे उपक्रमविरोधशङ्का-तत्परिहारौ]

न च—उद्गातर्युपास्ये विहिते,

'उद्गीथेनाऽत्ययाम' (बृ.उ. 3-3-1)

इत्याख्यायिकोपक्रमविरोधः-शङ्कनीयः ; उद्गातुरुपासने, उद्गीथस्य उद्गानकर्मभूतस्य अवश्यापेक्षितत्वात्, तस्याऽपि [1]'परपरिभवाख्यं'[1] फलं प्रति हेतुत्वात्। अतः, रूपभेदाद् विद्याभेद इति, चोदना[2]द्यविशेषेऽपि[2] न विद्यैक्यम्।

—'परोवरीयस्त्वादिवत्'—[3]यथा-एकस्यामपि[3] शाखायाम् उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि, हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुण-विशिष्टदृष्टिविधानम् अर्थान्तरभूतम् ॥ ७ ॥

[उक्ते सिद्धान्ते कर्मकाण्डार्थसादृश्यवर्णनम्]

## ३६२. संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ३-३-८ ॥ (सि)

'उद्गीथविद्या' इति संज्ञैक्यात्, तत्-विद्यैक्यम्, उक्तं चेत्! तत्-संज्ञैक्यं,

---

**न चेति।** न हि! उपक्रमाधिकरणे उपक्रमानवगतम् उपसंहारावगतं त्याज्यमित्युक्तम्; अपि तु उपक्रमावगतस्य न भङ्गः कार्यः इति। अत्र तु उपक्रमावगतं तदधिकं च स्वीक्रियते। 'उद्गीथेनाऽत्ययाम' इत्यस्य उद्गातृगीयमानोद्गीथे तात्पर्यमिति भावः।

**परोवरीयस्त्वादिवत्** इति सौत्रं पदम्। उपास्यैकत्वे दृष्टिविशेषणैकत्वे च सत्यपि, दृष्टिविशेषणभूतपरमात्मनः हिरण्मयत्व-परोवरीयस्त्वादिधर्ममात्रभेदात् तत्र विद्याभेदः कृतः। किं पुनः उपास्यभेदे सतीत्यर्थः। 'परोरजाः' इतिवत् परोवरीयान्। वरीयसां परः। तस्य भावः परोवरीयस्त्वम् ॥ एवं कर्म-कर्तृवैषम्यमुक्तम् ॥ ७ ॥

**संज्ञात इति।** कुण्डपायिनामयनाग्निहोत्रं मासमात्रसमाप्तिकम्। 'ज्योतिष्टोमेन यजेत'

---

[सूत्रार्थः। **संज्ञातः**—उद्गीथविद्येति संज्ञागतादैक्यात्, **तत्**—विद्यैक्यम्, **उक्तं चेत्**—उक्तमिति शङ्कनं तु, **न वा**—नैव साधु, **तदपि**—संज्ञैक्येऽपि स्वरूपे भेद इत्येतदपि, **अस्ति तु**—कर्मकाण्डस्थे नित्याग्निहोत्रे मासाग्निहोत्रे च ('अग्निहोत्र' संज्ञाया ऐक्येऽपि) विद्यत एव ॥]

'नोद्गीथोपासनमिति नामैक्यादैक्यमित्यपि। कुण्डपाय्यग्निहोत्रे च नित्ये चास्त्येकनाम हि ॥' (ब्र प.362)

---

[1] परिभवाख्यं—ग.  [2] द्यविशेषे—वा.  [3] यदा एकस्यामेव—अ.आ.

विधेयभेदेऽप्यस्त्येव यथा, 'अग्निहोत्र'संज्ञा नित्याग्निहोत्रे, कुण्डपायिना'मयनाग्निहोत्रे'[1] च। यथा च 'उद्गीथविद्ये'ति, छान्दोग्यप्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८॥

[सामञ्जस्यतः उक्तार्थदृढीकारः]

## ३६३. व्याप्तेश्च समञ्जसम् ॥ ३-३-९ ॥ (सि)

छान्दोग्ये प्रथमप्रपाठके, उत्तरास्वपि विद्यासु, उद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्य, उपास्यत्वेन व्याप्तेश्च, तन्मध्यगतस्य—

'तद्ध देवा उद्गीथमाजह्रुः' (छां.उ. 1-2-1)

इति 'उद्गीथ' शब्दस्य, प्रणवविषयत्वमेव समञ्जसम्। अवयवे च समुदायशब्दः, 'पटो दग्धः' इत्यादिषु दृश्यते। अतश्च उद्गीथावयवभूतः प्रणव एव 'उद्गीथ'-शब्दनिर्दिष्ट इति, स एव प्राणदृष्ट्योपास्यः छान्दोग्ये प्रतिपत्तव्यः। वाजसनेयके तु, कृत्स्नोद्गीथविषयः 'उद्गीथ'शब्द इति, कृत्स्नोद्गीथस्य कर्ता उद्गाता, प्राणदृष्ट्या उपास्य इति, विद्यानानात्वं सिद्धम् ॥ ९॥

इति अन्यथात्वाधिकरणम् ॥ २।

—o—

---

'वाजपेयेन यजेत' इतिवत्, विद्यानामधेयानां स्ववाक्यस्थत्वाभावेऽपि अविच्छिन्नसम्प्रदायक्रम एव विद्यानां तत्तन्नामत्वे प्रमाणम् ॥ ८ ॥

**व्याप्तेश्चेति।** प्रणवमात्रस्य 'उद्गीथ'शब्दाभिधानं पूर्वमेव पर्यवसितम्। अत्र तु 'उद्गीथ'शब्दस्य कृत्स्नोद्गीथविषयत्वाद्विद्यैक्यम्—इति शङ्कायाम् [परिहारोऽयम्]। **उत्तरास्वपीति।** 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिषु 'उद्गीथ'शब्दस्य प्रणवविषयत्वं स्फुटम्। '**पटो दग्धः**' इतीदमुदाहरणं व्याकरणोक्तम् अवयवमात्रे समुदायवाचिशब्दप्रयोगस्य॥ पटैकदेशे दग्धेऽपि हि। 'पटो दग्धः' इति प्रयोगः ॥ ९. ॥

[सूत्राणि—१ अन्यथात्वं. २ न वा प्रकरण. ३ संज्ञातः. ४ व्याप्तेश्च.]

इति अन्यथात्वाधिकरणम् ॥ ३-३-२ ॥

—o—

---

[सूत्रार्थः। **व्याप्तेश्च**—उपक्रमे इव उपसंहारेऽपि उद्गीथावयवप्रणवस्यैव उपास्यत्वेन सम्बन्धादपि, **समञ्जसम्**—तन्मध्यगते उद्गीथशब्देऽपि प्रणवविषयकत्वमेव समीचीनं स्वरसम् ॥ ]

'औपक्रम्यात्तु सर्वत्र व्याप्तया प्रणव एव हि। उपास्यत्वेनोच्यतेऽतश्छान्दोग्ये तत् समञ्जसम् ॥'(ब्र.प. 363)

---

[1] मग्निहोत्रे—त.थ.

## (85) सर्वाभेदाधिकरणम् ॥ ३-३-३ ॥

[ज्येष्ठश्रेष्ठप्राणविद्या छां.उ. 5-1, बृ.उ. 8-1-14]

[अधिकरणार्थः—कौषीतकिप्राणविद्याया छान्दोग्य-वाजसनेयगतप्राणविद्ययोः न नानात्वम्; प्रकाराभेदात् ]

## ३६४. सर्वाभेदादन्यत्रेमे ॥ ३-३-१० ॥ (सि)

[विषयशोधनम् ]

छान्दोग्य-वाजसनेयकयोः, प्राणविद्या आम्नायते—

'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद; ज्येष्ठश्च ह वै श्रेष्ठश्च भवति ।

[1] प्राणो वाव[1] ज्येष्ठश्च श्रेष्ठश्च' (छां.उ. 5-1-1)

इत्यादि । तत्र ज्येष्ठत्व-श्रेष्ठत्वगुणकं प्राणम् उपास्यं प्रतिपाद्य, वाक्-चक्षुः-श्रोत्र-मनःसु, [2]वसिष्ठत्व[2]-प्रतिष्ठात्व-सम्प(त्त्या)त्त्वा-ऽऽयतनत्वाख्यान् गुणान् प्रतिपाद्य, वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्कार्यत्वेन च प्राणस्य श्रेष्ठ्यं प्रतिपाद्य, वागादिसम्बन्धितया श्रुतान् [3]वसिष्ठत्वादीन्[3] गुणांश्च प्राणसम्बन्धितया प्रतिपादयति ।

---

सर्वेति । पूर्वाधिकरणे दृष्टिविशेषणतया प्राणः प्रस्तुतः । तद्विषयस्वतन्त्रोपासनं निरूप्यत इति सङ्गतिः । छान्दोग्येत्यादिना विषयः शोध्यते । 'प्रशस्यस्य श्रः' इति 'प्रशस्य शब्दस्य' श्रादेशात्, श्रैष्ठ्यं प्रशस्यत्वम् । 'ज्य च' इति 'प्रशस्य' शब्दस्य ज्यादेशः । 'वृद्धस्य च' इति सूत्रेण 'वृद्ध' शब्दस्य ज्यादेशः । तस्मात्, अत्र ज्यैष्ठ्यं—प्रवृद्धत्वम् । वसिष्ठ....तन शब्दैः वाक्-चक्षुः-श्रोत्र-मनसां यथाक्रमं तत्तत्कार्यजननसामर्थ्यानि विवक्षितानि । किं कौषीतकिप्राणविद्या छान्दोग्य-वाजसनेयकोक्तप्राणविद्यातो भिद्यते? न वा ! इति । किम् उभयत्र वेद्यैक्यम्? उत न? इति । किम् उभयत्र वसिष्ठत्वादिगुणकमुपासनम्? उत

---

[सूत्रार्थः । इमे—प्राणविशेषणीभूता गुणाः, अन्यत्र—कौषीतकिप्राणविद्यायामपि उपसंहर्तव्याः; सर्वाभेदात्—समस्तप्रकारेणापि अभिन्नत्वात् । ]

'कौषीतकिप्राणबुद्धावन्यरीत्यविशेषतः । अन्यत्रोक्तवसिष्ठत्वादिकमप्यत्र चिन्त्यताम् ॥' (ब्र.प. 364)

---

[1] प्राणो ह वाव—घ. च. [2] वशिष्ठत्व—थ. [3] वशिष्ठत्वादीन्—द. वशिष्ठत्वादि—थ.

एवं छान्दोग्य-वाजसनेयकयोः ज्यैष्ठ्य-श्रैष्ठ्यगुणकः [1]वसिष्ठ[1]त्वादिगुणकश्च प्राणः उपास्यः प्रतिपाद्यते ॥

कौषीतकिनां तु प्राणविद्यायां, तथैव [2]ज्यैष्ठ्य[2]-गुणकः प्राणः उपास्यः प्रतिपादितः ; न पुनः वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः, प्राणसम्बन्धितया प्रतिपादिताः ॥

[प्रकृताधिकरणीयः संशयः]

तत्र संशयः—किम् अत्र विद्या भिद्यते ? उत न ?—इति ॥

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम् ? भिद्यते—इति । कुतः ? रूपभेदात् ॥

[गुणभेदतो विद्याया भेदः]

यद्यपि उभयत्र प्राण एव ज्यैष्ठ्य-श्रैष्ठ्यगुणक उपास्यः ; तथापि एकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राणः, उपास्यः [3]प्रतीयते[3] ; इतरत्र [4]तु तद्विधुर[4] इति, उपास्यरूपभेदात् विद्याभेदः ।

[सिद्धान्तारम्भः प्रकाराभेदतो विद्याया अभेदः]

इति प्राप्ते, ब्रूमः—'सर्वाभेदादन्यत्रेमे'— । नाऽत्र विद्याभेदः ; अन्यत्र–कौषीतकिनां प्राणविद्यायामपि, इमे—वसिष्ठत्वादयो गुणाः, उपास्याः सन्ति ।

कुतः ? ; सर्वाभेदात्-प्रतिज्ञातप्राणज्यैष्ठ्य-श्रेष्ठ्योपपादनप्रकारस्य सर्वस्य, तत्राऽप्यभेदात् । तथाहि—छन्दोग-वाजसनेयिनां प्राणविद्यायाम्,

['एता ह वै देवताः] अहं[5]श्रेयसि[5]व्यूदिरे' (छां.उ. 5-1-6)

'अहंश्रेयसे विवदमानाः' (बृ.उ.8-1-7)

---

कौषीतकिनां तद्विधुरम्? इति । 'यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यनुवादाभावेऽपि वागादीनां प्राणाधीनत्वाभिधानं वसिष्ठत्वादिप्राप्तिं प्राणस्य गमयति ? न ? इति ।

न चेत् ! कौषीतकिप्राणविद्यायां वसिष्ठत्वाद्यप्राप्तेः उपासनस्य अतद्विषयत्वात्, तद्विषयातद्विषययोः विद्ययोर्भेदः । गमयति चेत् ! कौषीतकिनामपि वसिष्ठत्वादिप्राप्तेः उपासनस्य तद्विषयत्वेन रूपभेदाभावात् ऐक्यमिति ॥

इतरत्र त्विति । स्वप्रकरणस्थगुणेन नैराकाङ्क्ष्यादिति भावः । व्यूदिरे इति छान्दोग्यपाठः । विवदमाना इति वाजिनां पाठः । व्यूदिरे—विवादं चक्रुः ।

---

[1] वसिष्ठत्व—थ. [2] ज्यैष्ठ्य-श्रैष्ठ्य—अ. [3] तथा प्रतीयते—त. थ.

[4] तद्विधुर—आ. त. थ. [5] श्रेयसे—च.

इति च उपक्रम्य, वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं [1]तत्कार्यं[1] च, अविकलं प्रतिपाद्य, प्राणोत्क्रमणे सर्वेषां विशरणम् अकार्यकरत्वं चाभिऽधाय, सर्वेषां प्राणाधीनस्थितित्व-तदधीनकार्यत्वाभ्यां प्राणस्य [2]ज्यैष्ठ्य[2]मुपपादितम् ।

[उक्तार्थस्य श्रौतता]

एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम्,

'अथ हैनं वागुवाच यदहं वसि(ष्ठाऽस्मि)ष्ठोऽस्मि त्वं [3]तद्वसिष्ठो[3]ऽसि' (छां.उ. 1-5-13)

[4]इत्यादिभिः[4] अनूद्यते ।

कौषीतकिनां प्राणविद्यायामपि,प्राणज्यैष्ठ्य-श्रैष्ठ्यप्रतिपादनाय वागादिषु वसि(ष्ठा)ष्ठत्वादयः प्रतिपादिताः ।

'अथ हेमा देवताः प्रजापतिं पितरमेत्याऽब्रुवन्, को वै नः श्रेष्ठः ?' (कौषी.उ. ? ) इत्यादिना, वागादिगता गुणाः, वागादयश्च [5]देहश्च प्राणा[5]धीना इति, प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिभिः [6]स्वस्व[6]गुणानां [7]वसिष्ठ[7]त्वादीनां, प्राणाधीनत्वानुवादमात्रं तु न कृतम् । नैतावता रूपभेदः ; वागादीनां [8]वसिष्ठ[8]त्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव, प्राणस्य वागादि[9]वसिष्ठ[9]त्वादिगुणहेतुत्वस्य सिद्धत्वात् । [10]तदेव हि ![10] प्राणस्य वसिष्ठत्वादिगुणयोगित्वम् ; यत् वागादिवसिष्ठत्वादि [11]हेतुत्वम्[11] । अतः अत्राऽपि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्न इति, नास्ति विद्याभेदः ॥ १० ॥

इति सर्वाभेदाधिकरणम् ॥ ३ ॥

—o—

---

यदहं....द्वसिष्ठोसीति । अहं यत्कार्यकरणसमर्थोऽस्मि ; तस्य त्वदधीनत्वात्, तवैव तत्कार्यसामर्थ्यमित्यर्थः ॥ १० ॥

इति सर्वाभेदाधिकरणम् ॥ ३ ॥

—o—

---

[1] तत्तत्कार्यं—च.	[2] श्रैष्ठ्य—ङ.	[3] तावद्वसिष्ठोऽ—द. तावद्वशिष्ठोऽ—थ.
[4] इत्यादिना वागादिभिः—च.	[5] प्राणा—त-थ.	[6] स्व—श्रा.
[7] वशिष्ठ—थ.	[8] वशिष्ठ—थ.	[9] वशिष्ट—थ.
[10] तदेव—थ.	[11] गुणहेतुत्वम्—न.

## (86) आनन्दाद्यधिकरणम् ॥ ३-३-४ ॥ (सू. ११-१७)

[आनन्दमयविद्या—तै. उ. आन]

[अधिकरणार्थः—आनन्दादिब्रह्मगुणानां सर्वासु परविद्यासूपसंहारः]

[ससङ्गतिः सूत्रावतरणिका]

प्राणविद्याङ्गविषयम् अन्यदपि निरूपणम्, अनन्तरमेव करिष्यते ।

यथा—प्राणस्य [1]वसिष्ठ[1]त्वाद्यनुसन्धानेन विना ज्यैष्ठ्य-श्रैष्ठ्यानुसन्धानानुपपत्तेः, अनुक्तानामपि वसिष्ठत्वादीनां कौषीतकि(की)प्राणविद्यायां प्राप्तिः ; तथा-ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते, ते ब्रह्मविद्यासु सर्वास्वपि अनुसन्धेयाः ; इत्ययमर्थः प्रतिपाद्यते—

### ३६५. आनन्दादयः प्रधानस्य ॥ ३-३-११ ॥ (सि)

[विचारणीयो विषयः]

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासु उपसंहारोऽस्ति ? न ?—इति विचार्यते ।

---

अनुक्तानामपीति । 'त्वं तद्वसिष्ठ' इति वा 'प्राणो वसिष्ठ' इति वा ईदृशवचनव्यक्त्या अनुक्तानाम् इत्यर्थः ।

स्वरूपगुणानाम्—स्वरूपप्रतीत्यनुबन्धिगुणानाम् । किम् आनन्दादयो गुणाः, सर्वासु विद्यासु उपसंहार्याः ? उत यत्र श्रूयन्ते तत्रैव ?—इति । किम् आनन्दादीनाम् ऐश्वर्यादिवत् गुण्यपृथक्स्थितिमात्रम् ? उत ब्रह्मस्वरूपवत् प्रतीत्यनुबन्धित्वम् ?—इति । फल-फलिभावः स्फुटः ।

---

[सूत्रार्थः । आनन्दादयः—उपास्यभूतब्रह्मस्वरूपनिरूपकतावन्तः आनन्दत्वादयो गुणाः, सर्वासु ब्रह्मोपासनात्मिकासु विद्यासूपसंहार्याः, प्रधानस्य अभेदात्—गुणाश्रयस्य ब्रह्मणः ऐक्यात् ॥]

'आनन्दादिगुणास्तत्र स्वरूपस्य निरूपकाः । सर्वविद्यास्वनुगताः प्रधानस्याविभेदतः ॥' (ब्र.प. 365)

---

[1] वशिष्ठ—थ.

[पूर्वः पक्षः युक्तिसहितः]

अप्रकरणाधीतानाम् उपसंहारे प्रमाणाभावात् , प्रकरणश्रुतानामेवोपसंहारः—इति,

[सिद्धान्तः सयुक्तिकः]

एवं प्राप्ते ब्रूमः—'आनन्दादयः प्रधानस्य'— । 'अभेदात्' इति वर्तते । प्रधानस्य—गुणिनो ब्रह्मणः, सर्वेषूपासनेषु अभेदात् , गुण्यपृथग्भावात् गुणानाम् , सर्वत्र आनन्दादयः—तद्गुणाः उपसंहर्तव्याः ॥ ११ ॥

[प्रियशिरस्त्वादीनामपि सर्वत्रोपसंहारशङ्का-तन्निरासौ]

एवं तर्हि ! गुण्यपृथग्भावादेव आनन्दादिवत् प्रियशिरस्त्वादयोऽपि,
'तस्य प्रियमेव शिरः' (तै.उ.आन. 5–2)
इत्यादौ ब्रह्मगुणत्वेन श्रुताः, सर्वत्र प्रसज्येरन् ! ; [1]नेत्याह[1]—

३६६. **प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३-३-१२ ॥**(सि)

---

**अप्रकरणेति** । स्वप्रकरणे समानप्रकरणे च अनधीतानाम् उपसंहारे अतिप्रसङ्गादिति-भावः ॥

**अभेदादिति वर्तत इति** । 'सर्वाभेदादन्यत्रेमे' इति सूत्रस्थाभेदशब्दः अत्राऽनुवर्तते इत्यर्थः । 'सर्वाभेदात्' इति समस्तस्याप्यभेदशब्दस्यानुवर्तनमुपपद्यते ; बुद्ध्या तावतोंऽशस्य निष्कृष्य परामर्शात् । यथा—'अथ शब्दानुशासनम्' 'केषाम् शब्दानाम्' इत्यत्र 'अनुशासन' शब्दस्य इति भावः । गुणिनः इति, सौत्रं 'प्रधान'शब्दं व्याचष्टे । **अभेदात्**—ऐक्यात् । **गुण्यपृथगिति** अभेदादित्यनेन फलितम् । **गुणानाम् इति** साधारणनिर्देशः, उत्तरसूत्रशङ्कोत्थानार्थः । **आनन्दादयः**—आनन्दत्वादयः । 'द्व्येकयोः' इति भावप्रधानो निर्देशः ॥ ११ ॥

---

[सूत्रार्थः । **प्रिय....प्राप्तिः**—अब्रह्मगुणानां प्रियशिरस्त्वादीनां उपास्यविशेषणत्वाप्रसक्तिः; **भेदे हि**—ब्रह्मण्यवयवभेदे सति हि, **उपचयापचयौ**—स्थूलत्व-कृशत्वे ब्रह्मस्वरूपवर्तिनी प्रसज्येयाताम् ॥]

'ध्याने प्रियशिरस्त्वादेरप्राप्तिः सर्वदा भवेत् । शिरः पक्षादिभेदे चोपचयापचयौ ध्रुवम् ॥' (अ.प. 336)

---

[1] आनन्दाद्युपसंहारासक्तिश्च, तत्राह— द.

ब्रह्मस्वरूपगुणानां प्राप्तौ उच्य[1]मानायां[1], प्रियशिरस्त्वादीनामप्राप्तिः ; तेषाम् अब्रह्मगुणत्वात् ; ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम् । अन्यथा, शिरः-पक्ष-पुच्छाद्यवयवभेदे सति, ब्रह्मणो[2]ऽपि[2] उपचयापचयौ प्रसज्येयाताम् । तथा च सति,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इत्यादि विरुध्यते ॥ १२ ॥

[अश्रुतानामप्युपसंहारे सर्वत्राऽपि सर्वप्रसक्ति-तत्परिहारौ]

ननु-एवमेव, ब्रह्मसम्बन्धिनामेव ऐश्वर्य-[3]गाम्भीर्यौदार्य[3]-कारुण्यादीनां, गुणानां अनन्तानां गुण्यपृथक्[4]स्थितत्व[4]मात्रेण, तत्र अश्रुतानामप्युपसंहारे, सर्वे सर्वत्र प्रसज्येरन् ! ; आनन्त्यात् उपसंहाराशक्तिश्च ।

तत्राऽऽह—

## ३६७. इतरे त्वर्थसामान्यात् ॥ ३-३-१३ ॥ (सि)

'तु' शब्दः, चोद्यं व्यावर्तयति । इतरे तु—आनन्दादयः, अर्थसामान्यात् सर्वत्राऽनुवर्तन्ते । [5]ये तु[5] अर्थसमानाः-अर्थस्वरूपनिरूपणधर्मत्वेन अर्थप्रतीत्यनु[6]बन्धिनः,[6] ते अर्थस्वरूपवत् सर्वत्राऽनुवर्तन्ते । ते च गुणाः, सत्यज्ञाना[7]नन्दामलत्वानन्तत्वानि[7] ।

---

अब्रह्मगुणत्वात्—ब्रह्मगुणत्वाभावात् । 'अन्यथे'ति, [सूत्रस्थं] भेदपदं व्याचष्टे । इत्यादीति 'आदि'पदात्, 'अस्थूलमनण्वह्रस्वम्' इत्यादिवाक्यानि गृह्यन्ते ॥ १२ ॥

'एवमेवे'त्येवकारः, 'एवमेव .... प्रसज्येरन्' इति उत्तरत्राऽन्वयात् प्रसङ्गस्य अवर्जनीयत्वपरः । 'ब्रह्मसम्बन्धिनामेवे'त्यत्र 'एव'कारः, ब्रह्मसम्बन्धदार्ढ्यार्थः । ततश्च ऐश्वर्यादीनां वास्तवत्वसिद्धिर्विवक्षिता भवति ।

'अर्थस्वरूप' शब्देन धर्मिस्वरूपमुच्यते । 'अर्थस्वरूपवद्भाति समाधिः सोऽभिधीयते' इति हि शौनकवचनम् । अर्थप्रतीतिकाले प्रतीयमानत्वनियमः, सामान्यशब्दाभिहितं साम्यमित्यर्थः । ते चेति, शक्योपसंहारतां दर्शयति ।

---

[सूत्रार्थः । इतरे तु-आनन्दादयो ब्रह्मगुणास्तु, अर्थसामान्यात्—अर्थस्वरूपनिरूपणधर्मत्वतः साम्यात्, सर्वत्राऽनुवर्तन्ते ॥]

'आनन्दादिगुणैर्ब्रह्मस्वरूपस्य निरूपणात् । ब्रह्मस्वरूपसाम्याच्च तेऽनुवृत्ता इति स्थितम् ॥ (ब्र.प. 367)

---

[1] मानानां—ग. [2] हि—त.थ. [3] गाम्भीर्य—त.थ. [4] स्थितित्व—द.न.
[5] ये—त.थ. [6] बन्धिनश्च—त.थ. [7] नन्दामलत्वानि—वा. नन्तत्वादि—त. थ.

[आनन्दादीनां श्रुतितः अर्थप्रतीत्यनुबन्धित्वदर्शनम्]

'यतो वा इमानि' (तै.उ.भृ. 1-2)

इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

'आनन्दो ब्रह्म' (तै.उ.भृ. 6-1)

इति आनन्दादिभिर्हि! स्वरूपतो निरूप्यते। अतः उपास्यब्रह्मस्वरूपावगमाय, [1]सर्वासु[1] विद्यासु आनन्दादयोऽनुवर्तन्ते।

[गुणानां विद्याविशेषप्रतिनियमे हेतुः]

ये तु, निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः; तेषां गुण्यपृथक्स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात्, ये यत्र श्रुताः ते तत्रोपसंहार्याः—इति निरवद्यम् ॥ १३ ॥

[प्रियशिरस्त्वादीनामपि ब्रह्मगुणत्वाशङ्का-परिहारौ]

[2]यदि[2]—उपचयापचयप्रसङ्गात्, प्रियशिरस्त्वादयः ब्रह्मणः पुरुषविधत्व[3]रूपण[3]-मात्रार्थाः; न तु ब्रह्मगुणाः; तर्हि! [4]अतथा[4]रूपस्य ब्रह्मणः, तथात्वेन रूपणं किमर्थं क्रियते?! अतथाभूतस्य हि! तथात्वरूपणे, केनचित् प्रयोजनेन भवितव्यम्। यथा—

---

जगत्कारणतयेति। 'तज्जलानिति शान्त उपासीत' इत्यादिवाक्यविहितेषु केषुचिदुपासनेषु, जगत्कारणत्वमनुसन्धेयम्; केषुचित् न। एवं च सति, यत्राऽनुसन्धेयं, तत्र ज्ञाप्यान्तर्गतत्वात् जगत्कारणत्वं विशेषणम्। यत्र तु नाऽनुसन्धेयं तत्र, उपलक्षणम्; ज्ञाप्यानन्तर्गतत्वात्। अत एव हि! जन्मादिसूत्रभाष्ये, उपलक्षणत्वं विशेषणत्वमपि, कारणत्वस्याङ्गीकृतम्। प्रकृति-पुरुष-कालविशिष्टस्य लक्षणं, जगत्कारणत्वम्। तत्र विशेष्यस्य लक्षणम्, आनन्दादयः। तत्र विशिष्टानुसन्धाने कारणत्वमनुसन्धेयम्; न तु विशेष्यानुसन्धाने इत्यभिप्रायेण, उपलक्षितम् इत्युक्तम्। अमलत्वश्रुतिः, 'निष्कलम्' 'अपहतपाप्मा' इत्यादिः। स्वरूपतः—असाधारणाकारेण ॥ १३ ॥

यदीति। अतथाभूतस्य तथात्वरूपणे प्रयोजनं दृष्टम्। अत्र तु प्रयोजनाभावात् प्रियशिरस्त्वादिकं न रूपणमात्रम्; अपि तु गुण एवेत्यर्थः ॥

---

[1] सर्वास्वपि—द. [2] यत्तु—च. यद्यपि—थ.द.न.

[3] निरूपण—वा. [4] तथारूपस्य—वा. तथाभूतस्य—त.थ.

‘आत्मानं रथिनं विद्धि’ (कठ.उ. 3-3)

इत्यादिना, उपासकस्य तदुपकरणानां च रथि-रथादित्वरूपणम्, उपासनोपकरणभूत-शरीरेन्द्रियादिवशीकरणार्थं क्रियते—इत्युक्तम्। न चेह तथाविधं किंचित् प्रयोजनं दृश्यत इति, बलात् ब्रह्मगुणत्वं प्रियशिरस्त्वादीनाम् अभ्युपेत्यम्; तत्राऽऽह—

## ३६८. आध्यानाय प्रयोजनाभावात् ॥ ३–३–१४ ॥ (सि)

[शिरः पक्षादिरूपणोपयोगः]

प्रयोजनान्तराभावात्, आध्यानाय अयं रूपणोपदेशः क्रियते। आध्यानम्-अनुचिन्तनम्, उपासनमुच्यते।

‘ब्रह्मविदाप्नोति परम्’ (तै.उ.आन. 1-1)

इत्यत्रोपदिष्टाध्यानरूपवेदनसिद्धये हि! आनन्दमयब्रह्मप्रतिपत्त्यर्थम्, आनन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य, शिरः-पक्षादित्वेन रूपयित्वा, उपदिश्यते। यथा, अन्नमयः पुरुषोऽयं देहः, शिरः [1]पक्षादिभिः[1]

‘तस्येदमेव शिरः’ (तै.उ.आन. 1-3)

इत्यादिना बुद्धावारोप्यते; यथा च, प्राणमय-मनोमय-विज्ञानमयाः,

‘तस्य प्राण एव शिरः’ (तै.उ आन. 2-3)

इत्यादिना प्राणाद्यवयवैः बुद्धावारोप्यन्ते; एवम् एभ्योऽर्थान्तरभूतः तदन्तरात्मा आनन्दमयोऽपि, प्रिय-मोदादिभिः एकदेशैः शिरःप्रभृतित्वेन रूपितैः, आध्यानाय

---

**आध्यानमिति**। ‘स्याच्चिन्ता स्मृतिराध्यानम्’ इति हि नैघण्टुकाः। उपासनोयोगि-शास्त्रजन्यज्ञानसिद्ध्यर्थमित्यर्थः। परोक्षार्थस्य बुद्धावारोपणं, शिरः-पक्षादिरूपणादेव हि! भवति। **प्रिय....एकदेशैरिति**। अतिशयितसुखानामपि ब्रह्मसुखैकदेशत्वेन ब्रह्मणः

---

[सूत्रार्थः। **आध्यानाय**—(निरवयवस्याऽपि ब्रह्मणः प्रियाख्यशिरः सम्बन्धादिरूपणं) विहितोपासनसम्पत्तये, **प्रयोजनाभावात्**—तदतिरिक्तोपयोगस्यासम्भवात्।]

‘उपासनार्थमेवेदं रूपणं क्रियते तथा। प्रयोजनान्तराभावात् तस्माद् ब्रह्मगुणा न ते॥’ (ब्र.प. 368)

---

[1] पुच्छादिभिः—न.

बुद्ध्यारोप्यते। एवम्, आनन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीनां, न सर्वदा आनन्दमयप्रतीतावनुवर्तन्ते ॥ १४ ॥

## ३६९. आत्मशब्दाच्च ॥ ३-३-१५ ॥ (सि)

[शिरः-पक्ष-पुच्छादिरूपणस्य शास्त्रोक्तार्थसुखप्रतिपत्त्यर्थता]

'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5-2)

इति 'आत्म'शब्देन निर्देशात्, आत्मनश्च शिरः-पक्ष-पुच्छासम्भवात्, प्रियशिरस्त्वादयः तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥

[आत्मशब्दस्य अनात्मसाधारणत्वशङ्का-तत्परिहारौ]

ननु—

'अन्योऽन्तर आत्मा प्राणमयः' (तै.उ.आन. 2-2)

'अन्योऽन्तर आत्मा मनोमयः' (तै.उ.आन. 3-2)

इति, 'आत्म'शब्दस्य अनात्मन्यपि [1]पूर्वं प्रयुक्तत्वात्[1],

'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5-2)

इति 'आत्म'शब्दस्य, [2]परमात्म[2]विषयत्वं कथं निश्चीयते?; तत्राऽऽह—

---

अपरिच्छिन्नसुखत्वमुक्तं भवतीति भावः। **न सर्वदेति**। शास्त्रेण प्रतिपत्तौ बुद्ध्यारोहणाय प्रियशिरस्त्वादि प्रतिपत्तव्यम्। एवम् अपरिच्छिन्नानन्दे प्रतिपन्ने सति, उपास्तौ प्रियशिरस्त्वादिकं नाऽनुसन्धेयमित्यर्थः ॥ १४ ॥

**आत्मेति**। आत्मनो निरवयवत्वसिद्धिमुपजीव्य प्रवृत्तमिदं सूत्रमित्यभिप्रायः ॥ १५ ॥

---

[सूत्रार्थः। **आत्मशब्दात्**—असम्भावितमूर्धादिकात्मबोधकात्मशब्दस्य श्रुतौ निर्देशादपि ज्ञापकात्, रूपणं सुखप्रतिपत्त्यर्थमेव ॥]

'आत्माऽऽनन्दमयश्चेति श्रौतादेवाऽऽत्मशब्दतः। शिरआदेरभावाच्चाऽप्यात्मनो रूपणं हि तत् ॥(ब्र.प.369)

---

1 पूर्वप्रयुक्तत्वात्—वा. प्रयुक्तत्वात्—त.थ.

2 आत्म—ग.

## ३७०. आत्मगृहीतिरितरवदुत्तरात् ॥ ३-३-१६ ॥ (सि)

'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5-2)

इत्यत्र, 'आत्म'शब्देन परमात्मन एव ग्रहणम्, इतरवत्—यथा इतरत्र,

'आत्मा वा इदमेक एवाऽग्र आसीत्। .... स ईक्षत लोकान्नु सृजै'

(ऐत.उ. 1-1)?

इत्यादिषु 'आत्म'शब्देन परमात्मन एव ग्रहणं; तद्वत्।

कुत एतत्?;—'उत्तरात्'—

'सोऽकामयत। बहु स्यां प्रजायेय' (तै.उ.आन. 6-2)

इति आनन्दमयविषयात् उत्तराद्वाक्यात् ॥ १६ ॥

[उत्तरवाक्यस्य परमात्मविषयकत्वानिश्चयशङ्का-तन्निरासौ]

## ३७१. अन्वयादिति चेत्! स्यादवधारणात् ॥ ३-३-१७ ॥ (सि)

पूर्वत्र, प्राणमयादिषु अनात्मसु आत्मशब्दान्वयदर्शनात्, न उत्तरान्निश्चेतुं [1]शक्यते[1]—इति चेत्!— 'स्यादवधारणात्'—स्यादेव निश्चयः।

---

**इतरवदिति**। 'आत्मा वा इदम्' इत्यादिष्वपि, उत्तरात्—'स ईक्षते'त्यादि-वाक्यात् परमात्मन एव ग्रहणमित्यर्थः ॥ १६ ॥

**पूर्वत्रेत्यादि**। उपक्रमाधिकरणन्यायेन पूर्वानुगुणमुत्तरं नेयम्। तस्मात्, उत्तरवाक्यात्

---

[सूत्रार्थः। **आत्मगृहीतिः**—आनन्दमयवाक्यस्थात्मशब्दात् परमात्मग्रहणम्, **उत्तरात्**—भगवतः सृष्टिसङ्कल्पवाक्यात् पश्चात् श्रूयमाणात् सुनिश्चयम्, **इतरवत्**—'आत्मा वा इति' ऐतरेयगतादिव भवति ॥]

'आनन्दमय आत्मेति ह्यात्मशब्दात् परग्रहः। सङ्कल्पादुत्तरादग्र आत्मेत्याद्यात्मशब्दवत् ॥' (ब्र.प. 370)

[सूत्रार्थः। **अन्वयादिति चेत्**—उक्तेषु वाक्येषु आत्मशब्दस्य अनात्मनि वाचकतया सम्बन्धात्, उत्तरवाक्यं न आत्मत्वनिश्चायनक्षमम् इति न शङ्क्यम्; **अवधारणात्**—तस्माद्वेति पूर्ववाक्ये परमात्मपरत्वनिश्चयात्, **स्यात्**—उत्तरवाक्येऽपि परमात्मपरत्वनिश्चयाविरोधात् ॥]

'अनात्मन्यात्मशब्दस्याऽन्वयादिति न सर्वतः। एतस्मादात्मन इति परस्यैवाऽवधारणात् ॥' (ब्र.प. 371)

---

[1] शक्यः—न.

कुतः ? अवधारणात् । पूर्वत्राऽपि,

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

इति परमात्मन एव बुद्धया अवधारितत्वात् । अन्नमया[1]दन्तरे[1] प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा । तदनन्तरं च, प्राणमया[2]दन्तरे[2] मनोमये । ततो विज्ञानमये ; तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिः तदन्तराभावात् [3]उत्तराच्च[3] 'सोकामयत' इति वाक्यात् प्रतिष्ठितेति, उपक्रमेऽपि अपरमात्मनि परमात्मबुद्धया 'आत्म' शब्दान्वयः- इति निरवद्यम् ॥ १७ ॥

इति आनन्दाद्यधिकरणम् ॥ ४ ॥

—o—

---

पूर्वस्याऽऽत्मविषयत्वं न निश्चेयमित्यर्थः । अवधारितत्वात्—विषयीकृतत्वात् । एवम् उपक्रमोपक्रमे परमात्मन एव आत्मशब्दबुद्धिविषयत्वात् , न उत्तरवाक्यस्य उपक्रमबाधः इत्यर्थः । **अन्नमयादिति** । मध्ये प्राणमयादिष्वपि आत्मशब्दः, अपरमात्मबुद्धया उपचारतो न प्रयुक्तः ; अपि तु परमात्मबुद्धयैव प्रयुक्तः ॥

'अन्तः प्रविष्टः शास्ता जनानाम्' इति तत्तदन्तःप्रवेशेन नियन्तृत्वं हि ! आत्मत्वम् । तत्र प्राणमये, अन्नमयादन्तरत्वमात्रेण परमात्मबुद्धिर्जाता ; तस्याऽप्यन्तरदर्शनेन तत्राऽपि परमात्मबुद्धिर्जाता । पूर्वत्र तु निवृत्ता । उत्तरोत्तरे तदन्तरे चाऽऽत्मशब्दः प्रयुक्तः । यस्य अन्यदन्तरं नास्ति; ईक्षणादिकं च श्रुतम् , तस्मिन् परमात्मबुद्धिः आत्मशब्दश्च प्रतिष्ठितौ । एवं पूर्वत्राऽपि परमात्मबुद्धिविषय एव आत्मशब्दप्रयोगात् , अयमप्यात्मशब्दः परमात्मविषय एवेति, नात्र उपक्रमबाधः—इत्यर्थः ॥ १७ ॥

[सूत्राणि—१ आनन्दा २ प्रियशिर ३ इतरेत्व ४ आध्यानाय
५ आत्मशब्दा ६ आत्मगृही ७ अन्वयादिति ।]

इति आनन्दाद्यधिकरणम् ॥ ७ ॥

—o—

[1] दनन्तरे—च. दुत्तरे—थ. [2] दनन्तरे—च. [3] तदुत्तराच्च—छ.

(87) कार्याख्यानाधिकणरम् ।। ३-३-५ ।।

[प्राणवासस्त्वदृष्टिविद्या छां. 5–2 बृ. 8–1–14]

[अधिकरणार्थः—आचमनीयानां अपां प्राणं प्रति वासस्त्वानुसन्धानस्याप्राप्तस्य विधिः, न तु आचमनस्य]

## ३७२. कार्याख्यानादपूर्वम् ॥ ३–३–१८ ॥ (सि)

[विचारणीयविषयोपस्थापनम् ]

पूर्वप्रस्तुतप्राणविद्याशेषभूतम्—इदानीं चिन्त्यते ।

छान्दोग्य-वाजसनेयकयोः, ज्येष्ठं च श्रेष्ठं च प्राणं उपास्यमुक्त्वा, प्राणस्य वासस्त्वेन आपोऽभिधीयन्ते । छान्दोग्ये तावत्,

'स होवाच, किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवत्यनग्नो भवति'

इति ।

(छां.उ. 5–2–2) वाजसनेयके,

'किं मे वासः' ? (बृ उ. 8–1–14)

इति प्राणेन 'पृष्टाः[1]' वागादय ऊचुः,

'आपो वासः' (बृ.उ. 8–1–14)

इति ।

'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाऽऽचामन्ति । एतमेव

---

कार्येति । एकान्तरितपूर्वाधिकरणेनास्य सङ्गतिः । **लम्भुको ह वासो भवति**—वासो लब्धवान् भवति । **अनग्नः**—प्राणम् । अत्र किं प्राणविद्याङ्गमाचमनमन्यद्विधीयते ? उत आचमनीयानामपां प्राणवासस्त्वानुसन्धानम् ? । किं वेदने विधिप्रत्ययाश्रवणेऽपि, 'किं मे वासः ?' 'आपो वासः' इत्याद्युपक्रमादिपर्यालोचनया वासोदृष्टिपरत्वं प्रतीयते ? न ?—इति ।

---

[सूत्रार्थः । **कार्याख्यानात्**—अप्राप्तार्थबोधने शब्दस्य अर्थवत्त्वात् , **अपूर्वम्**—अप्राप्तं अपां प्राणवासस्त्वमेवाऽत्र विधेयम् ।]

'पूर्वाप्राप्तं प्राणवासस्त्वानुध्यानं विधीयते । अपामाचमनं नाऽत्र विधेरप्राप्तबोधनात् ॥' (ब्र.प. 372)

---

[1] दृष्टाः—न.

तदनमनग्नं कुर्वन्तो मन्यन्ते। तस्मादेवंविदशिष्यन्नाऽऽचामेत् , अशित्वा चाऽऽचामेत्। एतमेव तदनमनग्नं कुरुते ' (बृं.उ-मा.पा. 8-1-14)

इति।

[विचारणीयोंऽशः]

तत्र संशयः—किमत्र आचमनं विधीयते? उत अपां प्राणवासस्त्वानुसन्धानम्? —इति।

[पूर्वः पक्षः]

'अशिष्यन् आचामेत्' 'अशित्वा चाऽऽचामेत्' (बृ.उ.पा.मा. 8-1-14)

इति आचमने विधिप्रत्ययश्रवणात् ,

[1]'एतमेव तदनमनग्नं[1] कुरुते' (बृ.उ.मा.पा. 8-1-14)

इति वेदने विधिप्रत्ययाभावात् , अनग्नतासङ्कीर्तनस्य स्तुत्यर्थतया [2]अन्वयो[2]पपत्तेश्च, भोजनाङ्गस्याऽऽचमनस्य स्मृत्याचारप्राप्तत्वेन, विधिप्रत्ययबलात् प्राणविद्याङ्गम् आचमनान्तरं विधीयते,

[सयुक्तिकः सिद्धान्तः]

इति प्राप्ते, ब्रूमः—आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेव, इह अपूर्वम्—अप्राप्तं विधीयते; कार्याख्यानात्—अप्राप्ताख्यानात्। अप्राप्ताख्याने[3]शब्दस्य[3] अर्थवत्त्वात् इत्यर्थः।

---

न चेत्! आचमनान्तरविधिः स्यात्। प्रतीयते चेत्! आचमनीयास्वप्सु वासोदृष्टिविधिः स्यात्।

**स्तुत्यर्थतयेति**। न अनुसन्धानार्थतयेत्यर्थः। अप्राप्तपदम् , अपूर्वपदव्याख्यानम्। **इह....विधीयते इति** 'इह' शब्दः प्रकरणपरः। दृष्टिविध्यन्तरोपेतत्वं विवक्षितम्। 'यदिदं किं च आश्वभ्यः आकीटपतङ्गेभ्यः तत्तेऽन्नम्' इति तत्तत्प्राण्यदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिर्विधिरिसतेति, तत्साहचर्यादपि वासस्त्वदृष्टिविधिर्युक्त इति भावः। **अप्राप्ताख्याने इति** अप्राप्तं विधीयते, अप्राप्ताख्यानादित्युक्ते साध्याविशिष्टता स्यादिति तन्निवृत्त्यर्थम्। न हि ज्ञातज्ञापने प्रयोजनम्।

**एतदुक्तमिति**। 'एवंविदाचामेत्' इति, 'स्नात्वा भुञ्जीत' इति प्रतिपन्नस्यैवाप्राप्तत्वात् , अप्रतिपन्नार्थान्तरकल्पनायोगात् , उपक्रमोपसंहारतात्पर्यलिङ्गोपेतत्वात् , शाखाद्वयानुयायित्वाच्च,

---

[1] एतदेव तदनमनग्नं—न. एतदनमनग्नं—द. [2] अन्यथो—द. [3] शास्त्रस्य—वा.

[भोजनाङ्गाचमनस्याप्राप्तत्वतो विधेयत्वाशङ्काया निरासः]

एतदुक्तं भवति—

'किं मे वासः ? आपो वासः' (बृ.उ. 8-1-14)

'अद्भिः परिदधति' (छां.उ. 5-2-2)

'[1]एतमेव[1]तदनमनग्नं कुरुते' (बृ.उ.मा.पा. 8-1-14)

इत्युपक्रमोपसंहारयोः वाक्यस्य, अपां प्राणवासोदृष्टिपरत्वप्रतीतेः, आचमनस्य स्मृत्याचार-प्राप्तत्वात् , आचमनमनूद्य आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयते—इति ।

अत एव छान्दोग्ये,

'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' (छां.उ. 5-2-2) इति, अद्भिः परिधानमेवोक्तम् ; न आचमनम् ॥ १८ ॥

इति कार्याख्यानाधिकरणम् ॥ ५ ॥

—o—

---

प्राणवासस्त्वानुसन्धानमेव विधेयम् ; स्मृत्याचाराभ्यां प्राप्तत्वात् , तात्पर्यलिङ्गाभावात् , अप्राप्तार्थान्तरसम्भवात् एकशाखामात्रप्रतिपन्नत्वाच्च, न आचमनं विधेयमित्यर्थः ॥ १८ ॥

इति कार्याख्यानाधिकरणम् ॥ ५ ॥

—o—

---

[1] एतदेव—न.

## (८३) समानाधिकरणम् ॥ ३-३-६ ॥

[अधिकरणार्थः—अग्निरहस्य-बृहदारण्यकोक्तयोः शाण्डिल्यविद्ययोरैक्यम् ]

### ३७३. समान एवं चाऽभेदात् ॥ ३-३-१९ ॥ (सि)

[विचारणीयविषयोपस्थापनम् ]

वाजसनेयके अग्निरहस्ये, शाण्डिल्यविद्या आम्नाता—

'सत्यं [1]ब्रह्मेत्युपासीत[1] । अथ खलु क्रतुमयोऽयं पुरुषः' (अ.र. 1-10-6)

इत्यारभ्य,

' स आत्मानमुपासीत ; मनोमयं प्राणशरीरं [2]भारूपमाकाशात्मानं····सत्य-सङ्कल्पम् '[2] (अ.र. 1-10-6)

इति । तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्या आम्नायते—

'मनोमयोऽयं पुरुषो भाः सत्यम् । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा [3]यवो वा ।[3] स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति ; यदिदं किं च' (बृ.उ. 7-6-1)

इति ।

[संशयाकारप्रदर्शनम् ]

तत्र संशयः—किमत्र विद्या भिद्यते ? उत न ?—इति ।

---

**समान इति** । पूर्वाधिकरणं प्राणविद्याशेषत्वेन प्रसक्तम् । तत्पूर्वाधिकरणे, स्वरूप-प्रतीत्यन्तर्भूतानां गुणानाम्, उपसंहार्यत्वमुक्तम् । एवं सत्यसङ्कल्पत्वान्तर्भूतवशित्वादिगुणानां उपसंहार्यत्वमुच्यते—इति सङ्गतिः ॥

---

[सूत्रार्थः । **एवं च**—यथा अग्निरहस्ये तथैव बृहदारण्यकेऽपि, **समाने**—मनोमयत्वादौ एकरूपे सति, **अभेदात्**—अधिकस्यांशस्य सत्यसङ्कल्पत्वाभेदात् , विद्याऽभेदः । ]

'मनोमयत्वादितौल्ये चैक्यं शाण्डिल्यविद्ययोः । सत्यसङ्कल्पताया हि विततिर्वशितादयः ॥ (ब्र.प. 373)

---

[1] ब्रह्मेत्युपक्रम्य—द.　[2] भारूपं सत्यसङ्कल्पमाकाशात्मानम्—च.

[3] यवो वा सर्षपो वा श्यामाको वा—त.थ.

[पूर्वः पक्षः]

संयोगचोदनाख्यानाम् अविशेषेऽपि, वशित्वाद्युपास्यगुणभेदेन रूपभेदात् , विद्याभेदः,

[सिद्धान्तः सूत्रतः]

इति प्राप्ते, उच्यते—'समान एवम्'—इति । यथा अग्निरहस्ये, मनोमय-[1]प्राणशरीर-भारूप-सत्यसङ्कल्पत्व[1]-गुणगणः श्रुतः ; एवं बृहदारण्यकेऽपि, मनोमयत्वादिके समाने सति, अधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणाभेदात् , न रूपभेदः । अतः, विद्यैक्यम् ॥ १९ ॥

इति समानाधिकरणम् ॥ ६ ॥

—o—

---

किमत्र विद्या भिद्यते ? न ? इति । किम् उभयत्र रूपभेदोऽस्ति ? न ? इति । किम् अग्निरहस्ये वशित्वादिप्राप्तिरस्ति ? न ? इति । किं मनोमयभारूपसत्यसङ्कल्पत्वाम्नानमेव गुणिप्रत्यभिज्ञया वशित्वादिप्राप्तिं गमयति ? न ? इति ।

न गमयति चेत् ! वशित्वाद्यप्राप्त्या रूपभेदाद्विद्याभेदः । गमयति चेत् ! वशित्वादि-प्राप्त्या रूपाभेदात् विद्यैक्यम् ।

बृहदारण्यके यद्वशित्वादिकम् यच्च वाजसनेयके सत्यसङ्कल्पत्वादिकम् ; तदुभयमपि तुल्यार्थमिति न रूपभेदः ; सत्यसङ्कल्पत्वकार्यत्वाद्वशित्वादेः ॥ १९ ॥

इति समानाधिकरणम् ॥ ६ ॥

—o—

[1] प्राणशरीरभारूप—त.थ.

(89) **सम्बन्धाधिकरणम्** ॥ ३-३-७ ॥ (सू. 20-22)

[व्याहृतिशरीरकाक्ष्यादित्यविद्या - बृ. 7-4, 5]

[अधिकरणार्थः—उपासनाधिष्ठानभेदात् विद्याभेदनिरूपणम्]

## ३७४. सम्बन्धादेवमन्यत्राऽपि ॥ ३-३-२० ॥ (पू.)

[प्रकृतविचारणीयविषयोपस्थापनम्]

बृहदारण्यके श्रूयते—

'सत्यं ब्रह्म' (बृ.उ. 7-1-2)

इत्युपक्रम्य ।

'तद्यत् सत्यम् असौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषः ;
यश्चाऽयं [1]दक्षिणेऽक्षन्[1]' (बृ.उ. 7-5-1)

इत्युपक्रम्य, आदित्यमण्डले [2]अक्षणि च[2] सत्यस्य ब्रह्मणः व्याहृतिशरीर(क)त्वेनोपास्यत्वमुक्त्वा,

'तस्योपनिषदहरिति' (बृ.उ. 7-5-3)

अधिदैवतम्,

'तस्योपनिषदहमिति' (बृ.उ. 7-5-3)

अध्यात्मम्,

इति, द्वे उपनिषदौ—रहस्यनामनी, उपासनशेषतया आम्नायेते ।

[विचारणीयविषये संशयः]

ते, किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते ? उत उभयत्र उभे अनियमेन ?—इति संशये,

---

[सूत्रार्थः । एवम्—शाण्डिल्यविद्याविषय इव, अन्यत्रापि—व्याहृतिशरीरकोपासनेऽपि, सम्बन्धात्—उपास्यस्य ब्रह्मणः एकस्यैव अक्ष्यादित्यरूपस्थानद्वयसम्बन्धात्, एवम्—विद्यैक्यादुभयोरुभयत्रोपसंहारः ।]

'आदित्येऽक्षणि सम्बन्धाद्विद्यैक्यान्नामनी उभे । यथेच्छमुपसंहार्ये शाण्डिल्योपासने यथा ॥' (अ.प. 374)

---

[1] दक्षिणेऽक्षिन्—च. [2] अक्षणि—वा.

[पूर्वः पक्षःसूत्रतः]

सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणः, द्वयोः स्थानयोः सम्बन्धात् उपास्यैक्येन, रूपाभेदात् संयोगाद्यभेदाच्च, विद्यैक्यात्, अनियमेन—इति प्राप्तम्; तदिदमुच्यते—'सम्बन्धादेवमन्य[1]त्राऽपि'—इति[1]।

[सूत्रवाक्यार्थविवरणम्]

यथा मनोमयत्वादिगुणविशिष्ट[2]स्यैकत्वात्[2], उपास्यैक्येन [3]रूपाभेदात् विद्यैक्यात्[3], गुणोपसंहारः; एवम् अन्यत्र अक्ष्यादित्यसम्बन्धिनो ब्रह्मणः सत्यस्य एकत्वेन विद्यैक्यात्, उभयोः उभयत्रोप[4]संहारः—इति[4] ॥ २० ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, प्रचक्ष्महे—

३७५. **न वा विशेषात् ॥ ३-३-२१ ॥** (सि)

---

**सम्बन्धादिति**। [उपास्यैकत्वेन] विद्यैक्यमिति शङ्कया सङ्गतिः। **अक्षन्**—अक्षणि। **ते इति**। किम् एते नामनी यथाश्रुतस्थानव्यवस्थिते? उत उभयत्र अव्यवस्थया उपसंहार्ये—इति। किमत्र विद्यैक्यम्? उत न? इति। किं व्याहृतिशरीरत्वेनोपास्यत्वम् उभयत्र विद्यैक्यं सङ्गमयति? न? इति। किम् उपास्यगुणैक्यमात्रमभेदहेतुः? उत स्थानैक्यमपि? इति। स्थानं किम् उपास्यान्तर्गतम्? उत न? इति।

न चेत्! उपास्यगुणाभेदमात्रम् अभेदहेतुरिति, व्याहृतिशरीरत्वस्य विद्यैक्यगमकत्वात्, तदभेदेन नाम्नोर्विकल्पेनोपसंहारः। स्थानस्योपास्यान्तर्भावे, स्थानैक्यमप्यभेदहेतुरिति, व्याहृतिशरीरत्वमात्रेण विद्यैक्यानवगमेन विद्याभेदात् नाम्नोः व्यवस्थितत्वमिति ॥ **तदिदमिति** पूर्वपक्षस्य अनुत्सूत्रत्वमुच्यते ॥ २० ॥

---

[सूत्रार्थः। न वा—विद्यैक्यकृतः गुणोपसंहारः नैवाऽस्ति, **विशेषात्**—उभयत्र उपास्यरूपे विशेषसत्त्वात्, विद्याभेदस्य अवश्यसिद्धत्वात्।]

'न विद्यैक्यमिहाऽप्यस्ति रूपे चाऽस्या विशेषतः। तत्तत्स्थानविशिष्टस्य परस्योपासनादिह ॥' (ब्र.प. 375)

---

[1] त्राऽपि—श्रा.
[2] स्यैक्यात्—त.द.
[3] रूपाभावात्—थ. विद्यैक्यात्—श्रा. द.
[4] संहारः—घ. ङ. च. ठ.

[1]न चै[1]तदस्ति—यत् , विद्यैक्यादुपसंहारः—इति ।

कुतः ? ; विशेषात्—उपास्यरूपविशेषात् । ब्रह्मण एकत्वेऽपि, एकत्र आदित्यमण्डलस्थतया उपास्यत्वम् ; इतरत्र अक्ष्याधारतया उपास्यत्वमिति, स्थानसम्बन्धित्वभेदेन रूपभेदात् विद्याभेदः । नैवं शाण्डिल्यविद्यायाः उपास्यस्थानं भिद्यते ; उभयत्र हृदयाधारत्वेन उपास्यत्वात् । अतः व्यवस्थिते—इति ॥ २१ ॥

[श्रुत्या उक्तार्थदृढीकरणम् ]

३७६. **दर्शयति च ॥ ३-३-२२ ॥** (सि)

दर्शयति च, अक्ष्याधारादित्याधारयोः गुणानुपसंहारम् ;

'तस्यैतस्य तदेव रूपम् , यदमुष्य रूपम् ' (छां.उ. 1–7–5)

इत्यादिना रूपाद्यतिदेशेन । स्वतो ह्यप्राप्तौ, अतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥

इति सम्बन्धाधिकरणम् ॥ ७ ॥

—o—

---

**व्यवस्थिते इति** । नाम्नी इत्यर्थः ॥ २१ ॥

**स्वतो हीति** । विद्यैक्येन स्वतःप्राप्तौ, रूपादीनां न अतिदेशापेक्षा । तस्मात् अतिदेशः विद्याभेदनिबन्धनः । तस्मात् गुणानुपसंहारः इत्यर्थः ॥ २२ ॥

[सूत्राणि—१ सम्बन्धा. २ न वा वि. ३ दर्शय ]

इति सम्बन्धाधिकरणम् ॥ ७ ॥

—o—

---

[सूत्रार्थः । **दर्शयति च**—'तस्यैतस्य' इति वाक्येन रूपस्यातिदेशतः श्रुतिः, गुणानुपसंहारं स्फुटीकरोति । ]

**' आदित्येऽक्षणि भिन्नत्वादतिदेशो हि दृश्यते । तदेव रूपमित्येवमप्राप्तस्य हि ! युज्यते ॥' (अ.प. 376)**

---

[1] न वैतदस्ति—च. नैतदस्ति—द.

## (90) सम्भृत्यधिकरणम् ॥ ३-३-८ ॥

[अधिकरणार्थः—शाखाविशेषश्रुतानां सम्भृत्यादीनां ब्रह्मगुणानां सर्वविद्यास्वनुपसंहारः]

## ३७७. सम्भृति-द्युव्याप्त्यपि चाऽतः ॥ ३-३-२३ ॥ (सि)

[विचारणीयविषयोपस्थापनम्]

तैत्तिरीयके, राणायनीयानां खिलेषु च,

'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि ब्रह्माऽग्रे ज्येष्ठं दिवमाततान ।
ब्रह्म भूतानां प्रथमोत जज्ञे तेनाऽर्हति ब्रह्मणा स्पर्धितुं कः ?'

(तै.ब्रा. 1-8-7-26)

इति, ब्रह्मणि ज्येष्ठानां वीर्याणां सम्भृतिः, द्युव्याप्तिश्चेत्यादिगुणजातम् आम्नातम् ।

[अधिकरणीयपूर्वपक्षशरीरम्]

तेषाम् उपासनविशेषमनारभ्य अधीतानां गुणानां, सर्वासु विद्यासु उपसंहारे प्राप्ते,

[सूत्रतः सिद्धान्तार्थः]

उच्यते—'सम्भृति-द्युव्याप्त्यपि'—इति । सम्भृति-द्युव्याप्तीति,

---

**सम्भृतीति** । पूर्वाधिकरणे नाम्नोः स्थानभेदात् व्यवस्था कृता । तथा अनारभ्याधीत-सम्भृत्यादिकस्याऽपि, स्थानभेदाद् व्यवस्था—इति सङ्गतिः । **उपासनविशेषम्, अनारभ्य**—अप्रस्तुत्य ।

किं सम्भृत्यादिगुणानां सर्वासु उपसंहारः ? उत कासुचित् ? । किम् अनारभ्याधीतानां कासुचिद्विनियोगः ? उत सर्वासु ? । किं सामर्थ्यं कासुचिदेव विनियुङ्क्ते ? न ?—इति । न चेत् ! क्वचिद्विनियोगाभावात् सर्वासूपसंहारः । सामर्थ्यं क्वचिद्विनियोजकं चेत् !

---

[सूत्रार्थः । **सम्भृतिद्युव्याप्त्यपि**—ब्रह्मगतः वीर्यसम्भारः द्युलोकव्याप्तिश्चेत्युभयमपि, **अतश्च**—अत एव स्थानभेदात् व्यवस्थाप्यमिति, न सर्वत्रोपसंहर्तव्यम् ।]

'द्युव्याप्तिः सम्भृतिश्चाऽपि स्वलग्नस्थानासु नैव हि । उपास्ये इति सर्वत्र न विद्यास्वन्वयस्तयोः ॥' (ब्र.प.377)

समाहारद्वन्द्वात् एकवद्भावः । सम्भृत्यादिकम् अनारभ्याधीतमपि, अत एव—स्थानभेदात् व्यवस्थाप्यम्; न सर्वत्रोपसंहर्तव्यम् ।

कथम् अनारभ्याधीतानां स्थानविशेषनियतत्वम्?

स्वसामर्थ्यात्—इति ब्रूमः ।

द्युव्याप्तिस्तावत्, हृदयाद्यल्पस्थानगोचरासु विद्यासु, न उपसंहर्तुं शक्या । सम्भृत्यादयोऽपि तत्सहचारिणः—तत्तुल्यदेशा इति, अल्पस्थानविषयासु विद्यासु अनुपसंहार्याः ।

[अल्पस्थानविषयोपासनेषु ज्यायस्त्वोक्तेराशयः]

शाण्डिल्य-दहरादिविद्यासु अल्पस्थानविषयासु,

'ज्यायान् पृथिव्याः' (छां.उ. 3–14–3)

'यावान् वा अयमाकाशः, तावानेषोऽन्तर्हृदय आकाशः' (छां.उ. 8–3–1)

इत्यादयः तत्र तत्र अशक्योपसंहाराः, मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य, माहात्म्यप्रतिपादनपराः ॥ २३ ॥

इति सम्भृत्यधिकरणम् ॥ ८ ॥

—o—

---

विनियोगलाभात्, कासुचिदेवोपसंहारः । **समाहारेति** । [तेन] सम्भृति-द्युव्याप्ती इति वक्तव्यम्—[इति नाशङ्का] ॥

**शाण्डिल्येत्यादि** । हृदयस्थस्य द्युव्याप्त्यादिकम् अनुपपन्नं चेत्!, कथं दहरविद्यादिषु अर्भकौकसोऽपि ज्यायस्त्वाद्युक्तिः? इत्यत्र, [समाधानमिदम्] । **माहात्म्यप्रतिपादनपराः**—स्वतोऽनन्तत्वरूपमाहात्म्यप्रतिपादनपराः । न तु एतद्विद्यायाः उपास्याकारपराः—इत्यर्थः । कथं [तर्हि] सर्वविद्यानुयायिषु आनन्दादिष्वन्तर्भूतस्य आनन्दस्य अनुसन्धेयत्वम्? इत्थम्; औपाधिकाल्पत्ववतो ब्रह्मणः, तस्मिन्नेव स्थाने औपाधिकमहत्त्वं विरुद्धमिति, तदनुपसंहार उक्तः । आनन्दाद्यन्तर्भूतम् आनन्त्यं स्वाभाविकमिति, न विरोधः । औपाधिकाल्पत्वानुसन्धानं स्वाभाविकमहत्त्वानुसन्धानं च अविरुद्धम् । स्वतः अपरिच्छिन्नं ब्रह्म, अस्मदनुग्रहाय औपाधिकाल्पत्ववत् स्थितमिति हि अनुसन्धातुं शक्यम् । अल्पत्व-महत्त्वयोः औपाधिकयोः युगपत् एकत्राऽन्वयः विरुद्ध इत्यर्थः । विरुद्धगुणविशिष्टासु ब्रह्मविषयविद्यासु नोपसंहारः इत्येव युक्तम् ॥ २३ ॥

इति सम्भृत्यधिकरणम् ॥ ८ ॥

—o—

## (91) पुरुषविद्याधिकरणम् ॥ ३-३-९ ॥

[पुरुषविद्या तै.ना. 64 छां.उ. 3-16]

[अधिकरणार्थः—तैत्तिरीयक-छान्दोग्य श्रुत्युक्तयोः पुरुषविद्ययोः, रूपाभेदादिकृतो भेदः]

### ३७८. पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३-३-२४ ॥ (सि)

[विचारणीयविषयोपस्थापनम्]

तैत्तिरीयके पुरुषविद्याऽऽम्नायते ;

'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः' (तै.ना.उ. 64)

इत्यादिका ।

छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते ;

'पुरुषो वाव यज्ञः, तस्य यानि चतुर्विंशतिवर्षाणि' (छां.उ. 3-16-1)

इत्यादिका ॥

---

पुरुषेत्यादि । द्युव्याप्तिसंनिधिसमाम्नातस्य सम्भृत्यादेः तत्समानस्थानानुप्रवेशात्, एकविद्यान्वय उक्तः । एवं ब्रह्मविद्यासंनिधिसमाम्नातपुरुषविद्यायाः तच्छेषत्वमिति सङ्गतिः ॥

किम् उभयत्र विद्यैक्यम्? उत विद्याभेदः? इति । किम् उभयत्र रूपसंयोगादेर्भेदः? उत न इति । किम् उभयत्र 'प्र ह षोडशं वर्षशतं जीवति' इति आयुःप्राप्तिरेव फलम्? उत तैत्तिरीयविद्यायां ब्रह्मप्राप्तिः फलम्?। किं तैत्तिरीयकपुरुषविद्या प्रकृतब्रह्मविद्याङ्गम्? उत न? इति । किं 'तस्यैवं विदुषः' इति निर्देशः, ब्रह्मविद्याङ्गत्वं गमयति? न? इति ॥ न चेत्! ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्राप्तिफलकत्वाभावात्, आयुःप्राप्तिरेव फलमिति, फलाभेदात् रूपाभेदाच्च विद्यैक्यं स्यात् । यदा 'तस्यैव'मिति निर्देशः ब्रह्मविद्याङ्गत्वं गमयति ; तदा तैत्तिरीयकपुरुषविद्यायाः ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्तिफलकतया, फलभेदात् रूपभेदाच्च

---

[सूत्रार्थः । पुरुषविद्यायामपि—तैत्तिरीयक-छान्दोग्योक्तायामस्यामपि विद्यायाम् मिथो-भेदोऽस्त्येव ; इतरेषाम्—अन्यान्येषां गुणानाम्, अनाम्नानात्—मिथो विभिन्नशाखायां अनधीतत्वात् ॥]

'छान्दोग्यस्था तु पुरुषविद्याऽन्या तैत्तिरीयतः । इतरेषां गुणानां च ह्यनाम्नानात् फलस्य च ॥' (ब्र.प. 378)

[संशयकोटिनिर्देशः]

तत्र संशयः—किमत्र विद्या भिद्यते ? उत न ?—इति ॥

[पूर्वः पक्षः सहेतुकः]

'पुरुषविद्या' इति नामैक्यात्, पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात्, तैत्तिरीयके फलसंयोगाश्रवणात्,

'प्र ह षोडशं वर्षशतं जीवति' (छां.उ. 3-16-7)

इति छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वात्, फलसंयोगस्याऽप्यविशेषात् विद्यैक्यम् ॥

[सिद्धान्तप्रदर्शनं सूत्रार्थविवरणतः]

इति प्राप्ते, उच्यते—उभयत्राऽऽम्नातयोः विद्ययोः पुरुषविद्यात्वेऽपि, विद्याभेदः अस्त्येव ।

कुतः ?—'इतरेषाम् अनाम्नानात्'—। एकस्यां शाखायामाम्नातानां गुणानाम्, अन्यत्र अनाम्नानात् । तथा हि—

'यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि' (तै.ना.उ. 64)

इत्यादयः तैत्तिरीयके आम्नाताः, छान्दोग्ये सवनत्वेन नाऽऽम्नायन्ते । त्रेधा विभक्त पुरुषायुषं, छांन्दोग्ये सवनत्वेन कल्प्यते । [1]छांन्दोग्ये[1] श्रुतानाम् [2]अशिशिषादीनां[2] दीक्षादि[3]त्वकल्पनं[3], तैत्तिरीयके न कृतम् । यजमान-पत्न्यादिपरिकल्पनं च अन्यथा । अतः रूपम् उभयत्र भिद्यते ।

तथाफलसंयोगोऽपि भिद्यते । तैत्तिरीयके हि ! पूर्वानुवाके,

'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' (तै.ना.उ. 63)

---

विद्याभेदः ॥ फलसंयोगाश्रवणादिति । विरोधिफलश्रवणे सति संयोगभेदः स्यात् । तदश्रवणे आख्यारूपयोरभेदेन प्रत्यभिज्ञानात्, अनुक्तमपि अन्यतः स्वीकार्यमित्यर्थः । केवल-पुरुषविद्यायाः ब्रह्मविद्यात्वाभावात्, ब्रह्मप्राप्तिरूपं फलम् अयोग्यत्वात्, पुरुषविद्यासम्बन्धमनवाप्य पूर्वानुवाकोक्तब्रह्मविद्ययाऽन्वितं भवतीत्यभिप्रायः ॥ प्र हेति । प्रजीवतीत्यन्वयः ।

---

[1] तथा छान्दोग्ये—त. भ. [2] आशिशिषादीनां—न. [3] कल्पनं—द.

इति ब्रह्मविद्यामभिधाय, तत्फलत्वेन,

'ब्रह्मणो महिमानमाप्नोति' (तै.ना.उ. 63)

इत्युक्त्वा,

'तस्यैवं विदुषः' (तै.ना.उ. 64)

इत्यादिना आम्नाता पुरुषविद्या, [1]अस्यैव[1] ब्रह्मविदुषः यज्ञत्वकल्पनमिति गम्यते। अतः ब्रह्मविद्याङ्गत्वात्, ब्रह्मप्राप्तिरेवाऽत्र फलम्।

[ब्रह्मविद्याङ्गतोपपादनम्]

'फलवत्संनिधौ अफलं तदङ्गम्' (पू.मी.न्या. 4-1-5)

[2]इति[2]न्यायात्, तैत्तिरीयकाम्नाता पुरुषविद्या, ब्रह्मविद्याङ्गमिति [3]गम्यते[3]। छान्दोग्ये तु [4]आयुः प्राप्तिफला[4]पुरुषविद्या—इत्युक्तम्।

अतः रूप-संयोगयोर्भेदात् विद्याभेद इति, एकत्राऽऽम्नातानां गुणानाम्, [5]इतरत्र अनुपसंहारः ॥ २४ ॥

इति पुरुषविद्याधिकरणम् ॥ ९ ॥

—o—

---

फलवत्संनिधाविति। अफलत्वं च पूर्वमुक्तम्। पूर्वानुवाके, 'ब्रह्मणो महिमानमाप्नोति' इति श्रूयमाणा ब्रह्मप्राप्तिः, स्वर्गकामपदवत् अधिकारिविशेषणम्। 'ब्रह्मप्राप्तिकामः एवं कुर्यात्' इत्यर्थः। उत्तरानुवाके तदङ्गभूतं पुरुषावयवेषु यज्ञपरिकल्पनं विधाय, एवं साङ्गमभिहितायाः ब्रह्मविद्यायाः फलं ब्रह्मप्राप्तिरिति, 'ब्रह्मणो महिमानमाप्नोति' इति निगमयतीति; पुरुषविद्याया अफलत्वे 'ब्रह्मणो महिमान'मिति वाक्यद्वयं पुनरुक्तमिति [शङ्कायाः न अवकाशः] ॥ २४ ॥

इति पुरुषविद्याधिकरणम् ॥ ९ ॥

—o—

[1] तस्यैव—वा. [2] इति च—वा.

[3] गम्यते। तथैवाऽत्राप्याम्नायते-ब्रह्मणो महिमानमाप्नोति-इति।—द.

[4] आयुष्प्राप्ति—वा. [5] एकत्र—न.

(९२) वेधाद्यधिकरणम् ॥ ३-३-१० ॥

[अधिकरणार्थः — शुक्रं प्रविध्येत्येवमादीनां आथर्वणिकादिभिरधीयमानानां मन्त्राणामध्ययनाङ्गत्वमेव ; न विद्याङ्गता]

## ३७९. वेधाद्यर्थभेदात् ॥ ३-३-२५ ॥

[विचारणीयविषयोपस्थापनम्]

आथर्वणिकाः उपनिषदारम्भे,

'शुक्रं प्रविध्य हृदयं प्रविध्य' (अथ.म. ? )

[1]इत्यादीन्[1] मन्त्रान् अधीयते । सामगाश्च रहस्यब्राह्मणारम्भे,

'देव सवितः प्रसुव यज्ञं प्रसुव' (सा.र.ब्रा. ? )

[2]इत्याद्यामनन्ति । काठकाः[2] तैत्तिरीयकाश्च,

'शं नो मित्रः शं वरुणः' (तै.उ.शी.शां पा)

इत्यादिकम् । शाट्यायनिनश्च,

'श्वेताश्वो हरिनीलोऽसि' (शाट्या.शा. ? )

इत्यादिकम् । ऐतरेयिणस्तु, महाव्रतब्राह्मणमधीयते ;

'[3]इन्द्रो ह वै[3] वृत्रं हत्वा महानभवत्' (ऐत.म.ब्रा. ? )

इत्यादि । कौषीतकिनोऽपि, महाव्रतब्राह्मणमेव,

'प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रतम्' (कौषी.म.ब्रा. ? )

---

वेधेति । ब्रह्मविद्यासंनिधिसमाम्नातायाः पुरुषविद्यायाः, तदङ्गत्वमुक्तम् । एवं संनिधिसमाम्नातानां 'शंनो मित्रा'दिमन्त्राणां, ब्रह्मविद्याङ्गत्वं स्यात्—इति शङ्कया सङ्गतिः ।

---

[सूत्रार्थः । वेदाद्यर्थभेदात्—शत्रुहृदयविदारणाध्ययनाद्यर्थविशेषस्य मन्त्राङ्गित्वार्हस्य स्फुटत्वात्, मन्त्राणां न विद्याङ्गत्वम् ।]

'शं न इत्यादिमन्त्राणां विद्याङ्गत्वं न विद्यते । यथा शुक्रश्रुतौ वेधाद्यर्थभेदादनङ्गता ॥' (ब्र.प. 379)

---

[1] इत्यादिकान्—द. [2] इत्यामनन्ति । काठाः—त. थ. [3] इन्द्रो वै—त. थ.

इति । वाजसनेयिनस्तु, [1]प्रवर्ग्य[1]ब्राह्मणम्,

'देवा ह वै सत्रं निषेदुः' (वाज.प्र.ब्रा. ? )

इत्यादि ।

[संशयीयकोटिस्वरूपम्]

तत्र संशयः—किम् उपनिष[2]दारम्भेष्व[2]धीताः, 'शुक्रं प्रविध्य' 'शंनो मित्रः' इत्यादयो मन्त्राः, प्रवर्ग्यादीनि च कर्माणि, विद्याङ्गम्? उत न—इति ।

[पूर्वः पक्षः सहेतुकः]

किं युक्तम्? ; विद्याङ्गमिति ।

कुतः? ; सन्निधिसमाम्नानात् विद्याङ्गत्वप्रतीतेः ।

[वेधमन्त्रस्य अन्याङ्गत्वेऽपि 'शंन' आदेः विद्याङ्गत्वशङ्का]

यद्यपि, 'शुक्रं प्रविध्ये'त्यादीनां मन्त्राणां, प्रवर्ग्यादेश्च कर्मणः, श्रुति-लिङ्ग-वाक्यैः बलवद्भिः यथायथं कर्मसु विनियोगोऽवगम्यते ; तथापि,

'शं नो मित्रः' (तै.उ.शी.शां.)

'सहनाववतु' (तै.उ.आन.शां.)

इत्यादेर्मन्त्रस्य, अन्यत्र विनियोगाभावात्, विद्याधिकाराच्च विद्याङ्गत्वम् अवर्जनीयमिति, सर्वासु विद्यासु [3]इमे[3]मन्त्राः उपसंहर्तव्याः ।

---

प्रवर्ग्यादीनीत्यादिशब्देन महाव्रतादिकं गृह्यते । प्रवर्ग्यादेः संशयविषयत्वाभावेऽपि, आपात-प्रतीत्यनुगुणः संशय उक्तः । किं 'शुक्रं प्रविध्ये'त्यादिमंत्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गानि? न? इति । किमेषां यथायथं श्रुतिलिङ्गवाक्यैः कर्मसु विनियोगः? उत ब्रह्मविद्यायां प्रकरणाद्विनियोगः? । किमेषां प्रकरणपाठः अङ्गत्वाय? उत दिवाकीर्त्यारण्येऽनु-वाक्यतायै? ।

यदा अङ्गत्वाय, तदा प्रकरणाद्विनियोग इति विद्याङ्गत्वम् । यदा दिवाकीर्त्यारण्येऽनु-वाक्यतायै, तदा यथायथं श्रुत्यादिभिः कर्मसु विनियोगात् न विद्याङ्गत्वम् ॥

विद्याधिकारात्—विद्याप्रस्तावात् ।

---

1 प्रवर्ग्य—वा. 2 दारम्भेऽ—द. 3 ते—वा.

[सूत्रार्थविवरणतः सिद्धान्तः]

एवं प्राप्ते, प्रचक्ष्महे—'वेधाद्यर्थभेदात्'—।

'शुक्रं प्रविध्य हृदयं प्रविध्य' (अथ.म.)

'ऋतं वदिष्यामि सत्यं वदिष्यामि' (तै.उ.शी.शां.)

'[1]ऋतमवादिषं सत्यमवादिषम्[1]' (तै.उ.शी.उ.शां.)

'तेजस्वि नावधीतमस्तु मा विद्विषावहै' (तै.उ.आन.शां.)

इत्यादिभिर्लिङ्गैः अभिचाराध्ययनादिषु एषां विनियोगावगमात्, न विद्याङ्गत्वम्।

[सूत्रे वेधकण्ठोक्तेः दृष्टान्ततयाऽन्वयः]

एतदुक्तं भवति—[2]यथा,[2] 'हृदयं प्रविध्ये'त्यादिमन्त्रसामर्थ्यात्, 'शुक्रं प्रविध्येत्यादीनाम् अभिचारादिशेषत्वमवगम्यते; एवमेव 'ऋतं वदिष्यामि' 'तेजस्वि नावधीतमस्तु' इत्यादिमन्त्रसामर्थ्यादेव, [3]स्वाध्याय[3]शेषत्वं, 'शं नो मित्रः' इत्यादिमन्त्राणामवगम्यते। अतो न तेषां विद्याङ्गत्वम्—इति॥

'शुक्रं प्रविध्ये'त्यादीनां, प्रवर्ग्यादिब्राह्मणानां च इह पाठः, दिवाकीर्त्यत्वारण्येनुवाक्यत्वकृतः॥ २५॥

इति वेधाद्यधिकरणम्॥ १०॥

—o—

---

एतदुक्तमिति। सूत्रे वेधस्य कण्ठोक्तिः दृष्टान्ततयेत्यर्थः।

अरण्येनुवाक्यत्वम्। अलुक्। ननु—अरण्येनुवाक्यत्वं रहस्यत्वात्। तच्च विद्यासम्बन्धात् इति विद्याङ्गत्वम्—इति चेत्! न; तस्य अन्यथासिद्धत्वात्। अनुपनीतस्त्र्याद्यश्रवणार्थम्, अदृष्टार्थं वा तत् स्यात्। यथा—'एतदारण्यकं सर्वं नाऽव्रती श्रोतुमर्हति'—इति॥ २५॥

इति वेधाद्यधिकरणम्॥ १०॥

—o—

---

[1] ऋतमवादिषम्—थ. [2] यथा वै—द. न. [3] स्वाध्यायविधि—त. न.

## (93) हान्यधिकरणम् ॥ ३-३-११ ॥

[अधिकरणार्थः—विविधश्रुतिप्रतिपन्नयोरपि विदुषः पुण्य-पापहानोपायनयोः समन्वयेन सर्वविद्यासु चिन्तनम् ]

### ३८०. हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः स्तुत्युपगानवत् तदुक्तम् ॥ ३-३-२६ ॥ (सि)

[विचारणीयविषयोपस्थापनम् ]

छन्दोगा आमनन्ति—

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं [1]कृतात्मा[1] ब्रह्मलोकमभिसम्भ[2]वानि[2] ॥' (छां.उ. 8-13-1)

—इति । आथर्वणिकाश्च,

'तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति ।' (मुण्ड.उ. 3-1-3)

इति । शाट्यायनिनस्तु,

'तस्य पुत्रा दायमुपयन्ति ; सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्याम्' (शा. श्रु.)

[3]इत्यादि[3] । कौपीतकिनस्तु,

'तत्सुकृत-दुष्कृते धूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति ; अप्रिया दुष्कृतम्' (कौ.उ. 1-4)

इति । एवं क्वचित् पुण्य-पापयोर्हानिः, क्वचित् प्रियाप्रियेषु तत्प्राप्तिः, क्वचित् [4]उभयं च[4] श्रुतम् ।

---

**हानौ** त्विति । संनिधिसमाम्नातानां 'शुक्रं प्रविध्ये'त्यादीनाम् अतदङ्गत्वमुक्तम् ।

---

[सूत्रार्थः । **हानौ तु**—ब्रह्म प्राप्नुवतः पुरुषस्य केवलायां पुण्यादिहानौ श्रूयमाणायामपि, उपायनमप्युपसंहृत्य तत् चिन्तनीयम् ; न विकल्पः, **उपा-शेषत्वात्**—हानिवाक्यं प्रति उपायनवाक्यस्य अङ्गत्वात् , (अङ्गाङ्गिनोः समुच्चयात् ) **कुशा....नवत्**—'औदुम्बर्यः कुशाः' इत्यस्य 'कुशा वानस्पत्याः' इति वाक्यं प्रति, 'देवछन्दासि पूर्वम्' इत्यस्य 'देवासुराणां छन्दोभिः' इत्येतत् प्रति, 'समयानिषिते स्तोत्रम्' इत्यस्य 'हिरण्येन....स्तोत्रम्' इत्येतत्प्रति, 'नाध्वर्युरुपगाये'दित्यस्य 'ऋत्विज उपगायन्ती'त्येतत्प्रति च शेषत्ववत् ; **तदुक्तम्**—समुच्चये संभवति विकल्पाभ्युपगमस्याऽन्याय्यत्वं कर्ममीमांसायां प्रतिपादितम् । ]

'उपायनादिशब्दस्य हान्यादिपदशेषता । सर्वत्रोभयचिन्ताऽतः कुशाच्छन्दादिवद् भवेत् ॥' (ब्र.प 380)

---

[1] कृत आत्मा—त. थ. [2] वामि—वा. [3] इति—द. [4] उभयं—त. थ.

तदुभयम् एकैकविद्यायां श्रुतमपि, सर्वविद्याङ्गमास्थेयम् ; सर्वब्रह्मविद्यानिष्ठस्याऽपि ब्रह्म प्राप्नुवतः, पुण्य-पापप्रहाणस्य अवश्यम्भावित्वात्, प्रहीणविषयत्वाच्च उपायनस्य। तच्चिन्तनं च विधीयमानं, सर्वविद्याङ्गं भवितुमर्हति ॥

[विचारणीयविषये संशयः]

तत्रेदं विचार्यते—हानिचिन्तनम् उपायनचिन्तनम् उभयचिन्तनं च, विकल्पे(ल्प्ये)रन् ? उपसंह्रियेरन् वा ? ।

[युक्तियुक्तः पूर्वः पक्षः]

किं युक्तम् ?; [1]विकल्पे(ल्प्ये)रन्—इति[1]।

कुतः ? ; पृथगाम्नानसामर्थ्यात्। समुच्चये हि, ! [2]सर्वत्र[2] उभयानुसन्धानं स्यात्। तच्च [3]कौषीतकि[3]वाक्येनैव सिद्धमिति, अन्यत्राऽऽम्नानम् अनर्थकमेव स्यात्। अतः अनेकत्राऽऽम्नानस्य विकल्प एव प्रयोजनम्।

---

तथा संनिधिसमाम्नातहानोपायनचिन्ता अनन्तरं प्राप्तेति सङ्गतिः। **सर्व....मास्थेयमिति**। 'अङ्ग'शब्देन उपेक्षितमुच्यते। **'प्रहीणविषय'**शब्देन प्रहीणसम्बन्ध उच्यते। **उपायनम्**—अन्यत्र प्रवेशः। 'सुकृतमुपयन्ती'ति श्रुत्यनुसारात् 'उपायन'मित्युक्तम्। प्रहीणसम्बन्धित्वादुपासनस्य, प्रहीणस्य कर्मणः क्वचित् प्रवेशो ह्यवश्यंभावीत्यर्थः। **तच्चिन्तनं च विधीयमानमिति**। तत्क्रतुन्यायात्, 'एतमितः प्रेत्याऽभिसम्भवितास्मीति यस्य स्यादद्धा' इति इतिकरणश्रवणात्, 'अभिसम्भवामी'त्यनुसन्धानस्य श्रुत्या विधीयमानत्वं सिद्धम्। **सर्वविद्याङ्गमिति**। हानोपायनचिन्तनस्य तत्सिद्ध्यर्थत्वात्, तच्चिन्तनं सर्वविद्याङ्गमित्यर्थः। एवं विषयः शोधितः ॥

**विकल्पेन**—विकल्पेन तिष्ठेयुः। 'विकल्प्येरन्' इति च पाठोऽस्ति। हानेः उपायनस्य उभयस्य च चिन्तनानि विहितानि, किं विकल्पेरन् ? उत समुच्चीयेरन् ?। किम् उपायनं हानिशेषतया विद्याङ्गम् ? उत स्वतन्त्रतया ?—इति। किम् उपायनवाक्यं, शाखान्तराधीतमपि हानिवाक्यशेषम् ? उत स्वतन्त्रम् ?। किं कौषीतकिनाम् उभयाम्नानम्, उपायनवाक्यस्य हानिवाक्यशेषताविरोधि ? न ?—इति। विरोधित्वे, उपायनवाक्यस्य स्वातन्त्र्यात्, उपायनं स्वातन्त्र्येण विद्याङ्गमिति, तच्चिन्तनानां विकल्पः। उभयाम्नानं शेषत्वाविरोधि चेत् !,

---

[1] विकल्पेरन्—अा. [2] सर्वदा—वा. [3] कौषीतकी—च.

न च—अध्येतृभेदेन परिहर्तुं शक्यम्—अनेकत्राऽऽम्नानम् । [1]अविशेषपुनः[1]-श्रवणं हि ! अध्येतृभेदपरिहार्यम् । अत्र तु हानिरेव द्वयोः शाखयोः ; [2]उपायनमेव च[2] एकस्याम् ।

न च—विद्याभेदेन व्यवस्थापयितुं शक्यम् ; ‘सर्वशेषभूतम् इदमनुसन्धानम्’ इत्युक्तत्वात् ॥

[अत्र सूत्रविवरणतः सिद्धान्तः]

अत्रेदमुच्यते—‘हानौ तूपायनशब्दशेषत्वात्’—इति । ‘तु’ शब्दः पक्षं व्यावर्तयति । ‘हानौ’ इति प्रदर्शनार्थम् । केवलायां हानौ केवले च उपायने श्रूयमाणे, तयोः इतरेतरसमुच्चयः अवश्यम्भावी ।

कुतः ? उपायनशब्दशेषत्वात्—उपायनशब्दस्य हानिवाक्यशेषत्वात् । उपायन-वाक्यस्य हि ! हानिवाक्यशेषत्वमेव उचितम् ; विदुषा त्यक्तयोः [3]पुण्य-पापयोः प्रवेश[3]-स्थानवाचित्वात्—उपायनवाक्यस्य ।

[सूत्रोत्तरखण्डोक्तदृष्टान्तविवरणम्]

प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते—‘कुशाच्छन्दः स्तुत्युपगानवत्’—इति । [4]कालापिनः[4],

---

उपायनवाक्यस्य हानिवाक्यशेषत्वेन, उपायनस्य हानिशेषतया विद्याङ्गत्वमिति, चिन्तनानां समुच्चयः ॥

प्रदर्शनार्थमिति । उपायनस्याऽपीत्यर्थः । उपायन....शेषत्वादिति । उपायन-शब्दस्य अन्यत् शेषभूतमिति प्रतिभातीति तद्व्यावृत्त्यर्थम् । हानिवाक्यस्य उपायनशब्दः शेषः इत्यर्थः । विदुषेति । प्रधानस्य तदुपयोगित्वेन प्राप्तं हि ! शेषभूतम् । अत्र ब्रह्मविदुषः अपेक्षितत्वेन प्रधानं, सुकृतदुष्कृतप्रहाणम् । तदेव हि ! तस्य प्रयोजनम् । प्रहाणोपयोगी हि ! अन्यत्र प्रवेशः । तस्मात् हानिवाक्यं प्रति उपायनवाक्यं शेषभूतमित्यर्थः ॥

प्रदेशान्तरेति । हानि-प्रवेशवाक्ययोः प्रधान-शेषभावे दृष्टान्तो मा भूदिति तद्व्या-वृत्त्यर्थम् । कालापिनः—एके शाखिनः ।

---

[1] अविशेष—द.
[2] उपायनत्वे च—आ.
[3] प्रवेश—द.
[4] कौषीतकिनः—वा.

'कुशा वानस्पत्याः' (?)

इत्यामनन्ति। शाट्यायनिनां तु,

'औदुम्बर्यः कुशाः' (?)

इति वाक्यं, 'सामान्येन [1]वानस्पत्यत्वेनाऽवगताः[1] कुशाः, औदुम्बर्यः' इति [2]विशिंषत्[2], तद्वाक्यशेषतामापद्यते। तथा,

'देवासुराणां छन्दोभिः' (?)

इत्यादिना अविशेषेण देवासुराणां छन्दसां प्रसङ्गे,

'देवछन्दांसि पूर्वम्' (?)

इति वचनं, क्रमविशेषं प्रतिपादयत्, तद्वाक्यशेष[3]तां गच्छति[3]। तथा,

'हिरण्येन षोडशिनः स्तोत्रमुपाकरोति' (?)

इति अविशेषेण [4]प्राप्ते[4],

'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' (तै.सं. 6-6-11)

इति [5]विशेषविषयं[5] वाक्यं, तद्वाक्य[6]शेषतां भजते[6]। तथा,

'ऋत्विज उपगायन्ति' (?)

---

**कुशाः....मापद्यत इति**। शाखान्तराम्नातं वाक्यं वनस्पतिसामान्यवाचि। तस्य विशेषाकाङ्क्षायां, तत्समर्थकत्वेन शेषभूतमित्यर्थः। **तथेति**। देवदेवत्यानि असुरदेवत्यानि च छन्दांसि। तत्र अनिर्धारितक्रमविशेषस्य, क्रमविशेषनिर्धारणमुखेन शेषभूतमित्यर्थः। **देवासुराणामिति**। [यद्यपि] शब्दक्रमादेव छन्दःक्रमो ज्ञायते; [तथापि] अल्पाच्तरत्वात् देवशब्दस्य पूर्वनिपातसंभवेन वाक्यान्तरापेक्षणात्। **स्तोत्रम्**—गानविशेषविशिष्टोच्चारणम्। **शस्त्रम्**—एकस्वरोच्चारणम्। **उपकरणम्**—प्रस्तावः। अत एव उपाकर्मणि च 'उपाकरण'-शब्दप्रयोगः; अध्ययनारम्भत्वात्। **उपाकरोति**—प्रस्तौतीत्यर्थः। **समयाविषिते**—ईषदुदिते इत्यर्थः। [अर्धोदिते अर्धास्तमिते वा] अनिर्धारितकालविशेषस्य वाक्यस्य कालविशेषं प्रतिपादयत् वाक्यं शेषभूतमित्यर्थः। **तथेति**। सामान्यप्राप्तम् उपगानम्, ऋत्विग्विशेषे

---

[1] वानस्पत्या इत्यवगताः—द. [2] विशेषयत्—त. विशेषं—थ.

[3] भावं भजते—वा. [4] प्राप्तस्य—श्रा. [5] विशेषयत्—त.

[6] शेषतां गच्छति—श्रा. शेषत्वं भजते—थ. न. शेषभावं भजते—वा.

इति अविशेषप्राप्तस्य,

'नाऽध्वर्युरुपगायेत्' (तै.सं. 6–3–1)

इति वाक्यम्, अनध्वर्युविषयताम् अवगमयत्, तद्वाक्यशेषत्वमृच्छति।

एवं सामान्येनाऽवगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य, तच्छेषत्व-मनभ्युपगच्छद्भिः, तयोरर्थयोः विकल्पः समाश्रयितव्यः। स, च, सम्भवन्त्यां गतौ न युज्यते॥

[तदुक्तमिति सूत्रखण्डविवरणम्]

तदुक्तं, पूर्वस्मिन् काण्डे—

'अपि तु वाक्य[1]शेषस्या[1]दन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात्' (पू.मी.सू. 10–8–4) इति। तदेवं केवलहानोपायनवाक्ययोः एकवाक्यत्वात्, केवलस्य हानस्य केवलस्य च उपायनस्य अभावात्, विकल्पो नोपपद्यते। कौषीतकिनाम् उभयाम्नानम्, अविशेषपुनःश्रवणत्वेन प्रतिपत्तृभेदात् अविरुद्धम्॥ २६॥

इति हान्यधिकरणम्॥ ११॥

—o—

---

व्यवस्थापयत् वाक्यं, सामान्येनोपगानवाचिवाक्यस्य शेषभूतमित्यर्थः। अविशेषप्राप्तस्य— 'उपगानस्य' इत्यध्याहारः। इमान्युदाहरणानि कर्मविचारोक्तानि। स चेति। पाक्षिकबाध-गर्भविकल्पं विना समुच्चयेन सम्भवन्त्यामित्यर्थः॥

'तदुक्तम्' इति सूत्रखण्डः। पूर्वस्मिन् काण्डे इति, [सूत्रखण्डं] पूरयति। एकवाक्यत्वादिति। अन्योन्यशेषशेषिभावेनाऽन्वयात् एकवाक्यत्वम्। केवलस्य.... अभावात्—अप्रामाणिकत्वात्। विकल्पो नोपपद्यते—सर्वोपनिषत्सु उभयमुक्तं भवतीति विकल्पो नोपपद्यत इत्यर्थः। कौषीतकिनामिति। अन्यतरोक्तावपि अन्यतरस्य प्राप्तत्वात्, सर्वत्र हानम् उपायनं च उक्तं भवतीति अविशेषपुनःश्रवणमेव। अतः तत् प्रतिपत्तृभेदादिति वक्तुमित्यर्थः॥ २६॥

इति हान्यधिकरणम्॥ ११॥

—o—

---

[1] शेषत्वाद्—न.

(94) साम्परायाधिकरणम् ॥ ३-३-१२ ॥ (सू. २७-३१)

[पर्यङ्कविद्या—कौषी. उ. 1]

[अधिकरणार्थः—विदुषः देहादपक्रमणसमये एव पुण्य-पापयोर्निरवशेषहानचिन्तनम्]

## ३८१. साम्पराये तर्तव्याभावात् तथाह्यन्ये ॥ ३-३-२७ ॥ (सि)

[उक्तानुवादेन सङ्गत्यभिव्यञ्जनम्]

सुकृत-दुष्कृतयोः हानम् उपायनं च, सर्वासु विद्यासु चिन्तनीयम्—इत्युक्तम् ।

[विचारोपयोगी संशयः]

तद्धानं, किं देहवियोगकाले, देहादुत्क्रान्तस्य अध्वनि च ? उत देहवियोगकाले एवं ?—इति विशये,

[युक्त्या पूर्वपक्षः]

उभयत्र—इति युक्तम् ; उभयथा श्रुतत्वात् । [1]एवं हि[1] ! कौषीतकिनः समामनन्ति —

'स एतं देवयानं पन्थानमापद्य, [2]अग्निलोकमागच्छति[2]' (कोषी.उ. 1-21)

इत्युपक्रम्य,

'स आगच्छति विरजां नदीम् । तां मनसाऽत्येति । तत्सुकृत-दुष्कृते धूनुते' (कौषी.उ. 1-37)

इति । अत्र वाक्ये, अध्वनि सुकृत-[3]दुष्कृत[3]हानिः प्रतीयते । ताण्डिनस्तु—

---

ताण्डिनः—छन्दोगाः । किं विदुषः सुकृत-दुष्कृतहानं देहवियोगकाले अध्वनि च ? उत देहवियोगकाल एव ? । किम् उभयत्र हानिश्रवणम् ? देहवियोगकाल एव ? । किं

---

[सूत्रार्थः । साम्पराये—(विदुषा कार्यं हानोपायनचिन्तनं) देहवियोगकाले एव, तर्तव्याभावात्—वियोगानन्तरं तरितव्यस्य भोगस्य कस्याऽप्यभावात्, अन्ये—छन्दोगाः, तथाहि—'अस्माच्छरीरात्समुत्थाये'त्यादिना तथैव खल्वधीयते ।]

'देहादुत्क्रान्तिकाले तु पुण्य-पापविमोचनम् । भोगाद्यभावान्मध्ये च तथाह्यन्येऽप्यधीयते ॥' (ब्र.प. 381)

---

[1] एवं—त. थ. [2] अग्निलोकं गच्छति—च. [3] दुष्कृतयोः—द.

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं [1]कृतात्मा[1] ब्रह्मलोकमभिसम्भ[2]वामि[2] ॥' (छां.उ. 8-1-13)

इति । अत्र तु देहवियोग[3]काले[3]—इति प्रतीयते । शाट्यायनकेऽपि,

'तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' (शा.श्रु.) इति, पुत्रेषु दायसङ्क्रान्तिसमकालं सुकृत-दुष्कृतसङ्क्रमणं श्रूयमाणं देहवियोग[4]काले[4]—इति [5]गम्यते[5]। अतः सुकृत-दुष्कृतयोरेकदेशः, देहवियोगकाले हीयते ; शेषस्तु अध्वनि॥

[सिद्धान्तार्थः सूत्रतः]

इति प्राप्ते, उच्यते—'साम्पराये'—इति । साम्पराये—[6]देहादपक्रमण[6]काले एव, विदुषः सुकृत-दुष्कृते निरवशेषं हीयेते ।

कुतः ? ; 'तर्तव्याभावात्'—विदुषः देहवियोगात्पश्चात् सुकृत-दुष्कृताभ्यां तरितव्यभोगाभावात् । विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि ! सुकृत-दुष्कृताभ्यां [7]भोक्तव्ये सुख-दुःखे[7] न विद्येते ।

'तथा ह्यन्ये' देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्त सुखदुःखोपभोगाभावमधीयते—

'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' (छां.उ. 8-12-1)

'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य
स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8-12-2)

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छां.उ. 6-14-2)

[8]इति[8] ॥ २७ ॥

---

'सुकृत-दुष्कृते धूनुते' इति वाक्यावयवस्य, 'स एतं देवयान' मित्यस्मात् प्राक् अन्वयः ? उत यथापाठमन्वयः ? । किम् अशरीरस्य सुख-दुःखानुभवश्रवणानुरोधेन, प्रागन्वयवर्णनं न्याय्यम्? उत देवयानगत्यै सूक्ष्मदेहस्थित्यर्थं यथापाठमन्वयवर्णनं न्याय्यम् ? । किं सूक्ष्मदेह-स्थितिः, कर्मणा विना उपपद्यते ? न ? इति ॥ न चेत् ! सूक्ष्मदेहस्थितये यथापाठमन्वयस्य न्याय्यत्वात्, तथैवाऽन्वय इति उभयत्र हानिश्रवणात्, देहवियोगकाले अध्वनि च हानं स्यात् । सूक्ष्मदेहस्थितिः कर्मणा विना उपपद्यते चेत् ! प्रागन्वयवर्णनस्य न्याय्यत्वात् तथैवाऽन्वय इति, उभयत्र श्रवणाभावात् देहवियोगकाले एव सुकृत-दुष्कृतहानं स्यात् ॥

तर्तव्याभावादिति। श्रुतिवाक्ये सत्यपि अर्थस्वाभाव्यमेवाऽत्र हेतुरुक्तः ; सूत्रोक्तत्वात्॥२७॥

---

[1] कृत आत्मा—त. थ. [2] भवानि—द. न. [3] काले एव—वा. [4] कालम्—न.
[5] प्रतीयते—वा. [6] देहोत्क्रमण—पा. [7] भोक्तव्यसुख-दुःखे—द. [8] इति च—वा.

[श्रुतेः अर्थस्वाभाव्यस्य चाविरोधतः अन्वयोपपादनम्]

## ३८२. छन्दत उभयाविरोधात् ॥ ३-३-२८ ॥ (सि)

एवम् अर्थस्वाभाव्यात् सुकृत-दुष्कृतहानिकाले अवधृते सति, उभयाविरोधेन—श्रुतेः अर्थस्वभावस्य चाऽविरोधेन, छन्दतः—यथेष्टं, पदानामन्वयः वर्णनीयः। '[1]कौषीतकि[1]वाक्ये,

'तत्सुकृत-दुष्कृते धूनुते' (कौषी.उ. 1-37)

इति चरमश्रुतो वाक्यावयवः,

'एतं देवयानं पन्थानमापद्य' (कौषी.उ. 1-21)

इति प्रथमश्रुतावयवात् प्राक्, अनुगमयितव्यः इत्यर्थः ॥ २८ ॥

[विदुषो गतिश्रवणान्यथानुपपत्त्या कर्मशेषानुवृत्तिशङ्का]

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## ३८३. गतेरर्थवत्त्व[2]मुभयथाऽन्यथा[2] हि विरोधः ॥ ३-३-२९ ॥ (पू)

---

श्रुतेः—देहवियोग एव प्रहाणपरश्रुतेः। **पदानामिति**। महावाक्यापेक्षया पदस्थानीयानां वाक्यावयवानामित्यर्थः। **प्रागिति**। यथा 'अग्निहोत्रं जुहोति' 'यवागूं पचती'ति वाक्ययोः अर्थक्रमेण पाठक्रमो बाध्यते; तद्वदिहाऽपि [कौषीतकिवाक्ये] अर्थतः क्रमः [बाध्यते] इत्यर्थः ॥ २८ ॥

---

[सूत्रार्थः। **उभयाविरोधात्**—श्रुति-अर्थस्वाभाव्यविरोधमनुरुध्य, **छन्दतः**—यथेष्टं श्रुतिवाक्येऽन्वयो वक्तव्यः।]

'निश्चिते हानिकाले चोभयश्रुत्यविरोधतः। धूननाद्यर्थवाक्यस्य च्छन्दतोऽन्वय उच्यते॥' (अ.प. 382)

[सूत्रार्थः। **गतेः**—देवयानेन गतिश्रुतेः, **अर्थवत्त्वम्**—सप्रयोजनत्वम्, **उभयथा**—कर्मक्षयस्य देहवियोगसमये पथि चेति स्वीकारे एव युज्यते, **अन्यथा**—देहवियोग एव समस्तकर्मक्षयाभ्युपगमे, **विरोधो हि**—देवयानेन गतिश्रुतेर्बाधः स्पष्टः (कर्माभावे) गतेरप्यनुपपत्तेः।]

'उभयत्र क्षये चैव सम्भवोऽस्ति गतेः पथि। अन्यथा चेद्विरोधः स्याद् देवयाने गतिश्रुतेः॥' (अ.प. 338)

---

[1] कौषीतकी—च. [2] उभयधा—थ. उभयथा—त.

सुकृत-दुष्कृतयोरेकदेशस्य, देहवियोगकाले हानिः ; शेषस्य च पश्चात्—इति, उभयथा कर्मक्षये सत्येव, गतेरर्थवत्त्वम्—देवयानगतिश्रुतेः अर्थवत्त्वम् इत्यर्थः । 'अन्यथा हि विरोधः'—देहवियोगकाले [1]एव[1] सर्वकर्मक्षये, सूक्ष्मशरीरस्याऽपि[2]विनाशः[2] स्यात् । तथा सति, केवलस्य आत्मनः गमनं नोपपद्यते । अतः उत्क्रान्तिसमये, विदुषो निश्शेषकर्मक्षयः [3]नोपपन्नः[3] ॥ २९ ॥

[उक्ताशङ्कासमाधानम् ]

अत्रोत्तरम्—

३८४. **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३–३–३० ॥** (सि)

उपपन्न एव, उत्क्रान्तिकाले सर्वकर्मक्षयः ।

कथम् ? —'तल्लक्षणार्थोपलब्धेः' —क्षीणकर्मणोऽपि आविर्भूत[4]स्वरूपस्य, देह[4]-सम्बन्धलक्षणार्थोपलब्धेः ।

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8–12–2)

'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' (छां.उ. 8–12–3)

'स स्वराड् भवति ; तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7–25–2)

'स एकधा भवति त्रिधा भवति' (छां.उ. 7–26–2)

इत्यादिषु देहसम्बन्धाख्यः अर्थो हि ! उपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य, देवयानेन गमनं उपपद्यते ।

---

**नोपपन्न इति ।** करणकलेवररहितस्य प्रवृत्त्यशक्तत्वात् , सत्यसङ्कल्पत्वादेः अनाविर्भूतत्वाच्च । 'उपपन्न' इति उत्तरसूत्रारम्भसङ्घटनार्थम् [एवं व्याख्यानम् ] ॥ २९ ॥

---

[सूत्रार्थः । **उपपन्नः**— (देहवियोगसमये एव सर्वकर्मणां क्षयेऽपि) विदुषः देवयानेन गमनरूपोऽर्थः सङ्गत एव, तल्ल....ब्धेः विनष्टकर्मणोऽपि शरीरान्वयरूपार्थस्य श्रुतिषु दर्शनात् , लोकवत्—लोके फलविशेषार्थं निर्मितस्य जलाशयादेः, तत्फलनिर्वृत्तावपि स्नान-पानाद्यर्थमपि कालान्तरेऽप्यनुवृत्तिवत् देहस्याप्यनुवृत्तेः]

'कर्माभावेऽपि सूक्ष्मेण वपुषा सम्भवेद्गतिः । एकधेत्युपलब्धेश्च सस्यायेव सरांसि च ॥' (ब्र.प. 384)

---

[1] एव हि—न.  [2] नाशः—न.
[3] अनुपपन्नः—वा.  [4] स्वरूपदेह—थ.

[कर्मणो निरवशेषक्षयेऽपि गमनोपयोगिदेहान्वयोपपत्तिः]

कथं सूक्ष्मशरीरमपि आरम्भककर्मविनाशे अवतिष्ठते ? — इति चेत् ! ; विद्यामाहात्म्यात्–इति ब्रूमः । विद्या हि ! स्वयं सूक्ष्मशरीरस्य अनारम्भिकाऽपि, प्राकृत-सुख-दुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि, स्वफलभूतब्रह्म-प्राप्तिप्रदानाय, देवयानेन पथा एनं गमयितुं, सूक्ष्मशरीरं स्थापयति । [1]'लोकवत्'– यथा[1]लोके सस्यादिसमृद्ध्यर्थमारब्धे [2]तटाकादिके[2], तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि, तदेव[3]तटाकादि[3]कम् अशिथिलं कुर्वन्तः, तत्र पानीय[4]पानादि[4] कुर्वन्ति ; तद्वत् ॥ ३० ॥

[विदुषां देहपातानन्तरमपि सूक्ष्मशरीरानुवृत्तेर्विमर्शः]

अथ स्यात्—'ज्ञानिनां साक्षात्कृत[5]पर[5]तत्त्वानां, देहपातसमये कर्मणो निरव-शेषक्षयात्, देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते ; सुख-दुःखानुभवो न विद्यते'—इति यदुक्तम् ;

तन्नोपपद्यते ; वसिष्ठा(पा)वान्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानां, देहपाता-दूर्ध्वं देहान्तरसङ्क्रमः, पुत्रजन्म-विपत्त्यादिनिमित्तसुख-दुःखानुभवश्च दृश्यते—इति, अत उत्तरं पठति—

## ३८५. यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३-३-३१ ॥ (सि)

---

लक्षणशब्दः स्वरूपवाची । अकर्महेतुकदेहसम्बन्धरूपप्रमेयोपलब्धेरित्यर्थः । शरीर-त्वाकारेण सजातीयदेहसम्बन्धमात्रमेव ; न तु कर्मकृतः प्राकृतदेहः इत्यभिप्रायः । विद्या हीति । यथा पुण्यं पापं च स्वफलभूतसुखदुःखभोगाय स्वर्ग-निरयप्राप्तिहेतुं शरीरं स्थापयतीत्यर्थः । यथेति । अन्यहेतुकतयोत्पन्नस्य हेत्वभावेऽपि कार्यान्तरार्थं स्थितौ दृष्टान्त उक्तः ॥ ३० ॥

---

[सूत्रार्थः । **आधिकारिकाणाम्**—विशिष्टेन कर्मणा विशिष्टमधिकारं प्राप्तवतां वसिष्ठादीनां ज्ञानिनाम्, **यावदधिकारम्**—लब्धस्याधिकारस्य समाप्तिपर्यन्तम्, **अवस्थितिः**—अर्चिरादिगतिराहित्येन प्रकृतिमण्डले अवस्थानम् ।]

'अधिकारे नियुक्तानां स यावद्वर्ततेऽत्र हि । अवस्थितिस्तावदिति वसिष्ठादेर्न मध्यतः ॥' (अ.प. 385)

---

[1] यथा—त.थ. [2] तडागादि—त.थ. [3] तडागादि—त.थ.
[4] पानादिकं—वा. [5] परावर—द.

नाऽस्माभिः, सर्वेषां ज्ञानिनां देहपातसमये सुकृत-दुष्कृतयोर्विनाश उक्तः। अपि तु, [1]येषां ज्ञानिनां देहपातानन्तरम् अर्चिरादिका गतिः प्राप्ता; तेषां देहपातसमये सुकृत-दुष्कृतहानिरुक्ता। वसिष्ठादीनां तु आधिकारिकाणां,[1] न देहपातानन्तरम् [2]अर्चिरादि[2]गतिप्राप्तिः; प्रारब्धस्याऽधिकारस्य असमाप्तत्वात्। तेषां कर्मविशेषेण अधिकारविशेषं प्राप्तानां, यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते। प्रारब्धस्य हि! कर्मणः, भोगादेव क्षयः। अतः आधिकारिकाणां, तदारम्भकं कर्म, यावदधिकारम् अवतिष्ठते। अतः तेषां न देह[3]पातादनन्तरम्[3] अर्चिरादिगतिप्राप्तिः ॥ ३१ ॥

इति साम्परायाधिकरणम् ॥ १२ ॥

—o—

---

अधिकारः—पदम्। तेषामिति। देहपातादनन्तरप्राप्तार्चिरादिगतीनामेव विदुषां देहपातसमकाले सुकृत-दुष्कृतक्षयः; न त्वन्येषाम्। वसिष्ठादीनाम् असमाप्ताधिकाराणाम्, तद्धेतोः अनुभवैकविनाश्यस्य कर्मणः विद्यमानतया, न अर्चिरादिगतिः आसन्ना। अतः न देहपातसमकाले कर्मक्षयः—इति न दोषः ॥ ३१ ॥

[सूत्राणि—१ साम्पराये, २ छन्दतः, ३ गतेरर्थ,

४ उपपन्न, ५. यावदधि]

इति साम्परायाधिकरणम् ॥ १२ ॥

—o—

---

[1] तेषाम्—थ. [2] अर्चिरादिका—वा. [3] पातानन्तरम्—द. न.

(95) अनियमाधिकरणम् ॥ ३-३-१३ ॥

[अधिकरणार्थः—अर्चिरादिगतेः वेदान्तावगतसर्वविद्यासाधारणत्वम् ; न तु विशेषनियतत्वम् ]

## ३८६. अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥३-३-३२॥(सि)

[विचारणौपयिकः संशयः]

[1]उपकोसला[1]दिषु येषु उपासनेषु अर्चिरादिगतिः श्रूयते ; किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः ? उत सर्वेषां ब्रह्मोपासननिष्ठानाम् ?– इति संशये,

[पूर्वः पक्षः सहेतुकः]

इतरेषु अनाम्नानात् ,
'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा.उ. 5-10-1)
'श्रद्धां सत्यमुपासते' (बृ.उ. 8-2-15)

---

अनियम इति । अर्चिरादिगतेः प्रस्तुतत्वात् तन्नियमानियमचिन्तेति, अवान्तरसङ्गतिः, तत्संनिधिसमाम्नातोपासननिष्ठानामेव ? उत सर्वविद्यानिष्ठानाम् ? । किं छान्दोग्य-वाजसनेयकयोः 'तद्य इत्थं विदुः, य एवमेतद्विदुः' इति वाक्ययोः, पञ्चाग्निविद्यानिष्ठानामेव अर्चिरादिगति-श्रवणम् ? उत सर्वविद्यानिष्ठानाम् ? । 'येचेमे....सते, ये चामी....सते' इति, किं पञ्चाग्नि-विद्यानिष्ठानुद्दिश्य गतिर्विधीयते ? किम् इतरानप्युपासकान् ? । किं श्रद्धा-सत्य-तपःशब्दैः उपास्यब्रह्मोपस्थापनमुखेन, उपासनान्तरप्रतिपत्तिरस्ति ? न ? इति । किम् उपकोसलविद्यायाम् 'आचार्यस्तु ते गतिं वक्ता' इति गत्यनुवादः, उपासनान्तरप्रतिपत्तिम् उपोद्बलयति ? न ? इति ।

यदा नोपोद्बलयति, तदा ब्रह्मोपस्थापनमुखेन उपासनान्तराप्रतिपत्तेः, इतरोपासकानाम-नुद्दिष्टत्वात् , पञ्चाग्निविद्यानिष्ठानेवोद्दिश्य गतिविधानात्, छान्दोग्यादौ तद्व्यतिरिक्तानाम्

---

[सूत्रार्थः । **सर्वेषाम्**—सर्वविद्यानिष्ठानामपि साधारण्येन अर्चिरादिगतिरेवेति, **अनियमः**—विद्याविशेषनियमो नैवास्ति, (एवमङ्गीकारे एव) **शब्दानुमानाभ्याम्**—श्रुति-स्मृतिभ्याम् , **अविरोधः**—विरोधाभावः सिद्ध्यति ॥]

'सर्वेषामविशेषेण ह्यर्चिरादिकया गतिः । श्रुति-स्मृत्यविरोधाय निश्चिता मुनिसत्तमैः ।।' (ब्र.प. 386)

---

[1] उपकोशला—त.थ.

इति इतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च, तन्निष्ठानामेव ॥

[सूत्रतः सिद्धान्तवर्णनम् ]

इति प्राप्ते, अभिधीयते—'अनियमः'—इति । सर्वेषाम्—सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात्, 'तन्निष्ठानामेवे'ति नियमो नाऽस्ति । सर्वेषाम् तयैव गमने हि सति, शब्दानुमानाभ्याम्—श्रुतिस्मृतिभ्याम् अविरोधः । अन्यथा विरोध एवेत्यर्थः ॥

[सर्वविद्यानिष्ठानामपि अर्चिरादिगतेः श्रौतता]

श्रुतिस्तावत्, छान्दोग्य-वाजसनेयकयोः पञ्चाग्निविद्यायाम्, अर्चिरादिमार्गेण [1]सर्वब्रह्मो[1]पासननिष्ठानां गमनमाह—

'य एवमेतद् विदुर्ये[2]चाऽमी[2] अरण्ये श्रद्धाम् सत्यमुपासते, तेऽर्चिषमभिसम्भवन्ति' (बृ.उ. 8-12-15)

इति वाजसनेयके ;

'तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति' (छां.उ. 5-10-1)

इति छान्दोग्ये । 'य इत्थं विदुः' इति पञ्चाग्निविद्यानिष्ठान्, 'ये चेमे' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्च उद्दिश्य, [3]अर्चिरादिका गति[3]रुपदिश्यते ।

['सत्यतपः'शब्दयोः ब्रह्मपरता]

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7-16)

---

अर्चिरादिगतिश्रवणाभावात्, न सर्वविद्यानिष्ठानाम् इति स्यात् । यदा उपोद्बलयति, तदा उपासनान्तरप्रतिपत्तेः, इतरानप्युद्दिश्य विहितत्वेन छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामपि अर्चिरादिगतिश्रवणात्, सर्वब्रह्मनिष्ठानामपि अर्चिरादिगतिः स्यात्-इति ।

प्रमाणाभावादिति 'सत्य-तपः'शब्दयोर्ब्रह्मवाचकत्वे कारणाभावोऽभिप्रेतः ।

'हि सति' शब्दः सूत्रयोजनाशेषः । अविरोध इति । अस्यार्थस्य अविरोधः इत्यर्थः ।

---

[1] सर्वो—न. [2] चेमे—द. न. [3] अर्चिरादिगति—वा.

इति 'सत्य' शब्दस्य ब्रह्मणि प्रसिद्धेः, 'तपः'शब्दस्याऽपि तेनैकार्थ्यात्, 'सत्य-तपः'-शब्दाभ्याम् ब्रह्मैवाऽभिधीयते ।

श्रद्धापूर्वकं ब्रह्मोपासनं च, अन्यत्र श्रुतम्—

'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7-16)

इत्युपक्रम्य,

'श्रद्धा त्वेव विजिज्ञासितव्या' (छां.उ. 7-19)

इति ।

[अर्चिरादिगतेः सर्वविद्यासाधारणत्वे गीतास्मृतिः]

स्मृतिरपि—

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥' (भ.गी. 8-24)

इति सर्वेषाम् ब्रह्मविदाम्, अनेनैव मार्गेण गमनमित्याह । एवंजातीयकाः श्रुति-स्मृतयो बह्वयः सन्ति । एवं सर्वविद्यासाधारणी इयं गतिः, प्रागेव, 'उपकोसल'[1]विद्यादौ अनूद्यते ॥ ३२ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

—o—

---

'तपः' शब्दस्याऽपि ब्रह्मपरत्वं, 'परमं यो महत् तपः' इत्यादिषु द्रष्टव्यम् । ब्रह्मैवेति । 'स एनान् ब्रह्म गमयति' इति ब्रह्मप्राप्तिफलत्वात्, फलस्य च यथोपासन-भावित्वात्, तत्रोपास्यतया प्रतीतं 'सत्य-तपः'शब्दवाच्यं ब्रह्मैवेति च सिद्धम् । स्मृतिवचने 'ब्रह्म ब्रह्मविदो जनाः' इत्यत्र तात्पर्यम्; न विद्याविशेष उक्तः । इदम् अधिकरणम्, अर्चिरादिगतिचिन्तनस्य तत्सिद्ध्यर्थत्वात्, अर्चिरादिगतेः सर्वविद्यासु चिन्तनीयतया कृतम् ॥ ३२ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

—o—

---

[1] उपकोशला—द. न.

## (96) अक्षरध्यधिकरणम् ॥ ३-३-१४ ॥ (सू. 33-34)

[अधिकरणार्थः—अक्षरपरब्रह्मविद्योक्तानाम् अस्थूलत्वादीनां ब्रह्मगुणानां सर्वासु परविद्यासूपसंहारः]

## ३८७. अक्षरधियां त्ववरोधः सामान्य-तद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३-३-३३ ॥ (सि)

[विचारणीयविषयोपस्थापनम् ]

बृहदारण्यके श्रूयते—

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितम-स्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽ-तेजस्कमप्राण[1]मसुख[1]ममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन' .... ....
(बृ.उ. 5-8-7)

'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'
(बृ.उ. 5-8-8)

इति । तथा आथर्वणे—

'अथ परा, यया तदक्षरमधिगम्यते ; यत्तदद्रेश्यमग्राह्य[2]मगोत्रमवर्ण[2]मचक्षुः श्रोत्रं तदपाणिपादम्' (मुण्ड.उ. 1-1-5)

इति ।

---

अक्षरेति । अर्चिरादिगतेः सर्वविद्यासाधारण्यमुक्तम् । तथा अस्थूलत्वादेरपि साधारण्यं निरूप्यत इति सङ्गतिः । पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः । अत्राऽपि तथेति वा सङ्गतिः ।

---

[सूत्रार्थः । अक्षरधियाम्—अक्षरपरसम्बन्धिनीनाम् अस्थूलत्वादिप्रकारकचिन्तानाम्, अवरोधस्तु—सर्वास्वपि परविद्यासु सङ्ग्रहोऽस्त्येव, सामा....भ्याम्—उपास्यस्वरूपस्य एकत्वात् ब्रह्मणोनुसन्धेयस्यैक्ये तदन्तर्भावाच्च तद्गुणानाम्, औपसदवत्—उपसदाख्यहोमाङ्गमन्त्रेषु याजुर्वेदिकस्वरान्वयवत्, तत्—उक्त गुणानां प्रधानानुवर्तनम्, उक्तम्—पूर्वकाण्डे निरूपितम् ।]
'सर्वत्राऽस्थूलतादीनां सङ्ग्रहो ब्रह्मणोऽन्वयात् । अन्तर्भावाच्चौपसदनीत्या सा पूर्वकाण्डगा॥' (ब्र.प. 387)

---

[1] मसुख—न. [2] मगोत्रवर्ण—आ.

[संशयस्वरूपम्]

तत्र संशयः—किं, 'इमे अक्षर[1]शब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीक[2]तास्वरूपाः,[2] सर्वासु ब्रह्मविद्यासु अनुसन्धेयाः? उत यत्र श्रूयन्ते तत्रैव?—इति ।

[पूर्वः पक्षः]

किं युक्तम्?; यत्र श्रुताः तत्रैव—इति ।

कुतः?; विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात्, प्रतिषेधरूपा[3]णामेषाम्[3] आनन्दादिवत् स्वरूपावगमोपायत्वाभावाच्च । आनन्दादिभिः अवगतस्वरूपे हि ब्रह्मणि, स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते; निरालम्बनप्रतिषेधायोगात् ॥

[सूत्रार्थविवरणतः सिद्धान्तः]

एवं प्राप्ते, प्रचक्ष्महे—'अक्षरधियां त्ववरोधः'—इति । अक्षरब्रह्म[4]सम्बन्धिनीनाम्[4] अस्थूलत्वादिधियाम्, सर्वब्रह्मविद्यासु अवरोधः—सङ्ग्रहणम् इत्यर्थः ।

कुतः?; सामान्य-तद्भावाभ्याम्—सर्वेषूपासनेषु उपास्यस्याऽक्षरस्य ब्रह्मणः समानत्वात्, अस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च ।

---

प्रपञ्चेति । प्रपञ्चप्रत्यनीकं ब्रह्म; तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूलत्वादिधर्मा इत्यर्थः । किं गार्गीब्राह्मणे श्रुतम् अस्थूलत्वादिकं, तत्रैवोपसंहार्यम्? उत सर्वासु विद्यासु?।' अस्थूलत्वादीनां किं ब्रह्मासाधारणतया तत्स्वरूपनिरूपकत्वम्? उत केवलज्ञानानन्दादीनाम्? इति । किम् अस्थूलत्वादिकं विना, शङ्कितकृत्स्नदोषव्यावृत्तिप्रतीतिरस्ति? न? इति ॥ अस्ति चेत्! केवलज्ञानादीनामेव निरूपकत्वेन, अस्थूलत्वादेः अनुपसंहार्यत्वम् । न चेत्! स्वरूपनिरूपकत्वात् सर्वासूपसंहार्यत्वम् । प्रमाणाभावात्—हेत्वभावात् ॥ निरालम्बनेति । 'लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते' इत्यभिप्रायः ।

अस्थूलत्वादीति । सर्वब्रह्मविद्यासु अस्थूलत्वादिकम् अनुसन्धेयमित्यर्थः । 'सामान्य-तद्भावाभ्याम्' इति समुच्चित्यैको हेतुः ।

---

[1] एतदक्षर—त.
[2] तारूपाः—आ. वा.
[3] णामेषां गुणानाम्—वा.
[4] सम्बन्धिनाम्—च.

[अस्थूलत्वादीनां ब्रह्मस्वरूपप्रतीत्यनुबन्धिता]

एतदुक्तं भवति—असाधारणाकारेण ग्रहणं हि! वस्तुनो ग्रहणम्। न च [1]केवलमानन्दादि[1], ब्रह्मणः असाधारणमाकारमुपस्थापयति ; प्रत्यगात्मन्यपि आनन्दादेर्विद्यमानत्वात्। हेयप्रत्यनीको हि! आनन्दादिः, ब्रह्मणः असाधारणं रूपम्। प्रत्यगात्मनस्तु स्वतो हेयविरहिणोऽपि, हेयसम्बन्धयोग्यताऽस्ति। [2]हेयप्रत्यनीकत्वं[2] च, चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्। अतः, असाधारणाकारेण ब्रह्म [3]अनुसन्दधता,[3] अस्थूलत्वादिविशेषितज्ञानानन्दाद्याकारं ब्रह्म, अनुसन्धेयमिति, अस्थूलत्वादीनाम् आनन्दादिवत् ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्, सर्वासु ब्रह्मविद्यासु तथैव ब्रह्म अनुसन्धेयम्—इति ॥

[सूत्रोक्तदृष्टान्तविवरणम्]

गुणानाम् प्रधानानुवर्तित्वे, दृष्टान्तमाह—औपसदवत्'—इति। यथा जामदग्न्य-[4]चतूरात्र[4]पुरोडाशाद्युपसद्गुणभूतः सामवेदपठितः,

---

असाधारणेति। अत्र विवक्षिता प्रतीतिः, न येनकेनचिदाकारेण प्रतीतिः ; अपि तु व्यावृत्ताकारेण प्रतीतिर्विवक्षिता। तादृशप्रतीत्यन्तर्भावः अस्थूलत्वादीनामस्त्येवेत्याशयः। आकारमुपस्थापयति—स्वरूपमुपस्थापयतीत्यर्थः। विपरीतरूपम्—विरोधिरूपम्। तत्तद्धेय-शङ्काव्यावर्तकमित्यर्थः। अस्थूलत्वादिविशेषितेति, अस्थूलत्वाद्युपेतत्वमुक्तम्। स्थूलत्वादि-विरोधिशब्दाभिलप्यः आकारः अस्थूलत्वादिः ; भावान्तरस्यैव 'अभाव'शब्दार्थत्वात्। अत एव हि! अस्थूलत्वं 'सुसूक्ष्म'शब्देनोक्तं श्रुत्यन्तरे। अस्थूलत्वादिधर्मैः, यथायोग्यं तत्तद्व्यावृत्तिरवगन्तव्या। अचक्षुष्ट्वाप्राणत्वादिभिः, इन्द्रियाधीन-ज्ञान-प्राणायत्तचेष्टितजीवव्यावृत्तिः। अनणुत्व सूक्ष्मत्वादिभिः, मुक्तस्याऽपि व्यवच्छेदः। आनन्त्येन सर्वव्यवच्छेदेऽपि, शङ्कितस्थूलत्वादिव्यवच्छेदस्तु तद्विरोध्यस्थूलत्वादिभिरेव सिध्येदिति, अवश्यानुसन्धेयत्वम्। एतदधिकरणार्थमुपजीव्य पूर्वम् आनन्दादिषु अमलत्वं च सह पठितम्।

गुणानामित्यादिना, 'औपसदवत्' इति दृष्टान्तोपजीव्यमंशमाह। [यतः] दृष्टान्तः कर्मविषयः; दार्ष्टान्तिकं तु उपासनम्। जामदग्न्यचतूरात्रम्—जमदग्निना मुहुरनुष्ठितं,

---

[1] केवलानन्दादि—अ.

[2] प्रत्यनीकत्वं—

[3] अनुसन्दधतः—त.थ.

[4] चतूरात्रे—

'अग्ने वेर्होत्रं वेः' (अग्नि वैं होत्रं वे तु ?) (ताण्ड्य ब्रा. 21-10-11) इत्यादिको मन्त्रः, प्रधानानुवर्तितया [1]याजुर्वेदिकेन[1] उपांशुत्वेन प्रयुज्यते। तदुक्तं प्रथमे काण्डे—

'गुण-मुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' (पू.मी.सू. 3-2-9)

इति ॥ ३३ ॥

[उक्तार्थानुरोधे प्राप्ताया अव्यवस्थायाः परिहारः]

नन्वेवं—सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वात्, गुणानां च प्रधानानुवर्तित्वात्,

'सर्वकर्मा....सर्वगन्धः सर्वरसः' (छां.उ. 3-14-4)

इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याऽपि, अव्यवस्था [2]स्यात्!; तत्राऽऽह[2]—

## ३८८. इयदामननात् ॥ ३-३-३४ ॥ (सि)

---

चतूरात्रं नाम कर्म। तत्र पुरोडाशद्रव्यकोपसदङ्गभूतः, सामावेदपठितो मन्त्रः। 'उच्चैः साम्ना' इति वचनात, सामवेदपठितत्वेन तस्य उच्चैर्गाने प्राप्तेऽपि, 'उपांशु यजुषा' इति उपांशुपठितव्ययजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनुवर्तित्वात्, उपांशुप्रयोगः प्राप्त इत्यर्थः। व्यतिक्रमः—विरोधः। यथा प्रकरणान्तराधीतानामपि प्रधानानुवर्तित्वं दृश्यते; तथा प्रकरणान्तराधीतानामपि अस्थूलत्वादिधर्माणां प्रधानभूतधर्म्यनुवृत्तिः उपपन्नेत्यर्थः। अयं दृष्टान्तः आनन्दादेरपि तुल्य इत्यभिप्रेतः ॥ ३३ ॥

**नन्वेवमित्यादि**। अस्थूलत्वाद्यनेकगुणानां बहुशाखोक्तानां सर्वविद्यानुगतत्वे, तेषां बाहुल्यात्, प्रधानानुवर्तितया प्राप्तानां सर्वकर्मत्वादीनां चाऽनन्त्यात्, उपसंहाराशक्तिः

---

[सूत्रार्थः। **इयत्**—(यावता गुणजातेन विना अनुसन्धानस्य ब्रह्मानुसन्धानत्वमेव न सिद्ध्येत्) एतावन्मात्रम्, सर्वविद्यास्वनुसन्धेयम्, **आमननात्**—उपासनानां ब्रह्मण आभिमुख्येनाऽनुसन्धानरूपत्वाद्धेतोः ॥]

'एतावद्गुणजातस्य सर्वविद्यासु सङ्ग्रहः। येनैव गुणजातेन विना न ग्रहणं विभोः ॥' (ब्र.प. 388)

---

य[1] ाजुर्वैदिकेषु—त.थ.        [2] स्यात्—थ.

आमननम्—आभिमुख्येन मननम्, [1]अनुचिन्तनम्[1]। आमननाद्धेतोः, इयदेव गुणजातं सर्वत्र अनुसन्धेयत्वेन प्राप्तम्; यत् अस्थूलत्वादिविशेषितम् आनन्दादिकम्। येन गुणजातेन विना, ब्रह्मस्वरूपस्य इतरव्यावृत्तस्य अनुसन्धानं न [2]सम्भवति[2]; तदेव सर्वत्राऽनुवर्तनीयम्। तच्च इयदेवेत्यर्थः। इतरे तु सर्वकर्मादयः, प्रधानानुवर्तिनोऽपि, चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

—o—

---

स्यादिति चाऽभिप्रायः। इयदेवेति। ब्रह्मणो व्यावृत्ताकारानुसन्धानाय प्राप्तं गुणजातम् इयदेवेत्यर्थः ॥ ३४ ॥

[सूत्र—१ अक्षरधियां. २ इयदाम]

इति अक्षरध्यधिकरणम् ॥ १४ ॥

—o—

---

[1] चिन्तनम्—द. [2] भवति—श्रा.

(97) अन्तरत्वाधिकरणम् ॥ ३-३-१५॥ (सू.35-37)

[अधिकरणार्थः—उषस्त-कहोलयोः प्रश्न-प्रतिवचनाभ्याम् अवगता विद्या एकैव ; न भिन्ना]

## ३८९ अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३-३-३५॥

[विचारणीयस्य विषयस्योपस्थापनम् ]

बृहदारण्यके उषस्तप्रश्ने, एवमाम्नायते—

'यत् साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः, तन्मे व्याचक्ष्व' (बृ.उ. 5-4-1)

इति । तस्य प्रतिवचनम्—

'यः प्राणेन प्राणिति, स त आत्मा सर्वान्तरः ; योऽपानेनाऽपानिति, स त आत्मा' (बृ उ. 5-4-1)

इत्यादि । अतुष्टेन तेन पुनः पृष्ट आह—

'न दृष्टेर्द्रष्टारं पश्येः' न श्रुतेः श्रोतारं शृणुयाः, न मतेर्मन्तारं मन्वीथाः, न विज्ञातेर्विज्ञातारं विजानीयाः, एष त आत्मा सर्वान्तरः । अतोऽन्यदार्तम्' (बृ.उ. 5-4-2)

---

अन्तरेति । हेयप्रत्यनीकत्वं ब्रह्मणः असाधारणं चेत् !, अशनायाद्यतीतत्वविशिष्टं ब्रह्म स्यात् । प्राणितृत्वादिविशिष्टस्तु जीवः स्यात् इति शङ्कया सङ्गतिः । **'उषस्तप्रश्न'** शब्देन-तत्प्रकरणं विवक्षितम् । किम् उषस्त-कहोलप्रश्नप्रतिवचनश्रुत्योः विद्याभेदः ? उत विद्यैक्यम् ? ।

---

[सूत्रार्थः । **अन्तरा**—उषस्तप्रश्नस्थः 'सर्वान्तर' इति व्यपदेशः, **भूतग्रामवत्स्वात्मनः**—अचेतनशरीरिणश्चेतनस्यैव ; न परमात्मनः, **अन्यथा**—परमात्मनो व्यपदेशो यदि, **भेदानुपपत्तिः**—प्रतिवचनयोर्वैलक्षण्यस्य अनौचित्यं स्यात् , **इति चेत् न**—एवं शङ्कनं नोचितम् । **उपदेशवत्**—सद्विद्यागतेषु उपदेशवाक्येषु मिथोविलक्षणतया प्रश्न-प्रतिवचनपौनःपुन्यवत् अत्राऽपि तदुपपत्तेः ॥]

'सर्वान्तरस्तु जीवात्मा प्रयुक्तेश्च विभेदतः । मैवं स पर इत्येव सद्विद्यावत् प्रतीयते ॥' (ब्र.प. 389)

इति । तथा, तदनन्तरं कहोलप्रश्ने च [1]एवमाम्नायते[1]—

'यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, तन्मे व्याचक्ष्व'

(बृ.उ 5-5-1)

इति । प्रतिवचनं च—

'योऽशनाया-पिपासे शोकं मोहं जरां मृत्युमत्येति, एतं वै (एवं है) तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च' (बृ.उ. 5-5-1)

इत्यादि,

'अतोऽन्यदार्तम्' (बृ.उ. 5-5-1)

इत्यन्तम् ॥

[विचारोपयोगी संशयः]

तत्र संशय्यते—किम् अनयोः विद्या[2]भेदोऽस्ति[2] ? न ? — इति ॥

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम् ? भेदः—इति ।

कुतः ? रूपभेदात् । प्रतिवचनभेदात् रूपं भिद्यते । प्रश्नस्य ऐकरूप्येऽपि, प्रतिवचनप्रकारोहि ! भेदेनोपलभ्यते । पूर्वत्र, [3]प्राणनादीनां[3] कर्ता सर्वान्तरात्मत्वेनोच्यते । परत्र, अशनाया-पिपासादिरहितः । अतः, पूर्वत्र-[4]प्राणिता[4] देहेन्द्रिय-बुद्धि-मनः-प्राणव्यतिरिक्तः प्रत्यगात्मा–उच्यते । परत्र तु तदतिरिक्तः अशनाया-पिपासादिरहितः परमात्मा । अतो रूपं भिद्यते ।

---

किं पूर्वत्र जीव उपास्यः, अन्यत्र परः ? उत उभयत्र पर एव ? इति । किमत्र सर्वान्तरत्व-प्राणितृत्वे देहादिजाग्रदाद्यवस्थापेक्षे ? उत अनवच्छिन्ने ?। 'न दृष्टेर्द्रष्टारम्' इति, दृष्टिव्यतिरिक्तत्वनिषेधः ? उत श्रवणादिकर्तुः मन्तव्यत्वनिषेधः ? इति ॥ यदा दृष्टिरूपताव्यतिरेक-निषेधः, तदा तु अस्य जीवे सम्भवात्, सर्वान्तरत्व-प्राणितृत्वयोरपि आपेक्षिकत्वेन, पूर्वत्र जीव उपास्य इति, विद्या भिद्यते । यदा श्रवणादिकर्तुः उपास्यत्वनिषेधः, तदा सर्वान्तरत्व-प्राणितृत्वयोरपि अनवच्छिन्नतया, पूर्वत्राऽपि पर एवोपास्य इति विद्यैक्यमिति ॥ प्रतिवचन-भेदादिति । प्रतिवचनप्रकारेण हि ! प्रश्नार्थो ज्ञायते इति भावः ।

---

[1] आम्नायते—अ.आ.
[2] भेदो विद्यते ?—आ. द.
[3] प्राणादीनां कर्ता—थ.
[4] प्राणि—द.

[प्रत्यगात्मनि सर्वान्तरत्वौचित्यम् ]

भूतग्रामवतश्च प्रत्यगात्मनः, तस्य भूतग्रामस्य[1]सर्वस्य अन्तरात्मत्वेन[1], सर्वान्तरत्वमपि उपपन्नम् । यद्यपि, प्रत्यगात्मनः सर्वान्तरत्वं, भूतग्राममात्रापेक्षत्वेन आपेक्षिकम् ; तथाऽपि, तदेव ग्राह्यम् । अन्यथा मुख्यान्तरात्मपरिग्रह[2]लोभात्[2] परमात्मस्वीकारे, प्रतिवचनभेदो [3]नोपपद्यते[3] ।

प्रतिवचनं हि ! पूर्वत्र प्रत्यगात्मविषयम् ; परमात्मनः प्राणितृत्वा-ऽपानितृत्वाद्यसंभवात् । परं च परमात्मविषयम् ; अशनाया-[4]पिपासाद्यतीतत्वात्[4] । तदिदमाशङ्कते—'अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेत्'—इति । अन्तरा —[5]सर्वान्तरत्वेन[5]प्रथमप्रतिवचनं ; भूतग्रामवत्स्वात्मनः — भूतग्रामवान् तदन्तरः स्वात्मा प्रत्यगात्मा, सर्वान्तर इत्युच्यते—इत्यर्थः । अन्यथा,

'यः प्राणेन प्राणिति' (बृ.उ. 5-4-1) 'योऽशनायापिपासाद्यतीतः'

इति प्रतिवचनभेदानुपपत्तिः—इति चेत् ! ,

---

स्वात्मन इति, आत्मशब्दस्य परमात्मवाचित्वव्यावृत्त्यर्थमुक्तम् । स्वमेव आत्मा स्वात्मा । भूतग्रामवच्छब्दः, सर्वान्तरात्मत्वमपि आपेक्षिकम् अस्य सम्भवतीति प्रदर्शयितुं प्रयुक्तः । यद्यपीति । आपेक्षिकं सम्भवतु नाम ; तथापि अस्वरसमिति भावः । तथापीति । अनेकपदविरोधेन एकपदस्वारस्यम् अनुपपन्नमिति भावः ।

तदिदमिति, शङ्कया अनुत्सूत्रत्वमाह । अन्तरेत्यादि । सर्वान्तरत्वेन प्रतिवचनं, भूतग्रामवत्स्वात्मसम्बन्धि इत्यर्थः ।

अन्तरशब्दात् भावप्रधानात् , तृतीयैकवचनस्य 'सुपां सु-लुक्' इति आकारादेशे रूपमिति, 'सर्वान्तरत्वेने'त्यर्थो लभ्यते । 'प्रथमं प्रतिवचनम्' इति च अध्याह्रियते इत्यर्थः । केचित्तु 'अन्तरा'शब्दोऽयं मध्यवचनः । प्रश्नयोर्मध्ये यत् प्रतिवचनम् इत्यर्थः । ततश्च प्रथमस्य ग्रहणं भविष्यति । ततश्च 'अतन्रा'शब्दस्य अर्थद्वयं लभ्यते । अत एव 'अन्तरत्वेने' त्यनुक्तिः ॥ [भा.प्र.]

---

1 सर्वान्तरत्वेन—उ. सर्वस्याऽऽन्तरत्वेन—च. सर्वस्य सर्वान्तरत्वेन—आ.

2 लाभात्—द. 3 नोपपद्येते—त.थ. 4 द्यतीतत्वात्—क.च.

5 सर्वान्तरात्मत्वेन—ड.

[सूत्रान्त्यखण्डतः सिद्धान्तार्थः]

अत्रोत्तरम्, नेति। न विद्याभेदः इत्यर्थः। उभयत्र परविषयत्वात् प्रश्न-प्रतिवचनयोः। तथा हि;

'यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' (बृ.उ. 5-4-1)

इति प्रश्नस्तावत्, परमात्मविषय एव। 'ब्रह्म'शब्दस्य परमात्मासाधारणत्वेऽपि, प्रत्यगात्मन्यपि कदाचित् उपचरितप्रयोगदर्शनात्, तद्व्यावृत्त्या [1]परमात्म[1]प्रतिपत्त्यर्थं, 'यत् साक्षाद्ब्रह्म' इति विशेषणं क्रियते। अपरोक्षत्वमपि सर्वदेश-[2]सर्वकाल[2]-सम्बन्धित्वम्,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

इति अनन्तत्वेनाऽवगतस्य परमात्मन एवोपपद्यते। सर्वान्तरत्वमपि,

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' (बृ.उ. 5-7-3)

इत्यारभ्य,

'य आत्मनि तिष्ठन् आत्मनोऽन्तरः' (बृ.उ.मा.पा. 5-7-26)

इति, सर्वान्तर्यामिणः परमात्मन एव सम्भवति।

प्रतिवचनमपि तथैव परमात्मविषयम्।

'यः प्राणेन प्राणिति' इति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन [3]एव[3]; प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्। एवमजानता उषस्तेन, प्राणने कर्तृत्व[4]मात्रमुक्तं[4] मन्वानेन, प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अतुष्टेन, पुनः पृष्टः, तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन [5]प्राणनस्य[5] कर्तारं परमात्मानमाह—

'न दृष्टेर्द्रष्टारं पश्येः' (बृ.उ. 5-4-2)

इत्यादिना॥

---

उभयत्रेति। आर्थं हेतुमाह। 'भूतग्रामवत्स्वात्मनः' इति पूर्वपक्षमुक्त्वा, 'न' इत्युक्ते, 'परस्ये'ति अर्थादुक्तं भवतीत्यभिप्रायः। तथाहीति। 'साक्षाद्ब्रह्म'शब्दवाच्यत्वम् एको हेतुः। अपरोक्षत्वमपीति। देश-कालसंनिकर्षो हि आपरोक्ष्ये विद्यते। तस्मात् ब्रह्मणोऽपरोक्षत्वं नाम सर्वदेशसर्वकालसंनिहितत्वमित्यर्थः। निरुपाधिकत्वमिति प्राणयितृत्वं

---

[1] परमात्मनः—द. [2] सर्व—थ. [3] एव सम्भवति—थ.
[4] मात्रं—त. थ. [5] प्राणस्य—द.

[ ' न दृष्टेर्द्रष्टार 'मिति श्रुतेरर्थः]

[1]इन्द्रियाधीनानां[1] दर्शन-श्रवण-मनन-विज्ञानानां कर्तारं प्रत्यगात्मानं, प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः ; तस्य सुषुप्ति-मूर्छादौ प्राणनादेरकर्तृत्वात् ।

' को ह्येवाऽन्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात् ' (तै.उ.आन. 7-1)

इति सर्वप्राणिप्राणन[2]हेतुत्वं हि[2] ! परमात्मन एव अन्यत्र श्रुतम् ॥

अतः पूर्वप्रश्न-प्रतिवचने परमात्मविषये । एवमुत्तरे अपि ; अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात् । उभयत्र

' अतोऽन्यदार्तम् ' (बृ.उ. 5-4-2)

इत्युपसंहारश्च एकरूपः । प्रश्न-प्रतिवचनावृत्तिस्तु, कृत्स्नप्राणि[3]प्राणन[3]हेतोः परस्य ब्रह्मणः, अशनायाद्यतीतत्वप्रतिपादनाय ।

[सूत्रस्थदृष्टान्तांशविवरणम् ]

तत्र दृष्टान्तमाह—' उपदेशवत् '—इति । यथा सद्विद्यायाम्,

' उत तमादेशमप्राक्ष्यः ? ' (छा.उ. 6-1-2)

इति प्रक्रान्ते सदुपदेशे,

' भगवांस्त्वेव मे [4]तद्ब्रवीत्विति[4] ' (छां.उ 6-1-7)

' भूय [5]एव मा[5] भगवान् विज्ञापयतु ' (छां.उ 6-5-4)

इति प्रश्नस्य,

' एषोऽणिमा ऐतदात्म्यमिदं सर्वं, तत्सत्यम् ' ( ां.उ. 6-8-6, 7)

इति प्रतिवचनस्य च, भूयो भूय आवृत्तिः, सतो ब्रह्मणः [6]तत्तन्माहात्म्य[6]विशेषप्रतिपादनाय दृश्यते ; तद्वत् । अतः एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः, कृत्स्नप्राणिप्राणन[7]हेतुत्वा[7]ऽशनायाद्यतीतत्वप्रतिपादनेन रूपैक्यात्, विद्यैक्यम् ॥ ३५ ॥

---

विवक्षितम् । तेन जीवव्यावृत्तिः । सहि कर्मानुगुणदेहेन्द्रियादीनामधिष्ठातृत्वेन कदाचित् प्राणयिता । एवमिति, पुनः प्रश्नस्य अर्थान्तरविषयत्वशङ्कां परिहरति । इन्द्रियेति । ' दृष्टेर्द्रष्टार'मिति व्यपदेशः, ' ओदनपाकं पचती'तिवत् इति भावः ॥

उत्तरे अपि—कहोलप्रश्न-प्रतिवचने इत्यर्थः ॥ ३५ ॥

---

[1] इन्द्रियादीनां—द. [2] हेतुत्वं—त. थ. [3] प्राणने—त. [4] तद्ब्रवीतु—द.
[5] एवमाह—द. न. [6] तन्माहात्म्य—वा. [7] हेतुत्वाया—थ.

[उपास्यगुणभेदकृतरूपभेदतो विद्याभेदशङ्कापरिहारौ]

अथ स्यात्—यद्यपि, उभे प्रश्न-प्रतिवचने परब्रह्मविषये; तथाऽपि, विद्याभेदः अवर्जनीयः; एकत्र सर्वप्राणिप्राणनहेतुत्वेन [1]उपास्यम्[1]; इतरत्र अशनायाद्यतीतत्वेनेति, उपास्यगुणभेदेन रूपभेदात्, प्रष्टृभेदाच्च। [2]पूर्वत्र हि[2] उषस्तः प्रष्टा; उत्तरत्र कहोलः—इति; तत्राऽह—

## ३९०. व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३-३-३६ ॥ (सि)

नाऽत्र विद्याभेदः; प्रश्न-प्रतिवचनाभ्याम् एकरूपार्थविषयाभ्याम्, एकेन च विधिपदेन एकवाक्यत्वप्रतीतेः। प्रश्नद्वयं तावत्, सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम्। द्वितीये प्रश्ने,

'यदेव साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः' (बृ.उ. 5-5-1)

इति एवकारश्च, पूर्वत्र उषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्याऽवधारयति ॥

[व्यतिहार्यांशविवरणम्]

प्रतिवचनं च, उभयत्र—

'[3]स त[3] आत्मा सर्वान्तरः' (बृ.उ. 5-4-1)

---

प्रष्टृभेदाच्चेति। प्रष्टृद्वयसद्भावात् विद्याभेदः सम्भवतीत्यर्थः।

प्रश्नद्वयमित्यादिना, प्रश्न-प्रतिवचनैकरूप्यं विधिपदैक्यं च विवृणोति।

---

[सूत्रार्थः। **इतरवत्**—सद्विद्यागतानां प्रश्न-प्रतिवचनानां इतरेतरत्रोपसंहारवत्। **व्यतिहारः**—उषस्तकहोलब्राह्मणद्वयश्रुतानां इतरत्रेतरत्रोपसंहारः कार्यः, **हि**—यतः, **विशिंषन्ति**—याज्ञवल्क्यवचनानि एकमेव परमात्मानं प्रत्यगात्मनो व्यावृत्ततया अवगमयन्ति।]

'सद्विद्यावच्च सर्वत्र परमात्मविशेषणात्। परस्परं व्यतीहारस्तत्रोषस्त-कहोलयोः॥' (ब्र.प. 390)

---

[1] उपास्यः—त थ. [2] पूर्वत्र—च. उ. पूर्वत्राऽपि—आ. [3] एष त—वा.

इति, सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम् एकरूपमेव । विधिप्रत्ययश्च, उत्तरत्रैव दृश्यते—

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ.उ. 5-5-1)

इति । [1]एवं सर्वान्त[1]रात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयो[2]रवधृते[2]सति, एकस्मिन्नेव सर्वान्तरात्मत्व[3]विशिष्टे ब्रह्म[3]ण्युपास्ये, उषस्त-कहोलयोः इतरेतरबुद्धिव्यतिहारः कर्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः, सा कहोलेनाऽपि प्रष्ट्रा कार्या । या च कहोलस्य तस्यैव ब्रह्मणः अशनायाद्यतीतत्वविषया बुद्धिः, सा उषस्तेनाऽपि कार्या ।

एवं व्यतिहारे कृते, उभाभ्यां सर्वान्तरस्य ब्रह्मणः, जीवव्यावृत्तिः [4]अवगता[4] भवति । [5]एवं[5] सर्वान्तरात्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं, [6]सर्वप्राणि[6]प्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन विशिंषन्ति हि ! याज्ञवल्क्यस्य प्रतिवचनानि । अतः, ब्रह्मणः सर्वान्तरात्मत्वमेव उपास्यगुणः । प्राणनहेतुत्वादयस्तु, [7]तस्य[7] उपपादकाः; न उपास्याः ।

[व्यतिहारेणाऽनुसन्धाने प्रयोजनम् ]

ननु—उपास्यगुणः सर्वान्तरात्मत्वमेव चेत् ! प्राणनहेतुत्वस्य अशनायाद्यतीतत्वस्य च प्रष्ट्रोः व्यतिहृत्याऽनुसन्धान किमर्थम् ?

---

**विधीति** । अविशेषपुनःश्रवणं हि भेदहेतुः । अत्र तदभावात् विद्यैक्यमिति भावः । **तिष्ठासेत्**— निष्ठां लभेत, उपासीतेत्यर्थः । **द्वयोः**—उषस्तप्रश्न-प्रतिवचन-कहोलप्रश्नप्रतिवचनपरवाक्ययोः । **कर्तव्य इति** । व्यतिहारस्य कर्तव्यत्वं श्रुत्यभिप्रेतमिति, सूत्रकाराभिप्राय इत्यर्थः । **अतः—नोपास्या इति** । सर्वान्तरात्मत्वस्य, एकस्य गुणस्योपास्यत्वात्, रूपभेदः परिहृतः । विद्यैक्येऽपि वैश्वानरविद्यायाम् औपमन्यवादिवत् प्रष्टृभेदः सम्भवतीति स्पष्टत्वात्, न कण्ठोक्तम् ।

**नन्विति** । व्यावृत्तिबुद्धिजननाय परस्परं बुद्धिव्यतिहार उक्तः । तत्र सर्वप्राणि-

---

[1] सर्वा—त.थ.　[2] रवगते—च.ड.क.　[3] विशिष्टब्रह्म—च.
[4] अवधृता—पा.　[5] एवं—आ.वा.　[6] प्राणि—द.
[7] तस्यैव—त.थ.

तदुच्यते—[1]सर्वप्राणि[1]प्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मणि उषस्तेन [2]अवगते[2] सति, कहोलेन जीवस्य सर्वात्मना असम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेयः-इति कृत्वा, पुनः प्रश्नः कृतः। याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय, प्रत्यगात्मनोऽसम्भावितम् अशनायादिप्रत्यनीकत्वमुक्तवान्। अतश्च, [3]उपास्यस्य व्यावृत्तिप्रतीति[3]सिद्ध्यर्थम्, उभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः ॥

[सूत्रस्थदृष्टान्तांशविवरणम्]

इतरवत्—यथा इतरत्र सद्विद्यायां, भूयो भूयः प्रश्नैः प्रतिवचनैश्च, तदेव सत् ब्रह्म व्यवच्छिद्यते; न पुनः पूर्वप्रतिपन्नात् गुणात् गुणान्तरविशिष्टतया उपास्यं प्रतिपाद्यते, तद्वत् ॥ ३६ ॥

[प्रश्नादेर्भेदेऽपि ऐक्यावगमोपपादनम्]

[4]तत्रापि[4] प्रश्न-प्रतिवचनभेदे सति, कथम् ऐक्यमवगम्यते—इति चेत्! तत्राऽऽह—

## ३९१. सैव हि सत्यादयः ॥ ३-३-३७ ॥ (सि)

---

प्राणनहेतुत्वाशनायाद्यतीतत्वयोरन्यतरेणैव व्यावृत्तबुद्धिः स्यादिति, अन्यतरेण किम्? इति चोद्याभिप्रायः ॥

तदुच्यत इति। यथा उषस्तस्य सर्वप्राणिप्राणनहेतुत्ववैशद्याय पुनः प्रश्नः, तद्वत्; कहोलस्य सर्वप्राणिप्राणनहेतुत्वज्ञानेन व्यावृत्तबुद्ध्यनुदयात् पुनः प्रश्नः सम्भवति [इत्याशयः]। सर्वेति। अन्यतरेण व्यावृत्तबुद्धौ द्वयोर्जातायां, परस्परबुद्धिव्यतिहारः द्वयोरपि व्यावर्तकधर्म-भूयस्त्वहेतुकव्यावृत्तबुद्ध्यतिशयजननार्थमित्यभिप्रायः ॥ अतः—कहोलप्रश्नस्य व्यावृत्ति-वैशद्यार्थत्वदर्शनात्।

व्यावृ—द्ध्यर्थम्— व्यावर्तकधर्मभूयस्तया व्यावृत्तिबुद्ध्यतिशयार्थमित्यर्थः ॥ ३६ ॥

---

[सूत्रार्थः। हि—यतः, सैव—सच्छब्दाभिहिता परा देवतैव, सर्वत्राऽनुवृत्ता, सत्यादयः—तत्सत्यमिति सर्वपर्यायेष्वनुवर्तमानाः, उपास्याभेदं बोधयन्ति, अतः इतरवत् इति युक्तमेव।]

'सत्यादीनां तु सर्वत्र प्रत्युक्तौ संग्रहो यतः। सैषा परा देवतैव सद्विद्याप्रतिपादिता ॥' (ब्र.प. 391)

---

[1] सर्व—भा. [2] अवधृते—पा.
[3] उपासनप्रतीतिव्यावृत्तिः—द. [4] अत्रापि—द.

सैव हि—सच्छब्दाभिहिता परमकारणभूता [1]परा देवतैव,[1]

‘सेयं देवतैक्षत’ (छां उ 6-3-2)

‘तेजः परस्यां देवतायाम्’ (छां.उ. 6-8-6)

इति प्रकृता,

‘यथा सोम्य[2]मधु[2] मधुकृतो निस्तिष्ठन्ति’ (छां.उ. 6-9-1)

इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते । यतः,

‘ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा’ (छां उ. 6-8-7)

इति प्रथमपर्यायोदिताः सत्यादयः, सर्वेषु पर्यायेषु उपपाद्य, उपसंह्रियन्ते ॥

[परकीयाधिकरणरचनाप्रकारः तद्दूषणं च]

केचित्तु—‘व्यतिहारो [3]विशिंषन्ति[3]हीतरवत्’ ‘सैव हि सत्यादयः’ इति सूत्रद्वयम्, अधिकरणद्वयं वर्णयन्ति । तत्र पूर्वेण,

‘त्वं वा अहमस्मि भगवो देवते, अहं वै [4]त्वमसि भगवो देवते[4]’ (वरा.उ. 2-34)

‘तद्योऽहं सोऽसौ, योऽसौ सोऽहम्’ (ऐत.आर. 2-2-4)

इति वाक्ये जीव-परयोः व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यते—इत्याहुः ।

तत्—

‘सर्वं खल्विदं ब्रह्म’ (छां.उ. 3-14-1)

‘ऐतदात्म्यमिदं सर्वम्’ (छां.उ. 6-16-3)

‘तत्त्वमसि’ (छां.उ. 6-16-3)

इत्यवगतसर्वात्मभावविषयत्वात् अस्य वाक्यस्य, [5]नाऽत्र[5]प्रतिपादनीयम् अपूर्वमस्तीति,—

---

सैव हीति । ‘से’ति निर्देशः, ‘सेयं देवतैक्षत’ इति सद्विद्यावाक्यानुरोधादिति भावः । उपपाद्यते—प्रश्नप्रतिवचनमुखेन प्रतिपाद्यते । यत इति । परमकारणत्वविशिष्टदेवतैव उपास्या ; कारणत्वोपयोगिनां सत्यत्वात्मत्व-जीवविशेषान्तर्यामित्वादिगुणानां प्रतिपर्यायम् आवृत्तत्वेन तत्र तात्पर्यादित्यर्थः ॥

---

[1] परदेवतैव—थ.  [2] मधुनि—थ.  [3] विशिक्षन्ति—अ.

[4] त्वमसि—त. थ.  [5] न तत्र—थ.

अनादरणीयम् । तत्तु वक्ष्यते—

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू. 4-1-3)

इति । न च सर्वात्मत्वानुसन्धानातिरेकेण, परस्मिन् ब्रह्मणि जीवत्वानुसन्धानम्, जीवे च परब्रह्मत्वानुसन्धानं तथ्यं [1]सम्भवति[1] ।

[परेषाम् उत्तरसूत्रार्थवर्णनेऽप्यनौचित्यम्]

उत्तरेण च सूत्रेण,

'स यो(ह वै)तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृ.उ. 7-4-1)

इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य,

'तद्यत् सत्यमसौ स आदित्यः, य एष एतस्मिन् मण्डले पुरुषः यश्चाऽयं [2]दक्षिणेऽक्षन्[2]' (बृ.उ. 7-5-1)

इत्यादिवाक्यप्रतिपादितोपासनस्य च ऐक्यं प्रतिपाद्यते—इति ।

तदप्ययुक्तम्; उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य, पूर्वमेव,

'न वा विशेषात्' (ब्र.सू. 3-3-21)

इत्यनेन प्रतिपादितत्वात् ।

[अनौचित्योपपादनम्]

न च—द्वयोरनयोः व्याहृत्यादिशरीरकत्वेन रूपवतोः,

'हन्ति पाप्मानं जहाति च य एवं वेद' (बृ.उ. 7-5-2)

---

न च....संभवतीति । [अतः]—'सर्वत्र प्रसिद्धोपदेशात्' इति, जगत्तादात्म्यपरवाक्यविषयम् । 'आत्मेति' इत्यादिकं तु जीवतादात्म्यपरम् । नाऽत्र सर्वात्मभाव उच्यते । अपि तु जीव-ब्रह्मणोः अन्योन्यभावारोपणम्—[इति न शङ्कावकाशः] [इदं यदि] गरुडादिध्यानवत् असदारोपणम्; न तत् अपवर्गोपायः । तत्त्वज्ञानं हि अपवर्गोपायः । इति भावः । 'त्वं वा अहमस्मि' इत्यादेः अयमर्थः । 'त्वं'शब्द-बुद्धि-विषयः परमात्मैव, 'अहं'शब्द-बुद्धिविषयः । 'अहं'शब्दबुद्धिविषय एव, 'त्वं'शब्द-बुद्धिविषयः । 'अस्मि, असीति' निर्देशौ, 'अहं-त्वं'शब्दप्रयुक्तौ । 'अहं त्वं'शब्दौ, प्रवृत्तिनिमित्तभेदात् ब्रह्मपर्यन्तौ । 'तद्योऽहम्' इत्यादेरपि अयमेवार्थः ।

जहाति चेति । 'शरीर'मित्यध्याहारः । प्रथमं'द्वयो'रिति पदं वाक्यपरम् ।

---

[1] भवति—द.

[2] दक्षिणेऽक्षिन्—च.

इति पृथक्संयोग-चोदनावतोः द्वयोरुपासनयोः,

'स यो(ह वै)हैतद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति ; जयतीमांल्लोकान्' (बृ.उ. 7-4-1) इति संयोगरूपादिमत्तया निरपेक्षेण, पूर्वेणैकेनोपासनेन अभेदः सम्भवति ॥

[गुणफलाधिकारत्वासंभवः]

न च—'हन्ति पाप्मानं जहाति' (बृ.उ. 7-5-2)

[1]इति[1] गुणफलाधिकारत्वम्; प्रमाणाभावात्।

पूर्वेणैकविद्यात्वं प्रमाणम्—इति चेत्! न; इतरेतराश्रयत्वात्। एकविद्यात्वे [2]निश्चिते[2], पूर्वफलस्यैव प्रधानफलत्वेन, उत्तरयोः फलयोः गुणफलत्वम्। तयोः गुणफलत्वे निश्चिते सति, संयोगभेदाभावात्—पूर्वेण विद्यैक्यमिति, इतरेतराश्रयत्वम्—इति। एवमादिभिः यथोक्तप्रकारमेव सूत्रद्वयम् ॥ ३७ ॥

इति अन्तरत्वाधिकरणम् ॥ १५ ॥

—o—

---

द्वितीयं तु उपासनपरम्। द्वयोरपि वाक्ययोर्मध्ये, उत्तरवाक्यप्रतिपाद्योपासनयोः विद्याभेदस्य साधितत्वात्, परस्परभिन्नविद्याद्वयेन पूर्ववाक्योक्तस्योपासनस्य ऐक्यं न सम्भवति। एकविद्यात्वे साकाङ्क्षतयाऽन्वयः स्यात्। पृथक्पृथक्संयोगादीनामुक्तत्वेन निराकाङ्क्षत्वाच्च न एकविद्यात्वमित्यर्थः ॥

न चेति। गुणफलम्—अङ्गफलम्। प्रमाणाभावात्—हेत्वभावात्। उत्तरयोः फलयोः—पापहनन-शरीरप्रहाणयोः। संयोगभेदाभावात्—प्रधानफलसंयोगभेदाभावात्। एवमादिभिरिति 'आदि'शब्देन स्वोक्तार्थोपपत्तयोऽभिप्रेताः ॥ ३७ ॥

[सूत्राणि—१. अन्तरा भूत, २. व्यतिहारो, ३. सैव हि]

इति अन्तरत्वाधिकरणम् ॥ १५ ॥

—o—

---

[1] इति च—वा. [2] निश्चिते सति—वा.

(98) **कामाद्यधिकरणम्** ॥ ३-३-१६ ॥ (सू. ३८-४०)

[अधिकरणार्थः—छान्दोग्य-वाजसनेयकप्रतिपन्नयोर्दहरविद्ययोः रूपाभेदादभेदः]

## ३९२. कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३-३-३८ ॥ (सि)

[विचारणीयं विषयवाक्यम्]

छान्दोग्ये श्रूयते—

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः[1]-स्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छां.उ. 7-1-1)

इत्यादि। वाजसनेयके च—

'स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' (बृ.उ. 6-4-22)

इत्यादि।

---

कामादीति। प्राणितृत्वादीनाम् अशनायायतीतत्वादीनां च, धर्मिभेदाभावात्, विद्यैक्यं समर्थितम्। अत्र तु गुणाष्टकस्य वशित्वादिगुणस्य च धर्मिभेदशङ्कया सङ्गतिः।

किमत्र विद्याभेदः? उत अभेदः? इति। [किं] छान्दोग्ये अपहतपाप्मत्वादिविशिष्टविषयमुपासनम्; वाजसनेयके वशित्वादिविशिष्टविषयम्? उत उभयत्र अपहतपाप्मत्वादिविशिष्टविषयम्?—इति। किं वाजसनेयके सत्यसङ्कल्पत्वसहचारात् अपहतपाप्मत्वादीनां प्रतिपत्तिरस्ति? न? इति। यदा नाऽस्ति प्रतिपत्तिः; तदा रूपभेदाद् विद्याभेदः। यदा तु अस्ति प्रतिपत्तिः; तदा रूपाभेदाद् विद्यैक्यम्।

---

[सूत्रार्थः। **इतरत्र तत्र च**—वाजसनेये-छान्दोग्ये च, **कामादि**—सत्यकामत्वादिमत् ब्रह्मैव, (उपास्यं भवति दहरविद्यायाम्) **आयतनादिभ्यः**—हृदयायतनत्व-सत्यसङ्कल्पत्व-विशेषभूतवशित्वादिभ्यः विद्यैक्यस्य प्रत्यभिज्ञानात्।]

'विद्ययोरुभयोः सत्यकामत्वादिगुणान्वयात्। फलस्थानाद्यैक्यतश्च विद्यैका दहराभिधा॥' (ब्र.प. 392)

---

[1] न्नन्तर आकाशः—च.

[विचारौपयिकः संशयः]

तत्र संशयः—किमनयोः विद्याभेदः? उत न?—इति।

[सहेतुकः पूर्वः पक्षः]

किं युक्तम्? भेदः—इति।

कुतः? रूपभेदात्। अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशः, छान्दोग्ये उपास्यः प्रतीयते। वाजसनेयके तु, आकाशे शयानः वशित्वादिगुणविशिष्टः उपास्यः प्रतीयते। अतः रूपभेदात् विद्याभेदः॥

[सूत्रतः सिद्धान्तार्थः]

इति प्राप्ते, प्रचक्ष्महे—न भेदः इति।

कुतः? रूपाभेदात्। इतरत्र तत्र च कामाद्येव हि! रूपम्। वाजसनेयके छान्दोग्ये च, [1]सत्यकामा(ना)[1]दिविशिष्टमेव ब्रह्म उपास्यम् इत्यर्थः।

कुत एतदवगम्यते? 'आयतनादिभ्यः'। हृदयायतनत्व-सेतुत्व-विधरणत्वादिभिस्तावत्, उभयत्र सैव विद्येति प्रत्यभिज्ञायते। वशित्वादयश्च वाजसनेयके श्रुताः, छान्दोग्यश्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसङ्कल्पत्वस्य विशेषा [2]एवेति[2], सत्यसङ्कल्प[3]त्वसह[3]चारिणां सत्यकामत्वादीनाम् अपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति। अतः रूपं न भिद्यते। संयोगोऽपि,

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8–3–4)

'अभयं वै ब्रह्म भवति' (बृ.उ. 6–4–25)

---

अस्मिन् अधिकरणे व्योमातीतनिरासः फलितो भविष्यति। आकाशान्तर्वर्तिनो गुणत्वेन, आकाशस्य परमात्मत्वं दहराधिकरणे दर्शितम्। आकाशान्तवर्तिनः स्वतन्त्रवस्तुत्वे सति, आकाशस्य प्रसिद्धाकाशत्वम् अत्रोच्यत इति भिदा। वशित्वादीति, 'आदि'शब्देन, 'स वा एषः' इत्युक्त दहरत्वविरोधिमहत्त्वं च विवक्षितम्। 'गुणाष्टकविशिष्टः वशित्वादिगुणविशिष्टः' इति धर्मभेदः। 'आकाशः आकाशे शयानः' इति धर्मिभेदः। एवं धर्मतो धर्मितश्च रूपभेदात् विद्याभेदः—इति पूर्वपक्षार्थः॥

वाजसनेयके इति, 'इतरत्रे'तिपदव्याख्यानार्थं धर्ममात्रस्य उपास्यत्वव्यावृत्त्यर्थं च।

---

[1] सत्यकामत्वादि—वा.　　[2] इति—ङ.　　[3] सह—थ.

इति ब्रह्मप्राप्तिरूपः, न भिद्यते । 'आकाश'शब्दः छान्दोग्ये परमात्मविषय इति,

'दहर उत्तरेभ्यः' (ब्र.सू. 1-3-13)

इत्यत्र निर्णीतम् । वाजसनेयके तु, आकाशे शयानस्य वशित्वादिश्रवणात्, तस्य शयानस्य परमात्मत्वे सति, तदाधाराभिधायिनः 'आकाश' शब्दस्य,

'तस्यान्ते सुषिरं सूक्ष्मम्' (तै.ना.उ. 11-8)

इति हृदयान्तर्गतस्य 'सुषिर'शब्दवाच्यस्य [1]आकाशस्याऽभि[1]धायकत्वमवगम्यते । अतः विद्यैक्यम् ॥ ३८ ॥

[वशित्वादीनां गुणानामपारमार्थिकत्वात् उपासनानन्वयशङ्का]

अथ स्यात्—यदुक्तम्; वाजसनेयके, वशित्वादिभिः सह सत्यकामत्वादिसद्भावः अवगम्यते—इति । तन्नोपपद्यते; वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात् । तदभावश्च,

'मनसैवाऽनुद्रष्टव्यं नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (बृ.उ. 6-4-19)

'एकधैवाऽनुद्रष्टव्यमेतदप्रमेयं ध्रुवम्' (बृ.उ. 6-4-20)

इति प्रकृतेन वाक्येन,

'स एष नेति नेत्यात्मा' (बृ.उ. 6-4-21)

[2]इत्युत्तरेण च[2], उपास्यस्य ब्रह्मणः निर्विशेषत्वप्रतीतेः अवगम्यते । अतः वशित्वादयोऽपि [3]स्थूलत्वाणुत्ववत्[3], निषेध्या इति प्रतीयन्ते । अत एव छान्दोग्येऽपि, सत्यकामत्वादयः न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते । अतः अपारमार्थिकत्वात्, एवंजातीयकानां गुणानां मोक्षार्थेषूपासनेषु लोपः—इति । तत्राऽऽह—

---

आकाशशब्द इत्यादि । आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात्, तदेव सर्वत्र स्वतः प्राप्तम् । तत्र परमात्मासाधारणगुणश्रवणं प्रसिद्धिप्राचुर्यस्य अपवादकम् । तत् छान्दोग्येऽस्तीति, तत्र आकाशशब्दस्य परमात्मपरत्वमुक्तम् । वाजसनेयके तु तदभावात्, प्रसिद्धिप्राचुर्यमेवाऽनुविधीयते इत्यर्थः ॥ ३८ ॥

अथ स्यादिति । छान्दोग्ये दहरविद्या सगुणविषया ; फलविशेषार्थगुणप्रतिपादनपरत्वात् । इयं तु निर्गुणविद्या । अतो न विद्यैक्यमित्यर्थः ॥

---

[1] अवकाशस्याभि—या. अभि—द. [2] इति च वक्ष्यमाणेन—अ. [3] स्थूलत्ववत्—वा.

[उक्तायाः शङ्कायाः सूत्रतो निरासः]

## ३९३. आदरादलोपः ॥ ३-३-३९ ॥ (सि)

ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनाम्,

'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छां.उ. 8-1-1)

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8-1-5)

'सर्वस्य वशी सर्वस्येशानः' (बृ.उ. 6-4-22)

'[1]एष सर्वेश्वर एष[1] भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ.उ. 6-4-22)

इत्यादिभिः अनयोः श्रुत्योः, अन्यासु च, मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशात्, एषामलोपः; अपि तु उपसंहार एव कार्यः।

[सूत्रोक्तस्य ब्रह्मगुणेष्वादरस्योपपादनम्]

छान्दोग्ये तावत्,

'तद्य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 8-1-6)

इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो [2]वेदनमभिधाय,[2]

---

'प्रमाणान्तराप्राप्ताना'मित्यनेन, निषेधार्थमनुवादत्वं निरस्तम्; अपूर्वत्वरूपं तात्पर्यलिङ्गं चोक्तम्। यथा अपूर्वता, ताद्रूप्यतो विषयतश्च अपरिच्छित्तिरूपा; तथा फलमपि स्वीकारास्वीकारयोः, अनुकूल-प्रतिकूलरूपम्। तदुभयमपि कामचाराकामचाराभ्यामुक्तम्।

---

[सूत्रार्थः। आदरात्—वशित्वादीनां ब्रह्मगुणानां श्रुतावुपासनप्रस्तावे आदरेण मुहुर्मुहुः पठितत्वादेव ज्ञापकात्, अलोपः—ब्रह्मोपासने तेषां गुणानां न त्यागः; किन्तूपसंहार एव कार्यः (नाऽतो निर्गुणोपासनात्मकत्वमस्याः)।]

'वशित्वादिगुणानां तु वेदनं श्रुतिभिर्विना। न भवेदित्यादराच्च ध्येयत्वं त्याज्यता न हि ॥' (ब्र.प. 393)

---

[1] एष—ङ.　　[2] वेदनं विधाय—पा.

'अथ य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च [1]सत्यान्[1] कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति' (छां.उ. 8-1-6)

इति अवेदननिन्दा क्रियमाणा, गुणविशिष्टवेदनस्य [2]आदरं[2] दर्शयति। तथा वाजसनेयके,

'सर्वस्य वशी सर्वस्येशानः....एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' (बृ. उ. 6-4-22)

इति, भूयो भूयः ऐश्वर्योपदेशात्, गुणेष्वादरः प्रतीयते। एवमन्यत्राऽपि ॥

[शास्त्रस्य अपारमार्थिकार्थानुपदेशकता]

[निषेधस्य अब्रह्मात्मकत्वविषयता च]

न च—मातापितृसहस्रेभ्योऽपि[3]वत्सलतरं[3] शास्त्रं, प्रतारकवत् अपारमार्थिकान् निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नान्—आदरेणोपदिश्य, संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून्, भूयोऽपि भ्रमयितुमलम्।

'नेह नानाऽस्ति किञ्चन' (बृ.उ. 6-4-19)

'एकधैवाऽनुद्रष्टव्यम्' (बृ.उ. 6-4-20)

इति तु, 'सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वात्, एकधाऽनुदर्शनं विधाय, अब्रह्मात्मक-

---

भूयो भूय इति अभ्यासो दर्शितः। अवेदनेति। गुणविशिष्टवेदनमुक्त्वा तद्विषयावेदननिन्दा क्रियमाणेत्यर्थः। एवं सत्यकामत्वादीनामपूर्वत्वम्, वेदने फलश्रवणम्, वेदनफलकथनाऽवेदननिन्दार्थमावृत्तिः, 'एष सर्वेश्वरः' इत्याद्यावृत्तिश्च, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्युपक्रमोपसंहारौ, अर्थवादः, अपूर्वत्वेन विहितस्य निषेधायोगरूपा उपपत्तिः, इत्यादिभिः आदरो दृश्यत इत्यर्थः। तथेति। वाजसनेयकेऽपि एवमादिकम् आदरलिङ्गं द्रष्टव्यमित्यभिप्रायः (श्रु.प्र.) ॥

न चेत्यादि। गुणोक्तिः न विप्रलिप्सामूला; नैर्गुण्योक्तावपि प्रसङ्गात्। न चाऽर्वाचीनफलोपासनार्था; मोक्षप्रकरणस्थत्वात् सत्यश्रुतेश्च–इति भावः। नेहेति। गोबलीवर्दनयात् ब्रह्मप्रकारतया भेदो विहित इति, सामान्यनिषेधस्य विहितविशेषव्यतिरिक्तविषयत्वात्, 'नेह नानाऽस्ती'त्यादेः अब्रह्मात्मकनानात्वविषयो निषेधः [इति भावः] (श्रु.दी. श्रु.प्र.)

एकधैवाऽनुद्रष्टव्यम्—केषांचित् कदाचित् स्वनिष्ठत्वम् अन्यपरतन्त्रत्वं वा न मन्तव्यम्। अपि तु परमात्मपरतन्त्रतया ऐकरूप्यमेव द्रष्टव्यमित्यर्थः।

---

1 सर्वान्— त. 2 आदरणीयतां— न. 3 वात्सल्यपरम्—न.

त्वेन पूर्वसिद्धनानात्वदर्शनं निषेधती' त्ययमर्थः, प्रागेव प्रपञ्चितः ।

'स एष नेति नेत्यात्मा' (बृ उ. 6-4-22)

इत्यत्र च, 'इति' शब्देन प्रमाणान्तरप्रतिपन्नं [1]प्रपञ्चाकारं[1]परामृश्य, 'न तथाविधं ब्रह्म' इति, सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते । तदेव च अनन्तर-[2]मुपपादयति[2]—

'अ(गृ)ग्राह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते, असङ्गो न हि [3]सज्यते,[3] अव्यथितो न व्यथते न रिष्यति' (बृ.उ. 6-4-22)

इति । प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते । विशरणीय-विसजातीयत्वात् न विशीर्यते । एवमुत्तरत्राऽनुसन्धेयम् । छान्दोग्येऽपि,

'नाऽस्य जरयैतज्जीर्यति, न वधेनाऽस्य हन्यते, एतत् सत्यं ब्रह्मपुरम् । अस्मिन् कामाः समाहिताः' (छां.उ. 8-1-5)

इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य, तस्मिन् सत्यकामत्वादयो विधीयन्ते ॥ ३९ ॥

[ब्रह्मप्रेप्सूनां उपासने गुणानामनुपसंहार्यत्वशङ्का]

ननु—एवमपि,

'तद्य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्; तेषां सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 8-1-6)

'स यदि पितृलोककामो भवति' (छां.उ. 8-2-1)

इत्यादिना, सत्य[4]कामादि[4]गुणविशिष्टवेदनस्य सांसारिकफलसम्बन्धश्रवणात्, मुमुक्षोः ब्रह्मप्रेप्सोः, न सगुणं ब्रह्म उपास्यम् । परविद्याफलं च,

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8-3-4)

इतीदमेव । अतः सत्यकामत्वादयः ब्रह्मप्रेप्सोः नोपसंहार्याः—इति । अत उत्तरं पठति—

---

'स एष नेति नेती' त्यस्य वाक्यस्य, प्रकरणानुगुण्यात् प्रपञ्चसाजात्यनिषेधपरत्वमुक्तम् । 'अथाऽत आदेशो नेति नेती' त्यत्य वाक्यस्य, इयत्तानिषेधपरत्वमपि तत्प्रकरणानुगुण्यादुक्तम् ।

छान्दोग्येऽपीति । अस्य जरया ब्रह्म न जीर्यतीत्यर्थः ॥ ३९ ॥

सांसारिकेति । सर्वलोककामचारादिकं सांसारिकफलम्; 'स्वेन रूपेणाऽभिनिष्पद्यते'

---

[1] प्रपञ्चाकारम्—आ.द.न. [2] मुपपादयन्ति—त.थ. [3] सजते—वा. [4] कामत्वादि—वा.

[प्रसक्ताशङ्कायाः उत्तरपरं सूत्रम्]

### ३९४. उपस्थितेऽतस्तद्वचनात् ॥ ३–३–४० ॥ (सि)

उपस्थितिः—उपस्थानम्, [1]ब्रह्मोपसम्पत्तिः । उपस्थिते—ब्रह्मोपसम्पन्ने[1] सर्व-[2]बन्ध[2]विनिर्मुक्ते स्वेन रूपेणाऽभिनिष्पन्ने प्रत्यगात्मनि, अत एव—उपसम्पत्तेरेव हेतोः, सर्वेषु लोकेषु कामचार उच्यते—

'परंज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां॰उ. 8–3–4)

'स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा; नोपजनं स्मरन्निदं शरीरम्' (छां.उ. 8–12–3)

'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7–25–2)

इति । तदेतत् चतुर्थे निपुणतरमुपपादयिष्यते ।

अतः, सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वात्, मुमुक्षोः सत्यकामत्वादयो गुणाः उपसंहार्याः ॥ ४० ॥

इति कामाद्यधिकरणम् ॥ १६ ॥

—o—

---

इति साक्षान्मुक्तिफलं स्यात्; तद्विलक्षणत्वस्य श्रवणादित्यर्थः । **अत एवेति** । उपसम्पत्त्य-नन्तरं सर्वलोककामचारकथनात्, हेतुत्वमभिप्रेतमित्यर्थः । **तदेतत्**—ब्रह्मानुभवतो जीवस्य सर्वलोककामचाराद्यपेक्षा कथं स्यात्? इत्येतत् ॥ ४० ॥

इति कामाद्यधिकरणम् ॥ १६ ॥

—o—

---

[सूत्रार्थः । **उपस्थिते**—ब्रह्मोपसम्पन्ने एव, **अतः**—तस्मादेव हेतोः, **तद्वचनात्**—सर्वलोककामचारादिवचनाद्धेतोः, गुणोपासनं मुमुक्षोरेव ।]

**'ब्रह्मप्राप्तेस्तु जीवेऽतः पितृलोकादिकं फलम् । भवतीत्यादिवचनात् न तत्सांसारिकं फलम् ॥' (ब्र.प. 394)**

---

[1] ब्रह्मोपसम्पन्ने—च. ञ. ठ. [2] विभ—ङ.

## (99) तन्निर्धारणानियमाधिकरणम् ॥ ३-३-१७ ॥

[अधिकरणार्थः—कर्माङ्गाश्रितोद्गीथोपासनादेः क्रतुषु उपादेयतानियमाभावः]

### ३९५. तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३-३-४१ ॥ (सि)

[एतदधिकरणीयः संशयगर्भः पूर्वः पक्षः]

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां. उ. 1-1-1)

इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गीथादिमुखेन, जुह्वादिमुखेन पर्ण-

---

**तन्निर्धारणेति** । सत्यकामत्वादीनाम् उपसंहार्यत्वम् उक्तम् । एवमुद्गीथाद्युपासनानामपि नियमेनोपसंहार्यत्वमिति प्रसङ्गात् सङ्गतिः । उद्गीथोपासनादीनि किं सर्वक्रतुषु प्रोक्षणावघातादिवत् नियमेनोपादेयानि ? उत गोदोहनादिवत् अनियमेनोपसंहार्याणि ? इति विचारः । किमेतानि क्रत्वर्थानि ? उत गोदोहनादिवत् पुरुषार्थभूतानि ? । 'यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनं किं पुरुषार्थतामवगमयति ? न ? इति । वीर्यवत्तरत्वश्रुतिः, किम् अपापश्लोकश्रवणवत् अर्थवादः ? उत फलविधिः ? — इति ॥ अर्थवादश्चेत् ! 'यश्चैतदेव'मित्यादिवाक्यस्य पुरुषार्थतावगमकत्वाभावेन क्रत्वर्थत्वात् नियमेनोपादेयता । फलविधिश्चेत् ! अनियमवाक्यस्य पुरुषार्थत्वगमकतया गोदोहनतुल्यत्वात् उपादानानियमः ।

छान्दोग्ये—'वागेवर्क् प्राणः साम ओमित्युद्गीथः' इति निर्द्धारणमेव, उपासनस्य तच्छब्दवाच्यत्वे हेतुः । **जुह्वादीति** । क्रतुप्रकरणाधीते 'जुह्वा जुहोती'ति, वाक्ये, जुहूः होमसाधनत्वेन विहिता । प्रकरणान्तराधीतं 'यस्य पर्णमयी जुहू'रिति, जुहूमनूद्य पर्णमयत्वं विदधाति । तत्र जुहूद्वारा पर्णमयत्वमङ्गम् । तद्वत् प्रकरणान्तरविहितमपि उपासनम् उद्गीथद्वारा क्रत्वङ्गमित्यर्थः । उद्गीथादिविषयस्योपासनस्य प्रकरणान्तराधीतस्याऽपि

---

[सूत्रार्थः । **तन्नि....यमः**—क्रतुषु उद्गीथोपासनस्य नियमेनान्वयाभावः, **तद्दृष्टेः**—अनियमस्यैव श्रुतितोऽवगमात्, **हि**—यतः **अप्रतिबन्धः**—अस्य कर्मान्तराप्रतिरोधेन अविलम्बितफलस्वरूपम्, **फलम्**—उद्गीथफलम्, **पृथक्**—क्रतुफलात् अतिरिक्तमेव ।]

'कर्मण्युद्गीथविद्याया नियमो नाऽस्ति दर्शनात् । प्रतिबन्धनिवृत्तिर्हि तत्फलं पृथगुच्यते ॥ (ब्र.प. 395)

तादिवत् कर्माङ्गत्वेन 'निरूढानुष्ठानानीति;[1] उद्गीथाद्युपासनसम्बन्धिनः,

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छां.उ. 1-1-10) इति वर्तमाननिर्देशस्य, पर्णतादिसम्बन्ध्यपापश्लोकश्रवणवत् पृथक्फलत्वकल्पनायोगात्, क्रतुषु नियमेनोपसंहार्याणि — इति ।

[सूत्रार्थतः सिद्धान्तप्रदर्शनम्]

एवं प्राप्ते, प्रचक्ष्महे– 'तन्निर्धारणानियमः'—इति । निर्धारणं—निश्चयेन मनसोऽवस्थापनम् । ध्यानमित्यर्थः । तन्निर्धारणानियमः—कर्मसु उद्गीथाद्युपासनानाम् अनियमः ।

कुतः ? तद्दृष्टेः । उपलभ्यते हि ! उपासनानुष्ठानानियमः ;

'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद' (छां.उ. 1-1-10)

इति, अविदुषोऽपि अनुष्ठानवचनात् । न च-अङ्गत्वे सति, उपासनस्य, अनुष्ठानानियम उपपद्यते ।

[उद्गीथोपासनस्य फलपार्थक्यम्]

एवम् उपासनस्य अनङ्गत्वे निश्चिते सति, उपासनविधेः फलाकाङ्क्षायाम्, रात्रिसत्रन्यायेन (पू.मी. 4-3-8) वीर्यवत्तरत्वं कर्मफलात् पृथग्भूतमेव, फलमित्यवगम्यते ।

किमिदं वीर्यवत्तरत्वम् ? ; कर्मफलस्यैव अप्रतिबन्धः । प्रतिबध्यते हि ! कर्मफलं

---

क्रत्वङ्गत्वं हि निरूप्यते । अतः [तादृशी] पर्णता दृष्टान्तिता ।। कर्माङ्गत्वेनेति । अफलस्यापि अङ्गत्वेनाऽनुष्ठानं निरूढ्यत इत्यर्थः । वर्तमानेति । वर्तमानवत् निर्देशो यस्येति बहुव्रीहिः । 'वीर्यवत्तरत्वस्ये'ति अध्याहार्यम् ।। 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्र हि विधिप्रत्ययोऽस्तीति तद्व्यावृत्ति । पशुकामस्य प्रणयनसाधनत्वं हि गोदोहनस्य विधेयम् ; नाऽन्यस्य, अतः फलेऽपि विधिकटाक्षोस्ति । स तु नाऽत्र विद्यते इत्यर्थः । फलस्य वाक्यान्तरस्थत्वात्, विप्रकर्षोप्यभिप्रेतः ।।

एवं प्राप्त इति । 'रात्रिसत्रन्यायेने'ति, अर्थवादोक्तमपि फलं विध्यपेक्षितं स्वीकार्य-

[1] रूढानीति—द.

प्रबलकर्मान्तरफलेन, तावन्तं कालम्। [1]तद्भावः[1]—अप्रतिबन्धः। [2]स हि अप्रतिबन्धः, कर्मफलात्[2] स्वर्गादिलक्षणात्, पृथग्भूतमेव फलम्। तदिदमुच्यते—पृथग्घ्यप्रतिबन्धः फलम्—इति ॥

अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वात्, गोदोहनादिवत् कर्मसु उद्गीथाद्युपासनानां—[3]अनियमे[3]नोपसंहारः ॥ ४१ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

—o—

---

मित्यभ्युपगमयितुमुक्तम्। **गोदोहनादिवदिति**। नियमेनोपादेयं हि! अङ्गम्। पशुकामना अस्ति चेत्! गोदोहनोपसंहारः; न त्वन्यदा। अतः अङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्वम्; अपि तु पुरुषार्थत्वमेवेति निर्णीतं कर्मकाण्डे (पू.मी. 4-1-2) ॥ ४१ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

—o—

---

[1] तद्भावो हि—त. भ.  [2] कर्मफलात्—अ. द.  [3] न नियमे—दः

(100) प्रदानाधिकरणम् ॥ ३-३-१८ ॥

[अधिकरणार्थः—हविस्त्यागपार्थक्ये इन्द्रादीनामिव, प्रतिगुणचिन्तनं परमात्मचिन्तनावृत्तिः]

## ३९६. प्रदानवदेव तदुक्तम् ॥ ३-३-४२ ॥ (सि)

[विचारणीयविषयनिर्देशः]

दहरविद्यायाम्—

'तद्य इहाऽऽत्मान'मनुविद्य[1] व्रजन्त्येतांश्च सत्यान् कामान्' (छां.उ. 8-1-6) इति, दहराकाशस्य परमात्मनः उपासनमुक्त्वा, 'एतांश्च सत्यान् कामान्' इति, गुणानामपि पृथगुपासनं विहितम् ।

[विचारौपयिकः संशयः]

तत्र संशयः—गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्याऽऽत्मनश्चिन्तनम्, आवर्तनीयम्? उत न?—इति ।

[पूर्वः पक्षः]

दहराकाशस्यैव अपहतपाप्मत्वादीनां 'गुणित्वात्[2]', तस्य च सकृदेवाऽनुसन्धातुं शक्यत्वात्, गुणार्थं तच्चिन्तनं 'नावर्तनीनीयम्[3]' ।

---

प्रदानेति । पूर्वाधिकरणं प्रसङ्गात् निरूपितम् । अथ तत्पूर्वदहरविद्याविषयनिरूपणं क्रियत इति सङ्गतिः । दहरविद्यायां तत्तद्गुणचिन्तने, तत्तद्गुणविशिष्टतया दहरचिन्तनम् आवर्तनीयम्? न? इति । किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनमपि कृतम्? न? इति । कृतं चेत्! अनावर्तनीयम् । न चेत्! आवर्तनीयम् । **दहरेति** । केवलगुणिचिन्तनं नाम आनन्दत्वादिविशिष्टस्वरूपचिन्तनम् । **गुणाष्टकचिन्तनम्**—गुणचिन्तनम् । **सकृदेव**—तन्त्रेण ।

---

[सूत्रार्थः । **प्रदानवदेव**—एकमेवेन्द्रमुद्दिश्य राजत्वादिविशेषणभेदतः हविः प्रदानावृत्तिवदेव, दहरविद्यायामपि प्रतिगुणचिन्तनं गुणिचिन्तनावृत्तिः कार्या, **तदुक्तम्**—तदेतत् सङ्कर्षकाण्डे निर्णीतम् । ]

'आवृत्तिः करणीयैव दहरस्य गुणैः सह । इन्द्रायेति पुरोडाशप्रदाने निश्चितं यथा ॥' (ब्र.प 396)

---

[1] मनुविद्य—अ. [2] गुणत्वात्—द. [3] नानुवर्तनीयम्—वा.

[सदृष्टान्तोपपत्तिकः सिद्धान्तः]

इति प्राप्ते, उच्यते—'प्रदानवदेव'—इति। प्रदानवत् आवर्तनीयमेवेत्यर्थः। यद्यपि दहराकाश एक एव, अपहत[1]पाप्मत्वादि[1]गुणानां गुणी। स च प्रथमं चिन्तितः; तथापि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात्,

'अपहतपाप्मा विजरः' (छां.उ. 8-1-5)

इत्यादिना गुणविशिष्टतया च उपास्यत्वेन विहितत्वात्, पूर्वं स्वरूपेणाऽनुसंहितस्य अपहतपाप्मत्वादिविशिष्टतया अनुसन्धानार्थम्, आवृत्तिः कर्तव्या। यथा—

'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं [2]निर्वपेत्[2]' (तै.सं. 2-3-6-2)

'इन्द्रायाऽधिराजाय' ,,

'इन्द्राय स्वराज्ञे' ,,

इति इन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि, तत्तद्गुणसम्बन्ध्याकारस्य भिन्नत्वात्, [3]प्रदानावृत्तिः[3] क्रियते। तदुक्तं [4]साङ्कर्षणे[4] (सङ्क्षेपे)—

'नाना वा देवतापृथक्त्वात्' (सं. का.)

इति ॥ ४२ ॥

इति प्रदानाधिकरणम् ॥ १८ ॥

—o—

---

स्वरूपचिन्तनार्थं गुणचिन्तनार्थं च तन्त्रेणाऽनुसन्धातुं शक्यत्वादित्यर्थः। गुणविशिष्टाकारः— गुणसम्बन्धिरूपसमुदायः। तस्य स्वरूपमात्राद्भिन्नत्वात्। न हि स्वरूपमात्रं गुणानां गुणिनश्च समुदायो भवतीत्यर्थः।

अपहत ... विहितत्वादिति। 'अपहतपाप्मा विजरः' इत्यादिशब्दानां गुणिपर्यन्ताभिधायित्वात्, 'एतांश्च सत्यान् कामान्' इत्यत्राऽपि गुणिपर्यन्तानामेव गुणानामुपासनं विहितमित्यर्थः ॥ ४२ ॥

इति प्रदानाधिकरणम् ॥ १८ ॥

—o—

---

[1] त्वादीनां - त.  [2] अनुनिर्वपेत्—म.  [3] प्रधाना—त.भ.  [4] सङ्कर्षणे—आ.

## (101) लिङ्गभूयस्त्वाधिकरणम् ॥ ३-३-१९ ॥

[अधिकरणार्थः—तैत्तिरीयकगतस्य सहस्रशीर्षमित्यनुवाकस्य सर्ववेदान्तोदितपरविद्योपास्य-विशेषनिर्धारणपरत्वम्; न तु दहरविद्यामात्रशेषत्वम्]

## ३९७. लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ३-३-४३ ॥ (सि)

[विचारणीयविषयनिर्देशः]

तैत्तिरीयके[1], दहरविद्यानन्तरमधीयते—

'सहस्रशीर्षं देवं विश्वाक्षं विश्व[2]शम्भुवम्[2] ।
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥' (तै.ना.उ. 11-1)

इत्यारभ्य,

'सोऽक्षरः परमः स्वराट्' (तै.ना.उ. 11-11)

इत्यन्तम् ॥

[विचारौपयिकः संशयः]

तत्र संशयः—किं पूर्वप्रकृतविद्यया एकविद्यात्वेन तदुपास्यविशेषनिर्धारणम् अनेन क्रियते? उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणम्?—इति ॥

---

लिङ्गेति । पूर्वप्रकृतविद्यैकवाक्यत्वेन सङ्गतिः ।

परविद्येति, दृष्टिविधिव्यावृत्तिः । किं सर्वासु परविद्यासु नारायण एवोपास्यः? उत दहरविद्यामात्रे? । किं नारायणानुवाके सर्वविद्यानामुपास्यविशेषो निर्धार्यते? उत दहरविद्याया एव? किमत्र दहरोद्देशेन नारायणत्वं विधीयते? उत सर्वविद्योपास्योद्देशेन? इति । किं हृदयायतनत्वश्रवणम् अनुरोद्धव्यम्? उत लिङ्गभूयस्त्वम्? ।

---

[सूत्रार्थः । लिङ्ग....स्त्वात्—सहस्रशीर्षानुवाके परमात्मनश्चिह्नानामाधिक्यात्, (अयं सर्वविद्योपास्यनिर्धारणार्थ एव,) तद्धि—लिङ्गभूतं वाक्यमेव हि, बलीयः—अङ्गत्वनिर्णये प्रकरणाद्यपेक्षया बलिष्ठम्, तदपि—बलिष्ठत्वमपि, उक्तम्—कर्मकाण्डे प्रतिपादितम् ।]

'सहस्रशीर्षमित्यादि सर्वविद्यानुयायि च । वाक्यभूम्ना प्रकरणात् तद् बलीयस्तथोक्तितः ॥' (अ.प. 397)

---

[1] तैतिरीये—पा. तैत्तिरीयाः—च. [2] सम्भवम्—न.

[सहेतुकः पूर्वपक्षः]

*किं युक्तम्? दहरविद्योपास्यविशेषनिर्धारणम्*—इति ।

कुतः? प्रकरणात् । पूर्वस्मिन् अनुवाके दहरविद्या हि प्रकृता ।

'[1]दह्रं विपाप्मं[1] परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम् ।

तत्राऽपि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥' (तै.ना.उ. 10–23)

इति । अस्मिंश्चाऽनुवाके—

'पद्मकोशप्रतीकाशं हृदयं चाऽप्यधोमुखम्' (तै.ना.उ. 11–7)

इत्यादिना हृदयपुण्डरीकाभिधानम्, अस्य नारायणानुवाकस्य दहर[2]विद्योपास्य[2]निर्धारणार्थत्वमुपोद्बलयतीति ॥

[सूत्रार्थविवृत्या सिद्धान्तार्थः]

एवं प्राप्ते, प्रचक्ष्महे—'लिङ्गभूयस्त्वात्'—इति । अस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते । तथा हि!; परविद्यासु अक्षर-शिव-शम्भु-परब्रह्म-परज्योतिः-परतत्त्व-परमात्मादिशब्दनिर्दिष्टम् उपास्यं वस्तु, इह तैरेव शब्दैः अनूद्य, तस्य नारायणत्वं विधीयते । भूयसीषु विद्यासु श्रुतान् अनूद्य, नारायणत्वविधान[3]भूयस्त्वं,[3] 'नारायण एव सर्वविद्या'सूपास्यम्[4] अस्थूलत्वादि-विशेषितानन्दादिगुणकं परं ब्रह्म' इति विशेष[5]निर्णये,[5] भूयः—बहुतरं लिङ्गं भवति ।

---

हृदयायतनत्वश्रवणानुरोधे, दहरोद्देशेन नारायणत्वविधानात् नारायणानुवाकस्य दहरविद्यामात्रोपास्यविषयत्वात्, तस्यामेव नारायण उपास्यः स्यात् । लिङ्गभूयस्त्वानुरोधे, सर्वोपास्योद्देशेन नारायणत्वविधानात्, नारायणानुवाकस्य सर्वपरविद्योपास्यनिर्धारकतया, सर्वासु परविद्यासु नारायण एवोपास्य इति ॥ पूर्वानुवाके 'आत्मा गुहायां निहितः' इति, अत्रापि 'आत्मा नारायणः परः' इति आत्मशब्दश्रवणात्, दहरविद्यामात्रान्वयीति अर्थसिद्धम् ॥

---

[1] दहरं विपापम्—वा.

[2] विद्योपास्यविशेष—वा.

[3] भूयस्त्वात्—त. थ.

[4] सूपास्यः—थ.

[5] निर्णयः—द.

अत्र 'लिङ्ग'शब्दः, चिह्नपर्यायः । चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः ॥

[लिङ्गस्य बलीयस्त्वोपपत्तिः]

तद्धि ! प्रकरणाद् बलीयः । तदप्युक्तं, प्रथमे काण्डे—

'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये प(पा)रदौर्बल्यमर्थविप्रकर्षात्' (पू.मी.सू. 3-3-14)

इति ।

[दहरमात्रशेषताया निरासः]

यत्तूक्तम्—'पद्मकोशप्रतीकाशम्' इत्यादिवचनं, दहरशेषत्वम् अस्य 'उपोद्बलयति—इति[1] । तन्न ; बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वे अवधृते सति, दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन, तद्वचनोपपत्तेः ।

न च—'सहस्रशीर्षम्' इत्यादिद्वितीयानिर्देशेन, पूर्वानुवाकोदितोपासिना सम्बन्धः शङ्कनीयः ;

'तस्मिन् यदन्तस्तदुपासितव्यम्' (तै.ना.उ. 10-23)

इति उपासिगतेन कृत्प्रत्ययेन, उपास्यस्य कर्मणः अभिहितत्वात्, तदुपास्ये द्वितीयानुपपत्तेः ॥

'विश्वमेवेदं पुरुषः' (तै.ना.उ. 11-2)

'तत्त्वं नारायणः परः' (तै.ना.उ. 11-4)

---

**चिह्नपर्याय इति** । न तु श्रुति-लिङ्गादिषु लिङ्गमित्यर्थः । **पद्मकोशेत्यादि** । यथा 'ऐतदात्म्यमिदम्' इति सामान्येनोक्तं ब्रह्मात्मकत्वं, 'तत् त्वमसि' इति जीवविशेषे-निगमितम् । तथा नारायण एव सर्वविद्योपास्यः । तस्मात् अस्मिन्नपि विद्याविशेषे स एवोपास्य इति, विशेषे तत्प्रदर्शनमित्यर्थः ।

**न च सहस्रेति** । 'येनाऽऽवृतं खं च दिवं महीं च' इत्यादिवत् द्रष्टव्यमिति भावः ।

**विश्वमेवेदम्** इत्यादिना, प्रथमार्थत्वमेव संनिकृष्टवाक्यैः उपपादितम् ।

---

[1] उपोद्बलयति—द.

इत्यादिप्रथमानिर्देशाच्च, प्रथमार्थे द्वितीया वेदितव्या ।

‘ अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ’ (तै.ना.उ. 11-5)

‘ तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ’ (तै.ना.उ. 11-11)

‘ [1]स ब्रह्मा[1] स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ’ (तै.ना.उ. 11-13)

इति निर्देशैः, ‘ सर्वस्मात्परो नारायण एव सर्वत्रोपास्यः ’ इति निर्णीयमानत्वाच्च, प्रथमार्थे द्वितीयेति [2]निश्चीयते[2] ॥ ४३ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

—o—

अन्तर्बहिरिति । द्वितीयाविभक्त्यन्तवाक्यानुगुणं[तु] प्रथमान्तानि वाक्यानि न नेयानि । [तथा सति] ‘उपासीते’ति विधिपदाध्याहारः स्यात् इत्यर्थसिद्धम् । ‘विद्यात्, उपासीते’त्यादि विधायकपदरहितानां भगवत्परत्वपराणाम् अनेकवाक्यानां पर्यालोचनया, सर्वविद्यासु उपास्यविशेष-निर्धारणपरत्वम्, अस्याऽनुवाकस्य प्रतीयते । [एवं निर्णये] ‘ येनाऽऽवृतं खं च दिवं महीं च ’ इत्यादिवत् द्वितीयान्तपदमात्रास्वारस्यम् । न तु विधिपदाध्याहारः, नाऽपि पूर्वापरवाक्याना-मर्थस्वभावविरोधः, न वा प्रथमान्तपदानामस्वारस्यं च । [पूर्वपक्षे शङ्कितः] ‘आत्मा वा अरे द्रष्टव्यः, आत्मा वा इदमेक एव, आत्मनस्तु कामाय, आत्मानमेव लोकम्, तमेवैकं ध्यायथाऽऽत्मानम्’—इति ‘आत्म’शब्दस्य बहूपनिषत्सु उद्घोषात्, नारायणस्यैव उपास्यत्व-साधकः ॥ ४३ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

—o—

---

[1] स ब्रह्म—वा. [2] निर्णीयते—आ.

(102) पूर्वविकल्पाधिकरणम् ॥ ३-३-२० ॥ (सू. 44-50)

[अधिकरणार्थः—अग्निरहस्यब्राह्मणोक्तानां मनश्चिदाद्यग्नीनां विद्यामयक्रत्वनुप्रविष्टता]

## ३९८. पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ३-३-४४ ॥ (पू)

[विचारणीयविषयोपस्थापनम्]

**वाजसनेयके अग्निरहस्ये मनश्चिता(दा)दयोऽग्नयः श्रूयन्ते—**

'**मनश्चितः** (अ.र. 5-3-3) **वाक्चितः** (5-3-4) **प्राणचितः** (5-3-5) **चक्षुश्चितः** (5-3-6) **श्रोत्रचितः** (5-3-7) **कर्मचितः** (5-3-9) **अग्निचितः** (5-3-11)

**इति ।**

---

**पूर्वेति ।** प्रकरणात् बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम् । इह तु प्रकरणस्य बलवत्त्वात्, मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशिनः—इति शङ्कया सङ्गतिः ।

'क्रियारूपाः विद्यारूपाः' इति सौत्रनिर्देशानुरोधेन निर्दिष्टम् । तद्विवरणम्—क्रियामयक्रत्वनुप्रवेशेन, विद्यामयक्रत्वनुप्रवेशेन इति च । मनश्चिदादीनां स्वरूपस्य विद्यारूपत्वे हि न विप्रतिपत्तिः । अङ्गिद्वारा विद्यारूपत्वे तु विप्रतिपत्तिः । अतः सूत्रे 'क्रिया'शब्दो लाक्षणिकः । क्रियामयक्रत्वङ्गतया क्रियाः, तत्सम्बन्धिन्यः इत्यर्थः ।

किं मनश्चिदादयः क्रियामयक्रत्वन्वयिनः? उत विद्यामयक्रत्वन्वयिनः? । किम् इष्टकचिताग्निद्वारा संनिहितक्रियामयक्रतौ एषां विनियोगोऽस्ति? न? इति । किं श्रुतिलिङ्गवाक्यैः

---

[**सूत्रार्थः** । (अग्निरहस्योक्तः मनश्चिदादिभिः), **प्रकरणात्**—क्रियामयक्रत्वङ्गस्य इष्टकचिताग्नेः प्रकृतत्वात्, तत्संनिहितत्वाच्चाऽस्य, **क्रिया स्यात्**—क्रियामयक्रत्वनुप्रविष्ट एव भवेत्; (तस्य च) **पूर्वविकल्पः**—प्रकृतेन इष्टकचिताग्निना सह विकल्पश्च स्यात्, **मानसवत्**—द्वादशाहसम्बन्धिनो मानसाख्यग्रहस्य क्रियामयक्रत्वनुप्रवेशवत् ।]

'**प्रक्रियातो मनश्चित्तु क्रियामयमखान्वयी । विकल्पश्चेष्टकचितवह्निना मानसं यथा ॥**' (**ब्र.प.** 398)

[विचारौपयिकः संशयः]

तत्र संशयः—किमेते मनश्चिदादयः साम्पादिकत्वेन विद्यारूपा अग्नयः, क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः? आहोस्वित् विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एव?—इति विशये ;

[पूर्वः पक्षः सूत्रत एव]

क्रियारूपत्वं तावदाह—'पूर्वविकल्पः'—इत्यादिना। चित्याग्नित्वेन सम्पादितानामेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात्, पूर्वत्र,

'असद्वा इदमग्र आसीत्' (अग्नि.का.पा. 10-5-3)

इत्यादिना इष्टकचितस्याऽग्नेः प्रकृतत्वात्, तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसंनिधानात्, तत्प्रकरणगृहीताः मनश्चिदादयः, तेन इष्टकचितेनाऽग्निना [1]विकल्प्यमानाः[1], क्रियारूपा एव स्युः। विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं, मानसग्रहवत् उपपद्यते। यथा द्वादशाहे अविवाक्ये दशमेऽहनि, मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्याऽपि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम् ; तथा इहाऽपि ॥ ४४ ॥

---

विद्यामयक्रतौ विनियोगोऽवगम्यते? उत न? इति। किम् अनुबन्धादिभिः अतिदिष्टफलान्वयाच्च विद्याविधिः कल्प्यः? उत न? इति। अकल्प्यत्वे, तत्र श्रुत्यादिभिः विनियोगायोगात्, प्रकरणविनियोगेन क्रियामयक्रत्वन्वयिनः स्युः। विधेः कल्प्यत्वे, तत्र श्रुत्यादिभिर्विनियोगात्, प्रकरणस्य दुर्बलत्वाच्च विद्यामयक्रत्वन्वयिनः स्युः।

[**साम्पादिकम्**—सम्पादमर्हतीति ढक्। सम्पादितमित्यर्थः (भा.प्र.)]

**चित्याग्नित्वेनेति**। होमस्थानत्वात् 'अग्नि'शब्देन निर्देशः। न हि! होमस्थानमात्रस्य क्रत्वनुप्रवेश इति, तद्व्यावृत्त्यर्थमुक्तम्। **सम्पादितानाम्**—तथात्वेनाऽनुसंहितानामित्यर्थः। [**साकाङ्क्षाणामिति**। फलत्वसिद्ध्यर्थमितिशेषः। (भा.प्र.)] **क्रतुसंनिधानम्**—बुद्धिस्थत्वम्। **ग्रहः**—पात्रविशेषः। **विवाक्ये**—विगतवाक्ये। यद्वा **अविवाक्ये**—विविधवाक्यरहिते। मनोनिष्पाद्योपयोगित्वेन ग्रहस्य मानसत्वम्, न हि स्वरूपेण विद्यते ॥ ४४ ॥

---

[1] **विकल्पमानाः—त.**

[ उक्तार्थदृढीकरणम् ]

## ३९९. अतिदेशाच्च ॥ ३-३-४५ ॥ (पू)

इतश्च, इष्टकचितेनाऽग्निना मनश्चिदादीनां विकल्पः, क्रियारूपत्वं च अवगम्यते। 'तेषामेकैक एव तावान् यावानसौ पूर्वः' (अग्नि. 10-5-3)

इति पूर्वस्य इष्टकचितस्याग्नेः वीर्यं, मनश्चिदादिषु अतिदिश्यते। तेन तुल्यकार्यत्वात् विकल्पः। ततश्च इष्टकचितवत् तत्क्रतुनिर्वर्तनेन तदङ्गभूताः [1]मनश्चिदादयः, क्रियामयक्रत्वनुप्रवेशेन[1] क्रियारूपा [2]एवेति[2] ॥ ४५ ॥

[सिद्धान्तसूत्राणि]

[3]एवं प्राप्ते,[3] प्रचक्ष्महे—

## ४००. विद्यैव तु निर्धारणात् दर्शनाच्च ॥ ३-३-४६ ॥ (सि)

तु शब्दः पक्षं व्यावर्तयति। यदुक्तम्—मनश्चिदादयः [4]क्रियामय[4]क्रत्वनुप्रवेशेन क्रिया[5]रूपा[5] एव—इति; नैतदस्ति। विद्यारूपा एवैते। विद्यारूपक्रत्वन्वयिनः इत्यर्थः।

कुतः?—निर्धारणात् दर्शनाच्च—। निर्धारणं तावत्,

'ते हैते विद्याचित एव। विद्यया हैवैत एवंविदश्चिता भवन्ति'

(अग्नि. 10-5-3-12)

इति। वाङ्मनश्चक्षुरादिव्यापाराणाम् इष्टकादिवत् चयनानुपपत्तेः, मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि, 'विद्याचित एव' विद्यया हैवेते' इति च अवधारणं,

---

**वीर्यम्**—कार्यकरत्वसामर्थ्यम् ॥ ४५ ॥

**विद्यारूपेति**। सूत्रे विद्याशब्दः लाक्षणिक इत्यर्थः।

---

[सूत्रार्थः। **अतिदेशाच्च**—इष्टकचिताग्निकार्यस्य मनश्चिदादौ श्रुत्यैव 'यावानसौ पूर्वः' इत्यतिदिष्टत्वादपि हेतोः, मनश्चिदादेः पूर्वेण साकं विकल्प इति क्रियामयक्रत्वङ्गतैव।]

'यावानसौ पूर्व इति ह्यतिदेशाद्विकल्पतः। मनश्चिदादेस्तत्तुल्यः क्रियामयमखान्वयः॥' (ब्र.प. 399)

[सूत्रार्थः। **विद्यैव**—मनश्चिदाद्यमय विद्यामयक्रत्वन्वयिन एव, **निर्धारणात्**—'विद्याचित एवे'ति निर्णीतोक्तेः, **दर्शनाच्च**—'मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति श्रुतित एव स्पष्टीकरणाच्च।]

'मनश्चिदपि विद्यैव दर्शनादवधारणात्। ते विद्याचित एवेति मनसैषु ग्रहा इति॥' (ब्र.प. 400)

---

[1] मनश्चिदादयः—पा. [2] इति—श्रा. [3] प्राप्ते—त.

[4] क्रियामयाः—थ. [5] मयाः—वा.

विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थम्—इति निश्चीयते ।

[दर्शनाच्चेति सौत्रभागव्याख्यानम्]

दृश्यते च अत्रैव, [1]एषां[1] शेषी विद्यारूपः क्रतुः ;

'ते मनसैवाऽधीयन्त मनसैवाऽचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते यत्किंच [2]यज्ञीयं[2] कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत' (अग्नि. 10-5-3-3)

इति । 'इष्टकचितेष्वग्निषु, यत् क्रियामयं यज्ञीयं कर्म क्रियते, तत् मनोनिर्वर्त्येषु मनश्चिदाद्यग्निषु मनोमयमेवाऽक्रियत' इति वचनात्, क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥ ४६ ॥

[विद्यारूपत्वस्य बाधशङ्कापरिहारौ]

ननु—अत्र विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्च, इष्टकचिताग्न्युपस्थापित-क्रियामयक्रतुप्रकरणात्, विद्यामयक्रत्वन्वयेन विद्यारूपता एषां [3]बाध्येत[3] !

नेत्याह—

## ४०१. श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३-३-४७ ॥ (सि)

---

एषु—मनश्चिदादिषु । कर्म क्रियते—प्रधानभूतं कर्म क्रियते । यत्किंच....कर्म—अङ्गभूतं कर्म ॥ ४६ ॥

फलसंबन्धाप्रतीतेश्चेति । विधिपदाश्रवणेऽपि फलसम्बन्धे सति विधिः कल्प्यते; सोऽपि नास्तीत्यर्थः ।

---

[सूत्रार्थः । श्रुत्यादिबलीयस्त्वाच—श्रुतिलिङ्गवाक्यानां प्रकरणापेक्षया अधिकबल-वत्वादपि हेतोः, बाधः न—श्रुत्यादिप्रतिपन्नस्य क्रतुगतविद्यामयत्वस्य तदन्वयस्य च बाधो न भवितुमर्हति ।]

'प्रक्रियातो बलीयस्त्वाच्छ्रुतेरस्मिन् प्रघट्टके । बाधो विद्यामयमखस्याऽन्वये न भवेद् ध्रुवम् ॥' (ब्र.प. 401)

---

[1] एतेषां—त. थ. [2] यज्ञियं—द. [3] बाध्यते—च.

श्रुति-लिङ्ग-वाक्यानां प्रकरणाद् बलीयस्त्वेन, श्रुत्याद्यवगतः क्रतुः, एषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते। श्रुतिस्तावत्—

'ते हैते विद्याचित एव' (अग्नि. 10-5-3-12)

इति। [1]तां[1] विवृणोति—

'विद्यया हैवैत एवंविदश्चिता भवन्ति' (अग्नि. 10-5-3-12)

इति। विद्यया—विद्यामयेन क्रतुना सम्बद्धाः [2]मनश्चिदादयः चिता[2] भवन्तीत्यर्थः।

'तान् हैतानेवंविदे [3]सर्वदा[3] सर्वाणि भूतानि [4]चिन्वन्त्यपि[4] स्वपते'

(अग्नि. 10-5-3-12)

इति लिङ्गम्। वाक्यं च, 'एवंविदे चिन्वन्ति' इति। समभिव्याहारो वाक्यम्। एवंविदे—विद्यामयक्रतुमते, सर्वदा सर्वाणि भूतानि [5]चिन्वन्ती[5]त्यर्थः। सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा [6]सम्पादितं[6], परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनु[7]प्रवेशसम्भव[7]मलभमानं, विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति॥ ४७॥

[पूर्वोक्तपूर्वपक्षहेत्वनुवादपूर्वकं सूत्रतो निरासः]

[8]यच्चेदमुक्तम्[8]—विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च, क्रियामयात् क्रतोरन्यः अत्र विद्यामयः क्रतुः न सम्भवति—इति; तत्राऽऽह—

---

विद्ययेति प्रयोजनतया हेतुः। विद्यामयक्रतुसम्बन्धेन तन्निर्वर्तनार्थमित्यर्थः। एवंविद इति। यथोक्तविद्यामयक्रतुमत्पुरुषस्य कृते हि। एतानग्नीन् सर्वभूतानि चिन्वन्तीत्यर्थः।

सर्वभूतेति। [एवं रीत्या] मनसाऽनुसंहितस्य चयनस्य, परिमितकालकर्तृकक्रियामयेष्टकचिततुल्यकार्यतया क्रत्वनुप्रवेशासम्भवः, विद्यामयक्रत्वनुप्रवेशो लिङ्गमित्यर्थः। विद्यामयः क्रतुः सर्वकालवर्तित्वेन सर्वभूतकर्तृकत्वेन च अनुसन्धीयते। अतस्तादृशं चयनं तादृशक्रत्वन्वयीति भावः॥ ४७॥

---

[1] तान्—वा.
[2] मनश्चिताः—द.
[3] सदा—त. थ.
[4] विचिन्वन्त्यपि—त. थ.
[5] विचिन्वन्ती—अ.
[6] आपादितं—द.
[7] प्रवेश—द.
[8] यच्चैतदुक्तम्—द.

## ४०२ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ३-३-४८ ॥ (सि)

इष्टकचितान्वयिनः क्रियामयात् क्रतोः, विद्यामयः अयं क्रतुः पृथक्त्वेन, अनुबन्धादिभ्यः पृथक्त्वहेतुभ्यः अवगम्यते। अनुबन्धाः—यज्ञानुबन्धिनो ग्रह-स्तोत्र-शस्त्रादयः;

'मनसैषु ग्रहा न गृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्' (अग्नि. 10-5-3-3)

इत्यादिना प्रतिपादिताः। 'आदि'शब्देन श्रुत्यादयः पूर्वोक्ताः गृह्यन्ते। [1]श्रुत्यादिभिः[1] सानुबन्धैः, विद्यामयः क्रतुः पृथगवगम्यते इत्यर्थः। प्रज्ञान्तरपृथक्त्ववत्—यथा प्रज्ञान्तरं—दहरविद्यादि, क्रियामयात् क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते; एवम् अयमपि। एवं च अनुबन्धादिभिः पृथग्भूते विद्यामये यज्ञे अवगते सति, विधिः परिकल्प्यते। दृष्टश्च अनुवाद[2]सरूपेषु[2] कल्प्यमानो विधिः। तदुक्तम्—

'वचनानि त्वपूर्वत्वात्' (पू.मी.सू. 3-5-21)

इति। फलं च,

'[3]तेषामेकैक एव[3] तावान् यावानसौ पूर्वः' (अग्नि. 10-5-3-11)

इत्यतिदेशात्, स्वक्रतुद्वारेण इष्टकचितस्याग्नेः यत् फलं, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

---

**दृष्टश्चेति।** सानुबन्धैः श्रुत्यादिभिः विद्यामयक्रतोरवगतत्वात्, श्रुतहानप्रसङ्गपरिहारार्थम् [अन्यत्रेव] विधिः कल्प्यत इति भावः। **यत् फलमिति।** फलकामनया कृतं चेत्! तत्फलावाप्तिः। अन्यथा चेत् मुक्तिफलमिति भावः ॥ ४८ ॥

---

[सूत्रार्थः। **प्रज्ञा....त्ववत्**—दहरादिकानामितरासां विद्यानां भेदसिद्धिवत्, **अनुबन्धादिभ्यः**—यज्ञोपयोगिभ्यो मानसेभ्यो ग्रहादिभ्यः, श्रुत्यादिभ्यश्च ज्ञापकेभ्यः, मनश्चिदादेरग्नः इष्टकचितादिभ्यः पार्थक्यमवगम्यते, **दृष्टश्च**—यतः अनुवादसरूपेऽपि वाक्ये विधेः कल्पनाप्रसङ्गः अन्यत्र ज्ञातः अतः अत्राऽपि विधिः कल्प्यः। **तत्**—एवं विधिकल्पनम्, **उक्तम्**—कर्मकाण्डे प्रतिपादितम्।]

'क्रियामयात् पृथगयं पृथक्स्तोत्रादितः श्रुतेः। दहादिभेदवद् दृष्टोऽनुवादेऽपि विधिर्ननु॥' (ब्र.प. 402)

---

[1] श्रुति-लिङ्गादिभिः—क. घ. [2] स्वरूपेषु—द. [3] तेषामेवैकैक;—ङ.

[अतिदेशस्य पूर्वपक्षोपष्टम्भकतानिरासः]

यत् पुनः—अतिदेशेन तुल्यकार्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यते—इत्युक्तम् ; तत्राह—

## ४०३. न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ३-३-४९ ॥ (सि)

न अवश्यम्, अतिदेशात् अवान्तरव्यापारस्यापि तुल्यतया भवितव्यम् ; येन क्रियामयक्रत्वनुप्रवेशः एषां स्यात् ! ; यस्मात्कस्माच्चित् सामान्यमात्रात् अतिदेशोपलब्धेः । उपलभ्यते हि !

'स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' (अग्नि. 10-5-2-13) इत्यादिषु संहर्तृत्वादिसामान्यमात्रात् अतिदेशः । न हि तत्र मण्डलपुरुषस्य मृत्युवत् तल्लोकापत्तिः—तद्देशप्राप्तिरपि भवति ।

एवम् इहाऽपि मनश्चिदादीनाम् इष्टकचिताग्निवद्भावातिदेशमात्रेण इष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनाऽपि न भवितव्यम् । अतः इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलं, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमिति, अतिदेशादवगम्यते ॥ ४९ ॥

.......................................................................

अवान्तरव्यापारस्य—क्रियामयक्रत्वनुप्रवेशस्येत्यर्थः । तल्लोकापत्तिः इति व्याख्येयं पदम् । तच्छब्दः पूरकतया अध्याहृतः । तद्देशापत्तिः इति तद्व्याख्या । अग्निवद्भावः—अग्नितुल्यत्वम् । इष्टकचिताग्निदेशरूपेति । देशः आश्रयः । अङ्गस्याऽऽश्रयः अङ्गी । इष्टकचिताग्न्यङ्गिरूपेत्यर्थः ॥ ४९ ॥

---

[सूत्रार्थः । सामान्यादपि—संहर्तृत्वरूपसमानधर्ममात्रादपि, उपलब्धेः—मण्डलपुरुषे मृत्युत्वातिदेशस्य दर्शनात्, न—क्रियामयत्वादिदेशः अत्र नावगम्यते, मृत्युवत्—'स एष मृत्युः' इत्यतिदेशगम्योऽर्थः, न हि लोकापत्तिः—मृत्युलोकावाप्तिरपि न भवति खलु । ]

'एकदेश्यं नाऽतिदेश्यमन्यथाऽप्युपपत्तितः । न तल्लोकस्थितिः सूर्ये ह्येष मृत्युरिति श्रुतौ ॥' (ब्र.प. 403)

[अनन्तरश्रुतस्य ब्राह्मणस्य सिद्धान्तोपष्टम्भकत्वोपपादनम् ]

## ४०४. परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ३-३-५० ॥ (सि)

परेण च ब्राह्मणेन, अस्याऽपि मनश्चिदाद्यभिधायिनः शब्दस्य, ताद्विध्यम्—तद्विधत्वम्, [1]विद्यामयप्रतिपादित्वम्[1] अवगम्यते। परेण हि ब्राह्मणेन,

'अयं वाव लोक एषोऽग्निः चितः। तस्याऽऽप एव परिश्रितः।'
(अग्निः. 10-5-4-1)

इत्यादिना,

'स यो हैतदेवं वेद लोकम्पृणाम्....एवंभूतमेतत्सर्वमभिसम्पद्यते'
(अग्नि. 10-5-4-1)

इति पृथक्फला विद्यैव विधीयते। तथा वैश्वानर[2]विद्यादौ च,[2] विद्यैव विधीयते। अतः अग्निरहस्यस्य क्रियैकविषयत्वं नाऽस्ति।

---

परेण चेति। [पूर्वम्] प्रकरणादपि प्रबलैः श्रुत्यादिभिः विद्यामयक्रत्वङ्गत्वमुक्तम्। अथ, प्रकरणेनाऽपि अयमर्थः उपपाद्यते॥

अयं लोकः—भूः। आपः—समुद्राः। परिश्रिताः—परिस्तरणानि। एतत् लोकम्पृणाम्—'पॄ-पालन-पूरणयोः'। पूरयन्तीं भुवम्। एतत् एवं वेद। लिङ्गव्यत्ययः।

---

[सूत्रार्थः। **परेण च**—पश्चात्तनेन ब्राह्मणेन च, **शब्दस्य**—मनश्चिदादेः शब्दस्य, **ताद्विध्यम्**—विद्यामयक्रत्वनुप्रवेशपरत्वम्, **अनुबन्धस्तु**—(एतेषां) क्रियामयप्रकरणसंयोजनं तु, **भूयस्त्वात् तु**—अग्न्यङ्गानां तत्प्रकरणे आधिक्यादेव।]

'उत्तरेण ब्राह्मणेन वाचो विद्यामयान्वयः। अग्न्यङ्गानां च भूयस्त्वात् सम्बन्धोऽग्निरहस्यके॥'(ब्र.प 404)

---

1 विद्याप्रतिपादित्वम्—थ. विद्यामयप्रतिपादित्वम्—द.

2 विद्यादौ—न.

एवं तर्हि! विद्यामयाः मनश्चिदादयः बृहदारण्यके [1]अनुबद्धव्याः[1], किमर्थम् इहाऽनुबध्यन्ते? तत्रोच्यते—'भूयस्त्वात्त्वनुबन्धः'—इति। मनश्चिदादिषु सम्पादनीयानाम् अग्न्यङ्गानां भूयस्त्वात्, तत्सन्निधौ इह अनुबन्धः कृतः ॥ ५० ॥

इति पूर्वविकल्पाधिकरणम् ॥ २० ॥

—o—

---

एतमग्निं वेदेत्यर्थः ॥ [पूरयन्तीम् 'इष्टकाम्' इति शेषः। 'लोकम्पृणा' शब्दः 'छिन्द्रम्पृणा'शब्दवत् इष्टकापरः। सा चयनप्रदेशपूरिका। तस्मात्, 'भुवं पूरयन्तीम्' इत्यन्वयः। अत्र भूततृतीयाग्निलोकम्पृणेष्टकादृष्टिर्विधीयते] (वीर.टि.) ॥ ५० ॥

[सूत्राणि—१ पूर्वविक २ अति ३ विद्यैव ४ श्रुत्यादि
५ अनुबन्धा ६ न सामान्या ७ परेण च।]

इति पूर्वविकल्पाधिकरणम् ॥ २० ॥

—o—

[1] अनुबन्धव्याः—वा.

(103) शरीरे भावाधिकरणम् ॥ ३-३-२१ ॥ (सू. ५१-५२)

[अधिकरणार्थः—उपासककर्तृकं प्रत्यगात्मभूतस्य स्वात्मनोऽनुसन्धानम् आविर्भूयमानगुणाष्टकवत्त्वेन]

## ४०५. एक आत्मनः शरीरे भावात् ॥ ३-३-५१ ॥ (पू)

[विचारणीयविषयोपस्थापनम्]

सर्वासु परविद्यासु, उपास्योपासनस्वरूपवत् उपासकस्वरूपस्याऽपि ज्ञातव्यत्वमुक्तम्;

'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' (ब्र.सू. 1-4-6)

इति। वक्ष्यति च अस्य प्रत्यगात्मनः परमात्मात्मकत्वेनाऽनुसन्धानम्;

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू. 4-1-3)

इति॥

[विचारौपयिकः संशयः]

किमयं प्रत्यगात्मा, ज्ञाता कर्ता भोक्ता इहाऽमुत्र सञ्चारक्षमः अनुसन्धेयः? उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः? ॥

[सहेतुकः पूर्वः पक्षः]

किं युक्तम्? 'ज्ञातृत्वाद्याकारमात्रः'—इति एके मन्यन्ते ॥

---

एक इति। पूर्वाधिकरणं प्रासङ्गिकम्। अतः तत्पूर्वाधिकरणेन [अस्य] सङ्गतिः। सर्वास्विति। सर्वविद्यासु भगवत एवोपास्यत्वमुक्तम्। तथा प्रत्यगात्मापि अनुसन्धेय इति सङ्गतिः सूचिता। 'त्रयाणाम्' (ब्र.सू. 1-4-6) इति पदं, दीप-सारयोः उपास्योपासकोपासनपरं व्याख्यातमिति, तदभिप्रायेणेदम्। वक्ष्यति चेति। सूत्रद्वयोक्तार्थोपजीवनेन इदमधिकरणं प्रवर्तत इत्यर्थः। सिद्धान्ते प्रत्यगात्मनः उपास्यकोटिनिक्षेपस्य वक्ष्यमाणत्वात् तदुपयोगित्वेनेदम्।

---

[सूत्रार्थः। आत्मनः—उपासितुर्जीवस्य, शरीरे भावात्—(उपासनदशायां) देहेऽवस्थानात्, (स्वस्य तत्कालीनं ज्ञातृत्वादिगुणजातमेव उपासनकाले स्वप्रकारतया अनुसन्धेयमिति,) एके—श्रुत्यर्थनिर्वहणप्रवृत्ताः केचनाऽभिप्रयन्ति।]

'आत्मनः कर्तृतायुक्तं स्वरूपं ध्येयमब्रुवन्। शरीरे वर्तमानस्य तथाभावादितीतरे॥' (ब्र.प. 405)

कुतः ? अस्य उपासकस्याऽऽत्मनः, शरीरे भावात्; आत्मनः शरीरे वर्तमानस्य, ता(या)दृशमेव रूपम्; तावतैवाऽनुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च ॥

[उक्तार्थे काम्यकर्मानुष्ठातृदृष्टान्तीकरणम्]

न हि! कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां, ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपं; तादृशं रूपं साधनानुष्ठानदशायामनुसन्धातव्यम्। तावतैव साधनानुष्ठान-तत्फलयोः सिद्धेः, अतिरिक्तानुसन्धाने प्रयोजनाभावात्। तदविशेषात् इहाऽपि तथैव ॥

[फलसिद्धेः अनुपपत्तिशङ्का-परिहारौ]

ननु चाऽत्र,

'यथाक्रतुरस्मिँल्लोके पुरुषो भवति; तथेतः प्रेत्य भवति' (छा.उ. 3-14-1)

इति विशेषवचनात्, अपहतपाप्मत्वाद्याकार एव अनुसन्धातव्य इत्यवगम्यते!

नैवम्;

'तं यथा यथोपासते' (मुद्ग.उ. 3)

इति उपास्यविषयत्वात् तस्य ॥ ५१ ॥

---

परमात्मशरीरत्वेनाऽनुसन्धेयः प्रत्यगात्मा, किं ज्ञातृत्व-कर्तृत्व-भोक्तृत्वमात्राकारोऽनुसन्धेयः? उत अपहतपाप्मत्वाद्याकारः? किं 'यथाक्रतु'रिति यथोपासनप्राप्तिवचनं परविषयम्? उत प्रत्यगात्मविषयमपि? 'तं यथा यथोपासते' इति तच्छब्दः, किं 'परमात्ममात्रपरः?— उत जीवशरीरकपरमात्मपरः?—इति। परमात्ममात्रपरत्वे, यथोपासनप्राप्तिवचनस्य परविषयत्वात्, ज्ञातृत्वादिमात्राकारेण परमात्माऽनुसन्धेयः। जीवशरीरकपरमात्मपरत्वे, 'यथाक्रतु'रिति श्रुतेः विशेषणभूतजीवांशविषयत्वस्यापि सम्भवात्, अपहतपाप्मत्वाद्याकारोऽनुसन्धेयः स्यात् ॥

ननु चेति। तावता फलसिद्ध्यनुपपत्तिः [इति शङ्काशयः]। **नैवमिति,** विषयव्यवस्थया परिहरति। **तं यथेति**। [अत्र तच्छब्दस्य परमात्मस्वरूपपरत्वात्, तं परमात्मानं यद्गुणविशिष्टमुपासते इत्यर्थः। ततश्च जीवगतापहतपाप्मत्वादेः ब्रह्मस्वरूपविशेषणत्वाभावात्, न तत्र तत्क्रतुन्यायः—इति पूर्वपक्षाभिप्रायः (भा.प्र.)] ॥ ५१ ॥

[सिद्धान्तपरं सूत्रं तद्विवरणं च]

एवं प्राप्ते, प्रचक्ष्महे—

४०६. व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ३-३-५२ ॥ (सि)

नत्वेतदस्ति ; यत् ज्ञातृत्वाद्याकार एवाऽनुसन्धेयः—इति । अस्यात्मनः संसार-[1]दशायाः[1] [2]मोक्षदशायां यो[2] व्यतिरेकः, सः अपहतपाप्मत्वादिकः अनुसन्धेयः । अस्य मोक्षदशायां यादृशं रूपम् ; तादृग्रूप एव उपासनवेलायाम् आत्मा अनुसन्धेयः इत्यर्थः ।

कुतः ? तद्भावभावित्वात्—[3]तद्रूपापत्तेः[3] ।

'यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' (छां.उ. 3-14-1)

'तं यथा यथोपासते [4]तथैव[4] भवति' (मुद्ग.उ. 3)

इति यथोपासनमेव हि प्राप्तिः श्रूयते ।

न च—[5]परस्व[5]रूपमात्रविषयमेवेदम्—इति वक्तुं शक्यते ; प्रत्यगात्मनोऽपि उपास्यभूत[6]परब्रह्म[6]शरीरतया उपास्यकोटिनिक्षिप्तत्वात् । अतः—प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्म[7]शरीर[7]परमात्मोपासनस्य, तथारूपमेव [8]प्राप्यम्[8]—इत्युक्तं भवति ॥

---

अस्य मोक्षेति, 'व्यतिरेकः' इत्युक्ते धर्ममात्रस्य अनुसन्धेयत्वशङ्कानिवृत्त्यर्थम् । तद्भावेति । अपहतपाप्मत्वादिरूपापत्तेः तथाऽनुसन्धानसद्भावभावित्वादित्यर्थः ।

न चेत्यादि । यथोपासनफलश्रुतिः न विशेष्यमात्रविषया ; अपि तु विशिष्टविषयेत्यर्थः । [यत्प्रकारविशिष्टमुपासते इति हि तस्या अर्थः (भा.प्र.)] अत इति । तस्मात् ब्रह्मगुणानामिव

---

[सूत्रार्थः । व्यतिरेकः—आत्मनः सांसारिकदशातो विलक्षणो गुणगण एव उपास्यः, न तु—संसारदशासाधारणो गुणस्तोमो नैवोपास्यः, तद्भा-त्वात्—तादृशोपासनसद्भावे एव स्वस्वरूपलाभात्, उपलब्धिवत्—परमात्मसाक्षात्कारे यथोपासनहेतुकत्ववत् ।]

'नैवं वाच्यमसंसारिरूपमेव हि भावयेत् । यथोपास्तिफलावाप्तेर्ब्रह्मध्यानोक्तिनीतितः ॥' (ब्र.प. 406)

---

[1] दशायां—थ द.　[2] यो—द.　[3] तद्रूपोपपत्तेः—वा.　[4] तदेव—क.
[5] परस्पर—द.　[6] परमात्म—द.　[7] शरीरक—वा.　[8] प्राप्तम्—द.

[प्राप्याकारस्यैवाऽनुसन्धेयता]

अत एव,

'एवं क्रतुर्ह अमुं लोकं प्रेत्याऽभिसम्भ(वितास्मि)वति' (अग्नि.शां. 1-10-3)?
इत्युच्यते। तस्मात् प्रत्यगात्मा प्राप्याकार एव अनुसन्धेयः। 'उपलब्धिवत्—ब्रह्मोपलब्धिवत्[1]। यथा ब्रह्मोपलब्धिः विहिता यथावस्थितब्रह्मस्वरूपविषया; तथा आत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेत्यर्थः।

[काम्यानुष्ठातुः दृष्टान्तत्वस्य वैषम्यम्]

कर्मसु आत्मस्वरूपानुसन्धानं, न कर्माङ्गम्। 'यजेत स्वर्गकामः' इति कर्मानुष्ठानमेव हि! फलाय चोद्यते। [2]देहातिरिक्त[2]ज्ञातृत्वाद्याकारात्मावगतिः, कालान्तरभाविफलसाधनकर्माधिकारार्थेति, तावन्मात्रमेव तत्रापेक्षितमिति, न किंचि[3]दपहीनम्[3] ॥ ५२ ॥

इति शरीरे भावाधिकरणम् ॥ २१ ॥

—o—

---

शुद्धस्वरूपस्याऽपि [जीवस्य] ब्रह्मविशेषणत्वात्, तदनुसन्धेयमित्यर्थः। 'तं यथा यथोपासते' इत्यत्र तच्छब्दः विशिष्टविषयः इति [च] भावः। [अपहतपाप्मत्वादिविशिष्टजीवस्वरूपस्याऽपि ब्रह्मप्रकारत्वमस्तीति, अपहतपाप्मत्वादिविशिष्टस्वात्मतयोपासने तथैव फलं भवतीति, स्वात्मनोऽपि तादृशस्यैवाऽनुसन्धानं सिध्यतीति सिद्धान्ताभिप्रायः (भा.प्र.) ॥]

अत एवेति। प्राप्याकारस्यानुसन्धेयत्वादेव हि! प्राप्यचिन्तनमुच्यते इति भावः॥ [यद्यपि] ['उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया। सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम्॥' इत्युक्तरीत्या अपहतपाप्मत्वाद्यनुसन्धानमन्तरेणाऽपि तत्प्राप्तिसम्भवेन [न तस्य] अवश्यानुसन्धेयत्वम्; तथापि चिरकालानुवृत्तकर्तृत्वाद्यनुसन्धाननिवृत्तेः तद्विरुद्धापहतपाप्मत्वादिरूपानुसन्धानमन्तरेणाऽसम्भवः—इत्यत्र तात्पर्यम् (भा.प्र.)] ॥ ५२ ॥

[सूत्र—१ एक आत्मनः, २ व्यतिरेकः]

इति शरीरे भावाधिकरणम् ॥ २१ ॥

—o—

[1] उपलब्धिवत्—च. [2] देहाद्यतिरिक्त—वा. [3] दवहीनम्—द.

(104) अङ्गावबद्धाधिकरणम् ॥ ३-३-२२ ॥ (सू. 53-54)

[अधिकरणार्थः—उद्गीथाद्यङ्गाश्रयाणामुपासनानाम् उद्गीथादिवत्सर्वशाखास्थक्रतुष्वप्यन्वयः]

## ४०७. अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३-३-५३ ॥ (सि)

[विचारणीयविषयोपस्थापनम्]

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां.उ. 1-1-1)

'लोकेषु पञ्चविधं सामोपासीत' (छां.उ. 2-2-1)

'उक्थमुक्थमिति वै प्रजा वदन्ति। तदिदमेवोक्थम्, इयमेव पृथिवी' (ऐत.आर. 2-1-2)

'[1]अयं वा व लोक[1] एषोऽग्निचितः' (अग्नि. 10-5-4-1)

इत्येवमाद्याः क्रत्वङ्गाश्रया उपासनाः भवन्ति ।

[विचारौपयिकः संशयः]

ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः? उत सर्वासु शाखासु उद्गीथादिषु सम्बध्यन्ते?

इति विचारः ।

---

अङ्गेति । यत्र यत्र ब्रह्मण उपास्यत्वम्, तत्र तत्र शुद्धजीवस्य उपास्यत्वमुक्तम् । एवं यत्र यत्र शाखासु उद्गीथाद्यनुप्रवेशः, तत्र सर्वत्र उद्गीथाद्युपासनानुप्रवेशोऽस्ति? न वा? इति शङ्कया सङ्गतिः । उद्गीथाद्युपासनानि किं प्रतिशाखं व्यवतिष्ठेरन्? उत न? इति । 'उद्गीथमुपासीत' इति 'उद्गीथ'शब्दः, किम् उद्गीथमात्रे वर्तते? उत स्वरादिभेदभिन्नोद्गीथे?। किं स्वरादिविशेषविशिष्टोद्गीथव्यक्तेः संनिधिः? उत सर्वोद्गीथव्यक्तीनां संनिधिः?—इति ॥

---

[सूत्रार्थः । (क्रत्वङ्गभूतोद्गीथाद्याश्रिताः उपासनाः) **शाखासु न**—तत्तच्छाखामात्रनैयत्येन व्यवस्थिता न भवन्ति, **तु**—किन्तु, **प्रतिवेदम्**—(वेदे वेदे) सर्वशाखीयोद्गीथाद्याश्रिता एव, **हि**—यतः, **अङ्गावबद्धाः**—अङ्गाश्रिततयैव श्रुतितः प्रतिपन्नाः ।]

'क्रत्वङ्गमाश्रिताश्चैता न शाखासु व्यवस्थिताः । उद्गीथोपासनाः सर्वशाखास्वपि च संमताः ॥' (ब्र.प. 407)

---

[1] अयं वा लोकः—न.

[अधिकरणारम्भाक्षेपशङ्कानिरासः]

सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि, प्रतिवेदं स्वरभेदात्, उद्गीथादयो भिद्यन्त इति, तत्र तत्र व्यवतिष्ठेरन्निति [1]युक्ता शङ्का[1] ।

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम्? व्यवतिष्ठेरन्—इति ।

कुतः? 'उद्गीथमुपासीत' इति सामान्येनोद्गीथसम्बन्धितया श्रुतायाः, तस्यामेव शाखायां स्वर[2]विशेष[2]युक्तस्यो[3]द्गीथविशेषस्य[3] संनिधानात्, तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति; एवमाद्याः तास्वेव शाखासु व्यवतिष्ठेरन्—इति ॥

[सिद्धान्तार्थः सूत्रार्थविवृत्या]

एवं प्राप्ते, प्रचक्ष्महे—'अङ्गावबद्धास्तु'—इति । 'तु'शब्दः पक्षं व्यावर्तयति । न हि! उद्गीथाद्यङ्गावबद्धाः उपासनाः, तास्वेव शाखासु व्यवतिष्ठेरन्; अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः । 'हि'शब्दो हेतौ । यस्मात् श्रुत्यैव उद्गीथाद्यङ्ग-मात्रावबद्धाः; तस्मात्, यत्र उद्गीथादयः तत्र सर्वत्र सम्बध्येरन् ।

[स्वरभेदायत्तोद्गीथभेदतो व्यवस्थायाः निरासः]

यद्यपि, स्वरभेदेन उद्गीथव्यक्तयो भिद्यन्ते; तथाऽपि, 'सामान्येनोद्गीथ[4]श्रुत्या सर्वा व्यक्तयः संनिहिता इति, न क्वचित् व्यवस्थायां प्रमाणमस्ति । सर्वशाखाप्रत्यय-

---

व्यक्तिविशेषसंनिधिश्चेत्! तस्यैव 'उद्गीथ'शब्दवाच्यत्वात्, तत्तच्छाखाविशेषेषु उपासनव्यवस्था । सर्वव्यक्तिसंनिधिश्चेत्! 'उद्गीथ'शब्दस्य उद्गीथमात्रवाचित्वात्, तद्विषयोपासनानि न व्यवतिष्ठन्ते—इति ।

**सर्ववेदान्तेति** । यथा कर्म च उपासनं च, सर्वशाखासु एकम्; तथा उद्गीथस्यापि एकत्वात्, सर्वत्र उद्गीथानुसारेण प्राप्नुवन्ति उपासनानि—इति अधिकरणारम्भाक्षेपः । उद्गीथादीनां स्वरभेदेन व्यक्तिभेदात्, तत्तत्स्वरविशेषविशिष्टव्यक्तिविषयाः उपासनाः? उत सर्वोद्गीथव्यक्तिविषयाः? इति संशयः स्यादिति आक्षेपसमाधिरित्यर्थः ।

**तस्मिन्नेवेति** । लोके'गामानये'त्यादिषु सामान्यशब्दानां संनिहितविशेषपर्यन्तत्वदर्शनादिति भावः ।

**अङ्गमात्रावबद्धाः**—अङ्गमात्रविषयाः प्रतीयन्ते । **न क्वचिदिति** । 'गामानये'त्यादिषु

[1] शङ्का युक्ता—द. [2] विशेषे—वा. [3] द्गीथस्य—ङ. [4] सामान्यादुद्गीथ—श्रा.

[1]न्यायेन च,[1] सर्वासु शाखासु क्रतुरेकः। अतः सर्वासु शाखासु एकस्य क्रतोः संनिधानात्, क्रत्वङ्गभूतोद्गीथादयोऽपि संनिहिता इति, न एकस्य संनिधिविशेषोऽस्तीति, न व्यवस्था ॥ ५३ ॥

[मन्त्रादिदृष्टान्तेन शाखान्तरीयक्रत्वङ्गोद्गीथादिष्वप्युपासनान्वयः]

## ४०८. मन्त्रादिवद्वाऽविरोधः ॥ ३-३-५४ ॥ (सि)

'वा'शब्दः चार्थे। 'आदि'शब्देन जाति-गुण-सङ्ख्या-सादृश्य-क्रम-द्रव्य-कर्माणि गृह्यन्ते। यथा मन्त्रादीनाम् एकैकशाखास्वाम्नातानामपि, शेषिणः क्रतोः सर्वशाखासु एकत्वेन, यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते; तद्वत् इहाप्यविरोधः ॥ ५४ ॥

इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

—o—

---

व्यक्तिविशेषे शब्दस्य व्यवस्थापकं, सर्वव्यक्तीनामानयनायोग्यत्वम्; न तु असंनिधिः; सामान्येन व्यक्तीनां धीस्थत्वात्। धीस्थत्वं हि संनिधिः; अत्र तु तादृशायोग्यत्वाद्यभावात्, स्वतः प्राप्तं सर्वव्यक्तिविषयत्वं तिष्ठतीति भावः। **संनिहिताः**—बुद्धिस्थाः। **सर्वशाखेति**। अङ्गिनः संनिधानात् अङ्गान्यपि संनिहितानि भवन्तीत्यर्थः ॥ ५३ ॥

**अविरोधः**—शाखाविशेषस्थस्य अन्यत्र प्रवेशे विरोधाभावः। मन्त्रादीनां श्रुत्यादिभिरिव, इहाऽपि उद्गीथादिपदश्रुत्या विनियोगात् अविरोध इत्यभिप्रायः। एवं सर्वशाखासु उद्गीथानुवृत्त्या सर्वशाखिनामुपासनेष्वधिकारः फलम् ॥ ५४ ॥

[सूत्रे—१. अङ्गाव, २. मन्त्रादि]

इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

—o—

---

[सूत्रार्थः। **मन्त्रादिवद्वा**—एकशाखास्थैकजातीयक्रत्वङ्गमन्त्रादीनां शाखान्तरीयक्रतुष्वप्यङ्गतयाऽन्वय इव, **अविरोधः**—उद्गीथोपासनानामन्वयेऽपि विरोधाभावः।]

'क्रत्वङ्गभूतमन्त्रादेरेकशाखोदितस्य च। सर्वशाखासु सम्बन्ध इवाऽत्राप्यविरोधिता ॥' (ब्र.प. 408)

---

[1] न्यायेन – द.

## (105) भूमज्यायस्त्वाधिकरणम् ॥ ३-३-२३ ॥

[अधिकरणार्थः—वैश्वानरविद्यायां त्रैलोक्यशरीरस्य वैश्वानरात्मनः उपासनं, समस्तस्यैव]

### ४०९. भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३-३-५५ ॥ (सि)

[वैश्वानरविद्यायां विचारणीयो विषयः]

'प्राचीनशाल औपमन्यवः' (छां.उ. 5-11-1)

इत्यारभ्य, वैश्वानरविद्या आम्नाता । तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः, स्वर्लोकादित्यवाय्वा[1]काशाप्पृथिव्य[1]वयवः । तत्र च—द्यौः मूर्धा, आदित्यः चक्षुः, वायुः प्राणः, आकाशः सन्देहः—मध्यकाय इत्यर्थः । आपो बस्तिः । पृथिवी पादौ—इत्यवयवविशेषाः ॥

[विचारौपयिकः संशयः]

तत्र संशयः—किमस्य त्रैलोक्यशरीरस्य व्यस्तस्य उपासनं कर्तव्यम्? उत व्यस्तस्य समस्तस्य च? अथ समस्तस्यैव?—इति ॥

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम्? व्यस्तस्य—इति ।

---

भूम्न इति । पूर्वाधिकरणे उद्गीथादिकं प्रस्तुतम् । तत्र सामावयवभूतोद्गीथादेः, समस्तस्य व्यस्तस्य चोपासनं श्रुतिसिद्धम् । एवं वैश्वानरविद्यायां किं समस्तस्योपासनं कार्यम्? उत व्यस्तस्य? उत उभयस्य? इति शङ्कया सङ्गतिः । किं वैश्वानरविद्यायां व्यस्तोपासनविधिः? उत व्यस्तस्य समस्तस्य च? उत समस्तस्यैव? किं प्रत्यवयवं फलश्रवणात्,

---

[सूत्रार्थः । **भूम्नः**—समस्तावयवयुतवैश्वानरोपासनस्यैव, **ज्यायस्त्वम्**—प्रामाणिकत्वकृतं श्रैष्ठ्यम्; न व्यस्तोपासनस्य, (तत्र तत्र व्यस्तवर्णनं तु) **क्रतुवत्**—द्वादशकपालेष्टौ एकदेशस्याऽष्टाकपालस्य पृथगनुवाद इव युज्यते, **तथा हि दर्शयति**—श्रुतिः समस्तोपासनं, व्यस्तोपासनस्य वैगुण्यं चैव खलु स्पष्टयति ।]

'वैश्वानरे समस्तस्य ज्यायस्त्वं क्रतुवद्भवेत् । व्यस्तस्य मूर्धात इति निषेधं श्रुतिराह हि ॥' (ब्र.प. 409)

---

[1] काशपृथिव्य —थ.

कुतः ? उपक्रमे व्यस्तोपासनोपदेशात् । तथा हि ! उपदिश्यते ; औपमन्यवादयः किल उद्दालकषष्ठाः, केकयम् अश्वपतिम् उपसद्य,

'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहि' (छां.उ. 5-11-6)

इति पप्रच्छुः । स च, तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीन् उक्तवद्भ्यः, मूर्धादिषु [1]व्यस्तेषूपासनं, तत्र तत्र[1] फलं च उक्तवान् ।

'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले, य [2]एतमेवमात्मानं[2] वैश्वानरमुपास्ते, मूर्धा त्वेष आत्मनः' (छां.उ. 5-12-2)

इति ।

'एष वै सुतेजा आत्मा वैश्वानरः' (छां.उ. 5-12-1)

इत्यादिना, [3]तेषु तेषू[3]पासनेषु उपास्यस्य वैश्वानरत्वं चाऽऽह । अतः [4]व्यस्तस्यैवो[4]पासनं कर्तव्यम् । परत्र,

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.उ. 5-18-1)

इति, द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहारः—इत्यवगन्तव्यम् ।

[विकल्पितद्वितीयांशस्य उपपादनम्]

अपर आह—एवमेव समस्तस्याऽप्युपासनं कार्यम्—इति । पृथक्फलनिर्देशात्,

---

'यस्त्वेतमेवम्' इति उपासनसमुदायानुवादः ? उत व्यस्ते समस्ते च फलश्रवणात्, उभयत्रविधिः कल्प्यः ? उत प्रत्येकफलश्रवणम् अर्थवादः ? । आद्ये, व्यस्तोपासनविधिः । द्वितीये उभयविधिः । तृतीये समस्तस्यैव विधिः । **अत्त्यन्नमिति** । अन्नमत्ति, प्रियं पश्यति, अस्य कुले ब्रह्मवर्चसं भवतीत्यन्वयः ॥

**आहेति** । 'एतमेवं वैश्वानरमुपास्ते' इत्यादिष्वित्यर्थः । [**द्युप्रभृतीति** । द्युप्रभृतिदेशसम्बन्धिनी प्रादेशिकी मात्रा यस्य सः प्रादेशमात्रः इति श्रुत्यर्थ इति भावः । (भा.प्र.)] **वैश्वानरे उक्तस्य**—वैश्वानरविषयत्वेनोक्तस्य । **पृथक्**—व्यस्तोपासनफलात् पृथक् ।

---

[1] उपासनं तत्—द. [2] एतमेवात्मानं—द. एतमात्मानं—त. थ.
[3] तेषू—त.थ. [4] व्यस्तस्यो—च.

'यस्त्वेतमेवं प्रादेशमात्रमभि[1]विमानमात्मानं[1] वैश्वानरमुपास्ते ; स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छां.उ. 5-18-1)

इति । न च—एतावता वाक्यभेदः ; यथा भूमविद्योपक्रमे, नामाद्युपासनं [2]तत्फलं[2] चाऽभिधाय,

'एष तु वा अतिवदति, यः सत्येनाऽतिवदति' (छां.उ. 7-16-1)

इत्यादिना भूमविद्यामुपदिश्य,

'स स्वराड्भवति, तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7-25-2)

इति तत्फलं च व्यपदिशति ; तत्र भूमविद्या[3]परत्वेऽपि[3] वाक्यस्य, नामाद्यवान्तरोपासनं [4]तत्फलं[4] चाऽङ्गीक्रियते ; तथा इहाऽपि—इति ॥

[सूत्रार्थविवृत्या सिद्धान्तवर्णनम्]

एवं प्राप्ते, अभिधीयते—[5]'भूम्नः[5] ज्यायस्त्वम्'—इति । भूम्नः—विपुलस्य, समस्तस्यैव, ज्यायस्त्वम्—प्रामाणिकत्वमित्यर्थः ; एकवाक्यत्वावगतेः । तथा हि !

'प्राचीनशाल औपमन्यवः' (छां.उ. 5-11-1)

इत्युपक्रम्य,

'उद्दालको [6]ह वै[6] भगवन्तोऽयमारुणिः, सम्प्रतीममात्मानं वैश्वानरमध्येति ; तं हन्ताऽभ्यागच्छाम' (छां.उ. 5-11-3)

इति वैश्वानरात्मबुभुत्सया औपमन्यवादयः पञ्च महर्षयः, तमुद्दालकमुपेत्य, तत्र

---

वाक्यभेदः—महावाक्यभेदः । यथेति, अनेकार्थप्रतिपादने सत्यपि वाक्यैकत्वे दृष्टान्तः । समस्तोपासनं प्रधानप्रतिपाद्यं, व्यस्तोपासनं प्रासङ्गिकमिति न विरोध इति भावः ।

भूम्न इति भूमशब्दः धर्मिपरः । एकवाक्यत्वेति । वैश्वानरात्मजिज्ञासून् प्रति, द्युपृथिव्याद्यवयवविशिष्टविषयोपासन-तत्फलोपदेशात् एकवाक्यत्वमवगतम् ।

---

[1] विमानं—न.
[2] तत्तत्फलं—च.
[3] परस्याऽपि—त. थ.
[4] तत्तत्फलं—च.
[5] भूम्नः क्रतुवत्—थ.
[6] वै—वा.

वैश्वानरात्मवेदनम् अलभमानाः, तेन च सह अश्वपतिं केकयं वैश्वानरात्मवेदिनम् [1]उपसङ्गम्य[1],

'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि ; तमेव नो ब्रूहि' (छां.उ. 5-11-6)

इति पृष्ट्वा, तत्सकाशात्, - परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरम्, उपास्यमवगम्य, तत्फलं च सर्वलोक-सर्वभूत-[2]सर्वात्मान्न[2]भूतब्रह्मानुभवम् अवगतवन्तः—इत्युप[3]संहारतः[3], वाक्यस्य एकत्वमवगम्यते ।

एवम् एकवाक्यत्वे अवगते सति, 'अवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च, [4]समस्तोपासनैकदेशानुवाद[4]मात्रम्' इति निश्चीयते ॥

[सूत्रोक्तदृष्टान्तविवरणम्]

क्रतुवत् — यथा,

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' (तै.सं. 2-2-5-?)

इति [5]विहितस्यैव[5]क्रतोः एकदेशाः,

'यदष्टाकपालो भवति' (तै.सं. 2-2-5-?)

[6]इत्यादिभिरनूद्यन्ते[6] ; तथा समस्तोपासनमेव न्याय्यम् ; न व्यस्तोपासनम् ।—तथा हि दर्शयति—[7]इयं श्रुतिः[7] व्यस्तोपासने अनर्थं ब्रुवती ;

'मूर्धा ते व्यपतिष्यत् ; यन्मां नाऽऽगमिष्यः' (छां.उ. 5-12-2)

इति,

'[8]अन्धोऽभविष्यः,[8] यन्मां नाऽऽगमिष्यः' (छां.उ. 5-13-1)

इत्यादिका ।

---

अनुवादमात्रमिति । समुदायोपासन-तत्फले विवक्षिते । तदन्तर्गततदेकदेशोपासन-तदेकदेशफलकथनम् अनुवादः इत्यर्थः । 'समस्तोपासनफले सर्वदेश-सर्वकालवर्तिसमस्तभोग्यजातं ह्यन्तर्गतम्' इति दर्शयितुम् फलैकदेशानुवादः कृतः ; न तु तथाऽनुष्ठेयमिति ज्ञापयितुम् । इतरथा वाक्यभेदात्, व्यस्तोपासने प्रत्यवायकथनाच्च यथोक्त एवार्थः ।

---

[1] उपसङ्गत्य— न.
[2] सर्वात्मगतान्न— ङ.
[3] संहरतः—थ.
[4] समस्ततत्फलैकदेशे अनुवाद—ङ.
[5] विहितस्य—थ.
[6] इत्यादिना अनूद्यन्ते—त. थ.
[7] श्रुतिः—द.
[8] अन्धो भविष्यसि—पा.

[पूर्वपक्षोक्तभूमविद्यागतैकदेशोपासनसाम्यनिरासः]

अतः, इदमप्यपास्तम्—यत् नामाद्युपासनसाम्यमुक्तम् । तत्र हि! नामाद्युपासनेषु अनर्थो न श्रुतः । नामाद्युपासनेभ्यः भूमोपासनस्य अतिशयितफलत्वं श्रुतम् ;

'एष तु वा अतिवदति, यः सत्येनाऽतिवदति' (छां.उ. 7-16-1)

इति । तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य, नामाद्युपासनानां सफलानां विवक्षितत्वम् । अन्यथा अतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः । अतः समस्तोपासनमेव न्याय्यम् ॥ ५५ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

—o—

---

**इदमपीति** । अनर्थाश्रवणमेकं वैषम्यमित्यर्थः । **नामाद्युपासनेभ्य इति** वैषम्यान्तरम् । नामाद्युपासनानां भूमविद्योपयोगित्वमस्ति ; आधिक्यप्रतियोगित्वेनापेक्षितत्वात् ॥ **अन्यथेति** । एवम् अर्थान्तराणां प्रधानार्थोपयोगित्वात् न वाक्यभेदो भूमविद्यायाम् । अत्र तु उपासनानाम् अन्योन्योपयोगित्वाभावात् वाक्यभेदस्तिष्ठत्येवेत्यर्थः । **अत इति,** अधिकरणार्थोपसंहारः । **ज्यायस्त्वशब्दः** प्रामाणिकत्वाभिप्रायेण ; न तु व्यस्तोपासनपक्षोऽपि सूत्रकाराभिमत [इत्याशयेनेति] ॥ ५५ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

—o—

## (106) शब्दादिभेदाधिकरणम् ॥ ३-३-२४ ॥

[अधिकरणार्थः—ब्रह्मप्राप्त्येकफलानामपि वेदान्तोदितानां विद्यानां शब्दादिभेदतः स्वरूपभेदः]

## ४१०. नाना शब्दादिभेदात् ॥ ३-३-५६ ॥

[विचारणीयार्थोपस्थापनम्]

**इह ब्रह्मविद्याः सर्वाः, ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्या-भूमविद्या-दहरविद्योप-[1]कोसल[1]विद्या-शाण्डिल्यविद्या-वैश्वानरविद्या-ऽऽनन्दमयविद्या-ऽक्षरविद्यादिकाः एक-[2]शाखागताः[2] शाखान्तरगताश्च, उदाहरणम्। अन्याः प्राणाद्येकविषयफलाश्च ॥**

[विचारौपयिकः संशयः]

**किमत्र विद्यैक्यम्? उत विद्याभेदः? —इति संशय्यते ॥**

[कर्मकाण्डोक्तन्यायतः पौनरुक्त्यशङ्कायाः निरासः]

**अत्रैव आसां परस्परभेदे समर्थिते सति, एकस्याः दहरविद्यादिकायाः सर्ववेदान्त-प्रत्ययन्यायः ॥**

---

**नानेति**। पूर्वं विद्याविशेषविषयचिन्ता कृता। इदानीं सर्वविद्याविषयचिन्ता क्रियत इति सङ्गतिः। **अक्षरविद्यादिकाः** इति 'आदि'शब्देन, न्यासो विवक्षितः सूत्रेऽपि; शब्दादिभेदसद्भावात्। **उदाहरणम्**—विषयः। [**अन्या इति**। प्राणाद्येकविषयाः एकफला विद्या अप्युदाहरणमित्यर्थः (भा.प्र.)] किं सर्वासां परविद्यानामैक्यम्? उत भेदः? किं सर्वासां ब्रह्मकर्मकत्व-मुक्तिफलकत्वाविशेषात् ऐक्यं न्याय्यम्? किं विद्यानां तत्तद्गुणविशेष-विशिष्टतया श्रुतानां, तावता निराकाङ्क्षत्वात् भेदो न्याय्यः? ॥ प्रथमे विद्यैक्यम्। द्वितीये विद्याभेदः ॥

**अत्रैवेत्यादि**। 'परस्परभेदे समर्थिते सति' इत्यस्य अभ्यास-प्रकरणान्तरयोः

---

[सूत्रार्थः। **नाना**—वेदान्तोदिता विद्याः मिथोविभिन्नस्वरूपा एव, **शब्दादिभेदात्**—भेदावगतिहेतुभूतशब्दादिभेदस्य विद्याविधिषु दर्शनात्।]

'शब्दान्तराभ्याससंख्यागुणप्रकरणान्तरैः। नामधेयेन चाऽप्यत्र विद्या नानेति निश्चितम्॥' (ब्र.प. 410)

---

[1] कोशल—थ. [2] शाखादिगताः—आ. शाखावगताः—त. थ.

[पूर्वः पक्षः सयुक्तिकः]

किं युक्तम् ? विद्यैक्यमिति ।

कुतः ? वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि! विद्याया रूपम् । अतः रूपैक्यात् विद्यैक्यम्—इति ॥

[सूत्रार्थविवरणतः सिद्धान्तः]

एवं प्राप्ते, [1]अभिधीयते[1]—'नाना'—इति । नानाभूताः विद्याः ।

कुतः ? शब्दादिभेदात् । 'आदि'शब्देन, अभ्यास-संख्या-गुण-[2]प्रक्रिया[2]-नामधेयानि गृह्यन्ते । शब्दान्तरादिभिः अत्र विधेयभेदहेतवः अनुबन्धभेदाः दृश्यन्ते ।

[सर्वेषामुपासनानां प्रत्ययैकस्वरूपत्वेऽपि विद्यानां भेदोपपत्तिः]

यद्यपि, 'वेद, उपासीत' इत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च

---

भेदहेतुत्वे समर्थिते सतीत्यर्थः इति हृदयम् । अभ्यासप्रकरणान्तरयोः यदि भेदहेतुत्वमसिद्धम् ; तदा 'सर्ववेदान्तप्रत्ययम्'—इत्यत्र पूर्वपक्षः सिद्धान्तश्च अनुपपन्नः स्यात् । ततः तयोर्भेद-हेतुत्वं तत्रैव समर्थितमिति [कृत्वा] पौनरुक्त्यशङ्का भवतीति, [तां परिहरत्यनेन ग्रन्थेन] (भा.प्र.)] अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च विद्याभेदहेतुत्वे सिद्धे सति हि! विद्या-शेषाणां भेदाभेदविचारावतारः । तस्मात् अत्रोक्तमर्थमुपजीव्य पूर्वं सर्ववेदान्तप्रत्ययन्यायोऽवइ-तारितः । तदपेक्षितः परस्परभेदः अत्र निरूप्यत इत्यर्थः । तयोर्भेदहेतुत्वे कर्मकाण्डसिद्धेपि विह तदुपपादनम् अविधेयभूतवाक्यार्थज्ञानमात्रोपायत्वनिरासार्थमितीदं स्वयमेव वक्ष्यति । रूपैक्यं फलैक्यं च पूर्वपक्षहेतुः ॥

विधेयम्—साङ्गं प्रधानं कर्म । अनुबन्धाः—तदेकदेशधात्वर्थादयः । शब्दादयः अनुबन्धभेदहेतुत्वेन प्रधानविधेयभेदहेतवः इत्यर्थः ।

प्रत्ययावृत्त्यभिधायिन इति, विषयैक्येऽपि धात्वर्थभेदाद्रूपभेदो मा भूदिति । यजति-ददाति-जुहोत्यादयः, भिन्नार्थतयैव लोके व्युत्पन्नाः । अतः शास्त्रेऽपि ते स्वार्थभूतानुबन्धभेद-ज्ञापकाः । उपासन-ध्यानादिशब्दाश्च सामान्य-विशेषभावेन एकार्थविषयाः । तत्कथम्

---

[1] विधीयते—आ. [2] क्रिया—द.

ब्रह्मैकविषयाः ; तथाऽपि, तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषण-विशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः, प्रत्ययावृत्तिरूपाः विद्याः भिन्दन्ति । ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि, प्रतिप्रकरणं विलक्षणविद्याभिधायीनि—इति निश्चीयते ।

[पूर्वकाण्डतोऽवगतस्य पुनरभिधानौचित्यम्]

अस्मिन्नर्थे, 'शब्दान्तरे कर्मभेदः' (पू.मी.सू. 2-2-1) इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैः सिद्धेऽपि, पुनरिह प्रतिपादनम्, 'वेदान्तवाक्यानि 'अविधेय'[1]-ज्ञानपराणि' इति कुदृष्टिनिरसनाय ॥ अतो विद्याभेदः—इति स्थितम् ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥ २४ ॥

—o—

---

अनुबन्धभेदज्ञापकत्वम् ? इत्यर्थः । तथाऽपीति । 'अर्थेनैव विशेषो हि ! निराकारतया धियाम्' इत्यभिप्रायः । तत्तदिति । तत्तत्प्रकरणावगतानाम् उपासनादिशब्दानाम्, तत्तद्रूपविशेषविशिष्टप्रत्ययावृत्त्यवबोधित्वम् ; यागदानहोमेषु द्रव्यप्रहाणे समानेऽपि, देवतोद्देशपरस्वत्वापादन-देशविशेषविशिष्टप्रहाणगोचरतया यजत्यादिशब्दानां भिन्नार्थत्ववत् । [देवतोद्देशेन द्रव्यत्यागो यागः । देशविशेषप्रक्षेपविशिष्टस्त्यागो होमः । परस्वत्वापादनपर्यन्तस्त्यागो दानम्—इति पूर्वतन्त्रे (भा.प्र.) ।] ब्रह्मेति, प्रकरणभेद उक्तः ।

अविधेयेति । अत्र निर्विशेषविषयज्ञानपरत्वमपि निरसनीयमनुसन्धेयम् । बह्वधिकरणेषु बहुभिः सूत्रैः विस्तरेणोक्तार्थस्य सङ्क्षेपेण स्मारणं कुदृष्टिनिरसनं च प्रयोजनम् ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥ २४ ॥

—o—

---

[1] अभिधेय—वा.

(107) विकल्पाधिकरणम् ॥ ३-३-२५ ॥

[अधिकरणार्थः—ब्रह्मप्राप्त्यर्थं एकैकस्या एव विद्यायाः विकल्पेनाऽनुष्ठेयता ; न समुच्चयेन सर्वस्या अपि]

## ४११. विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५७ ॥ (सि)

[सङ्गति-संशययोः प्रदर्शनम्]

ब्रह्मप्राप्तिफलानां सद्विद्या-दहरविद्यादीनां नानात्वमुक्तम् ।

इदानीम्—आसां विद्यानाम् [1]एकस्मिन्[1] पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि संभवति ? उत प्रयोजनाभावाद्विकल्प एव ? इति [2]विशये[2] ;

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम् ? समुच्चयोऽपि सम्भवति—इति ।

कुतः ? एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात् । दृश्यते हि ! एकस्यैव स्वर्गादेः साधनानाम् अग्निहोत्र-दर्शपूर्णमासादीनां, तस्यैव स्वर्गस्य भूयस्त्वापेक्षया, एकत्र पुरुषे समुच्चयः । एवमिहाऽपि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवति—इति ।

[सूत्रतः सिद्धान्तोपपादनम्]

एवं प्राप्ते प्रचक्ष्महे—विकल्प एव ; न समुच्चयः [3]सम्भवति—इति[3] ।

---

**विकल्प इति** । अस्मिन् अधिकरणे न्यासविद्या अभिप्रेता । **ब्रह्मप्राप्तीति** । भेदे सिद्धे हि ! समुच्चय-विकल्पनिरूपणं युक्तमिति भावः ॥ किं सर्वासां समुच्चयः ? उत विकल्पः ? । किं ब्रह्मप्राप्तिः एकरूपा ? उत स्वर्गप्राप्तिवत् विलक्षणा ?—इति । वैलक्षण्ये, तदपेक्षया समुच्चयः । ऐकरूप्ये विकल्पः ।

---

[सूत्रार्थः । **विकल्पः**—ब्रह्मविद्यासु मध्ये एकस्या विद्याया एव मोक्षोपायतया आश्रयणं कार्यम् ; न सर्वस्याः, **अविशिष्टफलत्वात्**—सर्वासामपि ब्रह्मानुभवैकफलकत्वात् । ]

'उपासके विकल्पः स्याद् विद्यानां न समुच्चयः । विद्यान्तरस्य वैफल्यात् तुल्यानन्तफलत्वतः ॥' (ब्र.प. 411)

---

[1] किमेकस्मिन्—वा. [2] विशयः—ङ. [3] सम्भवति—न.

कुतः ?—'अविशिष्टफलत्वात्'— । सर्वासां हि ब्रह्मविद्यानाम्, अनवधिकातिशयानन्दब्रह्मानुभवः फलं अविशिष्टं श्रूयते —

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)

'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाऽकामहतस्य' (तै.उ.आन. 8-4, 5)

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड.उ. 3-1-3)

इत्यादिभ्यः ॥

[ब्रह्मानन्दस्य फलत्वदर्शनम्]

ब्रह्म हि ! स्वस्य परस्य च [1]स्वय[1]मनुभूयमानम्, अनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभवः, एकया विद्यया अवाप्यते चेत् ! किमन्ययेति, [2]न समुच्चय[2]सम्भवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन, तत्र देशाद्यपेक्षया भूयस्त्वसम्भवात्, [3]तदर्थिनः समु[3]च्चयः [4]सम्भवति[4] । इह तु तद्विपरीतस्वरूपे ब्रह्मणि, तन्न सम्भवति । सर्वाश्च विद्याः ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इति, अविशिष्टफलत्वात्, सर्वासां विकल्प एव ॥ ५७ ॥

[काम्यफलासु विद्यासु समुच्चयसम्भवः]

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः, स्वर्गादिफलकर्मवत् यथेष्टं [5]विकल्पेरन्[5], समुच्चीयेरन् वा ; तासां[6]परिमित[6]फलत्वेन भूयस्त्वापेक्षासम्भवात् । तदाह—

---

परमं साम्यमिति । अनवधिकातिशयानन्दं ब्रह्म स्वसदृशानन्दं ददाति । ततोऽधिकानन्दस्याभावात्, न भूयस्तदपेक्षासम्भवः इति भावः ।

सर्वाश्चेति । काश्चिद्विद्याः विरोधिनिरसनोपक्षीणाः; काश्चित् ब्रह्मप्राप्तिफलाः । अतः समुच्चयसम्भवः—इति [शङ्काया निरासार्थमिदम्] ॥ ५७ ॥

ब्रह्मप्राप्तिव्यतिरिक्तेति, [पूर्वेण] सूत्रेण सङ्गतमुत्तरसूत्रार्थं सङ्क्षेपेणाह ।

---

[1] स्वरूप—न.
[2] समुच्चया—द.
[3] समु—क्षा
[4] सम्भवतीति—न.
[5] विकल्प्येरन्—न.
[6] विपरीत—त.थ.

## ४१२. काम्यास्तु यथाकामम् समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ३-३-५८ ॥ (सि)

अपरिमितफलत्वाभावात्—इत्यर्थः ॥ ५८ ॥

इति विकल्पाधिकरणम् ॥ २५ ॥

—o—

---

**अपरिमितेति** । समुच्चीयेरन् वा इत्युक्तेऽपि, समुच्चय-विकल्पयोः किं नियामकम् ? इत्यपेक्षायाम् , इच्छैव नियामिका स्यादिति **यथाकामम्** इति पदस्यार्थः ॥ ५८ ॥

[ सूत्रे । १ विकल्पो २ काम्यास्तु ]

इति विकल्पाधिकरणम् ॥ २५ ॥

—o—

---

[सूत्रार्थः । **काम्यास्तु**—ब्रह्मप्राप्तीतरफलाः वेदान्तोदिता विद्यास्तु, **यथाकामम्**-स्वकीयामिच्छामनुरुध्यैव, **समुच्चीयेरन् न वा**—एकस्मिन् मिलितानुष्ठानयोग्या वा भवेयुः, विकल्प्याऽनुष्ठानयोग्या वा भवेयुः, **पूर्वहेत्वभावात्**—तेषामपरिमितफलत्वाभावात् ॥ ]

**तथाऽनन्तफलाभावात् फलाधिक्येच्छया क्वचित् । काम्यानां तु समुच्चित्य विकल्पाद्वाऽप्यनुष्ठिति ॥ब्र.प.412**

(108) यथाश्रयभावाधिकरणम् ॥ ३-३-२६ ॥ (सू. 59-64)

[अधिकरणार्थः — उद्गीथाद्यङ्गाश्रितोपासनानां पृथक्फलतया उद्गीथाद्यनङ्गतायाश्च दर्शनात् क्रतुषूपादानानियमो दृढ एव]

## ४१३. अङ्गेषु यथाश्रयभावः ॥ ३-३-५९ ॥ (पू)

[विषय-संशययोः प्रदर्शनम्]

**उद्गीथादिक्रत्वङ्गेष्वाश्रिताः,**

**'ओमित्येतदक्षरमुद्गीथमुपासीत'** (छां.उ. 1-1-1)

**इत्यादिकाः विद्याः, किम् उद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः ? उत गोदोहनादिवत् पुरुषार्थतया 'यथाकामम्[1] ?—इति विशये ;**

[पूर्वः पक्षः]

**नियमेनोपादेयाः—इति युक्तम् ।**

---

**यथाकामम्** इति पदेन सङ्गतिरभिप्रेता । यथाकामं विकल्पः समुच्चयो वा स्यात् इति युक्तम् । तथा उद्गीथादिविद्याः यथाकाममुपादेयाः ? न वा ? इति शङ्कया सङ्गतिः ।

किम् उद्गीथाद्युपासनानि क्रतुषु नियमेनोपादेयानि ? उत अनियमेन ? । किं क्रत्वङ्गोद्गीथादिमुखेन पर्णत्वादिवत् क्रत्वर्थानि ? उत फलश्रवणात् पुरुषार्थभूतानि ? । किं गोदोहनादीनां पुरुषार्थत्वं स्ववाक्ये फलसम्बन्धश्रवणात् ? उत क्रतुफलात् पृथक्फलसम्बन्धश्रवणात् ?। स्ववाक्ये फलश्रुत्या पुरुषार्थत्वं चेत् ! तदभावेन पर्णतादिवत् क्रत्वर्थतया नियमेनोपादेयता । पृथक्फलसम्बन्धश्रवणमात्राच्चेत् ! उद्गीथाद्युपासनानामपि पृथक्फलतया पुरुषार्थत्वात्, न नियमेनोपादेयता ।

---

[सूत्रार्थः । **अङ्गेषु**—कर्माङ्गभूतोद्गीथादिषु, **यथाश्रयभावः**—स्वाश्रयेष्विव स्वेष्वपि कर्माङ्गतैव । ]

**'उद्गीथादिष्वाश्रितानामुपास्तीनां यथाश्रयम् । क्रत्वङ्गभावो गोदोह इव तत्र फलाश्रुतेः ॥' (ब्र.प. 413)**

---

[1] कामम्—थ.

[अधिकरणस्याऽस्य कृतकरत्वशङ्कापरिहारः]

ननु च—आसां [1]पुरुषार्थत्वेन[1] अनियमः प्रतिपादितः ;

'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू. 3-3-41) इत्यत्र ॥

सत्यम् ; तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैः युक्त्या च आक्षिप्यते । तत्र हि,

'तेनोभौ कुरुतः' (छां.उ. 1-1-10)

इति अनियमदर्शनात् पृथक्फलत्वमुक्तम् । उपासनाश्रयभूतोद्गीथादिवत् उपासनानामपि अङ्गतया उपादाननियमे बहवो हेतवः उपलभ्यन्ते । न ह्यत्र,

'गोदोहनेन पशुकामस्य प्रणयेत्' (आप.श्रौ. 1-5-16-2) ! (p 110)

इत्यादिवत्, उपासनाविधिवाक्ये फलसम्बन्धः श्रूयते । 'उद्गीथमुपासीते'ति उद्गीथादिसम्बन्धितयैव उपासनं प्रतीयते ।

[ स्ववाक्ये फलसम्बन्धाश्रवणस्पष्टीकरणम् ]

'यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरम्' (छा.उ. 1-1-10) इति [2]वर्तमानापदेश[2]रूपवाक्यान्तराद्धि फलसम्बन्धो ज्ञायते । स्ववाक्येनैव अव्यभिचरितक्रतु[3]सम्बन्ध्युद्गीथादि[3]सम्बन्धेन [4]निर्ज्ञात[4]क्रत्वङ्गभावस्य, वाक्यान्तरस्थवर्तमानफलसम्बन्धनिर्देशः अर्थवादमात्रं स्यात् ; अपापश्लोकश्रवणादिवत् ।

---

**सत्यमिति** । सङ्गतिविशेषादधिकरणान्तरं मध्ये प्राप्तम् । अतो न तत्र कृतम् इत्यर्थः । **न ह्यत्रेति** । गोदोहनस्य स्ववाक्ये श्रूयमाणं पृथक्फलसाधनत्वम् अङ्गत्वविरोधि । अत्र तु वाक्यान्तरस्थत्वेन फलसम्बन्धस्य विलम्बितप्रतीतित्वात् अर्थवादमात्रमिति न तत् अङ्गत्वविरोधीत्यर्थः ॥

**उद्गीथमिति** द्वितीयाश्रुतिरुद्गीथगता, उपासनस्य तच्छेषत्वे प्रमाणम् ; व्रीह्यादिगता प्रोक्षणादेरिवेत्यर्थः । **वर्तमानापदेशः**—वर्तमानव्यपदेशः । स्ववाक्यस्थे फलसम्बन्धे तत्राऽपि विधिकटाक्षः स्यात् । वाक्यान्तरस्थत्वे सोऽपि नास्तीति भावः । **निर्ज्ञातः**—निश्चितः ।

---

[1] अपुरुषार्थत्वेन—द. [2] वर्तवानोपदेश—ञ. ठ. वर्तमाननिर्देश—त. थ.
[3] सम्बन्ध्युद्गीथ—त.थ. [4] विज्ञात—द.

अतः, यथा उद्गीथादयः उपासनाश्रयाः, क्रत्वङ्गतया प्रयोगविधिनानियमेनोपादीयन्ते ; तथा तदाश्रिताश्चोपासनाः तन्मुखेन क्रत्वङ्गभूता इति, नियमेनोपादेया एव ॥ ५९ ॥

[उक्तार्थे श्रौतस्य विधानस्य नियामकत्वम् ]

## ४१४. शिष्टेश्च ॥ ३-३-६० ॥ (पू)

शिष्टिः—शासनम् । विधानमित्यर्थः । 'उद्गीथमुपासीत' इति उद्गीथाङ्गतया उपासनविधानाच्च उपादाननियमः । 'गोदोहनेन पशुकामस्य प्रणयेत्' (आप.श्रौ सू. 1-5-16-2) [1]इत्यादिवत्[1], विधिवाक्ये अधिकारान्तराश्रवणात्, [2]उद्गीथाद्यङ्ग[2]भाव एव हि ! विधेयः-इति गम्यते ॥ ६० ॥

[श्रौतस्य दुरुद्गीथसमाधानवचनस्य नियमज्ञापकत्वम् ]

## ४१५ समाहारात् ॥ ३-३-६१ ॥ (पू)

'होतृषदनाद्धैवाऽपि दुरुद्गीथमनुसमाहरति' (छा.उ. 1-5-5)

इति, उपासनस्य समाहारनियमो दृश्यते । दुरुद्गीथम्—वेदनविहीनमुद्गीथम् । वेदनहानौ अन्येन समाधानं [3]ब्रुवत्[3], तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥

---

**प्रयोगविधिः**—अनुष्ठापकत्वदशापन्नविधिः ; न तु ज्ञापकावस्थः । [एवं] युक्तिरुक्ता । व्याप्तिरूपा हि युक्तिः । विधिवाक्यस्थफलसम्बन्धेषु अङ्गत्वाभावः । विधिवाक्यस्थफलविरहे अङ्गत्वं च हि दर्शितम् ॥ ५९ ॥

**शिष्टेश्चेत्यादिना** लिङ्गानि प्रदर्श्यन्ते ॥ ६० ॥

**समाहारः**—समाधानम् ।' ६१ ॥

---

[सूत्रार्थः । **शिष्टेश्च**—उद्गीथमुपासीतेति शासनादपि श्रौतात् उपासनस्य क्रत्वङ्गत्वकृतं नैयत्यं ज्ञायते ॥ ]

'तमुद्गीथमुपासीत तत्र चेति विधानतः । क्रत्वङ्गत्वप्रतीत्या च तदुपादाननित्यता ॥' (ब्र.प. 414)

[सूत्रार्थः । **समाहारात्**—उद्गीथोपासनप्रहाणे सम्प्राप्ते सति तत्प्रायश्चित्तवचनात्, उपासननियमोऽवगम्यते ॥]

'अन्येन च समाधानमुद्गीथस्याऽनुपासने । ब्रुवन्ती च श्रुतिर्मानम् नियमेन तदन्वये ॥' (ब्र.प. 415)

---

[1] इतिवत्—द.	[2] उद्गीथाङ्ग—च.	[3] ब्रुवन्—वा.

[सोपासनप्रणवानुवृत्तेः उपासनानुवृत्तिज्ञापकत्वम् ]

## ४१६. गुणसाधारण्यश्रुतेश्च ॥ ३-३-६२ ॥ (पू)

उपासनगुणस्य [1]उपासनाश्रयस्य[1] प्रणवस्य सोपासनस्य,

'तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयति, ओमिति शंसति ओमित्युद्गायति' (छां उ. 1-1-9)

इति साधारण्यश्रुतेश्च, उपासनसमाहारो [2]गम्यते[2] । 'तेने'ति प्रकृतपरामर्शात्, सोपासन एव [3]प्रणवः[3] सर्वत्र सञ्चरति । अतः उपासनस्य [4]प्रणव[4]सहभाव[5]नियमदर्शनाच्च,[5] उद्गीथाद्युपासनानाम् उद्गीथादिवत् नियमेनोपादानम् ॥ ६२ ॥

[सिद्धान्तसूत्रारम्भः]

इति प्राप्ते, उच्यते—

## ४१७. न वा तत्सहभावाश्रुतेः ॥ ३-३-६३ ॥ (सि)

[6]न चैत[6]दस्ति ; यत्—उद्गीथाद्युपासनानां क्रतुषु उद्गीथादिवत् उपादान-नियमः—इति ।

---

गुणेति । उपासनार्थत्वविवक्षया तदाश्रयस्य गुणत्वव्यपदेशः । समाहारः—अनुवृत्तिः । सोपासनप्रणवानुवृत्त्या उपासनानुवृत्तिर्गम्यत इत्यर्थः ॥ ६२ ॥

सहभावनियम इति, सहभावमात्रस्य पूर्वपक्षिणाप्यङ्गीकृतत्वादुक्तम् । सहभावनियम एव अङ्गत्वम् । अङ्गत्वविरोधि पृथक्फलसाधनत्वं सूत्राभिप्रेतम् । पर्णताविधिवाक्ये....

---

[सूत्रार्थः । गुणस्य—उपासनगुणभूतप्रणवस्य, साधारण्यश्रुतेश्च—सामान्यतः आश्रावणादिषु सर्वत्रान्वयस्य श्रुतिप्रतिपन्नत्वादपि हेतोः, उपासनस्याङ्गत्वनियमः ।]

'ओमित्युद्गायतीत्यादिश्रुत्या तु प्रणवं प्रति । गुणभूतोपासनस्य सर्वत्रान्वयदर्शनात् ॥' (ब्र प. 416)

[सूत्रार्थः । न वा—उद्गीथाद्युपासनानामङ्गतयोपादाननियमो नैवास्ति, तत्स....श्रुतेः—उद्गीथाद्यङ्गभावाश्रुतेः ।]

'उपासनस्याऽनियमः क्रत्वङ्गत्वाश्रुतेरिह । 'यदेव विद्यये'त्यादिफलान्तरविधानतः ॥' (ब्र.प. 417)

---

[1] उपासनात्—श्रा. [2] अवगम्यते—त. थ. [3] प्राण;—द.
[4] श्रवण—थ. [5] दर्शनाच्च—श्रा. [6] नवैत—न.

कुतः ?—तत्सहभावाश्रुतेः—उद्गीथाङ्गभावाश्रुतेः इत्यर्थः। अङ्गभावे हि सहभावनियमो भवति।

[अङ्गत्वविरोध्यंशोपपादनम्]

यद्यपि—'उद्गीथमुपासीते'त्यस्मिन् पदसमुदाये, अधिकारान्तरं न प्रतीयते; तथापि—तदनन्तरमेव,

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'

(छां.उ. 1-1-10)

इति, [1]विद्यायाः[1] क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते। तेन क्रतुफलात् पृथग्भूतफलसाधनभूता विद्या, 'उद्गीथमुपासीत' इति कर्तव्यतया विधीयते। क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्य उपासनस्य, क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते॥

[उपासनं प्रत्युद्गीथस्य आश्रयतामात्रम्]

[2]अथ[2]—उपासनस्य आश्रयापेक्षायां, संनिहित उद्गीथः आश्रयमात्रं भवति; उद्गीथश्च क्रत्वङ्गभूत इति, क्रतुप्रयुक्तोद्गीथा[3]द्याश्रये[3] उपासने, क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छा[4]निमित्तमिदम्[4] अधिकारान्तरमिति, न क्रतुषु तदुपादाननियमः। वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेन अप्रतिबन्धः—इत्युक्तम्। क्रतोः अविलम्बितफलत्वमित्यर्थः।

---

वाक्यस्वरससिद्धाङ्गत्वबाधायोगात् तत्फलश्रुतिरर्थवादः। गोदोहनवाक्ये तु पृथक्फलसाधनत्वम् अङ्गत्वविरोधि। तद्वत् इदमपि पृथक्फलसाधनत्वमेवोपासनस्य प्रतिपादयतीति, क्रत्वङ्गतां न प्रतिपादयतीत्यर्थः। **अधिकारान्तरम्**—फलान्तरसाधनत्वम्। **साधनभावः प्रतिपाद्यत इति**। अनेन गोदोहनवाक्ये साधनभावः कल्प्य इति, अन्यतरविलम्बः सूचितः॥

**आश्रयमात्रमिति**। न तु शेषीत्यर्थः। यथ गोदोहनं प्रणयनसम्बन्धि [सत्] पशुसाधनमिति, प्रणयनं सम्बन्धिमात्रतया प्रतीयते; तथा उद्गीथविषयमुपासनं वीर्यवत्तरत्वसाधनमिति, उद्गीथः आश्रयमात्रं भवतीत्यर्थः। **उद्गीथश्चेति**। यथा क्रत्वधिकारिण एव पशुकामनानिमित्तमधिकारान्तरं भवति गोदोहने, तद्वदत्राऽपीत्यर्थः। उद्गात्रनुष्ठितमप्युपासनं यजमानस्यैव फलप्रदम्।

---

[1] विद्यया—द. [2] अतः—पा. [3] श्रये—त. थ. [4] निमित्तम्—द.

[पर्णताविधिवैलक्षण्यस्य स्फुटीकरणम्]

पर्णतादीनां तु, 'यदेव विद्यया करोति....तदेव वीर्यवत्तरं भवति' इति, विद्यायाः फलसाधन[1]त्ववत्[1], अपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति, क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्, तदङ्गभूतानां फलान्तरसाधनभाव-कल्पनानुपपत्तेः, [2]तत्र फलश्रुतिः[2] अर्थवादमात्रं स्यात् ॥ ६३ ॥

[उपासनोपादानानियमस्य श्रुत्या स्पष्टीकरणम्]

## ४१८. दर्शनाच्च ॥ ३-३-६४ ॥ (सि)

[3]दर्शयति च[3] श्रुतिः, उपासनोपादानानियमम्;

'एवंविद्ध वै [4]ब्रह्मा[4] यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छां.उ. 4-17-10) इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती। उद्गातृप्रभृतीनां वेदनस्य अनियमे सति, एतदुपपद्यते। अनेन लिङ्गेन, पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते। अतः अनियम एवेति स्थितम् ॥ ६४ ॥

इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य

तृतीयः पादः ॥ ३ ॥

—o—

---

**दर्शनाच्चेति**। पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता। अत्र लिङ्गानि प्रतिवक्ष्यन्ते। **रक्षणमिति**। यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिः। उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादि। तस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यां हि उद्गातृप्रभृतिवेदनानि-यमसिद्धिः। **प्रायिकत्वमिति**। आदादेव उद्गीथोपासनं सङ्कल्पितं चेत् वेदनविरहितोद्गीथे समाधानं कर्तव्यमित्यर्थः ॥ ६४ ॥

[सूत्राणि—अङ्गेषु, शिष्टे, समा, गुण, न वा, दर्श]

इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

तृतीयः पादः ॥ ३ ॥

—o—

---

[सूत्रार्थः। **दर्शनाच्च**—उद्गात्रादीनामृत्विजां वेदनविषये नियमाभावस्य श्रुतित एव अवगमादपि, उपासनस्यानियम इति।]

'उपासनस्याऽनियमं दर्शयत्येव वेदवाक्। यदेवंविद्ध वै ब्रह्मेत्युक्तो ब्रह्मैव त्रितिमान्॥' (ब्र.प. 418)

---

[1] स्वश्रुतिवत्—द. [2] तत्फलश्रुतिः—आ. [3] दर्शयति—थ. [4] ब्रह्म—थ.

॥ श्रीः ॥

[तृतीयाध्यायचतुर्थपादगताधिकरणार्थानां सूचनी]

## तृतीये साधनाध्याये चतुर्थः अङ्गपादः ॥

(अधिकरणानि—१५. सूत्राणि—५१)

[पादार्थः—वेदान्तोदितविद्याङ्गभूतकर्मादिविषयिणी चिन्ता]

(109) १. **पुरुषार्थाधिकरणम्** (सू. 1-20)

कर्माङ्गिकया विद्ययैव परमपुरुषार्थावाप्तिः ; न तु उपासनाङ्गकात् कर्मणः

(110) २. **स्तुतिमात्राधिकरणम्** (सू. 21-22)

'स एष रसाना'मित्यादिवाक्यानि उद्गीथादिषु रसतमत्वदृष्टिपराणि

(111) ३. **पारिप्लवाधिकरणम्** (सू. 23-24)

औपनिषदानामाख्यानानां विद्याविधिशेषत्वमेव ; न तु पारिप्लवार्थत्वम्

(112) ४. **अग्नीन्धनाद्यधिकरणम्** (सू. 25)

प्रव्राजिनां विद्यासिद्धिः तदीयाश्रमधर्मापेक्षा ; न तु यज्ञादिसापेक्षा

(113) ५. **सर्वापेक्षाधिकरणम्** (सू. 26)

कर्माधिकृताश्रमिणां विद्यासिद्धिः कर्मसापेक्षैव

(114) ६. **शमदमाद्यधिकरणम्** (सू. 27)

गृहस्थस्य यज्ञादय इव शमादयोऽपि विद्याङ्गतयाश्रयणीयाः

(115) ७. **सर्वान्नानुमत्यधिकरणम्** (सू. 28-31)

प्राणविद्यानिष्ठस्य सर्वान्नभक्षणाभ्यनुज्ञानं प्राणात्ययशङ्कायामेव

(116) ८. **विहितत्वाधिकरणम्** (सू. 32-35)

वर्णाश्रमधर्माणामुपासकेषु विद्याङ्गत्वेपि इतरेषु वर्णाश्रममात्राङ्गत्वमेव

(117) ९. विधुराधिकरणम् (सू. 36–39)

अनाश्रमिणामपि त्रैवर्णिकानां ब्रह्मविद्याधिकारोऽस्त्येव

(118) १०. तद्भूताधिकरणम् (सू. 40–43)

आश्रमभ्रष्टानां सर्वथा ब्रह्मविद्यायामनधिकार एव

(119) ११. स्वाम्यधिकरणम् (सू. 44–45)

कर्माङ्गाश्रयोपासनानाम् ऋत्विजैवाऽनुष्ठेयत्वम्

(120) १२. सहकार्यन्तरविध्यधिकरणम् (सू. 46–48)

'अथ मुनिः' इति मौनरूपस्य विद्यासहकार्यन्तरस्य विधिरेव ; न अनुवादः

(121) १३. अनाविष्काराधिकरणम् (सू. 49)

'बाल्येन तिष्ठासेत् ' इति विहितं बाल्यं माहात्म्यानाविष्करणरूपम्

(122) १४. ऐहिकाधिकरणम् (सू. 50)

उपासनस्य निरन्तरायत्वे अविलम्बेन फलावाप्तिः

(123) १५. मुक्तिफलाधिकरणम् (सू. 51)

ब्रह्मविदपचारस्य विद्यानिष्पत्तिप्रतिबन्धकत्वम्

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## तृतीयेऽ(साधना)ध्याये

## (12) चतुर्थः अङ्गपादः ॥ ४-३ ॥

[अधिकरणानि 1-15 सूत्राणि 1-51]

[पादार्थः— मोक्षोपायतया वेदान्तविहितविद्याङ्गभूतकर्मादिविषयिणी चिन्ता]

### (109) पुरुषार्थाधिकरणम् ॥ ३-४-१ ॥ (सू. 1-20)

[अधिकरणार्थः—कर्माङ्गकादुपासनादेव परमपुरुषार्थावाप्तिः ; न तु वेदनाङ्गकात् कर्मणः]
[ईशावास्यविद्याविचारः 3-4-13]

### ४१९. पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ३·४·१ ॥ (सि)

[अस्याऽधिकरणस्य पूर्वपादेन सह सङ्गतिः विचारणीयोंऽशश्च]

गुणोपसंहारानुसंहारफला विद्यैकत्व-नानात्वचिन्ता कृता । इदानीं—'विद्यातः'[1] पुरुषार्थः ? उत 'विद्याङ्गकात्'[2] कर्मणः ?— इति चिन्त्यते ।

---

**गुणेति** । उपासनचिन्तानन्तरम् अङ्गचिन्तनं क्रियत इति, पादसङ्गतिः अर्थसिद्धा । तत्र विद्याया अङ्गित्वे सति हि तदङ्गचिन्तनं कार्यम् । तस्मात् तदुपयोगित्वेन विद्याया अङ्गित्वं प्रथमाधिकरणे निरूप्यते ॥

---

[सूत्रार्थः । **पुरुषार्थः**—परमपुरुषार्थभूतः परब्रह्मावाप्तिरूपो मोक्षः, **अतः**—उपासनात्मिकायाः विद्यायाः सिध्यति इति, **शब्दात्**—ईदृशार्थस्य स्पष्टं प्रतिपादकात् औपनिषदात् शब्दात् ज्ञायते, **इति बादरायणः**—इत्येवं बादरायण आचार्य अभिप्रैति ॥]
'पुरुषार्थं तु विद्यातो मन्यते बादरायणः । ब्रह्मवित् परमाप्नोतीत्यादिस्पष्टार्थशब्दतः ॥' (ब्र·प. 419)

---

[1] किं विद्यातः—वा. [2] विद्याङ्गात्—द.

[सिद्धान्त्यभिमतोऽर्थः]

**किं युक्तम् ? अतः—'विद्यातः, पुरुषार्थः' इति, भगवान् बादरायणो मन्यते। कुतः ? शब्दात्। दृश्यते हि ! औपनिषदः शब्दः, विद्यातः [1]पुरुषार्थं[1] ब्रुवन् :**

**'ब्रह्मविदाप्नोति परम्'** (तै.उ.आन. 1-1)

**'वेदाऽहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।**

**तमेवं विद्वानमृत इह भवति नाऽन्यः पन्था विद्यतेऽयनाय ॥'** (तै.आर. 3-13)

**'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥**

**तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम् ॥'** (मुण्ड.उ 3-2-8) **इत्यादिः ॥ १ ॥**

---

किं विद्यातः पुरुषार्थः ? उतः ? विद्याङ्गकात् कर्मणः ? इति। किं विद्या क्रतुकर्तृभूतात्मसंस्कारद्वारेण क्रत्वर्था ? उत अपुनरावृत्तिफलसाधनतया पुरुषार्था ?। किं 'ब्रह्मविदाप्नोति' इत्यादयः फलविधयः ? उत अर्थवादाः ? किं परविद्यासु कर्मीभूतः जीवः ? उत तदन्यः परमात्मा ?। किम् आचारदर्शनादिलिङ्गानुगृहीतं तत्त्वमस्यादिसामानाधिकरण्यं, उपास्यस्य जीवभावमवगमयति ? । न ? इति। किम् इदं लिङ्गम् अनैकान्तिकम् ? न ?—इति [विचारः] ॥

अनैकान्तिकत्वाभावे, तदनुगृहीतसामानाधिकरण्येन उपास्यस्य जीवभावावगमात्, परविद्यानां स्वकर्मभूतजीवसंस्कारत्वात्, आत्मज्ञानफलश्रुतेः अर्थवादतया, पृथक्फलसाधनत्वाभावात्, विद्या क्रत्वर्थेति, तदङ्गकात् कर्मणः पुरुषार्थः स्यात्। लिङ्गस्य अनैकान्तिकत्वे, तदनुग्रहाभावेन सामानाधिकरण्यस्य जीवानतिरेकानवगमकत्वात् परविद्यानां जीवकर्मकत्वाभावेन तत्संस्कारत्वाभावात्, आत्मविद्याफलश्रुतेः अर्थवादत्वाभावेन पृथक्फलसाधनतया पुरुषार्थत्वात्, विद्यातः पुरुषार्थसिद्धिः स्यात् ॥

इदं च [अधिकरणं] सिद्धान्तोपक्रमम्। विद्यायाः पूर्वपादे प्रस्तुतत्वात्, **'अतः'** शब्देन सोक्ता ॥

**'ब्रह्मविदि'ति** वाक्ये विद्यया प्राप्यावाप्तिरुक्ता। **'वेदाऽह'**मित्यत्र विद्यायाः ब्रह्मप्राप्तिहेतुत्वं प्रतिबन्धनिवृत्तिद्वारकमित्यर्थः। तत्र ब्रह्मणः विग्रहादिविशिष्टत्वम् उपायान्तरनिषेधश्च सिद्धः। **'यथा नद्य'** इति वाक्ये उभयमप्यभिहितम् ॥ १ ॥

---

[1] पुरुषार्थं इति—द.

[पूर्वपक्षपरं सूत्रम्—विद्यातः फलश्रुतेरर्थवादतापरम् ]

[1]अत्र[1] पूर्वपक्षी प्रत्यवतिष्ठते—

## ४२०. शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ३-४-२ ॥ (पू)

नैतदेवम्—यत् विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यते—इति । न ह्येषः 'ब्रह्मविदाप्नोति परम्' इत्यादिशब्दः, वेदनात् पुरुषार्थावाप्तिम् अवगमयति ; कर्मसु कर्तृभूतस्याऽऽत्मनः, याथात्म्यवेदनप्रतिपादनपरत्वात् । अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात्, [2]तत्र फलश्रुतिः[2] अर्थवादमात्रम् ; यथा अन्येषु [3]द्रव्यादिषु[3]—इति जैमिनिराचार्यो मन्यते । तदुक्तम्—

---

अत्रेति । द्वितीयसूत्रप्रभृति पूर्वपक्षविषयम् [इत्याशयः] । न हीति । 'आदित्यो यूपः' इत्यादाविव, [शब्दार्थे] न तात्पर्यमित्यर्थः । कर्मस्विति । 'आत्मा ज्ञातव्यः' इति, विद्या आत्मनः शेषत्वेनाऽवगता ; व्रीह्यादेः प्रोक्षणादिवत् । 'अधीत्य स्नास्यन्' इति, ज्ञानमपि कर्मशेषत्वेनाऽवगतम् व्रीह्यादिशेषभूतप्रोक्षणादेः क्रतुशेषत्वम्, द्वारभूतव्रीह्यादेः क्रतुशेषत्वेनैव यथा उपपद्यते ; तथा आत्मशेषभूतज्ञानस्य कर्मशेषत्वम्, आत्मनः कर्मशेषत्वेन उपपद्यत इति, ज्ञातव्य आत्मा क्रतुशेषभूत एव । कर्मशेषभूतत्वं च कर्मसु कर्तृभूतस्याऽऽत्मनः । स चाऽऽत्मा जीव एवेति, तत्स्वरूपप्रतिपादनपरं वेदान्तवाक्यजातमित्यर्थः । अत इति । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिषु आत्मनः कर्मत्वावगमात्, [तस्य] ज्ञानेन संस्कार्यत्वम् ; 'स्वाध्यायोऽध्येतव्यः' इतिवत् । अतः यज्ञादेः व्रीह्यादिद्वारा प्रोक्षणादिवत् विद्याऽपि कर्तृसंस्काररूपतया कर्मशेषभूता । तस्मात्, यथा—अव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा

---

[सूत्रार्थः । शेषत्वात्—विद्यायाः कर्तृसंस्कारद्वारा क्रतूपकारकत्वात्, पुरुषार्थवादः—श्रुतिषु दृश्यमानः विद्यया मोक्षावाप्तिवादः अर्थवाद एव, यथा अन्येषु—द्रव्यसंस्कारकर्मस्विव, इति जैमिनिः—एवं जैमिनिराचार्यो मन्यते ॥]

विद्यायाः कर्मशेषत्वात् स्तुतिमात्रम् फलश्रुतिः। यथा हि द्रव्य-संस्कार-कर्मस्विति हि जैमिनिः॥ (ब्र.प.420)

---

[1] तत्र—वा. [2] तत्फलश्रुतिः—त. थ. [3] द्रव्यगुणादिषु—त.ज.

''[1]द्रव्य[1]-संस्कार-कर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' (पू.मी.सू. 4-3-1) इति ।

[पूर्वपक्षोक्तस्य वेदान्तशब्दानां जीवयाथात्म्यपरत्वस्य आक्षेपः सिद्धान्तिनः]

ननु च—'कर्मसु कर्तुर्जीवादन्यः, मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यते' इति प्रागेवोपपादितम् ;

'नेतरोऽनुपपत्तेः' (ब्र.सू. 1-1-17)

'भेदव्यपदेशाच्च' (ब्र.सू. 1-1-18)

'अनुपपत्तेस्तु न शारीरः' (ब्र-सू. 1-2-3)

'इतरपरामर्शात् स इति चेन्नाऽसम्भवात्' (ब्र.सू. 1-?-17)

इत्येवमादिभिः सूत्रैः । तदेव ब्रह्म, [2]तत्त्वमस्यादि[2]सामानाधिकरण्येन 'जीवादनतिरिक्तम्' इत्येतदपि,

'अधिकं तु भेदनिर्देशात्' (ब्र.सू. 2-1-22)

इत्येवमादिभिः निरस्तम् । सामानाधिकरण्यनिर्देशश्च,

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

'सर्वं खल्विदं ब्रह्म' (छां.उ. 3-14-1)

इति चेतनाचेतनसाधारणः,

'यः पृथिव्यां तिष्ठन्' (बृ.उ. 5-7-3)

---

क्रतुशेषभूतपर्णमयत्वस्य, अपापश्लोकश्रवणम् अर्थवादः ; तद्वत्—अव्यभिचरितक्रतुसम्बन्धिकर्तृद्वारा क्रतुशेषभूतायाः विद्यायाः, फलश्रुतिः अर्थवादः । प्रकरणान्तराधीतायाः विद्यायाः क्रतुशेषत्वमपि पर्णत्ववत् उपपन्नमित्यर्थः । [द्रव्यसंस्कारेति । 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत् प्रयाजानूयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते, वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्यादिविधेयेषु वाक्य-प्रकरणावगतक्रत्वङ्गभावेषु पर्णतादिद्रव्येषु, अञ्जनादिसंस्कारेषु, प्रयाजादिकर्मसु च, फलश्रवणम् अर्थवादः—इति पूर्वतन्त्रे निर्णीतम् (भा.प्र.) ॥]

---

[1] द्रव्यगुण—घ. [2] तत्त्वमस्यादीति—न.

'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा. 5-7-22)

इत्यादिनाऽ[1]वगततत्तदात्मतया[1]ऽवस्थितिनिबन्धनः इति,

'अवस्थितेरिति काशकृत्स्नः' (ब्र.सू. 1-4-22)

इत्यादिभिरुपपादितम् ॥ तत् कथं 'कर्मसु कर्तुरात्मनो याथात्म्योपदेशपराः वेदान्तशब्दाः' इति, विद्याया कर्माङ्गत्वं प्रतिपाद्यते ? ।

[प्रसक्ताक्षेपस्य पूर्वपक्षिकृतः परिहारः]

उच्यते—वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैः तदुपबृंहितसामानाधिकरण्यनिर्देशेन च, 'वेदान्तशब्दाः देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा' इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः ॥

[विद्यायाः कर्तृसंस्कारद्वारा क्रत्वङ्गत्वायोगशङ्का-निरासौ]

ननु च-[2]कर्तृ[2]संस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्; कर्तुः [3]लौकिक[3]-वैदिक साधारणत्वेन अव्यभिचरितक्रतुसम्बन्धित्वाभावात् ।

नैवम्; लौकिकस्य कर्मणः कर्तुः, देहादव्यतिरिक्तत्वेऽपि उपपत्तेः, देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेव उपयोगात्, तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते। अतः, विद्यायाः क्रतुशेषत्वात्, नाऽतः पुरुषार्थः ॥ २ ॥

---

**नन्विति** । अचेतनेनेव चेतननेनाऽपि स्वरूपैक्यानुपपत्तिद्योतनार्थम्, 'ऐतदात्म्यमिदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' इति वाक्यद्वयोपादानम् । एवं जीवविलक्षणस्य प्रतिपाद्यमानत्वेन जीवप्रत्यभिज्ञानाभावात्, तद्द्वारा विद्यायाः कर्माङ्गत्वमनुपपन्नमित्यर्थः । **वाक्येष्वेवेति** । त्वया जीवविलक्षणपरत्वेनोक्तेष्वेवेत्यर्थः । **तदुपेति** । लिङ्गानुग्रहात् सामानाधिकरण्यमपि स्वरूपैक्यपरमित्याशयः ॥

**न नु चेति** । न हि अन्यशेषम् अन्यशेषं भवति । तदसाधारणमेव हि तदङ्गम् । [तत्प्रत्यभिज्ञापकम्] कर्ता च लौकिक-वैदिक कर्मसाधारणः । अतः कर्तुः अव्यभिचरितक्रतुसम्बन्धित्वाभावात्, जुहूवत् प्रत्यभिज्ञा नाऽस्तीति, न तद्द्वारा क्रत्वङ्गत्वमित्यर्थः ॥ २ ॥

---

[1] वगतात्मतया—ङ.  [2] कर्तुः—द.  [3] लौकिकस्य—वा.

[वेदान्तानां जीवस्वरूपपरत्वे लिङ्गप्रदर्शनं सूत्रतः]

कानि पुनः तानि लिङ्गानि ? यदुपबृंहितसामानाधिकरण्यनिर्देशेन 'वेदान्तशब्दाः, जीवस्वरूपपराः' इति [1]निर्णीयन्ते[1] ; तत्राऽऽह—

## ४२१. आचारदर्शनात् ॥ ३-४-३ ॥ (पू)

**ब्रह्मविदां प्राधान्येन कर्मस्वेव आचारो दृश्यते—अश्वपतिः केकयः किल ! आत्मवित्तमः, तद्विज्ञानायोपगतान् तानृषीन् प्रत्याह—**

**'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि'** (छां.उ. 5-11-5)

**इति । [2]तथा[2] जनकादयो ब्रह्मविदग्रेसराः, कर्मनिष्ठाः [3]स्मृतिषु[3] दृश्यन्ते ;**

**'कर्मणैव हि ! संसिद्धिमास्थिता जनकादयः'** (भ.गी. 3-20)

**'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः'** (वि.पु. 6-6-12)

**इति । अतः ब्रह्मविदां कर्मप्रधानत्वदर्शनात्, विद्यायाः [4]कर्तृ[4]स्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति, न विद्यातः पुरुषार्थः ॥ ३ ॥**

---

**आचारदर्शनादिति ।** गुण-मुख्ययोर्विरोधे मुख्यानुगुणं गुणो नेयः ; न तु गुणानुगुणं मुख्यो नेयः । [अङ्गप्रधानयोः दीक्षणीया-सोमयोः, 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति एकस्मिन् पर्वकाले प्रसक्तौ, प्रधानस्यैव पर्वकालकर्तव्यत्वम् ; न दीक्षणीयायाः इति पूर्वतन्त्रे निर्णीतम् (भा प्र.)] तस्मात् कर्मणो विद्यायाश्च प्रसङ्गे, कर्मणोऽनुष्ठानं तस्य प्राधान्येनैव उपपद्यते । अतः विद्या कर्माङ्गमित्यर्थः ॥ ३ ॥

---

[सूत्रार्थः । **आचारस्य**—ब्रह्मविदां प्राधान्येन कर्मानुष्ठानरूपस्य आचारस्य, **दर्शनात्**—जनकाश्वपतिप्रभृतिषु ब्रह्मवित्सु वर्तमानत्वेन श्रुति-स्मृत्यादिषु दृष्टत्वात्, विद्यैव कर्माङ्गम् ; न विद्यायाः कर्मेति ॥]

**'यक्ष्यमाणो ह वै चेति ह्याचारस्याऽपि दर्शनात् । विद्यायाः कर्मशेषत्वं भवतीति च चोद्यते' ॥** (ब्र.प. 421)

---

[1] निर्णीयते—द.
[2] तथा च—घ. यथा च—ङ.
[3] स्मृतिषु च—द.
[4] कर्तुः—वा.

[उक्तार्थे लिङ्गानुग्राह्यप्रमाणप्रदर्शनम् ]

लिङ्गमिदम् ; प्राप्तिरुच्यताम्—इत्यत्राह—

## ४२२. तच्छ्रुतेः ॥ ३-४-४ ॥ (पू )

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह ;

'यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवति' (छां.उ. 1-1-10) इति । न इयं श्रुतिः 'प्रकरणात् उद्गीथमात्रविषया' इति व्यवस्थापयितु शक्या ; यतः प्रकरणात् श्रुतिर्बलीयसी । 'यदेव विद्यया करोति' इति विद्यामात्रविषया हि ! इयं श्रुतिः ॥ ४ ॥

[श्रुतिदृष्टं साहित्यं विद्यायाः कर्माङ्गताज्ञापकम् ]

## ४२३. समन्वारम्भणात् ॥ ३-४-५ ॥ (पू )

---

**प्राप्तिः**—प्रमाणतः सिद्धिः । अनुग्राहकमुक्तम् ; अनुग्राह्यमभिधीयतामित्यर्थः । आगमप्रमाणस्य [विधायकवाक्यस्य] श्रुति-लिङ्गादयोऽनुग्राहकाः । **विद्ययेति** तृतीयाश्रुत्या अङ्गत्वं गम्यते ।

[**इयं श्रुतिः**— 'विद्या'पदश्रुतिः ; न तु प्रकृता तृतीयाश्रुतिः । **विद्यामात्रेति** । 'य एव वह्निमान् देशः स एव धूमवान्' इतिवत् , यदेवेति सर्वनामावधारणाभ्यां व्याप्तिरवगम्यते । यदेव कर्म करोति—यद्यत् कर्म करोतीत्यर्थः । ततश्च कर्ममात्रे विद्यासाधनत्वेन विधीयत इति, विद्यायाः सर्वकर्माङ्गत्वं ; विद्याशब्दस्योद्गीथमात्रविषयत्वे नाऽवकल्पत इति, तस्य सर्वविद्याविषयत्वमेव वक्तव्यमिति (भा.प्र.)] ॥ ४ ॥

---

[सूत्रार्थः । **तस्य** — विद्यायाः कर्माङ्गत्वस्य, **श्रुतेः** — स्पष्टतया श्रुतिसिद्धत्वात्, विद्या कर्माङ्गम् ।।]

'यदेव विद्यया चेति स्पष्टश्रुत्याऽपि कर्मसु । विनियोगाच्च विद्यायाः कर्माङ्गत्वं तु सिध्यति ॥' (ब्र.प. 422)

[सूत्रार्थः । **समन्वारम्भणात्**—एकस्मिन्नेवाऽधिकारिणि विद्या-कर्मसमावेशोक्तेर्ज्ञापकात् विद्या कर्माङ्गम् ।। ]

तं विद्या-कर्मणी चेति ह्येकस्मिन् कर्म-विद्ययोः । साहित्यदर्शनाच्चाऽपि विद्यायाः कर्मशेषता ॥ (ब्र.प. 423)

'तं विद्या-कर्मणी समन्वारभेते' (बृ.उ. 6-4-2)

इति, विद्या-कर्मणोः साहित्यं च दृश्यते। साहित्यं च, उक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥ ५ ॥

[कर्मविधिषु विद्यावत अधिकारित्वोक्तिरपि उक्तार्थज्ञापिका]

### ४२४. तद्वतो विधानात् ॥ ३-४-६ ॥ (पू.)

विद्यावतः[1] कर्मविधानात्, विद्या कर्माङ्गमित्यवगम्यते ;

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्माऽतिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे' (छा.उ. 8-15-1)

इत्यादौ। 'वेदमधीत्य' इति, अध्ययनवतः कर्माणि विदधत्, अर्थावबोध पर्यन्ताध्ययनवत एव विदधाति। 'अर्थावबोधपर्यन्तं हि! अध्ययनम्'—इति स्थापितम्[2]। अतः ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति, न पृथक्फलायाऽवकल्पते ॥ ६ ॥

[समग्रस्याऽऽयुषः कर्मनैयत्यात् विद्याया अङ्गत्वेव]

### ४२५ नियमात् ॥ ३-४-७ ॥ (पू.)

---

**अन्वारम्भणम्**—स्पर्शः। तेन सम्बन्धो विवक्षितः। न्यायशब्देन कर्तुरात्मनः कर्मशेषत्वम् आचारदर्शनमित्यादि विवक्षितम् ॥ ५ ॥

**अतिशेषेण**—निःशेषमित्यर्थः ॥

गुरुदक्षिणादिकं समर्प्य आचार्याय प्रियं धनमाहृत्येत्यर्थः ॥

**स्थापितम्**—भाट्टैः प्राभाकरैश्च श्रुतेः अविवक्षितार्थत्वादिदोषपरिहारार्थम् इत्यर्थः। 'स्नात्वा जुहुयात्' इत्युक्ते हि होमः [यथा] स्नानाङ्गकः स्यात् ; तथा इदमपीति भावः। न हि क्रतुज्ञानस्य तदनुष्ठानमङ्गम्। अपि तु अनुष्ठानस्य अनुष्ठेयज्ञानमङ्गं स्यात् ; तद्वदिहापि ॥ ६ ॥

---

[सूत्रार्थः। **तद्वतः**—विद्वांसमधिकारिणमुद्दिश्य, **विधानात्**—कर्मणां विहितत्वाज्ज्ञानवत्, विद्या कर्माङ्गम् ॥]

'गुरोर्वेदमधीत्येति श्रुत्या विद्यावतस्त्विह। कर्मानुष्ठानविधितः कर्माङ्गं वेदनम् भवेत् ॥' ब्र.प. 424)

[सूत्रार्थः। **नियमात्**—आत्मविदः पुरुषायुषस्य समग्रस्याऽपि कर्मणि नियमस्य श्रुतिसिद्धत्वात् विद्यैव कर्माङ्गम् ॥]

कुर्वन्नेवेह कर्माणीत्यात्मविदपुरुषस्य हि। आयुषो नियमात् कर्मण्यतस्स्यात् कर्मशेषता ॥' ((ब्र.प. 425)

---

[1] विद्यावतः कर्तुः—द.  [2] स्थापितम्—द.

इतश्च न विद्यातः पुरुषार्थः ।

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः (ईशो. 2)

इति, आत्मविदः पुरुषायुषस्य सर्वस्य कर्मसु[1]नियमेन[1]विनियोगात्, कर्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गम्—इति ॥ ७ ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, प्रचक्ष्महे—

## ४२६. आधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३–४–८ ॥ (सि)

'तु'शब्दात् पक्षो व्यावृत्तः । विद्यात एव पुरुषार्थः ।

कुतः ? अधिकोपदेशात्—कर्मसु कर्तुर्जीवात्, हेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेन अधिकस्य—अर्थान्तरभूतस्य परस्य ब्रह्मणः, वेद्यतया उपदेशात्, भगवतो बादरायणस्य 'विद्यातः (पुरुषार्थः) फलम्' [2]इत्येवमेव[2] मतम् ।

लिङ्गानि तिष्ठन्तु ; वेद्यतयो[3]पदेशस्तु तावत्[3], कर्तुः प्रत्यगात्मनोऽधिकस्यैव ।

कथम् ? तद्दर्शनात्—प्रत्यगात्मनि [4]अशुद्धे शुद्धेऽपि[4] असम्भावनीयानन्तगुणाकरस्य वेद्यस्य [5]निरस्तनिखिल[5]हेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभव[6]लय[6]लीलस्य सर्वज्ञस्य सर्वशक्तेः वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नप्रशासितुः परस्य ब्रह्मणः, वेदनोपदेशवाक्येषु दर्शनात् ;

---

कर्मसु....योगात्—क्रतुशेषत्वात्, मध्येप्राप्तमन्यत् सर्वं तच्छेषभूतमित्यर्थः ॥ ७ ॥

वेदनो....क्येष्विति । स्वरूपपरवाक्योक्तगुणानां उपासनापेक्षितत्वादित्यर्थः ॥ स्वरूपपराणामपि वेदनोपदेशवाक्यानाम् उपासनोपयोगित्वात् ॥

---

[सूत्रार्थः । बादरायणस्य—व्यासस्य, एवं तु—विद्यातः पुरुषार्थः इत्येवाऽभिमतम्, अधिकोपदेशात्—कर्मणां कर्तुरतिरिक्तस्य ब्रह्मणो वेदनस्य तस्य ब्रह्मप्राप्तिहेतुत्वस्य च वेदान्तेषूपदेशात्, तद्दर्शनात्—विद्यायाः कर्मापेक्षयाऽधिकविषयकत्वदर्शनाच्च ॥]

'विद्यातः पुरुषार्थस्तु बादरायणसंमतः । जीवाधिकपरस्यैव वेद्यत्वाच्च तथा श्रुतेः ॥' (ब्र.प. 426)

---

[1] नियमन—द. [2] इत्येवं—त थ. [3] पदेशस्तावत्—द
[4] अशुद्धेऽपि—द. [5] निखिलनिरस्त—त.थ. [6] विलय—द.

'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8-1-5)

'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' (छां.उ. 6-2-3)

'यः सर्वज्ञः सर्ववित्' (मुण्ड.उ. 1-1-9)

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.उ. 6-8)

'स एको ब्रह्मण आनन्दः' (तै.उ.आन. 8-4)

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति ॥' तै.उ.आन. 4-1)

'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः' (बृ.उ. 6-4-22)

'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाऽधिपः' (श्वे.उ 6-9)

'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ.5-8-9)

'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चन्द्रश्च । मृत्युर्धावति पञ्चमः ॥' ( तै.उ.आन. 8-1)

इत्यादिषु । तस्मात् वेदनोपदेशशब्देषु, कर्तुः प्रत्यगात्मनः खद्योतकल्पस्य अविद्यादि-हेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति, परमपुरुषविषयायाः विद्यायाः तत्प्राप्तिरूपम् अमृतत्वं तत्र तत्र श्रूयमाणं फलमिति, 'विद्यातः पुरुषार्थः' इति सुष्ठूक्तम् ॥ ८ ॥

[आचारदर्शनादीनां लिङ्गानां निरासः]

लिङ्गानि निरस्यन्ते—

## ४२७. तुल्यं तु दर्शनम् ॥ ३ - ४ - ९ ॥ (सि)

---

अपहतेत्यादि [ब्रह्मणः] उक्तगुणविशिष्टत्वे प्रमाणम् । जुहूवत् कर्तुरात्मनः प्रत्यभिज्ञाने सति हि ! तद्द्वारा विद्यायाः कर्माङ्गत्वम् । वेदनोपदेशवाक्येषु जीवविलक्षणस्य प्रतिपाद्य-मानत्वेन जीवप्रत्यभिज्ञानाभावात् , न तद्द्वारा विद्यायाः कर्माङ्गत्वमिति श्रूयमाणं फलमपि न अर्थवादरूपम् । तस्मात् विद्यायाः पृथक्फलसाधनत्वेन न क्रत्वर्थत्वम् ; किन्तु पुरुषार्थत्व-मेवेत्यर्थः ॥ ८ ॥

---

[सूत्रार्थः । दर्शनम्—विदुषां कर्मानुष्ठानदर्शनम् , तुल्यं तु—विद्यायाः कर्माङ्गत्व-तदभावयोः समानमिति, न कर्माङ्गत्वे हेतुर्भवति ॥]

'प्रधानत्वेऽपि विद्यायास्तुल्यमाचारदर्शनम् । यक्ष्यमाणो ह वै चेति विद्याङ्गत्वात् सुसङ्गतम् ॥(ब्र.प. 427)

यदुक्तम्—ब्रह्मविदां कर्मानुष्ठानदर्शनात्, विद्या कर्माङ्गम्—इति, तन्न; विद्यायाः अनङ्गत्वेऽपि तुल्यं दर्शनम्। ब्रह्मविदां कर्मानुष्ठानदर्शनम् अनैकान्तिकमित्यर्थः। अननुष्ठानस्याऽपि दर्शनात्। दृश्यते हि ब्रह्मविदां कर्मत्यागः;

'ऋषयः कावषेयाः, किमर्था वयमध्येष्यामहे? किमर्था वयं यक्ष्यामहे'

(ऐत.आर. 3-2-6)

इत्यादौ। अतः ब्रह्मविदां कर्मत्यागदर्शनात्, न विद्या कर्माङ्गम्॥

[ब्रह्मविदां कर्मानुष्ठानाननुष्ठानयोर्विरोधाभासपरिहारः]

कथमिदमुपपद्यते—ब्रह्मविदां कर्मानुष्ठानं अननुष्ठानं च?

फलाभिसन्धिरहितस्य यज्ञादिकर्मणः ब्रह्मविद्याङ्गत्वात्, तथाविधस्य कर्मणः अनुष्ठानदर्शनमुपपद्यते। 'वक्ष्यति'[1] च—

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू. 3-4-26)

इति। फलार्थस्य तस्यैव यज्ञादेः कर्मणः मोक्षैकफलब्रह्मविद्याविरोधित्वात्, [2]तस्य अननुष्ठान[2]दर्शनम् उपपन्नतरम्। विद्यायाः कर्माङ्गत्वे, कर्मत्यागः कथमपि नोपपद्यते॥९॥

[विद्यासामान्यस्य कर्माङ्गतायाः श्रौतत्वनिरासः]

यदुक्तम्—श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यते—इति; तत्राऽऽह—

## ४२८. असार्वत्रिकी ॥ ३-४-१० ॥ (सि)

---

अनैकान्तिकशब्देन अनियतत्वमुच्यते। **किमर्थाः**— किं प्रयोजनाः॥ अङ्गित्वे हि अननुष्ठानं नोपपद्यते इति भावः॥

**कथमिति**। अनुष्ठानाननुष्ठाने व्याहते इत्यभिप्रायः। **विद्यायाः....नोपपद्यत इति**। ब्रह्मविद्याफलानाम् अर्थवादत्वेन मोक्षाख्यफलानभ्युपगमात्, 'मोक्षैकफलं कर्मानुष्ठेयम्; त्रिवर्गफलं तु अननुष्ठेयम्' इति विभागानुपपत्त्या तत्रैव व्याहतिरित्यर्थः॥९॥

---

[सूत्रार्थः। असार्वत्रिकी—'यदेव विद्यये'ति विद्यायाः कर्माङ्गता, न सर्वविद्याविषया किन्तु उद्गीथविद्यामात्रविषया॥]

'न सर्वविद्याविषया यदेवेति श्रुतिर्हि सा। उद्गीथविषयैवेति विद्याया नाङ्गता भवेत्॥' (ब्र.प. 428)

---

[1] वक्ष्यते च—त.थ.  [2] तस्यैवाऽननुष्ठान—वा. तस्यानुष्ठान—थ.द.

न सर्वविद्याविषया इयं श्रुतिः ; अपि तु उद्गीथविद्याविषयैव। 'यदेव विद्यया करोति' इति यच्छब्दस्य [1]अनिर्धारित[1]विशेषस्य,

'उद्गीथमुपासीत' (छां उ. 1-1-1)

इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। न हि! 'यत् करोति तत् विद्यया' इति सम्बध्यते।

'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य, [2]तस्य हि[2]! वीर्यवत्तरत्वमुच्यते ॥ १० ॥

[विद्याकर्मणोः साहित्यदर्शनस्य विद्यायां कर्माङ्गत्वगमकतानिरासः]

यच्चेदमुक्तम्—'तं विद्याकर्मणी समन्वारभेते' (बृ.उ. 6-4-3)

इति विद्याकर्मणोः साहित्यदर्शनात्, विद्या कर्माङ्गम्—इति। तत्राऽऽह—

## ४२९. विभागः शतवत् ॥ ३-४-१२ ॥ (सि)

---

[प्रस्तुतोद्गीथविशेषनिष्ठत्वादिति। विशेष्यते इति विशेषः। 'उद्गीथ' शब्दः उद्गीथविद्यापरः। ततश्च यच्छब्दस्य उद्गीथविद्याक्रियमाणसोमयागनिष्ठत्वादित्यर्थः (भा.प्र)।]

न हीति। 'यत् करोति तत विद्यया' इत्युक्ते, विद्याया अङ्गत्वं विहितं स्यात् ; न च तथाऽन्वयः। 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इत्यन्वयः। तथा सति यच्छब्दानूदितस्य विद्यया क्रियमाणस्य प्रापकप्रमाणाकाङ्क्षायां, प्रकरणसंनिहिता उद्गीथविद्या, 'यदेव विद्यये'ति विद्याशब्दं सङ्कोचयति। अतः अनुवादरूपत्वात् प्रमाणान्तरसापेक्षत्वेन स्वतोऽर्थनिश्चयसामर्थ्याभावात्, विद्ययेति पदम्, एकपदसामर्थ्यरूपा श्रुतिर्न भवतीत्यर्थः। [अतः] 'प्रकरणात् श्रुतिर्बलीयसी' इत्युक्तं [न विरुद्धम्] ॥ १० ॥

---

[सूत्रार्थः। **विभागः**—एकस्मिन् पुरुषे एव विद्या-कर्मणोः अङ्गाङ्गिभावराहित्येन पृथगवस्थितिः, **शतवत्**—एकस्मिन्नेव क्षेत्ररत्नविक्रयिणि शतद्वयान्वयोक्तावपि क्षेत्रार्थ-रत्नार्थतया एकैकशतान्वयतात्पर्यवत् अत्र सङ्गच्छते ॥]

'पृथक्स्वस्वफलावेते पुरुषं ह्यनुगच्छतः! क्षेत्रार्थं चाऽपि रत्नार्थं द्विशतोक्तौ यथा भवेत्॥' (ब्र.प. 429)

---

[1] निर्धारित—थ. [2] तस्य—द.

'तं विद्या-कर्मणी समन्वारभेते' (बृ.उ. 6-4-3)
इत्यत्रोक्तेन विद्या-कर्मणोः भिन्नफलत्वात्, विद्या स्वस्मै फलाय समन्वारभते; कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः। शतवत्—यथा 'क्षेत्र-रत्नविक्रयिणं शतद्वयमन्वेति' इत्युक्ते, 'क्षेत्रार्थं शतम्, रत्नार्थं शतम्' इति विभागः प्रतीयते; तथा इहाऽपि ॥ ११ ॥

[विद्यावतः कर्मविधानमिति शङ्कायाः परिहारः]

## ४३०. अध्ययनमात्रवतः ॥ ३-४-१२ ॥ (सि)

यदुक्तम्—विद्यावतः कर्मविधानात् विद्या कर्माङ्गम्—इति;
नैतद्युक्तम्; 'वेदमधीत्य' इति अध्ययनमात्रवतो विधानात् ॥

[अध्ययनविधेः अर्थावबोधपर्यवसायित्वाभावे पर्यवसायित्वे च विद्यायाः कर्माङ्गत्वायोगः]

न च—अध्ययनविधिरेव अर्थावबोधे प्रवर्तयति; आधानवत् अध्ययनस्य अक्षरराशिग्रहणमात्रे पर्यवसानात्। गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्व-दर्शनात्, तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते। ततः, कर्मार्थी कर्मज्ञाने प्रवर्तते; मोक्षार्थी च ब्रह्मज्ञाने—इति, न विद्या कर्माङ्गम्।

---

'तं विद्या....इति समन्वारम्भणश्रुतिः सांसारिकफलविद्या-कर्मविषया। ब्रह्मविद्या-तदङ्गकर्मविषया वा स्यादियं श्रुतिः। 'नेहाभिऽक्रमनाशोऽस्ति' इति न्यायात्, विद्या प्रारब्धावसाने मुक्तिदानायाऽन्वेति। कर्म च जन्मान्तरेऽपि विद्योत्पादनायाऽन्वेती-त्यर्थः ॥ ११ ॥

आधानवदिति। [यथा] 'अग्नीनादधीते'त्यत्र आधानेन अग्नेः सम्पाद्यत्वमात्रमुक्तम्। न तूत्तरक्रतुविनियोगः। अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यात्; तथा अत्रापीत्यर्थः। एवं शब्द[तव्यप्रत्यय] स्वारस्यमुपपादितम्। [तव्यप्रत्ययेन स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः शेषित्वावगमात् इति भावः (भा.प्र.)] गृहीतस्य चेति। अथ अर्थानुपपत्तिः परिह्रियते। [तथा हि] प्रवर्तकाभावात् मीमांसाया अनारम्भणीयत्वं हि! अनुपपत्तिः। साऽपि रागतः प्रवृत्त्या परिह्रियते। श्रुतेः अविवक्षितार्थत्वमपि परिहृतं भवति। अध्ययनविधेः प्रयोजनपर्यवसायित्व-मपि परम्परया उपपद्यते; अर्थज्ञानपर्यन्तत्वपक्षवत्—इति ॥ कर्मावबोधित्वेति, [कर्मणः]

---

[सूत्रार्थः । अध्य....वतः—'वेदमधीत्ये'ति अक्षरराशिग्रहणमात्रवन्तमेवोद्दिश्य स्नानपूर्वकाणां कर्मणां विधानात् विद्या न कर्माङ्गम]

'श्रुतिर्वेदमधीत्येति विद्यावत्पुरुषं न हि। केवलाधीतिनं प्राह नाऽतः कर्माङ्गता मता॥' (ब्र.प. 430)

यद्यपि—अध्ययनविधिरेव अर्थावबोधे प्रवर्तयति, तथाऽपि—न विद्या कर्माङ्गम्; अर्थज्ञानादर्थान्तरत्वात् विद्यायाः ॥ यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात् फलसाधन-[1]भूतं तत्कर्मा[1]नुष्ठानम् अर्थान्तरम्; तथा—अर्थज्ञान[2]रूपात्[2] ब्रह्मस्वरूपविज्ञानात् अर्थान्तरमेव ध्यानोपासनादिशब्द[3]वाच्या पुरुषार्थसाधनभूता विद्येति[3], न तस्याः कर्मसम्बन्ध[4]गन्धो[4] विद्यते ॥ १२ ॥

## ४३१. नाऽविशेषात् ॥ ३-४-१३ ॥ (सि)

[कुर्वन्नेवेति श्रुतेः फलसाधनभूतकर्मविषयतानिषेधः]

यच्चोक्तम्—'कुर्वन्नेवेह कर्माणि' इति आत्मविदं ज्ञाना[5]द्व्यावर्त्य[5]यावज्जीवं कर्मानुष्ठाने नियमयति—इति, तन्नोपपद्यते; [6]अविशेषात्[6]। न हि! अयं नियमः फलसाधनभूतस्वतन्त्रकर्मविषयः, इति विशेषहेतुरस्ति; विद्याङ्गभूतकर्मविषयतयाऽपि उपपत्तेः।

---

आपातप्रतीतिरुच्यते। तत्र कर्मोपक्रमत्वात् प्रथमं कर्मविचार उपपद्यते। आपातप्रतीत्या प्रवृत्तावपि, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति' इत्यादिभिर्व्याकुलतया, न केवलं ब्रह्मविचार एव; कर्मविचारोऽपि कर्तव्य एव॥ अतः अध्ययनविधे अर्थज्ञानपर्यवसायित्वाभावात् अध्ययनवतः कर्मविधानेऽपि अर्थज्ञानस्य कर्मविधिशेषत्वाभावात्, न विद्या कर्माङ्गमित्यर्थः॥ [यद्यपि—यदि चेत्यर्थः] [अनेन] विधेः अर्थज्ञानपर्यन्तत्वमभ्युपगम्य परिहरति। अर्थज्ञानादर्थान्तरत्वात्—[सार्थकशब्दग्रहणम् अध्ययनम्] इति अध्ययनशब्दवाच्यव्यतिरिक्तत्वाद् विद्यायाः इत्यर्थः। न हि! अर्थज्ञानस्य ज्योतिष्टोमादिकर्म शेषभूतम्। विपरीतं हि! तत्। एवं शास्त्रजन्यज्ञानम् उपासनाख्याया विद्यायाः शेषभूतमित्यर्थः ॥ १२ ॥

---

[सूत्रार्थः। न—कुर्वन्नेवेति श्रुतिः फलसाधनस्वतन्त्रकर्मविषया न, अविशेषात्—तन्निधानकविशेषहेत्वभावात् ॥]

'विद्वत्स्वेवेति नियमः कर्मणो नाऽविशेषतः। अङ्गत्वेन फलार्थं वा चोपपत्तिर्हि दृश्यते'॥ (ब्र.प. 431)

---

[1] भूततत्कर्मा—द. भूतं तत्तत्कर्मा—ग

[2] स्वरूपात्—न.

[3] वाच्या विद्येति—द.

[4] गन्धोऽपि—न.

[5] द्व्यावृत्य—द.न.

[6] कुतः? अविशेषात्—वा.

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ.गी. 3-20)

[1]इति च,[1] विदुषस्तु आप्रयाणात् उपासनस्याऽनुवर्तमानत्वात् ।। १३ ।।

[कुर्वन्नेवेति श्रुत्याशयः सूत्रेण]

एवम् अर्थ[2]स्वाभाव्येन[2]चोद्यं परिहृत्य, 'कुर्वन्नेवेह कर्माणि' इत्यस्य [3]वाक्यस्यार्थ-माह[3]—

## ४३२. स्तुतयेऽनुमतिर्वा ।। ३-४-१४ ।। (सि)

'वा' शब्दः अवधारणार्थः ।

'ईशावास्यमिदं सर्वम्' (ईशो. 1)

इति विद्याप्रकरणात्, विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । 'विद्यामाहात्म्यात्, सर्वदा कर्म कुर्वन्नपि, न लिप्यते कर्मभिः' इति हि विद्या स्तुता भवति । वाक्यशेष[4]श्चैवमेव[4] दर्शयति—

'एवं त्वयि नाऽन्यथेतोऽस्ति न कर्म लिप्यते नरे' (ईशो. 2)

इति । अतः न कर्माङ्गं विद्या ।। १४ ।।

---

कर्मणैवेति, पूर्वपक्षिणोक्तस्य कर्मणैवेत्यादिवचनस्य, विद्याङ्गभूतकर्मविषयत्वमभिप्रेत्य । विदुषस्त्विति । तस्य यावज्जीवमनुवृत्तिः अङ्गिन उपासनस्याऽनुवर्तमानत्वादुपपन्नेत्यर्थः ।। १३ ।।

अर्थस्वाभाव्यम्—विद्याया अर्थज्ञानादर्थान्तरत्वं, कर्मेतिकर्तव्यताकत्वं च । ईशा—'ईट्' शब्दः तृतीयान्तः । तेन वास्यम् । यद्वा ईशेन आवास्यम्-ईश्वरपरतन्त्रमित्यर्थः । न रमते इति नरः—निःसङ्गः । तस्मिन् इतोऽन्यथा नास्ति । नरे त्वयि न कर्म लिप्यते इतीतोऽन्यथा नास्ति । इदम् एवम्—तत्त्वम् ; न तु स्तुतिमात्रमित्यर्थः ।। १४ ।।

---

[सूत्रार्थः । स्तुतये—विद्यां प्रशंसितुम्, अनुमतिर्वा—(कर्मलेपाभावबोधनतः) विद्यानिष्ठस्य सर्वदा कर्मानुष्ठानानुमतिरेवेयम् ।।]

'कुर्वन्नेवेह कर्माणीत्यत्राऽपि स्तुतये भवेत् । कर्मानुमतिरेवेति नाऽङ्गं विद्या तु कर्मणः ।।' (ब्र.प. 432)

---

[1] इतिवत्—आ.वा [2] स्वभावेन—द.

[3] अर्थमाह—घ.न. [4] श्चैतदेव—वा श्चेदमेव—आ.

## ४३३. कामकारेण चैके ॥ ३-४-१५ ॥ (सि)

[विरक्तस्य विदुषः स्वेच्छया गार्हस्थ्यत्यागदर्शनं विद्यायाः कर्माङ्गत्वविरोधि]

अपि च—एवम् एके शाखिनः, कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते—

'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ.उ. 6-4-22)

इति । [1]विदुषो विरक्तस्य[1] कामकारेण [2]गार्हस्थ्यकर्म[2]त्यागं ब्रुवत् इदं वचनं, ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति । यज्ञादिकर्माङ्गत्वे हि ! विद्यायाः, विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति । अतः न विद्या कर्माङ्गम् ॥ १५ ॥

[विद्यया सर्वकर्मोपमर्दश्रवणमपि विद्यायाः कर्मानङ्गत्वज्ञापकम्]

## ४३४. उपमर्दं च ॥ ३-४-१६ ॥ (सि)

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणः, ब्रह्म[3]विद्यया उप[3]मर्दं च प्रतिवेदान्तमधीयते—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे ॥' (मुण्ड.उ. 2-2-8)

इत्यादिकम् । तत् विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

---

कामेति । 'गार्हस्थ्यत्यागमधीयते' इत्यध्याहारः । यज्ञादीति । न हि अङ्गमवलम्ब्य अङ्गिनस्त्याग उपपद्यते । तस्मात् त्याज्यस्य कर्मणः अङ्गित्वं नास्तीत्यर्थः ॥ १५ ॥

उपमर्दमिति, अर्थप्रधानो निर्देशः । न हि अङ्गेन अङ्गिन उपमर्द उपपद्यते । तस्मादुपमर्दिका विद्या उपमर्दनीयस्य कर्मणो नाङ्गम् ॥ १६ ॥

---

[सूत्रार्थः । एके—शाखाविशेषाध्यायिनः, कामकारेण च—स्वेच्छयैव गार्हस्थ्यत्यागं वदन्ति, अतश्च विद्या न कर्माङ्गम् । ]

'प्रजया किं करिष्याम इति गार्हस्थ्यकर्मणाम् । कामकारेण चैके तु त्यागमिच्छन्ति शाखिनः॥' (ब्र.प. 433)

[सूत्रार्थः । उपमर्दं च—श्रुतिषु विदुषां पुण्य-पापोपमर्दनमपि अधीयते शाखिनः । अत इदमपि, विद्यायाः कर्माङ्गत्वाभावज्ञापकम् । ]

'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे। इत्येत्र कर्मणां नाशो विद्ययेति च दर्शनात् ॥ (ब्र.प. 434)

---

[1] विरक्तस्य—द. [2] गार्हस्थ्य—वा. [3] विद्योप—त. थ.

[परिव्राजकेषु विद्यादर्शनं कर्मादर्शनं चेत्येतत् विद्यायाः अनङ्गताज्ञापकम्]

### ४३५. ऊर्ध्वरेतस्सु च शब्दे हि! ॥ ३-४-१७ ॥ (सि)

ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात्, तेषु अग्निहोत्र-दर्शपूर्णमासादिकर्माभावाच्च, न विद्या कर्माङ्गम्।

ननु ऊर्ध्वरेतसः आश्रमाः न सन्त्येव;

'यावज्जीवमग्निहोत्रं जुहोति' (आप. श्रौ. 3-14-8)

इत्यादिना अग्निहोत्र-दर्शपूर्णमासादीनां यावज्जीवा[1]धिकारश्रुतेः[1]; श्रुतिविरुद्धानां स्मृतीनां च अप्रामाण्यात्, अत आह—शब्दे हि—इति। वैदिके एव हि! शब्दे ते दृश्यन्ते—

'त्रयो धर्मस्कन्धाः' (छां.उ. 2-23-1)

'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छां.उ. 5-10-1)

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.उ. 6-4-22)

इत्यादौ। यावज्जीवश्रुतिस्तु अविरक्तविषया ॥ १७ ॥

[जैमिनिमते सन्न्यासाश्रमोऽवैधः]

### ४३६. परामर्शं जैमिनिरचोदनाच्चाऽपवदति हि ॥ ३-४-१८ ॥ (सि)

---

धर्मस्कन्धाः—धर्माश्रया आश्रमाः ॥ १७ ॥

---

[सूत्रार्थः। ऊर्ध्वरेतस्सु—संन्यासिनामाश्रमेषु अग्निहोत्रादिकर्मणामदर्शनात्, विद्याया दर्शनाच्च विद्या न कर्माङ्गम्। हि—यतः, ते—उर्ध्वरेतसामाश्रमाः, शब्दे—श्रुतावेवाम्नाताः।]

'ऊर्ध्वरेतस्सु विद्याया दर्शनात् तत्र कर्मणाम्। अभावाच्चाऽपि नाङ्गत्वं शब्दे तेष्वाश्रमाः स्थिताः॥'(ब्र.प 435)

[सूत्रार्थः। अचोदनात्—संन्यासिनामाश्रमस्य श्रुतिषु शब्दतोऽविधानात्, परामर्शम्—श्रुतौ तदुल्लेखम् अनुवादमात्रमिति, जैमिनिः—तन्नामा आचार्यो मन्यते। हि—यतः, अपवदति च—अग्न्यभिक्रूतादाश्रमादितरमाश्रमम् 'वीरहा' इति निन्दत्येव श्रुतिः।]

'धर्मस्कन्धेष्ववैधत्वात् स्तुत्यर्थं तस्य जैमिनिः। अनुवादं तु मनुते वीरहेत्यपवादतः॥' (ब्र.प. 436)

---

[1] धिकारस्वश्रुतेः—द. धिकारः श्रूयते—आ.

यदिदम्—'त्रयो धर्मस्कन्धाः' [1]इत्यादौ,[1] वेदिके शब्दे [2]ऊर्ध्व[2]रेतस आश्रमा दृश्यन्ते। अतः ते सन्त्येव—इति।

नैतदुपपद्यते ; यतः 'त्रयो धर्मस्कन्धाः' [3]इत्यादिषु[3] वाक्येषु, तेषामाश्रमाणां परामर्शमात्रं क्रियते—अनुवादमात्रमित्यर्थः।

कुत एतत् ?—अचोदनात्—अविधानात्, इत्यर्थः। न ह्यत्र विधिशब्दः श्रूयते। 'त्रयो धर्मस्कन्धाः' इत्यादिना हि !, प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते ;

'ब्रह्मसंस्थोऽमृतत्वमेति' (छां.उ. 2–23–1)

इत्युपसंहारात्। अतः अन्यार्थम् अनुवादमात्रमत्र क्रियते, तेषामाश्रमाणाम्।

'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छां.उ. 5–10–1)

इति च देवयानविधिपरत्वात्, तत्राऽपि न आश्रमान्तरविधिसम्भवः॥ अपि च अपवदति हि ! श्रुतिः आश्रमान्तरम्—

'वीरहा वा एष देवानां योऽग्निमुद्वासयते' (तै.सं. 1–5–2) ?

इत्यादिका। अतः ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते॥ १८॥

## ४३७. अनुष्ठेयं बादरायणः साम्यश्रुतेः॥ ३-४-१९॥ (सि)

[प्रकृतम्—प्रकरिष्यमाणमित्यर्थः। 'ओङ्कारेण] सर्वा वाक् संतृण्णा। ओंकार एवेदं सर्वम्' इति उत्तरत्र प्रणवोपासनस्य विधित्सितत्वादिति भावः (भा.प्र)] अन्यार्थम्—ब्रह्मोपासनस्तुत्यर्थम्। [अनुवादमात्रमिति। परामर्शेऽपि आश्रमाः गम्यन्त एव ; [अथाऽपि] तेषां प्रसिद्धिः स्मृत्याचाराभ्याम् ; न तु प्रत्यक्षया श्रुत्या। प्रत्यक्षश्रुतिविरोधे चाऽनादरणीयत्वं 'विरोधे त्वनपेक्षं स्यात्' इति नयेन सिद्धम्। अथवा [ते स्मृत्यादयः] अन्धपङ्ग्वादिकर्मानधिकृतविषया वा [स्युः]। सर्वकर्मणां गृहस्थं प्रत्येव श्रुतिषु विहितत्वात्, तदस्तित्वं श्रुतिप्रसिद्धमेव। देवयानेति। 'तेऽर्चिषमभिसम्भवन्ती'ति श्रुतेः॥ इत्यादिकेति। 'आदि' शब्देन, 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' 'नाऽपुत्रस्य लोकोऽस्ति' इत्यादि गृह्यते॥ (भा.प्र)]

---

[सूत्रार्थः। अनुष्ठेयम्—गार्हस्थ्यवत् आश्रमान्तरमपि अनुष्ठानार्हमेवेति, बादरायणः—तन्नामा आचार्यो मन्यते। साम्यश्रुतेः—आश्रमान्तरस्याऽपि गार्हस्थ्यसमतया शास्त्राभ्युपगमदर्शनात्॥]

'गृहस्थाश्रमसाम्याच्चाऽप्यनुष्ठेयं बुधैरिह। अन्याश्रमं श्रुतिश्चाह धर्मस्कन्धास्त्रयस्त्विति॥' (ब्र.प. 437)

---

[1] इत्येवमादौ—द. [2] और्ध्व—द. [3] इत्येवमादिषु—वा.

[गार्हस्थ्येतरस्याऽप्याश्रमस्य अनुष्ठेयत्वं बादरायणमते]

गृहस्थाश्रमवत् आश्रमान्तरमपि अनुष्ठेयं, भगवान् बादरायणो मन्यते ।

कुतः ? साम्यश्रुतेः । उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि ! तेषामप्याश्रमाणां श्रूयते । 'त्रयो धर्मस्कन्धाः' इत्यारभ्य, [1]ब्रह्मसंस्थ[1]स्तुत्यर्थतया सङ्कीर्तनं, गृहस्थाश्रमस्य इतरेषां च समानम् ।

अथ—गृहस्थाश्रमस्याऽनुवादः, प्राप्तौ सत्यामेव [2]सम्भवतीति[2], तस्य प्राप्तिः अवश्याभ्युपेत्या—इति मतम् ; तत् इतरेषामपि समानम् ; [3]अन्यत्रा[3]ऽभिनिवेशात् ॥

[यज्ञादीनां गृहस्थमात्रधर्मत्वशङ्का-परिहारौ]

न च—गार्हस्थ्यधर्म एव 'यज्ञः, अध्ययनं, दानं, तपः, ब्रह्मचर्यम्' इति सर्वैः शब्दैरभिधीयते ; ब्रह्मचर्य-तपसोः गृहस्थस्यैव सम्भवात्—इति युक्तम् ;

'त्रयो धर्मस्कन्धाः' (छां. उ. 2-23-1)

इति त्रित्वेन [4]सङ्गृह्य[4],

'प्रथमः....द्वितीयः... तृतीयः' (छां. उ. 2-23-1)

---

'आश्रम' शब्दो धर्मपरः । समानमिति । स्तुत्यर्थतया अनुवादसाम्यं प्रमाणान्तरप्राप्तिसाम्यं चोभयं सूत्राभिप्रेतम् ।

अथेति । अन्यतः प्राप्तेरभावेनाऽनुवादत्वासम्भवेन, यदि अस्यैव विधिपरत्वमभ्युपेयते ; तदितरेषामपि समानमिति भावः ।

न च गार्हस्थ्येति । आश्रमान्तरकीर्तने सति हि ! साम्यं वक्तव्यम् । तदेव नास्ति ; गार्हस्थ्यधर्माणामेव कीर्तनात् [इत्याशयः] । ब्रह्मचर्यमिति, 'ब्रह्मचारी' इति श्रुतिस्थशब्दस्य ब्रह्मचर्यपरत्वादुक्तम् । ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति । 'यज्ञोऽध्ययनम्' इति निर्दिष्टस्य गृहस्थस्य सम्भवादित्यर्थः । अतः—उपकुर्वाणेऽपि सम्भवात् 'गृहस्थस्यैवे'त्येवकारोऽनुपपन्नः—इति चोद्यं निरस्तम् ; एवकारस्य इतरव्यवच्छेदकत्वाभावात् । त्रित्वेनेति । अत्र 'स्कन्ध'शब्दः आश्रमपरः । [अतः] ऐकैकाश्रमोपगृहीतत्वेन आश्रम-

---

[1] ब्रह्मसंस्था—क्षा  [2] सम्भवति—अ, क, ख, घ. भवतीति—द.
[3] किमन्यत्रा—वा.  [4] परिगृह्य—द.

इति विभागवचनानुपपत्तेः। अतः 'यज्ञः अध्ययनं दानम्' इति गृहस्थाश्रम उच्यते। 'अध्ययन' शब्दः वेदाभ्यासपरः। 'तपः' शब्देन वैखानस-पारिव्राज्ययोर्ग्रहणम्; उभयोस्तपःप्रधानत्वात्। 'तपः' शब्दो हि कायक्लेशे रूढः। स च द्वयोरपि समानः। ब्रह्मचारिधर्म एव 'ब्रह्मचर्य' शब्देनाऽभिधीयते ॥

'ब्रह्मसंस्थोऽमृतत्वमेति' (छां.उ. 2-23-1)

इति परत्र श्रूयमाणो 'ब्रह्मसंस्थ' शब्दः, यौगिकः सर्वाश्रमसाधारणः; सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात्। ब्रह्मणि संस्था—संस्थितिः ब्रह्मसंस्थत्वम्। तच्च सर्वेषां सम्भवत्येव। ब्रह्मनिष्ठावि[1]कलाः केवलाश्रमिणः[1] पुण्यलोकभाजः। तेष्वेव ब्रह्मनिष्ठः अमृतत्वभाग् भवति। तदेतत् विस्पष्टमुक्तं भगवता पराशरेण—

'प्राजापत्यं [2]ब्राह्मणानाम्[2] (वि.पु. 1-6-34)

इत्यारभ्य,

'ब्राह्मं सन्न्यासिनां स्मृतम्' (वि.पु. 1-6-36)

इत्यन्तेन, वर्णानाम् आश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय,

'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये।
तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः ॥' (वि.पु. 1-6-39)

इति, तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता। अतः, गृहस्थाश्रमतुल्याः ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति, तेऽपि अनुष्ठेयाः।

---

वर्णानां त्रित्वात्, शक्यं त्रित्वे व्यवस्थापयितुमिति, आश्रमप्रतिज्ञोपपत्तिरिति भावः (भा.प्र.) ॥]
अत इति व्याख्यानान्तरव्यावृत्त्यर्थम् ॥

सर्वाश्रमेति परैः 'ब्रह्मसंस्थ'शब्दः संन्यासाश्रमविषयो व्याख्यात इति, [illegible] । **यौगिकः**—यौगिकत्वात्। अनेन 'क्लृप्तावयवशक्त्यैव' इत्याद्युक्तनयात्, 'ब्रह्मसंस्थ'शब्दस्य चतुर्थाश्रमपरत्वानुपपत्तिरुक्ता। **सर्वेषामिति**। अर्थापत्त्याऽपि न तथाऽर्थो वर्णनीयः [इत्याशयः]। तस्यामेव श्रुतौ **पुण्यलोकभाजः** इत्युक्तम्। [[illegible]] ब्रह्मनिष्ठाविकलाः इति। **तदेतत्** **अभिदधता पराशरेण** इत्यन्वयः।

---

[1] [illegible]—द. [2] गृहस्थानाम्—त. थ.

'ये चे मेऽरण्ये श्रद्धा तप इत्युपासते' (छां.उ. 5-10-1)

[3]इति च[3], 'अरण्ये' इति तपः प्रधानाश्रमप्राप्त्यपेक्षत्वात्, देवयानविधानस्य तत्राऽपि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

[उक्तश्रुतेः सर्वाश्रमविधिपरत्वम्]

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यम् एषामनुष्ठेयत्वम्—इत्युपपाद्य, विधिरेवाऽयमाश्रमाणां सर्वेषाम्; न अनुवादः—इत्युपपादयितुमाह—

## ४३८. विधिर्वा धारणवत् ॥ ३-४-२० ॥ (सि)

'वा' शब्दः अवधारणार्थः। विधिरेवाऽयम् आश्रमाणाम् धारणवत्—यथा दिष्टाग्निहोत्रे—

'अधस्तात् समिधं धारयन्ननुद्रवेत्; उपरि हि देवेभ्यो धारयति' (श्रौ.सू ?)

इत्यत्र अनुवादसरूपादपि वाक्यात्, उपरि धारणस्य अप्राप्तत्वाद्विधिराश्रीयते। तदुक्तं शेषलक्षणे—

'विधिस्तु धारणेऽपूर्वत्वात्' (पू.मी.सू. 3-4-15)

इति; तथा अत्राऽपि अप्राप्तत्वात्, विधिरेवाऽश्रयणीयः ॥

---

ये चेमे इति। 'ये चेमेऽरण्ये' इत्यादिवाक्यस्य देवयानविधिपरत्वात्, आश्रमविधिपरत्वाभाव उक्तः पूर्वपक्षिणा। [तस्याऽयं परिहारः] ॥ देवयानविधानार्थं कृतोऽप्यनुवादः वानप्रस्थ-पारिव्राज्ययोः प्रमाणान्तरप्राप्तिसापेक्ष इति, तत्राऽपि विधिरस्त्येवेत्यर्थः ॥ १९ ॥

[परामर्शपक्षे विधानपक्षे च—प्राप्तार्थानुवादकत्वपक्षे अप्राप्तार्थप्रापकत्वमिति पक्षे च।]

[दिष्टाग्निहोत्रे—मृताग्निहोत्रे। शेषलक्षण इति। दिष्टाग्निहोत्रे श्रूयते—'उपरि हि देवेभ्यो धारयती'ति। एषोऽनुवादः; वर्तमानापदेशात्, 'हि' शब्दाच्च। आचाराच्चो-परिधारणप्राप्तेः। हविषः अभ्यर्हितद्रव्यत्वात्, प्रच्छादनं येन केनचित् प्राप्नोति। ततः, 'स्रुग्दण्डे समिधमुपसङ्गृह्याऽनुद्रवति' इति वाक्यान्तरप्रतिपत्तौ समित् नियम्यते। तस्मात् अनुवादः—इति प्राप्ते, समिधः हविराच्छादनासमर्थत्वात्, 'स्रुग्दण्डः' इत्यनेन हविषः

---

सूत्रार्थः। धारणवत्—'उपरि ही'ति वाक्यात् अनुवादसदृशादपि धारणस्य विधिरेव, विधिर्वा—'त्रयो धर्मस्कन्धाः' इत्यादिः सर्वेषामाश्रमाणां विधिरेव ॥]

'धर्मस्कन्धास्त्रय इति विधिरेवोर्ध्वरेतसाम्। यथोपरि हि देवेभ्य इति धारणकर्मणः ॥' (ब्र.प. 438)

---

[3] इति—ङ,

[अस्यार्थस्य कृत्वाचिन्तया विवरणरूपत्वम् ]

‘ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् ।
यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा ।
यदहरेव विरजेत् तदहरेव प्रव्रजेत्’ (जाबा.उ. 4-1)

इति जाबालानामाश्रमविधिम्, असन्तमिव कृत्वा, [1]एतेष्वन्यपरेष्वपि[1] वाक्येषु आश्रम-प्राप्तिः अवश्याश्रयणीयेत्युपपादितम् ।

[विविधश्रुतीनां तात्पर्यसमीकरणम् ]

एवम् आश्रमान्तरविधानात्, ऋणश्रुतिः यावज्जीवश्रुतिः अपवादश्रुतिश्च, अविरक्तविषया एवेति वेदितव्याः । अन्याश्च, [2]ब्रह्मविदः[2] कर्मणाम् आप्रयाणात् अवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च, स्वस्वाश्रमधर्मविषयाः ।

अतः ऊर्ध्व[3]रेतस्सु च[3] ब्रह्मविद्याविधानात्, ‘विद्यातः पुरुषार्थः’ इति सिद्धम् ॥ २० ॥

इति पुरुषार्थाधिकरणम् ॥ १ ॥

—o—

---

प्रागदेशस्य प्राप्तत्वेऽपि हविषः उपर्यप्राप्तत्वात् विधिः—इति स्थितं तृतीये (पू.मी. 3-4-5) भा.प्र.] ऋणश्रुतिः—‘त्रिभिः ऋणै ऋणवा जायते’ इत्यादिका । [यावज्जीवश्रुतिः—‘यावज्जीवमग्निहोत्रं जुहोती’ति ।] अपवादश्रुतिः—‘वीरहा वा एष देवानां योग्निमुद्वासयते’ इत्येषा । अविरक्तेति । गृहस्थस्य विहिते उत्सर्गेष्टिपूर्वकत्यागे दोषादर्शनात् अविहितत्यागविषयैव दोषश्रुतिः । ततश्च प्रविव्रजिषोः विरक्तस्य त्यागविधिसद्भावात्, विहितस्त्यागो न दोषावह इति । प्रतिपन्नं गार्हस्थ्यं प्रमादादज्ञानाद्वा उद्वासयितुं प्रवृत्तं प्रति वा अविरक्तं प्रति वा वीरहा वेति श्रुतिरुपपन्नेति भावः (भा प्र.)] अन्याश्चेति । ‘स खल्वेवम्’ इत्यादिकाः स्वस्वविशेषधर्मावृत्तिपराः श्रुतयोऽपि तत्तदाश्रमिणां तत्तद्धर्मानुवृत्तिपराः ; न त्वाश्रमान्तरधर्माणां ब्रह्मविद्याङ्गत्वविरोधिन्यः [इत्याशयः] ॥ अत इति । ऊर्ध्वरेतसां ब्रह्मविद्याविधानेन विद्याया गृहस्थाश्रमधर्मं प्रति अङ्गत्वाभावेन पृथक्फलसाधनत्वात् विद्यातः पुरुषार्थसिद्धिरित्यर्थः ॥ २० ॥

[सूत्राणि—पुरु, शेष, आचार, तत्, सम, तद्व, निय, अधिको, तुल्यं, असा, विभागः, अध्य, नावि, स्तुतये, काम, उप, ऊर्ध्वे, परा, अनु, विधिः ।]

इति पुरुषार्थाधिकरणम् ॥ १ ॥

—o—

[1] एतेष्वपि—थ. [2] अब्रह्मविदः—थ. [3] रेतस्सु—द.

## (110) स्तुतिमात्राधिकरणम् ॥ ३–४–२ ॥ (सू. 21–22)

[अधिकरणार्थः—'स एष रसाना'मित्यादिवाक्यानाम् उद्गीथादौ रसतमादिदृष्टिविधिपरत्वमेव]

## ४३९. स्तुतिमात्रमुपादानादिति चेन्नाऽपूर्वत्वात् ॥ ३–४–२१ ॥ (सि)

[विचारणीयो विषयः ससंशयः]

इदमिदानीं चिन्त्यते—

'स एष रसानां रसतमः [1]परमः[1] परार्ध्योऽष्टमो यदुद्गीथः' (छां.उ. 1-1-3) इत्येवंजातीयकानि वाक्यानि, क्रत्वयवभूतोद्गीथादिस्तुतिमात्रपराणि ? आहोस्वित् उद्गीथादिषु रसतमादिदृष्टिविधानार्थानि ?—इति ।

[तन्निर्धारणानियमाधिकरणस्य एतदधिकरणोपजीव्यकत्वम्]

अत्र प्रतिपादितम् उपासनपरत्वमङ्गीकृत्य, उपासनस्य पुरुषार्थत्वेन क्रतुषु उपादानानियम उक्तः ।

---

स्तुतीति । अनन्तराधिकरणद्वयं प्रासङ्गिकम् । ब्रह्मसंस्थस्तुत्यर्थमनूदितत्वं पूर्वपक्षीकृत्य आश्रमद्वयस्य विधानमुक्तम् । एवं स्तुतिप्रसङ्गात् रसतमत्वप्रतिपादकवाक्यानि स्तुतिपराणि ? उत न ?—इति शङ्का जायत इति प्रासङ्गिकी सङ्गतिः । पूर्वं सप्तानां रसानां प्रतिपादितत्वात्, उद्गीथस्याऽष्टमरसत्वम् । 'स एष रसाना'मित्यादिवाक्यानि किम् उद्गीथादिस्तुतिमात्रपराणि ? उत उद्गीथादिषु रसतमत्वादिदृष्टिविधिपराणि ? । किमेषामर्थवादत्वसमाश्रयणं न्याय्यम् ? उत विधिपरत्वम् ? । अपूर्वत्वं किं विधित्वमवगमयति ? न ? इति । न चेत् ! अर्थवादत्वस्य न्याय्यत्वात् स्तुतिपराणि । अवगमयति चेत् ! विधिपरत्वस्य न्याय्यत्वात् रसतमत्वादिदृष्टिविधिपराणि ॥

---

[सूत्रार्थः । **स्तुतिमात्रम्**—'स एष रसानाम्' इति रसतमत्वादिकथनम् उद्गीथादौ स्तुत्येकपरम्, **उपादानात्**—'यदुद्गीथः' इत्यादिना उद्गीथादेरुपात्तत्वात्, **इति चेन्न**—एवं शङ्कनमनुचितम्, **अपूर्वत्वात्**—रसतमत्वादेरप्राप्तत्वेन दृष्टिविधित्वस्यैवोचितत्वादिति ॥]

'उद्गीथोक्ते रसतम इति तत्स्तुतिरेव हि ! इति चेन्न ह्यपूर्वत्वाद् दृष्टिरेव विधीयते ॥' (ब्र.प. 439)

---

[1] परः—आ.

[पूर्वः पक्षः सयुक्तिकः]

किं युक्तम् ? स्तुतिमात्रपराणि—इति ।

कुतः ? उद्‌गीथाद्युपादानात् । [1]क्रत्वङ्ग[1]भूतानि हि ! उद्‌गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् । यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य,

'इयमेव जुहूः [2]स्वर्गो लोक[2] आहवनीयः' (?)

इत्यादिकस्य तत्स्तुतिमात्रपरत्वम् ; तथा इहाऽपि । तदिदमाशङ्कते—स्तुतिमात्रमुपादानादिति चेत्—इति ॥ उद्‌गीथाद्युपादानात् ; तत्स्तुति[3]मात्रमेव[3] एषां वाक्यानां विवक्षितम्—इतिचेत् !,

[सिद्धान्तार्थः सहेतुकः]

अत्रोत्तरम्—न अपूर्वत्वात्—इति । न स्तुतिमात्रत्वमुपपद्यते ।

कुतः ? अपूर्वत्वात्—अप्राप्तत्वात् (इति) । न हि ! उद्गीथादयः रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः ; येन तत्प्राशस्त्य[4]बुद्ध्युत्पत्त्यर्थं[4] रसतमादित्वेन अनूद्येरन् । न च उद्गीथादि विधिः अत्र संनिहितः ; येन,

'इयमेव जुहूः स्वर्गो लोक आहवनीयः' (?)

इत्यादिवत्, तदेक[5]वाक्यत्वेन[5] यया [6]कयाचन[6]विधया तत्स्तुतिपरत्व[7]माश्रीयेत[7] ।

---

**क्रत्वङ्गेति** । क्रत्वङ्गोपादानपूर्वकस्य पुरुषेण साधयितुमशक्यगुणप्रतिपादनस्यैव स्तुतिरूपत्वात् ; न क्रत्वङ्गजुहूपादानपूर्वकपर्णताप्रतिपादनं स्तुतिः । **तदिदमिति,** शङ्काया अनुसूत्रतामाह ।

**नहीति** । स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेन वा, अप्राप्तगुणविधानेन वा, मुख्यवृत्त्युपस्थापितगुणासम्भवे वृत्त्यन्तरोपनीतगुणान्वयेन वा क्रियते । तत्र प्रमाणान्तरप्राप्तगुणानुवादरूपस्तुत्यनुपपत्तौ हेतुः सूत्रे कण्ठोक्तः । रसतमत्वादिकथनम्, अप्राप्तगुणविधानेन स्तुतिरिति तु न युक्तम् ; उद्गीथादेः रसतमादिकत्वस्य अयोग्यत्वात्, अयोग्यार्थस्य च विधातुमशक्यत्वात् तद्विधानेन स्तुत्यनुपपत्तेः—इति परिहारः सूत्रे भाष्ये च अभिप्रेतः ॥ **न चेत्यादि** । उद्गीथादीति आदिशब्देन, पञ्चविधं सामविध्यादिकं गृह्यते । **यया कयाचन विधया**—अमुख्यया वृत्त्या ।

---

[1] क्रत्ववयव—द. [2] स्वर्लोकः—ङ. [3] तत्स्तुतिमात्रत्वमेव—वा. [4] बुद्ध्यर्थं—त. थ.
[5] वाक्यत्वे—द. [6] कयाचित्—वा. कया च—त. थ. [7] माश्रीयते—आ.

अतः क्रतु[1]वीर्यवत्तरत्वादि[1]फलसिद्ध्यर्थम् उद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ॥ २१ ॥

## ४४०. भावशब्दाच्च ॥ ३-४-२२ ॥ (सि)

[उक्तार्थोपष्टम्भकयुक्तिः]

'उपासीत' इत्यादिभावशब्दाच्च, विधिपरत्वमेव न्याय्यम्। विधिप्रत्ययुक्तो हि क्रियाशब्दः, विधेयमेव [2]स्वार्थमेव[2]गमयति। तस्मात् [3]उपासनविधानार्थाः[3] एताः श्रुतयः ॥ २२ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

—o—

---

'इयमेवे'त्यादिवाक्यस्य, कर्मविधिप्रकरणसंनिधानात्, 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायात् एकवाक्यत्वसिद्ध्यर्थम् अमुख्यवृत्त्या स्तुतित्वमाश्रितम्। अत्र तु, तथा संनिहितत्वाभावेन एकवाक्यत्वाभावात् स्तुतित्वानुपपत्तिरित्यर्थः ॥ २१ ॥

भावशब्दाच्चेति। पूर्वपक्षयुक्तिः परिहृता। [अनेन] सूत्रेण स्वपक्षसाधकहेतुरभिधीयते। पूर्वसूत्रे उद्गीथादिविधेरत्राऽभाव उक्तः। अत्र तु उपासनविधेः सद्भाव उच्यते। भावः—क्रिया। विधिप्रत्ययुक्तो भावशब्दः ['उपासीत'] अत्र विवक्षितः ॥ २२ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

—o—

---

[सूत्रार्थः। **भावशब्दाच्च**—विधिप्रत्ययुक्तोपासनक्रियाबोधकशब्दस्य सद्भावादपि हेतोः रसतमत्वादिविधित्वमेव युक्तम्।]

'उपासीतोद्गीथमिति तत्रैव विधिशब्दतः। स्तुतिमात्रं न चैव स्याद् दृष्टिरेव विधीयते ॥' (ब्र प. 440)

---

[1] वीर्यवत्त्वादि—अ. [2] स्वार्थं—अ. [3] उपासनार्थाः—अ.

(111) पारिप्लवार्थाधिकरणम् ॥ ३-४-३ ॥ (सू. 23-24)

[अधिकरणार्थः—उपनिषत्सूपलभ्यमानानाम् आख्यानानां विद्याविध्यर्थत्वमेव; न तु अश्वमेधाङ्गपारिप्लवनामकशस्त्रार्थत्वम् ]

## ४४१. पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३·४·२३ ॥ (सि)

[विचारणीयो विषयः ससंशयः]

'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' (कौषी.उ. 3-1)

'श्वेतकेतुर्हारुणेय आस' (छा.उ. 6-1-1)

**इत्येवमादीनि वेदान्तेष्वाख्यानानि, किं पारिप्लवप्रयोगार्थानि ? उत विद्याविशेषप्रतिपादनार्थानि ?—इति चिन्तायाम् ;**

---

**पारिप्लवेति ।** इदमपि प्रासङ्गिकमधिकरणम् । रसतमादिवाक्यानां स्तुत्यर्थत्वं पूर्वपक्षीकृत्य, उपासनपरत्वं स्थापितम् । एवं प्रातर्दनादीन्याख्यानानि, किं स्तुत्यर्थानि ? उत पारिप्लवार्थानि ? इति शङ्कया सङ्गतिः । **पारिप्लवाः**—आख्यानानि । इह 'पारिप्लव'-शब्देन आख्यानशंसनं विवक्षितम् ।

'श्वेतकेतुर्हाऽऽरुणेयः' इत्यादिवाक्यानि, किं पारिप्लवप्रयोगार्थानि ? उत विद्याविधानार्थानि ? । किं पारिप्लवे सर्वाख्यानानां विनियोगः ? उत मन्वाद्याख्यानानामेव ?—इति । किम् 'आख्यानानि शंसन्ति' इति 'आख्यान'शब्दः, सर्वाख्यानपरः ? उत मन्वाद्याख्यानपरः ? किम् आख्यानविशेषाम्नानम् 'आख्यान'शब्दस्य विशेषपरतामवगमयति ? न ?—इति ॥ न चेत् ! 'आख्यान' शब्दस्य सर्वाख्यानपरतया सर्वेषां तत्र विनियुक्तत्वात्, सर्वाख्यानानि पारिप्लवार्थानि स्युः । विशेषपरतामवगयति चेत्, 'आख्यान'-शब्दस्य मन्वाद्याख्यानविशेषविषयतया, तेषामेव पारिप्लवे विनियोगात्, श्वेतकेतूपाख्यानादीनि विद्याविधानार्थानि स्युः ॥ **विद्याविशेषप्रतिपादनार्थानि**—स्तावकत्वेन [विद्यागतविशेष]

---

[सूत्रार्थः । **पारिप्लवार्थाः**—औपनिषद्यः सर्वा अपि आख्यायिकाः, अश्वमीधीयपारिप्लवशस्त्रप्रयोगार्थाः, **इति चेत् न**—एवं शङ्कनं नोचितम्, **विशेषितत्वात्**—पारिप्लवप्रयोगान्वयिनामाख्यानानां तत्रैव विशिष्योक्तत्वात्, सर्वासां तत्रानन्वयात् ॥]

प्रतर्दनो ह वै चेति स्युराख्यानानि यानि च। तानि पारिप्लवार्थानीति चेन्नाऽन्यनियन्त्रणात् ॥(ब्र.प. 441)

[पूर्वः पक्षः]

'आख्यानानि शंसन्ति' (?)

इति, आख्यानानां पारिप्लवे विनियोगात्, न विद्याप्रधानत्वं न्याय्यम्—इति चेत्!

[सिद्धान्तार्थः]

न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोगमर्हन्ति।

कुतः? विशेषितत्वात् विनियोगस्य।

'आख्यानानि [1]शंसन्ति' (?)

इत्युक्त्वा तत्रैव,

'[2]मनु[2]र्वैवस्वतो राजा' (?)

इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते। अतः, तेषामेव तत्र विनियोग इति गम्यते॥

तस्मात्, न [3]सर्वा वेदान्ते[3]ष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः; अपि तु विद्याविध्यर्थाः॥२३॥

[आख्यानानां दर्शनविध्यैकवाक्यात् उक्तार्थसिद्धिः]

## ४४२. तथा चैकवाक्योपबन्धात्॥ ३-४-२४॥ (सि)

---

प्रतिपादनार्थानीत्यर्थः॥ [न.... न्याय्यमिति। 'वेधाद्यर्थभेदात्' इति न्यायविरुद्धमिति (भा.प्र.)]

विद्याविध्यर्था इति। विद्याविधेः स्तावकतया शेषभूताः इत्यर्थः। प्रकरणोपात्तमात्रानभ्युपगमे, आख्यानानन्त्यात् अशक्यत्वं च स्यात्॥२३॥

तथा चेति। उपबन्धः—अन्वयः।

---

[सूत्रार्थः। एकवाक्यतया—विद्याविधायकवाक्यार्थान्वितस्वार्थकतया, उपबन्धात्—आख्यानानां विद्याविध्यन्वितस्वरूपत्वात्, तथा च—तथैव, स्तावकत्वेनोपयोग एव।।]

विद्याविध्येकवाक्यत्वसम्बन्धाद्याऽपि केवलम्। सोरोदीदितिवच्चाऽपि विद्याविध्यर्थता मता॥ (ब्र.प. 442)

---

[1] शंसति—थ.　[2] मनुर्वै—न.　[3] सर्ववेदान्तेषु—ख.

'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. 4-4-5)

इत्यादिविधिना एकवाक्यतयो'पबन्धाच्च[1] आख्यानानाम्, 'विद्याविध्यर्थान्येव तानि'—इति गम्यते; यथा

'सोऽरोदीत्' (तै.सं. 1-5-1)

इत्येवमादेः कर्मविध्यर्थत्वं, न पारिप्लवार्थत्वम् ॥ २४ ॥

इति पारिप्लवार्थाधिकरणम् ॥ ३ ॥

—o—

---

यथेति। हिरण्यस्यादक्षिण्यत्ववाक्येन 'तस्माद्रजतं हिरण्यमदक्षिण्यम्' इति एकवाक्यतयोपबन्धात्, 'सोऽरोदीत्' इत्येवमादेः कर्मविध्यर्थत्वमित्यर्थः ॥ २४ ॥

[सूत्रे—१. पारिप्ल. २. तथा चैक।]

इति पारिप्लवाधिकरणम् ॥ ३ ॥

—o—

---

[1] पसम्बन्धाच्च—व. ध.

## (112) अग्नीन्धनाद्यधिकरणम् ॥ ३-४-४ ॥

[अधिकरणार्थः—परिव्राजिनां विद्यासिद्धिः, स्वाश्रमविहितकर्मापेक्षैव ; न तु अग्न्याधानपूर्वककर्मापेक्षा]

## ४४३. अत एव चाऽग्नीन्धनाद्यनपेक्षा ॥ ३-४-२५ ॥ (सि)

[पूर्वाधिकरणयोः प्रासङ्गिकता, प्रकृतसङ्गतिश्च]

स्तुतिप्रसङ्गात्, अवान्तरसङ्गतिविशेषेण अर्थद्वयं चिन्तितम्। 'विद्यावन्तः ऊर्ध्वरेतसः आश्रमिणः सन्ति' इत्युक्तम्—'ऊर्ध्वरेतस्सु च शब्दे हि' (ब्र.सू. 3-4-17) इत्यादिभिः सूत्रैः।

[पूर्वपक्ष-सिद्धान्तौ]

इदानीम्—ऊर्ध्वरेतसः, यज्ञाद्यभावात्, तदङ्गिका विद्या न सम्भवति—इत्याशङ्क्याह—अत एव चाऽग्नीन्धनाद्यनपेक्षा—इति।

---

स्तुतीति, व्याख्यातयोरधिकरणयोः प्रासङ्गिकत्वमाह। विद्यावन्तः इति, अस्याधिकरणस्य प्रथमाधिकरणेन सङ्गतिमाह।

[यज्ञाद्यभावादिति। 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विद्यासम्बन्धबोधकवाक्यानाम्, आन्यपर्यमाश्रयणीयमिति भावः (भा.प्र.)] आशङ्क्याहेति। सूत्रे 'च' शब्दः शङ्काद्योतकः—इति भावः॥

किं परिव्राजां ब्रह्मविद्याधिकारोऽस्ति? न? इति। किं यज्ञाङ्गिकैव विद्या? उत आश्रमप्रयुक्तधर्माङ्गिका?। किम् ऊर्ध्वरेतसां विद्यासम्बन्धप्रतिपादकवाक्यानि, विद्यायाः आश्रमधर्माङ्गकत्वम् अवगमयन्ति? न? इति॥ न चेत्! यज्ञाद्यङ्गकत्वात् [विद्यायाः],

---

[सूत्रार्थः। अत एव च—सन्न्यासाश्रमिणामपि विद्यासम्बन्धस्य श्रुतिप्रतिपन्नत्वादेव च, अग्नीन्धनाद्यनपेक्षा—चतुर्थाश्रमिषु (ऊर्ध्वरेतस्सु) विद्यानिष्पत्तिः अग्न्याधानपूर्वककर्मसापेक्षा नैव भवति।]

'विद्यावत्त्वश्रुतेरेव विद्या स्यादूर्ध्वरेतसाम्। अग्न्याधानादिरहितेत्यवगन्तुं च शक्यते॥' (ब्र.प. 443)

यतः ऊर्ध्वरेतस आश्रमिणः, विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते,

‘ ब्रह्मसंस्थोऽमृतत्व`मेति[1] ’ (छां.उ. 2-23-1)

‘ ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ’ (छां.उ. 5-10-1)

‘ [2]एतमेव[2] प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ’ (बृ.उ. 6-4-22)

‘ यदिच्छन्तो ब्रह्मचर्यं चरन्ति ’ (कठ.उ. 2-15)

इत्यादिकया ; अत एव ऊर्ध्वरेतस्सु विद्या, अग्नीन्धनाद्यनपेक्षा । अग्नीन्धनम्—अग्न्याधानम् । आधानपूर्वकाग्निहोत्र-दर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या । केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥

इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

—o—

---

विद्यायां परिव्राजामनधिकारः । अवगमयन्ति चेत् ! आश्रमधर्माङ्गकतया [विद्यायाः], परिव्राजां ब्रह्मविद्याधिकारः ।

यतः इति, [सूत्रगतस्य] अतश्शब्दस्यार्थमाह ॥ २५ ॥

इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

—o—

---

[1] मेति इति—न. [2] एवमेव—त.

## (113) सर्वापेक्षाधिकरणम् ॥ ३-४-५ ॥

[अधिकरणार्थः— कर्माधिकृताश्रमिणां तु ब्रह्मविद्या, कर्मसापेक्षैव निष्पन्ना भवेत् ]

### ४४४. सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३-४-२६ ॥ (सि)

[गृहिष्वपि कर्मापेक्षाराहित्यशङ्का]

[तन्निरासश्च]

यदि विद्या यज्ञाद्यनपेक्षैव अमृतत्वं साधयति ! तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति । यज्ञादिश्रुतिरपि 'विविदिषन्ति' इति शब्दात् , कर्मणो वेदनाङ्गतां न प्रतिपादयति—इति ; अत आह—'सर्वापेक्षा'—इति । [1]यज्ञादि'सर्वकर्मापेक्षैव विद्या, [2]कर्मवत्सु गृहस्थेषु[2] ।

कुतः ?—यज्ञादिश्रुतेः—।

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'

(बृ उ. 6-4-22)

---

**सर्वेति** । सङ्गतिः स्फुटा । किं गृहस्थस्य यज्ञादिकर्मवतः विद्यायामधिकारः ? उत तद्रहितस्य ?—इति । यज्ञादिकर्म विद्याङ्गम् ? न ?—इति । 'यज्ञेने'त्यादिश्रुतिः [किं] विद्याङ्गतया यज्ञादिकर्म विनियुङ्क्ते ? न ? इति । किं कर्मणो विद्योत्पादकत्वं सम्भवति ? न ?—इति । असम्भवे, विनियोगाभावात् यज्ञादेर्विद्याङ्गत्वाभावात् , तद्रहितस्य गृहस्थस्य विद्याधिकारः सम्भवेत् । सम्भवति चेत् ! विनियोगात् यज्ञादेः विद्याङ्गतया, तद्वतो गृहस्थस्य विद्याधिकारः । **श्रुतिरपीति** । इच्छासाधनत्वं वदतीति भावः । **कर्मापेक्षैवेति** । सूत्रे प्रतिज्ञापदानन्तरः 'च' शब्दः, अवधारणार्थः इति भावः ।

---

[सूत्रार्थः । **सर्वापेक्षा च**—गृहस्थेषु ब्रह्मविद्या विद्याङ्गतया श्रुत्यवगतसर्वकर्मसापेक्षैव सती मोक्षोपायतामश्नुते । **यज्ञादिश्रुतेः**—यज्ञादिकर्मणां विद्याङ्गतायाः श्रुतितोऽवगतेः, **अश्ववत्**—यथा गमनसाधनत्वेन ज्ञातो ह्यश्वः, स्वीयेन परिकरबन्धेन परिकर्मित एव सन् , गमनसाधनतामश्नुते ; न केवलः, तथा विद्याऽपीति ॥ ]

' कर्मवत्सु गृहस्थेषु सर्वापेक्षा हि सा भवेत् । यज्ञेनेति श्रुतेरेव गमनायाऽऽदृताश्ववत् ॥ ' (ब्र.प. 444)

---

[1] अग्निहोत्रादि—ङ त [2] कर्मवद्गृहस्थेषु—द.

इत्यादिना यज्ञादयो हि! विद्याङ्गत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति—वेदितुमिच्छन्ति, यज्ञादिभिः वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे सत्येव, 'यज्ञादिभिः ज्ञानं प्राप्तुमिच्छन्ति' इति व्यपदेश उपपद्यते । यथा असेः हननसाधनत्वे सति, 'असिना जिघांसति' इति व्यपदेशः । अतः यज्ञादीनां ज्ञानसाधनत्वमवगम्यते ॥

[मोक्षोपायतया अवगतं विशिष्टं ज्ञानम्]

ज्ञानं च—'वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतम-[1]प्रत्यक्षतापन्न'स्मृतिरूपं निरतिशयप्रियम् अहरहरभ्यासाधेयातिशयम् आप्रयाणादनुवर्तमानं; मोक्षसाधनम्'—इत्युक्तमस्माभिः पूर्वमेव । वक्ष्यति च

'आवृत्तिरसकृदुपदेशात्' (ब्र.सू. 4-1-1)

इत्यादिना ॥

[ज्ञानं प्रति कर्मणां सहकारित्वप्रकारः]

'एवंरूपं च ध्यानम्, अहरहरनुष्ठीयमानैः [2]नित्यनैमित्तिक'कर्मभिः परमपुरुषाराधनरूपैः, परमपुरुषप्रसादद्वारेण जायते' इति, 'यज्ञादिना विविदिषन्ति' इति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या ।

---

सत्येवेति । परमसाध्येच्छया विना अवान्तरसाध्येषु प्रवृत्तिः, स्वर्गेच्छया विना स्वर्गार्थयज्ञादाविव, नोपपद्यते । एवं ज्ञानेच्छया विना तदर्थेच्छासिद्ध्यर्थप्रवृत्त्यनुपपत्तेः, सञ्जातज्ञानेच्छस्य च इच्छासिद्ध्यर्थप्रवृत्तिनैरपेक्ष्याच्च, यज्ञादेः इच्छासाधनत्वं नोपपद्यते इति भावः ।

अनुवर्तमानमिति । अङ्गिनोऽनुवृत्त्या तदङ्गस्य कर्मणोऽनुवृत्तिरपेक्षितेति भावः ।

एवंरूपमिति । यज्ञादिषु प्रवृत्तिः, न मनोवधानविरोधिनी ; अदृष्टद्वारा उपकारकत्वात् इत्यर्थः ॥

---

[1] प्रत्यक्षतापन्नम्—न. [2] नित्यनैमित्तिकैः—घ. ङ. नित्यैर्नैमित्तिकैः—द. न.

अश्ववत्—यथा [1]गमन[1]साधनभूतोऽश्वः, स्वपरिकरबन्धपरिकर्मापेक्षः ; एवं मोक्षसाधन[2]भूताऽपि[2] विद्या, नित्य-नैमित्तिक[3]कर्मपरिकरापेक्षा[3] । तदिदमाह स्वयमेव भगवान्—

[4]'यज्ञदान[4]तपः कर्म न त्याज्यं कार्यमेव तत् ।
[5]यज्ञो दानं[5] तपश्चैव पावनानि मनीषिणाम् ॥' (भ.गी. 18-5)
'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' (भ.गी. 18-46)

इति ॥ २६ ॥

इति सर्वापेक्षाधिकरणम् ॥ ५ ॥

—o—

---

अश्ववदित्यादि । [विद्यायाः] फलोत्पत्तौ अनपेक्षत्वे प्रामाणिकेऽपि [स्वस्वरूपस्य] उत्पत्तौ अपेक्षैव सूत्रप्रतिपाद्या ; 'सर्वापेक्षा' इति प्रतिज्ञातत्वात् ॥ एवं विद्यायाः फलोत्पत्तौ (मोक्षसिद्धौ) अनुग्राहकत्वेन यज्ञाद्यपेक्षाऽपि न ; यज्ञादिवाक्ये, फलसिद्धौ अपेक्षाप्रतीत्यभावात् । वेदनसाधनत्वमात्रं हि तत्राऽवगम्यते ॥ २६ ॥

इति सर्वापेक्षाधिकरणम् ॥ ५ ॥

—o—

---

[1] पुरुषगमन—घ. ङ.　[2] भूता—द.　[3] कर्मापेक्षा—त. थ.
[4] यज्ञो दानं—ग.　[5] यज्ञदानं—त. थ.

(114) शमदमाद्यधिकरणम् ॥ ३-४-६ ॥

[अधिकरणार्थः—गृहस्थस्य, यज्ञादिवत् विद्याङ्गतया शमदमादयोऽप्यनुष्ठेया एव]

४४५. शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३.४.२७ ॥ (सि)

[प्रकृतविचाराङ्गः संशयः ; पूर्वः पक्षश्च]

[1]गृहस्थस्य[1] शम-दमादीन्यपि अनुष्ठेयानि ? उत न ?—इति चिन्तायाम्,

आन्तर-बाह्यकरणव्यापाररूपत्वात् कर्मानुष्ठानस्य, शम-दमादीनां तद्विपरीतरूपत्वाच्च, [2]अननुष्ठेयानि[2]—

[सिद्धान्तार्थः]

इति प्राप्ते, उच्यते। यद्यपि—गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः ; तथापि—स विद्वान् शम-दमाद्युपेतः स्यात्।

कुतः ? तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः ;

---

शमेति। सङ्गतिः पूर्वपक्षोत्थानमुखेन स्फुटा। किं विद्यानिष्ठगृहस्थस्य शमादीन्युपादेयानि ? उत न ? इति। किं यज्ञादीनां शमादीनां च विरोधोऽस्ति ? न ? इति। किम् अत्र विधीयमाना करणव्यापारोपरतिरूपा शान्तिः, यज्ञादिव्यतिरिक्तव्यापारशान्तिः ? उत सर्वव्यापारशान्तिः ?। सर्वशान्तिश्चेत् ! विरोधात् अनुपादेयानि। न चेत् ! अविरोधात् गृहस्थस्याप्युपादेयानि। यद्यपीति। विहितत्वात् दृष्टमुखेनोपकारकत्वाच्च शमादि अनुष्ठेय-

---

[सूत्रार्थः। शम....तः स्यात्—विद्यायां प्रवृत्तो गृहस्थः शम-दमादिभिरन्तरङ्गोपायैः सहित एव भवेत्, तथापि—तस्य बाह्यकरणव्यापाररूपेषु कर्मसु प्रवृत्तत्वेऽपि, तदङ्गतया—विद्याङ्गतया, तद्विधेः—शमादीनां विधानात्, तेषामपि—शमादीनामपि, अवश्यानुष्ठेयत्वात्—अवर्जनेनानुष्ठेयतासिद्धेः।]

'कर्मसु व्यापृतोऽपि स्यात् शान्तिदान्त्यादिभिर्युतः। विद्याङ्गताविधानाच्चाऽप्यनुष्ठेयत्वदर्शनात्॥'(ब्र.प.445)

---

[1] गृहस्थस्य च—त. थ. [2] नानुष्ठेयानि—द.

'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्ये-वाऽऽत्मानं पश्येत्' (बृ.उ. 6-4-23)

इति विद्योत्पत्तेः चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वात् शमादीनाम्, विद्यानिर्वृत्तये तेषां—शम-[1]दमादीनामपि[1], अवश्यानुष्ठेयत्वाच्च—तान्यपि अनुष्ठेयानि।

[विरोध-तत्परिहारौ]

न च—करणव्यापार-तद्विपर्ययरूपत्वेन कर्मणां शम-दमादीनां च परस्पर-विरोधः; भिन्नविषयत्वात्। विहितेषु करणव्यापारः; अविहितेषु प्रयोजनशून्येषु च तदुपशमः—इति।

न च—करणव्यापाररूपकर्मसु वर्तमानस्य, वासनावशात् शमादीनामुपादेयत्वा-सम्भवः; विहितानां कर्मणां परमपुरुषाराधनतया, तत्प्रसादद्वारेण निखिलविपरीत-वासनोच्छेदहेतुत्वात्। अतः, गृहस्थस्य शम-दमादयोऽपि अनुष्ठेयाः ॥ २७ ॥

इति शमदमाद्यधिकरणम् ॥ ६ ॥

—o—

मित्यर्थः। अविहितेषु—अविहिताप्रतिषिद्धेषु। प्रयोजनशून्येषु—मुमुक्षोः प्रयोजनशून्येषु काम्यकर्मसु ॥ २७ ॥

इति शमदमाद्यधिकरणम् ॥ ६ ॥

—o—

[1] शमादीनामपि—ग.—शमादीनां—ख.

(115) सर्वान्नानुमत्यधिकरणम् ॥ ३-४-७ ॥ (सू. 28-31)

## ४४६. सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥ (सि)

[विचारणीयविषयोपस्थापनम्]

वाजिनां छन्दोगानां च प्राणविद्यायाम्—

'न ह वा अस्याऽनन्नं जग्धं भवति, नाऽनन्नं [1]परिगृहीतं[1] भवति'

(बृ. उ. 8-1-14)

'न ह वा एवंविदि किञ्चनाऽनन्नं भवति' (छां.उ. 5-2-1)

इति, प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते ।

[विचारणोपयोगी संशयः]

किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुनुमतिः सर्वदा ? उत प्राणात्ययापत्तौ ?— इति विशये,

[पूर्वः पक्षः]

विशेषानुपादानात्, सर्वदा—इति प्राप्ते,

---

सर्वेति । 'ब्रह्मविदां शमादयोऽनुष्ठेयाः' इत्युक्तम् । तत्र भोजननियमरूपः शमविशेषः, अस्ति ? न वा ? इति विचार्यते—इति सङ्गतिः । प्राणविदः सर्वान्नानुमतिः, किं सर्वदा ? उत प्राणसंशयापत्तौ ? । किं ब्रह्मविद उषस्तेः प्राणसंशये सति उच्छिष्टानुमतिदर्शनं, प्राणविदः सर्वान्नानुमतेः आपद्विषयत्वमवगमयति ? न ? इति ॥ न चेत् ! सर्वदाऽनुमतिः स्यात् । ब्रह्मविदोऽपि प्राणसंशये अनुमतिमवगमयति चेत् ! कैमुत्यनीत्या प्राणविदः सर्वान्नानुमतिः, प्राणसंशयापत्तावेव स्यात् ॥ प्राणविद्यानिष्ठस्याऽपि सर्वान्नानुमतेर्दर्शनात् ब्रह्मविदः किं पुनर्न्यायसिद्धा सर्वान्नानुमतिः—इति पूर्वपक्षः । सूत्रं प्राणविद्यामात्रविषयम् । तथापि ब्रह्मविदन्नानुमतिः

---

[सूत्रार्थः । सर्वान्नानुमतिश्च—प्राणविद्यानिष्ठस्य श्रुत्युक्तं सर्वान्नभक्षणानुज्ञानमपि, प्राणात्यये—प्राणोत्क्रमणसंशयापत्तावेव ; न सर्वदा, तद्दर्शनात्—अन्यत्र तादृशदशायामेव [illegible]तः सर्वान्नभक्षणस्य श्रुत्या अवगतेः ॥]

सर्वान्नानुमतिः प्राणविदः प्राणात्यये भवेत् । ब्रह्मविद्यावतां चाऽपि तथैवाऽन्यत्र दर्शनात् ॥ (ब्र.प. 446)

---

[1] प्रतिगृहीतं — ह.

[सिद्धान्तार्थः]

उच्यते—'प्राणात्यये'—इति। 'च' शब्दः अवधारणे। प्राणात्ययापत्तावेवेत्यर्थः। कुतः? तद्दर्शनात्—दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा; किं पुनः प्राणविदः। 'उषस्तिः[1] किल चाक्रायणः ब्रह्मविदग्रेसर मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु, इभ्यग्रामे वसन्, अनशनेन प्राणसंशयमापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाणः, इभ्यं कुल्माषान् खादन्तं भिक्षमाणः, तेन च 'उच्छिष्टेभ्योऽन्ये न विद्यन्ते' इति प्रत्युक्तः, पुनरपि,

'एतेषां मे देहि' (छां.उ. 1-10-3)

इत्युक्त्वा, तेन च इभ्येन उच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् [2]प्रतिगृह्य[2], अनुपानप्रतिग्रहम् इभ्येनाऽर्थितः,

'[3]उच्छिष्टं वै[3] मे पीतं स्यात्' (छां.उ. 1-10-4)

इति वदन् चाक्रायणः, 'किमेते कुल्माषा अनुच्छिष्टाः?' इति इभ्येन पर्यनुयुक्तः,

'न वा अजीविष्यमिमानखादन्'— 'कामो म [4]उदपानम्'[4] (छां.उ. 1-10-4) इति, 'कुल्माषाखादने स्वस्य प्राण[5]संशयापत्तेः,[5] तावन्मात्रखादनेन धृतप्राणस्य स्वस्य, उच्छिष्टोदकपानं कामकारितं, निषिद्धं स्यात्!' इत्युक्त्वा, स्वखादितशेषं जायायै दत्त्वा, तया च रक्षितान्, अपरेद्युः याजनेन आर्जिजीषया जिगमिषुः, पुनरपि प्राणसंशयमापन्नः, तानेव [6]इभ्योच्छिष्टान्[6] स्वोच्छिष्टभूतान् पर्युषितान् चखाद।

[अधिकरणार्थोपसंहारः]

अतः ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनात्, अत्र अविशेषेण कीर्तितमपि, प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

---

पूर्वपक्षेऽभिप्रेता। **मटची**—अश्मवृष्टिः। **इभ्यः**—इभमर्हतीति हस्तिपः। **कुल्माषः**—माषविशेषः। ब्रह्मविदामपि सर्वान्नानुमतिः प्राणात्यये; किं पुनः दुर्बलप्राणविद्यानिष्ठस्य? इति सिद्धान्तः ॥ २८ ॥

---

[1] उषस्तः—स्त. ग. घ.
[2] परिगृह्य—त.थ.
[3] उच्छिष्टमेव—न.
[4] उदकपानम्—त. थ.
[5] संशयापत्तिः—त. थ.
[6] इभ्योच्छिष्टभूतान्—ग.

[उक्तार्थस्य आहारशुद्धिविधिविषयकल्पकत्वम् ]

## ४४७· अबाधाच्च ॥ ३-४-२९ ॥ (सि)

'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' (छां.उ. 7-26-2)

इति ब्रह्मविद्योत्पत्तौ आहारशुद्धिविधानाबाधादपि, ब्रह्मविदां सर्वान्नीनत्वम् आपद्विषयमवगम्यते। एवं ब्रह्मविदाम् अतिशयित[1]शक्तीनामपि[1] सर्वान्नीनत्वस्य आपद्विषयत्वात्, प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिः, आपद्विषयैव ॥ २९ ॥

[उक्तेऽर्थे स्मृत्यानुगुण्यम् ]

## ४४८. अपि स्मर्यते ॥ ३-४-३०॥ (सि)

अपि च आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदाम् अन्येषां च स्मर्यते—

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥' (?)

—इति ॥ ३० ॥

---

अबाधादिति । पूर्वसूत्रे ब्रह्मविदनुष्ठानदर्शनात् कैमुत्यन्याय उपपादितः । अत्र ब्रह्मविद्विषयवचनेन स एव कैमुत्यन्याय उपपादितः ॥ २९ ॥

अपीति । न केवलं सर्वान्नानुमतेः ब्रह्मविद आपद्विषयत्वात् प्राणविद आपद्विषयत्वं कल्प्यम् ; सर्वेषामपि स्मृतौ कण्ठोक्तमेवेति भावः ॥ ३० ॥

---

[सूत्रार्थः । **अबाधाच्च**—(सर्वान्नभक्षणस्य आपन्मात्रकालिकानुमतिविषयत्वे एव) आहारशुद्धिविधेः अबाधितत्वोपपत्तेरपि अयमर्थ उचितः ॥]

'आहारशुद्धाविति च शुद्धाहारविधेर्बलात् । अबाधाय च तस्याऽपि तत् प्राणात्यय इष्यते ॥' ब्र.प. 447)

[सूत्रार्थः । सर्वान्नभक्षणानुमतिः आपत्प्राप्तावेव ; न सर्वदा **इति, स्मर्यतेऽपि**—मुनिभिः स्मृतावप्युच्यते ॥]

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । इति स्मृत्याऽपि तेषां वै परमापदि चोच्यते ॥' (ब्र.प. 448)

---

[1] वृत्तीनामपि—द.

[सर्वेषामपि स्वच्छन्दप्रवृत्तिप्रतिषेधकम् शास्त्रम् ]

## ४४९. शब्दश्चातोऽकामकारे ॥ ३-४-३१ ॥ (सि)

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वम् आपद्विषयमेव ; अत एव, सर्वेषाम् अकामकारे शब्दः—कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि ! [1]कठानां[1] संहितायां कामकारस्य प्रतिषेधकः शब्दः —

'तस्माद् ब्राह्मणः सुरां न पिबति, पाप्मना नोत्सृजा इति' (काठ.सं.)

पाप्मना [2]संसृष्टो[2] न भवानीति मत्वा, ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

—o—

---

शब्दश्चेति । 'ब्राह्मण'शब्दस्य असङ्कुचितत्वात्, ब्रह्मविदामपि इदं वाक्यं साधारणम् ; किं पुनः प्राणविदः इति भावः ॥ ३१ ॥

[सूत्राणि—१. सर्वान्ना २. अबाधा ३. अपि स्म ४. शब्दश्चा ]

इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

—o—

---

[सूत्रार्थः] अतः—नियमरहितस्य सर्वान्नभक्षणस्य आपन्मात्रविषयत्वादेव, **अकामकारे**— प्रवृत्तिस्वाच्छन्द्यप्रतिषेधे (विधायकः), **शब्दः**—शास्त्ररूपः शब्दः, श्रुतौ दृश्यते ॥]

**'सुरां तु न पिबेच्चेति शब्दश्चाऽपि निषेधति । कामकारं सुरापानं ततः प्राणात्यये स्मृतम् ॥' (ब्र.प.449)**

---

[1] काठानां—त.थ. [2] संसृष्टः—च. सृष्टः—न.

## (116) विहितत्वाधिकरणम् ॥ ३-४-८॥ (सू. 32-35)

[अधि-अर्थः—उपासनप्रवृत्तेषु कर्मणां विद्याङ्गत्वेऽपि, तद्रहितेषु केवलाश्रमाङ्गत्वमपि ।।]

### ४५०. विहितत्वाच्चाऽऽश्रमकर्माऽपि ॥ ३-४-३२ ॥ (सि)

[सङ्गतिः, संशयः पूर्वः पक्षश्च]

यज्ञादिकर्माङ्गिका ब्रह्मविद्या—इत्युक्तम् ।

तानि च यज्ञादीनि कर्माणि, अमुमुक्षुणा केवलाश्रमिणाऽपि अनुष्ठेयानि? उत न? इति चिन्तायाम्,

विद्याङ्गानां सतां [1]केवलाश्रम[1]शेषत्वे, नित्यानित्यसंयोगविरोधः प्रसज्यत इति, यज्ञादीनां [2]केवलाश्रम[2]धर्मत्वं न सम्भवति—इति प्राप्ते ;

[सिद्धान्तार्थः]

उच्यते—आश्रमकर्माऽपि—इति । आश्रमस्य कर्माऽपि भवति—

---

यज्ञादीति, अवान्तरसङ्गतिमाह । परमप्रकृतेन सङ्गतिरित्यर्थः ।। किं विद्याङ्गभूतान्याश्रमकर्माणि, केवलाश्रमिणोप्यनुष्ठेयानि? न? इति । किमेषां विद्याङ्गत्वे केवलाश्रमाङ्गत्वं सम्भवति? न? इति । किं केवलाश्रमाङ्गत्वे नित्यानित्यसंयोगविरोधः प्रसज्यते? न? इति । आश्रमाङ्गत्वे विद्याङ्गत्वे च कर्मान्तरत्वमस्ति? न? इति ।। कर्मान्तरत्वे सति अनेकस्य कर्मणः विनियोगपृथक्त्वाभावेन नित्यानित्यसंयोगविरोधप्रसङ्गेन केवलाश्रमाङ्गत्वासम्भवात्, अमुमुक्षोरननुष्ठेयानि । कर्मान्तरत्वं नास्ति चेत्! विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात्, केवलाश्रमाङ्गत्वसंभवात्, केवलाश्रमिणोऽप्यनुष्ठेयानि ।

नित्यानित्येति । यावज्जीवमनुष्ठानं, मोक्षेच्छानुगुणमनुष्ठानं च विरुद्धमित्यर्थः ।

---

[सूत्रार्थः] विहितत्वाच्च—नित्यकर्मवत् जीवननिमित्ततया विहितत्वादेव हेतोः आश्रमकर्माऽपि—कर्म विद्याङ्गमिव आश्रमाङ्गमपि ।।

'यावज्जीवमिति श्रुत्या केवलाश्रमिणामपि । अनुष्ठेयानि कर्माणि विहितत्वाद्भवन्ति हि ।।' (ब्र.प. 450)

---

[1] केवलाश्रमि—आ. ङ. न. [2] केवलाश्रमि—आ. छ. ङ.

केवलाश्रमिणाऽप्यनुष्ठेयानीत्यर्थः ।

कुतः ?

'यावज्जीवमग्निहोत्रं जुहोति' (आ.प.श्रौ. 3-14-8) ?

इत्यादिना विहितत्वात् । जीवननिमित्ततया नित्यवद्विहितत्वात्, इत्यर्थः ॥ ३२ ॥

[विनियोगपृथक्त्वादुभयाङ्गत्वाविरोधः]

[1]तथा च[1] विद्याङ्ग[2]तया[2] 'तमेतं वेदानुवचनेने' त्यादिना विहितत्वात्, विद्याशेषतयाप्यनुष्ठेयानीत्याह—

## ४५१. सहकारित्वेन च ॥ ३-४-३३ ॥ (सि)

विद्योत्पत्तिद्वारेण विद्यासहकारितयापि अनुष्ठेयानि । अग्निहोत्रादीना[3]मिव[3] जीवनाधिकार[4]स्वर्गाधि[4]कारवत्, विनियोगपृथक्त्वेन उभयार्थत्वं न विरुद्ध्यत इत्यर्थः ॥ ३३ ॥

[विद्याङ्गत्वाश्रमाङ्गत्वयोः कर्मभेदाप्रयोजकत्वम्]

तद्वदेव, कर्मान्तरत्वमपि नाऽस्तीत्याह—

---

**केवलाश्रमधर्मत्वम्**—मुमुक्षारहिताश्रमधर्मत्वम् । 'आश्रमी'ति पाठश्चेत्! 'केवल' शब्दः अमुमुक्षुपरः ।

**अनुष्ठेयानीत्यर्थ इति** । 'यज्ञादीनि कर्माणी'त्यध्याहारः ॥ ३२ ॥

**तथाचेति** । अनेन [पूर्वसूत्रार्थे] सङ्गतमुत्तरसूत्रार्थमाह ।

**द्वारेणेति,** समुच्चयव्यावृत्त्यर्थम् । **विनियोगः**—शेषत्वज्ञापकविधिः । तत्पृथक्त्वदर्शनेन नित्यानित्यसंयोगविरोधपरिहारः सूत्रद्वयफलम्, न त्वेकस्य ; विनियोगद्वैधस्य एकेन अदर्शितत्वात् ॥ ३३ ॥

---

[सूत्रार्थः । **सहकारित्वेन च**—उपासननिष्पत्तौ सहकारित्वेन कर्मणां श्रुत्यैव विहितत्वाच्च, तेषां आश्रमाङ्गत्वमिव विद्याङ्गत्वमप्यविशिष्टमिति मुमुक्षुभिरप्यनुष्ठेयत्वमिति]

विद्योत्पत्त्युपकारेण सहकारितया च तत् । अनुष्ठेयं कर्म सर्वमिति श्रुत्याऽपि दर्शितम् ॥ (अ.प. 451)

---

[1] तथा—अा. ग. घ.　　[2] तया च—आ. ग. घ.

[3] मेव—थ.　　[4] स्वर्गादि—वा.

## ४५२. सर्वथाऽपि त एवोभयलिंगात् ॥ ३-४-३४ ॥ (सि)

सर्वथा-[3]विद्यार्थत्वेऽपि आश्रमार्थत्वेऽपि[3], त एव-यज्ञादयः-इति प्रतिपत्तव्यम् । न कर्मस्वरूपभेदः इत्यर्थः ।

कुतः? उभयलिङ्गात् । उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्, कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

[आश्रमाङ्गत्वेनानुष्ठीयमानानामेव विद्याङ्गत्वम् ; नाऽतो भेदः]

## ४५३. अनभिभवं च दर्शयति ॥ ३-४-३५ ॥

'धर्मेण पापमपनुदति' (तै.ना.उ. ?)

इत्यादिभिश्च तानेव यज्ञादिधर्मान् निर्दिश्य, तैः विद्याया अनभिभवम्—पापकर्मभिः उत्पत्तिप्रतिबन्धाभावं दर्शयति । अहरहरनुष्ठीयमानैर्हि यज्ञादिभिः विशुद्धेऽन्तःकरणे, प्रत्यहं [4]प्रकृष्यमाणा[4] विद्या उत्पद्यते । अतः त एव उभयत्र यज्ञादयः ॥ ३५ ॥

इति विहितत्वाधिकरणम् ॥ ८ ॥

—o—

---

**स्वरूपभेद इति** । कर्मान्तरत्वव्युदासस्य तन्त्रेणाऽष्ठानं फलम् । [नाऽतः नित्याग्निहोत्र-कुण्डपायिनामयनाऽग्निहोत्रसादृश्यम् ।] ॥ ३४ ॥

**तानेवेति** । अङ्गत्वं वदता 'यज्ञेन दानेने'त्यादिवाक्येन यज्ञादिधर्मा निर्दिष्टाः । अङ्गत्वेन किंचित्कारं वदत् वाक्यमपि, यज्ञादिपर्यायशब्देन [धर्मशब्देन] निर्दिशतीत्यर्थः । **दर्शयति** । श्रुतिरिति शेषः ॥ ३५ ॥

[सूत्राणि—१. विहित, २. सहकारि, ३. सर्वथापि, ४. अनभिभवं]

इति विहितत्वाधिकरणम् ॥ ८ ॥

—o—

---

[सूत्रार्थः । **सर्वथाऽपि**—विद्यार्थत्वे आश्रमार्थत्वेऽपि च, **त एव**—यज्ञादयः न भेदवन्तः, **उभयलिङ्गात्**—'तदेवेदं कर्म ?' इति प्रत्यभिज्ञापकसत्त्वात् ।]

'यज्ञादेरुभयत्रैव विनियोगेऽपि नो भिदा । उभयत्र तदेवेति प्रत्यभिज्ञानलिङ्गतः ॥' (ब्र.प. 452)

[सूत्रार्थः । **अनभिभवं**—पापापनोदनतः यज्ञादिधर्माणां विद्योत्पत्तिप्रतिबन्धकनिरासकत्वम्, **दर्शयति च**—श्रुतिः स्फुटं प्रतिपादयत्येव ।]

'धर्मेण पापमित्यादि श्रुतिर्विविधपाप्मभिः । विद्याया अभिभूतत्वं धर्मवार्यं ब्रवीति च ॥' (ब्र.प. 453)

---

[3] विद्यार्थत्वेऽपि—द. [4] कृष्यमाणा—थ.

(117) विधुराधिकरणम् ॥ ३-४-९ ॥ (सू. 36-39)

[अधि.-अर्थः—अनाश्रमिणामपि चेतनानां त्रैवर्णिकानां ब्रह्मविद्याधिकारालोपः]

## ४५४. अन्तरा चाऽपि तु तद्दृष्टेः ॥ ३-४-३६ ॥ (सि)

[अवान्तरसङ्गतिः]

चतुर्णामाश्रमिणां ब्रह्म[1]विद्यायामधि[1]कारोऽ[2]स्ति[2]; विद्यासहकारिणः आश्रमधर्माः—इति चोक्तम्।

[विचारोपयोगी पूर्वः पक्षः]

[3]ये पुनः[3], आश्रमानन्तरा वर्तन्ते विधुरादयः; तेषां ब्रह्मविद्यायामधिकारः अस्ति? [4]न वा?[4] इति विशये,

[सयुक्तिकः पूर्वः पक्षः]

आश्रमधर्मेतिकर्तव्यकताकत्वाद्विद्यायाः, अनाश्रमिणां च आश्रमधर्माभावात्, नास्त्यधिकारः—इति प्राप्ते;

[सिद्धान्तार्थः]

उच्यते—अन्तरा चाऽपि तु—इति। 'तु'शब्दः पक्षव्यावृत्त्यर्थः। 'च'शब्दः [5]अवधारणे[5]। अन्तरा वर्तमानानाम्—अनाश्रमिणामपि विद्यायामधिकारः अस्त्येव।

---

ये पुनरिति। किं विधुरादीनां ब्रह्मविद्याधिकारोऽस्ति? न?—इति। किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति? न?- इति। किम् आश्रमाणां साधारणधर्माङ्गिका विद्या भवति? न?- इति। 'तपसा ब्रह्मचर्येण'त्यादिविनियोगोपबृंहितं रैक्वादीनां विद्यानिष्ठत्वदर्शनं, विद्यायाः साधारणधर्माङ्गकत्वमवगमयति? न?—इति। न चेत्! साङ्गविद्योपसंहारासामर्थ्येन विधुरादीनामनधिकारः। अवगमयति चेत्! तदुपसंहारसामर्थ्यात्, विधुरादीनामधिकारोऽस्ति॥ विधुरः—

---

[सूत्रार्थः। अन्तराऽपि च—विनाप्याश्रमम् अवतिष्ठमानानामपि ब्रह्मविद्यायामधिकारः, तद्दृष्टेः—तेषु ब्रह्मविद्यासंबन्धस्य श्रुत्यादिभ्योऽवगतेः॥]

'अनाश्रमाणामपि च ब्रह्मविद्या विधीयते। रैक्व-भीष्मादिकानां तु विद्यानिष्ठत्वदर्शनात्॥' (ब्र.प. 454)

---

[1] विद्याया अधि—थ.	[2] ऽस्तीति—ङ.	[3] ये—थ.

[4] न?—वा.	[5] अवधारणार्थः—न.

कुतः? तद्दृष्टेः—दृश्यते हि! रैक्क-भीष्म-[1]संवर्तादीनाम्[1] अनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम्। न च—'आश्रमधर्मैरेव विद्यानुग्रहः—इति शक्यं वक्तुम्;

'यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ. 6-4-22)

इति, दानादीनाम् आश्रमे[2]ष्वनैकान्तिका[2]नामपि, अनुग्राहकत्व[3]दर्शनात्[3]। यथा—ऊर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनात्, अग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते; तथा—अनाश्रमिष्वपि विद्यादर्शनात्, आश्रमानियतैः जपोपवासदेवताराधनादिभिः विद्यानुग्रहः शक्यते कर्तुम् ॥ ३६ ॥

[जपादितोऽपि विद्यास्वरूपनिष्पत्तिः स्मृत्यवगता]

## ४५५. अपि स्मर्यते ॥ ३-४-३७ ॥ (सि)

अपि च—अनाश्रमिणामपि, जपादिभिरेव विद्यानुग्रहः स्मर्यते—

"[4]जप्येना[4]ऽपि तु संसिध्येद् ब्राह्मणो नाऽत्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥' (म.स्मृ. 2-87)

इति। संसिद्ध्येत्—जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ॥ ३७॥

[विद्यायाः धर्मविशेषतोऽप्यनुग्रहः श्रुत्यवगतः]

## ४५६. विशेषानुग्रहश्च ॥ ३-४-३८ ॥ (सि)

---

मृतदारः। आदिशब्दोपात्तः अकृतदारः। **न चेति**। आश्रमधर्मानुपपत्तौ वर्णधर्मैरनुग्रह उपपद्यत इत्यर्थः। **अनैकान्तिकानाम्**—अनियतानाम् ॥ ३६ ॥

**ब्राह्मणः**—ब्रह्मविद्यानिष्ठः ॥ ३७॥

---

[सूत्रार्थः। **स्मर्यतेऽपि**—आश्रमनियतेभ्यो धर्मेभ्योन्यस्मात् जपादेरपि विद्याया अनुग्रहः स्मृत्याऽपि ज्ञाप्यते ॥]

जप्येनाऽपि च संसिध्येदिति स्मृत्या च तेष्वपि। विद्यायाश्चाऽपि संसिद्धेरधिकारो भवेदिति॥(ब्र.प. 455)

[सूत्रार्थः। **विशेषैः**—आश्रमनैयत्यरहितैः धर्मविशेषैः तपोब्रह्मचर्यादिभिः, **अनुग्रहः**—विद्याया निष्पादकत्वम् श्रुत्यवगतमस्ति ।]

'आश्रमानुक्तधर्मेण विद्यानुग्रहदर्शनात्। तपसा ब्रह्मचर्येण विद्यया चेति च श्रुतेः॥' (ब्र.प. 456)

---

[1] संवर्तकादीनां—आ. संवर्तानां—द. [2] ष्वनेकान्ता—अ. न.
[3] श्रवणात्—ग. [4] जपेना—अ.

न केवलं न्याय-स्मृतिभ्याम् अयमर्थः साधनीयः । श्रूयते च अनाश्रमनियतैः धर्मविशेषैः विद्यानुग्रहः—

'तपसा ब्रह्मचर्येण [1]श्रद्धया विद्ययाऽऽत्मान[1]मन्विष्येत्' (प्रश्न.उ. 1-10) इति ॥ ३८ ॥

[अनापदि आश्रमित्वमवर्जनीयम्]

४५७. अतस्त्वितरज्ज्यायो लिंगाच्च ॥ ३-४-३९ ॥ (सि)

'तु'शब्दः अवधारणे। अतः—अनाश्रमित्वात्, इतरत्—आश्रमित्वमेव ज्यायः अनाश्रमित्वम् आपद्विषयम्। [2]शक्तस्य तु[2] आश्रमित्वमेव उपादेयम् इत्यर्थः; भूयोधर्मकाल्पधर्मकयोः अतुल्यकार्यत्वात्। लिङ्गाच्च—[3]स्मृतेरेवे[3]त्यर्थः। स्मर्यते च शक्तं प्रति आश्रमस्योपादेयत्वम्—

'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः' (दक्ष. 1-10)

इत्यादिना। [4]निवृत्त[4]ब्रह्मचर्यस्य [5]मृत[5]भार्यस्य च अवैराग्ये सति, दारालाभः—आपत् ॥ ३९ ॥

इति विधुराधिकरणम् ॥ ९ ॥

—o—

---

धर्मविशेषैर्विद्यानुग्रहः इति, विशेषशब्दं समासं च व्याचष्टे ॥ ३८ ॥

अतुल्यकार्यत्वादिति । शक्तं प्रतीति शेषः । लिङ्गशब्देन स्मृतिरुच्यते; श्रुतेरनुमापकत्वात् ॥ अवैराग्ये सतीति, पारिव्राज्यव्यावृत्त्यर्थम् । ब्रह्मनिष्ठेष्वनुयायि वैराग्यं नाम—लोकान्तर-जन्मान्तरभोगनैरपेक्ष्यम् । अतः इदमवैराग्यम् अविरुद्धम् । यद्वा अवैराग्यम्—गार्हस्थ्यधर्मश्रद्धा ॥ ३९ ॥

[सूत्राणि—१. अन्तरा, २. अपि स्म, ३. विशेषा, ४. अतस्त्वि]

इति विधुराधिकरणम् ॥ ९ ॥

—o—

[सूत्रार्थः । अतः—अनाश्रमावस्थानापेक्षया, इतरत्तु—आश्रमित्वेनावस्थानमेव, ज्यायः—प्रशस्तम् । लिङ्गाच्च—स्मृतेरपि ॥]

'अनाश्रमित्वादितरज् ज्यायो धर्मेण भूयसा । अनाश्रमी नतिष्ठेत्तु दिनमेकमिति स्मृतेः ॥' (ब्र.प. 457)

[1] श्रद्धयात्मानमन्विष्येत्—द. [2] शक्तस्य—ङ. [3] स्मृतेरि—घ.

[4] वृत्त—थ. [5] अकृतदारस्य मृत - वा.

(118) तद्भूताधिकरणम् ॥ ३-४-१० ॥ (सू. 40-43)

[अधिकरणार्थः—आश्रमभ्रष्टानां ब्रह्मविद्यायाम् सर्वथा अनधिकार एव]

## ४५८. तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ ३-४-४० ॥ (सि)

[प्रकृताधिकरणीयसंशय-पूर्वपक्षौ]

नैष्ठिक-वैखानस-परिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्याधिकारः, अस्ति ? न ?–इति चिन्तायाम्, विधुरादिवत् अनाश्रमैकान्तैः दानादिभिः विद्यानुग्रहसम्भवात्, अस्त्यधिकारः—

[सिद्धान्तार्थः स्वस्य जैमिनेश्च संमतः]

इति प्राप्ते, उच्यते—तद्भूतस्य तु नाऽतद्भावः—इति। 'तु' शब्दः पक्षव्यावृत्त्यर्थः। तद्भूतस्य—नैष्ठिकाद्याश्रमनिष्ठस्य, न अतद्भावः—अतथाभावः, अनाश्रमित्वेनाऽवस्थानं न सम्भवति ॥

कुतः ? तद्रूपाभावेभ्यो नियमात्। तद्रूपाणि—तेषां नैष्ठिकादीनां रूपाणि—वेषाः,[1] धर्मा इत्यर्थः: तेषामभावाः तद्रूपाभावाः। तेभ्यः शास्त्रैर्नियमात्।

---

तद्भूतस्येति। विधुरादेः ब्रह्मविद्याधिकारः उक्तः। अनाश्रमित्वसाम्यात् आश्रमभ्रष्टानामपि विद्याधिकारः—इति शङ्कया सङ्गतिः। वैखानसः—वानप्रस्थः। किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति ? न ? इति। किमेषां साङ्गविद्योपसंहारसामर्थ्यम् अस्ति ? न ? इति। किमेषां प्रायश्चित्तात् शुचित्वं सम्भवति ? न ? इति। किं 'यो ब्रह्मचारी स्त्रियमुपेयात्' इति विहितं प्रायश्चित्तम्, सर्वब्रह्मचारिविषयम् ? उत नैष्ठिकादिव्यतिरिक्तविषयम् ? 'प्रायश्चित्तं

[सूत्रार्थः। **तद्भूतस्य**—नैष्ठिकत्वादिकम् प्राप्तत्वेन अकृतदारस्य, **अतद्भावः**—अनाश्रमित्वावस्था, **न**—शास्त्रसंमता न भवति। **तद्रूपाभावेभ्यः**—नैष्ठिकत्वादिभ्यः स्वीकृतधर्मेभ्यः सकाशात् प्रच्युतिभ्यः, **नियमात्**—शास्त्रैर्नियन्त्रणस्य दर्शनात्, (अतः ये प्रच्युताः तेषामनधिकार एव) **जैमिनेरपि**—इदं च जैमिनेरप्यभिमतम् ॥]

नाऽतद्भावो नैष्ठिकस्य 'पुनर्नेया'दिति श्रुतेः। नियन्त्रणाच्च तद्रूपाभावेभ्य इति जैमिनिः ॥ (ब्र.प. 458)

[1] तेषां—वा.

नैष्ठिका[1]द्याश्रम[1]प्रविष्टान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि ! शास्त्राणि ;

'ब्रह्मचार्याचार्यकुलवासी तृतीयः ; अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् '

(छां. उ. 2-23-1)

इति,

'अरण्य'मियात्[2], ततो न पुनरेयात् ' (?)

[3]इति[3],

'संन्यस्याऽग्निं न पुनरावर्तयेत् ' (?)

इति च। अतः विधुरादिवत् नैष्ठिकादीनाम् अनाश्रमित्वेनाऽवस्थानासम्भवात् , न तानधिकरोति ब्रह्मविद्या। 'जैमिनेरपी'ति अविगानं दर्शयन् , उक्तं स्वाभिमतं [4]द्रढयति[4] ॥ ४० ॥

[आश्रमप्रच्युतानां प्रायश्चित्ताद्विद्याकारशङ्का—तन्निरासौ]

अथ स्यात्—नैष्ठिकादीनां ब्रह्मचर्यात् प्रच्युतानां, प्रायश्चित्तात् अधिकारः सम्भवति। अस्ति च प्रायश्चित्तम् अधिकारलक्षणे (पू.मी.सू.अ. 6) निरूपितम् ;

'अवकीर्णिपशुश्च तद्वत् ' (पू.मी.सू. 6-8-4)

इति। अतः, प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसम्भवात् ' कृतप्रायश्चित्तः ब्रह्मविद्याया-[5]मधिकरिष्यति[5]—इति। तत्राह—

---

न पश्यामि' इति प्रायश्चित्ताभावस्मरणं, किं प्रायश्चित्तस्य (नैष्ठिकादि) व्यतिरिक्तब्रह्मचारिविषयताम् अवगमयति ? न ?—इति ॥ न चेत् ! प्रायश्चित्तस्य सर्वविषयतया शुद्धिसंभवेन सामर्थ्या-दधिकारः। अवगमयति चेत्। प्रायश्चित्तस्य उपकुर्वाणविषयतया शुद्धेरसम्भवेन असामर्थ्याद् ब्रह्मविद्यानधिकारः। 'ब्रह्मचारी' इत्यादिश्रुतिः नैष्ठिकविषया ॥ ४० ॥

अधिकारलक्षणे [पूर्वमीमांसागते] षष्ठेऽध्याये ॥ अवकीर्णिपशुः—गर्दभः। 'ब्रह्मचार्यवकीर्णी नैऋर्तं गर्दभमालभेत' इत्युक्तम्। अवकीर्णी—ब्रह्मचर्यभ्रष्टः। ब्रह्मचर्यम्—स्त्रीनियतिः, [नियमेन स्त्रीसङ्गवर्जनम् ]। सा गृहस्थव्यतिरिक्तानां [ब्रह्मचारि - वनस्थ -

---

[1] द्याश्रमम्—वा.  [2] मीयात्—त.थ'  [3] इति च—आ.
[4] दढयति—चा.  [5] मधिकारी भवति—द.

## ४५९. न चाऽऽधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ३-४-४१ ॥ (सि)

अधिकारलक्षणोक्तमपि प्रायश्चित्तं, नैष्ठिकादीनां तद्भ्रष्टानां न सम्भवति । कुतः ? पतनानुमानात् तदयोगात्—नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेः, तस्य प्रायश्चित्तस्याऽसंभवात् ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥' (आग्ने.स्मृ- 16-5-23)

इति । अतः '[1]अधिकार'लक्षणोक्तं प्रायश्चित्तम् , इतरब्रह्मचारिविषयम् ॥ ४१ ॥

[नैष्ठिकात् प्रच्यवनस्य प्रायश्चित्तसम्भवपक्षः]

## ४६०. उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् ॥ ३-४-४२ ॥ (पू)

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनम् , उपपूर्वम्—उपपातकम् ; महापातकेष्वपरिगणितत्वात्—इति, तत्र प्रायश्चित्तस्य भावम्—विद्यमानतामपि, एके आचार्या मन्यन्ते । अशनवत्—यथा मध्वशनादिनिषेधः तत्प्रायश्चित्तं च, उपकुर्वाणस्य नैष्ठिकादीनां च समानम् ; तदुक्तं स्मृतिकारैः—

---

परिव्राजाम् ] त्रयाणामपि तुल्या । तस्मात् तेषामवकीर्णिव्रतप्रायश्चित्तं कर्तव्यमिति । अत इत्यादि । यः उपकुर्वाणो ब्रह्मचारी भ्रष्टः तद्विषयम् अवकीर्णिप्रायश्चित्तमित्यर्थः ॥४१॥

उपेति । ब्रह्मचर्यप्रच्यवनस्य महापातकेष्वपरिगणितत्वात् उपकुर्वाणब्रह्मचारिणः

---

[सूत्रार्थः । अधि....मपि न च—अधिकारलक्षणोक्तं प्रायश्चित्तमपि भ्रष्टनैष्ठिकानां न सम्भवति, पतनानुमानात्—तेषां पतनस्मृतेर्दर्शनतः, तदयोगात्—प्रायश्चित्तासम्भवात् ॥]

'अधिकारानुरूपं च प्रायश्चित्तं न विद्यते । आरूढो नैष्ठिकमिति स्मृत्या च तदभावतः ॥' (ब्र.प, 459)

[सूत्रार्थः । एके—केचिदाचार्याः, उपपूर्वम्—स्त्रीनियमातिक्रमम् , उपपातकमेव इति—अतः, भावमपि—प्रायश्चित्तसद्भावमपि अशनवत्—मधुपाननिषेधादिकमिव, [मन्यन्ते] तदुक्तम्—प्रायश्चित्तार्हत्वं वर्णितं स्मृतिकारैः ॥]

'उपपातकमात्रत्वात् प्रायश्चित्तं तु विद्यते । मधुभोजनतुल्यत्वात्तेषां विद्या तु वर्तताम् ॥' (ब्र.प. 460)

---

[1] अधिकारि –द.

'उत्तरेषां चैतदविरोधि' (गौत ध. 1-3-4)

इति । गुरुकुलवासिनो यदुक्तं तत्, स्वाश्रमाविरोधि उत्तरेषामप्याश्रमिणां [1]संभवती[1]-त्यर्थः; तद्वत् इहाऽपि ब्रह्मचर्यप्रच्यवने प्रायश्चित्त[2]सम्भवात्[2], ब्रह्मविद्या[3]योग्यताऽ-प्यस्ति[3] ॥ ४२ ॥

[उक्तानामाश्रमप्रच्युतानां ब्रह्मविद्यानुगुणप्रायश्चित्ताभावपक्षः स्वीयः]

## ४६१. बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ३-४-४३ ॥ (सि)

'तु' शब्दो मतान्तरव्यावृत्त्यर्थः । उपपातकत्वे महापातकत्वेऽपि, एते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः । ब्रह्मविद्यायामनधिकृताः इत्यर्थः ।

कुतः ? स्मृतेः—पूर्वोक्तात् पतनस्मरणात् ।

यद्यपि—[4]कल्मष[4]निर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते; तथापि—

---

स्त्रीनियमातिक्रमस्य, उपपातकान्तर्गतस्य प्रायश्चित्तकथनात्, तस्य च नैष्ठिकादिष्वतिदेशात् प्रायश्चित्तं प्राप्तमित्यर्थः । 'उत्तरेषां चैतदविरोधि' इत्यत्र एतच्छब्दः, पूर्वोक्तधर्मान् प्रायश्चित्तं च परामृशति । स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः गृहस्थादिष्वनापातार्थः ॥ [इति] पूर्वपक्षिणोऽभिप्रायः ॥ ४२ ॥

**बहिस्त्विति ।** उपेत्यादि [सूत्रस्थस्य] उभयथेत्यस्य व्याख्यानम् । **यद्यपीति ।** कर्मशक्तिः त्रिधा—प्रत्यवायकरी, वैदिककर्माधिकारप्रतिबन्धकरी, सजातीयकर्मरुचिकरी चेति । तत्र कानिचित् प्रायश्चित्तानि शक्तित्रयविनाशकानि । कानिचित् अन्यतमशक्तिविनाशकानि । अत्र अतिदेश-पतनस्मृतिविरोधे अतिदेशस्मृतिः, प्रत्यवायजननशक्तिविनाशकं प्रायश्चित्तमाह ।

---

[सूत्रार्थः । **उभयथाऽपि**—स्त्रीनियमोल्लङ्घनस्य उपपातकत्वेऽपि महापातकत्वेपि वा, **स्मृतेः**—पतनस्मृतिरूपात् ज्ञापकात्, **आचाराच्च**—भ्रष्टानां ब्रह्मविद्यानुपदेशरूपशिष्टाचाराच्च, **बहिस्तु**—भ्रष्टा विद्याबहिष्कृता इत्येव दृढम् ।]

'पातकित्वेप्युभयथा बहिर्भूतास्तु ते सदा । आचाराच्चाऽपि दृश्यन्ते शुद्धा अपि च निष्कृतेः ॥'(ब्र.प. 461)

---

[1] भवती—ग.　　[2] सद्भावात्—क. ३

[3] योग्यताऽस्ति—त. थ.　　[4] कलुष—घ. ङ.

**कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति ;**

**'प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा'** (आग्ने. 16–5–23)

**इति स्मृतेः—इत्यर्थः । आचाराच्च—[1]शिष्टा[1] हि ! नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति । तेभ्यः ब्रह्मविद्यादिकं नोपदिशन्ति । अतः तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥**

**इति तद्भूताधिकरणम् ॥ १० ॥**

—o—

---

पतनस्मृतिस्तु वैदिककर्मानधिकारशक्तिविनाशकप्रायश्चित्ताभावमाह ; 'येन शुद्ध्येत्' इत्युक्तत्वात् । तस्मादविरोधः । अतः अतिदेशसिद्धप्रायश्चित्तेन नरकानुभवलाघवे सत्यपि, पतनस्मृतिवचनात् न ब्रह्मविद्याधिकारः—इत्यर्थः ।

'अनाश्रमी न तिष्ठेदि'ति अनाश्रमित्वं निषिद्धम् । आश्रमभ्रंशोऽपि निषिद्धः । एवं निषेधे समानेऽपि, अनाश्रमिणामपि विद्याधिकारः श्लाघ्यत्वं च श्रुतम् । आश्रमप्रच्युतानां तु न तथेति विशेषः ॥ ४३ ॥

[सूत्राणि—१. तद्भूतस्य, २. न चाधि, ३. उपपूर्व, ४. बहिस्तु ।]

इति तद्भूताधिकरणम् ॥ १० ॥

—o—

---

[1] विशिष्टा हि—ग.

(119) स्वाम्यधिकरणम् ॥ ३-४-११ ॥ (सू. 44-45)

[अधिकरणार्थः—कर्माङ्गाश्रयोद्गीथाद्युपासनानाम् ऋत्विजैवाऽनुष्ठेयत्वम् ; फलश्रुत्यविरोधश्च]

## ४६२. स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥ (पू)

[विचारणीयार्थोपस्थापनम् ससंशयम् ]

कर्माङ्गाश्रयाणि उद्गीथाद्युपासनानि, किं यजमानकर्तृकाणि ? उत ऋत्विक्कर्तृकाणि ?—इति चिन्तायाम् ,

[सयुक्तिकः आत्रेयाभिमतः, पूर्वः पक्षः]

यजमानकर्तृकाणि—इति, आत्रेयो मन्यते ।

कुतः ? फलश्रुतेः—वेदान्तविहितेषु[1]दहराद्युपासनेषु[1] फलोपासनयोः एकाश्रयत्वदर्शनात् ; इह च क्रतुफलाप्रतिबन्धरूपस्य उद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणात् इत्यर्थः ॥

---

स्वामिन इति । इदमधिकरणं प्रासङ्गिकम् । उपासनानुष्ठात्रननुष्ठातृविभागप्रसङ्गेन उद्गीथोपासनादेः अनुष्ठात्रननुष्ठातृविभागचिन्ता क्रियत इति सङ्गतिः । क्रत्वङ्गाश्रयाण्युपासनानि किं यजमानकर्तृकाणि ? उत ऋत्विक्कर्तृकाणि ? । किं दहराद्युपासनानामिव फलिकर्तृकत्वं न्याय्यम् ? उत गोदोहनादेरिव ऋत्विक्कर्तृकत्वम् ? । किं गोदोहनादिषु ऋत्विक्कर्तृकत्वम् , यजमानेनाऽशक्योपादानतया ? उत साङ्गप्रधानानुष्ठानाय ऋत्विक्परिक्रयश्रवणात् ? ॥ अशक्यतया चेत् ! तदभावात् फलिकर्तृकत्वोपपत्तेः, यजमानकर्तृकत्वम् । परिक्रयश्रवणाच्चेत् ! गोदोहनादीनामिव न्याय्यत्वात् ऋत्विक्कर्तृकत्वम् । कर्माङ्गाश्रयाणीति, उपासनस्य कर्माङ्गत्वं मा भूदित्येतदर्थमुक्तम् ।

---

[सूत्रार्थः । स्वामिनः—उद्गीथाद्युपासनं यजमानकार्यमेव, फलश्रुतेः—उपासनफलस्य श्रुत्या अवगतेः क्रियाफलयोः एकाश्रयतायाः न्याय्यत्वात् ॥]

'उद्गीथोपासनं चात्र यजमानस्य युज्यते । कर्त्रैव फलश्रुत्येरयात्रेयो दहरादिवत् ॥' (ब्र प. 462)

---

[1] दहरविद्यासु—द.

[अङ्गाश्रयत्वादुपासनस्य यजमानकार्याभावत्वशङ्का-निरासौ]

न च-गोदोहनादिवत् अङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः ; गोदोहनादिषु[1]-हि ! अध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानम् , अन्येनाऽशक्यम् । इह तु उद्गातृ-'कर्तृकेप्युद्गीथे[2]', तस्य उद्गीथादेः रसतमत्वानुसन्धानं, यजमानेनैव कर्तुं शक्यते ॥४४॥

[औडुलोमिमतेन सिद्धान्तवर्णनम् ]

इति प्राप्ते, अभिधीयते—

## ४६३. आर्त्विज्यमित्यौडुलोमिस्तस्मै हि ! परिक्रीयेत ॥ ३-४-४५ ॥ (सि)

आर्त्विज्यम्—ऋत्विजः कर्म उद्गीथाद्युपासनम्—इति औडुलोमिराचार्यो मन्यते । कुतः ? तस्मै हि प्रयोजनाय ऋत्विक् [3]परिक्रीयते[3] ; फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः । कर्मविधिषु—

'ऋत्विजो वृणीते' (तै.सं. 6–3–2)

'ऋत्विग्भ्यो दक्षिणां ददाति' (कल्प. ? )

इति ऋत्विक्कर्तृकत्वशास्त्रेण, 'फलसाधनभूतं साङ्गं कर्म, ऋत्विग्भिरनुष्ठेयम्'—इत्यवगम्यते । तदन्तर्गतानि कायिकानि मानसानि च कर्माणि, ऋत्विक्कर्तृकाण्येव । न च शक्त्यशक्ती तस्य निबन्धनम् ॥

---

न चेति । प्रणयनस्याऽध्वर्युकर्तृकत्वात् तदाश्रयस्य गोदोहनस्योपादानं, यजमानेन फलाश्रयभूतेनाऽपि कर्तुमशक्यम् । अत्र तु शक्यत्वात् फलाश्रय एव कर्तेत्यर्थः ॥ ४४ ॥

तस्मै हीत्यादि, चतुर्थीव्याख्यानम् । फलेत्यादि, तच्छब्दव्याख्यानम् । न चेति ।

---

सूत्रार्थः । हि—यतः, तस्मै —साङ्गसफलक्रतोः स्वीयत्वापादनाय; परिक्रीयते—ऋत्विक् दक्षिणया स्वायत्तीक्रियते ; अतः आर्त्विज्यमिति—उद्गीथोपासनं ऋत्विक्कार्यमिति, औडुलोमिः— मुनिर्मन्यते ॥]

'ऋत्विग्भिः कार्यमित्येव ह्यौडुलोमिमुनेर्मतम् । साङ्गानुष्ठितये चैव तेषां वरणमिष्यते ॥' (ब्र प. 463)

---

[1] दिषु—ना. [2] कर्तृकत्वेप्युद्गीथे—थ. [3] क्रियते—च.

[पुरुषार्थत्व-ऋत्विक्कर्तृकत्वयोरविरोधः]

यद्यपि—उद्गीथाद्युपासनं पुरुषार्थः ; तथापि—[1]क्रत्वधिकृताधिकारत्वात्[1], क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात्,

'यदेव विद्यया करोति....तदेव वीर्यवत्तरम्' (छां.उ. 1-1-10)

इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायाः तदेक[2]कर्तृकत्व[2]श्रवणात्, ऋत्विक्कर्तृकाण्येतानि । दहरादिषूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात्,

'शास्त्रफलं प्रयोक्तरि' (पू.मी.सू. 3-7-18)

इति न्यायाच्च, फलिकर्तृकत्वमेव ॥ ४५ ॥

इति स्वाम्यधिकरणम् ॥ ११ ॥

—o—

---

नहि ऋत्विजा अन्येन क्रियमाणम्, अन्येन कर्तुमशक्यम् । तस्माद्वचननिबन्धनं गोदोहने एककर्तृकत्वमित्यर्थः ।

यद्यपि ...षार्थ इति । अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वम् ; नेदमङ्गम्—इत्याशयः । क्रत्वधिकृतेति । ऋत्विक्कर्तृककर्मोपयोगित्वेन प्रोक्षणादिवत् इदमपि ऋत्विक्कर्तृकम् ; अग्र्यप्रायन्यायात्—इत्यभिप्रायः ॥ यदेव....ण्येतानि इति । ऋत्विक्कर्तृककर्मणो वीर्यवत्तरत्वसाधनभूतायाः विद्यायाः कर्त्रपेक्षायाम्, अन्तरङ्ग-बहिरङ्गन्यायेन आसन्नर्त्विक्कर्तृकत्वं न्याय्यमिति, न्यायोपेतात् 'विद्यया करोती'ति वाक्यस्वारस्याच्च, उद्गीथाद्युपासनानि ऋत्विक्कर्तृकाणीत्यर्थः ॥ दहरादिष्विति । [तत्र] ऋत्विक्कर्तृकत्वाश्रवणं वैषम्यमित्यर्थः । तच्छ्रवणम् अन्यत्र फलिकर्तृकर्तृकत्वस्यापवादकम् ॥ ४५ ॥

[सूत्र—१. स्वामिनः,     २. आर्त्विज्य ।]

इति स्वाम्यधिकरणम् ॥ ११ ॥

—o—

[1] क्रत्वधिकारत्वात्—द.        [2] कर्तृकत्वा—त. थ.

(120) सहकार्यन्तरविध्यधिकरणम् ॥ ३-४-१२ ॥ (सू. 46-48)

[अधि-अर्थः—'अथ मुनिः' इति मौनरूपस्य विद्यासहकार्यन्तरस्य विधानमेव ; नाऽनुवादः]

## ४६४ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३-४-४६ ॥ (सि)

[विचारणीयविषय-संशययोः प्रदर्शनम् ]

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्य, अथ मुनिः' (बृ.उ. 5-5-1)

इत्यत्र, बाल्य-पाण्डित्यवत् [1]मौनमपि[1] विधीयते ? उत अनूद्यते ?—इति विशये,

---

सहेत्यादि । पूर्वं यज्ञादिः शमादिश्च विद्यासहकारी निरूपितः । इदानीं सहकार्यन्तरं निरूप्यते—इति सङ्गतिः । अधिकरणान्तराणि तु सङ्गतिविशेषप्राप्तानि । मननस्य प्रवृत्तिरूपत्वेऽपि, ध्यानालम्बनशुभाश्रयगोचरत्वेन, अतद्गोचरेभ्यो यज्ञादिभ्यश्च विलक्षणत्वात्, अतद्गोचरत्वसाधर्म्येण यज्ञादीन् शमादींश्च निरूप्य, पश्चान्मननं निरूप्यते । शुभाश्रयगोचरत्ववैलक्षण्यात् यज्ञादेः शमादेश्च मध्ये निरूपणाभावः । विद्यासहकारित्वसाम्यात् तदुभय-तदनुबन्धिचिन्तानन्तरं निरूपणं प्राप्तम्—इत्युक्तं भवति ॥

किमस्मिन् वाक्ये मौनं विधीयते ? उत अनूद्यते ?—इति । किं पाण्डित्यमेव मौनम् ? उत अर्थान्तरं मननरूपम् ?—इति । किं मननं विधातुं योग्यम् ? उत न ?—इति । किं मननस्य यज्ञादिश्रुतिविरोधोऽस्ति ? उत न ?—इति । किं मननं

---

[सूत्रार्थः । तद्वतः—विद्यानिष्ठस्य, सह....विधिः—अथ मुनिरिति मौनरूपम् अन्यत् विद्यासहकारि बाल्य-पाण्डित्याभ्यां सह विधीयमानं भवति, विध्यादिवत्—यज्ञादय इव श्रवण-मनने इव च, तृतीयं—मौनमिदं तृतीयं भवति, (इदं चार्थकल्पनं) पक्षेण—मनुशब्दस्य प्रकृष्टमननशीले प्रयोगस्य शिष्टपरिगृहीतत्वरूपेण ज्ञापकेन युक्तं भवति ।]

यज्ञादिवन्मौनं विद्यावत्सु विधीयते । प्रकृष्टं मननं शब्दाद्बाल्य-पाण्डित्ययोः परम् ।। ((ब्र.प. 464)

---

[1] मौन—द.

[युक्तितः पूर्वः पक्षः]

'मौन-पाण्डित्य' शब्दयोः ज्ञानार्थत्वात्, 'पाण्डित्यं निर्विद्य' इति विहितमेव ज्ञानम्, 'अथ मुनिः' इत्यनूद्यते। विधिशब्दो न ह्यत्र श्रूयते—इति।

[सूत्रतः सिद्धान्तार्थदर्शनम्]

एवं प्राप्ते, ब्रूमः—सहकार्यन्तरविधिः—इति। तद्वतः—विद्यावतः। विध्यादिवत्। विधीयत इति, यज्ञादिः सर्वाश्रमधर्मः, शम-दमादिश्च 'विधि'शब्देनोच्यते। 'आदि'शब्देन श्रवणमनने गृह्येते। 'सहकार्यन्तरविधि'रित्यत्रापि, विधीयत इति विधिः। सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः।

[सनिदर्शनं विधित्वविशदीकरणम्]
[सूत्रवाक्यार्थश्च]

एतदुक्तं भवति—[1]यथा,

'तमेतं[1] वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन [2]दानेन[2]' (बृ.उ. 6-4-22) इत्यादिना,

---

कर्मानुष्ठानप्रतिक्षेपकम्? उत न?—इति। स्वप्रकरणे प्रकरणान्तरे च कतिपयाश्रमधर्मानुक्तिः, मननस्य कर्मानुष्ठानप्रतिक्षेपकत्वमुपोद्बलयति? न?—इति किं कतिपयोक्तिः अनुक्तानादरमूलैव स्यात्? उत अनुक्तप्रदर्शनार्था च स्यात्?—इति॥ यदा कतिपयोक्तिः अनुक्तानादरमूलैव स्यात्! तदानीं तत्तत्प्रकरणभेदेन सर्वाश्रमधर्माणामनुक्तत्वाविशेषात्, अनादरगर्भा तदनुक्तिः, मननस्य आश्रमधर्मप्रतिक्षेपकत्वमुपोद्बलयतीति, तत्प्रतिक्षेपकत्वे मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वात्, मौनशब्दः मननपरत्वायोगेन प्राप्तपाण्डित्यानुवादीति, मौनमनूद्यत इति फलं स्यात्। यदा कतिपयोक्तिः अनुक्तप्रदर्शनार्थाऽपि भवेत्; तदानीं तत्तत्प्रकरणभेदेन आश्रमधर्माणामनुक्तत्वाविशेषेऽपि अनुक्तेरनादरगर्भत्वाभावात्, तदुक्तिः मननस्य आश्रमधर्मप्रतिक्षेपकत्वं न उपोद्बलयतीति, मननस्य तदप्रतिक्षेपकतया, यज्ञादिश्रुतिविरोधाभावेन विधातुं योग्यत्वात्, 'मौन' शब्दः न वाक्यान्तरप्राप्तपाण्डित्यानुवादीति, मौनस्य विधेयत्वं फलं स्यात्॥ **तृतीयम्—मौनम्, सहकार्यन्तररूपो विधिः—**सहकारित्वेन

---

[1] तमेतं—न. [2] दानेन तपसाऽनाशकेन—वा.

'शान्तो दान्तः' (बृ.उ. 6-4-23)

इत्यादिना च, सहकारी यज्ञादिः शमदमादिश्च विधीयते ; यथा च,

'श्रोतव्यो मन्तव्यः' (बृ.उ. 4-4-5)

इति श्रवण-मनने च अर्थप्राप्ते विद्यासहकारित्वेन गृह्येते ; तथा,

'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य' (बृ.उ. 5-5-1)

इत्यादिना, 'पाण्डित्यं, बाल्यं, मौनम्' इति त्रितयम् विद्यायाः सहकार्यन्तरं विधीयते—इति ॥

[मौनं पाण्डित्यादितरत् ]

मौनं च, पाण्डित्यादर्थान्तर[1]मित्याह[1]—पक्षेण—इति । 'मुनि'शब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात्, मौनं पाण्डित्य-[2]बाल्ययोर्द्वयोः[2] तृतीयम् ॥

---

विधेयम् । [विध्यादिवत्—] यज्ञदानशमदमादिवत् । पक्षेण....दर्शनात् इति, सूत्रार्थः । मौन....नार्थत्वादिति । 'मौन' शब्दस्य मननार्थत्वात्, मननस्य श्रवणप्रतिष्ठार्थज्ञानविशेषरूपत्वात्, 'पण्डित' शब्दस्य विद्वद्विषयताप्रसिद्धेश्च, 'मौन-पाण्डित्य' शब्दयोः ज्ञानार्थत्वम् । विद्यासहकारित्वेति । अत एव विध्यादिवदिति दृष्टान्तोपादानं सहकार्यन्तरत्वांश एव ; न तु विधित्वांशेपीति भावः । सहकार्यन्तरविधित्वांशे विध्यादेः दृष्टान्तत्वं वक्तव्यमिति अभिलाषः ; तदा विध्यादिवदित्यस्य बाल्यपाण्डित्यवदित्यर्थो वर्णनीयः ; तयोः मौनविध्यादित्वादिति द्रष्टव्यम् ॥

पक्षेणेत्यादि । पक्षेणप्रयोगः—पाक्षिकः प्रयोगः । यद्वा, पक्षः-परिग्रहः । 'पक्ष-परिग्रहे' इति धातुः । आदरेण स्वीकारः । तेन हि मननं प्रकृष्यते । प्रकर्षश्च मननस्य, स्नेहपूर्वकतया चिरविरहितनायिकायाः नायकविषयस्येव निरन्तरमनुवर्तमानत्वरूपः । तादृशं च मननम्-उपासनालम्बनस्य शुभाश्रयस्य भगवद्विग्रहादेः पुनः पुनः संशीलनम् । तदपि विद्यानिष्पत्त्यर्थमेव । सति ह्यस्मिन् । उपासनकालेऽपि तद्विषयचित्तैकाग्र्यात् विद्या दृढीभवति । अन्यथा उपासनकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशात्, न विद्या दृढीभवेदिति भावः (भा.प्र.) ॥]

---

[1] आह—ध. [2] बाल्ययोः—द.

[विधिप्रत्ययाश्रवणेऽपि मौनस्या ।प्राप्तत्वाद्विधित्वम् ]

यद्यपि—'अथ मुनिः' इत्यत्र विधिप्रत्ययो न श्रूयते ; तथापि, मौनस्या-प्राप्तत्वात् विधेयत्वमङ्गीकरणीयम्—'अथ मुनिः स्यात्'—इति । इदं च मौनं, श्रवणप्रतिष्ठार्थात् मननादर्थान्तरभूतम् उपासनालम्बनस्य पुनः पुनः संशीलनं तद्भावना-रूपम् ॥

[वाक्यार्थनिगमनम् ]

तदेवं वाक्यार्थः—ब्राह्मणः-विद्यावान् , पाण्डित्यं निर्विद्य-उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा, श्रवण-मनना[1]भ्यामप्राप्त[1]वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्भक्ति[2]सहकृत[2]सत्त्व[3]विशुद्धि[3]कृतम् । यथोक्तम्—

'नाऽहं वेदैः' भ.गी. 11–53)

इत्यारभ्य,

'भक्त्या त्वनन्यया शक्यः....ज्ञातुम् ' (भ.गी. 11–54)

इति । श्रुतिश्च—

'यस्य देवे परा भक्तिः' (श्वे.उ. 6–23)

'नायमात्मा[4]प्रवचनेन लभ्यः[4]' (कठ.उ. 2–23)

इत्यादिका । 'बाल्येन तिष्ठासेत् ' । बाल्यस्वरूपं च अनन्तरमेव वक्ष्यते । 'बाल्यं च पाण्डित्यं च निर्विद्य अथ मुनिः स्यात् ' बाल्य-पाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेत् ; निदिध्यासनरूपविद्यावाप्तये । एवमेव त्रितयोपादानेन लब्धविद्यो भवतीत्याह—

'अमौनं मौनं च निर्विद्य, अथ ब्राह्मणः' (बृ.उ. 5-5-1)

इति । अमौनम्—मौनेतरसहकारिकलापः । तं च मौनं च यथावदुपाददानः, विद्या-काष्ठां तदेकनिष्पाद्यां लभेतेत्यर्थः ।

---

[पाण्डित्यम्—ऊहापोहक्षमा धीः—पण्डा । साऽस्य सञ्जातेति पण्डितः । तस्य कर्म-पाण्डित्यम् । श्रवणमननानन्तरं तदभ्यासपाटववशात् लब्धया ऊहापोहक्षमया

---

[1] भ्यां प्राप्त—ग.
[2] कृत — च.
[3] शुद्धि—थ.
[4] प्रवचनेन— च.

'स ब्राह्मणः केन स्यात् ?' (बृ.उ. 5-5-1)

इति, 'उक्तादुपायात् किमन्योऽप्युपायोऽस्ति ?' इति पृष्टे,

'येन स्यात् तेनेदृश एव (बृ.उ. 5-5-1)

इति, 'येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्तम् , तेनैवेदृशः स्यात् ; न केनाऽप्यन्येनोपायेन' इति परिहृतम् । अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषः, यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते ॥ ४६ ॥

[विद्यायाः सार्वाश्रमिकत्वात् गृहिणोपसंहारौचित्यम् ]

अथ स्यात्—यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां, तत्तदाश्रमधर्मसहकारिणी मौनतृतीयसचिवा विद्या, ब्रह्मप्राप्तिसाधनमुच्यते ; कथं तर्हि छान्दोग्ये—

' अभिसमावृत्य कुटुम्बे शुचौ देशे ' (छां.उ. 8-15-1)

इत्यारभ्य,

' स खल्वेवं वर्तयन् यावदायुषं [1]ब्रह्मलोकमभि[1]सम्पद्यते, न च पुनरावर्तते ' (छां.उ. 8-15-1)

इति, यावदायुषं गार्हस्थ्यधर्मेण [2]स्थितिदर्शनमुप[2]पद्यते ? [3]अत आह[3]—

## ४६५. कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३-४-४७ ॥ (सि)

---

नवनवोन्मेषशालिन्या प्रतिभया श्रुतयथार्थानुकूल्येन सार्वकालिकोपनिषत्तात्पर्यप्रतिष्ठापनरूपम् (भा.प्र.) ] ॥ ४६ ॥

[ यावदायुषमिति । ' यावत् आयुः यस्य ' इति बहुव्रीहिणा ' यावदायुः ' शब्दः कालपरः । ' कालाध्वनोः ' इति तृतीया (भा.प्र.) । ]

---

[सूत्रार्थः | कृत्स्नेषु—सर्वेष्वप्याश्रमेषु, भावात्तु—ब्रह्मविद्यायाः सद्भावादेव, गृहिणा—सर्वाश्रमान्तःपातिना गृहस्थाश्रमिणा, उपलक्षणतयोक्तेन, उपसंहारः—' अभिसमावृत्य कुटुम्बे ' इत्यादिना ब्रह्मप्राप्तिविचारसमापनम् । ]

'गृहिणा चोपसंहारः स खल्वेवमिति श्रुतौ । सर्वेषामपि विद्याया भावात् तेषां च लक्षकः ॥' (ब्र.प. 465)

---

1 ब्रह्मलोकं—थ. 2 स्थितिरुप—त. थ. 3 इति । अत्राह—वा.

'तु' शब्दः चोद्यं [1]व्यावर्तयति[1]। [2]कृत्स्नभावात्—कृत्स्नेषु भावात्[2]। कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् गृहीणोऽप्यस्तीति, तेनोपसंहारः। तस्मात् सर्वाश्रमधर्मप्रदर्शनार्थः गृहिणा उपसंहारः—इत्यभिप्रायः ॥ ४७ ॥

[सर्वाश्रमिधर्माणां विद्याङ्गताप्रदर्शनम्]

तथा, एतस्मिन्नपि वाक्ये,

'[3]ब्राह्मणाः[3] पुत्रेषणायाश्च वित्तषणायाश्च [4]लोकेषणा[4]याश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति' (बृ.उ. 5-5-1)

इति पारिव्राज्यकान्तधर्मं प्रतिपाद्य,

'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य' (बृ.उ. 5-5-1)

इत्यादिना पारिव्राज्य[5]धर्मस्थिति[5]हेतुकमौन[6]तृतीय[6]सहकारिविधानं प्रदर्शनार्थमित्याह—

४६६. **मौनवदितरेषामप्युपदेशात्** ॥ ३-४-४८ ॥ (सि)

---

प्रदर्शनार्थः—उपलक्षणार्थः। यथा छान्दोग्ये गृहस्थधर्मकीर्तनम्, इतराश्रमधर्मोपलक्षणार्थम्; एवं बृहदारण्यके भिक्षाचर्यं चरन्तीति सन्यासिधर्मकीर्तनम् आश्रमधर्मान्तरोपलक्षणार्थमित्याशयः ॥ (शा.शा.) ॥ ४७ ॥

मौनवदिति। अत्र'मौन'शब्देन, मौनसममिव्याहृतसन्यासिधर्मभूतभिक्षाचरणादिकं लक्ष्यते। मौनवत्—संन्यासिधर्मवत्, इतरोप्याश्रमधर्मो विद्याङ्गमित्यर्थः ॥ (शा.शा.)

---

[सूत्रार्थः। **मौनवत्**—'अथ मुनिः' इत्यादिना भिक्षाचरणपूर्वकमौनोपदेशवत्, **इतरेषामपि**—अन्येषामाश्रमिणामपि, **उपदेशात्**—'ब्रह्मसंस्थोऽमृतत्वमेतीति' ब्रह्मविद्याया अमृतत्वप्राप्तेश्च उपदेशाज्ज्ञापकात्, सर्वोऽप्याश्रमधर्मो विद्याङ्गम्।]

'मुनौ भैक्षादिनिर्देशोऽप्यन्येषामुपलक्षकः। यज्ञादीनां च धर्माणामुपदेशादिति स्थितम्॥' (ब्र.प. 466)

---

[1] व्यावर्तत इति—श्रा. [2] कृत्स्नभावात्—त. थ. [3] ब्राह्मणः—च.
[4] सर्वेषणा—त. थ. [5] स्थिति—द. [6] तृतीयं—द.

सर्वेषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः, सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः। कुतः? एवंविधमौनोपदेशवत्, इतरेषा[1]माश्रमिणामपि[1],

'त्रयो धर्मस्कन्धाः' (छां.उ. 2-23-1)

इत्यारभ्य,

'ब्रह्मसंस्थोऽमृतत्वमेति' (छां.उ. 2-23-1)

इति ब्रह्मप्राप्त्युपदेशात्। [2]उपपादितश्च[2]पूर्वमेव, 'ब्रह्मसंस्थशब्दः [3]सर्वाश्रमि[3]साधारणः'—इति। अतः सुष्ठूक्तम्—यज्ञादि सर्वाश्रमधर्मवत्, मौनतृतीयः पाण्डित्यादिः विद्यासहकारित्वेन विधीयते—इति ॥ ४८ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

—o—

---

एवंविधमौनोपदेशवत्—सर्वेषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशवत् इत्यर्थः॥४८॥

[सूत्राणि—१. सहकार्यन्तर, २. कृत्स्नभावा, ३. मौनवदि]

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

—o—

---

[1] माश्रमिधर्मांगावपि—न. [2] उपपादितम् च—द. [3] सर्वाश्रम—त.थ.

## (121) अनाविष्काराधिकरणम् ॥ ३-४-१३ ॥

[अधिकरणार्थः—'बाल्येन तिष्ठासे'दिति विद्यासहकारित्वेन विहितबाल्यस्वरूपम् ]

### ४६७. अनाविष्कुर्वन्नन्वयात् ॥ ३-४-४९ ॥

[अधिकरणीयौ विषय-संशयौ]

[1] 'तस्माद्ब्राह्मणः[1] पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ.उ. 5-5-1) इत्यत्र, विदुषा बाल्यमुपादेयतया श्रुतम् । बालस्य भावः [2]कर्म वा[2] बाल्यम् । बाल[3]भावस्य[3] वयोव[4]स्थाविशेष[4]स्य अनुपादेयत्वात्, कर्मैवेह गृह्यते ।

तत्र किं बालस्य कर्म काम[5]चारादिकं[5] सर्वं, विदुषा उपादेयम्? उत डम्भादि-[6]रहितत्वमेव[6]?—इति विशये,

[सयुक्तिकः पूर्वः पक्षः]

विशेषाभावात् सर्वमुपादेयम् । नियमशास्त्राणि च, विशेषविधिनाऽनेन बाध्यन्ते;—इति,

[सूत्रतः सिद्धान्तवर्णनम् ]

एवं प्राप्ते, अभिधीयते—अनाविष्कुर्वन्—इति । बालस्य यत् [7]स्वभावा[7]नाविष्कार-

---

अनेति । सङ्गतिः स्फुटा । बाल्योपादाने, किं कामचारादिकमप्युपादेयम्? उत माहात्म्यानाविष्करणमेव? । बाल्यशब्दः किं सर्वबालकर्मपरः? उत माहात्म्यानाविष्कार-रूपबालस्वभावविशेषपरः? । 'नाविरतः' इत्यादिश्रुतिः किं बाल्यशब्दस्य अनाविष्कारपरता-मवगमयति? न?—इति । न चेत्! सर्वबालकर्मपरतया बाल्यशब्दस्य, कामचारादेरुपा-देयत्वम् । अवगमयति चेत्! अनाविष्कारपरतया बाल्यशब्दस्य, डम्भादिराहित्यमेव उपादेयं स्यात् ॥

नियमेति । नियमशास्त्राणि ब्रह्मविद्यातिरिक्तविषयाणीति भावः । बालस्येति ।

---

[सूत्रार्थः । अनाविष्कुर्वन्—विद्वान् स्वीयपाण्डित्यादियोग्यताविशेषाप्रकटनरूपं बाल-भावमाश्रयन् वर्तेत, अन्वयात्—तादृशबालभावस्यैव विद्यया सह सामानाधिकरण्येन योग-संभवात् । ]

अनाविष्करणं स्वस्य महिम्नो बाल्यमुच्यते । विद्यया चान्वयात्तस्य तथान्यस्याप्यनन्वयात् ॥ (ब्र.प. 467)

---

[1] तस्मात् .... —थ. [2] कर्म —ख. छ [3] भाव —द. [4] स्थादिविशेष—न.
[5] चारादि—द. न. [6] रहितमेव—बा. [7] स्वस्वभावा—द.

रूपं कर्म, तदुपाददानो वर्तेत विद्वान् ।

कुतः ? '[1]अन्वयात्—तस्यैव अन्वयात्' । 'बाल्येन तिष्ठासेत्' इत्यस्मिन् विधौ, तस्यैव हि ! अन्वयसम्भवः; इतरेषां विद्याविरोधित्वश्रवणात्;

'नाऽविरतो दुश्चरितान्नाशान्तो नाऽसमाहितः ।

नाऽशान्तमानसो वाऽपि [2]प्रज्ञानेनैन[2]माप्नुयात् ॥' (कठ.उ. 2–24)

'आहारशुद्धौ सत्त्वशुद्धिः' (छां.उ. 7–26–2)

इत्यादिषु ॥ ४९ ॥

इति अनाविष्काराधिकरणम् ॥ १३ ॥

—o—

---

स्वभावः—अभिजनशुद्ध्यादिः । नियमशास्त्राणां ब्रह्मविद्व्यतिरिक्तविषयत्वं परिहृतम्; एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थः ॥ ४९ ॥

इति अनाविष्काराधिकरणम् ॥ १३ ॥

—o—

---

[1] अन्वयात्—थ. [2] प्रज्ञानेनैव—क.

(122) ऐहिकाधिकरणम् ॥ ३-४-१४ ॥

[अधिकरणार्थः—उपासनस्य निरन्तरायत्वे फलशैघ्र्यम् । सान्तरायत्वे विलम्बः]

## ४६८. ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३-४-५० ॥ (सि)

[विचारणीयविषयसंशयौ]

द्विविधा विद्या ; अभ्युदयफला मुक्तिफला च । तत्र अभ्युदयफला, स्वसाधनभूतैः पुण्यकर्मभिः, [1]पुण्यकर्मा[1]नन्तरमेव उत्पद्यते ? उत अनन्तरं, [2]कालान्तरे वा[2] इत्यनियमः ?—इति संशयः ।

[युक्त्या पूर्वः पक्षः]

[3]पूर्वकृतैः[3] पुण्य[4]कर्मभिर्हि[4] ! विद्वान् जायते । यथोक्तं भगवता—

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन' (भ.गी. 7-16)

इति । साधने निर्वृत्ते विलम्बहेत्वभावात्, अनन्तरमेव—

[सूत्रतः सिद्धान्तार्थः]

इति प्राप्ते,

उच्यते—ऐहिक[5]मप्रस्तुतप्रतिबन्धे—इति[5] । ऐहिकम्—अभ्युदयफलमुपासनम्,

---

ऐहिकमिति । [पूर्वम्] अङ्गचिन्ता कृता । अङ्गिनिष्ठासिद्धिसमयो निरूप्यते—इति सङ्गतिः । किम् ऐहिकफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यते ? उत अनन्तरं कालान्तरे वा इत्यनियमः ? किं तदुत्पत्तेः प्रतिबन्धः सम्भवति ? न ?—इति । न चेत् !

---

[सूत्रार्थः । अप्रस्तुतप्रतिबन्धे—प्रबलकर्मान्तरतः अन्तराये अप्राप्ते सति, ऐहिकम्—एतज्जन्मभवमेव कर्मणां फलम्, तद्दर्शनात्—तस्यैतस्यार्थस्य 'यदेव विद्यया' इति श्रुतौ दर्शनात् ।]

'अप्रस्तुते प्रतीघाते तदैव ध्यानमैहिकम् । अन्यथा त्वन्यदैवेति ध्यानोत्पत्तावनिर्णयः ॥' (ब्र.प. 467)

---

[1] पुण्या—द. कर्मा—व.
[2] कालान्तरे च—त. थ.
[3] पूर्वप्रकृतैः—द.
[4] कर्मभिः—द.
[5] मप्रस्तुतेति—त. थ.

अप्रस्तुतप्रतिबन्धे—अप्रस्तुते, प्रबलकर्मान्तरप्रतिबन्धे असति, अनन्तरम्; 'प्रतिबन्धे'[1] सति तदुत्तरकालमिति अनियमः।

कुतः? तद्दर्शनात्—दृश्यते हि! '[2]प्रबल'कर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ—

'यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरम्' (छां.उ. 1-1-10) इति, उद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥

इति ऐहिकाधिकरणम् ॥ १४ ॥

—o—

---

…ानन्तर्यनियमः। सम्भवे तु अनियमः। उद्गीथाद्युपासनरहितयज्ञादिसुकृतैः विद्यानिष्पत्तौ अयं विचारः ॥ ५० ॥

इति ऐहिकाधिकरणम् ॥ १४ ॥

—o—

---

[1] अप्रतिबन्धे—म. [2] प्रबलेन—वा.

(123) मुक्तिफलाधिकरणम् ॥ ३-४-१५ ॥

[अधिकरणार्थः—विद्यानिष्पत्तिं प्रति ब्रह्मविदपचारस्य प्रतिबन्धकत्वम् ]

## ४६९. एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ३-४-५१ ॥ (सि)

[सूत्रविवृतिः, अधिकाशङ्का-परिहारौ च]

मुक्तिफलस्याऽपि उपासनस्य, स्वसाधनभूतैः अतिशयितकर्मभिः उत्पत्तौ, एवमेव कालानियमः ; तस्याऽपि पूर्ववत् प्रतिबन्धभाव-प्रति[1]बन्धा समाप्तिरूपावस्थाव(ग)धृतेः। "अत्राऽपि[2] तस्य हेतोः समानत्वादित्यर्थः।

[3]सर्वेभ्यः कर्मभ्यः[3] मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात्, प्रतिबन्धासम्भवः—इति, अधिकाशङ्का। तत्राऽपि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां

---

एवमिति। सङ्गतिः स्फुटा। किं मुक्तिफलमुपासनं, स्वसाधनकर्मानन्तरमेवोत्पद्यते ? उत अनन्तरं, कालान्तरे वेति अनियमः ?। किं परविद्यासाधनात् कर्मणः प्रबलकर्मान्तरं सम्भवति ! न ? इति असम्भवे नियमः। सम्भवे तु अनियमः—इति।

'मुक्तिफल'शब्दो बहुव्रीहिः। उद्गीथाद्युपासनरहितयज्ञादिनिष्पाद्यपरविद्यानिष्पत्तिविषयः अयं विचारः। तस्य हेतोः—पूर्वत्रोक्तहेतोः।

सर्वेभ्य इत्यादि। भगवत्प्रीत्यतिशयहेतुत्वेन प्राबल्यात्, न तत्प्रतिबन्धकमस्तीति

---

[सूत्रार्थः। एवम्—उक्तया रीत्यैव, मुक्तिफलानियमः—मोक्षैकफलकविद्यास्वपि एतज्जन्मलभ्यत्वनियमो नास्त्येव। तदवस्थावधृतेः—प्रतिबन्धक-तन्निरासरूपावस्थायाः अविशेषतोऽत्रापि सम्भवात्।]

'एवं मुक्त्यर्थविद्याया उत्पत्तावप्यनिर्णयः। ब्रह्मनिष्ठापचारादेरभावे तदवस्थितेः॥' (ब्र.प. 469)

---

[1] सम्प्राप्ति—वा. रूपावस्थावगतेः—त. थ. [2] तत्राऽपि—द.
[3] सर्वेभ्यः—द.

[1]सम्भवात्[1] प्रतिबन्धसम्भवः—इति परिहारः। द्विरुक्तिः, अध्यायपरिसमाप्तिं द्योतयति ॥ ५१ ॥

इति मुक्तिफलाधिकरणम् ॥ १५ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य

चतुर्थः पादः ॥ ४ ॥

समाप्तश्च साधनाख्यः तृतीयोऽध्यायः ॥ ३ ॥

गुरुपरम्परायै नमः। श्रीमते रामानुजाय नमः। श्रियै नमः। श्रीधराय नमः ॥

श्रीः

—o—

---

शङ्का। ब्रह्मविदपचारः प्रतिबन्धकः—इति परिहारः ॥ ५१ ॥

इति मुक्तिफलाधिकरणम् ॥ १५ ॥

इति चतुर्थः पादः। तृतीयश्चाध्यायः ॥

प्राज्ञैः पूर्वैर्ग्रथितव्याख्यायुक्ताः समाश्रित्य। लघ्वी टिप्पन्येषा सुयोजिताऽध्येतृलाभाय ॥

—o—

---

[1] सद्भावात्—द.

श्रीः

# श्रीभाष्यचतुर्थाध्याय-तद्गतपादानामर्थसूचनी

## चतुर्थः फलाध्यायः

अध्यायार्थः—विद्यास्वरूपविशोधनपूर्वकं विद्याफलचिन्ता

पादाः—४. अधिकरणानि—३३. सूत्राणि—७६.

१. **आवृत्तिपादः**

अधिकरणानि—११. सूत्राणि—१९.

पादार्थः—उपासनप्रकारचिन्ता, उत्तरपूर्वाघयोरश्लेषविनाशचिन्ता

२. **उत्क्रान्तिपादः**

अधिकरणानि—११. सूत्राणि—२०.

पादार्थः—ब्रह्मवेदिनो गतिप्रकारचिन्तायां प्रथममुत्क्रान्तिचिन्ता

३. **गतिपादः**

अधिकरणानि—५. सूत्राणि—१५.

पादार्थः—मोक्षार्थमनुष्ठितनिष्पन्नोपासनस्य हार्दानुग्रहात् मूर्धन्यनाड्यो-त्क्रान्तस्य परप्राप्तये गमनमार्गचिन्ता

४. **मुक्ति(फल)पादः**

अधिकरणानि—६. सूत्राणि—२२.

पादार्थः—ब्रह्मविदुषां अर्चिरादिना पथा गतानां मुक्तानां ऐश्वर्यप्रकारचिन्ता

—o—

॥ श्रीः ॥

## चतुर्थे फलाध्याये आदिमः आवृत्तिपादः ॥

(अधिकरणानि—११. सूत्राणि—१९)

[पादार्थः—मुमुक्षोः मोक्षार्थोपासनप्रकारस्य, विदुषः उत्तरपूर्वाघाश्लेष-विनाशप्रकारस्य च चिन्ता]

(124) १. **आवृत्त्यधिकरणम्** (सू. 1–2)

मोक्षोपायभूतस्य ध्यानापरपर्यायस्योपासनस्य नैरन्तर्य-पौनःपुन्याभ्यामसकृदावृत्ततैव शास्त्रार्थः

(125) २. **आत्मत्वोपासनाधिकरणम्** (सू. 3)

स्वशरीरं प्रति स्वात्मन इव, स्वात्मानं प्रत्यपि आत्मत्वात्परमात्मनः, उपासना अहङ्ग्रहेणैव ; न अन्यतया

(126) ३. **प्रतीकाधिकरणम्** (सू. 4–5)

मनआदिप्रतीकोपासने ब्रह्मदृष्टिरेव ; न आत्मत्वेनोपासना

(127) ४. **आदित्यादिमत्यधिकरणम्** (सू. 6)

क्रत्वङ्गेषूद्गीथादिषु आदित्यादिदृष्टिरेव कार्या ; न तु आदित्यादिषु उद्गीथादि-दृष्टिः

(128) ५. **आसीनाधिकरणम्** (सू. 7–11)

मोक्षार्थमुपासनं (ध्यानम्) आसीनेनैव कार्यम्

(129) ६. **आप्रयाणाधिकरणम्** (सू. 12)

मोक्षोपायभूतमुपासनम् आमरणं प्रत्यहमनुष्ठेयम्

(130) ७. **तदधिगमाधिकरणम्** (सू. 13)

मोक्षार्थोपायानुष्ठानपूर्तिमतो ब्रह्मविदः, उपासनपश्चाद्भाविनां प्राक्तनानां च पाप्मनां अश्लेषो विनाशश्च

(131) ८. **इतराधिकरणम्** (सू. 14)

ब्रह्मविदः पाप्मनामिव, पुण्यानामप्यश्लेषविनाशौ

(132) ९. **अनारब्धकार्याधिकरणम्** (सू. 15)

पूर्वोक्तौ पुण्य-पापयोरश्लेष-विनाशौ प्रारब्धेतरयोरेव

(133) १०. **अग्निहोत्राद्यधिकरणम्** (सू. 16–18)

नित्य-नैमित्तिककर्मणां फलाभिसन्धिराहित्येऽपि अवर्जनीयमनुष्ठानम्

(134) ११. **इतरक्षपणाधिकरणम्** (सू. 19)

ब्रह्मविदोऽपि प्रारब्धकर्मक्षयः, तत्फलभोगत एव

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

ॐ

# श्री भा ष्य म्

## श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## (4) चतुर्थः फलाध्यायः

[अधिकरणानि—३३. सूत्राणि १३७]

[अध्यायार्थः—विद्यास्वरूपविशोधनपूर्वकम् विद्याफलचिन्तनम् ]

## (13) प्रथमः आवृत्तिपादः ॥ ४–१ ॥

[अधिकरणानि 1–11 सूत्राणि 1–19]

[पादार्थः—उपासनप्रकारचिन्ता, पूर्वोत्तराघाश्लेष-विनाशौ च]

### (124) आवृत्त्यधिकरणम् ॥ ४–१–१ ॥ (सू. 1–2) (सि)

[अधिकरणार्थः—उपासनस्य असकृदावृत्तस्यैव मोक्षोपायता]

### ४७०. आवृत्तिरसकृदुपदेशात् ॥ ४-१-१ ॥

[अध्यायसङ्गतिः]

तृतीयेऽध्याये, साधनैः सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र,

---

तृतीय इति । तृतीये पादद्वयेन प्रथमम् उपासनोपयोगिबाह्यविषयवैतृष्ण्य-भगवत्तृष्णाजननहेतोर्निरूपणीयं हि ! निरूपितम् तृतीये विद्याभेदाभेदचिन्ता, चतुर्थे अङ्गचिन्तेति,

---

[सूत्रार्थः । (मोक्षसाधनस्य वेदनस्य) असकृदावृत्तिः—नैरन्तर्यपौनःपुन्ययुतबहुवारकर्तव्यता, (अविच्छिन्नस्मृतिसन्ततिरूपतैव) शास्त्रतात्पर्यविषयः, उपदेशात्—'ब्रह्मवित्' इति ध्यानपर्यायतया विदधातोः उपदेशात् ॥ ]

'आवृत्तमसकृच्चैव वेदनं सफलं भवेत् । ध्यानपर्यायशब्देन वेदनस्योपदेशतः ॥' (ब्र.प, 470)

[प्रस्तुतो विषयः, विचार्यांशश्च]

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)

'[1]तमेव' विदित्वाऽतिमृत्युमेति' (श्वे.उ. 3-8)

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड.उ. 3-2-9)

'यदा पश्यः पश्यते रुक्मवर्णम्' (मुण्ड.उ. 3-1-3)

इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनम्, किं सकृत्कृतमेव शास्त्रार्थः ? उत असकृदावृत्तम् ?—इति संशयः ॥

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम् ? सकृत्कृतम्—इति ।

कुतः ? ।

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड.उ. 3-2-9)

इति वेदनमात्रस्यैव विधानात्, असकृदावृत्तौ प्रमाणाभावात् ।

---

तृतीयाध्याये विद्यैव निरूपितेत्यर्थः । चतुर्थे फलमेव प्रधानतः प्रतिपाद्यम् । विद्याविषये पूर्वमनिरूपितांशश्च निरूप्यते; अस्य साध्यस्य इदं साधनमिति साध्यसाधनभावसम्बन्धज्ञापनार्थम्, भक्तिरूपापन्नज्ञानस्य प्रीतिरूपतया फलकोटिनिवेशज्ञापनार्थं च ॥ कर्मयोगापेक्षया च साध्यत्वमस्तीति, अत्र चिन्त्यते ।

संशय इति । किं वेदान्तविहितं वेदनं सकृत्कृतं शास्त्रार्थः ? उत असकृदावृत्तम् ? इति । किं 'ब्रह्मविदाप्नोती'त्यादिभिः वेदनमात्रं विधीयते ? उत निदिध्यासनम् ? किमत्र विदिशब्दो ज्ञानमात्रपरः ? उत उपासनपरः ? उपक्रमोपसंहाराभ्यां वाक्यान्तराच्च उपासनपरत्वं विदिशब्दे अवगम्यते ? न ? इति ।

न चेत् ! उपासनपरत्वाभावेन वेदनमात्रं विधीयत इति, सकृत्कृतं शास्त्रार्थः । अवगम्यते चेत् ! विदिशब्दस्य उपासनपरत्वात्, निदिध्यासनपरं वेदनं विहितमिति, असकृदावृत्तमेव(वेदनं)शास्त्रार्थः ॥

[प्रमाणाभावादिति । अत एव पूर्वतन्त्रे, फलभूमार्थिना प्रयाजादीनि पुनः पुनः

---

[1] तमेवम्—न.

[विषयसिद्धिं यावत् आवृत्तेः सिद्धिशङ्का]

[तन्निरासश्च]

न च— अवघातादिवत् , वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वात् , यावत्कार्यमावृत्तिः—इति शक्यं वक्तुम् ; वेदनस्य दृष्टोपायत्वाभावात् । 'ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनम् , परमपुरुषाराधनरूपम् । आराधिताच्च परमपुरुषात् , धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिः' इति हि ! 'फलमत उपपत्तेः' (ब्र.सू. 3–2–37) इत्यत्र प्रतिपादितम् । अतः —ज्योतिष्टोमादिवत् , यथाशब्दं सकृत्कृतमेव शास्त्रार्थः ॥

[सिद्धान्तः सूत्रार्थविवरणतः]

इति प्राप्ते, प्रचक्ष्महे—'आवृत्तिरसकृत् '—इति । असकृदावृत्तमेव वेदनं शास्त्रार्थः ।

[1]कुतः ? उपदेशात्[1]— 'ध्यानोपासनपर्यायेण [2]'वेदन' शब्देनो[2]पदेशात् । तत्पर्यायत्वं च, विद्युपास्तिध्यायतीनाम् एकस्मिन् विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते ॥ तथाहि !

'मनो ब्रह्मेत्युपासीत' (छा.उ. 3–18–1)

इति, उपासिना [3]उपक्रान्तोऽर्थः[3],

---

प्रयोज्यानीति, 'क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ' (पू.मी.सू. 11–.–26) इति पूर्वपक्षम् कृत्वा, सकृदनुष्ठानेनैव कार्यसिद्धेः, अङ्गमात्रावृत्तौ फलभूयस्त्वे प्रमाणाभावाच्च अनावृत्तिरिति, 'सकृद्वा कारणैकत्वात् ' (पू.मी.सू. 11–1–27) इति सिद्धान्तितमिति भावः ॥ अत एव–मोक्षरूपफले तारतम्याभावेन, 'कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भफलानि स्युः' (पू.मी.सू. 11–1–17) इति न्यायेन, 'फलभूमार्थतया काम्यानामावृत्तिवत् वेदनस्याप्यावृत्तिः' इत्याशङ्का परास्ता ।

न चेति । व्रीहीनवहन्ती'ति श्रुतस्यावघातस्य, 'दृष्टे सम्भवत्यदृष्टकल्पना अन्याय्ये'ति न्यायेन क्रत्वपेक्षिततण्डुलनिष्पत्त्यर्थत्वात् , तन्निष्पत्तेश्च अवघातावृत्तिमन्तरेणाऽसम्भवात् , अत्रनाऽपि अवघातावृत्तिः कार्या—इति, 'क्रियाणामर्थशेषत्वात् प्रत्यक्षे तन्निवृत्त्याऽपवर्गः स्यात् (पू. मी. सू. 11–1–24) इति साधितम् । तद्वदिति भावः ॥ भा.प्र.]

तत्पर्यायत्वं चेति । अत्र निमित्तभेदेप्येकार्थपर्यवसायित्वं पर्यायत्वं विवक्षितम् ॥

---

[1] उपदेशात्—ग. [2] वेदनो—घ. न. [3] उपक्रान्तार्थः—त.थ.

'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छां.उ. 3-18-3)
इति, विदिना उपसंह्रियते। तथा,

'यस्तद्वेद यत् स वेद स मयैतदुक्तः' (छां.उ. 4-1-4)
इत्युपक्रमे, विदिना उक्त रैक्वस्य ज्ञानम्,

'अनु म एतां भगवो देवतां शाधि! यां देवतामुपास्से' (छां.उ. 4-2-2)
इति, उपासिना उपसंह्रियते। तथा,

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)
इत्यादिवाक्यसमानार्थेषु वाक्येषु,

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. 4-4-5)

'ततस्तु तं पश्यति[1] निष्कलं ध्यायमानः' (मुण्ड.उ. 3-1-8)

---

**कीर्तिः**—परत्वविषयप्रथा। **यशः**—सौलभ्यप्रथा। ताभ्यां भाति, ब्रह्मवर्चसेन तपतीत्यर्थः। यथा भक्तिस्नेहौ परत्व-सौलभ्यविषयौ भिद्येते तथा कीर्ति-यशसी। 'स्नेहो मे परमो राजन्.... भक्तिश्च नियता वीर' इत्यत्र हि तथा दृश्यते। रञ्जनवाचिना 'राजन्'शब्देन 'वीर'शब्देन च स्नेह-भक्ती सौलभ्य-परत्वविषये अवगम्येते। 'नाथ योनिसहस्रेषु' इत्यत्र, 'तेषु तेष्वच्युता भक्तिः' इति, तत्रैव प्रकरणे, 'या प्रीतिरविवेकानाम्' इति च पठ्यते; तथा कीर्ति-यशसोर्भेदः।

**यस्तद्वेद**—यो वेदिता। **यत् स वेद**—यच्च वेद्यम्। **स मयैतदुक्तः**—स वेदिता रैक्वः, तत् वेद्यं ब्रह्म च उभयं मयोक्तमित्यर्थः। पुल्लिङ्गशब्दः, रैक्वाभिप्रायेण। **अनु म इति**। मे अनुशाधि इत्यन्वयः; 'व्यवहिताश्च' (पा.सू. 1-4-82) इति सूत्रात्। **उपसंह्रियते**—उपक्रमोक्तिः पश्चादनूद्यते इत्यर्थः। [विदिना उपक्रान्तस्य उपासिना सिद्धवत्कृत्य अनुवादरूपात् अन्यार्थदर्शनरूपाल्लिङ्गात्, वेदान्तेषु वेदनशब्दः आवृत्तवेदनपरः। यथा-'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृतस्याऽपि पाप्मशब्दपरामर्शरूपाल्लिङ्गात्, वेदान्तेषु 'पाप्म'शब्दः, सुकृतदुष्कृतसाधारणः इति (भा.प्र.)]। [एवम्] एकैकत्र विद्युपास्त्योः एकार्थविषययोः प्रयोगो दर्शितः। **तथेत्यादिना**—अनेकत्र प्रदेशभेदेन एकैकस्य प्रयोगं दर्शयति। अत्र 'छागो वा मन्त्रवर्णात्' (पू.मी.सू. 6-8-31) इति न्यायोऽभिप्रेतः। **[समानार्थेष्विति**। मोक्षसाधनविधिष्वित्यर्थः (भा.प्र)। **'ध्यायमान'**शब्दोपादनेन, 'निदिध्यासितव्यः' इत्यत्र

---

[1] त पश्यते—वा.

इत्यादिषु ध्यायतिना वेदनमभिधीयते। ध्यानं च चिन्तनम्। [1]तच्च[1]स्मृतिसन्ततिरूपं; न स्मृतिमात्रम्॥

[ध्यानोपास्त्योरेकार्थता]

उपास्तिरपि [2]तदेकार्थः[2]; [3]एकाग्र[3]चित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्। तदुभयैकार्थ्यात्, असकृदावृत्त[4]स्मृतिसन्ततिरिह[4],

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड उ. 3–2–9)

'ज्ञात्वा देवं मुच्यते[5]सर्वपाशैः[5]' (श्वे.उ. 1–8)

इत्यादिषु, वेदनादिशब्दैः अभिधीयते—इति निश्चीयते॥ १॥

[उक्तार्थस्य पुराणस्मृतितः दृढीकरणम्]

## ४७१. लिङ्गाच्च ॥४–१–२॥ (सि)

---

सन्प्रत्ययस्य इष्यमाणप्रधानत्वं दर्शितम्। ध्यानं चेति। 'ध्यै-चिन्तायाम्' (पा.धा. 908) इति हि धातुः। [स्मृतिसन्ततीति। इदं चोत्तरसूत्रे स्फुटीभविष्यति]॥

[उपास्तिरिति। अयं निर्देशः 'इक्श्तिपौ धातुनिर्देशे' (पा.सू.वा. 3285) इत्येतदनुसृत्य उपेत्युपसर्गपूर्वकस्य 'आस-उपवेशने' (पा. धा. 1021) इति धातोरेव। न तु क्रियातात्पर्यकृतः 'स्त्रियां क्तिन्' (पा.सू. 3–3–94) इति विहितक्तिनन्तः। क्तिनपवादतया युच् प्रत्ययस्य 'ण्यासश्रन्थो युच्' (पा. सू. 3–3–107) इति विहिततया भावार्थे उपासनाशब्दस्यैव साधुत्वात्। 'सेवा भक्तिरुपास्तिः' इति पर्यायपाठोऽपि पुलिङ्गपर एव। अत एव भाष्ये 'तदेकार्थः' इति पुलिङ्गनिर्देशः। अन्यथा 'तदेकार्था' इति निर्दिश्येतेति विभावनीयम्॥ (श्री. वीर. टिप्पनीतः)॥] असकृदावृत्तस्मृतिसन्ततिरिति, असकृदावृत्तत्वं, विच्छेदेऽप्युच्यते इत्येतद्व्यावृत्त्यर्थम्॥ १॥

---

[सूत्रार्थः। लिङ्गाच्च—स्मृतेरपि पुराणादिरूपात् उक्तोऽर्थः सिद्धो भवति॥]

तद्रूपप्रत्यये चैका सन्ततिश्चाऽन्यनिस्पृहा। इति स्मृत्याऽपि चावृत्तमसकृद्वेदनम् भवेत्॥ (ब्र.प. 471)

---

[1] चिन्तनं च—च.    [2] तदेकार्था—थ.    [3] एकार्थ—द.

[4] सन्ततस्मृतिरिह—च.    [5] सर्वपापैः—थ.

लिङ्गम्—स्मृतिः । स्मृतेश्च अयमर्थोऽवगम्यते । स्मर्यते हि ! मोक्षसाधनभूतं वेदनं, [1]स्मृतिसन्तति'रूपम्—

'तद्रूपप्रत्यये चैका सन्ततिश्चाऽन्यनिस्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा ॥' (वि.पु. 6-7-91)

इति । तस्मात् , असकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ २ ॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

—o—

---

[तद्रूपेति । तद्रूपप्रत्यये—ध्येयतया श्रुतिविहितस्य शुभाश्रयभूतभगवद्दिव्यमङ्गलविग्रहस्य वेदने, अन्यनिस्स्पृहा-विजातीयप्रत्ययान्तराव्यवहिता, एका या सन्ततिः—अविच्छिन्नप्रवाहरूपा या सन्ततधारारूपा अनुवृत्तिः, तत् ध्यानम्—तदेव ध्यानशब्देन श्रुत्यादिषु व्यवहार्यम् । तत् प्रथमैः षड्भिरङ्गैः—यमादिभिः पूर्वोपायभूतैः षड्भिः उपकारकैः अङ्गैः निष्पन्नस्वरूपं क्रियते हे नृप !—इति श्लोकार्थः ॥ तृतीयेऽध्याये साधनतयोक्तस्योपासनस्य मोक्षसाधनत्वाकारः अत्रोक्तः ॥]

[सूत्रे १. आवृत्ति. २. लिङ्गाच्च]

इति आवृत्त्यधिकरणम् ॥ १ ॥

—o—

---

[1] स्मृति—थ.

## (125) आत्मत्वोपासनाधिकरणम् ॥ ४-१-२ ॥

[अधिकरणार्थः—उपास्यं ब्रह्म उपासितुः आत्मत्वेनैवोपास्यम्; न अन्यत्वेन]

## ४७२. आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४-१-३ ॥ (सि)

[संशयप्रदर्शनतः अधिकरणचिन्त्योऽर्थः]

इदमिदानीं चिन्त्यते—किम् उपास्यं ब्रह्म, उपासितुरन्यत्वेन उपास्यम्? उत उपासितुः आत्मत्वेन?—इति ॥

[युक्त्या पूर्वः पक्षः]

किं युक्तम्? अन्यत्वेन—इति ॥

कुतः? उपासितुः प्रत्यगात्मनः अर्थान्तरत्वात् ब्रह्मणः। अर्थान्तरत्वं च,

'अधिकं तु भेदनिर्देशात्' (ब्र.सू. 2-1-22)

'अधिकोपदेशात्' (ब्र.सू. 3-4-8)

---

आत्मेतीति। उक्तस्य असकृदावृत्तस्योपासनस्य उपास्यं ब्रह्म, किम् उपासितुरन्यत्? उत तस्यैव आत्मा? इति शङ्कायां व्यतिकरोपदेशज्ञापनाय, पूर्वप्रकृतवाक्यस्यात्मशब्दार्थो निरूप्यत इति सङ्गतिः ॥ आत्मत्वेन—अहमर्थसामानाधिकरण्येन। आत्मशब्दः (अत्र) स्ववाची। अन्यत्वेन—वैयधिकरण्येन। अथवा, आत्मशब्दः शरीरप्रतिसम्बन्धिपरः। आत्मत्वेन—जीवं प्रति शरीरत्वेन। अन्यत्वेन—शरीरशरीरिभावसम्बन्धशून्यत्वेन ॥ एवं सति ब्रह्मोपासनविधिः किं दृष्टिविधिः? उत न? इति फल-फलिभावः ॥ मुमुक्षोः किं ब्रह्म वैयधिकरण्येनोपास्यम्? उत सामानाधिकरण्येन?। किम् उपास्यं ब्रह्म उपासितुरन्यत्वेनोपास्यम्! उत आत्मत्वेन?। किम् आत्मत्वेनोपासने 'पृथगात्मान'मिति विहितपृथगनुसन्धान-

---

[सूत्रार्थः। आत्मेति तु—परमात्मा उपासकानां चेतनानां शरीरिभूतः, अत एव अहमित्युल्लेखार्ह इति कृत्वा, उपास्यं ब्रह्मरूपं वस्तु, उपासितारः 'अहं ब्रह्माऽस्मि' इत्येव, उपगच्छन्ति—उपासनं कुर्वते, ग्राहयन्ति च—शास्त्राण्यपि 'आत्मेत्येवोपासीत' इत्यादीनि इममर्थं उपपन्नमेव बोधयन्ति ॥]

'आत्मेत्येव परं ध्येयमुपगच्छन्त्युपासकाः। त्वं वा अहमिति श्रुत्या सत आत्मेति बोधनात् ॥' (ब्र.प. 472)

'नेतरोऽनुपपत्तेः' (ब्र सू. 1-1-17)

इत्यादिषूपपादितम् ॥ यथावस्थितं च ब्रह्म उपास्यम्। [1]अयथो[1]पासने हि! ब्रह्मप्राप्तिरपि अयथाभूता स्यात्।

'यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छां.उ. 3-14-1) इति न्यायात्। अतः अन्यत्वेनोपास्यम्—इति ॥

[सूत्रार्थवर्णनतः सिद्धान्तः]

एवं प्राप्ते, अभिधीयते—आत्मेति तु—इति ॥ 'तु'शब्दः अवधारणे। उपासितुरात्मेत्येव उपास्यम्। उपासिता प्रत्यगात्मा, 'स्वशरीरस्य स्वयं यथा आत्मा; तथा [2]'स्वात्मनोऽपि[2] परंब्रह्म आत्मा' इत्येवोपासीतेत्यर्थः।

कुतः? एवं हि! [3]उपगच्छन्ति[3] पूर्वे उपासितारः—

'त्वं वा अहमस्मि भगवो देवते! अहं वै त्वमसि' [जाबाल] (वारा.उ. 2-34) इति। उपासितुरर्थान्तरभूतं ब्रह्म, उपासितारः, अहमिति कथमभ्युपगच्छन्ति? इत्यत्राह—ग्राहयन्ति च—इति ॥ [4]इममर्थम्[4], अविरुद्धम् उपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्ति-इत्यर्थः।

---

विरोधः प्रसज्यते? न? इति। प्रसज्यते चेत्! अन्यत्वेनोपासनम्। न चेत्! आत्मत्वेनोपासनम्—इति ॥ ['आत्मेत्येव' इति इतिकरणदर्शनात् सामानाधिकरण्योपासनत्वकृतदृष्टिविधित्वशङ्काव्युदासार्थमिदम्]

अयथाभूता स्यादिति। संसारित्वप्राप्तिः स्यादित्यर्थः ॥

स्वशरीरस्येति, सामानाधिकरण्यफलितमर्थमाह। उपगच्छन्ति—उपासते इत्यर्थः। गत्यर्थाः बुद्ध्यर्थाः। त्वं वा अहमस्मीति। अहंबुद्धिः अहंशब्दश्च त्वत्पर्यवसायिनी। अहंशब्दयोगात् उत्तमपुरुषः। अहं वै त्वमसि—अहंबुद्धि-शब्दपर्यवसानभूमिस्त्वम्। त्वंशब्दयोगान्मध्यमपुरुषः। उभयस्मिन् वाक्ये 'अहं-त्वं'शब्दप्रयोगे सत्यपि, 'अहं'शब्दार्थतात्पर्यविवक्षया उत्तमपुरुषः। 'त्वं'शब्दार्थतात्पर्येण मध्यमपुरुषः।

---

[1] अयथावस्थितो—त. थ.  [2] आत्मनोऽपि—थ.

[3] अभ्युपगच्छन्ति—न.  [4] इदमर्थम्—थ.

[शास्त्रतः आत्मत्वोपपादनप्रकारः]

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मा-
नमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ.उ. 5-7-22)

इति ; तथा,

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । (छां.उ. 6-8-4)
ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

'सर्वं खल्विदं ब्रह्म तज्जलानिति' (छां.उ. 3-14-1)

इति च, सर्वस्य चिदचिद्वस्तुनः तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च, सर्वस्य अयमात्मा ; [1]अतः स[1]त आत्मा । अतः यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वात् 'देवोऽहम्, मनुष्योऽहम्' इत्यनुसन्धानम् ; [2]तथा[2] प्रत्यगात्म-नोप्यात्मत्वात् परमात्मनः, तस्यापि अहमित्येवानुसन्धानं युक्तम्—इति ॥

एवं शास्त्रैरुपपादितं, सर्वबुद्धीनां ब्रह्मैक[3]निष्ठत्वेन[3] सर्वशब्दानां ब्रह्मैकनिष्ठत्वम् अभ्युपगच्छन्तः, 'त्वं वा अहमस्मि भगवो देवते ! अहं वै [4]त्वमसि भगवो देवते[4] !'
(वा.रा.उ. 2-34)

इति [5]व्यतिकरेणो[5]क्तवन्तः । एवं च,

---

अस्मि-असीति प्रयोगः—अस्तिधातोः सत्ता ह्यर्थः । तेन इदं तादात्म्यं युक्तमिति दर्शितं भवतीति ।

सन्मूला इत्यादावपि, सदायतनत्व-तदनत्वाभ्याम् आत्मत्वसिद्धिः ।

सर्वस्येत्यादिना, 'सन्मूलाः' इत्यादिवाक्योपेतस्य 'य आत्मनी'त्यादिवाक्यस्यार्थमाह । कार्य-कारणभावः कार्य-कारणभूतजगद् ब्रह्मसामानधिकरण्योपयोगी । अत्र तु शरीर-शरीरिभाव एव शुद्धस्वरूपजीव (ब्रह्मणोः) सामानाधिकरण्योपयोगी । नियाम्यत्वं हि शरीरलक्षणत्वेनोक्तम् ॥ युक्तमिति उपपादयन्ति—इत्यन्वयः ॥

अहमित्यादि । गुण-गुणिरूपार्थद्वयसद्भावाभिप्रायाः भेदश्रुतयः । तत्र द्वयोरपि स्वनिष्ठत्वं नास्तीत्यन्यतरस्य प्रकारिनिष्ठत्वात् , गुणभूतवस्तुनः स्वनिष्ठत्वनिषेधपराः अभेद-

---

[1] स—त.थ. [2] तथा च—थ. [3] निष्ठत्वे—थ.
[4] त्वमसि थ. [5] व्यतिरेकेणो—त.थ. व्यतिहारेणो—वा.

[आत्मत्वानुसन्धान-पृथक्त्वानुसन्धानयोरविरोधः]

'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद'

(बृ.उ. 3-4-10)

'अकृत्स्नो ह्येषः...... ....आत्मेत्येवोपासीत' (बृ.उ. 3-4-7)

'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ.उ. 6-5-7)

इति, [1]आत्मत्वानु[1]सन्धाननिषेधः ;

'पृथगात्मानं प्रेरितारं च मत्वा' (श्वे.उ. 1-6)

इति, पृथक्त्वानुसन्धानविधानं च अविरुद्धम् । 'अह'मिति स्वात्मतयाऽनुसन्धानात्, [2]अन्यत्वानु[2]सन्धाननिषेधो रक्षितः । स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत्, स्वात्मनोऽपि परमात्मनः अधिकत्वानुसन्धानात्, पृथक्त्वानुसन्धानविधानं च रक्षितम् । अधिकस्य ब्रह्मणः, प्रत्यगात्मन आत्मत्वात्, तस्य च ब्रह्मशरीरत्वात्, निषेधवाक्ये

'अकृत्स्नो ह्येषः' (बृ.उ. 3-4-7)

इत्युक्तम् । अतः—उपासितुरात्मत्वेन ब्रह्म उपास्यम्-इति स्थितम् ॥ ३ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ २ ॥

—o—

---

श्रुतयः इति विभाग इत्यर्थः । अकृत्स्नः—अपूर्णः । गुणमात्रपरत्वे च न पूर्तिः । विशिष्ट एव पूर्णः ।

एवं शरीरात्मभावगोचरस्य सामानाधिकरण्यस्य अप्रमाणिकत्वानुपपन्नत्वयोरभावात् मोक्षफलश्रवणाच्च न दृष्टिविधित्वम्—इत्युक्तं भवति ॥ ३ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ २ ॥

—o—

---

[1] अन्यत्वानु—घ.ङ.  [2] अनात्मत्वानु—वा.

## (126) प्रतीकाधिकरणम् ॥ ४-१-३ ॥

[अधिकरणार्थः—प्रतीकोपासनस्थले, न आत्मत्वानुसन्धानं प्रतीके कार्यम् ]

## ४७३. न प्रतीके न हि सः ॥ ४-१-४ ॥ (सि)

[विषयोपस्थापनं संशयश्च]

'मनो ब्रह्मेत्युपासीत' (छां.उ. 3-18-1)

'[1]स यो नाम[1] ब्रह्मेत्युपास्ते (छां.उ. 7-1-5)

इत्यादिप्रतीकोपासनेष्वपि आत्मत्वानुसन्धानं कार्यम्? उत न?—इति चिन्तायाम्,

[सहेतुकः पूर्वः पक्षः]

'मनो ब्रह्मेत्युपासीत' (छां.उ. 3-18-1)

इति ब्रह्मोपासनत्वसाम्यात्, ब्रह्मणश्च उपासितुरात्मत्वात्, आत्मेत्येवोपासीत—इति ॥

---

न प्रतीक इति । आत्मत्वेनोपासनम् उक्तम् । तत् प्रतीकोपासने अस्ति? न इति शङ्कया सङ्गतिः । किं 'मनो ब्रह्म' इत्यादिप्रतीकोपासनेषु आत्मत्वेनाऽनुसन्धानं कर्तव्यम्? उत न? इति । तेषु उपास्यं किम् उपासितुरात्मा? न? इति । किं ब्रह्मणः प्रतीको दृष्टिविशेषणम्? उत प्रतीकस्य ब्रह्मदृष्टिविशेषणम्? इति ॥

प्रतीकस्य दृष्टिविशेषणत्वे ब्रह्मण उपास्यत्वात्, तत्रापि आत्मत्वेनानुसन्धानं कार्यं स्यात् । ब्रह्मणः प्रतीके दृष्टिविशेषणत्वे, प्रतीकस्यैवोपास्यत्वात्, तस्य च उपासकं प्रति आत्मत्वाभावात्, आत्मधीः न कार्या स्यात् ॥

ब्रह्मोपासनत्वसाम्यादिति । ब्रह्मशब्दनिर्देशात् ब्रह्मोपासनत्वसाम्यमित्यर्थः ॥

---

[सूत्रार्थः । प्रतीके—दृष्ट्युपासनविशेष्यभूते मन आदौ, न—आत्मत्वेनोपासनं नैव कार्यम्, हि—यतः, न सः—प्रतीकम् उपासितुरात्मा न भवितुमर्हति ।]

'नाऽऽत्मत्वेन प्रतीकेषु ध्यानं कार्यं विचक्षणैः । उपासितुः प्रतीको हि नैवाऽऽत्मा मन आदिकः॥'(ब्र.प.473)

---

[1] स यो ह वै नाम—त॰

[सूत्रतः सिद्धान्तः]

[1]एवं प्राप्ते,[1] अभिधीयते—'न प्रतीके'—इति। प्रतीके न आत्मत्वानुसन्धानं कार्यम्।—[2]न हि सः—न हि[2]! उपासितुः आत्मा प्रतीकः। प्रतीकोपासनेषु प्रतीक एवोपास्यः; [3]न ब्रह्म[3]। ब्रह्म तु, तत्र दृष्टिविशेषणमात्रम्। प्रतीकोपासनं हि नाम—अब्रह्मणि ब्रह्मदृष्टयाऽनुसन्धानम्। तत्रोपा[4]स्यस्य प्रतीक[4]स्य उपासितुरात्मत्वाभावात्, न तथाऽनुसन्धेयम्॥ ४॥

[शङ्का-समाधाने]

ननु—अत्राऽपि ब्रह्मैवोपास्यम्; ब्रह्मण उपास्य[5]त्वसम्भवे,[5] मन आदीनामचेतनानाम् अल्पशक्तीनां चोपास्यत्वाश्रयणस्य अन्याय्यत्वात्। अतः मनआदिदृष्टया ब्रह्मैवोपास्यम्—इति; [6]तत्राह[6]

## ४'७४. ब्रह्मदृष्टिरुत्कर्षात्॥ ४-१-५॥

[निकृष्टे एवोत्कृष्टदृष्टेः न्याय्यता]

मन आदिषु ब्रह्मदृष्टिरेव युक्ता; न ब्रह्मणि मन आदिदृष्टिः; ब्रह्मणो मन-

---

प्रतीकोपासनेष्विति। [इदम्] प्रतीकोपासनेऽपि उपास्यं ब्रह्म। तच्च उपासितुरात्मा। अतः ब्रह्मोपासनत्वसाम्यात् आत्मेत्युपास्यम्—[इत्याशङ्कायाः समाधानम्]। ब्रह्म तु इति, ब्रह्मशब्दनिर्देशो[पपत्तिपरम्]॥ ४॥

मन आदिष्विति। अचेतनमनःप्रभृतेः उपास्यत्वासम्भवः, अभिमानिदेवतोपास्यत्वेन

---

[सूत्रार्थः। ब्रह्मदृष्टिः—अब्रह्मभूते प्रतीकभूते च मनआदावेव ब्रह्मबुद्धिः आरोपात्मिका कार्या, फलविशेषाप्तये; न तु ब्रह्मणि मन आदिबुद्धिः कार्या, उत्कर्षात्—फलसिद्ध्यौपयिकारोपविषयस्योत्कर्षस्य ब्रह्मण्येव विद्यमानत्वात्॥

'मन आदौ ब्रह्मदृष्टिर्युक्ताऽस्योत्कर्षतो भवेत्। राजदृष्टिस्तु भृत्ये हि फलायाऽभ्युदयाय च॥'

---

[1] प्राप्ते—त. थ.　　[2] न हि—द.

[3] न च ब्रह्म—थ.　　[4] स्वप्रतीक—थ.

[5] त्वासम्भवे—द.　　[6] अत आह—आ. च. अ. ठ.

आदिभ्य उत्कर्षात्; तेषां [1]च विपर्ययात्[1]। उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी। भृत्ये तु राजदृष्टिः, अभ्युदयाय ॥ ५ ॥

इति प्रतीकाधिकरणम् ॥ ३ ॥

—o—

---

परिहृतः—इति भावः ॥ [भृत्ये त्विति। 'अभ्युदयाये'त्यस्य स्यादिति शेषः। इदमुपलक्षणम्—'मनो ब्रह्मेत्युपासीत' इत्यादौ मन आदिशब्दानां प्राथम्यात्, तस्य मुख्यार्थत्यागस्य अनुचितत्वात्, ब्रह्मशब्दस्य इतिशब्दशिरस्कत्वेन स्वार्थात् प्रच्यावनस्यापेक्षितत्वाच्च, 'आदित्यं ब्रह्मेोपास्ते' इत्यादौ द्वितीयानिर्देशाच्च, मन आदौ ब्रह्मदृष्टिरेव युक्तेति द्रष्टव्यम् (भा.प्र)] ॥ ५ ॥

[सूत्रे—१. न प्रतीके, २. ब्रह्मदृष्टिः।]

इति प्रतीकाधिकरणम् ॥ ३ ॥

—o—

---

[1] स्वविपर्ययात्—द.

## (127) आदित्यादिमत्यधिकरणम् ॥ ४-१-४ ॥

[अधिकरणार्थः—क्रत्वङ्गाश्रितेषूपासनेषु उद्गीथादावेव आदित्यादिदृष्टिःकार्या ;
न आदित्यादावुद्गीथादिदृष्टिः]

### ४७५. आदित्यादिमतयश्चाऽङ्ग उपपत्तेः ॥ ४-१-६ ॥ (सि)

[विषय - संशयौ]

'य एवाऽसौ तपति तमुद्गीथमुपासीत' (छां.उ. 1-3-1)
इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु, संशयः—किम् उद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या ? उत आदित्यादिषु उद्गीथादिदृष्टिः ?—इति ॥

'उत्कृष्टे निकृष्टदृष्टिः कर्तव्या' इति न्यायात्, उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेन अफलेभ्यः आदित्यादिभ्यः उत्कृष्टत्वात्, आदित्यादिषु उद्गीथादि-[1]दृष्टिः[1] ॥

---

आदित्येति । देवताया उत्कर्षात् दृष्टिविशेषणत्वमुक्तम् । तदुत्कर्षाक्षेपेण कर्मण-एवोत्कर्षशङ्कया अवान्तरसङ्गतिः । क्रत्वङ्गाश्रयोपासनेषु—किम् आदित्यादावुद्गीथादिदृष्टिः ? । फलसाधनतया उत्कर्षः, किम् आदित्यादेः ? उत उद्गीथादेः ? । उद्गीथादेश्चेत् ! आदित्यादावुद्गीथादिदृष्टिः । आदित्यादेश्चेत् ! उद्गीथादौ आदित्यादिदृष्टिः कार्या स्यात् ॥

प्रधानस्य कर्मणः फलसाधनतया विहितत्वात्, देवताप्रीतिः [तस्य] अवान्तरव्यापारमात्रं; काष्ठानां ज्वालावत् इति, [देवताप्रीतेः] अप्राधान्यमाशङ्क्यते । [अतः] देवतायाः फलसाधनत्वं पूर्वमेव सिद्धमिति, कथं पूर्वपक्षोत्थानम् ? [इति नाऽऽशङ्का] ॥ ब्रह्ममतिवत् आदित्यादिमतयोऽपि इति 'च' शब्दार्थः ॥ 'मनो ब्रह्म' इत्यत्र उपास्यं प्रथमं दृष्टिविशेषणं च चरमं निर्दिष्टम् । एवम् 'य एवासौ तपति तमुद्गीथम्' इत्यत्रापि, उद्गीथस्य चरमनिर्देशात्, सः दृष्टिविशेषणम् । देवतायां यद्वृत्तयोगात् प्राथम्याच्च उद्देश्यत्वमित्यपि पूर्वपक्षयुक्तिरभिप्रेता ॥ **अफलेभ्यः**—अफलसाधनेभ्यः ॥

---

[सूत्रार्थः । **अङ्गे**—कर्माङ्गभूते उद्गीथादावेव, **आदित्यादिमतयः**—आदित्यादि-प्रकारकदृष्टयः कार्याः, **उपपत्तेः**—आदित्यादीनाम् आराधनीयत्वकृतोत्कृष्टतया युक्तत्वात् ]

'उद्गीथेषु कर्माङ्गेष्वादित्यादिमतिर्भवेत् । आदित्यादिर्हि चोद्गीथादुत्कृष्टो भवतीत्यतः ॥' (ब्र.प. 475)

---

[1] दृष्टेः—द

[सूत्रार्थतः सिद्धान्तः]

इति प्राप्ते, अभिधीयते—'आदित्यादिमतयश्चाङ्गे'—इति । 'च' शब्दः अवधारणे । कर्माङ्गे उद्गीथादौ आदित्यादिदृष्टय एव कार्याः ।

कुतः ? उपपत्तेः—आदित्यादीनामेव उत्कृष्टत्वोपपत्तेः । आदित्यादिदेवताराधनद्वारेण हि ! कर्मणामपि फलसाधनत्वम् । अतः तद्दृष्टिः उद्गीथाद्यङ्गे ॥६॥

इति आदित्यादिमत्यधिकरणम् ॥ ४ ॥

—o—

---

राद्धान्ते आदित्यादीति । 'अर्यम्णे चरुं निर्वपेत्' इत्यादि द्रष्टव्यम् । देवतायाः स्थिरत्वेन अव्यवहितसाधनतया, लोकदृष्टसेव्यसेवान्यायेन आराधनस्य आराध्यदेवताप्रधानत्वाच्च देवतोत्कर्षसिद्धेः, यद्वृत्ताद्यस्वारस्यं सोढव्यमिति भावः ॥ ६ ॥

इति आदित्यादिमत्यधिकरणम् ॥ ४ ॥

—o—

(128) आसीनाधिकरणम् ॥ ४-१-५॥ (सू. 7-11)

[अधिकरणार्थः—मोक्षार्थोपासनरूपं ध्यानम् सापाश्रये आसीनस्यैव पुरुषस्य]

## ४७६. आसीनः सम्भवात् ॥ ४-१-७ ॥ (सि)

[अवान्तरसङ्गतिप्रदर्शनम्]

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं [1]ज्ञानं ध्याना[1]पासनादिशब्दवाच्यम्, असकृदावृत्तं सन्तत[2]स्मृतिरूपम्[2]—इत्युक्तम् ॥

[संशयगर्भितः पूर्वः पक्षः]

तदनुतिष्ठन्, आसीनः, शयानः, तिष्ठन्, गच्छंश्च विशेषाभावात् अनियमेनाऽनुतिष्ठेत् ॥

[सिद्धान्तार्थः सूत्रतः]

इति प्राप्ते, उच्यते—आसीनः—इति । आसीनः उपासनमनु[3]तिष्ठेत्[3] ।

कुतः?; सम्भवात् । आसीनस्यैव हि! एकाग्रचित्ततासम्भवः; स्थिति-गत्योः प्रयत्नसापेक्षत्वात्, [4]शयाने[4] च निद्रासम्भवात् । [5]पश्चार्ध[5]धारणप्रयत्न[6]निवृत्तये,[6] [7]सापाश्रये[7] आसीनः कुर्यात् ॥ ७ ॥

---

मोक्षेत्यादि । अनन्तराधिकरणयोः प्रासङ्गिकत्वात्, परमप्रकृतेन प्रधानभूतेन ब्रह्मोपासनेन सङ्गतिरुक्ता । यद्वा दृष्ट्युपासनानामपि आसनसापेक्षत्वेऽपि, आसनसमर्थनहेतोरैकाग्र्यस्य आद्याधिकरणसमर्थितत्वात् तेन सङ्गतिरुक्ता ॥ किम् आसीनश्चिन्तयेत्? उत आसीनः, शयानः, तिष्ठन्, गच्छन् वा? इति । किं गमनादिषु ध्यानं सम्भवति? न वा? इति । सम्भवति चेत्! आसनानियमः । न सम्भवति चेत्! तन्नियमः ।

सम्भवादिति । उपासनसम्भवादित्यतोपि, एकाग्रतासम्भवादिति उचितम् । उपासनसम्भवात् इत्युक्तेऽपि, कथम्? इत्यपि शङ्कायाः एकाग्रताभिप्रायेण शमयितव्यत्वात् ॥७॥

---

[सूत्रार्थः । आसीनः—मोक्षोपायभूतमुपासनं उपविष्ट एव कुर्यात्, सम्भवात्—उपविष्टस्यैव चित्तैकाग्र्ययुतस्य ध्यानस्य सिद्धेः ॥]

'आसीनो वेदनं कुर्यादासीनस्यैव सम्भवात् । एकाग्रता तु मनसो नान्यथा सम्भवेदिह ॥' (ब्र.प. 476)

---

[1] ध्यानो—द.   [2] स्मृतरूपम्—न. स्मृतिरूपमेव—त.थ.

[3] तिष्ठेत—थ.   [4] शयने—आ. क. च ज. ट. त. थ.   [5] पश्चात्—थ.

[6] निर्वृत्तये—त. थ. द.   [7] साश्रयः—न. सापाश्रयः—वा.

[ध्यानकाले ऐकाग्र्यस्यावश्यकता]

## ४७७. ध्यानाच्च ॥ ४–१–८ ॥ (सि)

' निदिध्यासितव्यः ' (बृ.उ. 6-5-6)

इति ध्यानरूपत्वादुपासनस्य, एकाग्रचित्तता अवश्यम्भाविनी । ध्यानं हि! विजातीय-प्रत्ययान्तराव्यवहितम्, एकचिन्तनम्—इत्युक्तम् ॥ ८ ॥

[ध्याने ऐकाग्र्यस्य आवश्यकत्वदृढीकरणम्]

## ४७८. अचलत्वं चाऽपेक्ष्य ॥ ४–१–९ ॥ (सि)

निश्चलत्वं [1]चाऽपेक्ष्य[1] पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते—

'ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौः, ध्यायन्तीवाऽऽपः, ध्यायन्तीव पर्वताः' (छां.उ. 7-6-1)

---

ध्यानाच्चेति। ध्यानादिति भावप्रधानो निर्देश इत्यभिप्रायेण 'ध्यानरूपत्वा'दित्युक्तम्। स्थिति-गत्योःविजातीयप्रत्ययसम्भवात् तदैकाग्र्यविरोधि गत्यादिकमित्यर्थः ॥ ८ ॥

अचलत्वमित्यादि । 'आपः' इति, स्थिरं तटाकादिजलं विवक्षितम् । निश्चल-

---

[सूत्रार्थः । ध्यानाच्च—'आत्मा वा अरे द्रष्टव्यः' इति मोक्षोपायभूतज्ञानस्य ध्यान-रूपत्वावगमादपि हेतोः उपासनम् आसीनस्यैव ॥ ]

'निदिध्यासनशब्देन ध्यानरूपत्वबोधनात् । उपासनस्य च सदा चित्तैकाग्र्यमपेक्षितम् ॥' (ब्र.प. 477)

[सूत्रार्थः । अचलत्वं च—निश्चलावस्थानमेव, अपेक्ष्य—तात्पर्यविषयीकृत्य, (पृथि-व्यादिषु ध्यातृसादृश्यं शास्त्रे अवगम्यते ॥]

' निश्चलत्वं तु सम्प्रेक्ष्य पर्वतादिषु दृश्यते । ध्यानवाचोयुक्तिरिति ह्यासीनस्यैव तद्भवेत् ॥' (ब्र.प.478)

---

[1] ह्यपेक्ष्य - आ.द.

इति। अतः पृथिवी-पर्वतादिवत् एकाग्रचित्ततया निश्चलत्वम् उपासकस्य, आसीनस्यैव सम्भवेत् ॥ ९ ॥

[आसीनतायाः गीतास्मृतिसिद्धता]

## ४७९. स्मरन्ति च ॥ ४-१-१० ॥ (सि)

स्मरन्ति च आसीनस्यैव ध्यानम्—

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नाऽत्युच्छ्रितं नाऽतिनीचं चैलाजिनकुशोत्तरम् ॥ (भ.गी. 6-11)
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रिय'क्रियः[1] ।
उपविश्याऽऽसने युञ्ज्याद् योगमात्मविशुद्धये ॥' (भ.गी. 6-12)

इति ॥ १० ॥

[उपासनयोग्यदेशकालविधेः ऐकाग्र्यमेव लक्ष्यम्]

## ४८०. यत्रैकाग्रता तत्राविशेषात् ॥ ४-१-११ ॥ (सि)

---

त्वमात्रसाम्यं विवक्षितम्। निश्चलत्वम् ऐकाग्र्याद्भवति। तच्च आसीनस्यैव; गत्यादौ विजातीयप्रत्ययेन चलनसंभवादित्यर्थः ॥ ९ ॥

**स्मरन्ति चेति**। न केवलम् अर्थसामर्थ्यात्; वचनादपि तत्सिद्धिरित्यर्थः ॥ १० ॥

**यत्रैकाग्रतेति**। तिथि-नक्षत्रादिनियमो नास्ति इत्यर्थः। वर्णाश्रमधर्माविरुद्धकाल-

---

[सूत्रार्थः। **स्मरन्ति च**—स्मरन्ति च मुनयः, ध्यानकाले ऐकाग्र्यावश्यंभावम्; 'तत्रैकाग्रं मनःकृत्वा' इति ॥]

तत्रैकाग्रयम् मनः कृत्वा यतचित्तेन्द्रियक्रियः। इति स्मृत्याऽपि चैकाग्रयमुपास्तौ हि विधीयते ॥ (ब्र.प. 479)

[सूत्रार्थः। **एकाग्रता**—ध्येयैकविषयता चित्तस्य, **यत्र**—यस्मिन् देशे काले वा, **तत्र**—तस्मिन्नेव देशे काले च ध्यानं श्रुतिमतम्, **अविशेषात्**—तदितरस्य विशेषस्य ध्यानविधिष्वश्रवणात् ॥]

'यत्रैकाग्र्यं भवेत्तत्र ह्युपासनमिहोच्यते । मनोनुकूल इत्येतद्वाक्यादेवाविशेषतः ॥' (ब्र.प. 480)

---

[1] क्रमः—द.

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात् , एकाग्रतानुकूलो यो देशः कालश्च, स एव उपासनस्य देशः कालश्च )

''समे[1] शुचौ शर्करावह्नि[2]वालुका'विवर्जिते' (श्वे.उ. 2-10)

इति वचनम् , एकाग्र[3]तैकान्तदेश[3]माह ; न तु देशं नियच्छति ;

'मनोऽनुकूले' (श्वे.उ. 2-10)

इति वाक्यशेषात् ॥ ११ ॥

इति आसीनाधिकरणम् ॥ ५ ॥

—o—

---

विशेषसंभवात् । आसनसहपठितो देशादिरपि ऐकाग्र्यसिद्ध्यर्थमपेक्ष्यते ; किं पुनरासनम् ? इति सूत्राभिप्रायः ॥ ११ ॥

[सूत्राणि— १. आसीनः, २. ध्याना, ३. अचल,
४. स्मरन्ति, ५. यत्रैका । ]

इति आसीनाधिकरणम् ॥ ५ ॥

—o—

---

[1] समेदेशे—पा. [2] वालुकादि— द. न. [3] तैकान्त—

(129) आप्रयाणाधिकरणम् ॥ ४-१-६ ॥

[अधिकरणार्थः—मोक्षोपायभूतं ध्यानं देहपातं यावत् प्रत्यहमनुवर्तनीयम् ; न तु एकस्मिन्नेवाऽहनि निर्वर्त्यम् ]

## ४८१. आप्रयाणात् तत्राऽपि हि दृष्टम् ॥ ४-१-१२ ॥ (सि)

[अधिकरणीयः संशयः]

तदिदम् अपवर्गसाधनम् उक्त[1]लक्षणमुपा[1]सनम्, एकाह एव सम्पाद्यम्? उत आप्रयाणात् प्रत्यहमनुवर्तनीयम्?—इति विशये,

[युक्त्या पूर्वः पक्षः]

एकस्मिन्नेवाऽहनि शास्त्रार्थस्य कृतत्वात्, तावतैव परिसमापनीयम् ॥

[सिद्धान्तः सूत्रतः]

इति प्राप्ते, उच्यते—आप्रयाणात्—इति । आमरणात् अनुवर्तनीयम् ।

कुतः? ;—तत्राऽपि हि दृष्टम्—उपासनोद्योगप्रभृति आप्रयाणात् मध्ये यः कालः, तत्र सर्वत्राऽपि दृष्टमुपासनम्,

'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' (छां.उ. 8-15-1) इति ॥ १२ ॥

इति आप्रयाणाधिकरणम् ॥ ६ ॥

—o—

---

आप्रयाणादिति । सङ्गत्यादि स्पष्टम् । उक्तलक्षणमुपासनम् किमेकस्मिन्नहनि कर्तव्यम् । उत आप्रयाणात्?—इति । किम् एकदिनानुष्ठानेन शास्त्रार्थस्य कृतत्वम्? न? इति? कृतत्वं चेत् एकस्मिन्नहनि कर्तव्यम् । न चेत्! आप्रयाणात् कर्तव्यमिति ॥ १२ ॥

इति आप्रयाणाधिकरणम् ॥ ६ ॥

—o—

[सूत्रार्थः । आप्रयाणात् — (अपवर्गसाधनभूतमुपासनम्) आमरणं प्रत्यहम् अनुवर्तनीयम्, हि—यतः तत्राऽपि—उपासनमारभ्य देहावसानं यावत् सम्भविनि कालेऽपि, दृष्टम्— तत् 'स खल्वेवं वर्तयन् यावदायुषम्' इत्यादिश्रुत्यवगतम् ॥]

'उपासनं तदावृत्तमाप्रयाणात् प्रतीयते । आवर्तनीयमित्येव स खल्वेवमिति श्रुतेः ॥' (ब्र.प. 481)

---

[1] लक्षणोपा—न.

## (130) तदधिगमाधिकरणम् ॥ ४-१-७ ॥

[अधिकरणार्थः—ब्रह्मविद्यालाभे सति, तन्माहात्म्यात् पश्चात्तनानां पाप्मनामश्लेषः ; प्राक्तनानां च तेषां विनाशश्च]

## ४८२. तदधिगम उत्तरपूर्वाघयोरश्लेष विनाशौ[1] तद्व्यपदेशात् ॥ ४–१–१३ ॥ (सि)

[पेटिकासङ्गतिः]

एवं विद्यास्वरूपं विशोध्य, विद्याफलं चिन्तयितुमारभते ॥

[विचारणीयविषयोपस्थापनम् ]

ब्रह्मविद्याप्राप्तौ पुरुषस्य उत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते—'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' (छां.उ. 4-14-3)

---

**एवमिति** । उपायभूतोपासनस्य उपास्यनिरतिशयप्रियरूपत्वेन स्वयमपि प्रियरूपत्वात् उपेयरूपत्वमप्यस्तीति, अत्र तन्निरूपणं कृतम् । 'दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः । तच्चित्तविमलाह्लादक्षीणपुण्यचयस्तदा ॥' इत्यादिभिः प्रीतिरूपत्वं ह्यवगम्यते ॥

**ब्रह्मविद्याप्राप्तिः**—साक्षात्कारावस्थोपासनलब्धिः [अत्र] विवक्षिता ॥ 'तस्मिन् दृष्टे क्षीयन्ते' इति हि ! विषयवाक्यम् । 'विद्याप्राप्ति'शब्दः साधारण्यात् प्रपदननिष्पत्तेरपि

---

सूत्रार्थः । **तदधिगमे**—(मुमुक्षोरुपासकस्य) साक्षात्कारावस्थापन्नब्रह्मविद्यालाभे सति, **उत्तर....नाशौ**—(यथासंख्यम्) पश्चाद्भविष्यतः पापजातस्य अस्मिन्नलिप्तता, पूर्वं जातस्य निरवशेषक्षयश्च भवतः, **तद्व्यपदेशात्**—श्रुतावस्यार्थस्य स्पष्टमुक्तत्वात् । ]

विद्याप्राप्तौ तु तच्छ्रुत्या ह्यघयोः पर-पूर्वयोः । 'न श्लिष्यते प्रदूयन्त' इत्यश्लेष-विनाशिता ॥(ब्र.प. 482)

---

[1] विनाशात्—.

'तस्यैवात्मा पदवित् तं विदित्वा, न कर्मणा लिप्यते पापकेन'
(तै.ब्रा.का. 3-12-18)

इति उत्तराघाश्लेषः ।

''तद्यथेषीक[1]तूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य पाप्मानः प्रदूयन्ते' (छां.उ. 5-24-3)

'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे' (मुण्ड.उ. 2-2-8)

इति पूर्वाघविनाशः ॥

[विचारौपयिकः संशयः, पूर्वपक्षश्च]

एतावश्लेषविनाशौ विद्याफलभूतौ उपपद्येते ? न ?—इति संशयः ॥

किं युक्तम् ? ; नोपपद्येते— इति ।

कुतः ?

' नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ' (ब्र.वै.प्र.ख. 26-70)

इत्यादिशास्त्रविरोधात् । अश्लेष-विनाशव्यपदेशस्तु मोक्ष[2]साधनभूत[2]विद्याविधायिवाक्यशेषगतः, कथञ्चित् विद्यास्तुतिप्रतिपादनेनाऽपि उपपद्यते ।

---

द्योतकः ॥ संश्लिष्टस्य पूर्वाघस्य अश्लेषायोगात् , विनाश उक्तः । उत्तराघस्य तु अश्लेष एवेति योग्यतावशाद्विभागः ।

एतावित्यादि । अश्लेष-विनाशप्रतीतिसंशयाभावात् , तयोः उपपत्त्यनुपपत्तिविषयकः संशय उक्तः ॥ किं विदुषः उत्तर-पूर्वाघयोः अश्लेष-विनाशौ सम्भवतः ? न ? इति । किम् अश्लेष-विनाशशास्त्रे यथाश्रुतार्थपरे ?, उत 'नाभुक्तं क्षीयते' इत्यनेन विरोधात् , विद्यास्तुत्यर्थतया नेये ? । किम् अश्लेष-विनाशशास्त्रयोः अभुक्तकर्मापरिक्षयशास्त्रस्य च विरोध एव ? उत अविरोधः सम्भवति ?—[इति विचाराः] ॥ विरोध एव चेत् ! विद्यास्तुत्यर्थत्वात् अश्लेष-विनाशासम्भवः । अविरोधसम्भवे शास्त्रस्य यथाश्रुतार्थपरत्वाभावात् अश्लेष-विनाशसम्भवः—इति [फल-फलिभावः] ॥

नाभुक्तमित्यादिना पूर्वपक्षोपन्यासः । [शास्त्रविरोधादिति । नाऽभुक्तमिति शास्त्रेण कर्मणां भोगैर्नाश्यत्वावगत्या विरोधात् , तयोः विद्याफलत्वकल्पनं नोपपद्यत इत्यर्थः । (भा.प्र.)]

---

[1] तद्यथेषीका—त.थ. [2] साधन—त.

[विद्यायाः पापप्रायश्चित्तत्वायोगः]

न च—विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते; येन प्रायश्चित्तेन अघविनाशः[1] उच्यते[1]। विद्या हि!

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड.उ. 3-2-9)

इति, ब्रह्मप्राप्त्युपायतया विधीयते। अतः [2]विद्यार्थवादो[2]ऽयम् अघविनाशाश्लेष-व्यपदेशः—इति ॥

[सूत्रार्थवर्णनतः सिद्धान्तार्थः]

एवं प्राप्ते, अभिधीयते—तदधिगमे—इति। विद्याप्राप्तौ पुरुषस्य, विद्यामाहात्म्यात् उत्तरपूर्वाघयोः अश्लेष-विनाशौ उपपद्येते।

कुतः?; एवंविधं हि! पुरुषस्य विद्यामाहात्म्यमवगम्यते;

'एवंविदि पापं कर्म न श्लिष्यते' (छां.उ. 4-14-3)

'एवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते' (छां.उ. 5-24-3)

इत्यादिव्यपदेशात् ॥

[पूर्वपक्षदर्शितस्य शास्त्रविरोधस्य भिन्नविषयत्वेन परिहारः]

न च—[3]'नाऽभुक्तं क्षीयते कर्म'[3] (ब्र.वै प्र.ख. 26-70) इत्यनेन 'शास्त्रेण अस्य[4]' विरोधः; भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यदृढिमविषयम्। एतत्तु उत्पन्नायाः विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम्, उत्पत्स्य-

---

न चेति। अननुभवेऽपि कर्मणां प्रायश्चित्तेन विनाशो दृश्यते—इति [शङ्कायामिदम्]॥

[भिन्नविषयत्वादिति। इदमुपलक्षणम्। 'नाभुक्तं क्षीयते कर्म' इत्येतत् स्मरणम् औत्सर्गिकम्; प्रायश्चित्तादिना नाश्यत्वाभ्युपगमात्। ततश्च 'एवंविदि पापं कर्म न श्लिष्यते' इति विशेषशास्त्रविरोधे सङ्कुचितविषयमेव वक्तव्यम्। असत्यां ब्रह्मविद्यायाम्, असति च प्रायश्चित्ते, न अभुक्तं क्षीयते इत्यर्थः। न च—विद्यायाः मोक्षफलकत्वात्, अश्लेषवचनं स्तुतिरिति मन्तव्यम्; एतस्य स्तुतित्वे, अघानामानन्त्येन अनिर्मोक्षप्रसङ्गात्—इति द्रष्टव्यम् (भा.प्र.)]॥

[1] उच्येत—वा. [2] विद्यास्तुत्यर्थवादो—वा.

[3] न कर्म क्षीयतेऽभुक्तम्—थ. द. [4] अस्य—वा.

मानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति, [1]द्वयो[1]-र्विषयो भिद्यते। यथा अग्नि-जलयोः औष्ण्य-तन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाण-योरपि विषयभेदात् प्रामाण्यम्; एवमत्राऽपीति न कश्चिद्विरोधः॥

[अघाश्लेष-विनाशयोः विवरणम्]

अघस्याऽश्लेषकरणम्—वैदिककर्मायोग्यता-वासना-प्रत्यवायहेतुशक्त्युत्पत्तिप्रति-बन्धकरणम्॥ अघानि हि कृतानि, पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भ-रुचिं प्रत्यवायं [2]च कुर्वन्ति।[2] अघस्य विनाशकरणम्—उत्पन्नायाः तच्छक्तेः विनाश-करणम्। शक्तिरपि परमपुरुषाप्रीतिरेव॥

तदेवं, विद्या वेदितुः वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती, वेद्यभूत-परमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति। सैव विद्या, स्वोत्पत्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति॥

[प्रामादिकस्यैव उत्तराघस्य अश्लेषः]

तदिदम् अश्लेषवचनं, प्रामादिकविषयं मन्तव्यम्;

---

**फलजननशक्तीति।** अत्र 'शक्ति'शब्दः, [निषिद्ध] कर्मानुष्ठानजनितभगवन्निग्रहपरः **यथेत्यादिः,** भिन्नविषयत्वेन वचसोरविरोधे दृष्टान्तः।

**अघस्येति।** उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धः—अश्लेषः। उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेः विनाशकरणम्—विनाशः इत्यर्थः।

**तदेवमिति।** ब्रह्मानुभवस्य स्वतःप्राप्तत्वेन असाध्यत्वात्, प्रतिबन्धनिवृत्तिरूपसाध्ये प्रायश्चित्ततुल्यैव ब्रह्मविद्या। स्वर्गादेः साध्यत्वात् तत्तत्साधनस्य कर्मणः न प्रतिबन्धनिवर्तकत्वम्; अत्र तु प्रतिबन्धनिवृत्तेरेव साध्यत्वात्, विद्यायाः तद्धेतुत्वं युक्तमित्यर्थः।

**तदिदमिति।** 'अपि चेत् पातकं किंचिद्योगी कुर्यात् प्रमादतः। योगमेव निषेवेत नाऽन्यं यत्नं समाचरेत्॥' इति प्रामादिकाघप्रायश्चित्तत्वेनैव योगविधानात्, ब्रह्मविद्याया अपि कृच्छ्रादीनामिव बुद्धिपूर्वपापनिवर्तकत्वमिति [शङ्कायाः नावकाशः]। उपासनारम्भप्रीतः परमात्मा, 'तत्समाप्तौ उपासकस्याऽघं क्षमिष्यामी'ति; समाप्तौ तु, 'क्षान्त'मिति च सङ्कल्पयतीति;

---

[1] तयो—थ.  [2] कुर्वन्ति—थ.

'नाऽविरतो दुश्चरितात्' (कठ.उ. 2-24)

इत्यादिभिः शास्त्रैः, आप्रायाणात् अहरहरुत्पद्यमानायाः [1]उत्तरोत्तरातिशयभागिन्याः विद्यायाः[1], दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ १३ ॥

इति तदधिगमाधिकरणम् ॥ ७ ॥

—o—

---

उपासनारम्भसमाप्त्योः भगवत्प्रीतिविशेषाभिप्रायत्वात्, पूर्वोक्तशरीरपातानन्तरकर्मक्षयस्य, अत्रोक्तस्योपासनारम्भे कर्मप्रहाणस्य चोपपन्नतया अधिकरणद्वयाविरोधः ॥ १३ ॥

इति तदधिगमाधिकरणम् ॥ ७ ॥

—o—

[1] विद्यायाः — द.

(131) इतराधिकरणम् ॥ ४-१-८ ॥

[अधिकरणार्थः—ब्रह्मविदो निष्पन्नोपासनस्य पापानामिव पुण्यानामप्यश्लेष-विनाशौ]

## ४८३. इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४-१-१४ ॥ (सि)

[पुण्येऽप्युक्तन्यायातिदेशः]

उत्तरपूर्वाघयोः विद्यया अश्लेष-विनाशौ उक्तौ । इतरस्य-पुण्यस्याऽपि, एवम् उक्तेन न्यायेन 'अश्लेष'[1]-विनाशौ विद्यया स्याताम् ; विद्याफलविरोधित्वसामान्यात् । [पुण्यमपि पापशब्दवाच्यम्] व्यपदेशाच्च—भवति च व्यपदेशः, उभे सुकृत-दुष्कृते निर्दिश्य ;

'सर्वे पाप्मानोऽतो निवर्तन्ते' (छां.उ. 8-4-1)

इति ;

'तत् सुकृत-दुष्कृते[2]धूनुते[2]' (कौषी.उ. 1-4)

इति च । मुमुक्षोः अनिष्टफलत्वात्, सुकृतस्याऽपि 'पाप्म' [3]शब्देन[3]व्यपदेशः ॥

---

इतरस्येति । अवान्तरसङ्गतिः स्फुटा । 'इतरस्याप्यसंश्लेषः' इति प्रतिज्ञानिर्देशः । 'एवम्' इति न्यायातिदेशः । उत्तरपूर्वसुकृतयो; अश्लेष-विनाशौ किं सम्भवतः ? न ? इति । किं 'पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृत-दुष्कृताश्लेषविनाश-परम् ? उत दुष्कृतमात्राश्लेषविनाशपरम् ? । किमत्र 'पापकर्म'शब्दो निषिद्धपरः ? उत विद्याविरोधिफलकर्मपरः ? । 'सर्वे पाप्मानः' इति वाक्यं किं पापशब्दस्य विद्याविरोधिफल-कर्मपरतामवगमयति ? न? इति ॥ 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति हि श्रूयते ॥ न चेत् ! पापशब्दस्य निषिद्धमात्रपरतया वाक्ययोः दुष्कृतमात्राश्लेषविनाशपरत्वात्,

---

[सूत्रार्थः । **इतरस्याऽपि**—द्वन्द्वेऽन्यतरस्य पुण्यस्याऽपि विद्याप्राक्पश्चाद्भाविनः, **एवम्**—पापस्येव **असंश्लेषः**—(पूर्वस्य) लेपाभावः, (उत्तरस्य) विनाशश्च भवतः । **तु**—परं तु, **असंश्लेषः**—पुण्यलेपाभावः, **पाते**—देहपाते सत्येव ।]

, पुण्यस्याऽपि भवेदेवमश्लेषश्च विनाशिता । विद्यार्थानां तु पुण्यानां शरीरपतनात् परम् ॥' ब्र.प. (483)

---

[1] असंश्लेष—त.थ.  [2] विधूनुते—द. न.  [3] शब्द—द.

[सौत्रस्य न्यायातिदेशस्य प्रयोजनम् ]

'सुकृतस्याऽपि'[1] शास्त्रीयत्वात्, तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च, विद्यया अविरोधशङ्कां निवर्तयितुम् अतिदेशः ॥

[असंश्लेषे विशेषप्रदर्शनम् ]

ननु-विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये [2]'वृष्टयन्नादि'फलानि इष्टान्येव । कथं तेषां विरोधाद्विनाश उच्यते ? ; तत्राऽह—पाते तु—इति । शरीरपाते तु तेषां विनाशः । शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥१४॥

इति इतराधिकरणम् ॥ ८ ॥

—o—

---

न सुकृताश्लेषविनाशसम्भवः । अवगमयति चेत् ! पापशब्दस्य विद्याविरोधिकर्मपरत्वेन वाक्ययोः सुकृतदुष्कृताश्लेषविनाशपरत्वात्, पूर्वोत्तरसुकृतयोः अश्लेष-विनाशसंम्भवः—इति ॥

नन्वित्यादि । विद्यानुगुणदृष्टफलानि तिष्ठन्ति चेत् ! तानि शरीरपातादूर्ध्वं नश्यन्तीत्यर्थः ॥ १४ ॥

इति इतराधिकरणम् ॥ ८ ॥

—o—

---

[1] सुकृतस्य—वा.    [2] वृष्टयन्नादीनि—द.

(132) अनारब्धकार्याधिकरणम् ॥ ४-१-९ ॥

[अधिकरणार्थः—भगवदुपासकस्योक्तः सुकृतादिविनाशः फलदानाप्रवृत्तपुण्यपापमात्रविषयः]

## ४८४. अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४-१-१५ ॥ (सि)

[अवान्तरसङ्गतिः]

ब्रह्मविद्योत्पत्तेः पूर्वभाविनोः सुकृत-दुष्कृतयोः, अश्लेष-विनाशावुक्तौ ।

[विचारोपयोगी संशयः]

ततः पूर्वभाविनोः सुकृत-दुष्कृतयोः, किम् अविशेषेण विनाशः ? उत अनारब्ध-कार्ययोरेव ?—इति विशये ;

[युक्त्या पूर्वः पक्षः]

'सर्वे पाप्मानः प्रदूयन्ते' (छां.उ. 5-24-3)

इति विद्याफलस्य [1]अविशेष[1]श्रवणात्, विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत् संस्कारवशादप्युपपत्तेः, अविशेषेण ॥

[सूत्रार्थतः सिद्धान्तः]

इति प्राप्ते, उच्यते—अनारब्धकार्ये एव तु पूर्वे—इति । विद्योत्पत्तेः पूर्वे सुकृत-दुष्कृते, अनारब्धकार्ये—अप्रवृत्तफले एव विद्यया [2]विनश्यतः[2] ।

---

ततः पूर्वभाविनोः—ब्रह्मविद्योत्पत्तिपूर्वभाविनोः । किं पूर्वे सुकृत-दुष्कृते अविशेषेण नश्यतः ? उत अनारब्धफले ? । किं 'सर्वे पाप्मानः' इति सर्वशब्दस्वारस्यानुरोधो न्याय्यः ? उत 'तस्य ताव'दिति विलम्बश्रुत्यनुरोधः ? । किं कुलालचक्रभ्रमणवत् कर्मविनाशे संस्कारेण

---

[सूत्रार्थः । पूर्वे—विद्योत्पत्तेः प्राचीने सुकृत-दुष्कृते, अनारब्धकार्ये एव—स्वस्वफल-वितरणाय अप्रवृत्ते एव, विनाशं प्राप्नुतः ; न तु फलदानप्रवृत्ते ; तदवधेः—मोक्षस्य शरीर-पातविलम्बावधेः श्रुत्याऽवगमात् ।]

'अप्रवृत्तफले एव विद्ययाऽत्र विनश्यतः । तस्य तावच्चिरमिति प्रारब्धस्यावधेः श्रुतेः ॥' (अ.प. 484)

---

[1] अविशेषेण—द. [2] नश्यतः—पा.

कुतः ? ; तदवधेः—

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छां.उ. 6-14-3) इति शरीरपातविलम्बावधिश्रुतेः ॥

[संस्कारविशेषस्य अप्रामाणिकता]

न च—पुण्यापुण्य[1]कर्मजन्य[1]भगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥

इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

—o—

---

शरीरधारणमुपपद्यते ? न ? इति । किम् ईश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति ? न ? इति ॥ अस्ति चेत् ! तेन शरीरधारणोपपत्तेः 'सर्व'शब्दस्वारस्यानुरोधस्य न्याय्यत्वात्, अविशेषेण नश्यतः । न चेत् ! संस्कारेण शरीरधारणायोगात्, विलम्बश्रुत्यनुरोधेन अनारब्धफले एव नश्यतः—इति सिध्यति ॥ १५ ॥

इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

—o—

---

[1] जन्य—द.

(133) अग्निहोत्राद्यधिकरणम् ॥ ४-१-१० ॥ (सू. 16-18)

[अधिकरणार्थः—अग्निहोत्रादिकं नित्य-नैमित्तिकरूपं कर्म अनुष्ठेयविद्यार्थत्वात् अवश्यं कर्तव्यमेव]

## ४८५. अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४-१-१६ ॥ (सि)

[अवान्तरसङ्गतिः]

'इतरस्याऽप्येवमसंश्लेषः' (ब्र.सू. 4-1-14) इति, विद्याबलात् सुकृतस्याऽप्यसंश्लेषः उक्तः ।

[पूर्वः पक्षः युक्त्या]

अग्नि[1]होत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्य अश्लेषात् अनिच्छतः अननुष्ठाने प्राप्ते ; ॥

[सूत्रतः सिद्धान्तः]

उच्यते—अग्निहोत्रादि तु—इति । 'तु' शब्दः सुकृतान्तरेभ्यो [2]विशेषणार्थः[2] । अग्निहोत्राद्याश्रम[3]धर्माः फला[3]श्लेषासम्भवात् अनुष्ठेया एव । तदसम्भवश्च तत्कार्यार्थत्वात् तेषाम् । विद्याख्यकार्यायैव हि! विदुषः, अग्निहोत्राद्यनुष्ठानम् ।

---

अग्निहोत्रादीति । ऊर्ध्वरेतस्सु अग्निहोत्रादिनैरपेक्ष्यदर्शनात्, अनूर्ध्वरेतसामपि तन्नैरपेक्ष्यशङ्कायां, 'सर्वापेक्षे'ति सूत्रम् । यज्ञादेः आश्रमधर्मत्वे विद्याङ्गत्वे च नित्यानित्यसंयोगविरोधपरिहारार्थं, 'सहकारित्वेन चे'ति सूत्रम् । सुकृतफलाश्लेषात् अननुष्ठेयत्वशङ्कापरिहारार्थम्, 'अग्निहोत्रादि' इति सूत्रम् । एवं सूत्राणामपौनरुक्त्यावहेषु शङ्काविशेषेषु सूत्राणामुत्थानात्, समुच्चयवादो निरवकाशः ॥

---

[सूत्रार्थः । अग्निहोत्रादि तु—अग्निहोत्रप्रभृतिकं नित्य-नैमित्तिकाख्यमाश्रमकर्म परम्, तत्कार्यायैव—विद्याख्यकार्यस्वरूपलाभार्थमेवावश्यानुष्ठेयम्, तद्दर्शनात्—'तमेतं....यज्ञेन दानेन' इति तेषां विद्यार्थतायाः श्रुतिषु दृष्टत्वात् ।]

'अग्निहोत्रादि विदुषा कर्तव्यं यावदायुषम् । विद्याख्यकार्यवृद्ध्यर्थं 'यज्ञेने'त्यादिदर्शनात् ॥' (ब्र.प. 485)

---

[1] अत्राग्नि—थ.　[2] विशेषणार्थः—द. न.　[3] धर्मफला—थ.

कथमिदमवगम्यते ! ; तद्दर्शनात्—दृश्यते हि !

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ. 6-4-22)

इत्यादिना, अग्निहोत्रादीनां विद्यासाधनत्वम् ॥

[कर्मणामपि यावदायुषता]

विद्यायाश्च आप्रयाणात् अभ्यासाधेयातिशयायाः अहरहरुत्पाद्यत्वात्, तदुत्पत्त्यर्थम् आश्रमकर्माऽपि अहरहरनुष्ठेयमेव । अन्यथा आश्रमकर्मलोपे, दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

['सुहृदः साधुकृत्या'मिति श्रुतेर्विषयकल्पनम्]

यदि अग्निहोत्रादिसाधुकृत्याः विद्योत्पत्त्यर्थाः ; विद्योत्पत्तेः प्राचीनं च सुकृतम्,

'यावत्सम्पातमुषित्वा' (छां.उ. 5-10-5)

'प्राप्याऽन्तं कर्मणः' (बृ उ. 6-4-6)

इति, अनुभवेन विनष्टम् ; '[1]कमुशिष्ट[1] च '[2]प्रारब्धफलम्[2] !

'सुहृदः साधुकृत्याम्' (शाठ्या)

इत्यस्य को [3]विषयः[3] ? तत्राह—

---

किम् अग्निहोत्राद्याश्रमधर्मः विदुषः कार्याश्लेषात् अननुष्ठेयः ? उत अनुष्ठेयः ? । किम् अश्लेषवचनं सर्वसुकृतविषयम् ? उत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयम् ? । किं विद्वत्सम्बन्ध्याश्रमधर्मस्याऽपि फलं विद्याव्यतिरिक्तम् ? उत विद्यैव ? इति । व्यतिरिक्तं चेत् ! अश्लेषवचनस्य सर्वसुकृतविषयतया कार्याश्लेषादननुष्ठेयता । यदा विद्यैव फलम् ! तदा च अश्लेषवचनस्य विद्वत्सम्बन्ध्याश्रमधर्मव्यतिरिक्तविषयत्वेन कार्याश्लेषाभावात् अनुष्ठेयता ॥ १६ ॥

सुहृदः.... विषय इति । उत्तरपापकृत्यायाः प्रागभुक्तत्वात्, प्रारब्धफलत्वाभावात् विद्यार्थत्वाभावाच्च, 'द्विषन्तः पापकृत्याम्' इत्यस्य उत्तरार्धं विषयः स्यात् ; इति मत्वा, 'को विषयः ?' इत्युक्तम् ॥

---

[1] भुक्तावशिष्टं—वा. [2] प्रारब्धं कर्मफलम्—न. [3] विधेयः—न.

## ४८६. अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४–१–१७ ॥ (सि)

अतः—अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थायाः, अन्याऽपि—विद्याधिगमात् पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्म[1]प्रतिबद्ध[1]फला साधुकृत्या, अनन्ता सम्भवत्येव । तद्विषयमिदम् एकेषां शाखिनां वचनम् ;

'तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्याम्' (शाट्या)

इति । विद्यया अश्लेष-विनाशश्रुतिश्च तद्विषया ॥ १७ ॥

['सुहृद;' इति श्रुते; उक्तो विषयः पूर्वसिद्ध इति स्मरणम् ]

अनुष्ठितस्याऽपि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

## ४८७. यदेव विद्ययेति हि ॥ ४–१–१८ ॥ (सि)

'यदेव विद्यया करोति....तदेव वीर्यवत्तरम्' (छां.उ. 1-1-10)

इति उद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेन, अनुष्ठितस्याऽपि कर्मणः फल-

---

अत इत्यादि । भुक्तं, भुज्यमानं, भोक्ष्यमाणं, प्रतिबद्धफलं चेति विविधं कर्म । तत्र पूर्वकृतं पश्चाच्च वृष्ट्यन्नादिहेतोः कृतं प्रतिबद्धफलं कर्माऽस्ति । तद्विषया 'सुहृदः-साधुकृत्याम्' इति श्रुतिः अश्लेष-विनाशश्रुतिश्चेत्यर्थः ॥ १७ ॥

पूर्वोक्तमिति । 'पृथग्ध्यप्रतिबन्धः फलम्' इति सूत्रेण कण्ठोक्तमत्र स्मारयतीत्यर्थः ।

---

[सूत्रार्थः । अतः—विद्याद्यङ्गभूतायाः, अन्याऽपि—अतिरिक्तापि साधुकृत्या, उभयोः—विद्यापूर्वोत्तरोभयविधपुण्यकर्मान्तर्गता, हि—यतोस्ति । ततः, एकेषाम्—शाट्यायनिनां श्रुतिः तद्विषया भवितुमर्हति ।]

साधुकृत्यां सुहृद इत्युभयोः पुण्यकर्मणोः । अन्याऽपि प्रतिबद्धा च साधुकृत्या भवेदिति ॥ (ब्र.प. 486)

[सूत्रार्थः । हि—यतः, यदेव विद्ययेति—इदं श्रुतिवाक्यं विद्यासहितकर्मणो वीर्यवत्तरत्वज्ञापकम्, अतः शाट्यायनिनां वचनम् अदत्तफलविद्वद्कृतपुण्यविषयम् ।]

'यदेव विद्यया चेति श्रुत्या तदपि सूच्यते । विद्याविहीनाः क्रतवः प्रतिबद्धफला इति ॥' (ब्र.प. 487)

---

[1] प्रतिषिद्ध—द.

प्रतिबन्धः सूच्यते हि। अतः विदुषोऽनुष्ठित[1]प्रतिबद्ध[1]फलविषयम्, 'सुहृदः साधुकृत्या-मिति शाठ्यायनिकम् ॥ १८ ॥

इति अग्निहोत्राद्यधिकरणम् ॥ १० ॥

—o—

---

सूच्यते हीति। अयं 'हि' शब्दः 'पृथग्ध्यप्रतिबन्धः फलम्' इत्यत्र हिशब्दवत् न उपपत्तिप्रसिद्धिद्योतकः ; किन्तु उपपादितप्रसिद्धिद्योतकः ॥ १८ ॥

सूत्राणि। १. अग्निहो २. अतोऽन्या ३. यदेव

इति अग्निहोत्राद्यधिकरणम् ॥ १० ॥

—o—

[1] प्रतिबन्ध—अ. आ.

(134) इतरक्षपणाधिकरणम् ॥ ४-१-११ ॥

[अधिकरणार्थः—विदुषो ब्रह्मसम्पत्तिः ; आरब्धकार्यपुण्य-पापयोः फलभोगेन क्षपणानन्तरमेव]

## ४८८. भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ ४-१-१९ ॥ (सि)

[विचारौपयिकः संशयः]

ययोः पुण्य-पापयोः अश्लेष-विनाशावुक्तौ, ताभ्यामितरे आरब्धकार्ये पुण्य-पापे, किं विद्यायोनिशरीरावसाने ? उत तच्छरीरावसाने, शरीरान्तरावसाने वा, इत्यनियमः ? —इति संशये,

[युक्त्या पूर्वःपक्षः]

'तस्य तावदेव चिरं यावन्न [1]विमोक्ष्ये ; अथ सम्पत्स्ये'[1] (छां.उ. 6-4-13) इति तच्छरीर[2]विमोक्षा[2]वसानत्वश्रवणात्, तदवसाने ॥

[सूत्रार्थतः सिद्धान्तः]

इति प्राप्ते, उच्यते—भोगेन तु—इति । 'तु' शब्दः पक्षव्यावृत्त्यर्थः । इतरे—आरब्धकार्ये पुण्य-पापे स्वारब्धफलभोगेन क्षपयित्वा, तत्फलभोगसमाप्त्यनन्तरं ब्रह्म

---

**भोगेनेति** । सङ्गतिः स्फुटा । आरब्धकार्ये पुण्य-पापे किं विद्यायोनिशरीरावसाने ? उत तच्छरीरावसाने ; देहान्तरावसाने वेत्यनियमः ? । किं 'तस्य तावदि'ति वाक्यं, विद्यायोनिशरीरावसानम् अवगमयति ? उत शरीरमतन्त्रीकृत्य फलभोगावसानम् अवगमयति ? इति । प्रथमे विद्यायोनिशरीरावसानत्वम् । द्वितीये तु अनियमः ।

**तस्य तावदिति** । 'यावन्न विमोक्ष्ये' इत्यत्र देहः तदवधिश्च न श्रुतौ । 'धूत्वा शरीरमकृतं कृतात्मा' इत्यत्र शरीरं श्रुतम् ; अवधिस्तु न श्रुतः । 'शरीर'मिति एकवचनमपि

---

[सूत्रार्थः । **इतरे**—आरब्धकार्ये पुण्य-पापे, **भोगेन**—स्वस्वारब्धफलानुभवेन, **क्षपयित्वा तु**—क्षीणे कृत्वैव, **अथ**—भोगसमाप्तेः पश्चात्, **सम्पद्यते**—ब्रह्म सम्पन्नो भवति विद्वान् चेतनः । ]

'आरब्धकार्ये त्वितरे भोगेनैव विनश्यतः । अथ कालान्तरे वाऽपीत्यथ ब्रह्म समश्नुते ॥' (ब्र.प. 488)

---

[1] विमोक्ष्ये—पा. [2] मोक्षा—पा.

सम्पद्यते । ते च पुण्य-पापे एक[1]शरीरोप[1]भोग्यफले चेत्! तच्छरीरावसाने सम्पद्यते । अनेकशरीरोपभोग्यफले चेत्! तदवसाने सम्पद्यते ; [2]भोगेनैव च[2] क्षपयितव्यत्वात् आरब्धफलयोः कर्मणोः ।

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छां.उ. 6–4–13)

इति च, भोगेन तयोः कर्मणोर्विमोक्ष उच्यते ; देहावधिनियमाश्रवणात् ॥

[बहुचर्चितपुण्यपापाश्लेषविनाशविचारनिगमनम्]

तदेवं—ब्रह्मविद्यायाः प्रागनुष्ठितम् अभुक्तफलम् अनारब्धफलं पुण्य-पापरूपं कर्म, अनादिकालसंचितम् अनन्तं, विद्यामाहात्म्याद्विनश्यति । विद्यारम्भोत्तरकालमनुष्ठितं च न श्लिष्यति । तत्र पुण्यरूपं सर्वं, विदुषः सुहृदो गृह्णन्ति ; पापं च द्विषन्तः—इति निरवद्यम् ॥ १९ ॥

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्य फलाध्यायस्य

प्रथमः आवृत्तिपादः ॥ १ ॥

—o—

---

जातिविषयम्, 'अश्व इव रोमाणि विधूय पापम्' इति पूर्वखण्डस्थपापशब्दैकवचनवत्—इत्यभिप्रायेण ; 'देहावधिनियमाश्रवणात्' इत्युक्तम् ॥

**तदेवमिति,** अस्मिन् पादे बह्वधिकरणोक्तार्थसुग्रहत्वायोक्तम् ॥ १९ ॥

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

प्रथमः पादः समाप्तः ॥

—o—

---

[1] शरीर—अ, आ. [2] भोगेनैव—पा.

॥ श्रीः ॥

## चतुर्थे फलाध्याये द्वितीयः उत्क्रान्तिपादः

[पादार्थः—ब्रह्मवेदिनो गतिप्रकारचिन्तायां प्रथमं शरीरादुत्क्रान्तिचिन्ता]

(अधिकरणानि—११. सूत्राणि—२०)

(135) १. **वागधिकरणम्** (सू. 1–2)

'वाङ्मनसि सम्पद्यते' इत्युक्ता वाचः सम्पत्तिर्मनसि, वाक्स्वरूपस्यैव ; न तु वाग्वृत्तेः

(136) २. **मनोधिकरणम्** (सू. 3)

'मनः प्राणे' इत्युक्ता मनस्सम्पत्तिः, प्राणे संयोग एव

(137) ३. **अध्यक्षाधिकरणम्** (सू. 4)

'प्राणस्तेजसि' इत्युक्ता प्राणसम्पत्तिः, जीवेन संयोगः

(138) ४. **भूताधिकरणम्** (सू. 5–6)

जीवेन संयुक्तस्य तेजसि सम्पत्तिः, भूतान्तरसंसृष्टे एव

(139) ५. **आसृत्युपक्रमाधिकरणम्** (सू. 7–13)

जीवस्य देहादुत्क्रान्तिः, नाडीप्रवेशात् प्राक् विद्वदविदुषोरुभयोः समा

(140) ६. **परसम्पत्त्यधिकरणम्** (सू. 14)

जीवसंयुक्तानां भूतानां परमात्मन्येव सम्पत्तिः ; न तु यथायथं स्वकार्याय गमनम्

(141) ७. **अविभागाधिकरणम्** (सू. 15)

जीवस्य परमात्मनि सम्पत्तिः, पृथक्प्रतिपत्तिव्यवहारानर्हः संसर्ग एव ; न तु परमात्मतापत्तिः

(142) ८. **तदोकोऽधिकरणम्** (सू. 16)

'शतं चैका चे'त्याद्युक्तः विदुषो मूर्धन्यनाड्योद्गमः, कृपालोः परमात्मनोऽनुग्रहतः सुसाध्यः

(143) ९. **रश्म्यनुसाराधिकरणम्** (सू. 17)

विदुषो जीवस्य मोक्षार्थो देहान्निर्गमः, अह्नि रात्रावपि सूर्यरश्मीननुसृत्यैव

(144) १०. **निशाधिकरणम्** (सू. 18)

निशि मृतस्याऽपि विदुषः अर्चिरादिगत्या ब्रह्मप्राप्तिर्निर्बाधा

(145) ११. **दक्षिणायनाधिकरणम्** (सू. 19-20)

विदुषो दक्षिणायनमरणेऽपि, बन्धहेत्वभावात् ब्रह्मप्राप्तिरपुनरावृत्तिश्च सिद्धा

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये

## चतुर्थे फलाध्याये

## (14) द्वितीयः उत्क्रान्तिपादः ॥ ४-२ ॥

[अधिकरणानि 11        सूत्राणि 20]

[पादार्थः—ब्रह्मविदुषो गतिप्रकारचिन्तायां प्रथममुत्क्रान्तिचिन्ता]

### (135) वागधिकरणम् ॥ ४-२-१ ॥ (सू. 1-2)

[अधिकरणार्थः—प्रयतो जीवस्योक्ता वाचो मनसि सम्पत्तिः, वाक्स्वरूपसम्पत्तिरेव ; न तु तद्वृत्तिमात्रस्य]

### ४८९. वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४-२-१ ॥ (सि)

[पादे विचार्यमाणो विषयः; प्रकृताधिकरणविषयश्च]

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावत् उत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते—

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते, मनः प्राणे,
प्राणस्तेजसि, तेजः परस्यां देवतायाम्' (छां.उ. 6-8-6)

इति ।

---

वाङ्मनसीति । शरीरस्थितिसमये यद् विद्याफलं, तदुक्तम् । अथ गत्युपक्रमश्चिन्त्यते—इति पादसङ्गतिः । उत्क्रान्तिः—गतेरुपक्रमः । सा चिन्त्यते—किम् इयं सम्पत्तिः वाग्वृत्तिविषया ? उत वाक्स्वरूपविषया ? – इति । किं 'वाक्' शब्दस्य मुख्यार्थपरिग्रहः

---

[सूत्रार्थः । वाक्—इन्द्रियरूपा वाक्, मनसि—मनोरूपे इन्द्रिये, (संयोगाख्यसम्पत्तिमती भवति) दर्शनात्—(उपरतेऽपि वागाख्ये इन्द्रिये) मनःप्रवृत्तेरुपलम्भात्, शब्दाच्च—वाक्स्वरूपसम्पत्तिप्रतिपादकस्य 'वाक्' शब्दस्यैव श्रुतौ कण्ठोक्तेश्च ।]

'संयोग एव वाचोऽत्र मनसा न भवेल्लयः । वागभावे मनोवृत्तेर्दर्शनाच्छब्दतोऽपि हि ॥' (ब्र.प. 489)

[अधिकरणीयः संशयः]

अत्र 'वाङ्मनसि सम्पद्यते' इति, वाचो मनसि सम्पत्तिश्रुतिः, किं वाग्वृत्तिमात्रविषया ? उत वाग्विषया ?—इति विशये,

[युक्त्या पूर्वः पक्षः]

वृत्तिमात्रविषया— इति युक्तम् ।

कुतः ? । मनसः वाक्प्रकृतिक[1]त्वाभावात्[1], तत्र वाक्स्वरूपसम्पत्त्यसम्भवात् । वागादिवृत्तीनां मनोऽधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथञ्चिदुपपद्यते—इति ।।

[सूत्रतः सिद्धान्तार्थः]

एवं प्राप्ते, अभिधीयते—वाङ्मनसि—इति । वाक्स्वरूपमेव मनसि सम्पद्यते ।

कुतः ? । दर्शनात् । दृश्यते हि ! वागिन्द्रिये उपरतेऽपि मनः प्रवृत्तिः ।

[2]वृत्तिमात्र[2]सम्पत्त्याऽपि तदुपपद्यते—इति चेत् ! तत्राऽऽह—शब्दाच्च—इति । 'वाङ्मनसि सम्पद्यते' इति [3]वाक्स्वरूप[3]सम्पत्तावेव हि शब्दः ; न वृत्तिमात्रसम्पत्तौ ।

---

उपपन्नः ? न ?—इति । किम् इयं सम्पत्तिः लयरूपा ? उत व्यापारनिवृत्तिपूर्वकसंयोगरूपा ?—इति । इन्द्रियान्तरसम्पत्तिवचनं, किं लयपरत्वेऽप्युपपद्यते ? उत संयोगपरत्वे एव ?—इति । यदा लयपरत्वेऽप्युपपद्यते ? ; तदा सम्पत्तेः लयरूपतया 'वाक्'शब्दस्य मुख्यार्थपरिग्रहायोगात् , सम्पत्तिः वृत्तिविषया स्यात् । यदा संयोगपरत्वे एव उपपत्तिः ; तदा सम्पत्तेः संयोगरूपत्वेन 'वाक्' शब्दस्य मुख्यार्थत्वात् , सम्पत्तिः स्वरूपविषया स्यात् ।।

**कुत इत्यादि** । कारणे हि लयः । न वाचो मनः कारणम् ; तत्प्रवृत्तेरेव कारणं मन इति, वृत्तिविषयासम्पत्तिरित्यर्थः । वाग्वृत्तेर्हि वाक् आश्रयभूता ; न मनः । अतः तद्वृत्तिहेतुस्वरूपव्यापारस्य मनसि लयः इति अस्वारस्याभिप्रायेण **कथञ्चिदिति** ।।

**वाङ्मनसीति** । 'वाक्'शब्दस्य वृत्तिपरत्वे लक्षणा स्यात् । स्वरूपपरत्वे तु न लक्षणा । 'सम्पत्ति'शब्दः, लयवाची संयोगवाची च '। लयवाचित्वे प्रसिद्धिप्राचुर्यात् , संयोगवाचित्वम् अस्वरसमिति चेत् ! ; पूर्वपक्षिणोऽपि लयवाचित्वमयुक्तम् । उपादाने हि लयः । वाग्वृत्तेः वागेव उपादानम् । मनस्तु निमित्तम् । एवं 'वाक्-सम्पत्ति'शब्दयोरुभयोरपि लाक्षणिकत्वास्वारस्य(योः)प्रसङ्गः पूर्वपक्षे । अस्माकं तु 'सम्पत्ति'शब्दास्वारस्यमेव ; न वाक्-शब्दलक्षणलक्षणा—इति विशेष इत्यर्थः । **दृश्यते हीति** । प्रवृत्तव्यापारं मनः । निवृत्तव्यापारं

---

[1] स्वासम्भवात्—वा. [2] प्रवृत्तिमात्र—आ. [3] वाक्यस्वरूप—त.

न हि तदानीं वृत्त्युपरमे, वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते ; येन [1]वृत्तिमात्रमेव[1] सम्पद्यते इत्युच्येत ।

[पूर्वपक्षयुक्तेः समाधानम्]

यदुक्तम्—मनसो [2]वाक्प्रकृतित्वा[2]भावात् वाचो मनसि सम्पत्तिः नोपपद्यते—इति; तत्, 'वाङ्मनसि सम्पद्यते' इति वचनात्, मनसा वाक् संयुज्यते, न तु तत्र लीयते—इति परिहर्तव्यम् ॥ १ ॥

[उक्तेऽर्थे श्रुत्यन्तरार्थसामञ्जस्यसिद्धिः]

## ४९०. अत एव सर्वाण्यनु ॥ ४-२-२ ॥ (सि)

यतः, वाचः मनसा संयोगमात्रं—सम्पत्तिः, न तु लयः ; अत एव, वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिः उपपद्यते—

'तस्मादुपशान्ततेजाः [3]पुनर्भव[3]मिन्द्रियैर्मनसि सम्पद्यमानैः' (प्रश्न.उ. 3-9) इति ॥ २ ॥

इति वागधिकरणम् ॥ १ ॥

—o—

---

वागिन्द्रियम् । तत्र प्रवृत्तस्वकार्ये मनसि निवृत्तस्वकार्यं वागिन्द्रियम् अन्तर्गतं भवितुमर्हति । यथा प्रवृत्तस्वकार्ये दारुणि निवृत्तस्वकार्योऽग्निरन्तर्भूतः इति भावः । **वृत्तिमात्रेति** । यद्यत् निवृत्तस्वकार्यं तत्तत् प्रवृत्तस्वकार्ये अन्तर्गतं भवतीति न व्याप्तिरस्ति । अतः वृत्तिमात्र-सम्पत्त्याऽपि वागिन्द्रियोपरमे मनःप्रवृत्तिदर्शनमुपपद्यत इत्यर्थः ॥ **दर्शनात् शब्दाच्च इति** द्वयमपि एको हेतुः ॥ १ ॥ **वाचमनु**—वाचः पश्चात् इत्यर्थः ॥ २ ॥

[सूत्रे—१. वाङ्मन, २. अत एव ।]

इति वागधिकरणम् ॥ १ ॥

—o—

---

[सूत्रार्थः—**अत एव**—संयोगमात्रस्यैव सम्पत्तिरूपतायाः श्रुतिसंमतत्वादेव, **अनु**—वाचमनुसृत्य, **सर्वाणि**—सकलान्यपीन्द्रियाणि मनसि सम्पद्यमानानि भवन्तीति श्रुतिः सङ्गता भवति ।]

'अनुवाचं त्विन्द्रियाणां सम्पत्तिर्मनसि श्रुतेः । सम्पद्यमानैर्मनसि त्विन्द्रियैरिति शब्दतः ॥' (ब्र.प.490)

---

[1] वृत्तिमात्रं—वा. [2] वाक्प्रकृतिकत्वा—न. [3] अपुनर्भव—पा.

## (136) मनोऽधिकरणम् ॥ ४-२-२ ॥

[अधिकरणार्थः—सर्वेन्द्रिययुक्तस्य मनसः, संयोगरूपा प्राणे सम्पत्तिः]

## ४९१. तन्मनः प्राण उत्तरात् ॥ ४–२–३ ॥ (सि)

[सूत्रविवृत्या सिद्धान्तार्थवर्णनम् ]

तत्—सर्वेन्द्रिययुक्तं, मनः, प्राणे सम्पद्यते—प्राणेन संयुज्यते । न [1]मनोवृत्ति[1]मात्रम् ।

कुतः ? ; उत्तरात्—'मनः प्राणे' (छां.उ. 6-8-6)
इति वाक्यात् ।

[अधिकरणौपयिकी अधिकाशङ्का]

अधिकाशङ्का तु—

'अन्नमयं हि सोम्य मनः' (छां.उ. 6-2-4)
इति वचनात् , मनसः [2]अन्नप्रकृतिक[2]त्वमवगम्यते । [3]अन्नस्य च[3],

'ता अन्नमसृजन्त' (छां.उ. 6-6-5)
इति, अम्मयत्वं सिद्धम् ।

'आपो मयः प्राणः' (छां.उ. 6-6-5)
इति च अप्प्रकृतित्वं प्राणस्याऽवगम्यते । अतः 'मनः प्राणे सम्पद्यते' इत्यत्र 'प्राण-

---

तन्मन इति । सङ्गतिः स्फुटा । किम् अत्र मनसो लय उच्यते ? उत संयोगः ? । किमत्र 'प्राण' इति, अपां निर्देशः ? उत प्राणस्यैव ? । 'आपोमयः' इति वाक्यं , किं प्रकृति-विकारभावपरम् ? उत आप्यायनपरम् ? । प्रकृति-विकारपरत्वे, 'प्राण' इत्यपां निर्देशात् , सम्पत्तिः लयः स्यात् । आप्यायनपरत्वे, प्राणस्यैव निर्देशात् , सम्पत्तिः

---

[सूत्रार्थः । तत् —स्वस्मिन् सम्पन्नैः सर्वैरिन्द्रियैर्युक्तं, मनः—मनआख्यमिन्द्रियम् , प्राणे—मुख्यप्राणात्मके वायौ संयोगरूपां सम्पत्तिं प्राप्नोति । उत्तरात्—'मनः प्राणे' इत्युत्तरवाक्यात् श्रुतिगतात् ज्ञापकात् ॥ ]

'सर्वेन्द्रियसमायुक्तं प्राणे संयुज्यते मनः । मनः प्राण इति श्रुत्या परयैतद्धि कथ्यते ॥ ' (ब्र.प. 491)

---

[1] मनसो वृत्ति—त. थ. [2] अन्नप्रकृति—वा. [3] अन्नस्य – त. थ.

शब्देन प्राणप्रकृतिभूताः अपो निर्दिश्य, तासु मनः सम्पत्तिप्रतिपादने, परम्परया स्वकारणे लय इति, सम्पत्तिवचनम् उपपन्नं भवति—इति ॥

[अधिकरणतः सिद्धः तत्परिहारः]

परिहारस्तु—

'अन्नमयं हि सोम्य मनः' 'आपोमयः प्राणः' (छां.उ. 6-6-5)

इति, मनः-प्राणयोः अन्नेन अद्भिश्च आप्यायनमुच्यते ; न तत्प्रकृतित्वम् ; आहङ्कारिकत्वान्मनसः, [1]आकाश[1]विकारत्वाच्च प्राणस्य । 'प्राण' शब्देन अपां लक्षणा च स्यात्—इति ॥ ३ ॥

इति मनोऽधिकरणम् ॥ २ ॥

—o—

---

संयोगः स्यात् । परम्परया....लय इति । स्वकारणपृथिवीद्वारेण अन्नमयस्य मनसः 'प्राण'-शब्दलक्षितास्वप्सु लय इत्यर्थः ॥ ३ ॥

इति मनोऽधिकरणम् ॥ २ ॥

—o—

---

[1] आकाशादि—द.न.

## (137) अध्यक्षाधिकरणम् ॥ ४-२-३ ॥

[अधिकरणार्थः—वागादिमनोन्तयुक्तस्य प्राणस्य जीवे सम्पत्तिः]

## ४९२. सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४-२-४ ॥ (सि)

[सयुक्तिकः पूर्वः पक्षः]

यथा,

'वाङ्मनसि सम्पद्यते, मनः प्राणे' (छां.उ. 6-8-6)

इति वचनानुरोधेन, मनः-प्राणयोरेव वाङ्-मनसयोः सम्पत्तिः ; तथा,

'प्राणस्तेजसि' (छां.उ. 6-8-6)

इति वचनात्, तेजस्येव प्राणः सम्पद्यते ॥

---

[सूत्रतः सिद्धान्तार्थः]

इति प्राप्ते, उच्यते—सोऽध्यक्षे—इति । सः-प्राणः, अध्यक्षे—करणाधिपे जीवे सम्पद्यते ।

कुतः? । तदुपगमादिभ्यः—प्राणस्य जीवोपगमस्तावच्छ्रूयते—

'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' (छां.उ. 6-3-38)

---

सोऽध्यक्ष इति । सङ्गतिः स्फुटा । किं प्राणः तेजसि सम्पद्यते? उत जीवे? । किं 'प्राणस्तेजसी'ति वाक्यं, जीवसम्पत्तिपूर्वकतेजस्सम्पत्तिपरम्? उत केवलतेजस्सम्पत्तिपरम्? । जीवसम्पत्तिपरत्वे, 'प्राणस्तेजसी'ति वाक्यस्वारस्यं हीयते? न?—इति ॥ हीयते चेत्! वाक्यस्य केवलसम्पत्तिपरत्वात्, न जीवे सम्पत्तिः । न हीयते चेत्! जीवसम्पत्तिपूर्वक-तेजस्सम्पत्तिपरत्वात् वाक्यस्य, प्राणस्य जीवे सम्पत्तिः ॥ **उपगमः**—सम्बन्धः ।

---

सूत्रार्थः । सः—सेन्द्रियः प्राणः, अध्यक्षे—देहाध्यक्षे जीवे सम्पत्तिमान् भवति, तदुपगमादिभ्यः—(प्राणस्य) जीवेन सहोत्क्रान्त्यादेः श्रुतिसिद्धत्वात् ।]

**देहाध्यक्षेऽत्र जीवे तु प्राणः संयुज्यते हि सः । उत्क्रामति समायाति तथाऽहमिति शब्दतः ॥ (ब्र.प. 492)**

इति । तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते—

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (छां. उ. 6-4-2)

इति । प्रतिष्ठा च जीवेन सह श्रूयते—

'कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि ; कस्मिन् वा प्रतिष्ठिते [1]प्रतिष्ठास्यामि[1]' (प्रश्न.उ. 6-3)

इति । एवं जीवेन संयुज्य तेन सह तेजस्सम्पत्तिः इह, 'प्राणस्तेजसि' (छां.उ. 6-8-6) इत्युच्यते । यथा यमुनायाः गङ्गया संयुज्य सागरगमनेऽपि, 'यमुना सागरं गच्छति' इति वचो न विरुध्यते ; तद्वत् ॥ ४ ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

—o—

---

तेजः शब्देन भूतसूक्ष्मांशाः विवक्षिताः । तथा जीवेनेति, [सूत्रस्थस्य] आदिशब्दस्य अर्थमाह । यथेत्यादि, अन्येन संयुज्य पादार्थान्तरसम्बन्धेऽपि अन्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह ॥ ४ ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

—o—

---

[1] प्रतिष्ठितः स्याम्-- त. न.

(138) भूताधिकरणम् ॥ ४–२–४ ॥ (सू. 5–6)

[अधिकरणार्थः—प्राणसंयुक्तस्य जीवस्य संहतेषु सर्वेषु भूतेष्वेव सम्पत्तिः ; न केवले तेजसि]

## ४९३. भूतेषु तच्छ्रुतेः ॥ ४-२-५ ॥ (सि)

[विचारणीयो विषयः ससंशयः]

'प्राणस्तेजसि' (छां.उ. 6-8-6)

इति, जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिः, उक्ता । सा सम्पत्तिः, किं तेजोमात्रे ? उत संहतेषु [1]सर्वेषु भूतेषु[1] ?—इति विशये ;

[पूर्वपक्षार्थः]

तेजोमात्रश्रवणात्, तेजसि ॥

[सूत्रेण सिद्धान्तार्थः]

इति प्राप्ते, उच्यते—भूतेषु—इति । [2]भूतेषु[2] सम्पद्यते ।

---

भूतेष्विति । सङ्गतिः स्फुटा । किम् अत्र भूतान्तरसंसृष्टतेजस्संयोगः ? उत तेजोमात्रसंयोगः ? इति । किं 'तेजः' शब्दः तेजोमात्रपरः ? उत भूतान्तरसंसृष्टपरः ? । किं 'पृथिवीमयः, आपोमयः इत्यादिवाक्यं युगपत् अनेकभूतसंसर्गं दर्शयति ? न ? इति । किं त्रिवृत्करणश्रुतिः पञ्चीकरणस्मृतिश्च संहतानामेव कार्यसामर्थ्यं दर्शयतः ? न ? इति । न चेत् !, पृथिवीमय इत्यादिना यौगपद्यप्रदर्शनाभावेन, 'तेजः'शब्दस्य तेजोमात्रपरतया तेजोमात्रसंयोगः स्यात् । दर्शयतश्चेत् !, पृथिवीमयत्वादिश्रुत्या युगपदनेकभूतसंसर्गप्रदर्शनेन, 'तेजः' शब्दस्य भूतान्तरसंसृष्टतेजःपरतया, भूतान्तरसंसृष्टतेजः संयोगः स्यात् ॥

---

[सूत्रार्थः । भूतेषु—(जीवयुक्तस्य प्राणस्य संश्लेषरूपा सम्पत्तिः) सर्वेष्वेव भूतेषु ; न केवले तेजसि, तच्छ्रुतेः—जीवे सर्वभूतमयतायाः श्रुतितः अवगमात् ॥]

'प्राणश्च जीवसंयुक्तो युक्तः स्याद्भूतपञ्चके । सर्वभूतमयत्वं च जीवस्य श्रुतिराह हि ॥' (ब्र.प. 493)

---

[1] सर्वेषु—त.थ. [2] सर्वेषु भूतेषु सम्पद्यते—आ.

कुतः ? । तच्छ्रुतेः—

'पृथिवीमयः, आपोमयः, तेजोमयः (बृ.उ. 6-4-5)

इति, जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

[एकैकस्य भूतस्य सृष्ट्यनौपयिकता]

ननु—तेजः प्रभृतिषु एकैकस्मिन् क्रमेण सम्पत्तावपि, 'पृथिवीमयः' इत्यादिका श्रुतिरुपपद्यते ; अत आह—

## ४९४. नैकस्मिन् दर्शयतो हि ॥४-२-६॥ (सि)

न एकस्मिन् ; एकैकस्य कार्याक्षमत्वात् । दर्शयतो हि ! अक्षमत्वं श्रुति-स्मृती ।

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6-3-2)

'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छां.उ. 6-3-3)

इति, नाम-रूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते ।

'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ (वि.पु. 1-2-52)

---

सर्वभूतेति । भूतमात्रे प्रकृतेऽपि, सामर्थ्यात् भूतमयत्वपरामर्शित्वसिद्धिः तच्छब्दस्य फलितेति भावः ॥ ५ ॥

नैकस्मिन्निति । पञ्चीकृतेषु त्रिवृत्कृतेषु वा भूतेषु एकैकमेव कार्यसमर्थम् ; न तु अत्रिवृत्कृतमेकैकम् । 'आपः पुरुषवचसो भवन्ती'त्यत्र, त्रिवृत्कृतानामेवाऽपां कार्यकरत्वदर्शनात् । 'तेजः' शब्दः अजहल्लक्षणया त्रिवृत्कृतान् भूतसूक्ष्मांशानाह ॥

[श्रुति-स्मृती इति । त्रिवृत्करणविषयिणी श्रुतिः । स्मृतिस्तु पञ्चीकरणविषयिणी ॥ त्रिवृत्करणोपदेशस्य फलज्ञापनाय 'अनेन जीवेने'ति नाम-रूपव्याकरणश्रुतिः प्रदर्शितेति,

---

[सूत्रार्थः । **एकस्मिन्**—तेजआद्यन्यतमे, **न**—जीवसम्पत्तिर्न युज्यते, **हि**—यतः, **दर्शयतः**—कार्याक्षमत्वं श्रुति-स्मृती कथयतः ॥]

'एकस्मिन् प्राणसम्बन्धस्तेजसीति न युज्यते । कार्याक्षमत्वादेकस्य त्रिवृत्करणशंसनात् ॥' (ब्र.प. 494)

समेत्याऽन्योन्यसंयोगं परस्परसमाश्रयाः ।

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।। ' (वि.पु. 1-2-53)

इति । अतः 'प्राणस्तेजसि' इति 'तेजः'शब्देन, भूतान्तरसंसृष्टमेव तेजोऽभिधीयते । अतः भूतेष्वेव सम्पत्तिः ।। ६ ।।

इति भूताधिकरणम् ।। ४ ।।

—o—

---

'योग्यत्वाय' इति भाष्ये स्फुटम् । 'नानावीर्याः' इति विष्णुपुराणवाक्यरूपा स्मृतिः पञ्चीकरणप्रदर्शनायेति । 'अतः' इति उक्तार्थनिगमनम् ] ।। ६ ।।

[सूत्रे—१. भूतेषु. २. नैकस्मिन् । ]

इति भूताधिकरणम् ।। ४ ।।

—o—

(139) आसृत्युपक्रमाधिकरणम् ॥ ४-२-५ ॥ (सू. 7-13)

[अधिकरणार्थः—देहादुत्क्रमं प्राप्नुवतोर्विद्वदविदुषोर्द्वयोरपि गतिः, नाडीप्रवेशपर्यन्तं समानैव]

## ४९५. समानाचाऽऽसृत्युपक्रमादमृतत्वं चाऽनुपोष्य ॥ ४-२-७ ॥ (सि)

[विचारौपयिकः संशयः]

इयम् उत्क्रान्तिः, किं विद्वदविदुषोः समाना? उत अविदुष एव?—इति चिन्तायाम्;

[पूर्वः पक्षः]

अविदुष एवेति प्राप्तम्।

कुतः?। विदुषः अत्रैवाऽमृतत्ववचनात् उत्क्रान्त्यभावात् विदुषो हि! अत्रैवाऽ[1]मृतत्वं[1] श्राव्यते।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि[2]श्रिताः[2]:
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥' (कठ.उ. 6-14)

इति।

---

**समानेति**। सङ्गतिः स्फुटा। किम् इयमुत्क्रान्तिः विद्वदविदुषोः समाना? उत अविदुष एव? इति। 'तयोर्ध्वमायन्' इति श्रुतिः किं विदुषः उत्क्रान्तिमवगमयति? न? इति। किमेषा श्रुतिः, इहामृतत्वश्रुत्युत्क्रान्तिनिषेधश्रुतिभ्यां व्याहन्यते? न? इति। इहाऽमृतत्वं, किम् अश्लेष-विनाशरूपम्? उत सर्वबन्धमोक्षरूपम्?। निषिध्यमाना चोत्क्रान्तिः, किं शरीरापादाना? उत शारीरापादाना?—इति च॥ यदा इहाऽमृतत्वं सर्वबन्धनिर्मोक्षरूपम्?

---

[सूत्रार्थः। **आसृत्युपक्रमात्**—नाडीप्रवेशरूपगत्यारम्भात् पूर्वम्, **समाना च**—विदुषोऽविदुषश्चोभयोर्गतिः अविलक्षणैव, **अमृतत्वं च**—अत्रैव अमृतत्वस्य श्रवणं च, **अनुपोष्य**—शरीरादिसम्बन्धदाहात्पूर्वं उपासनकालीनब्रह्मानुभवानुगुणसर्वपापक्षयाभिप्रायकमेव; न विदुषो गत्यभावपरम्।]

'नाडीप्रवेशपर्यन्तं समोत्क्रान्तिर्भवेद्द्वयोः। शरीरात्यागतो यत् स्यादमृतत्वं तदुच्यते॥' (ब्र.प. 495)

---

1 ऽमृतत्ववचनं—वा.        2 स्थिताः—पा.

[सूत्रतः सिद्धान्तः]

एवं प्राप्ते अभिधीयते—समाना चाऽऽसृत्युपक्रमात्—इति। विदुषोऽपि आसृत्युपक्रमात्—उत्क्रान्तिः समाना। आसृत्युपक्रमात्—आगत्युपक्रमात्—नाडी[1]प्रवेशात्[1] प्राक् इत्यर्थः। [2]विदुषोऽपि हि[2]! नाडीविशेषेणोत्क्रम्य गतिः श्रूयते—

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥' (कठ.उ. 6–16)

इति। एवं नाडीविशेषेण गतिश्रवणात्, विदुषोऽपि उत्क्रान्तिरवर्जनीया। सा च नाडीप्रवेशात् प्राक् विशेषाश्रवणात् समाना। तत्प्रवेशदशायां च विशेषः श्रूयते—

'तेन[3]प्रद्योतेनैष[3] आत्मा निष्क्रामति, चक्षुषो वा मूर्ध्नो वा
अन्येभ्यो वा शरीरदेशेभ्यः' (बृ उ. 4–4–2)

इति। 'शतं चैका च हृदयस्य' इत्यनया श्रुत्या ऐकार्थ्यात्, [4]मूर्ध्नो[4]निष्क्रमणं विद्वद्विषयम्। [5]इतरत् अविद्वद्विषयम्[5]॥

['अत्र ब्रह्म समश्नुते' इति श्रुत्याशयः]

यदुक्तम्—विदुषः अत्रैवाऽमृतत्वं श्राव्यते—इति;

---

उत्क्रान्तिश्च शरीरापादाना? तदा तद्विषयश्रुतिभ्यां 'तयोर्ध्वमायन्नि'ति श्रुतेर्व्याघातात्, अविदुष एव उत्क्रान्तिः॥ यदा इहाऽमृतत्वम् अघाश्लेष-विनाशरूपम्!, निषिद्धा उत्क्रान्तिश्च शारीरापादाना!, तदा तद्विषयश्रुतिभ्याम् तयोर्ध्वमायन्निति श्रुतेः अविरोधात्, विदुषोप्युत्क्रान्तिं सा अवगमयतीति, उत्क्रान्तिः, विद्वदविदुषोः समाना स्यात्॥

**विष्वङ् अन्याः**—अन्या नाड्यः विष्वग्वितताः। ताश्च अमुमुक्षूणामुत्क्रमणार्थाः इत्यर्थः॥

**तेन प्रद्योतेन**—प्रकाशेन। 'तस्य हैतस्य हृदयस्याऽग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति' इति पूर्वं श्रुतेः। मूर्ध्नो निष्क्रामत एव ऊर्ध्वया नाड्या प्रकाशितद्वारया

---

1 प्रवेशनात्—पा. 2 विदुषोऽपि—थ. 3 प्रद्योतनेनैष—द.न.
4 मूर्ध्ना—त. थ. 5 (इदम् नास्ति)—ङ.

[1]तत्रोच्यते[1] — अमृतत्वं चाऽनुपोष्य — इति । 'च' शब्दः अवधारणे । अनुपोष्य—शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव, यत् अमृतत्वम् – उत्तर-पूर्वाघयोरश्लेष-विनाशरूपं प्राप्यते ; तदुच्यते 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्या-इत्यर्थः ।

'अत्र ब्रह्म समश्नुते' (कठ.उ. 6-14)

इति च, उपासनवेलायां यो ब्रह्मानुभवः तद्विषयम्— इत्यभिप्रायः ॥ ७ ॥

## ४९६. तदापीतेः संसारव्यपदेशात् ॥ ४-२-८ ॥ (सि)

[संसारस्य ब्रह्मप्राप्तिपर्यन्तता]

अवश्यं च तत्—अमृतत्वम्, अदग्धदेहसम्बन्धस्यैवेति विज्ञेयम् ।

कुतः ? ।—आऽपीतेः संसारव्यपदेशात्— । अपीतिः—अप्ययः, ब्रह्मप्राप्तिः । 'सा च, [2]अर्चिरादिना मार्गेण[2] देशविशेषं गत्वा'—इति वक्ष्यते । आ तदवस्थाप्राप्तेः संसारः—देहसंबन्धलक्षणो हि ! व्यपदिश्यते -

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छां.उ. 6-14-2)

इति ।

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।

धूत्वा शरीरमकृतं[3]कृतात्मा[3] ब्रह्मलोकमभि[4]सम्भवानि[4] ॥' (छां.उ. 8-13-1)

[5]इति च[5] ॥ ८ ।

---

निष्क्रमणमित्यर्थः वस्तुसामर्थ्यात् । अनुपोष्य—'उष-दाहे' इति धातुः ॥ ७ ॥

तदापीतेरिति । उत्क्रान्तस्यापि गच्छतः सूक्ष्मशरीरसम्बन्धात्, आ अपीतेः संसारः— इत्यभिप्रायः । सा चेति, ब्रह्मणः सर्वगतत्वात् अत्रैव हि ब्रह्म प्राप्तम्—इति शङ्काया व्यावृत्त्यर्थम् ॥ ८ ॥

---

[सूत्रार्थः । तत्—'अत्र ब्रह्म समश्नुते' इत्युक्तममृतत्वम् (अदग्धशरीरसम्पर्कस्य चेतनस्यैवेति निश्चेयम्) आपीतेः ………… देशात्—ब्रह्मसम्पत्तिपर्यन्तमपि संसारसम्बन्धस्य अवर्जनीयतायाः श्रुत्या स्फुटं वचनात् ॥]

'अत्र ब्रह्मेति वचनाद्ध्यानामृतमिहाह हि । सशरीरस्य चाऽऽप्राप्तेः संसारव्यपदेशतः ॥' (ब्र.प. 496)

---

[1] अत्रोच्यते—द. [2] अर्चिरादिना—द. [3] कृत आत्मा—त. थ.

[4] सम्भवामि—आ.क.ङ. [5] इति—द.

[विदुषोऽपि आब्रह्मप्राप्ति बन्धानुवृत्तिः]

## ४९७. सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४-२-९ ॥ (सि)

इतश्च विदुषोऽपि बन्धो नाऽत्र दग्धः[1]; यतः [2]सूक्ष्मं[2] शरीरम् अनुवर्तते । कुत इदमवगम्यते ? । प्रमाणतः तथोपलब्धेः । उपलभ्यते हि ! देवयानेन पथा गच्छतो विदुषः—

'तं प्रतिब्रूयात् (कौषी.उ. 1-2)....सत्यं ब्रूयात्' (कौषी.उ. 1-6)

इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः ॥ ९ ॥

[अत्र ब्रह्मेति श्रुतेः सर्वबन्धविनिर्मोक्षतात्पर्यकत्वाभावः]

## ४९८. नोपमर्देनाऽतः ॥ ४-२-१० ॥ (सि)

---

सूक्ष्ममिति । इह [सूत्रे] पूर्वसूत्राभिप्रेतसूक्ष्मशरीरसम्बन्धे प्रमाणमुच्यते ॥ ९ ॥

नोपमर्देनेति । जीवन्मुक्तिनिराचिकीर्षातिशयात् इदं सूत्रमुक्तम् । उपासनविधानात्, तस्य आप्रयाणादनुवृत्तिश्रुतेः, उत्क्रान्तिश्रुतेः, अर्चिरादिश्रुतेः, देशविशेषप्राप्त्या सर्वबन्धविनिर्मोक्ष-श्रुतीनां बाधप्रसङ्गात्, प्रत्यक्षविरोधाच्च, जीवन्मुक्तिः अनुपपन्नेति भावः ॥ तदुक्तं भगवता आपस्तम्बेन—'वेदान् इमं लोकममुं च परित्यज्य आत्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणम्; इहैव न दुःखमुपलभेत' इति । 'शास्त्रैः'

---

[सूत्रार्थः । सूक्ष्मम्—विदुषोप्युत्क्रमतः सूक्ष्मं शरीरमनुवर्तते, प्रमाणतश्च—श्रुतित एव प्रमाणभूतात्, तथा—शरीरसम्बन्धवत्तया, उपलब्धेः—अवगमात् ।]

'प्रतिब्रूयादिति श्रुत्या सूक्ष्मदेहोपलब्धितः । संसारबन्धोऽत्राऽदग्धो ध्यानामृतमिहाऽश्नुते॥' (ब्र.प. 497)

[सूत्रार्थः । अतः—सूक्ष्मशरीरस्यानुवृत्तेरेव, उपमर्देन न—सर्वबन्धोपमर्दपूर्वकम् अमृतत्वं न वदति; किन्तु ध्यानकालिकममृतत्वमेव वदति ।]

'अत्र ब्रह्मेति वचनादमृतत्वं तु सर्वथा । बन्धोपमर्दान्नोदेति ध्यानं चामृतमेव हि ॥' (ब्र.प. 498)

---

[1] विदग्धः—पा.   [2] सूक्ष्म—द, न.

अतः,

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि [1]श्रिताः' ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (कठ.उ. 6-14)

इति वचनं, [2]न बन्धो[2]पमर्देन अमृतत्वं वदति ॥ १० ॥

[विदुषोऽपि उत्क्रमत; शरीरे ऊष्मोपलब्धेः सूक्ष्मशरीरानुवृत्तिज्ञापकता]

## ४९९. अस्यैव चोपपत्तेरूष्मा ॥ ४-२-११ ॥ (सि)

अस्य — सूक्ष्मशरीरस्य, क्वचिद्ध्रियमाणत्वोपपत्तेः, विदुषः प्रक्रान्तमरणस्य मरणात् प्राक् ऊष्मा, स्थूले शरीरे क्वाचित्कः उपलभ्यते ।

न च स्थूलस्यैव शरीरस्य अयमूष्मा; [3]अन्यत्राऽनुप[3]लब्धेः । ततश्च ऊष्मणः क्वचिदुपलब्धिः, विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते । तस्मात् 'विदुषोऽपि आसृत्युपक्रमात् समाना उत्क्रान्तिः'—इति सुष्ठूक्तम् ॥ ११ ॥

---

इति बहुवचनेन अनेकशास्त्रविरोधो विवक्षितः ॥ **विप्रतिषिद्धम्**—विशेषप्रतिषिद्धम् । प्रकरणसमवत् न समबलेन प्रतिरोधः । [किन्तु] कालात्ययापदिष्टवत् अधिकबलेन विरोधः ; अनेकशास्त्रविरोधादिति भावः ॥ १० ॥

**अस्यैवेति** । स्थूलशरीरस्योष्मा सार्वत्रिकः ; 'सन्तापयति स्वं देहमापादतलमस्तकम्' इति श्रुतेः । अतः उत्क्रान्तौ क्वाचित्क ऊष्मा सूक्ष्मशरीरस्य क्वाचित्कत्वेन । तत्रैव सर्वदेहव्याप्ताग्निशिखायाः क्रमेणोपसंह्रियमाणत्वादित्यर्थः ॥ ११ ॥

---

[सूत्रार्थः । **अस्यैव च**—उत्क्रमिष्यतो जीवस्य सूक्ष्मशरीरस्यैव च, **उपपत्तेः**—स्थूलदेहस्य देशविशेषे स्थीयमानतायाः उपपद्यमानत्वात्, **ऊष्मा**—तदा क्वचिदेव उष्णांशस्योपलम्भः सङ्गतो भवति ।]

'सूक्ष्मस्यास्मिन् वर्तमानत्वोपपत्तेश्च तद्गुणः । ऊष्मोपलभ्यते चेति मुक्तः सूक्ष्मेण गच्छति ॥' (ब्र.प.499)

---

[1] स्थिताः—च. [2] बन्धो—द. [3] अन्यत्रोप—थ.

पुनरपि– 'विदुष उत्क्रान्तिर्न सम्भवति'—इत्याशङ्क्य परिह्रियते—

५००. प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ ४–२–१२ ॥ (सि)

[विदुषो देहादुत्क्रान्तेः श्रुतिनिषिद्धत्वशङ्का]

यदुक्तम्– विदुषोऽपि उत्क्रान्तिः समाना—इति ।

तत् नोपपद्यते ; विदुषः उत्क्रान्तिप्रतिषेधात् । तथा हि !

'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवा[1]ऽन्वव[1]क्रामति' (बृ.उ. 4-4-1) इत्युपक्रम्य,

'तेन प्रद्योतेनैष आत्मा निष्क्रामति । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.उ. 4-4-2)

इति, अविदुषः उत्क्रान्तिप्रकारमभिधाय,

'अन्यन्नवतरं [2]कल्याणतरं[2] रूपं कुरुते' बृ.उ. 4-4-4)

इति, देहान्तरपरिग्रहं चाऽभिधाय,

पुनरपीति । पूर्वम् इहाऽमृतत्वश्रुतिनिबन्धनः उत्क्रान्त्यसम्भवः परिहृतः । अथ उत्क्रान्तिनिषेधश्रुतिनिबन्धनः तदसम्भवः परिह्रियते इत्यर्थः ।

तेजोमात्राः—भूतसूक्ष्मांशान् । हृदय .... .... क्रामति—हृदयान्निष्क्रामति । 'तेन प्रद्योतेने'त्यादिवाक्यस्य अविद्वदुत्क्रान्तिविषयत्वं कथमिति चेत् !! [एवम्] पूर्वपक्षी

[सूत्रार्थः । प्रतिषेधात्—विदुषः प्राणानामुत्क्रमणाभावस्य श्रुत्या ज्ञापनात्, (न उत्क्रान्तिः), इति चेत् न—एवं शङ्कनमनुचितम्, शारीरात्—प्राणानां जीवाद्विश्लेषाभावस्यैव 'न तस्य....उत्क्रामन्ति' इत्युक्तेः, हि—यतः, एकेषाम्—माध्यन्दिनानां शाखायाम्, स्पष्टः— 'न तस्मात्' इति वाक्येन अयमर्थः सुगमः कृतः ।]

'प्राणोत्क्रान्तिनिषेधाच्चाऽमृतत्वं ह्यत्र चेन्न तत् । जीवान्निषेधः स्पष्टो हि ! शरीरान्न निषेधनम्॥' (ब्र.प.500)

[1] वाऽन्वप—रा. ग्रं.  [2] कल्याणं—द.

'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमानः' बृ.उ. 4-4-6)

इति, अविद्वद्विषयं परिसमाप्य,

'अथ अकामयमानः—योऽकामो निष्काम आप्तकाम आत्मकामः ;
न तस्य प्राणा उत्क्रामन्ति,.... ब्रह्मैव सन् ब्रह्माप्येति' (बृ.उ. 4-4-6)

इति, विदुष उत्क्रान्तिः प्रतिषिध्यते । तथा पूर्वत्र आर्तभागप्रश्नेऽपि, विदुष उत्क्रान्तिप्रतिषेधो दृश्यते—

'अप पुनर्मृत्युं जयति' (बृ.उ. 3-2-10)

इति विद्वांसं प्रस्तुत्य,

'याज्ञवल्क्येति होवाच—यत्राऽयं पुरुषो म्रियते ; उदस्मात् प्राणाः
[1]क्रामन्त्याहो न'[1] ?' (बृ.उ. 3-2-11)

इति पृष्टः,

'नेति होवाच याज्ञवल्क्यः ; अत्रैव समव(नी)लीयन्ते, स उच्छ्वयत्याध्मायति,
आध्मातो मृतः शेते' (बृ.उ. 3-2-11)

इति । अतः, विद्वान् इहैव अमृतत्वं प्राप्नोति—इति चेत् !

[विदुष उत्क्रान्तिनिषेधशङ्कायाः निरासः]

**तन्न ; शारीरात् प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्हि अत्र प्रतिषिध्यते, न शरीरात् ।**

---

चतुर्मुखलोकगन्तुरुपासकस्य अर्चिरादिकां गतिं मन्यते ; न तु मुक्तस्य । तस्मात् 'अविदुषः' इत्युक्तं पूर्वपक्षे । सिद्धान्ते तु ? विद्वद्विषयमेवेदं वाक्यम् ॥ [अविद्वद्विषयमपि भवत्येव ; न अविद्वन्मात्रविषयम् ॥ ]

'अकामयमानो योऽकामो निष्कामः' इत्यत्र पुत्र-वित्त-विषयैषणात्रयराहित्यं विवक्षितम् । उदस्मात् प्राणाः क्रामन्ति—उत्क्रामन्तीत्यन्वयः । समवलीयन्ते अत्रैव—शरीरे लीयन्ते इत्यर्थः । स उच्छ्वयत्याध्मातः—वायुना पूरित उच्छूनो भवति ॥

तन्नेत्यादि । प्रकृतपरामर्शिनस्तच्छब्दस्य शरीरपरत्वात्, तस्मात्प्राणानुत्क्रान्तिरुच्यते इत्यर्थः ॥

---

[1] क्रामन्त्याहो ? — द. न.

'न तस्य प्राणा उत्क्रामन्ति' (बृ.उ. 4-4-6)

[1]इत्यत्र तच्छब्देन,[1] 'अथाऽकामयमानः' (बृ.उ. 4-4-6) इति [2]प्रकृतः शारीर[2] एव परामृश्यते ; न अश्रुतं शरीरम् ॥

'तस्ये'ति षष्ठ्या, प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः ; न तूत्क्रान्त्यपादानत्वेन । उत्क्रान्त्यपादानं तु शरीरमेव—इति चेत् !

न ; अपादानापेक्षायाम्, अश्रुतात् शरीरात्, सम्बन्धितया श्रुतस्य आत्मन एव संनिहितत्वेन, अपादानतयाऽपि ग्राह्यत्वात् ।

किं च—प्राणानां जीवसम्बन्धितयैव प्रज्ञातानां, [3]तत्सम्बन्ध[3]कथने प्रयोजनाभावात्, सम्बन्धमात्रवाचिन्या षष्ठ्या, [4]अपादानमेव[4] विशेष इति निश्चीयते ; यथा 'नटस्य शृणोति' (का.वृ. 1-4-29) इति ॥

[उक्तार्थे विवादानवकाशनकाशनम्]

न चाऽत्र विवदितव्यम् ;—स्पष्टो ह्येकेषाम्—माध्यन्दिनानाम् आम्नाये शारीरो जीव एव अपादानमिति,

'योऽकामो निष्काम आप्तकाम आत्मकामः ; न तस्मात् प्राणा उत्क्रामन्ति'

(बृ.उ.मा.पा. 4-4-6)

इति ॥

---

तस्येति । षष्ठ्यन्ततच्छब्दनिर्दिष्टः शरीरोऽस्तु । तत्सम्बन्धिनां प्राणानामुत्क्रान्त्यपादानं शरीरमेवेत्यर्थः ॥

नेति । अश्रुतस्य धर्मिणः तस्य अपादानत्वस्य च उभयोः कल्प्यत्वादपि, सिद्धरूपस्यैव धर्मिणः अपादानत्वकल्पनं युक्तमित्यर्थः ॥

किं चेति । प्राणानां जीवसम्बन्धकथननैरर्थ्यात् षष्ठ्या अपादानवाचकत्वाच्च शरीर एव अपादानमित्यर्थः ॥

न चात्रेति । न अयमर्थः कथञ्चित् अर्थानुगुण्यावगम्यः ; अपि तु कण्ठोक्तश्चेत्याशयः । माध्यन्दिनानामिति । ['एकेषा'मित्यस्य व्याख्यानं, माध्यन्दिनानामिति । 'स्पष्ट' इत्यस्य विशेष्यसमर्पणाद्व्याख्यानं, 'शरीर' इत्यादि भाष्यम् (टि)] यथा 'यो विज्ञाने तिष्ठन्' इत्यत्र

[1] इत्यत्र—द. [2] प्रकृत शारीर—थ.
[3] तत्सम्बन्धित्व—द. [4] अपादानत्वमेव—द.

[उत्क्रान्तिनिषेधाप्रसक्तिशङ्का-परिहारौ]

शरीरात् प्राणानामुत्क्रान्तिप्रसङ्गाभावात्, 'तत्प्रतिषेधो'[1] नोपपद्यते—इति चेत्! न;

'तस्य तावदेव चिरम्' (छां.उ. 6-14-2)

इति, विदुषः शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन, [2]प्राणानामपि[2] तस्मिन् काले शरीरात् विदुषः वियोगः प्रसज्यते। ततश्च देवयानेन पथा ब्रह्मसम्पत्तिः नोपपद्यत इति,

'न तस्य प्राणा उत्क्रामन्ति' (बृ.उ. 4-4-6)

देवयानेन पथा ब्रह्मप्राप्तेः प्राक्, 'जीवाद्विदुषोऽपि प्राणाः न [3]विश्लिष्यन्ती'त्युच्यते[3]॥

[आर्तभागप्रश्न-प्रतिवचनार्थनिर्णयः]

आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः, तदा अयमेव परिहारः। स तु अविद्वद्विषयः, तत्र प्रश्न-प्रतिवचनयोः ब्रह्मविद्याप्रसङ्गादर्शनात्; [4]तत्र हि[4]! ग्रहातिग्रह-[5]रूपेण इन्द्रियार्थ[5]स्वभावः, अपाम् अग्न्यन्नत्वम्, म्रियमाणस्य जीवस्य प्राणापरित्यागः, मृतस्य नामवाच्यकीर्त्यनुवृत्तिः, तस्य च पुण्य-पापानुगुणगतिप्राप्तिः, इत्येतेऽर्थाः,

---

'विज्ञान'शब्दः समानप्रकरणस्थेन 'य आत्मनि तिष्ठन्' इति आत्मशब्देन आत्मपरो निश्चीयते; तथा 'तस्ये'ति षष्ठ्यन्तपदं 'तस्मा'दिति पञ्चम्यन्तपदेन पञ्चम्यर्थकमिति निश्चीयते इत्यर्थः॥

शारीरादिति। प्रसक्तस्य हि प्रतिषेधः। अत्र तदभावात् न निषेधोपपत्तिः इत्यर्थः।

शरीरवियोगकाले—प्रारब्धकर्महेतुकचरमशरीरवियोगकाले॥

ग्रहातिग्रहरूपेणेति। ग्रहः—पात्रविशेषः। तत्स्थद्रव्यम्—अतिग्रहः। तद्रूपेण। आकर्षकरज्जुतत्समाकृष्यरूपेण वा। अपामग्न्यन्नत्वम्—अग्नेः अपां भक्षकत्वानुसन्धानं विहितं फलविशेषाय। उदस्मात् प्राणाः क्रामन्तीत्यादिना जीवस्य प्राणापरित्यागकथनम्।

---

[1] निषेधो—थ. [2] प्राणानां—त. थ.

[3] विश्लिष्यन्त इत्युच्यते—वा. [4] तत्रैव हि—द.

[5] रूपेणेन्द्रियेन्द्रियार्थ—वा. रूपेन्द्रियेन्द्रियार्थ—त.

प्रश्न[1]पूर्वकं[1] प्रत्युक्ताः ॥ तत्र च

'अपपुनर्मृत्युं जयति' (बृ.उ. 3-2-10)

इति, अपाम् अग्न्यन्नत्वज्ञानात् अग्निजय एव [2]मृत्युजय[2] उच्यते। अतो नाऽत्र विदुषः प्रसङ्गः। अविदुषस्तु प्राणानुत्क्रान्तिवचनं, 'स्थूलदेहवत् प्राणा न मुञ्चन्ति; अपि तु भूतसूक्ष्मवत् जीवं परिष्वज्य गच्छन्ति' [3]इति प्रतिपादयतीति[3] निरवद्यम् ॥ १२ ॥

[विदुष उत्क्रान्तेः स्मृत्या सिद्धिः]

## ५०१. स्मर्यते च ॥ ४-२-१३ ॥ (सि)

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्या उत्क्रान्तिः—

'ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।

ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥' (याज्ञ.अध्या. 167)

इति ॥ १३ ॥

इति आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

—o—

---

अपपुनर्मृत्युं जयति—'मृत्यु'शब्दवाच्यमग्निम् अपजयति। 'उदस्मा'दित्यादि अविद्वद्विषयं चेत्! कथं प्राणानुत्क्रान्तिवचनम्? इत्यत्र [उत्तरम्] अविदुषस्तु इति ॥ १२ ॥

**स्मर्यते चेति**। 'ऊर्ध्वमेकः' इत्यादिवचनं याज्ञवल्क्यस्मृतौ ॥ **तेषाम्**—नाडीविशेषाणाम् ॥ १३ ॥

[सूत्राणि—१. समाना च, २. तदापीतेः, ३. सूक्ष्मं प्र, ४. नोपमर्दे, ५. अस्यैव चो, ६. प्रतिषेधा, ७. स्मर्यते च।]

इति आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

—o—

---

[सूत्रार्थः। **स्मर्यते च**—विदुषामपि जीवानां देहादुत्क्रान्तिः स्मृतौ स्पष्टं निगद्यते; 'ऊर्ध्वमेकः स्थितः' इति।]

'ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम्। इति स्मृत्या हि चोत्क्रान्तिर्विदुषोऽपि प्रसिद्ध्यति॥'(ब्र.प.501)

---

[1] पूर्वं—त. थ. [2] मृत्युंजयः—थ. [3] इति—द.

## (140) परसम्पत्त्यधिकरणम् ॥ ४-२-६ ॥

[अधिकरणार्थः—विदुषि जीवे परिष्वक्तानि भूतसूक्ष्माणि परमात्मन्येव सम्पद्यते]

# ५०२. तानि परे तथाह्याह ॥ ४-२-१४ ॥ (सि)

[अवान्तरसङ्गतिः]

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा, उत्क्रान्तिवेलायां तेजःप्रभृति-भूतसूक्ष्मेषु सम्पद्यते—इत्युक्तम् । सैषा सम्पत्तिः विदुषो न विद्यते—इत्याशङ्क्य, परिहृतम् ॥

[विचारौपयिकः संशयः]

तानि पुनः जीवपरिष्वक्तानि भूतसूक्ष्माणि, किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति ? उत परमात्मनि सम्पद्यन्ते ?—इति विशये ;

---

सैषेति । पूर्वं 'समाना चासृत्युपक्रमात्' इति, नाडीप्रवेशात्पूर्वं मुमुक्षु-संसारिणोर्गतेः समानत्वमुक्तम् । तत्र वक्ष्यमाणाधिकरणद्वयप्रतिपाद्यायां परमात्मसम्पत्तौ मुक्तस्य अस्तित्व-नास्तित्वविगानं नास्ति । यतः पूर्वाधिकरणप्रतिपादितार्थ एव विप्रतिपत्तिः ; अतः 'तदोकोऽग्रज्वलन'मित्येतस्मात्पूर्वाधिकरणप्रतिपाद्येऽर्थे विद्वदविदुषोः समानेऽपि, 'तानि परे' इत्यधिकरणात् पूर्वत्रैव विद्वदविदुषोः समानत्वविप्रतिपत्तिरिति हृदि कृत्वा, सूत्रकारैः समानत्वमुक्त-मित्यभिप्रायः ॥

किं तेजःशब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि यथाकर्म यथाविद्यं गच्छन्ति ? उत परमात्मनि सम्पद्यन्ते ? किमत्र 'परदेवता' शब्दः गन्तव्यस्थानावस्थपरमात्मपरः ? उत अतदवस्थपरमात्मपरः ? किमत्र सम्पत्तौ प्रयोजनं सम्भवति ; न ? इति ॥ असम्भवे, परमात्म-शब्दस्य गन्तव्यप्रदेशविशेषावस्थपरमात्मपरत्वेन यथाकर्म यथाविद्यं गच्छेयुः । सम्भवे तु,

---

[सूत्रार्थः । **तानि**—जीवीयानि भूतसूक्ष्माणि, **परे**—परमात्मनि सम्पद्यते ? **तथाहि**—तथैव खलु, **आह**—श्रुतिर्वक्ति ॥ ]

'भूतसूक्ष्माणि परमे सम्पद्यन्ते हृदि स्थिते । तेजः परस्यामिति च श्रुत्यैतदवगम्यते ॥' (ब्र.प. 502)

[पूर्वः पक्षः]

मध्ये परमात्मसम्पत्तौ सुख-दुःखोपभोगरूप[1]कार्यादर्शनात्[1], तदुपभोगानुगुण्येन यथाकर्म यथाविधं च गच्छन्ति ॥

[सूत्रतः सिद्धान्तः]

इति प्राप्ते, उच्यते—तानि परे—इति । तानि परस्मिन् आत्मनि सम्पद्यन्ते । कुतः ? । तथाह्याह श्रुतिः—

'तेजः परस्यां देवतायाम्' (छां.उ. 6-8-6)

इति । यथा आह श्रुतिः, तदनुगुणं कार्यं [2]कल्प्य[2]मित्यर्थः ॥ सुषुप्ति-प्रलययोः यथा परमात्मसम्पत्त्या सुख-दुःखोपभोगायास[3]विश्रमः[3] ; तद्वत् इहाऽपि ॥ १४ ॥

इति परसम्पत्त्यधिकरणम् ॥ ६ ॥

—o—

---

अतदवस्थपरमात्मपरत्वेन तस्मिन् सम्पद्येरन् । मध्य इति । 'तेजःपरस्याम्' इति श्रुतिः परस्यात्मनः सर्वदा सर्वाधारत्वमात्रपरेति पूर्वपक्षिणोऽभिप्रायः ॥

तथा ह्याह श्रुतिरिति । 'वाङ्मनसि सम्पद्यते' इत्यादिनिर्देशः न सर्ववस्तुसाधारणधारकत्वाभिप्रायः । अतः सम्पत्तिरेवार्थ इति भावः ॥ १४ ॥

इति परसम्पत्त्यधिकरणम् ॥ ६ ॥

—o—

---

[1] कार्यदर्शनात्—क.च.ठ. [2] परिकल्प्य—वा. [3] विश्रामः—न.

## (141) अविभागाधिकरणम् ॥ ४-२-७ ॥

[अधिकरणार्थः—जीवस्य विदुषः उत्क्रान्तौ परमात्मनि सम्पत्तिः अविभागरूपैव ; न कारणापत्तिरूपा]

## ५०३. [1]अविभागो[1] वचनात् ॥ ४-२-१५ ॥ (सि)

[सङ्गतिगर्भः विचारौपयिकः संशयः]

सेयं परमात्मनि सम्पत्तिः, किं प्राकृतलयवत् कारणापत्तिरूपा ? उत

'वाङ्मनसि' (छां.उ. 6-8-6)

इत्यादिवत् अविभागरूपा ?– इति चिन्तायाम् ;

[सयुक्तिकः पूर्वः पक्षः]

[2]परमात्मनः[2] सर्वेषां योनिभूतत्वात्, कारणापत्तिरूपा ।

[सूत्रतः सिद्धान्तार्थः]

इति प्राप्ते, उच्यते—अविभागः—इति । अपृथग्भावः—पृथग्व्यवहारा[3]नर्ह[3]संसर्गः इत्यर्थः ।

कुतः ? । वचनात् ।

'तेजः परस्यां देवतायाम्' (छां.उ. 6-8-6)

इत्यत्रापि,

---

सेयमित्यादि । किम् इयं सम्पत्तिः लयरूपा ? उत अविभागरूपा ? । किं 'तेजः परस्याम्' इति वचनस्य कारणापत्तिपरत्वं न्याय्यम् ? उत अविभागमात्रपरत्वम् ?—इति । प्रथमे लयरूपत्वम् । द्वितीये तु अविभागरूपत्वम् ॥

---

[सूत्रार्थः । अविभागः—('तानि परे' इत्युक्ता परमात्मसम्पत्तिः) पृथग्व्यवहारानर्ह-संसर्गरूपा, वचनात्—'सम्पद्यते' इत्यस्य संयोगवाचिनः शब्दस्यानुषङ्गात् । ]

'अविभागश्च सम्पत्तिः परमात्मनि युज्यते । पूर्ववाक्यस्थसम्पत्तिवचनावर्तनादिह ॥' (ब्र.प. 503)

---

[1] अविभागेन—द.　[2] परमात्मनि—द.　[3] नर्हः—वा.

'वाङ्मनसि सम्पद्यते' (छां.उ. 6-8-6)

[1]इत्यतः, 'सम्पद्यते' इति[1] वचनस्याऽनुषङ्गात्, [2]तस्य च[2] संसर्गविशेषवाचित्वात्, [3]अनुषक्त[3]स्य अभिधानवैरूप्ये प्रमाणाभावात्। उत्क्रान्तिवेलायां कारणापत्ति-प्रयोजनाभावात्, पुनस्तत्र अव्यक्तादिसृष्टयवचनाच्च ॥ १५ ॥

इति अविभागाधिकरणम् ॥ ७ ॥

—o—

---

**प्रयोजनाभावादिति** । भारवाहकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः । अपनीतभारस्य विश्रमतुल्यः महाप्रलये । यथा कञ्चुकोष्णीषवतः तद्रहितस्य च विश्रमः, तद्वत् कारणे लीनस्य करण-कलेबररहितस्य द्विपरार्द्धकाले विश्रमः—इति प्रयोजनविभागः सुषुप्ति-प्रलययोः शरीरान्वयव्यतिरेकाभ्यां [यः] अवगतः, तदभावादित्यर्थः ॥ **पुनस्तत्रेति** । अव्यक्तादेः पुनः सृष्टिरुक्ता चेत्! कारणापत्तिः प्रयोजनं च कल्प्यम् । सा च नास्तीत्यर्थः ॥ एवं विभागानर्हभूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या प्रयोजनाभावाव्यक्तादिसृष्टयवचनाभ्यां च संयोगमात्रमेव सम्पत्तिः ॥ नित्यान्तरवस्थितेऽपि परमात्मनि तदानीं संसर्गविशेषः शास्त्रैकसमधिगम्यः ॥ १५ ॥

इति अविभागाधिकरणम् ॥ ७ ॥

—o—

[1] इति—थ. न. [2] तस्य—त. थ. [3] तदनुषक्त—न, तस्य—द.

## (142) तदोकोऽधिकरणम् ॥ ४-२-८ ॥

[अधिकरणार्थः—परमपुरुषप्रसादात् विदुषो जीवस्य उत्क्रान्तिकाले मूर्धन्यनाडीप्रकाशः तया गतिश्च]

### ५०४. तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिक्या ॥ ४-२-१६ ॥ (सि)

[अवान्तरसङ्गतिः]

एवं-गत्युपक्रमावधि, विद्वदविदुषोः समानाकार उत्क्रान्तिप्रकारः—उक्तः। इदानीं विदुषो विशेष उच्यते।

[विचारणीयो विषयः, विचारार्थः संशयश्च]

तत्रेदमाम्नायते—

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' (कठ.उ. 6-16)

इति। 'अनया नाडीनां शताधिकया [1]मूर्धन्य[1]नाड्यैव विदुषो गमनम्; अन्याभिरेव च अविदुषो गमनम्' इत्ययं नियम उपपद्यते? न?—इति संशयः ॥

---

**एवमित्यादि**। उत्क्रान्तौ ब्रह्मणि सम्पत्तेः विद्वदविदुषोस्तुल्यत्वात्, 'समाना चे'त्यादिसूत्रम् अत्र वक्तव्यम्। तथा न कृतम्। तत्र हेतुः विदुषो ब्रह्मसम्पत्तौ अविवादः ॥

---

[सूत्रार्थः। (देहादुत्क्रमिष्यन् विद्वान् जीवः) **विद्यासामर्थ्यात्**—भगवदुपासनगतात् शक्तिविशेषात्, **तच्छेषगत्यनुस्मृतियोगाच्च**—उपासाङ्गभूतगतिचिन्तनसम्बन्धाच्च, **तदोकः**—जीवस्यावासस्थानभूतं हृदयम्, **अग्रज्वलनम्**—प्रकाशितमुखभागवद्भवति, (ततश्च) **हार्दानुगृहीतः**—उपासितेन हृदयस्थेन परमात्मना कृतप्रसादः, **तत्प्रकाशितद्वारः**—परमात्मप्रकाशितनाडीमुखः सन्, **शताधिकया**—शतसंख्याभ्यो नाडीभ्योऽतिशयितया सुषुम्नया, उत्क्रामति।]

'ज्वलिताग्रं भवेत् स्थानं विद्याशक्त्या गतिस्मृतेः। मूर्धन्ययैति तत्तुष्टहार्ददर्शितमार्गवान् ॥' (ब्र.प. 504)

---

[1] मूर्धन्यया—द. न.

[युक्तितः पूर्वः पक्षः]

किं युक्तम् ? । नियमो नोपपद्यते—इति ।

कुतः ? । नाडीनां भूयस्त्वात्, अतिसूक्ष्मत्वाच्च, दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् ।

'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (कठ.उ. 6-16) इति, यादृच्छिकीमुत्क्रान्तिमनुवदतीति 'युक्तम्—इति'[1] ।।

[सूत्रतः सिद्धान्तार्थः]

एवं प्राप्ते, प्रचक्ष्महे—शताधिकया—इति । विद्वान् शताधिकया-मूर्धन्ययैव नाड्या उत्क्रामति ।

न च अस्याः विदुषो 'दुर्विवेचत्वम्'[2]; विद्वान् हि ! परमपुरुषा[3]राधनभूता[3]त्यर्थप्रियविद्यासामर्थ्यात्, विद्याशेष[4]भूततया आत्मनो[4]ऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च,

---

तत्रेदमिति । किं विदुषः मूर्धन्यनाड्यैव गमननियमः सम्भवति ? न ? इति । किं 'तयोर्ध्वमायन्' इति, यादृच्छिकगमनानुवादः ? उत नाडीविशेषेण गमननियमविधिः ? । किं नाड्यो दुर्विवेचाः ? उत सुविवेचाः ? ।। दुर्विवेचत्वे, यादृच्छिकगत्यनुवादपक्षस्य न्याय्यत्वात् नियमासम्भवः । सुविवेचत्वे, नियमविधिपरत्वोपपत्तेः, गतिनियमसम्भवः ।।

'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते; तेन प्रद्योतेनैष आत्मा निष्क्रामति' इतीदं वाक्यम् अत्राऽपेक्षितं, पूर्वत्रोपात्तत्वात् नाऽत्रोदाहृतम् ।।

[**दुर्विवेचत्वम्**—विविच्य-पृथक्कृत्य ज्ञातुमसाध्यत्वम् । परमपुरुषाराधनभूतत्वम्, अत्यर्थप्रियत्वं च विद्याविशेषणम् । **सामर्थ्यम्**—फलजननानुकूल्यरूपं तद्गतं माहात्म्यम् । शक्तिविशेषरूपं वा । **विद्याशेषभूतत्वम्**—विद्याङ्गतया विहितत्वम् । **गत्यनुस्मरणम्**—गन्तव्यमार्गस्य गमनप्रकारस्य च चिन्तनम् । **योगः**—सम्बन्धः, उपायो वा । आद्ये

---

[1] युक्तम्—द.
[2] दुर्विवेचनत्वम्—त.थ.
[3] राधना—द.
[4] भूतात्मनो—द.

प्रसन्नेन हार्देन परमपुरुषेण अनुगृहीतो भवति। ततश्च तदोकः—तस्य जीवस्य स्थानं हृदयम्, अग्रज्वलनं भवति। अग्रे ज्वलनं—प्रकाशनं यस्य तदिदम् अग्रज्वलनम्। [1]परमपुरुषप्र[1]सादात् प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति, तया विदुषो गतिरुपपद्यते ॥ १६ ॥

इति तदोकोऽधिकरणम् ॥ ८ ॥

—o—

---

अनुस्मरणस्य योगः। द्वितीये अनुस्मरणमेव योगः। **ओकः**—'धिष्ण्यमोकोऽथ वसनम्' इत्यमरः। **तां नाडीम्**—गमनाधारभूतां सुषुम्नाख्यां मूर्धन्यनाडीम्] ॥ १६ ॥

इति तदोकोऽधिकरणम् ॥ ८ ॥

—o—

[1] तत्प्र—द.न.

(143) रश्म्यनुसाराधिकरणम् ॥ ४-२-९ ॥

[अधिकरणार्थः—विदुषां जीवानां सूर्यरश्म्यनुसारेणैव ब्रह्मप्राप्तिः]

## ५०५. रश्म्यनुसारी ॥ ४-२-१७ ॥ (सि)

[विचारणीयविषयोपस्थापनम्]

विदुषः हृदयात् शताधिकया मूर्धन्यनाड्या [1]निर्गतस्य,[1] आदित्यरश्मीननुसृत्य आदित्यमण्डलगतिः श्रूयते—

'अथ [2]यत्रैतदस्मा[2]च्छरीरादुत्क्रामति ; अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छां.उ. 8-6-5)

इति ॥

[विचारार्थः संशयः]

तत्र-रश्म्यनुसारेणैवेत्ययं गतिनियमः सम्भवति ? न ?—इति चिन्तायाम् ;

[पूर्वः पक्षः युक्त्या]

निशि मृतस्य विदुषो रश्म्यनुसारासम्भवात्, अनियमः । वचनं तु पक्षप्राप्तविषयम् ॥

---

रश्मीति । अवान्तरसङ्गतिः स्फुटा । किं रश्म्यनुसारेण विदुषो गमननियमः सम्भवति ? न ? इति । किं 'रश्मिभिरूर्ध्वमाक्रमते' इति वाक्यं पाक्षिकगमनानुवादकम् ? उत नियमविधिपरम् ? । किं निशि प्रेतस्य रश्म्यनुसारेण गमनं संभवति ? न ? इति । किं निशि रश्मयः सम्भवन्ति ? न ? इति ॥ न चेत्! निशि रश्म्यनुसारासम्भवात् श्रुतेः पाक्षिकगत्यनुवादकतया, नियमासम्भवः । सन्ति चेत्! निशि रश्म्यनुसारसम्भवात्, श्रुतेः नियमविधिपरतया रश्मिभिरेव गतिनियमसंभवः ।

---

[सूत्रार्थः । रश्म्यनुसारी—देहादुत्क्रान्तश्चेतनः अनुसृतसूर्यकिरण एव ऊर्ध्वं गच्छति ।]

'सूर्यस्य रश्मीनुत्क्रान्तस्त्वनुसृत्यैव गच्छति । एतैरेवेति वाक्ये च दृश्यते ह्यवधारणम् ॥' (ब्र.प. 505)

---

[1] निर्गतस्यापि—वा. [2] यत्रैतस्मा—घ. त. न.

[सिद्धान्तार्थः सूत्रतः]

इति प्राप्ते, उच्यते—रश्म्यनुसारी—इति। रश्म्यनुसार्येव विद्वान् ऊर्ध्वं गच्छति॥ कुतः?।

'अथैतैरेव रश्मिभिः' (छां.उ 8–6–5)

इत्यवधारणात्। पाक्षिकत्वे हि एवकारः अनर्थकः स्यात्।

[पूर्वपक्षयुक्तेर्निरासः]

[1]यदुक्तम्[1]—निशि मृतस्य रश्म्यसंभवात्, रश्मीननुसृत्य गमनं नोपपद्यते—इति। तन्न; निश्यपि सूर्यरश्म्यनुसारः सम्भवति। लक्ष्यते हि! निश्यपि निदाघसमये [2]ऊष्मोप[2]लब्ध्या रश्मि[3]सद्भावः[3]। हेमन्तादौ तु हिमाभिभवात् दुर्दिने इव ऊष्मानुपलम्भः। श्रूयते च नाडीरश्मीनां सर्वदा अन्योन्यान्वयः—

'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चाऽमुं च; एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चाऽमुं च। अमुष्मादादित्यात् प्रतायन्ते। [4]त[4] आसु नाडीषु सृप्ताः। [5]आभ्यो नाडीभ्यः प्रतायन्ते। तेऽमुष्मिन्नादित्ये सृप्ताः' (छां.उ. 8–6–2)

इति[5]। तस्मात् निश्यपि सूर्यरश्मिसम्भवात्, निशि मृतानामपि विदुषां रश्म्यनु[6]सारेणैव[6] ब्रह्मप्राप्तिरस्त्येव॥ १७॥

इति रश्म्यनुसाराधिकरणम्॥ ९॥

—o—

---

उच्यत इति। ऊष्मोपलम्भयोग्यरश्मिसद्भावे सत्यपि अन्धकारस्थितिरुपपद्यते; रश्मीनामल्पत्वात्। यथा उद्धृताग्नौ प्रदेशे सूक्ष्माग्न्यवयवसम्पर्कात् औष्ण्योपलब्धावपि सूक्ष्माग्न्यवयवैः न तिमिरं निरस्यते; तद्वत्—इति॥ सृप्ताः—संबद्धाः॥ १७॥

इति रश्म्यनुसाराधिकरणम्॥ ९॥

—o—

---

1 यदुक्तं हि—न. 2 औष्ण्यो—न. 3 सम्भवः—वा

4 ता—वा 5 इति—च. 6 सारेण—वा

(144) निशाधिकरणम् ॥ ४-२-१० ॥

[अधिकरणार्थः—विदुषः निशि मृतस्याऽपि ब्रह्मप्राप्तिः अवश्यम्भाविनी]

## ५०६. निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ ४-२-१८ ॥ (सि)

[प्रकृतचिन्तोपयोगिसंशयप्रदर्शनम्]

इदमिदानीं चिन्त्यते—विदुषो निशि मृतस्य, ब्रह्मप्राप्तिरस्ति? न?—इति।

[सिद्धान्तिच्छायया शङ्कापूर्वकं पूर्वपक्षदृढीकारः]

यद्यपि—निशायां सूर्यरश्मिसम्भवात् रश्म्यनुसारेण गतिः; निशायामपि सम्भवति; तथाऽपि, निशामरणस्य शास्त्रेषु गर्हितत्वात्, परमपुरुषार्थ[1]लक्षणब्रह्म[1]प्राप्तिः निशामृतस्य न सम्भवति। शास्त्रेषु दिवामरणम् प्रशस्तम्; विपरीतं निशामरणम्;

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ॥' (म.भा.अनु. 22.-31)

इति ॥ दिवामरण-निशामरणयोः प्रशस्तत्व-विपरीतत्वे च, उत्तमाधमगतिहेतुत्वेन

---

निशीति। सङ्गतिः स्फुटा। किं निशि मृतस्य विदुषः ब्रह्मप्राप्तिः सम्भवति? न? इति। किं निशामरणस्याऽधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्यभावं ज्ञापयति? न? इति। निशामरणनिन्दावचनं किम् अविद्वद्विद्वत्साधारणम्? उत अविद्वद्विषयम्? इति ॥ साधारणत्वे, निशि मरणस्य अधोगतिहेतुत्वेन ब्रह्मप्राप्त्यभावावगमात्, निशि मृतस्य न ब्रह्मप्राप्तिः।

---

[सूत्रार्थः। **निशि नेति चेन्न**—रात्रौ मृतस्य विदुषः ब्रह्मप्राप्तिर्नेति शङ्कनं नोचितम्। **सम्बन्धस्य**—कर्मसम्बन्धस्य, **यावद्देहभावित्वात्**—चरमदेहावधिकमात्रत्वात्, (अप्रशस्तकालमरणस्य बन्धहेतुत्वायोगात्), **दर्शयति च**—श्रुतिरपि इममर्थं 'तस्य तावदेवे'ति स्फुटं ज्ञापयत्येव ॥]

**निशामृतस्य विदुषो ब्रह्मप्राप्तिर्न चेन्न हि। आदेहात् कर्मसम्बन्धस्वतो ब्रह्माप्तिदर्शनात् ॥ (ब्र.प. 506)**

---

[1] लक्षणा ब्रह्म—न.

स्याताम्। अतः, [1]निशिमरणम्[1], अधोगतिहेतुत्वात् न ब्रह्म[2]प्राप्तिहेतुः[2]—इति चेत्!;

[सूत्रोत्तरखण्डविवरणतः सिद्धान्तार्थः]

[3]तन्न[3]; विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात्॥

एतदुक्तं भवति—अनारब्धकार्याणाम् अधोगतिहेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशात्, उत्तरेषां च अश्लेषात्, प्रारब्धकार्यस्य चरमदेहावधित्वात्, बन्धहेत्वभावात् विदुषो[4]निशामृत[4]स्याऽपि ब्रह्मप्राप्तिः [5]सिद्धैव[5]॥ दर्शयति च श्रुतिः—'तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छां.उ. 6-14-2) इति।

'दिवा च शुक्लपक्षश्च' इत्यादिवचनम्, अविद्वद्विषयम्॥ १८॥

इति निशाधिकरणम्॥ १०॥

—o—

अविद्वद्विषयत्वे, [विदुषः] निशामरणस्य अधोगतिहेतुतया ब्रह्मप्राप्त्यभावस्यानवगमात्, निशि मृतस्याऽपि ब्रह्मप्राप्तिः स्यात्॥

**तस्य तावदेवेति।** दिवा-निशाविभागनिरपेक्षं प्रारब्धकर्मावसाने मोक्षश्रवणात् [इदं] वाक्यमुपात्तम्॥ **सिद्धैवेति।** 'अथ यो दक्षिणे प्रमीयते' इत्यारभ्य, 'तस्माद्ब्रह्मणो महिमानमाप्नोति' इति दक्षिणायनाद्यप्रशस्तकालमृतस्याऽपि ब्रह्मप्राप्तिश्रवणात्—इति॥ १८॥

इति निशाधिकरणम्॥ १०॥

—o—

[1] निशामरणम्—वा. [2] प्राप्तिः—थ. [3] न—वा.
[4] निशिमृत—द.न. [5] सिद्धेवेति—द.

(145) दक्षिणायनाधिकरणम् ॥ ४–२–११ ॥ (सू. 19–20)

[अधिकरणार्थः— दक्षिणायने मृतस्याऽपि विदुषः ब्रह्मप्राप्तिरस्त्येव ; न चन्द्रं प्राप्य पुनरावृत्तिः]

## ५०७. अतश्चाऽयनेऽपि दक्षिणे ॥ ४–२–१९ ॥

[सूत्रार्थानुवादः ; अधिकाशङ्का च]

निशि[1]मृतस्याऽपि[1]विदुषः ब्रह्मप्राप्तौ यो हेतुरुक्तः; तत एव हेतोः दक्षिणेऽप्ययने मृतस्य ब्रह्म[2]प्राप्तिस्सिद्धा ।[2] अधिकाशङ्का तु—

'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' (तै.ना.उ. 80)

इति, दक्षिणायने[3]मृतस्य चन्द्रप्राप्ति[3]श्रवणात् ; [4]चन्द्रं[4]प्राप्तानां च,

'तेषां यदा तत्पर्यवैति' (बृ.उ. 8–2–16)

'अथैतमेवाऽध्वानं पुनर्निवर्तन्ते' (छां.उ. 5–10–5)

---

**अतश्चेति** । अवान्तरसङ्गतिः स्फुटा । किं दक्षिणायनमृतस्याऽपि विदुषः ब्रह्मप्राप्तिः सम्भवति ? न ? इति । किं 'अथ यो दक्षिणे' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं, ब्रह्मप्राप्त्यभावं गमयति ? न ? इति । चन्द्रं प्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणम् ? उत अविद्वद्विषयम् ? इति । किं भीष्मादीनां कालप्रतीक्षा-कालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम् ? उत 'ब्रह्मणो महिमान'मिति वाक्यशेषानुरोधेन अविद्वद्विषयत्वसमाश्रयणं न्याय्यम्—इति । साधारण्याश्रयणे न्याय्ये सति, आवृत्तिवचनस्य साधारण्येन ब्रह्मप्राप्त्यभावावगमकतया, न ब्रह्मप्राप्तिः । अविद्वद्विषयत्वाश्रयणे न्याय्ये सति, आवृत्तिवचनस्याविद्वद्विषयतया 'अथ यो दक्षिणे' इति वाक्यस्य ब्रह्मप्राप्त्यभावानवगमकत्वात् , दक्षिणायनमृतस्य विदुषोऽपि ब्रह्मप्राप्तिः स्यात् ।। **दक्षिणायानमृतस्येति** । 'उदगयने प्रमीयते,

---

[सूत्रार्थः । **अतश्च**—निशि मृतस्य ब्रह्मप्राप्तावुक्ताद्धेतोरेव, **दक्षिणेप्ययने**—दक्षिणायने मृतस्य विदुषोऽपि ब्रह्मप्राप्तौ प्रतिबन्धकाभावः सुस्थः ।। ]

'पूर्वोक्तहेतोर्विदुषस्त्वयने दक्षिणेऽपि च । मृतस्याऽपि भवेदेव ब्रह्मप्राप्तिस्तु तत्क्षणात् ॥' (ब्र.प. 507)

---

[1] मृतस्य—द. [2] प्राप्तिः—ङ. [3] चन्द्रप्राप्ति—त. थ. [4] चन्द्रमसं—घ.

इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानाम् उत्तरायणप्रतीक्षादर्शनात्, दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न सम्भवति इति ॥

[अधिकाशङ्कापरिहारतः सिद्धान्तः]

परिहारस्तु – अविदुषां पितृयाणेन पथा चन्द्रं[1] प्राप्तानामेव पुनरावृत्तिः। विदुषस्तु चन्द्रं प्राप्तस्याऽपि,

'तस्माद्ब्रह्मणो महिमानमाप्नोति' (तै ना.उ. 80)

इति वाक्यशेषात्, तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः, ब्रह्मप्रपित्सतः (प्रेप्स्यतः) विश्रमहेतुमात्रमिति "गम्यते[2]। वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्ध[3]हेत्वभावात्,[3] विदुषः चन्द्रं प्राप्तस्याऽपि ब्रह्मप्राप्तिः अनिवार्या। भीष्मादीनां योगप्रभावात् स्वच्छन्द-मरणानां, धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनार्थः तथाविधाचारः ॥ १९ ॥

[विदुषो दक्षिणायनमरणेऽपि ब्रह्मप्राप्तिनिर्णयस्य गीतावचनविरोधशङ्का-तत्परिहारौ]

ननु च – विदुषो मुमूर्षून् प्रति [4]पुनरावृत्त्यपुनरावृत्ति[4]हेतुत्वेन कालविशेषविधि-र्दृश्यते—

'यत्र कालेत्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ (भ.गी. 8–23)

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ (भ.गी. 8–24)

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ (भ.गी. 8–25)

---

दक्षिणे प्रमीयते' इत्यत्र धूमादिमार्गलिङ्गाभावात्, ब्रह्मप्राप्तिवचनाच्च, अर्चिरादिगतस्यैव मरणकालविशेषेण मार्गे संमानविशेष उच्यते इत्यर्थः ॥ १९ ॥

---

[1] चन्द्रमसं—घ.न.  [2] अवगम्यते – द.

[3] हेतुभावात् – थ.  [4] पुनरावृत्तिहेतुत्वेन—अ.आ.इ.

शुक्ल-कृष्णे गती ह्येते जगतः शाश्वते मते ।

एकया[1]यात्यना[1]वृत्तिमन्ययावर्तते पुनः ॥' (भ.गी. 8-26)

इति ; तत्राऽऽह—

## ५०८. योगिनः प्रति[2]स्मर्येते[2] स्मार्ते चैते ॥ ४–२–२० ॥ (सि)

नाऽऽत्र मुमूर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते । अपि तु, योगिनः—योगनिष्ठान् प्रति, स्मार्ते स्मृतिविषयभूते, स्मर्तव्ये, देवयान-पितृयाणाख्ये गती स्मर्येते ; योगाङ्गतया अनुदिनं स्मर्तुम् । तथा ह्युपसंहारः—

'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।

तस्मात् सर्वेषु कालेषु योगयुक्तो [3]भवाऽर्जुन ॥' (भ.गी. 8-27)

इति[3] । 'अग्निर्ज्योतिः' 'धूमो रात्रिः' [4]इति च'[4] देवयान-पितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च, 'यत्र काले तु' इति 'काल'शब्दः कालाभिमानिदेवतातिवाहिकपरः ; अग्न्यादेः कालत्वासम्भवात् । अतः,

'तेऽर्चिषमभिसम्भवन्ति' (छां.उ. 8-2-15)

---

**योगयुक्तो भव**—मार्गानुसन्धानरूपयोगयुक्तो भव—इत्यर्थः । अन्यथा सङ्गत्यभावप्रसङ्गात् । मध्ये उपसंहारे च मार्गविधानपरत्वदर्शनात्, महावाक्यस्वारस्येन उपक्रमो बाध्यते इत्यभिप्रायेण 'अग्निर्ज्योतिः' इत्यादिवचनमुक्तम् । **'योगिनः'** इति सौत्रयोगिशब्दः चतुर्विधभगवदुपासकसाधारणः ; भक्तियोगस्य तेषां साधारणत्वात् । तत्र मुमुक्षोः देवयाना-

---

[सूत्रार्थः । **योगिनः प्रति**—योगनिष्ठानुद्दिश्य, **एते**—गीतादृष्टे देवयान-पितृयाणाख्ये द्वे गती, **स्मार्ते स्मर्येते**—स्मृतिविषयीकार्यतया स्मृत्या विधीयेते ॥]

'शुक्ल-कृष्णे गती चैते योगिनां सर्वदा पुनः । अनुसन्धानविषयौ स्मर्येते इति निश्चितम् ॥' (ब्र.प. 508)

---

[1] यान्त्यना—पा. [2] स्मर्यते—प. न.

[3] भवार्जुन—थ. [4] इति—वा.

इति विहितदेवयानानुस्मृतिः, अत्र विद्यानिष्ठान् प्रति विधीयते ; न मुमूर्षून् प्रति मरणकालविशेषः ॥ २० ॥

इति दक्षिणायनाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्याऽध्यायस्य

द्वितीयः उत्क्रान्तिपादः ॥ २ ॥

—o—

---

नुसन्धानम् ; ऐश्वर्यार्थियोगिनः पितृयाणानुसन्धानमिति । विधीयत इति । श्रुतौ गतिद्वयं विहितम् । तदनुसन्धानमत्र विधीयते इत्यर्थः ॥ नेति । विधीयते इत्यन्वयः ॥ २० ॥

[सूत्रे—१. अतश्च, २. योगिनः ।]

इति दक्षिणायनाधिकरणम् ॥ ११ ॥

द्वितीयः पादः ॥ २ ॥

—o—

श्री:

## चतुर्थे फलाध्याये गतिपादः तृतीयः

[पादार्थः—मोक्षार्थमनुष्ठितनिष्पन्नोपासनस्य मूर्धन्यया ब्रह्मनाड्या उत्क्रान्तस्य परप्राप्तये गमनमार्गचिन्ता]

(अधिकरणानि—५. सूत्राणि—१५.)

(146) १. **अर्चिराद्यधिकरणम्** (सू. 1)

विदुषां नियमतः अर्चिरादिना मार्गेणैव गतिः

(147) २. **वाय्वधिकरणम्** (सू. 2)

विदुषामर्चिरादिना पथा गच्छतां, संवत्सरादनन्तरं आदित्यात्पूर्वं वायोरेव प्राप्तिः। वायु-देवलोकशब्दयोः सामान्यविशेषरूपेणैकार्थवाचिता

(148) ३. **वरुणाधिकरणम्** (सू. 3)

अर्चिरादिमार्गगतेष्वातिवाहिकेषु विद्युत्पुरुषादनन्तरमेव वरुणस्य निवेशः ; न वायोरनन्तरम्

(149) ४. **आतिवाहिकाधिकरणम्** (सू. 4–5)

अर्चिरादयः, मुक्तानामतिवहनार्थं परमपुरुषेण नियुक्ताः देवताविशेषा एव ; न मार्गचिह्नभूताः, नापि भोगभूमयः

(150) ५. **कार्याधिकरणम्** (सू. 6–15)

अर्चिरादिरातिवाहिको गणः, परं ब्रह्मोपासीनान्, ब्रह्मात्मकं प्रकृतिवियुक्तमात्मानमुपासीनानपि च परं पदं नयति ; न तु कार्यब्रह्मरूपं हिरण्यगर्भमुपासीनान्

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## चतुर्थस्याध्यायस्य

## (15) तृतीयः गतिपादः ॥ ४-३ ॥ (अधि. 1-5, सू. 15)

[पादार्थः—मुमुक्षोः तदर्थं निष्पन्नोपासनस्य हार्दानुग्रहात् मूर्धन्यनाड्या उत्क्रान्तस्य परप्राप्तये गमनमार्गविचारः]

### (146) अर्चिराद्यधिकरणम् ॥ ४-३-१ ॥

[अधिकरणार्थः—परं प्राप्नुवतः पुरुषस्य अर्चिरादिरेक एव मार्गः नियतश्चिन्तनीयः ; नाऽन्यः]

### ५०९. अर्चिरादिना तत्प्रथितेः ॥ ४-३-१ ॥ (सि)

[पादसङ्गतिः पादविचार्यार्थश्च]

विदुष उत्क्रान्तस्य, नाडीविशेषेण हार्दानुग्रहात् गत्युपक्रमः उक्तः । तस्य गच्छतः, मार्ग इदानीं निर्णीयते ॥

[विचारणीयविषयस्योपस्थापनम्]

तत्र श्रुतिषु मार्गप्रकाराः [1]'बहुधा' आम्नायन्ते । छान्दोग्ये तावत्—
'यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते'
(छां.उ. 4-14-3)

---

'यथा पुष्करपलाश आपो न श्लिष्यन्ते' इत्यादि, 'ब्रह्मविदो मार्ग' इति दर्शयितु-

---

[सूत्रार्थः । अर्चिरादिना—(ब्रह्मवित् चेतनः) अर्चिःप्रभृतिकेन पथैनैव गच्छति ; नत्वन्येन, तत्प्रथितेः—सर्वत्र श्रुतिषु तस्य एकस्यैव मार्गस्य प्रत्यभिज्ञानात् ॥ ]

'एकोऽर्चिरादिः सर्वत्र ह्युच्यते तेन गच्छति । मार्गेणैवेति तस्यैव प्रत्यभिज्ञानतः श्रुतौ ॥' (ब्र.प.मा. 509)

---

[1] बहुविधाः—वा. प्रकाराः—ध.

इत्युपक्रम्य ब्रह्मविद्यामुपदिश्य, आम्नायते—

'अथ [1]यदु चैवाऽ[1]स्मिन् शव्यं कुर्वन्ति, [2]यदु च न[2], अर्चिषमेवाऽभिसम्भवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः।

स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं [3]नावर्तन्ते[3]' (छां.उ. 4-15-5, 6)

इति। तत्रैवाऽष्टमे—

'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छां.उ. 8-6-5)

इति। कौषीतकिनश्च देवयानमार्गम् अन्यथाऽधीयते—

'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं (स आदित्यलोकं) स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्'

(कौषी.उ. 1-3)

इति। तथा बृहदारण्यके—

'य एवमेतद्वि[4]दुर्ये चेमेऽरण्ये[4] श्रद्धां [5]सत्यमुपासते[5], तेऽर्चिषमभिसम्भवन्ति [तेऽर्चिरभिसम्भवन्ति] अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात् पुरुषो[6]मानस एत्य[6] ब्रह्मलोकान् गमयति' (बृ.उ. 8-2-15)

इति। तत्रैव पुनरन्यथा—

---

मुदाहृतम्। शव्यम्—शवयोग्यं संस्कारम्। यत्—यदि। शवसंस्कारं यदि कुर्वन्ति यदि वा न कुर्वन्ति; अर्चिषमेव ते, अभिसम्भवन्ति—प्राप्नुवन्तीत्यर्थः। उदङ् इति। आदित्य इति अध्याहार्यम्। छान्दोग्ये अर्चिरादिका गतिः श्रूयते। कौषीतकिवाक्ये अग्निलोकादिका। बृहदारण्यकेऽपि अर्चिरादिका। तत्रैव वाय्वादिका च।

[1] यदुचाऽ—घ.ङ.च.
[2] यदि च न—अ.आ.
[3] नावर्तन्ते नावर्तन्ते—रा.ग्रं.
[4] ये चामी अरण्ये—वा.
[5] सत्यमित्युपासते—द.
[6] ऽमानवः स एत्य—पा.

'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति, तस्मै स तत्र [1]विजिहीते[1], यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति। तस्मै स तत्र [1]विजिहीते[1]। यथा आडम्बरस्य खम्। तेन स ऊर्ध्वमाक्रमते। स चन्द्रमसमागच्छति। तस्मै स तत्र [1]विजिहीते[1]। यथा दुन्दुभेः खम्' (बृ.उ. 7-10-1) इत्यादि ॥

[विचारोपयोगी संशयः]

तत्र संशयः—किम् अर्चिरादिः एक एव मार्गः आभिः श्रुतिभिः प्रतिपाद्यत इति, तेनैव ब्रह्म गच्छति विद्वान्? उत तस्मादन्ये [2]अन्यत्र[2] मार्गा इति, तैर्वा अनेनवेति अनियमः?—इति।

[यौक्तिकः पूर्वः पक्षः]

किं युक्तम्?। अनियमः—इति।

कुतः?। अनेकरूपत्वात्, नैरपेक्ष्याच्च—इति।

[सूत्रतः सिद्धान्तार्थः]

एवं प्राप्ते, अभिधीयते—अर्चिरादिना—इति। अर्चिरादिः एक एव मार्गः सर्वत्र प्रतिपाद्यते। अतः अर्चिरादिनैव गच्छति।

कुतः?। तत्प्रथितेः—तस्यैव सर्वत्र प्रथितेः। प्रथितिः—प्रसिद्धिः। तस्यैव सर्वत्र प्रत्यभिज्ञानात् इत्यर्थः ॥

---

आडम्बरम्—वाद्यविशेषः। अन्यत्र—विद्यान्तरे।

किं विद्वान् अर्चिरादिनैव मार्गेण गच्छति? उत ततो मार्गान्तरेण वेति अनियमः?। किं सर्वविद्यासु एको मार्ग आम्नायते? उत नानामार्गाः? इति। किं क्रमान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यम्? उत आदित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यम्?—इति। नानामार्गाश्रयणस्य न्याय्यत्वे, नानाविद्यासु नानामार्गाम्नानात् अनियमः। मार्गैकत्वाश्रयणे न्याय्ये, सर्वविद्यासु मार्गैकत्वाम्नानात्, अर्चिरादिनैवेति नियमः। अनेकरूपत्वादित्यनेन क्रमभेदः क्रमिभेदश्च विवक्षितः ॥

सर्वत्रेति। क्रम-क्रमिभेदात् कथं मार्गैक्यम्? [इत्यस्य उत्तरमिदम्]

---

[1] विजिहीर्षते—पा. [2] ऽप्यन्यत्र—त.

प्रत्यभिज्ञानात् [1]स एव[1] मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति, विद्या-गुणोपसंहारवत्, अन्यत्रोक्तानाम् अन्यत्रोपसंहारः क्रियते ।

[उक्तस्य प्रत्यभिज्ञानस्य प्रदर्शनम्]

छान्दोग्ये तावत्, उपकोसलविद्यायां पञ्चाग्निविद्यायां च एकरूप एवाऽऽम्नायते । वाजसनेयके च, पञ्चाग्निविद्यायां तथैव अर्चिरादिः [2]अल्पान्तर[2]आम्नायते । अतः तत्राऽपि स एवेति प्रतीयते । अन्यत्राऽपि सर्वत्र अग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥१॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

—o—

---

अल्पान्तर इति । 'संवत्सर'शब्दस्थाने 'देवलोक'शब्द इति भावः । सर्वत्र—बहुषु प्रदेशेष्वित्यर्थः । परविद्यासु ब्रह्मप्रत्यभिज्ञानेपि गुणानन्त्यात् उपसंहारो न शक्यत इति, विद्यैक्यासम्भवः । मार्गान्वयिनां पदार्थानां द्वादशसंख्यान्तर्भूतत्वात्, चिन्तायोग्यतया अग्न्यादि-प्रत्यभिज्ञानुगुण्येन मार्गैक्यमिति भिदा ॥ १ ॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

—o—

---

[1] स एव हि—द.  [2] अल्पान्तरम्—त.भ.

(147) वाय्वधिकरणम् ॥ ४-३-२ ॥

[अधिकरणार्थः—अर्चिरादिपथगत 'वायु-देवलोक' शब्दयोरेकार्थता;
अतः तत्र गच्छतां आदित्यतः पूर्वं वायोरेव प्राप्तिः]

## ५१०. वायुमब्दादविशेष-विशेषाभ्याम् ॥ ४-३-२ ॥ (सि)

[विचारणीयविषयोपस्थापनम् ]

[तदर्थं विषयशोधनं च]

'अर्चिरादिनैव गच्छन्ति विद्वांसः'—इत्युक्तम् ।

तत्र अर्चिरादिके मार्गे, छन्दोगाः—मासादित्ययोः अन्तराले संवत्सरमधीयते—

'मासेभ्यः संवत्सरं, संवत्सरादादित्यम्' (छां.उ. 4-15-5)

इति । वाजसनेयिनस्तु—'तयोरेवाऽन्तराले'[1] देवलोकम् ;

'मासेभ्यो देवलोकं, देवलोकादादित्यम्' (बृ.उ. 8-2-15)

इति । उभयत्राऽपि मार्गस्यैकत्वात्' उभौ उभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभि-

---

वायुमिति । सङ्गतिः स्फुटा । संवत्सरादित्ययोर्मध्यप्राप्तौ वायु-देवलोकौ किम् अनियतक्रमेण निवेशयितव्यौ ? उत न ? इति । किं वायु-देवलोकशब्दौ अर्थान्तरपरौ ? उत न ? इति । किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यम् ? उत वायोः देवगृहत्वश्रवणानुरोधेन वायुपरत्वं न्याय्यम् ? । देवावासपरत्वे न्याय्ये, तयोः शब्दयोरर्थान्तरपरत्वात् , अनियतक्रमेण निवेशः । वायुपरत्वे सति, अर्थान्तरपरत्वाभावात् , अनियतक्रमेण निवेशाभावः स्यात् ॥

---

[सूत्रार्थः । अब्दात्—अर्चिरादौ संवत्सरात्पश्चात् , वायुम्—वायुमेकमेव निवेशयेत् ; नत्वन्यमपि, अविशेष-विशेषाभ्याम् देवलोकमिति सामान्यतः, वायुमिति विशेषतश्च एकस्यैवाऽर्थस्य श्रुतौ निर्देशेन वायु-देवलोकशब्दयोर्भिन्नार्थकत्वाभावादिति ।]

'वायुम् संवत्सरादूर्ध्वं गच्छेन्निर्देशतः श्रुतौ । देवलोको वायुरितिह्यविशेष-विशेषतः ॥' (ब्र.प. 510)

---

[1] तयोरेवान्तरे—थ.

हितयोः संवत्सर-देवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि,

'अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान्' षडुदङ्ङेति मासांस्तान्' (छां.उ. 4-15-5)

इति, अधिककालानां न्यूनकालेभ्यः उत्तरोत्तरत्वेन निवेशदर्शनात्, संवत्सरस्यैव [1]मासादनन्तरं[1] बुद्धौ विपरिवृत्तेः, संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति, तत ऊर्ध्वं देवलोक इति निश्चीयते। अन्यत्र वाजसनेयिनः—

'यदा वै पुरुषोऽस्माल्लोकात् प्रैति, स वायुमागच्छति तस्मै स तत्र [2]विजिहीते,[2] यथा रथचक्रस्य खम्, तेन [3]स[3] ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ.उ. 7-10-1)

इति, आदित्यात्पूर्वं वायुमधीयते॥ कौषीतकिनस्तु—

'[4]स एतं[4] देवयान पन्थानमापद्याऽग्निलोकमागच्छति स वायुलोकम्' (कौषी.उ. 1-3)

इति, 'अग्निलोक' शब्दनिर्दिष्टात् अर्चिषः परं [5]वायुमधीयते[5]। तत्र कौषीतकिनां-पाठक्रमेण, अर्चिषः परत्वेन प्राप्तस्य वायोः, वाजसनेयिनाम्—

'तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ.उ. 7-10-1)

इति, 'ऊर्ध्व'शब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा, आदित्यात् पूर्वं प्रवेशो निश्चीयते। अतः आदित्यात् पूर्वं संवत्सरादूर्ध्वं, देवलोको वायुश्च प्राप्तौ॥

[निर्णयौपयिकः संशयः]

तत्रेदं चिन्त्यते—किं देवलोकः वायुश्च अर्थान्तरभूतौ, यथेष्टक्रमेण विद्वान्

---

**तत्रेत्यादि**। श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानि। तत्र प्रातिपदिकाभिहितः विभक्त्यभिहितश्च श्रौत एवेति। अत्र पञ्चम्यभिहितं संवत्सर-देवलोकयोः मासादूर्ध्वत्वमविशिष्टम्। तत्र संवत्सरस्य मासादूर्ध्वभावित्वे, अधिककालानां न्यूनकालोत्तरनिवेशरूपार्थस्वभावः अधिक-हेतुरस्ति। अतो मासानन्तरं संवत्सरप्राप्तिः। तत ऊर्ध्वम् आदित्यात् पूर्वं देवलोकः इति स्थितम्। बृहदारण्यकेऽन्यत्र आदित्यात्पूर्वं वायुः श्रुतः॥ कौषीतकिवाक्ये अग्नेः परत्वेन वरुणात् पूर्वत्वेन वायुः पाठक्रमसिद्धः। तत्र पाठक्रमाद्बलीयसा वाजसनेयकोक्तश्रौत-क्रमेण पाठक्रमप्राप्तस्य अग्न्यनन्तरत्वस्य बाधितत्वात्, आदित्यात् पूर्वमेव वायुः प्राप्तः,

---

[1] मासानन्तरम्—अ.बा. [2] विजिहीर्षते—पा. [3] सह—त.
[4] स एवं—थ. [5] वायुलोकमधीयते—न.

अभिगच्छेत् ? उत अनर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेत् ?—इति॥

[युक्त्या पूर्वः पक्षः]

किं युक्तम् ?। भिन्नार्थत्वम्; प्रसिद्धेः। भिन्नार्थत्वे च 'ऊर्ध्वं'शब्देन पञ्चम्या च उभयोः संवत्सारादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात् विशेषाभावाच्च यथेष्टम्।

इति प्राप्ते, उच्यते—वायुमब्दात्—इति। वायुं संवत्सरादूर्ध्वं[1]मभिगच्छेत्[1]।

कुतः ?। अविशेष-विशेषाभ्यां वायोरेव निर्दिष्टत्वात्। 'देवलोक'[2]शब्दो हि[2] ! अविशेषेण—सामान्येन 'देवानां लोकः' इत्यनेन रूपेण, वायुमभिधत्ते।

'स वायु[3]मागच्छति[3], तस्मै स तत्र' (बृ.उ. 7-10-1)

इति 'वायु'शब्दः, विशेषेण वायुमभिधत्ते। अतः 'देवलोक-वायु'शब्दाभ्याम् अविशेष-विशेषाभ्यां वायुरेवाऽभिधीयत इति, संवत्सरादूर्ध्वं वायु[4]मेवाऽभिगच्छेत्[4]।

कौषीतकिनां 'वायुलोक' शब्दश्च, 'अग्निलोक'शब्दवत् 'वायुश्चाऽसौ लोकश्चे'ति-व्युत्पत्त्या वायुमेवाऽभिधत्ते। वायुश्च देवानामावासभूत इति अन्यत्र श्रूयते—

'योऽयं पवते [5]एष[5](एव) देवानां [6]गृहाः[6]' (जै.उपनि.ब्रा. 3-1) ?

इति ॥ २ ॥

इति वाय्वधिकरणम् ॥ २ ॥

—o—

---

देवलोकश्च प्राप्तः। तत्र संशयः इत्यर्थः। 'देवलोकादादित्यम्' इति देवलोकस्यादित्यात्पूर्वत्वं पञ्चम्यभिहितम्। 'स ऊर्ध्वमाक्रमते' इति, वायोरादित्यात्पूर्वत्वं प्रातिपदिकाभिहितम्।

विशेषाभावादिति। संवत्सरस्य मासानन्तरत्वे इव, अत्र श्रुतितोऽधिकं प्रमाणं नास्तीत्यर्थः॥

अविशेष-विशेषाभ्याम्—सामान्यविशेषाभ्याम। वायुश्चासौ इति, लोकपरत्वव्यावृत्त्यर्थम्। वायोः देवगृहत्वं यथार्थः; ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् ॥२॥

इति वाय्वधिकरणम् ॥ २ ॥

—o—

---

[1] मधिगच्छेत्—अ.  [2] शब्दोऽपि—वा.  [3] मभिगच्छति—अ.द.न.
[4] मेवागच्छेत्—त.थ.  [5] एषां—द.  [6] ग्रहाः—थ.

## (148) वरुणाधिकरणम् ॥ ४–३–३ ॥

[अधिकरणार्थः—अर्चिरादिपथस्थस्य वरुणस्य विद्युतोऽनन्तरमेव निवेशनीयता]

## ५११. तटितोऽधि वरुणः सम्बन्धात् ॥ ४-३-३ ॥ (सि)

[पूर्वोक्तार्थदढीकरणपूर्वकं निरूपणीयांशोपस्थापनम्]

कौषीतकिनाम्—

'स एतं देवयानं पन्थानमापद्याऽग्निलोकमागच्छति स वायुलोकं स वरुणलोकं [1]स आदित्यलोकं स इन्द्रलोकं[1] स प्रजापतिलोकं स ब्रह्मलोकम्' (कौषी.उ. 1–3) इत्यत्र [2]'अग्निलोक'शब्द[2]स्य [3]अर्चिष्पर्यायत्वेन[3] प्राथम्यम् अविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेशः, उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन,

'देवलोकादादित्यम् [4]आदित्याद्वैद्युतम्[4]' (बृ उ. 8–2–15)

इति वाजसनेयकोक्तश्रुतिक्रमात्; 'देवलोक'शब्दाभि[5]हितात् वायो[5]रुपरि निवेशः सिद्धः। इदानीं वरुणेन्द्रादिषु चिन्ता ॥

---

तटित इति। किं वरुणादयो यथापाठं निवेशयितव्याः? किं विद्युतोऽधि?—इति। किं वरुणस्य विद्युत्सम्बन्धानुरोधः उपपन्नः? न?—इति॥ अनुपपत्तौ यथापाठं निवेशः। उपपत्तौ विद्युतोऽधिनिवेशः।

कौषीतकिनामित्यादि, वक्ष्यमाणार्थवैशद्याय। तत्र अर्चिषः प्राथम्ये, वायोः संवत्सरादूर्ध्वत्वे, आदित्यस्य वायोरुर्ध्वत्वे च कौषीतकिवाक्याविगानम्, विगीतविषये तस्य

---

[सूत्रार्थः। वरुणः—अर्चिराद्यातिवाहिककोटिप्रविष्टो वरुणाख्य आतिवाहिकः, तटितोऽधि—अर्चिरादिप्रविष्टात् विद्युन्नामकादातिवाहिकादनन्तरमेव निवेशयितव्यः, सम्बन्धात्—विद्युतो वरुणेन सम्बन्धस्य लोक-वेदसिद्धत्वात्।]

'विद्युतोऽनन्तरं त्वत्र निवेश्यो वरुणो भवेत्। तटितो मेघवर्तित्वात् सम्बन्धादिति चोच्यते॥' (ब्र.प.मा. 511)

---

[1] स आदित्यलोकं—द. [2] अग्निलोक—वा. [3] अर्चिः पर्यायत्वेन—ड.

[4] आदित्याच्चन्द्रमसम्—पा. [5] हितस्य द्वयो—ड.

[विचारौपयिकः संशयः]

किम् एते वरुणादयः यथापाठं वायोरूर्ध्वं निवेशयितव्याः ? आहोस्वित् विद्युतोऽधि ?—

इति विशये ;

[युक्त्या पूर्वः पक्षः]

अर्चिः प्रभृतिषु सर्वेषु, 'अर्चिषोहः' (छां.उ. 4-15-5) [1]इत्यादि[1]श्रुति[2]क्रमो[2]परोधात्, विद्युतः परस्ताच्च,

'तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति' (छां.उ. 4-15-5, 6)

इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च, सर्वत्राऽवकाशाभावेन अप्राप्तौ च, उपदेशावैयर्थ्याय अवश्यं कस्यचिद्बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेन, इन्द्र-प्रजापती अपि हि ! अत्रैव निवेशयितव्यौ ॥

[सूत्रार्थतः सिद्धान्तः]

इति प्राप्ते, उच्यते—'तटितोऽधि वरुणः'—इति । वरुणस्तावत्, विद्युत उपरिष्टान्निवेशयितव्यः ।

कुतः ?—'सम्बन्धात्'—मेघोदरवर्तित्वा[3]द्विद्युतः[3], वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः ।

---

दौर्बल्यं चेत्यर्थः ॥ अत्र—कौषीतकिवाक्ये । उपदेशावैयर्थ्यायेति । क्रमिबाधादपि क्रमबाधो न्याय्यः—इति भावः ॥

इन्द्र....यितव्याविति । वरुणे वाय्वनन्तरे सति, इन्द्र-प्रजापत्योरन्यत्र निवेशे, क्रमद्वयभङ्गः स्यात् । तस्मात् एकक्रममात्रभङ्गेन तयोरपि क्रमिणोः सावकाशत्वं युक्तमिति भावः ॥

वरुणस्तावदिति । विद्युच्च वरुणाभिमानविषयजलं च मेघोदरस्थम् । तत्र विद्युतः स्फुटतरदृश्यत्वात्, सलिलस्य तथा दृश्यत्वाभावाच्च, सलिलस्य विद्युत उपरि स्थितिर्गम्यते । एवम् अभिमानविषययोः सम्बन्धानुरूपम्, अभिमानिदेवतयोरपि सम्बन्धो न्याय्य इति,

---

[1] इति—न.　[2] मात्रो—थ.　[3] द्विद्युतो हि—वा.

एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय, क्वचिन्निवेशयितव्यत्वे सति, पाठक्रमादर्थक्र[1]मस्य बलीयस्त्वात्[1] विद्युतोऽधिवरुणो निवेशयितव्यः। ततश्च अमानवस्य गमयितृत्वं, व्यवधानसहम्' इत्यवगम्यते। [2]तस्य च[2] व्यवधानसहत्वात्, इन्द्रादेश्च उपदिष्टस्य अवश्यनिवेशयितव्य[3]स्य[3], वरुणादुपर्यु[4]पदिष्टत्वात्[4], आगन्तूनाम् अन्ते निवेशयितव्यत्वाच्च, वरुणादुपरि [5]इन्द्रादिर्नि[5]वेशयितव्यः—इति ॥ ३ ॥

इति वरुणाधिकरणम् ॥ ३ ॥

—o—

---

तटिदभिमानिन ऊर्ध्वं जलाभिमानी वरुणः-इति भावः। किञ्च द्यु-पर्जन्य-पृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः। तटित्पुरुषस्योपरि वरुणो मेघोदरे ॥

**एतदुक्तमिति**। अर्थक्रमस्य पाठक्रमाद् बलीयस्त्वेन वरुणस्य तटिदुपरि निवेशः। कौषीतकिपाठक्रमानुरोधात्, आगन्तूनामन्ते निवेशयितव्यत्वरूपात् मीमांसासिद्धन्यायाच्च, इन्द्र-प्रजापत्योः वरुणोपरि निवेशः ॥ अत्राऽस्मदाचार्याणां वरदमिश्राणामयं श्लोकः—

'अर्चिरहः सितपक्षानुदगयनाब्दमरुदर्केन्दून्।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥'—इति ॥

इति वरुणाधिकरणम् ॥ ३ ॥

—o—

---

1 मो बलीयानिति—न. 2 तस्य—न. 3 स्य च—द.
4 पदिष्टात्—भ. 5 इन्द्रो नि—द.

(149) आतिवाहिकाधिकरणम् ॥ ४–३–४ ॥ (सू. 4–5)

[अधिकरणार्थः—ब्रह्मप्रेप्सोर्मध्येमार्गं श्रुतानामर्चिरादीनाम्, अतिवोढृदेवताविशेषत्वमेव ; न मार्गचिह्नत्वं, नाऽपि भोगभूमित्वम्]

## ५१२. आतिवाहिकास्तल्लिङ्गात् ॥ ४–३–४ ॥ (सि)

[अधिकरणोपयोगिनी चिन्ता]

इदमिदानीं चिन्त्यते—किम् अर्चिरादयः, मार्गचिह्नभूताः ? उत भोगभूमयः ? अथवा विदुषां ब्रह्म प्रेप्सताम् अतिवोढारः ?—इति ।

[युक्त्या पूर्वः पक्षः]

किन्तावद् युक्तम् ? । मार्गचिह्नभूताः—इति ।

कुतः ? । उपदेशस्य तथाविधत्वात् । 'दृश्यते हि ! लोके[1] [2]ग्रामादीन्[2] प्रतिगन्तॄणाम् एवंविधो [3]देशिकै[3]रुपदेशः—'इतो निष्क्रम्य अमुकं वृक्षम् [4]अमुकां नदीम्[4] अमुकं च पर्वतपार्श्वं गत्वा अमुकं ग्रामं गच्छ'—इति ।

---

आतिवाहिका इति । अनन्तरसङ्गतिः स्फुटा । किम् अर्चिरादयः मार्गचिह्नभूताः ? उत भोगभूमयः ? उत अतिवोढारः ?—इति । किं लौकिकोपदेशप्रक्रमानुरोधो न्याय्यः ? किम् 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः' इति वाक्यानुरोधो युक्तः ? उत गमयितृत्वलिङ्गानुरोध उचितः !॥ आद्ये मार्गचिह्नत्वम् ! द्वितीये भोगभूमित्वम् !

---

[सूत्रार्थः । आतिवाहिकाः—ब्रह्मप्रेप्सोर्मध्येमार्गं लभ्यत्वेन श्रुताः अर्चिरादिपदाभिलप्याः अर्थाः मुक्तानां चेतनानां ब्रह्मगमयितृदेवताभूताः, तल्लिङ्गात्—ब्रह्मगमयितृत्वज्ञापकस्य 'ब्रह्म गमयती'ति वाक्यस्य सत्त्वात् ।]

'एतेऽर्चिरादयः सर्वे देवता आतिवाहिकाः । गच्छन्तं गमयन्तीति लिङ्गादेव पराज्ञया ॥' (ब्र.प. 512)

---

[1] लोके हि दृश्यते—न.  [2] ग्रामान् वा.

[3] दैशिकै—क. ग. ठ.  [4] अमुकीं नदीम्—न.

अथवा, भोगभूमय एताः स्युः ; कालविशेषतया प्रसिद्धानाम् अहरादीनां मार्गचिह्नत्वानुपपत्तेः । अन्यस्य च मार्गचिह्नभूतस्य एतेषामनभिधायकत्वात् । भोगभूमित्वं च—

'एत एव लोकाः यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः' (?)

इति अहरादीनां लोकत्ववचनादुपपद्यते । अत [1]एव च[1] कौषीतकिनः—

'अग्निलोकमागच्छति' (कौषी.उ. 1–3)

इत्यादिना लोकशब्दानुविधानेन अर्चिरादीन् पठन्ति—इति ॥

[सिद्धान्तार्थः सूत्रार्थतः]

एवं प्राप्ते, ब्रूमः—'आतिवाहिकाः'—इति । विदुषा[2]मतिवाहे परम[2]पुरुषेण नियुक्ताः—आतिवाहिकाः, देवताविशेषा [3]एते[3] अर्चिरादयः ।

कुतः ? । तल्लिङ्गात्—अतिवहनलिङ्गात् । अतिवहनं हि ! गन्तॄणां गमयितृत्वम् । [4]गमयितृत्वं च[4]—

'तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति' (छां.उ. 4-15-5, 6)

इति उपसंहारे श्रूयमाणं, पूर्वेषामपि अविशेषश्रुतानां, स एव सम्बन्ध इति गमयति ।

वदन्ति च अर्चिरादयः शब्दाः, अर्चिराद्यात्मभूतान् अभिमानिदेवताविशेषान् ;

'तं पृथिव्यब्रवीत्' (तै.सं. 5–5–2)

इतिवत् ॥ ४ ॥

---

तृतीये तु आतिवाहिकत्वम् । **अथवेत्यादि** । [अत्र शङ्कितस्य] भोगभूमित्वस्याऽपि अवाचकाः शब्दाः—इत्यत्र, [उत्तरम्] 'एत एव लोकाः' इति । 'लोकाः अहरादिशब्दवाच्याः' इति अस्य वाक्यस्याऽर्थ इति, पूर्वपक्षिणो हृदयम् । **लोकशब्दस्य अनुविधानम्**—अनुवृत्तिः । 'तस्मै स तत्र विजिहीते' इत्यपि लोकत्वसाधकहेतुः अर्थसिद्धः ॥

**वदन्ति चेति** । 'तं पृथिव्यब्रवीत्' 'आपो वा अकामयन्त' 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इतिवत्, अर्चिरादिशब्दाः देवतावाचिनः इति भावः ॥ ४ ॥

---

[1] एव—घ. द. न.
[2] मतिवाहिपरम—द.
[3] एव ते—द.
[4] तच—वा. ब्रह्म प्रति—वा.

[वरुणादीनां विद्युतः परेषामपि आतिवाहिकत्वेनान्वयौचित्यम्]

यद्येवम्,

'तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति' (छां.उ. 4-15-5, 6)

इति वैद्युतस्यैव पुरुषस्य [1]ब्रह्म[1]गमयितृत्वश्रुतेः, विद्युतः परेषां वरुणादीनां कथम् आतिवाहिकत्वेनाऽन्वयः ? ; [2]इत्यत्राऽऽह[2]—

## ५१३. वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४-३-५ ॥ (सि)

ततः—विद्युत उपरि, वैद्युतेन—अमानवेनैव आतिवाहिकेन, विदुषाम् [3]आब्रह्मप्राप्तेः[3] गमनम् ।

कुतः ? । तच्छ्रुतेः—

'स एनान् ब्रह्म गमयति' (छां.उ. 4-15-6)

इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु अनुग्राहका इति, तेषामपि आतिवाहिकत्वेनाऽन्वयो विद्यत एव ॥ ५ ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

—o—

---

वैद्युतेनैवेति । 'ततः—विद्युत उपरि' इति, 'तत'शब्दस्य पश्चाद्भावपरत्वव्यावृत्त्यर्थम् ।

[सूत्रे—१. आतिवाहिकाः, २. वैद्युतेनैव]

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

—o—

---

[सूत्रार्थः । ततः—विद्युत उपर्यपि, वैद्युतेनैव—वैद्युताख्येन अमानवपुरुषेणैव विदुषामतिवहनम्, तच्छ्रुतेः—वैद्युतपुरुषस्यैवाऽतिवोढृत्वस्य 'स एनान् ब्रह्म गमयति' इति श्रुतितः सिद्धेः ।]

'तडितो वैद्युतेनैव विदुषां नयनं भवेत् । 'स एना'निति तेनैव ब्रह्मप्राप्तिश्रुतेरिह ॥' (ब्र.प. 513)

---

[1] ब्रह्म प्रति—वा. [2] इत्यत आह—पा. [3] आ ब्रह्मप्राप्ति—वा.

## (150) कार्याधिकरणम् ॥ ४-३-५ ॥

[अधिकरणार्थः—अर्चिरादिरातिवाहिको गणः ब्रह्म ब्रह्मात्मकं प्रकृतिवियुक्तात्मानं च उपासीनानेव ब्रह्मपदम् नयति ; न तु कार्यं हिरण्यगर्भादिकमुपासीनान् ]

## ५१४. कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४-३-६ ॥ (पू)

[अवान्तरसङ्गतिप्रदर्शनम् ]

अर्चिरादिनैव गच्छति विद्वान् । अर्चिरादिः अमानवान्तश्च गणः आतिवाहिकः, विद्वांसं ब्रह्म गमयति—इत्युक्तम् ।

[प्रकृताधिकरणार्था चिन्ता]

इदमिदानीं चिन्त्यते—किम् [1]अयमर्चि[1]रादिको गणः, कार्यं हिरण्यगर्भमुपासीनान् नयति ? उत[2]परमेव ब्रह्मोपासीनान्[2] ? अथ [3]परब्रह्म[3]उपासीनान्, प्रत्यगात्मानं च ब्रह्मात्मकतया उपासीनांश्च ?—इति विशये ;

---

कार्यमित्यादि । कार्योपासकस्य कार्यप्राप्तिः ; परोपासकस्य परप्राप्तिश्च तत्क्रतुन्यायसिद्धा । अतः उपासितृविशेषे निश्चिते प्राप्तिसन्देहाभावात्, संशयस्य उपासितृभेदमूलत्वात्, 'स एनान्' इति उपासितॄणां प्रतिपन्नत्वाच्च, 'उपासीनान्' इति अध्याहृतम् । 'नयति'पदं सिद्धान्तसूत्रादाकृष्टम् ॥

चिन्त्यत इति । किम् अर्चिरादिको गणः, कार्यं हिरण्यगर्भमुपासीनानेव नयति ? उत परंब्रह्म उपासीनानेव ? उत परंब्रह्म उपासीनान्, प्रत्यगात्मानं ब्रह्मात्मकतया उपासीनांश्च ?—इति । किं परब्रह्मणि प्राप्ये 'गति-ब्रह्मलोक'शब्दौ उपपद्येते ? न ?—इति । ब्रह्मोपासीनानामेव गमयितृत्वे, 'तद्य इत्थं विदुर्ये चेमे' इत्यादिवाक्यसामञ्जस्यमस्ति ? न ?—इति ॥ यदा नोपपद्येते,

---

[सूत्रार्थः । कार्यम्—सृज्यं हिरण्यगर्भमुपासीनानेव आतिवाहिकगणो नयति ; (न परं ब्रह्मोपासीनान्,) अस्य—देशविशेषहिरण्यगर्भोपासकस्यैव, गत्युपपत्तेः—अप्राप्तस्थानप्राप्तिरूपायाः गतेः सम्भवात् ॥]

'कार्यमेव ह्युपासीनान् नयन्त्यत्राऽऽतिवाहिकाः । उपपत्त्या गतेरेवं बादरिर्मनुते मुनिः ॥' (ब्र प 514)

---

[1] अर्चि—त.थ. [2] परब्रह्मोपासीनानेव—वा. [3] परम् ब्रह्म—च.ञ ठ.

[सूत्रार्थतः बादरिमतप्रदर्शनम् ]

'कार्यमुपासीनानेव गमयति'— इति 'बादरिरा[1]चार्यो मन्यते ।

कुतः ? । अस्य-हिरण्यगर्भमुपासीनस्यैव, गत्युपपत्तेः । न हि ! परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं 'परं ब्रह्म[2]उपासीनस्य, तत्प्राप्तये देशान्तरगतिः उपपद्यते ; प्राप्तत्वादेव ॥

[उपासनवैयर्थ्यपरिहारः]

नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि ! परविद्याकार्यम् । कार्यं तु हिरण्यगर्भरूपं ब्रह्म उपासीनस्य, परिच्छिन्न[3]देशवर्ति[3]प्राप्यप्राप्त्यर्थं गमनमुपपद्यते । अतः [4]अर्चिरादिः[4] आतिवाहिको गणः तमेव नयति ॥ ६ ॥

[उक्तबादरिमताभ्युच्चायकयुक्तिः]

## ५१५. विशेषितत्वाच्च ॥ ४-३-७ ॥ (पू)

---

तदा कार्यमुपासीनानेव नयेत । यदा 'गति-ब्रह्मलोक' शब्दावुपपद्येते ; यदा च 'तद्य इत्थम्' इत्यादिवाक्यसामञ्जस्यमस्ति ; तदा ब्रह्मोपासीनानेव नयेत् । यदा सामञ्जस्यं नास्ति ; तदा परं ब्रह्मोपासीनान्, प्रत्यगात्मानं ब्रह्मात्मकतया उपासीनांश्च नयेत् । उपास्ति-नयत्योः द्वयोरपि कर्म हिरण्यगर्भः ॥

**कार्यमुपेत्यादि** । सर्वगतत्वाद्ब्रह्मणः, मुक्तेन तत्प्राप्त्यर्थं न कचिद्गन्तव्यम् । सर्वगतत्वेऽपि देशविशेषप्राप्तानेव जानाति, नान्यमिति नियमोऽस्ति । येन कचिद्गन्तव्यम् ; सर्वज्ञत्वात् ॥ कचित् कल्याणगुणपूर्तिः, कचिदपूर्तिरिति न तदर्थं गन्तव्यम् ; सर्वतः परिपूर्णत्वात् । सम्बन्धविशेषसम्पादनाय न अन्यत्र गन्तव्यम् ; सर्वात्मत्वात्—इति विशेषणानां तात्पर्यम् ॥ ६ ॥

**विशेषितत्वादिति** । 'एतं ब्रह्मलोकं न विन्दन्ति' इत्यादिषु कर्मधारयः स्वीकृतः ।

---

[सूत्रार्थः । **विशेषितत्वाच्च**—'ब्रह्मलोकान् गमयति, प्रजापतेः सभां' इत्येवं विशेषतो निर्देशादपि ज्ञापकात्, कार्यमुपासीनानेव नयतीति बादरिमतं युज्यते ।]

**'प्रजापतेः सभां वेश्म प्रपद्य इति वाक्यतः । प्रजापतिमुपासीनान् नयन्त्यत्राऽतिवाहिकाः ॥' (ब्र.प.515)**

---

[1] बादरा—आ.  [2] परब्रह्म—त.थ.  [3] देश—द.  [4] अर्चिरादिकैः—आ. वा.

'पुरुषो(ऽमानव) मानस एत्य ब्रह्मलोकान् गमयति' (बृ.उ. 8-2-15)

इति लोकशब्देन बहुवचनेन च, लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेव अमानवो गमयतीति विशेष्यते । किं च

'प्रजापतेः सभां वेश्म [1]प्रपद्ये[1]' (छां.उ. 8-14-1)

इति कार्यस्य हिरण्यगर्भस्य समीपगमनम् अर्चिरादिना गतः (अभि) [2]प्रत्यभिसन्धत्ते[2] ॥ ७ ॥

[उक्तपक्षे ब्रह्म गमयतीति निर्देशौचित्यम्]

नन्वेवम् —

'तत्पुरुषोऽमानवः । [3]स एनान्[3] ब्रह्म गमयति' (छां.उ. 4-15-5, 6)

इत्ययं निर्देशो नोपपद्यते ; हिरण्यगर्भनयने हि ! 'स एनान् ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात् ! अत आह —

## ५१६. सामीप्यात्तु तद्व्यपदेशः ॥ ४-३-८ ॥ (पू)

'यो ब्रह्माणं विदधाति' (श्वे.उ. 6-18)

इति, हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्, तस्य 'ब्रह्म'शब्देन व्यपदेश इति, गत्यनुपपत्ति-विशेषणादिभिः उक्तैर्हेतुभिर्निश्चीयते इत्यर्थः ॥ ८ ॥

---

तद्व्यावृत्त्यर्थं, बहुवचनेन चेत्युक्तम् । बहुवचनान्तलोकशब्दे तात्पर्यम् ॥ ७ ॥

**गत्यनुपपत्ति-विशेषणादिभिरिति ।** आदिशब्देन ब्रह्मेति निर्देशोपपत्तिः गमनोपपत्तिश्च विवक्षिता । कारणे कार्योपचार इत्यर्थः ॥ ८ ॥

---

[सूत्रार्थः । तद्व्यपदेशः—कार्यभूते हिरण्यगर्भे कारणब्रह्मवाचकक्लीबब्रह्मपदव्यवहारः, सामीप्यात्तु—ब्रह्मात्यन्तसमीपत्वकृतः एव ।]

'प्रजापतेर्ब्रह्मपुत्रभावात् सामीप्यचिन्तया । ब्रह्मशब्देन तस्यैव व्यपदेशस्तु युज्यते ॥' (ब्र.प. 516)

---

[1] प्रपद्यते—न. [2] अभिसन्धत्त—पा. अनुसन्धत्ते—द.

[3] स एतान्—अ. थ.

[कार्यब्रह्मपरत्वेऽपि अमृतत्वाद्युक्तिनिर्वाहः]

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्तौ,

'एष देवपथो ब्रह्मपथः ; एतेन[1]प्रतिपद्यमाना[1] इमं मानवमावर्तं नावर्तन्ते' (छां.उ. 4-15-6)

'तयोर्ध्वमायन्नमृतत्वमेति' (कठ.उ 6-16)

इति अमृत[2]त्वप्राप्त्यपुन[2]रावृत्तिव्यपदेशः, नोपपद्यते ; हिरण्यगर्भस्य कार्यभूतस्य द्विपरार्धकालावसाने विनाशशास्त्रात् ।

'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' (भ.गी. 8-16)

इति वचनात् , हिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वात्—इति, [3]अत्राऽऽह[3]—

## ५१७. कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात् ॥ ४-३-९ ॥ (पू)

कार्यस्य — ब्रह्मलोकस्य अत्यये, तदध्यक्षेण – हिरण्यगर्भेण आधिकारिकेण अवसिताधिकारेण, विदुषा सह स्वयमपि [4]तत्राऽधिगत[4]विद्यः, अतः—अतः [5]कार्याद् ब्रह्म[5]लोकात् परं ब्रह्म प्राप्नोति, अर्चिरादिना गतस्य अमृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् ।

' ते ब्रह्म[6]लोके तु[6]परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' ( तै.ना.उ. 24) ।

इति वचनाच्चाऽवगम्यते ॥ ९ ॥

---

' कार्यात्यये ' इत्यादेरर्थस्याऽवगमकं, ' ते ब्रह्मलोके ' इति ॥ परामृतात्—परामृतं प्राप्य । ल्यब्लोपे पञ्चमीति पूर्वपक्षिणोऽभिप्रायः ॥ ९ ॥

---

[सूत्रार्थः । कार्यात्यये—कार्यभूतस्य ब्रह्मणो लोकस्य अवसाने प्राप्ते सति, तदध्यक्षेण सह—कार्यब्रह्मलोकस्य निर्वाहकेण हिरण्यगर्भाख्यचेतनेन सह, अतः परम्—कार्यब्रह्मलोकादुत्कृष्टं परब्रह्मलोकं, सम्पद्यते, अभिधानात्—श्रुतौ ' ते ब्रह्मलोके तु ' इति अमृतत्वादेः अभिहितत्वाज्ज्ञापकात् । ]

' ब्रह्मलोकात्यये विद्वान् ब्रह्मणा सह तत्परम् । प्राप्नोति ब्रह्म चेत्यादि शंसनाच्च तदुच्यते ॥ ' (ब्र.प. 517)

---

[1] प्रतिपाद्यमानाः—थ. [2] त्वापुन—आ. [3] तत्राह—वा.
[4] तत्राधिकृत—त. थ. तत्राधीत—आ. [5] कार्यब्रह्म—त. य. [6] लोकेषु—थ.

[उक्तार्थस्य स्मृतितोऽपि सिद्धिः]

## ५१८. स्मृतेश्च ॥ ४-३-१० ॥ (पू)

स्मृतेश्च अयमर्थोऽवगम्यते—

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' (कू.पु पू.ख. 12-269)

इति । अतः कार्यमुपासीनमेव अर्चिरा[1]दिको गणो[1] नयतीति बादरेर्मतम् ॥ १० ॥

[ब्रह्मशब्दमुख्यत्वानुगुणं जैमिनिमतम्]

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

## ५१९. परं जैमिनिर्मुख्यत्वात् ॥ ४-३-११ ॥ (पू)

'परं [2]ब्रह्मोपासीनमेव[2] अर्चिरादिर्नयति'– इति जैमिनिराचार्यो मन्यते । [3]कुतः ? मुख्यत्वात्[3] ।

'तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति' (छां.उ. 4-15-5, 6)

इति 'ब्रह्म'शब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये सत्येव हि ! लाक्षणिकत्वं युक्तम् ।

---

परस्य अन्ते—ब्रह्मायुषः अन्ते ॥ १० ॥

पक्षान्तरपरिग्रहेण—पूर्वपक्षात् पक्षान्तरेण । न तु कृत्स्नसिद्धान्तेनेत्यर्थः ।

---

[सूत्रार्थः । स्मृतेश्च—'ब्रह्मणा सह' इति स्मृतितो ज्ञापकादपि, बादरिमतमत्र सयुक्तिकम् ।]

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । इति स्मृतेश्च धातारमुपासीनान् नयन्ति हि !॥' (ब्र.प. 518)

[सूत्रार्थः । परम्—'स एनान् ब्रह्म गमयति' इत्येतत्, 'परं ब्रह्मोपासीनं आतिवाहिकगणो नयतीत्येतदर्थकमेव, (इत्येवमर्थं) जैमिनिः—जैमिनिनामा आचार्योऽभिप्रैति, मुख्यत्वात्—परब्रह्मण्येव ब्रह्मशब्दस्य मुख्यवृत्तत्वात् ।]

'परमेव ह्युपासीनान् नयन्त्यत्राऽऽतिवाहिकाः । ब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति जैमिनिः ।' (ब्र.प. 519)

---

[1] दिर्गणो —क्ता. [2] ब्रह्मोपासीनान्—न. [3] कुतः ?—द्.

[गमनान्यथानुपपत्तेः कार्यब्रह्मगमकतानिरासः]

न च गमनानुपपत्तिः प्रमाणम्; परस्य ब्रह्मणः सर्वगतत्वेऽपि, विदुषो विशिष्ट-देशगतस्यैव अविद्यानिवृत्तिशास्त्रात्। [1]यथाहि[1] विद्यो[2]त्पत्तिः[2] वर्णाश्रमधर्म-शौचाचार-देश-कालाद्यपेक्षा?

'तमेतं वेदानुवचनेन' (ब्र.उ. 6-4-22)

इत्यादिशास्त्रादवगम्यते; तथा निश्शेषाविद्यानिवर्तन[3]रूपविद्या[3]निष्पत्तिरपि विशिष्ट-देशगतिसापेक्षेति, गतिशास्त्रादवगम्यते। विदुषः उत्क्रान्तिप्रतिषेधादि तु, पूर्वमेव परिहृतम्॥

['विशेषितत्वाच्चे'ति सूत्रोक्तयुक्तिनिरासः]

यत्तु—'ब्रह्मलोकान्' (बृ.उ. 8-2-15) इति लोकशब्द-बहुवचनाभ्यां विशेषणात्, कार्यभूतहिरण्यगर्भप्रतीतिः—इति।

तदयुक्तम्; निषादस्थपतिन्यायेन 'ब्रह्मैव लोको ब्रह्मलोकः' इति कर्मधारयस्यैव युक्तत्वात्। [4]अर्थस्य[4] च एकत्वे निश्चिते, बहुवचनस्य 'अदितिः पाशान्' (पू.मी. 9-3-5) इतिवदुपपत्तेः।

परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य, स्वेच्छापरिकल्पिताः स्वासाधारणाः अप्राकृताश्च लोकाः [5]नात्यन्ताय न सन्ति[5]; श्रुति-स्मृतीतिहास-पुराण-प्रामाण्यात्॥ ११॥

---

विद्यानिष्पत्तिरिति। विद्या हि स्वमाहात्म्यात् सूक्ष्मशरीरस्थितिहेतुः अनुवर्तते। तस्या निष्पत्तिः—कार्यकरत्वावस्थापत्तिः। यद्वा निष्पत्तिः—नितरां विकासः। सा गति-सापेक्षेत्यर्थः। नित्यत्वेऽपि कालविशेषापेक्षावत्, सर्वगतत्वेऽपि देशविशेषापेक्षा युक्तेति भावः॥ नित्यमुक्ततया कालविशेषापेक्षा न चेत्! शास्त्रवैयर्थ्यं प्रत्यक्षविरोधश्च॥ **न न सन्ति**—निषेधप्रसङ्गो नास्ति। अत्यर्थं सन्त्येवेत्यर्थः। 'परमव्योम'शब्दादीनां हृदयगुहादिस्थान-परत्वापादनेन लोकविशेषापलापो न युक्तः; 'रजसः पराके' 'हिरण्मये परे कोशे' 'तदक्षरे परमे व्योमन्' इत्यादिभिर्दुरपह्नवत्वादिति॥ ११॥

---

[1] तथा हि—थ.　[2] त्पत्तेः—त.　[3] रूपा विद्या—द.

[4] तदर्थस्य—द.　[5] अनन्ताश्च सन्ति—थ.

[देहान्निष्क्रमणस्य श्रौतत्वज्ञापनम् ]

## ५२०. दर्शनाच्च ॥ ४-३-१२ ॥ (पू)

दर्शयति च श्रुतिः—मूर्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम् ;
'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य
स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8-1-4)
इति ॥ १२ ॥

[कार्यब्रह्मप्रत्यभिज्ञापकनिरासः]

यदुक्तम्—
'प्रजापतेः सभां वेश्म प्रपद्ये' (छां.उ. 8-14-1)
इति अर्चिरादिना गतस्य कार्ये प्रत्यभिसन्धिर्दृश्यते—इति ; तत्रोत्तरम्—

## ५२१. न च कार्ये प्रत्यभिसन्धिः ॥ ४-३-१३ ॥ (पू)

---

दर्शनाच्चेति । उत्थायोपसम्पत्तिवचनेन देवयानेन प्राप्तिसिद्धिः ॥ १२ ॥ श्रु.

**यदुक्तमित्यादि** । [यद्यपि न पूर्वत्राऽर्चिरादिका गतिः प्रस्तुता ; तथाऽपि 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति ब्रह्मविद्यायाः प्रस्तुतत्वात् ; ब्रह्मविदश्च अर्चिरादिगतिं सिद्धवत्कृत्यैवमुक्तमिति द्रष्टव्यम् (भा.प्र.) ॥ ]

**न च कार्ये इति** । उपपादकवाक्यवशात् 'परस्मिन्नेव' इत्युक्तम् (श्रु.प्र.) ॥

---

[सूत्रार्थः । **दर्शनाच्च**—देहान्निष्क्रमण-परंज्योतिरुपसम्पदन- स्वस्वरूपाविर्भावानाम् श्रुतित एव स्फुटमवगमादपि, जैमिनेर्मतमेव समीचीनम् । ]

'अर्चिरादिकया गत्या ब्रह्मप्राप्तेश्च दर्शनात् । 'परंज्योति'रिति श्रुत्यामेतदेव हि युज्यते (ब्र.प. 520)

[सूत्रार्थः । **प्रत्यभिसन्धिः**—'प्रजापतेः सभाम्' इति मुक्तचेतनस्याऽनुसन्धानं श्रुत्यवगतम् , **न च कार्ये**—कार्यभूतहिरण्यगर्भाख्यब्रह्मविषयकं न भवति ; 'प्रजापति'शब्दस्य विश्वस्य पत्यौ वर्तनात् । ]

'नैव प्रत्यभिसन्धिश्च कार्ये भवति वै यतः । वाक्यशेषपरामर्शाद् बन्धान्मुक्तस्य शंसनात् ॥' (ब्र.प. 521)

न च—अयं प्रत्यभिसन्धिः [1]'कार्ये हिरण्यगर्भे[1]' ; अपि तु परस्मिन्नेव ब्रह्मणि । वाक्यशेषे,

'यशोऽहं [2]भवामि[2] ब्राह्मणानाम्' (छां.उ. 8-14-1)

इति तस्याऽभिसन्धातुः सर्वविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात् ।

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं [3]कृतात्मा[3] ब्रह्मलोकमभि[4]सम्भवानि[4]' ॥ (छां.उ. 8-13-1)

इति अभि[5]सम्भाव्यस्य ब्रह्म[5]लोकस्य अकृतत्वश्रवणात् ; सर्वबन्ध[6]विनिर्मोकस्य[6] च साक्षाच्छ्रवणात् ॥ अतः, परमेव ब्रह्म उपासीनम्, अर्चिरादिः आतिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

[बादरायणमतेन सिद्धान्तार्थप्रदर्शनम्]

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह—

## ५२२. अप्रतीकालम्बनान् नयतीति बादरायण [7]उभयथा[7] च दोषात् तत्क्रतुश्च ॥४-३-१४॥ (सि)

अप्रतीकालम्बनान्—'प्रतीकालम्बनव्यतिरिक्तान् नयति अर्चिरादिः आति-

---

[प्रपद्ये इति, प्रपत्त्यभिसन्धिः, 'प्रत्यभिसन्धि' शब्देन विवक्षितः (भा.प्र.)] ॥ १३ ॥

अप्रतीकेत्यादि । प्रतीकालम्बनव्यतिरिक्त एव हि ! परं ब्रह्मोपासीनः । तं नयतीति दर्शनात्, जैमिनिमतात् सिद्धान्तिमतस्य को विशेषः ? इति [नाऽऽशङ्कनीयम्] ; कार्यमुपासी-

---

[सूत्रार्थः । अप्रतीकालम्बनान्—परब्रह्मकार्यभूतचेतनाचेतनाख्यप्रतीकोपासकव्यतिरिक्तान्, (पञ्चाग्निविदः परब्रह्मोपासकांश्च) नयति—अर्चिरादिरातिवाहिकगणः ब्रह्मपदं प्रापयति इति बादरायणः—इत्येवं बादरायण आचार्यः मन्यते, उभयथा च दोषात्—'कार्यमुपासीनान् नयति' इति 'परंब्रह्मोपासीनानेव' इति पक्षद्वयेऽपि तत्तच्छ्रुतिव्याकोपाद्दोषात्, तत्क्रतुश्च—'यथाक्रतुरस्मिँल्लोके पुरुषः' इति तत्क्रतुन्यायानुग्रहश्च अस्मिन्पक्षे भवति ।]

'प्रतीकालम्बनाद्भिन्नान् नयन्तीत्यातिवाहिकाः । पूर्वत्र दोषान्मनुते तत्क्रतोर्बादरायणः ॥' (ब्र.प. 522)

---

[1] कार्यहिरण्यगर्भे—त. [2] सम्भवामि—त. थ. [3] कृत आत्मा—त. थ.
[4] सम्भवामि—पा. [5] सम्भाव्यब्रह्म—थ. [6] विनिर्मोचकस्य—त. थ.
[7] उभयधा—पा.

वाहिको गणः—इति भगवान् बादरायणो [1]मन्यते[1] ।

[आतिवाहिकनीयमानचेतनस्वरूपनिगमनम्]

एतदुक्तं भवति—'कार्यमुपासीनान् नयतीति' नाऽयं पक्षः सम्भवति । 'परमेवोपासीनान्' इत्ययमपि नियमो नाऽस्ति । न च प्रतीकालम्बनानपि नयति । अपि तु—ये परं ब्रह्मोपासते, ये च आत्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तान् उभयविधान् नयति । ये तु ब्रह्म कार्यान्त[2]र्भूतं नामा[2]दिकं वस्तु, देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या, केवलं वा [3]तत्तद्वस्तु[3] उपासते; न तान् नयति । अतः परं ब्रह्म उपासीनान्, आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् नयति—इति ॥

[उक्तार्थे हेतुप्रदर्शनम्]

कुतः? ।—उभयथा च दोषात्—। 'कार्यमुपासीनान् नयति' इति पक्षे,

'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' (छां.उ. 8-3-4)

इत्यादिकाः श्रुतयः प्रकुप्येयुः ॥ '[4]परमेव च[4] ब्रह्मोपासीनान्' [5]इति च[5] नियमे,

'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति'

(छां.उ. 5-10-1)

इति [6]'पञ्चाग्निविदः[6] अर्चिरादिर्गणो नयती'ति श्रुतिः प्रकुप्येत् । अतः उभयस्मिन्नपि पक्षे दोषः स्यात् ।

---

नोऽपि प्रतीकालम्बनः; नामादिषु ब्रह्मदृष्ट्योपासीनश्च तथा । न च 'प्रतीकालम्बन'शब्दः दृष्ट्युपासनपरमाह; गोबलीवर्दन्यायात् । प्रतीकालम्बनव्यतिरिक्तेषु केषांचित् अर्चिरादिगतिः जैमिनिनोक्ता । प्रतीकालम्बनव्यतिरिक्तत्वोपाधिः येषु, तान् सर्वान् नयतीति सिद्धान्तिमतमिति विशेषात् ।

नायं पक्ष इति । हिरण्यगर्भमुपासीनानाम् अर्चिरादिगतिरनुपपन्ना; अर्चिरादिना गतस्य ब्रह्मप्राप्तेः । न हि हिरण्यगर्भोपासकस्य ब्रह्मप्राप्तिः । यथोपासनं हि फलम् । तस्मात् परब्रह्मोपासक एव अर्चिरादिना गच्छति; न कार्योपासकः इत्यर्थः ॥

---

[1] मेने—वा. [2] भूतनामा—घ. ङ. वा. [3] तद्वस्तु—द.
[4] परमेव—घ. ङ. न. [5] इति—आ. [6] पञ्चाग्निविदोपि—त. द.

तस्मात् उभयविधान्[1]नयति—इति[1]। तदेतदाह—'तत्क्रतुश्च'—इति। तत्क्रतुः—यथोपासीनः ? तथैव प्राप्नोतीत्यर्थः ;

'यथाक्रतुरस्मिंल्लोके पुरुषो [2]भवति, तथेतः प्रेत्य भवति'[2] (छां.उ. 3-14-1)

'तं यथा यथोपासते' (मुद्ग.उ. 3)

इति न्यायात्। पञ्चाग्निविदोऽपि अर्चिरादिना गतिश्रवणात्, [3]अर्चिरादिना गतस्य[3] ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च, अत एव तत्क्रतुन्यायात् प्रकृति[4]विनिर्मुक्त[4]ब्रह्मात्म[5]कात्मा[5]नुसन्धानं सिद्धम् ॥

नामादिप्राणपर्यन्तप्रतीकालम्बनानां तु, उभयविधश्रुतिसिद्धोपासनाभावात्, अचिन्मिश्रोपासने तत्क्रतुन्यायाच्च, अर्चिरादिना गतिः ब्रह्मप्राप्तिश्च [6]न विद्यते[6] ॥१४॥

[उक्तस्य विशेषस्य श्रौतत्वप्रदर्शनम्]

तमिमं विशेषं [7]श्रुतिरेव[7] दर्शयतीत्याह—

## ५२३. विशेषं च दर्शयति ॥४-३-१५॥ (सि)

---

तदेतदाहेति। तत्र प्रतिपन्नयोरुभयोरपि अप्रतीकालम्बनत्वं साधयितुं सूत्रकारः 'तत्क्रतु'श्चेत्युक्तवानित्यर्थः। सिद्धमिति। [एतद्वाक्योक्तेन हेतुना] अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पञ्चाग्निविद्यानिष्ठः ब्रह्मोपासक एव। तत्र 'तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विभागान्यथानुपपत्त्या, स्वात्मविशिष्टब्रह्मोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति कल्प्यम्। ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशावैयर्थ्याच्चेत्यर्थः ॥ १४ ॥

---

[सूत्रार्थः। विशेषं च—प्रतीकालम्बनानां गत्यनपेक्षं परिमितफलविशेषमपि, दर्शयति—'यावन्नाम्नो गतम्' इति श्रुतिः स्पष्टं प्रतिपादयति ॥]

प्रतीकालम्बनानां तु फलस्याऽल्पत्वदर्शनात्। यावन्नाम्नो गतमिति तद्भिन्नान् गमयन्त्यतः ॥ (ब्र.प 523)

---

1 नयति—द.  2 भवति—थ.  3 अर्चिरादिगतस्य—द.
4 वियुक्त—द.  5 कत्वानु—आ.द.  6 न सम्पद्यते—त. सम्पद्येते—थ.
7 श्रुतिरेवं—घ.

'यावन्नाम्नो गतम्, 'तत्राऽस्य[1] यथाकामचारो भवति' (छां.उ. 7–15–5) इत्यादिका श्रुतिः, [2]नामादिप्राणपर्यन्त[2]प्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति। तस्मात् अचिन्मिश्रं केवलं वा चिद्वस्तु, ब्रह्मदृष्ट्या[3]तद्व्यतिरेकेण[3] च [4]य उपासते[4]; न तान् नयति। अपि तु [5]परंब्रह्मो[5]पासीनान्, आत्मानं च प्रकृतिवियुक्तं [6]ब्रह्मात्मकमु[6]पासीनान् आतिवाहिको गणो नयतीति सिद्धम् ॥ १५ ॥

इति कार्याधिकरणम् ॥ ५ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्य फलाध्यायस्य

तृतीयः गतिपादः ॥ ३ ॥

—o—

---

**यावन्नाम्नो गतम्**—देवादिनाम्नो गोचर इत्यर्थः। 'ब्रह्मणा सह ते सर्वे' इत्यादिवचनं न अर्चिरादिगतपुरुषविषयम्; अपि तु चतुर्मुखलोकस्थयोगिविषयम्। **ते ब्रह्मलोके** इति। ब्रह्मैव लोको ब्रह्मलोकः। तत्र वर्तमाना ब्रह्मनिष्ठाः, **परान्तकाले**—'अन्तकाले च मामेव' इत्युक्तचरमदेहावसानसमये, **परामृतात्**—प्रसन्नात् ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थः। 'ब्रह्मलोक' शब्दस्य कर्मधारयः स्वतः प्राप्तः। 'वर्तमान' शब्दाध्याहारस्तुल्यः। **'अन्तकाल'** शब्दस्य चरमदेहावसानपरत्वं स्मृतिसिद्धम्। अतः अस्मिन्नेव पक्षे स्वारस्यम् ॥ १५ ॥

[सूत्राणि — १. कार्यं, २. विशेषि ३. सामीप्या ४. कार्यात्य ५. स्मृते ६. परं ७. दर्श ८. न च ९. अप्रती १०. विशेषम्।]

इति कार्याधिकरणम् ॥ ५ ॥

तृतीयः पादः ॥ ३ ॥

—o—

---

[1] तस्य—द. [2] नामादि—श्रा [3] तद्वियोगेन—पा.
[4] उपासते—श्रा [5] परब्रह्मो—त.थ. [6] ब्रह्मात्मकं चो—घ.ङ.न.

श्रीः

## चतुर्थे फलाध्याये चतुर्थः मुक्ति(फल)पादः

(अधिकरणानि—६. सूत्राणि—२२.)

[पादार्थः— ब्रह्मविदुषां अर्चिरादिना पथा गतानां मुक्तानामैश्वर्यप्रकारचिन्ता]

(151) १. **सम्पद्याविर्भावाधिकरणम्** (सू. 1-3)

मुक्तस्यात्मनः परं ज्योतिरुपसम्पद्य प्राप्यमाणो दशाविशेषः स्वस्वरूपाविर्भाव एव ; न तु अपूर्वाकारोत्पत्तिरूपः

(152) २. **अविभागेन दृष्टत्वाधिकरणम्** (सू. 4)

मुक्तस्य, स्वात्मन आत्मभूतस्य परमात्मनोऽनुभवः, स्वात्माविभागेन अहमित्येव ; न तु विभागेन

(153) ३. **ब्राह्माधिकरणम्** (सू. 5-7)

मुक्तस्य स्वरूपाविर्भावः, ज्ञानाकारेण अपहतपाप्मत्वादिना च

(154) ४. **सङ्कल्पाधिकरणम्** (सू. 8-9)

मुक्तस्य जीवस्य श्रुत्युक्ता इष्टप्राप्तिः, भगवत्सङ्कल्पानुगुणेन अप्रतिहतस्वसङ्कल्पेनैव ; न यत्नान्तरेण

(155) ५. **अभावाधिकरणम्** (सू. 10-16)

विदुषो मुक्तस्य मुक्तिदशायां सशरीरत्वमशरीरत्वं चेत्युभयं यथायथमविरुद्धम्

(156) ६. **जगद्व्यापारवर्जाधिकरणम्** (सू. 17-22)

मुक्तानामात्मनां ऐश्वर्यं ब्रह्मणा सह परमसाम्यं च, भगवदसाधारणान् धर्मान् जगन्नियमनादीन् विहायैव ; न सर्वैः

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

## चतुर्थस्याध्यायस्य

## (16) चतुर्थः मुक्तिपादः ॥ ४-४ ॥ (अधि. 6, सू. 22)

[पादार्थः—भक्त्याद्यनुष्ठानतः निष्पन्नमोक्षोपायत्वात् अर्चिरादिना मार्गेण गतानां मुक्तानामैश्वर्यप्रकारस्य चिन्तनम्]

## (151) सम्पद्याविर्भावाधिकरणम् ॥ ४-४-१ ॥ (सू. 1-3)

[अधिकरणार्थः—मुक्तात्मनां ब्रह्मोपसम्पत्त्या प्राप्यो दशाविशेषः स्वाभाविकस्वरूपाविर्भाव एव ; नत्वपूर्व आकारः]

## ५२४. सम्पद्याऽऽविर्भावः स्वेन शब्दात् ॥ ४-४-१ ॥ (सि)

[पादसङ्गत्यर्थं पूर्वोत्तरार्थसङ्क्षेपः]

परं ब्रह्मोपासीनानाम् [1]आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानाम्, अर्चिरादिना[1] मार्गेण अपुनरावृत्तिलक्षणा [2]'गति'रुक्ता ॥ इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते ॥

---

अपुनरावृत्तिलक्षणेति, 'न च पुनरावर्तते' इति विषयवाक्ये श्रवणादुक्तम् ॥ किम् 'अस्माच्छरीरात्' इत्यादिवाक्ये मुक्तस्य साध्येन रूपेण सम्बन्धः प्रतिपाद्यते ? उत स्वाभाविकस्वरूपाविर्भावः ? ॥ किं स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सम्भवति !

---

[सूत्रार्थः । सम्पद्य—परं ब्रह्मावाप्य, (लभ्यतयोक्तः अभिनिष्पत्तिरूपो दशाविशेषः) आविर्भावः—कर्मणा तिरोहितस्य स्वाभाविकस्यैव स्वरूपस्य तिरोधिविगमायत्तः प्रकाश एव ; न नूतनः स्वेन शब्दात्—श्रुतिगतात् 'स्वेन रूपेणे'पि शब्दात् ॥
परं ब्रह्मोपसम्पन्ने स्वाविर्भावस्त्विहोच्यते । 'स्वेन रूपेणे'ति शब्दाद्गुणानां सिद्धता भवेत् ॥ (ब्र.प. 524)]

---

[1] अर्चिरादिना—द.  [2] धृति—द.

[प्रकृतविचारार्थः संशयः]

इदमाम्नायते—

'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8–12–2)

इति। किम् अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पन्नस्य देवादिरूपवत् साध्येन रूपेण सम्बन्धः अनेन वाक्येन प्रतिपाद्यते ? उत स्वाभाविकस्य स्वरूपस्याऽविर्भावः ?—इति संशये,

[युक्त्या पूर्वः पक्षः]

साध्येन रूपेण सम्बन्धः—इति युक्तम्। अन्यथा हि, अपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्; स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात्। न हि! सुषुप्तौ देहेन्द्रियव्यापारेषूपरतेषु, केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते ॥

[दुःखविगममात्रस्यापुरुषार्थता]

न च दुःखनिवृत्तिमात्रं, परं ज्योतिरुपसम्पन्नस्य पुरुषार्थः; येन 'स्वरूपाविर्भाव एव मोक्षः' 'इत्युच्येत'[1];

'स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाऽकामहतस्य' (तै.उ.आन. 8–4) ?

'रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' (तै.उ.आन. 7–1) ?

इत्यादिभ्यः, मुक्तस्य सुखानन्त्यश्रवणात् ॥

---

न? इति। किं स्वरूपस्य स्वतोऽपरिच्छिन्नानन्दत्वं सम्भवति? न? इति। किम् आनन्दस्वरूपस्य तिरोधानं संभवति? न? इति। किम् आविर्भावपरत्वे 'अभिनिष्पत्ति'शब्दस्य वैयर्थ्यमस्ति? न? इति च ॥ यदा वैयर्थ्यं, यदा च तिरोधानासम्भवेन स्वतोऽपरिच्छिन्नानन्दायोगात् शास्त्रस्य न पुरुषार्थपर्यवसानम्; तदा साध्येन रूपेण सम्बन्धः प्रतिपाद्यः स्यात्, यदा न अभिनिष्पत्तिशब्दवैयर्थ्यं, यदा च तिरोधानसम्भवेन स्वतोऽपरिच्छिन्नानन्दत्वोपपत्तेः मोक्षशास्त्रस्य पुरुषार्थपर्यवसानम्, तदा स्वाभाविकरूपाविर्भावः प्रतिपाद्यः स्यात् ॥ **रूपेण**—आकारेण।

**न च दुःखेति।** दुःखनिवृत्तिमात्रं मोक्षश्चेत्! संसारनिर्विशेषः स्यात्; पुरुषार्थापुरुषार्थमिश्रत्वात्। दुःखनिवृत्तिः सुखप्राप्तिश्च इष्टे। सुखनिवृत्तिः दुःखप्राप्तिश्च अनिष्टे। तत्र दुःखनिवृत्तेरिष्टत्वात् सुखनिवृत्तेरनिष्टत्वात्, इष्टानिष्टमिश्रो मोक्षः संसारतुल्य इति ॥

---

[1] इत्युच्यते—त. थ.

[स्वरूपस्य तिरोध्यसम्भवः]

न च – अपरिच्छिन्नानन्दरूपचैतन्यमेव अस्य स्वरूपम्। तच्च संसारदशायाम् [1]अविद्या[1]तिरोहितं, परं ज्योतिरुपसम्पन्नस्य आविर्भवति—इति, शक्यं वक्तुम्; 'ज्ञानस्वरूपस्य तिरोधानासंभवात्। प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं, तद्विनाश एवे'ति हि पूर्वमेवोक्तम् ॥

[स्वरूपस्य पुरुषार्थताप्रतिक्षेपः]

न च प्रकाशमात्रस्य आनन्दता सम्भवति। सुखस्वरूपता हि आनन्दरूपता। सुखस्वरूपत्वं च [2]आत्मनोऽनु[2]कूलत्वम्। प्रकाशमात्रात्मवादिनः, कस्य प्रकाशः अनुकूलवेदनीयो भवेत्? इति, प्रकाशमात्रात्मवादिनः कथञ्चिदपि आनन्दस्वरूपता दुरुपपादा ॥

[स्वरूपनिष्पत्तिमात्रसाध्यतायां वचनानर्थक्यम्]

स्वरूपापत्तिमात्रे च [3]साध्ये, स्वरूपस्य[3] नित्यनिष्पन्नत्वात्, उपसम्पन्नस्य
'स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8-12-2)

इति वचनम् अनर्थकं स्यात्। अतः अपूर्वेण साध्येन रूपेण सम्बध्यते। एवं च, 'अभिनिष्पद्यते' इति वचनं मुख्यार्थमेव [4]भवति[4]। '[5]स्वेन रूपेणे'[5]त्यपि 'आनन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यते' इति सङ्गच्छते—इति ॥

---

**आत्मन इति**। यम् आत्मानं प्रति यत् अनुकूलत्वेन वेदनीयं, तत् तस्य सुखमित्यर्थः। आत्मत्वं च चैतन्याश्रयत्वम्। ततश्च ज्ञानमात्रात्मवादे न किंचिदुपपद्यत इति भावः। (भा.प्र.) **कस्येति**। अनुकूलत्वं नाम सप्रतियोगिको धर्मविशेषः। अन्यथा अनुकूलत्वमेव न स्यादिति भावः।

**स्वरूपापत्तीति**। न केवलं तर्कविरोधः श्रुतिविरोधश्चेत्यर्थः। **अनर्थकं स्यात्**—अभिनिष्पत्तिशब्दानर्थक्यमित्यर्थः। **स्वेनेति** स्वशब्दः असाधारण्यपरः; न तु असाध्यत्वपरः, अभिनिष्पत्तिवचनात्। **स्वरूपेणाभिनिष्पद्यते**—रूपविशिष्टतया साध्यत इति, रूपं साध्यमित्यर्थः। **एवं चेति**। स्वशब्दाभिनिष्पत्तिशब्दावुभावपि मुख्यावित्यर्थः ॥

---

[1] अविद्यया—पा. [2] आत्मानु—द. अनु—त. [3] स्वरूपस्य—थ. द.
[4] न भवति—थ. [5] स्वरूपेण—थ.

[सूत्रतः सिद्धान्तः]

एवं प्राप्ते [1]प्रचक्ष्महे'—'सम्पद्याऽऽविर्भावः'—इति। अयं प्रत्यगात्मा, अर्चिरादिना परं ज्योतिरुपसम्पद्य, यं दशाविशेषमापद्यते, सः स्वरूपाविर्भावरूपः ; न अपूर्वाकारोत्पत्तिरूपः।

कुतः ? । 'स्वेन' शब्दात्—'स्वेन रूपेणे'ति विशेषणोपादानात् इत्यर्थः। [2]आगन्तुक[2]विशेषपरिग्रहे हि ! 'स्वेन रूपेणे'ति विशेषणमनर्थकं स्यात् ; अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥ १ ॥

[पूर्वपक्षोक्तवचनानर्थक्याक्षेपनिरासः]

यच्चूक्तम्-स्वरूपस्य नित्यप्राप्तत्वात्,
'उपसम्पद्य ........ अभिनिष्पद्यते' (छां.उ. 8-12-2)
इति वचनमनर्थकम्—इति, तत्रोत्तरम्—

## ५२५. मुक्तः प्रतिज्ञानात् ॥ ४-४-२ ॥ (सि)

कर्मसम्बन्ध—तत्कृतदेहादि[3]विनिर्मुक्तः[3], स्वाभाविकेन रूपेणाऽवस्थितः, अत्र
'स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8-12-2)
इत्युच्यते। अतः नित्यप्राप्तस्याऽपि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य, तिरोधान-निवृत्तिः, अत्र 'अभिनिष्पत्ति'रुच्यते।

---

दशा—अवस्था। ज्ञानविकासस्य कालविशेषे भावात्, अवस्थात्वम्। ज्ञानस्य विकासार्हत्वात् स्वाभाविकत्वम्। अविशेषणेऽपीति। 'परं ज्योतिरुपसम्पद्य....अभिनिष्पद्यते' इत्येतत्सम्बन्धादेव तदसाधारणत्वं सिद्धम्। न हि अन्यस्य रूपेणाऽन्यो निष्पद्यते। अतः 'स्वेन'पदमनर्थकं स्यादित्यर्थः ॥ १ ॥

अत इति। पूर्वमसिद्धायाः तिरोधाननिवृत्तेर्वाचकत्वात् 'अभिनिष्पत्ति'शब्दो नाऽनर्थक

---

[सूत्रार्थः। मुक्तः—कर्म-तत्कृतदेहादिविनिर्मुक्तः स्वरूपावस्थो जीव एव (स्वेनेत्युक्तः), प्रतिज्ञानात्—'एतं त्वेवे'ति तस्यैव प्रतिज्ञावाक्ये प्रकृतत्वात्।]
'मुक्तस्वरूपमेवाऽत्र स्वशब्देनाऽनुकथ्यते। एतमेव तु भूयोऽनुव्याख्यास्यामीति बोधनात्॥' (ब्र.प.525)

---

[1] अभिधीयते—न. ब्रूमः—वा. [2] आगन्तुकं—आ. [3] विमुक्तः—वा. निर्मुक्तः—पा.

कुतः ? । प्रतिज्ञानात्—सा हि ! प्रतिपाद्यतया प्रतिज्ञाता ।

[प्रतिज्ञानविशदीकरणम्]

कुत इदमवगम्यते ?

'य आत्मा' (छां.उ. 8-7-1)

इति प्रकृतं प्रत्यगात्मानं, [1]जागरिता[1]द्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम्,

'एतं [2]त्वेव ते[2] भूयोऽनुव्याख्यास्यामि' (छां.उ. 8-9-3)

इति पुनः पुनरुक्त्वा,

'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय, परं ज्योतिरुपसम्पद्य, स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8-12-2)

इत्यभिधानात् ॥

[उक्तार्थनिगमनम्]

अतः कर्मणा सम्बद्धस्य, परं ज्योतिरुपसम्पद्य [3]बन्ध[3]निवृत्तिरूपा [4]मुक्तिः[4], 'स्वेन रूपेणाऽभि[5]निष्पद्यते, इत्युच्यते[5] । स्वरूपाविर्भावेऽपि 'अभिनिष्पत्ति'शब्दो दृश्यते—'युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥ २ ॥

---

इत्यर्थः । **सा**—तिरोधाननिवृत्तिः । निवृत्ततिरोधानं स्वरूपं प्रतिज्ञातमिति भावः ॥ **कुत इदमिति** । जाग्रदाद्यवस्थासूच्यमानासु प्रत्यवस्थम् 'एतं त्वेव....व्याख्यास्यामी'त्युक्तम् । तत्र एतच्छब्दस्य प्रकृतपरामर्शित्वात्, य आत्मेति प्रकृतस्य अपहतपाप्मत्वादिगुणकत्वात्, जाग्रदाद्यवस्थस्य तादृशगुणासंभवात्, गुणाष्टकयुक्तस्वाभाविकरूपकथनमेव प्रतिज्ञातम् । श्रोतुराशयपरीक्षार्थं जाग्रदादिकथनम् । तस्मात् 'व्याख्यास्यामी'त्युक्तम् । व्याख्यातव्यरूपं स्वाभाविकमेवेत्यर्थः ॥

**इत्यादिषु इति** आदिशब्देन 'विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नम्' इत्यादिप्रयोगो विवक्षितः । 'एवमयमर्थः साध्यते' इति सिद्धिपर्यायत्वेन प्रयुज्यमानः अभिनिष्पत्तिशब्दः आविर्भावस्याऽपि वाचकः इत्यर्थः ॥ २ ॥

---

[1] जागरा—द. न. [2] त्वेव—घ. ङ. [3] सम्बन्ध—द.
[4] विनिर्मुक्तिः—वा. [5] निष्पत्तिरुच्यते—(रा.ग्रं.)

[स्वरूपाविर्भावस्य मोक्षशास्त्राविषयत्वशङ्कानिरासः]

यच्चोक्तम्—आत्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात्, स्वरूपाविर्भावे, मोक्षशास्त्रस्य अपुरुषार्थावबोधित्वं स्यात्!—इति कृत्वा, देवाद्यवस्थावत् सुखसम्बन्ध्यवस्थान्तरप्राप्तिः, अभिनिष्पत्तिः—इति ; तत्रोत्तरम्—

## ५२६. आत्मा प्रकरणात् ॥ ४–४–३ ॥ (सि)

'स्वरूपेणैव अयमात्मा, अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्त[1]गुणकः' इति[1], प्रकरणा[2]दवगम्यते[2]।

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8–7–1)

इति हि! प्रजापतिवाक्यप्रक्रमः।

[प्रकरणस्य जीवात्मविषयता]

इदं च प्रकरणं प्रत्यगात्मविषयमिति,

'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (ब्र.सू. 1–3–18)

इत्यत्र प्रतिपादितम्। अतः अपहतपाप्मत्वादिस्वरूप एवाऽयमात्मा, संसारदशायां [3]कर्माख्यया अविद्यया[3] तिरोहितस्वरूपः, परं ज्योतिरुपसम्पद्य अविर्भूतस्वरूपो भवति।

---

इदं चेति। इदं वाक्यं परमात्मविषयकं हि [इति नाशङ्क्यमिति]। तिरोहितेति। इमे गुणाः स्वाभाविकत्वे, सर्वदा उपलभ्येरन् [इति शङ्कानवकाश इत्यर्थः]। आनन्दश्चेत्, औपाधिकाकारनिबन्धन एवेति न भवति। संसारदशायां स्वाभाविकानन्दस्य तिरोहितत्वात्, औपाधिकरूपसम्बन्धसापेक्षः आनन्दयोगो भवति। अत एव सुषुप्तौ च आनन्दायोगः [धर्म-

---

[सूत्रार्थः। आत्मा—जीवः, (आविर्भवनीयस्वाभाविकगुण एवात्रोच्यते) प्रकरणात्—जाग्रदाद्यवस्थाश्रयमेव तं प्रक्रम्य अपहतपाप्मत्वादिगुणानामुक्तत्वात्॥]

आविर्भूतगुणस्त्वत्र जीव इत्यवगम्यते॥ य आत्मेत्याद्युपक्रान्तजीवप्रकरणं हि तत्॥ (ब्र.प. 526)

---

[1] गुणाकर इति—त.थ.   गुणकः—रा.ग्रं.   [2] दित्यवगम्यते—वा.

[3] कर्माख्याविद्यया—रा.ग्रं.

अतः प्रत्यगात्मनः अपहतपाप्मत्वादयः स्वाभाविका गुणाः, परं ज्योतिरुपसम्पन्नस्याऽऽविर्भवन्ति ; न उत्पद्यन्ते ॥

[उक्तेऽर्थे शौनकोक्तिसंवादः]

यथोक्तं भगवता शौनकेनाऽपि —

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ (वि.ध. 104-55)
यथोदपानकरणात् क्रियते न [1]जलाम्बरम्[1] ।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥ (वि ध. 104-56)
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते ॥' (वि.ध. 104-57)

इति । अतः ज्ञानानन्दादिगुणानां, कर्मणा आत्मनि सङ्कुचितानां, परं ज्योतिरुपसम्पद्य [2]कर्मरूप[2]बन्धक्षये । [3]विकासरूपा[3]विर्भावो नाऽनुपपन्न इति, सुष्ठूक्तं 'सम्पद्याविर्भावः' इति ॥ ३ ॥

इति सम्पद्याऽऽविर्भावाधिकरणम् ॥ १ ॥

—o—

---

भूतानन्दाभावः] ; न तु आनन्दस्य औपाधिकाकारहेतुत्वस्वाभाव्यात् । तिरोधाननिवृत्तौ स्वाभाविक एवानन्द आविर्भवतीति, स्वरूपाविर्भावपरत्वे मोक्षशास्त्रस्य न अपुरुषार्थावबोधित्वमित्यर्थः ॥ [अतः 'आनन्दश्चेत् विषयसम्पर्कनिबन्धन एव । जाग्रत्सुषुप्त्यादौ तथाऽन्वयव्यतिरेकदर्शनात्' इति (व्याप्तिर्दूषिता भवति) (भा.प्र.) ॥

[विकासरूप इति । धर्मभूतज्ञानविकासरूपः अपहतपाप्मत्वादिगुणाष्टकाविर्भावः नानुपपन्न इत्यर्थः । गुणाष्टकस्याविर्भावो हि ! धर्मभूतज्ञानविषयीक्रियमाणत्वमेवेति भावः ॥ [ततश्च] 'स्वेन रूपेणाभिनिष्पद्यते' इत्यस्य, अपहतपाप्मत्वादिविशिष्टेन स्वेन रूपेणाभिनिष्पद्यते— धर्मभूतज्ञानेन विषयीक्रियत इत्यर्थः । ततश्च, विकासावस्थासम्बन्धरूपोत्पत्तेः धर्मभूतज्ञानगतत्वेऽपि, अपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपस्य अपरिच्छिन्नानन्दतया पुरुषार्थरूपस्य नोत्पत्तिः ।

---

[1] जलान्तरम् —त. थ. [2] कर्मस्वरूप —द. [3] विकाशरूपा —त. थ. विकासरूपक्षा—द.

अस्मिन्नधिकरणे—अपहतपाप्मत्वादिकं तद्विशिष्टस्वरूपं च नागन्तुकम्। अपि तु संसारदशायां धर्मभूतज्ञानस्य कर्मणा प्रतिबद्धत्वात्, अपहतपाप्मत्वादिगुणाष्टकविशिष्टात्म-स्वरूपविषयीकरणसामर्थ्यं नाऽस्ति। तिरोधाननिवृत्तौ तु तद्विषयकं भवति। ततश्च तद्विषयकं ज्ञानं परमुत्पद्यते। न अपहतपाप्मत्वादिरूपं, तद्विशिष्टस्वरूपं वा—इत्येव प्रतिपाद्यते: न तु मुक्तौ धर्मभूतज्ञानस्याप्युत्पत्तिः प्रत्याख्यायते। इयांस्तु विशेषः—संसार-दशायां घटादिविषयकं ज्ञानं, चक्षुरादीन्द्रियव्यापारसापेक्षम्। मुक्तौ तिरोधानापगमे सर्व-विषयकं ज्ञानं, न किंचित् आगन्तुकं कारणमपेक्षते—इत्येतदभिप्रायेण एवम् आगन्तुकरूप सामान्याभावप्रवादः [भा. प्र.] ॥ ३ ॥

[सूत्राणि। १. सम्पद्य २. मुक्तः प्र ३. आत्मा प्र)

इति सम्पद्याऽऽविर्भावाधिकरणम् ॥ १ ॥

—o—

(152) अविभागेन दृष्टत्वाधिकरणम् ॥ ४-४-२ ॥

[अधिकरणार्थः—मुक्तस्य मोक्षदशायां स्वानुभवः, स्वात्मभूतपरमात्माऽपृथग्भावेनेति निरूपणम् ]

## ५२७. अविभागेन दृष्टत्वात् ॥ ४-४-४ ॥ (सि)

[विचारोपयोगी विषयगर्भः संशयः]

किमयं परं ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा, स्वात्मानं परमात्मनः पृथग्भूतमनुभवति ? उत तत्प्रकारतया तदविभक्तम् ? इति विशये,

[पूर्वः पक्षः]

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै.उ.आन. 1-2)

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' (मुण्ड.उ. 3-1-3)

'इदं ज्ञान[1]मुपा[1]श्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' (भ.गी. 14-2)

[2]इत्यादि[2]श्रुति-स्मृतिभ्यां, मुक्तस्य परेण साहित्य-साम्य-साधर्म्यावगमात्, पृथग्भूतमनुभवति ॥

---

**किमिति** । अवान्तरसङ्गतिः स्पष्टा । मुक्तः, किम् आत्मानं परमात्मनः पृथग्भूतमनुभवति ? उत तत्प्रकारतया तदविभक्तम् ? । किं साहित्य-साधर्म्य-साम्यवचनानि, अविभागेनाऽनुभवे विरुध्यन्ते ? न ? इति । किं प्रकारभूतस्यैव साहित्यादिकमुपपन्नम् ? न ? इति ॥

न चेत् ! तद्वचनविरोधात्, पृथग्भावेनानुभवः । उपपन्नं चेत् ! तद्वचनाविरोधात् अविभागेनाऽनुभवः॥ यथावस्थितस्योपास्यत्वे, फलस्य यथोपासनभावित्वे च स्थितेऽपि, सहश्रुति-साम्यश्रुति-साधर्म्यस्मृतीनां बलात्, तत्क्रतुन्यायः अपोदितः इत्यभिप्रायेण पूर्वपक्षोत्थानम् ॥ '**सह ब्रह्मणे**'ति श्रुतेः भोक्तृसाहित्यपरत्वं, पूर्वपक्षिणो मतम् । '**साम्य-साधर्म्य**'शब्दौ न

---

[सूत्रार्थः । मुक्त आत्मा, **अविभागेन**—परब्रह्मस्वरूपापृथग्भावेन (स्वनिष्ठतां विना ब्रह्मनिष्ठस्वस्वरूपत्वेन) स्वात्मानमनुभवति, **दृष्टत्वात्**—तद्दशायां स्वस्वरूपस्य यथावस्थिततया ब्रह्मप्रकारत्ववेषेणैव साक्षात्कृतत्वात् ।]

'ब्रह्मणस्त्वविभागेन स्वात्मानं तु तदानघः । मुक्तोऽनुभवति स्पष्टमेतद्दास्यमिति श्रुतेः ॥' (ब्र.प. 527)

---

[1] मपा—अ.ग.ब.   [2] इति—द.

[सूत्रतः सिद्धान्तार्थः]

इति प्राप्ते, उच्यते—'अविभागेन'—इति । परस्माद् ब्रह्मणः स्वात्मानमविभागेनाऽनुभवति मुक्तः । कुतः? । दृष्टत्वात् । परब्रह्मोप[1]सम्पत्त्या[1] निवृत्ताविद्यातिरोधानस्य, याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि!—

'तत्त्वमसि' (छां.उ. 6-8-7)

'अयमात्मा ब्रह्म' (बृ.उ. 6-4-5) ।

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

'सर्वं खल्विदं ब्रह्म' (छां.उ. 3-14-1)

इत्यादिसामानाधिकरण्यनिर्देशैः,

'य आत्मनि तिष्ठन् आत्मनोऽन्तरः, यमात्मा न वेद, यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः' (बृ.उ.मा.पा. 5-7-22)

'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. 3-11-3)

इत्यादिभिश्च, परमात्मकम्, [2]तच्छरीर[2]तया [3]तत्प्रकार[3]भूतम्—इति प्रतिपादितम्;

'अवस्थितेरिति काशकृत्स्नः' (ब्र.सू. 1-4-22)

इत्यत्र । अतः अविभागेन—[4]अहं ब्रह्माऽस्मि[4] (बृ उ. 1-4-10) इत्येव, अनुभवति ॥

[साम्यादिशब्दतात्पर्यम्]

साम्य-साधर्म्यव्यपदेशः, ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति, देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्तु, एवंभूतस्य प्रत्यगात्मनः, प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः ॥

---

अर्थभेदविवक्षया प्रयुक्तौ; अपि तु उदाहृतश्रुति-स्मृतिवचनस्थत्वात् प्रयुक्तौ । साम्यस्य पारम्ये सति, प्रकारप्रकारिभावादिलक्षणवैषम्यं बद्धावस्थायामेवेति पूर्वपक्षिणोऽभिप्रायः ॥

य आत्मनीति, स्वरूपैक्यव्यावृत्त्यर्थम् । अहं ब्रह्मास्मीत्येवाऽनुभवतीति । अहमर्थस्य तत्पर्यन्तत्वेन, तद्बुद्धि-शब्दयोश्च तत्पर्यन्तत्वात्, तथात्वेनाऽनुभवतीत्यर्थः ।

न कश्चिद्विरोध इति । सहश्रुतेः भोग्यसाहित्यपरत्वात्, भोग्यसाहित्यस्य ब्रह्मपर्यन्तत्वेऽपि सम्भवात्, तत्पर्यन्तत्वेनाऽनुभवे न विरोधः इत्यर्थः ।

---

[1] सम्पद्य—घ द. न. [2] तत्तच्छरीर—थ. [3] तत्तत्प्रकारमिति—द. [4] ब्रह्मास्मि—त. थ.

ब्रह्मप्रकारतया तद्विभागोक्तेर्हि,

‘ सङ्कल्पादेव तच्छ्रुतेः ’ (ब्र.सू. 4–4–8)

इत्यादि न विरुध्यते ;

‘ अधिकं तु भेदनिर्देशात् ’ (ब्र सू. 2–1–22)

‘ अधिकोपदेशात् ’ (ब्र सू. 3-4-8)

इत्यादि च ॥ ४ ॥

इति अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

— o—

---

ब्रह्मप्रकारतयेति । उक्तप्रकार एव अविभागः ; न तु स्वरूपैक्यम् अविभागः ; तथा सति, पूर्वापरवैघट्यादित्याशयः ॥ ४ ॥

इति अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

—o—

(153) ब्राह्माधिकरणम् ॥ ४-४-३ ॥ (सू. 5-7)

[अधिकरणार्थः—मुक्तौ आत्मस्वरूपाविर्भावः, विज्ञानस्वरूपेण अपहतपाप्मत्वादिना चेति]

## ५२८. ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४-४-५ ॥ (पू.)

[अवान्तरसङ्गतिप्रदर्शनम्]

प्रत्यगात्मनः, परं ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य, स्वरूपाविर्भाव एव—इत्युक्तम् ।

विचारणीयो विषयः प्रकृतः संशयश्च]

तत्र येन [1]स्वरूपेण[1] अयमाविर्भवति, तत् स्वरूपं, श्रुतिवैविध्याद्विचार्यते—

किम् अपहतपाप्मत्वादिकमेव अस्य स्वरूपमिति, तेन रूपेण[2]अयमाविर्भवति[2] ? उत विज्ञानमात्रमेवेति, तेन रूपेण ? अथ उभयोरविरोध इति, उभय[3]स्वरूपेण[3] ?—इति ॥

---

प्रत्यगिति । प्रथमाधिकरणेन सङ्गतिरित्यर्थः 'अपहतपाप्मत्वादिकमेवे' त्येवकारेण स्वप्रकाशत्वस्य, मात्रशब्देन अंशतो जाड्यस्य, एवकारेण गुणाष्टकस्य च व्युदासः ॥ किं गुणाष्टकविशिष्टमेव अस्य स्वरूपम् ? उत विज्ञानमात्रमेव ? उत उभयं स्वरूपम् ? । किं गुणाष्टकवैशिष्ट्य-ज्ञानमात्रस्वरूपत्वविषयश्रुत्योः प्राबल्य-दौर्बल्यविभागो युज्यते ? न ? इति । तयोः किम् अविरोधः सम्भवति ? न ? इति । विज्ञानघन एवेत्यवधारणं, किं गुणान्तरं व्यावर्तयितुं शक्नोति : न ? इति । यदा व्यावर्तनक्षमं, तदानीमविरोधासंभवेन प्राबल्य-दौर्बल्य विभागाश्रयणस्य न्याय्यत्वात्, ऋषिद्वयपक्षापेक्षया अन्यतरस्वरूपत्वसिद्धिः । यदा न व्यावर्तन-क्षमं, तदा विरोधाभावेन, प्राबल्य-दौर्बल्यविभागाश्रयणस्यायुक्तत्वात्, उभयस्वरूपत्वम् ॥

---

[सूत्रार्थः । ब्राह्मेण—ब्रह्मसम्बन्धिना गुणाष्टकेन (मुक्तात्मा मोक्षदशायामाविर्भवति), उपन्यासादिभ्यः—जीवप्रकरणवति प्रजापतिवाक्ये—'य आत्माऽपहतपाप्मे'ति, 'स तत्र पर्येति जक्षत्', इति ब्राह्मगुणानामुपन्यासात्, तदायत्तप्रवृत्तीनां च कथनादिति जैमिनिर्मन्यते ॥]

---

[1] रूपेण—वा.आविर्भवति—द.  [2] अयमात्माविर्भवति—ध. अयमात्मानुभवति—पा.
[3] स्वरूपेणाऽपि—द.

[जैमिनेर्मतानुवादः]

किं तावत् प्राप्तम् ? । 'ब्राह्मेणे'ति जैमिनिराचार्यो मन्यते । ब्राह्मेण-अपहत-[1]पाप्मत्वादिने[1]त्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः ।

'ब्राह्मेणेति' कुतोऽवगम्यते ? । उपन्यासादिभ्यः—उपन्यस्यन्ते हि ब्रह्मगुणा अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये—

'य आत्माऽपहतपाप्मा' (छां.उ. 8-7-1) इत्यादिना,

'सत्यसङ्कल्पः' (छां.उ. 8-7-1) इत्यन्तेन ॥

आदिशब्देन, सत्यसङ्कल्पत्वादिगुणा[2]यत्ता जक्षणादयः[2],

'जक्षत्क्रीडन् रममाणः' (छां.उ. 8-12-3)

इत्यादि[3]वाक्यावगताः[3] व्यवहाराः गृह्यन्ते । अतः एभ्य उपन्यासादिभ्यः, प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न [4]सम्भवतीति,[4] जैमिनेर्मतम् ॥ ५ ॥

[औडुलोमिमतप्रदर्शनम्]

५२९. चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४-४-६ ॥ (पू)

[5]चैतन्यमात्र[5]मेव [6]अस्यात्मनः[6] स्वरूप[7]मिति[7], तेन[8]रूपेणा[8]विर्भवतीति, औडुलोमिराचार्यो मन्यते ॥

---

व्यवहाराः—प्रवृत्तयः । न सम्भवतीति । स्वरूपं जडम्; ज्ञानत्वे ज्ञानाद्याश्रयत्वायोगादिति भावः ॥ ५ ॥

तेनेति । सूत्रे भाष्ये च तृतीयान्तनिर्देशः औपचारिकः ।

---

[सूत्रार्थः । चितितन्मात्रेण—केवलं चैतन्यस्वरूपेण, (जीवो मुक्तावाविर्भवति) तदात्मकत्वात्—'विज्ञानघन एवे'ति श्रुत्युक्तचैतन्यैकस्वरूपत्वात्, इति औडुलोमिः—एवमाशयं औडुलोमिराचार्यः मन्यते ॥]

'ज्ञानतन्मात्ररूपेण मुक्त आविर्भवेदिह । तन्मात्रस्यैव ताद्रूप्यादौडुलोमिरितीच्छति' ॥ (ब्र.च. 529)

---

[1] पाप्मत्वादिगुणेने—द. [2] यत्ताः—त.
[3] वाक्यगत—वा. [4] सङ्गच्छन्तीति—द. सङ्गच्छत इति—त. थ.
[5] चैतन्य—त. थ. [6] अस्य—द.
[7] पत्वमिति—आ. [8] स्वरूपेणा—त. थ.

कुतः ? । तदात्मकत्वात्—तावन्मात्रात्मकत्वात् अस्य प्रत्यगात्मनः ।

[1]"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव ; एवं वा[1] अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ.उ. 6-15-13)

[2]'विज्ञानघन एव' (बृ.उ. 4-4-12)

इत्यवधारणात्[2], विज्ञानमात्रमेव अस्य स्वरूपमित्यवगम्यते । अतः अस्य गुणान्तराभावात्, [3]'अपहतपाप्मा' इत्यादयः[3] शब्दाः, विकार-सुख-दुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति, "[4]चितितन्मात्ररूपेणा[4]ऽऽविर्भावः'—इति औडुलोमेर्मतम् ॥ ६ ॥

[बादरायणस्य स्वस्य मतेन सिद्धान्तः]

सम्प्रति भगवान् बादरायणः, स्वमतेन सिद्धान्तमाह—

## ५३०. एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ४-४-७ ॥ (सि)

एवमपि—विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां-गुणानामविरोधं, अबाधं—बादरायण आचार्यो मन्यते ।

---

दुःखादिति आदिशब्दात् उपेक्षाग्रहणम् । विजर इत्यादिपदानि निर्विकारपराणि । विशोकः— निर्दुःखः । सत्यकामपदं कादाचित्कसुखराहित्यपरम् ; न तु नित्यसुखत्वपरम् । सत्यम्—अकादाचित्कं सुखमस्येति । सत्यसङ्कल्पः—उपेक्षारहितः । न हि उपेक्षकः सत्यसङ्कल्पः । मोघेन सङ्कल्पेन रहितः इति वा पूर्वपक्षार्थः ॥ ६ ॥

एवमपीत्यादि । 'विज्ञानघन एवे'त्यादिवाक्यस्य विज्ञानमात्रप्रतिपादनपरत्वापातप्रतीतिमभ्युपगम्याऽयं परिहारः इति ॥

---

[सूत्रार्थः । एवमपि—विज्ञानघनत्वे सत्यपि, उपन्यासात्—'य आत्माऽपहतपाप्मे'-त्युपन्यासात्, पूर्वभावात्—पूर्वोक्तरूपाणामपहतपाप्मत्वादीनां जीवे सत्त्वनिश्चयात्, अविरोधम्—द्विविधयोरपि गुणयोरवैयधिकरण्यम्, बादरायणः—अयमाचार्योऽभिप्रैति ॥]

'स्वप्रकाशस्य पूर्वोक्तगुणानामपि कीर्तनात् । भावाद्विरोधो ह्यनयोर्नेत्येवं बादरायणः' ॥ (ब्र.प. 530)

---

[1] एवं वा—द.    [2] इत्यवधारणात्—थ.

[3] अपहतपाप्मत्वादयः—द.    [4] चितितन्मात्रेण—द. तन्मात्ररूपेण—थ.

कुतः ? । उपन्यासात् पूर्वभावात् । औपनिषदात्,

'य आत्माऽपहतपाप्मा' (छां.उ. 8-7-1)

इत्याद्युपन्यासात् प्रमाणात्, पूर्वेषाम् अपहतपाप्मत्व-[1]सत्यकाम[1]त्वादीनामपि भावात्—विद्यमानत्वात्, तुल्यप्रमाणकानाम् इतरेतरबाधो न युज्यते इत्यर्थः ॥

[उक्तार्थे वस्तुविरोधपरिहारः]

न च—वस्तुविरोधात् अपहतपाप्मत्वादीनाम् अविद्यापरिकल्पितत्वं [2]न्याय्यम्; विशेषाभावात् विपरीतं कस्मान्न भवतीति न्यायात् । तुल्यबलत्वे हि! अशक्यस्याऽवधारणस्य अन्यपरत्वमेव न्याय्यम्[2] ॥

[विज्ञानघन एवेत्यस्य तात्पर्यान्तरम्]

'एवमप्यविरोधः' इति अभ्युपगम्य वदन्, 'ज्ञानमात्रमेव अस्य स्वरूपं, नाऽन्यत् किंचिदस्ति' इत्ययमर्थः,

'विज्ञानघन एव' (बृ.उ. 4-4-12)

इत्यादिभिर्न प्रतिपाद्यते—इति मन्यते ।

---

**तुल्यप्रमाणकानामिति** । एवकारः कस्यचिद्वाक्यस्य शेषभूततया न स्वतन्त्रार्थप्रतिपादकः; अवधारणीयसापेक्षत्वादवधारणस्य । अतः शेषभूतैवकारस्वारस्याय न शेषिभूतपदजातभङ्गः कार्यः; अपि तु शेषिणमभङ्क्त्वा शेषभूतभङ्ग एव कार्यः । तस्मात् एवकारस्वारस्यार्थं वाक्यान्तरगता गुणाः न भंजनीया इति विज्ञानरूपत्वम् अपहतपाप्मत्वादिकं च तुल्यप्रमाणकत्वात्, एवकारभङ्गेनाऽपि स्वीकर्तव्यमित्यर्थः ॥

**वस्तुविरोधः**—ज्ञानस्य ज्ञानान्तराश्रयत्वासम्भवः । सः व्याप्त्या चेदभिधीयते; ज्ञानं कस्यचिद्गुणभूतं दृष्टमिति, ब्रह्म च तथा स्यात् । श्रुतिप्रतिपन्नत्वात् ब्रह्म न गुणभूतमिति चेत्! श्रुतिबलात् गुणाश्रयत्वमप्यङ्गीक्रियताम् । 'ज्ञानं न ज्ञानान्तराश्रयः' इत्येतत्, गुणभूतज्ञानत्वप्रयुक्तम् । आत्मनस्तु गुणभूतज्ञानत्वाभावात्, ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वे व्याप्तिविरोधोऽपि नाऽस्तीत्यनुसन्धेयम् ॥ **विशेषाभावादिति** । उभयमपि श्रुतिसिद्धत्वाविशेषात् नाऽन्योन्यबाधकम् । बाधकं चेत्! विपर्ययेण स्यादित्यर्थः । **अशक्यस्य**—गुणान्तरबाधेन निर्वोढुमशक्यस्य । **अन्यपरत्वम्**—अविरुद्धार्थान्तरपरत्वम् ।

**एवमपीत्यादि**, अभ्युपगम्य वदतस्तात्पर्यम् । **मन्यत इति** । अपहतपाप्मत्वादि-

[1] सत्यकामसत्यसङ्कल्प—घ. ङ. सत्यसङ्कल्प—न. [2] न्याय्यम्—द.

कस्तर्हि 'विज्ञानघन एवे'[1]त्यवधारण[1]स्यार्थः ?

कृत्स्नोऽप्यात्मा, जडव्यावृत्तस्वप्रकाशः ; न अन्यायत्त[2]प्रकाशः[2] स्वल्पोऽपि [3]प्रदेशोऽस्ति[3]—इति । अयमर्थो वाक्यादेव सुव्यक्तः ।

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव ; एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः [4]प्रज्ञानघन एव[4]' (बृ.उ. 6-5-13)

इति ।

[अविरोधस्य विशदीकरणम्]

न चैवं, प्रत्यगात्मनो धर्मि[5]स्वरूपस्य कृत्स्नस्य[5] विज्ञानघनत्वेऽपि, अपहतपाप्मत्व-सत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो विरुध्यते । यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रि[6]यावगते,[6] चक्षुराद्यवगताः रूप-काठिन्यादयः न विरुध्यन्ते ।

इदमत्र वाक्यतात्पर्यम्—यथा रसवत्सु आम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि, सैन्धवघनस्य सर्वत्रैकरसत्वम् ; तथा आत्मनोऽपि, सर्वत्र विज्ञानस्वरूपत्वम्—स्वप्रकाश[7]रूपत्व[7]मित्यर्थः ॥ ७ ॥

इति ब्राह्माधिकरणम् ॥ ३ ॥

—o—

विरुद्धार्थप्रतीत्यभावं मन्यत इत्यर्थः । [अत्रैवकारस्य विशेषणसंगतत्वात्, ज्ञानस्वरूपत्वायोगव्यवच्छेद एवाऽर्थः । (भा.द.)]

कस्तर्हीति चोद्यम्, उपपादनाय ।

स यथेति, [उक्तस्य] वाक्यादेव सुव्यक्तत्वस्य, वाक्यैकदेशभूतदृष्टान्तवाक्येनोपपादनम् ।

यथेति, अविरोधस्य दृष्टान्तवाक्यावगम्यतोपपादनम् ।

इदमत्रेति, दृष्टान्तवाक्यावगतावधारणार्थस्य, तत्रोपजीव्यांशस्य च स्पष्टीकरणम् । प्रदेशभेदे जडत्वं व्यावर्त्यमित्यर्थः ।

[स्वप्रकाशरूपत्वमित्यर्थ इति । नन्वेवं सति, निरवयवस्यात्मनः अणोः प्रदेश-

---

[1] स्यावधारण—द. [2] स्वप्रकाशः—त. [3] अस्ति—द.
[4] प्रतिज्ञान एव—अ. [5] स्वरूपस्य—थ. [6] यावगतिः—त.थ.
[7] स्वरूपत्व—पा.

भेदाभावात् , एकदेशजडत्वशङ्काप्रसक्त्यभावात्, किमर्थमिदं वाक्यम् — इति चेत् ! औडुलोमिना अद्वैतिना, मुक्तानां जीवानां चिन्मात्रात्मभाववादिना, तद्विभुत्वस्येष्टत्वात् , प्रदेशभेदेन जडप्रपञ्चपरिणामार्हत्वदिना जडत्वसम्भवानायां, तन्निरासार्थम् एवमर्थः, औडुलोमिनैव सुस्वीकर इति सूत्रकाराशय इति भाष्यतात्पर्यम् (भा.द.) ॥] ॥ ७ ॥

[ सूत्राणि—१. ब्राह्मेण, २. चितितन्मा, ३. एवमप्युप ]

इति ब्राह्माधिकरणम् ॥ ४ ॥

—o—

(154) सङ्कल्पाधिकरणम् ॥ ४-४-४ ॥ (सू.8-9)

[अधिकरणार्थः—मुक्तात्मनोऽपि ज्ञात्यादिरूपेष्टार्थसम्पत्तिः सङ्कल्पमात्रादेव ; न प्रयत्नान्तरात् ]

## ५३१. सङ्कल्पादेव तच्छ्रुतेः ॥ ४-४-८ ॥ (सि)

[अवान्तरसङ्गतिः-विचारणीयो विषयश्च]

मुक्तः परं ब्रह्मोपसम्पद्य, 'ज्ञानस्वरूपः[1] अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्त-गुणकः आविर्भवति — इत्युक्तम् । तमधिकृत्य, [2]तस्य सत्य[2]सङ्कल्पत्वप्रयुक्ताः [3]व्यवहाराश्च[3]श्रूयन्ते—

'स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा'
(छां.उ. 8-12-3)

इति ॥

[विचारोपयोगी संशयः]

किम् अस्य ज्ञात्यादिप्राप्तिः—प्रयत्नान्तरसापेक्षा ? उत परमपुरुष[4]स्येव[4] सङ्कल्पमात्रादेव भवति ?—इति विशये ;

---

'विज्ञानघन एव' इतिवत् 'सङ्कल्पादेवे'त्यवधारणस्य सङ्कोचशङ्कया च सङ्गतिरभिप्रेता । प्रयत्नान्तरेति । 'प्रयत्न'शब्दः, सङ्कल्पव्यतिरिक्तव्यापारपरः । सत्यसङ्कल्पत्वं, किं प्रयत्नान्तर-सापेक्षम् ? उत न ?—इति । विशयः इत्यर्थः । मुक्तस्य किं ज्ञात्यादिप्राप्तिः, प्रयत्नान्तर-सापेक्षा ? उत सङ्कल्पमात्रमूला ? । किम् अस्य सत्यसङ्कल्पत्वं. राजादीनामिव भवति ? उत परमपुरुषस्येव ? । किं 'सङ्कल्पादेवे'त्यवधारणं, राजादितुल्यतां निवर्तयितुं प्रभवति ? न ?—इति । किम् ईश्वरसङ्कल्पवत् मुक्तात्मसङ्कल्पस्य, अमोघत्वं संभवति ? न ?—इति । किम् अस्य जक्षणादयो व्यापाराः, पुण्यपापरूपतया बन्धका भवन्ति ? न ?—इति ॥

---

[सूत्रार्थः । सङ्कल्पादेव—मुक्तानामिष्टसम्पत्तिः सङ्कल्पमात्रादेव भवति, तच्छ्रुतेः—'सङ्कल्पादेवाऽस्य' इति तस्यैवाऽर्थस्य श्रुत्याऽवगतेः ॥ ]

'ज्ञात्यादिप्राप्तयः सर्वाः सङ्कल्पादेव सन्ति हि । सङ्कल्पादेव पितर इत्यादिश्रुतिराह हि ॥' (प्र.प. 531)

---

[1] स्वेन रूपेण — द.
[2] सत्य — च.
[3] व्यवहाराः—पा.
[4] स्यैव — थ.द.

[युक्तितः पूर्वः पक्षः]

लोके, राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां, कार्यनिष्पापादने प्रयत्नान्तर-सापेक्षत्वदर्शनात् , अस्याऽपि तत्सापेक्षा ।।

[सूत्रतः सिद्धान्तः]

इति प्राप्ते, उच्यते— सङ्कल्पादेव—इति ।

कुतः ? । तच्छ्रुतेः ।

'स यदि पितृलोककामो भवति, सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति'

(छां.उ. 8-2-1)

इति हि ! सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तर'सापेक्षत्वा[1]-भिधायि श्रुत्यन्तरं दृश्यते । येनाऽस्य 'सङ्कल्पादेवे'त्यवधारणस्य, 'विज्ञानघन एवे'ति-वत् व्यवस्थापनं क्रियते ॥ ८ ॥

[मुक्तस्याकर्मवश्यतायाः अनेनैव सिद्धिः]

## ५३२. अत एव चाऽनन्याधिपतिः ॥ ४–४–९ ॥ (सि)

यतो मुक्तः सत्यसङ्कल्पः, अत एव अनन्याधि[2]पतिश्च[2] । अन्याधिपतित्वं हि

---

बन्धकाश्चेत् !, तत्सङ्कल्पस्य कर्माधीनप्रतिघातसम्भवेन, ईश्वरवत् तत्सङ्कल्पस्य अमोघत्वा-भावेन, अवधारणस्य राजादितुल्यतानिवर्तनाक्षमत्वात् , मुक्तस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तर-सापेक्षा स्यात् । यदा बन्धका न भवन्ति !, तदा मुक्तात्मनः सङ्कल्पस्य कर्माधीनप्रतिघाता-सम्भवेन, ईश्वरवत् अमोघसङ्कल्पत्वसम्भवेन, अवधारणस्य राजतुल्यत्वनिवर्तनक्षमत्वात् , मुक्तस्य ज्ञात्यादिप्राप्तिः सङ्कल्पमात्रमूला स्यात् ।। तत्सापेक्षेति । प्रयत्नान्तरसापेक्षेत्यर्थः । 'सङ्कल्पादेवे'त्येवकारस्तु, 'विज्ञानघन एवे'तिवत् अयोगव्यवच्छेदपरः ; न तु अन्ययोगव्यवच्छेद-परः इत्यभिप्रायः ।।

'विज्ञानघन एवेतिव'दित्यनेन, सङ्गतिविशेषोऽभिप्रेतः ॥ ८ ॥

अत एव चेति । सत्यसङ्कल्पत्वोपपादकमिदं सूत्रम् । जक्षणादिव्यापाराणां पुण्य-पाप-

---

[सूत्रार्थः । अत एव—ईश्वरवत् सत्यसङ्कल्पत्वादेव हेतोः, अनन्याधिपतिश्च—भगवदन्यानधिपतिकत्वरूपाकर्मवश्यत्ववानपि मुक्तात्मा ॥]

सत्यसङ्कल्पतावत्त्वान्मुक्तस्य परमात्मितः । निषेध-विधिवश्यत्वं न च तस्य तु विद्यते ॥ (ब्र.प. 532)

---

[1] सव्यपेक्षत्वा—अ. वा. [2] पतिः—थ.

विधि-निषेधयोग्यत्वम्। विधि-निषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत्। अतः सत्यसङ्कल्पत्वश्रुत्यैव अनन्याधि[1]पतित्वं[1] सिद्धम्। अत एव,

'स स्वराड् भवति' (छां.उ. 7-25-2)

[2]इत्युच्यते[2] ॥ ९ ॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

—o—

---

रूपत्वेन सत्यसंकल्पप्रतिघातसंभवात्। मोघसङ्कल्पत्वशङ्काव्युदासेन अवधारणस्य सङ्कोच-निरासकं हि इदं सूत्रम्।

**विधि-निषेधे**त्यादिना, अनन्याधिपतित्व-सत्यसङ्कल्पत्वयोः उपपाद्योपपादकभावं व्यतिरेकेण दर्शयति। **सत्यसङ्कल्पत्वश्रुत्यैवे**ति। सङ्कल्पादेवेत्यवधारणासङ्कोचः स्वतः प्राप्तः। मुक्तस्य जक्षणादिव्यापाराणां पुण्य-पापरूपत्वमश्रुतम्। न च तत् कल्प्यम्; स्वर्गिणां कर्मफल-भूतेषु तिरश्चां व्यापारेषु च व्यभिचारात्। अतः सङ्कोचकाभावात्, असङ्कुचितेनाऽवधारणेन सत्यसङ्कल्पत्वं सिद्धमिति, तयैव श्रुत्या विधि-निषेधागोचरत्वं ज्ञापितमित्यर्थः॥

**अत एवे**ति। उक्ततर्कानुगृहीतं श्रुत्यन्तरं च विधि-निषेधायोग्यत्वे प्रमाणमित्यर्थः। अनेन सूत्रस्थः 'च'शब्दो व्याख्यातो भवति। एवम् अनेन सूत्रेण, मुक्तानाम् ईश्वरवत् ब्राह्मगुणान्वयः प्रतिष्ठापितो भवति। अपहतपाप्मत्वं नाम न पापप्रध्वंसवैशिष्ट्यम्; अपि तु पुण्य-पापसजातीयेषु सत्स्वपि तत्फलसम्बन्धानर्हत्वमिति, अत्रैव स्पष्टं दर्शितम्। अनन्याधि-पतिरित्यस्याऽयमभिप्रायः—स्वाभाविकशेषिणः परमपुरुषादन्यः न मुक्तस्याधिपतिः—इति। अन्यथा हि अनधिपतिः इत्येतावताऽलम्। अतः 'अन्य'शब्दस्य उक्त एवाऽर्थ इति सम्प्रदायः ॥ ९ ॥

[सूत्रे—१. सङ्कल्पादेव　२. अत एव]

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

—o—

---

[1] पतित्वं च—पा.　[2] इत्युक्तम्—पा.

## (155) अभावाधिकरणम् ॥ ४-४-५ ॥ (सू. 10-16)

[अधिकरणार्थः—मुक्तस्यात्मनः सशरीरत्वाशरीरत्वयोर्द्वयोरपि न्याय्यतास्थापनम् ]

## ५३३. अभावं बादरिराह ह्येवम् ॥ ४-४-१० ॥ (पू.)

[विचारार्थः संशयः]

किं मुक्तस्य देहेन्द्रियाणि[1] न सन्ति[1]? उत सन्ति? अथवा यथासङ्कल्पं सन्ति च?—इति विशये;

---

**यथासङ्कल्पमिति।** अनेन सङ्गतिर्दर्शिता। किं मुक्तस्य देहेन्द्रियाणि न सन्ति? उत यथासङ्कल्पं सन्ति च?—इति। तदर्थं, 'स एकधा भवती'त्यादिश्रुतिः अशरीरत्वश्रुतिं सङ्कोचयितुं शक्नोति? न? इति। किं 'स एकधे'ति मुक्तस्य सशरीरत्वं प्रतिपादयितुं प्रभवति? उत न? इति। प्रतिपादनेऽपि, किं सशरीरत्वमात्रं? उत तस्य ऐच्छत्वमपि? तदर्थं एकधाभवन-त्रिधाभवनादिकं, मुक्तस्य शरीरेण विना संभवति? उत न?। असम्भवे च, मुक्तस्य ब्रह्मानुभवैकभोगस्य तद्व्यतिरिक्तदेहसर्गादौ इच्छादिकं सम्भवति? न? इति। अणोर्जीवस्य अनेकशरीरपरिग्रहः संभवति? न? इति॥

यदा शरीरपरिग्रहो न सम्भवति, यदा च शरीरेण विनाऽपि त्रिधाभवनादिकमुपपद्यते; तदा 'स एकधे'त्यादिवाक्यस्य अशरीरत्वश्रुतिसङ्कोचनासामर्थ्यात्, मुक्तः अशरीर एव स्यात्॥ यदा अणोरपि अनेकशरीरयोगः संभवति, यदा च शरीरेण विना त्रिधाभवनादिकमनुपपन्नम्; ब्रह्मानुभवैकभोगस्य देहसर्गादीच्छा च न स्यात्; तदा शरीरस्य अवश्यापेक्षितत्वात्, इच्छाधीनान्वयव्यतिरेकत्वाभावाच्च, तत्प्रतिपादकवाक्येन अशरीरत्वश्रुतिसङ्कोचे सति, मुक्तः सशरीर एव स्यात्॥ यदा अनेकशरीरपरिग्रहोपपत्तिः, अनेकधाभवनं च शरीरसापेक्षम्, ब्रह्मानुभवैकभोगस्य देहसर्गादाविच्छा च संभवति, तदानीम् ऐच्छशरीरप्रतिपादनक्षमेण, 'स एकधे' त्यादिवाक्येन अशरीरत्वश्रुतेः सङ्कोचे सति, मुक्तौ यथेच्छं सशरीरोऽशरीरश्च स्यात्—इति॥

---

[सूत्रार्थः। **अभावम्**—मुक्तात्मनः देहादेरभावम्, **बादरिः**—तन्नामा आचार्यो मन्यते, **एवं हि**—अशरीरत्वं हि, **आह**—श्रुतिर्ब्रवीति॥]

'अशरीरं वाव सन्तमिति मुक्तस्य तत्र तु। अभावं च शरीरादेर्बादरिर्मनुते मुनिः॥' (ब्र.प. 533)

---

[1] सन्ति न सन्ति—त. थ.

[तत्र बादरेर्मतम्, सप्रमाणम्]

शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते।

कुतः? ।—आह ह्येवम्'—।

'न ह वै सशरीरस्य सतः, प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं, न प्रियाप्रिये स्पृशतः' (छां.उ. 8-2-1)

इति, शरीरसम्बन्धे [1]दुःखस्या[1]वर्जनीयत्वमभिधाय,

'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छां.उ. 8-12-2)

इति, मुक्तस्य अशरीरत्वं हि! आह श्रुतिः ॥ १० ॥

[मुक्तात्मविषये जैमिनिमतम्]

## ५३५. भावं जैमिनिर्विकल्पामननात् ॥ ४-३-१४ ॥ (पू)

मुक्तस्य शरीरेन्द्रि[2]य भावं[2] जैमिनिराचार्यो मन्यते।

कुतः? ।—'विकल्पामननात्'—। विविधः कल्पो विकल्पः, वैविध्यमित्यर्थः।

'स एकधा भवति त्रिधा भवति [3]पञ्चधा[3]। सप्तधा' (छां.उ. 7-26-2)

इत्यादिश्रुतेः। आत्मन [4]एकस्य अच्छेद्यस्य[4] अनेकधाभावासंभवात्, 'त्रिधाभावादयः

---

शरीरेति। अभावप्रतिसम्बन्धि किमित्यपेक्षायाम् 'तन्वभावे' इति सूत्रस्थतनुशब्देन प्रतियोगिविशेषावगमः इति भावः। **शरीरसम्बन्ध इति**। शरीरत्वप्रयुक्तं दुःखहेतुत्वमिति भावः। एवम् अशरीर एवेत्येकः पक्षः ॥ १० ॥

**आत्मन एकस्येति**। आत्मनि स्वरूपभेदासंभवात्, (द्विधाभवनादिकं) शरीरद्वारक-

---

[सूत्रार्थः। भावम्—मुक्तस्य देहादिसद्भावम्, **जैमिनिः**—जैमिनिर्मनुते **विकल्पामननात्**—वैविध्यस्य श्रुतितः सिद्धेः ॥]

'एकधाभवतीत्यादिश्रुत्या मुक्तस्य तत्र च। शरीरेन्द्रियसद्भावं जैमिनिर्मनुते मुनिः ॥' (ब्र.प. 534)

---

[1] सुखदुःखस्या—वा.    [2] यादिभावं—वा.

[3] पञ्चधा भवति—पा.    [4] एकस्य—च.त.

शरीरनिबन्धनाः' इत्यवगम्यते । अशरीरत्ववचनं तु, कर्मनिमित्तशरीराभावपरम् । तदेव हि शरीरं [1]'प्रियाप्रिय' हेतुः ॥ ११ ॥

[बादरायणाशयः सिद्धान्तरूपः]

[2]भगवांस्तु[2] बादरायणः, स्वमतेन सिद्धान्तमाह—

## ५३५. द्वादशाहवदुभयविधं बादरायणोऽतः ॥४-४-१२॥ (सि)

'संकल्पादेव' इत्येतत्, 'अतः'शब्देन परामृश्यते। [3]अतः—एवं[3] सङ्कल्पात्, उभयविधम्—सशरीरम् अशरीरं च मुक्तं; भगवान् बादरायणो मन्यते। एवं च [4]'उभयी'[4] श्रुतिरुपपद्यते। द्वादशाहवत्—यथा,

'द्वादशाहमृद्धिकामा उपेयुः' (पू.मी. 8-2-5, 10-6-16)

'द्वादशाहेन प्रजाकामं याजयेत्' (पू.मी. 8-2-5, 10-6-16)

इति उपैति-यजतिचोदनाभ्यां, सङ्कल्पभेदेन सत्रम् अहीनं च भवति ॥ १२ ॥

---

मित्यर्थः। तदेव हीति। प्रियाप्रियहेतुतया शरीरस्य निषेधात्, प्रियाप्रिययोश्च कर्मफलत्वात्, कर्मकृतशरीरविषयो निषेधः इत्यर्थः॥ अतः शरीरत्वश्रुतेर्निवारकाभावात्, कादाचित्क-हेत्वन्तरानुक्तेश्च, सर्वदा सशरीरत्वं फलितमिति सूत्राभिप्रायः ॥ ११ ॥

**संकल्पादेवेति**। त्रिधाभवनादेः हेत्वाकांक्षायां, सत्यसङ्कल्पत्वश्रुतिरेव पूरयति; व्यापारान्तरेष्वपि तस्यैव हेतुत्वश्रवणेन औचित्यादिति भावः। **उभयीत्यादि**। सत्यसङ्कल्पादि-वाक्यानुगृहीतया सशरीरत्वश्रुत्या यथेच्छशरीरत्वे चाऽभ्युपगते सति, अशरीरत्वश्रुतिरप्यर्थवती, सशरीरत्वश्रुतिरप्यबाधिता स्यात् इति भाष्यार्थः। **सङ्कल्पभेदेन**—सत्रत्वे अहीनत्वे च प्रामाणिके सति, तत्तत्प्रयोगविशेषेषु सङ्कल्पभेदो नियामकः इत्यर्थः। बहुयजमानसङ्कल्पात्, सत्रम्; एकस्य सङ्कल्पात्, अहीनम्॥ [इति, एकस्यैव क्रतोः द्वैविध्यं यथा अबाधितं, तद्वत् मुक्तस्यापीति] ॥ १२ ॥

---

[सूत्रार्थः। **द्वादशाहवत्**—द्वादशाहाख्यक्रतोः अहीनत्व-सत्रत्वद्वैविध्यवत् **अतः**—संकल्पभेदेन, **उभयविधं**—मुक्तमपि शरीरिणमशरीरिणं च, **बादरायणः**—बादरायणनामा आचार्यो मन्यते॥

'अशरीरं च मुक्तं तु सशरीरं च मन्यते। बादरायण आचार्यो द्विविधं द्वादशाहवत्॥' (ब्र.प. 535)

---

[1] अप्रिय—त.थ. [2] भगवान्—त.थ. [3] अत एव—आ.ड. [4] उभय—च.

[मुक्तौ जीवस्य भगवत्सृष्टोपकरणैरपि भोगसिद्धिः]

'यदा शरीराद्युपकरणवत्त्वम्, तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियमः' इत्याह—

## ५३६. तन्वभावे [1]सन्ध्यव[1]दुपपत्तेः ॥ ४-४-१३ ॥ (सि)

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे, परमपुरुषसृष्टैरुपकरणैः भोगोपपत्तेः, सत्य-सङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने,

'अथ रथान् रथयोगान् पथः सृजते' (बृ.उ. 6-3-10)

इत्यारभ्य,

'अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते ; स हि कर्ता' (बृ.उ. 6-3-10)

इति,

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥' (कठ.उ. 5-8)

[2]इति च[2] ईश्वरसृष्टैः रथाद्युपकरणैः जीवो भुंक्ते ; तथा, मुक्तोऽपि [3]लीला[3]प्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिः लीलारसं भुङ्क्ते ॥ १३ ॥

[मुक्तौ जीवस्य स्वसृष्टैरप्युपकरणैर्भोगसम्पत्तिः]

## ५३७. भावे जाग्रद्वत् ॥ ४-४-१४ ॥ (सि)

---

परमपुरुषसृष्टैः—अद्वारकसृष्टैरित्यर्थः । भोगोपपत्तेरिति । देहादिसृष्टेः ब्रह्मानुभवानन्तर्गतत्वे, तत एव तदिच्छाद्यसम्भवे, अभ्युपगम्यमानेऽपि, एकधाभवनादिश्रवणबलात् तदनुगुणप्रकारपरिकल्पनेन निर्वाहो न्याय्य इति भावः ॥ १३ ॥

---

सूत्रार्थः । तन्वभावे—मुक्तस्य स्वसृष्टदेहाद्यभावे, सन्ध्यवत्—स्वप्ने इव, उपपत्तेः—परमपुरुषसृष्टैर्देहादिभिरेव भोगोपपत्तेः । ]

'स्वेन सृष्टशरीरादिकरणाभाववान् यदा । तदा स्वप्न इव ब्रह्मसृष्टैः करणवान् भवेत् ॥' (ब्र.प. 536)

[सूत्रार्थः । भावे—मुक्तस्य स्वसङ्कल्पसृष्टदेहादिसद्भावे, जाग्रद्वत्—जाग्रद्दशः पुरुष इव मुक्तः लीलारसमनुभवति । ]

'स्वेनैव सृष्टदेहादिभावे जाग्रत एव हि । पुरुषस्य यथा भोगो मुक्तस्याऽपि तथा भवेत् ॥' (ब्र.प. 537)

---

[1] सन्धिवद्—त.　[2] इति—पा.　[3] लीलया—त. थ.

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे, जाग्रत्पुरुष(भोग)वत् मुक्तोऽपि लीलारसं भुङ्क्ते। परमपुरुषोऽपि लीलार्थं, दशरथ-वसुदेवादिपितृलोकादिकम् आत्मनः सृष्ट्वा, तैः [1]मनुष्य[1]धर्मलीलारसं [2]यथा भुङ्क्ते[2]; तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्। कदाचिच्च, मुक्ताः सत्यसङ्कल्पात्, परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

[अणोरप्यात्मनः अनेकशरीराभिमानोपपादनम् ]

ननु—'आत्मा अणुपरिमाणः इत्युक्तम्। कथमनेकशरीरेषु एकस्याणोरात्माभिमानसम्भवः? इत्यत्राह—

## ५३८. प्रदीपवदावेशस्तथाहि दर्शयति ॥ ४–४–१५ ॥ (पू)

यथा प्रदीपस्यैकस्य एकस्मिन् देशे वर्तमानस्य, स्वप्रभया देशान्तरावेशः; तथा आत्मनोऽपि [3]एकदेह[3]स्थितस्यैव, स्वप्रभारूपेण चैतन्येन सर्व[4]शरीरावेशः[4],

---

परमपुरुषोऽपीति। पितृलोकादिसृष्टेः भगवल्लीलान्तर्गतत्वे निदर्शनं दशरथादिसृष्टिः। तदन्तर्गतत्वादेव पित्रादिसृष्टावपि मुक्तस्य न ब्रह्मानुभवादन्यपरत्वम्। ब्रह्मसम्बन्धिलीलाविशेषस्याऽनुकूलत्वं ब्रह्मणः प्रियतमत्वातिशयनिबन्धनम्। अत एव न ब्रह्मणः प्राप्यत्ववैगुण्यम्। मुक्तात्मनां पित्रादीच्छायाः अकर्मकृतत्वं भगवतो वसुदेवादिपितृत्वकल्पनेच्छाया इव उपपन्नमित्यर्थः ॥ १४ ॥

प्रदीपवदिति। अत्र वक्तव्यं सर्वं, 'गुणाद्वाऽऽलोकवत्' इत्यत्र अपेक्षितत्वादुक्तम्। स्वरूपस्य एकदेशस्थत्वेऽपि धर्मस्य प्रदेशान्तरे कार्यकरत्वमात्रं दृष्टान्तोपजीव्यम्।

---

[सूत्रार्थः। प्रदीपवत्—गृहाद्येकदेशवर्तिनो दीपस्य स्वीयप्रभया अनेकदेशव्याप्तिरिव, आवेशः—एकदेशवर्तिन आत्मनः प्रभारूपेण ज्ञानेन नानादेहसम्बन्धः उपपन्नः, तथाहि दर्शयति—वालाग्रश्रुतिः तमेव प्रकारं स्फुटं वदति ॥]

'दीपस्यैकस्थलस्थस्य प्रभयाऽन्यत्र वर्तनम्। यथा तथैव जीवस्य ज्ञानादेहान्तरेष्वपि ॥' (ब्र.प. 538)

---

[1] मानुष—द.    [2] भुङ्क्ते—थ.

[3] एकदेश—वा.    [4] शरीरानुप्रवेशः—द.

नाऽनुपपन्नः। यथा च एकस्मिन्नपि देहे हृदयाग्रैक[1]प्रदेश[1]वर्तिनोऽपि, चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः ; तद्वत्।

इयान् विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य, [2]देहा[2]न्तरेष्वात्माभिमानानुगुणा व्याप्तिः [3]न संभ[3]वति ; मुक्तस्य तु असङ्कुचितज्ञानस्य, यथासङ्कल्पम् आत्माभिमानानुगुणा व्याप्तिः, 'इद'मितिग्रहणानुगुणा च नाऽनुपपन्ना।—तथा हि दर्शयति—

'वालाग्रशतभागस्य शतधा कल्पितस्य च
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥' (श्वे.उ. 5–9)

इति। अमुक्तस्य कर्म नियामकम् ; मुक्तस्य तु स्वेच्छेति विशेषः ॥१५॥

[ब्रह्म प्राप्तवतो ज्ञानाभावश्रुतिः, सुषुप्त्यादिदशाविषयिणी]

ननु—परं ब्रह्म प्राप्तस्य आन्तर-बाह्यज्ञानलोपं दर्शयति श्रुतिः—

'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरम्'
(बृ.उ. 6-3-21)

इति। तत् कथं मुक्तस्य सार्वज्ञ्यमुच्यते ? ; तत्रोत्तरम्—

## ५३९. स्वाप्यय-सम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४-४-१६ ॥(सि)

---

**आत्माभिमानानुगुणेति**। प्रवर्तकत्वशक्तिविशिष्टेत्यर्थः। आत्माभिमानो हि शरीरत्वाभिमानः। तदेकप्रवर्त्यं हि शरीरम्। तत्प्रेरकत्वं शरीरित्वमिति। **इदमितिग्रहणानुगुणेति** प्रकाशकशक्तिरुक्ता। **तथा हीति**। स्वरूपाणुत्वे, ज्ञानेनाऽनेकशरीरित्वोपपत्तौ च श्रुतिरस्तीत्यर्थः। **अमुक्तस्येति**। अमुक्तेष्वपि सौभर्यादिषु अनेकशरीरपरिग्रहो दृश्यते। मुक्तस्य को भेदः ? | अनेकशरीरपरिग्रहक्षमश्चेत्! पूर्वावस्थायामपि करोतु—इत्यत्रोत्तरमिदम् ॥ १५ ॥

---

[सूत्रार्थः। 'प्राज्ञेन....नान्तरम्' इत्यादि ज्ञानाभावश्रवणम्, **स्वाप्यय-सम्पत्त्योः**—सुषुप्ति-मरणदशयोर्मध्ये, **अन्यतरापेक्षम्**—अन्यतरामवस्थामुद्दिश्य प्रवृत्तम् ; न मोक्षदशाम्, **हि**—यतः, **आविष्कृतम्**— नाह खल्वयम्' इति वाक्येनैतदेव स्पष्टीकृतम् ॥

'प्राज्ञेनेत्यादिवचनं सुषुप्तौ मरणे तथा। अज्ञान-मोहौ वदति श्रुत्या ह्याविष्कृतं तथा॥' (ब्र.प. 539)

---

[1] देश—द.  [2] न देहा—द.  [3] सम्भ—द.

नेदं [1]वचनं[1] मुक्तविषयम्; अपि तु, स्वाप्यय-सम्पत्त्योः अन्यतरापेक्षम्। स्वाप्ययः—[2]सुषुप्तिः[2]। सम्पत्तिश्च मरणम्;

'वाङ्मनसि सम्पद्यते' (छां.उ. 6-8-6)

इत्यारभ्य,

तेजः परस्यां देवतायाम्' (छां.उ. 6-8-6)

इति वचनात्। तयोश्च अवस्थयोः, प्राज्ञप्राप्तिः निस्सम्बोधत्वं च [3]विद्येते[3]। अतः तयोरन्यतरापेक्षम् इदं वचनम्। सुषुप्ति-मरणयोः निस्सम्बोधत्वं, मुक्तस्य च सर्वज्ञत्वम्, आविष्कृतं हि श्रुत्या—

'[4]नाऽह[4] खल्वयमेवं सम्प्रत्यात्मानं जानाति; अयमहमस्मीति, नो एवेमानि भूतानि। विनाशमेवाऽपीतो भवति। नाहमत्र भोग्यं पश्यामि'।
(छां.उ. 8-11-2)

इति सुषुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा, तस्मिन्नेव वाक्ये मुक्तमधिकृत्य,

'स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते; य एते ब्रह्मलोके' (छां.उ. 8-12-5)

इति सर्वज्ञत्वमुच्यते। तथा,

'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' (छां.उ. 7-26-2)

[5]इति च[5] स्पष्टमेव सर्वज्ञत्वमुच्यते। तथा मरणे च निस्सम्बोधत्वम्'

---

अपि त्विति। स्वापे ब्रह्मसम्पत्तिः, 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिभिः प्रसिद्धा। 'तेजः परस्या'मिति, मृतौ ब्रह्मसम्पत्तिविषयं प्रमाणम्। अस्य वाक्यस्य मरणविषयत्वद्योतनाय, 'वाङ्मनसी'त्यादिकमुक्तम्। इतिवचनात् विद्येते इत्यन्वयः। 'सता सोम्य' 'तेजः परस्याम्' इति च सुषुप्ति-मरणयोः ब्रह्मसम्पत्तिश्चाऽनुसन्धेया॥

[नाहेति। अहेति अव्ययम्। सम्प्रति—सम्यक्। विनाशम्—अदर्शनम्, धर्मभूतज्ञानेन विषयीकृतत्वाभावम्, ज्ञानसङ्कोचं वा। निःसम्बोधत्वम्—देहादिनैकीकृत्य वा शुद्धतया वा ज्ञानेनाविषयीकारम्, ज्ञानाभावं वा। 'सर्वं पश्यती'ति ज्ञानप्रसरणमुक्तम्।

---

[1] वचनं तु—थ.
[2] सुषुप्तिः इत्युक्तम्—पा.
[3] विद्यते—व.
[4] नाहं—त. न.
[5] इति—पा.

'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति' (बृ.उ. 4-4-12)

[1]इत्युक्तम्। विनश्यति—न[1] पश्यतीत्यर्थः। अतः

'प्राज्ञेनात्मना' (बृ.उ. 6-3-21)

इति वचनं, स्वाप्यय-सम्पत्त्योरन्यतरापेक्षम् ॥ १६ ॥

इति अभावाद्यधिकरणम् ॥ ५ ॥

—o—

---

'सर्वमाप्नोती'ति विभूत्यनुभवः आनन्दरूप उच्यते। 'सर्वेश' इति क्रियाद्वयान्वयि। अन्यतरापेक्षम्—अन्यतरोद्देशेन प्रवृत्तम् अन्यतरावच्छिन्नजीवतात्पर्यकम् ॥ (भा.द.)] ॥ १६ ॥

[सूत्राणि। १. अभावं  २. भावं जैमि  ३. द्वादशा  ४. तन्वभा
५ भावे जा  ६. प्रदीप  ७. स्वाप्यय]

इति अभावाधिकरणम् ॥ ५ ॥

—o—

---

[1] न—थ. इत्युक्तम्, न—न. क्षा. क. वा.

(156) जगद्व्यापारवर्जाधिकरणम् ॥ ४–४–६ ॥ (सू. 17-22)

[अधिकरणार्थः—मुक्तात्मनां ब्रह्मणा परमसाम्यं भगवदसाधारणान् धर्मान्विहायैव]

## ५४०. जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ ४–४–१७ ॥(सि)

[विचारोपयोगी संशयः]

**किं मुक्तस्यैश्वर्यं, जगत्सृष्ट्यादि परमपुरुषा[1]साधारणं[1]सर्वेश्वरत्वमपि ? उत तद्रहितं केवलपरमपुरुषानुभवविषयम् ?—इति संशयः ॥**

---

**जगदित्यादि** । सत्यसङ्कल्पताविचाररूपत्वात् सङ्गतिः अर्थसिद्धा । **जगत्सृष्ट्यादीति** । सर्वेश्वरत्वप्रकारो हि सृष्ट्यादिः । **परम....विषयम्**—तदनुभवान्तर्गतशरीरसर्गादिविषयम् ॥ किं मुक्तस्य जगद्व्यापारविषयमैश्वर्यमस्ति - न ?—इति । परमसाम्य-सत्यसङ्कल्पत्वश्रवणं, किं मुक्तैश्वर्यस्य जगद्व्यापारविषयत्वमवगमयितुं शक्नोति ? न ? इति । जगन्नियमनस्य मुक्तैश्वर्यान्तर्भावे 'यतो वा इमानी'त्यादि ब्रह्मलक्षणवाक्यं विरुध्यते ? न ? इति । किं मुक्तस्य सृष्टिप्रकरणासंनिधानेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणं न्याय्यम् ? । उत मुक्तस्य विकारलोकानुसञ्चरणश्रवणेन जगन्नियमनस्य ब्रह्मलक्षत्वाश्रयणं न न्याय्यम् ? । किं मुक्तस्य विकारलोकानुसञ्चरणं नियमनार्थम् ? उत केवलभोगार्थम् ? । केवलभोगार्थत्वे, किं मुक्तस्य अपरिच्छिन्नानन्दत्वविरोधः स्यात् ? उत न ? इति ॥ अत्र तदर्थो विचारस्त्रिविधः—किं विकारलोकानां भोगानित्यत्वेन आनन्दानित्यता स्यात् ? उत न ? इति । किं विकारलोकानां भोग्यत्वं विकारात्मकत्वात् ? उत ब्रह्मविभूतित्वात् ? । किं च—मुक्तस्यास्वातन्त्र्यम् आनन्दवैकल्यमापादयति ? उत न ? इति । [किं] स्वातन्त्र्यं स्वातन्त्र्यरूपत्वादानन्दावहम् ? उत आत्माभिमानानुरूपत्वात् ? । किं च—अस्वतन्त्रस्य अनावृत्तिः सम्भवति ? न ? इति । किम्

---

[सूत्रार्थः । **जग....वर्जम्** — (मुक्तविषये श्रुतिप्रतिपन्नमैश्वर्यम्) ईश्वरासाधारणं जगत्सृष्ट्यादिकं विनैव, **प्रकरणात्** — जगत्सृष्ट्यादेः ईश्वरं प्रकृत्यैव श्रुतौ प्रतिपादनात्, **असंनिहितत्वाच्च**—जगत्सृष्ट्यादावभिधीयमाने मुक्तस्य अप्रस्तावाच्च ज्ञापकात् ॥]

'जगद्व्यापारवर्जं तन्मुक्तैश्वर्यमिति श्रुतम् । ब्रह्मणः प्रक्रमाच्चैवं जीवस्यात्र स्वसंनिधेः ॥' (अ.प. 540)

---

[1] साधारण—द.

[युक्त्या पूर्वः पक्षः]

किं युक्तम्? । जगदीश्वरत्वमपि — इति ।

कुतः? ।

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड.उ. 3-1-3)

इति, परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च ॥

[मुक्तैश्वर्यस्य जगन्नियमनाविनाभावशङ्का]

न हि परमसाम्य-सत्यसङ्कल्पत्वे, सर्वेश्वरासाधारण'जगन्नियमनेन'[1] विना उपपद्येते । अतः सत्यसङ्कल्पत्व-परमसाम्योपपत्तये, समस्तजगन्नियमनरूपमपि '[2]मुक्तस्यै'श्वर्यम् — इति ॥

---

अनावृत्तिश्रुतिः चातुर्मास्याक्षयफलत्वश्रुतिवत् चिराभिप्राया? उत मुख्यार्था? । किं मुक्तात्मानावर्तनविषयः सङ्कल्पः ईश्वरस्य न संभवति? उत सम्भवति; — इति ।।

यदा न संभवति तदा, अनावृत्तिश्रुतेः चिराभिप्रायत्वेन आवृत्तिसंभवात, आनन्दः परिच्छिद्यते । स्वातन्त्र्यं स्वातन्त्र्यरूपत्वात् सुखरूपं चेत् तद्वैकल्यादानन्दवैकल्यम् । विकारलोकानां विकारात्मकतया भोग्यत्वे, तदनित्यत्वात् आनन्दानित्यत्वम् । अतः केवलभोगार्थत्वाभावेन विकारलोकानुसंचरणस्य नियमनार्थत्वात्, जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणमन्याय्यमिति, तस्य लक्षणत्वाभावेन तदविरोधात्, परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगद्व्यापारान्तर्भावावगमकत्वात्, जगद्व्यापारविषयमैश्वर्यं मुक्तस्य सम्भवेत् ॥ यदा मुक्तानावर्तनविषयः सङ्कल्पः ईश्वरस्य संभवति; तदा अनावृत्तिश्रुतेर्मुख्यत्वेन अनावृत्तिसम्भवात् न आनन्दानित्यत्वम् । यदा च स्वातन्त्र्यम् आत्माभिमानानुरूप्यात सुखरूपम्, तदा मुक्तेषु स्वात्माभिमानानुरूपत्वात् स्वातन्त्र्यस्य, तद्वैकल्यान्नानन्दवैकल्यम् ॥ यदा च विकारलोकानां मुक्तभोग्यत्वं ब्रह्मविभूतितया तदा विकारभूतस्यानित्यत्वेऽपि, सर्वावस्थासु जगतो ब्रह्मविभूतित्वस्य, अनपायित्वेन नाऽनन्दविच्छेदः । एवं विकारलोकानुसञ्चरणस्य नियमनार्थत्वाभावेऽपि अपरिच्छिन्नानन्दत्वाविरोधात्, केवलभोगार्थतया तदविरोधेन जगद्व्यापारस्य ब्रह्मलक्षणत्वाश्रयणस्य न्याय्यत्वात्, परमसाम्यादिश्रवणस्य मुक्तैश्वर्ये जगन्नियमनान्तर्भावावगमकत्वात, जगद्व्यापारवर्जमेव मुक्तैश्वर्यं स्यात् ॥ यदि 'अनावृत्तिः शब्दा'दिति अधिकरणान्तरम्, तदा अनावृत्त्यनुबन्धिनी विचारपरम्परा पृथगनुसन्धेया । तादर्थ्यसंभवस्तु सङ्गतिमात्रोपयोगी द्रष्टव्यः ॥

---

[1] जगद्व्यापाररूपजगन्नियमनेन—वा.    [2] मुक्तै—द. न.

[सिद्धान्तः सूत्रार्थतः]

एवं प्राप्ते, प्रचक्ष्महे—जगद्व्यापारवर्जम्—इति । जगद्व्यापारः—निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम् । तद्वर्जम्, निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम् ।

कुतः? । प्रकरणात्—निखिलजग[1]न्नियमनं हि! परं[1]ब्रह्म प्रकृत्य आम्नायते—

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति ।

यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' (तै.उ.भृ. 1-1)

इति यद्येतत् निखिलजगन्नियमनं, मुक्तानामपि साधारणं स्यात्; [2]ततश्च[2] इदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते । असाधारणस्य हि लक्षणत्वम् । [3]तथा[3],

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम् । (छां.उ. 6-2-1)
तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत ।' (छां.उ. 6-2-3)

'ब्रह्म वा इदमेकमेवाग्र आसीत् । तदेकं सन्न व्यभवत् ।
[4]तच्छ्रेयोरूप[4]मत्यसृजत क्षत्रम् ।
यान्येतानि [5]देवत्रा क्षत्राणि[5], इन्द्रो वरुणः सोमो रुद्रः
पर्जन्यो यमो मृत्युरीशान इति ॥' (बृ.उ. 3-4-11)

'आत्मा वा इदमेक एवाग्र आसीत् । नाऽन्यत् किंचन मिषत् ।
स ईक्षत लोकान्नु सृजा इति । स इमांल्लोका[6]नसृजत[6] ।' (ऐत.उ. 1-1)

'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि ।
नापो नाग्निर्न सोमो न सूर्यः । स एकाकी न रमेत । तस्य ध्यानान्तःस्थस्यैका कन्या कन्या दशेन्द्रियाणि' (महो. 1-1)

---

निर्व्याज....रूपम्—यथावस्थितब्रह्मानुभवरूपमित्यर्थः । सृष्ट्यादेरपि नियमनविशेषरूपत्वात् जगद्व्यापारशब्दोक्तिः । कन्या—मनः, प्रकाशकत्वात् । 'कन दीप्तौ' (पा.धा. 460) इति धातुः ॥

---

[1] न्नियमनं परं—द. न्नियमनं हि पर—त. थ. [2] ततः—पा.
[3] यथा—थ. इदमग्र आसीदेकमेव —(रा.ग्रं.) [4] तच्छ्रेयोनुरूपं—श्रा.
[5] देवक्षत्राणि—पा. देवताक्षत्राणि—द. [6] न सृजतेति—वा.

इत्यादिषु ॥

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' (बृ.उ. 5-7-3)

इत्यारभ्य, 'य आत्मनि तिष्ठन्' (बृ.उ. 14-5-30) इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। —असंनिहितत्वाच्च—न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति; येन जगद्व्यापारः तस्यापि स्यात् ॥ १७ ॥

[मुक्त जगद्व्यापारस्य श्रौतत्वशङ्कापरिहारौ]

## ५४१. प्रत्यक्षोपदेशा[1]न्नेति चेन्ना[1]ऽऽधिकारिक-मण्डलस्थोक्तेः ॥ ४-४-१८ ॥ (सि)

'स स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7-25-2)

'[2]इमान्[2]लोकान् कामान्नी कामरूप्यनुसञ्चरन्' (तै.उ.भृ. 10-5)

इति, प्रत्यक्षेण—श्रुत्या, मुक्तस्य जगद्व्यापार उपदिश्यते। अतो न जगद्व्यपारवर्जम्—इति चेत्!

तन्न; आधिकारिकमण्डलस्थोक्तेः। आधिकारिकाः—अधिकारेषु नियुक्ताः हिरण्यगर्भादयः। मण्डलानि—तेषां लोकाः। तत्स्थाः—भोगाः, मुक्तस्य अकर्मवश्यस्य भवन्तीत्ययमर्थः,

---

प्रत्यक्षेत्यादि। कामान्नित्व-कामरूपित्व सर्वलोकसञ्चारश्रवणात्, जगतः तदधीनत्वं सिद्धमिति, मुक्तस्य ईश्वरत्वमपि स्यादिति पूर्वपक्षोत्थानम। प्रत्यक्षेण इति व्याख्येयस्य

---

[सूत्रार्थः। प्रत्यक्षेण—'इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन्' इत्यादिकया प्रत्यक्ष-श्रुत्या, उपदेशात्—मुक्तस्यात्मनो जगद्व्यापारसम्बन्धस्य स्पष्टमुपदेशात्, (जगद्व्यापारवर्जनं न युज्यते) इति चेत् न— एवं शङ्कनं न सम्यक्, आधि....स्थोक्तेः—अधिकारनियुक्तहिरण्य-गर्भादिलोकस्थभोगानुभवस्यैव श्रुत्युक्ततया जगद्व्यापारासंभवात् ॥]

'नेमांल्लोकानिति श्रुत्या जगद्व्यापार उच्यते। आधिकारिकलोकस्थवस्तुभोगो हि कथ्यते॥' (अ.प. 541)

---

[1] दिति चेन्ना—घ.ङ.च.भ.ठ. [2] स इमान्— घ.ङ.त.न.

'तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7-25-2)

इत्यादिनोच्यते ॥ अकर्मप्रतिहतज्ञानो मुक्तः [1]विकार[1]लोकान् ब्रह्मविभूतिभूताननुभूय, यथाकामं तृप्यतीत्यर्थः । तदेव विकारान्त[2]र्वर्तिनः[2] [3]आधिकारिक[3]मण्डलस्थान् [4]सर्वान् भोगान्[4] ब्रह्मविभूतिभूताननुभवतीति, अनेन वाक्येनोच्यते ; न [5]जगद्व्यापारः[5] ॥ १८ ॥

[मुक्तभोगस्य अन्तवत्त्वशङ्कायाः परिहारः]

यदि संसारिवत् मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते ; तर्हि, बद्धस्येव मुक्तस्याऽपि अन्तवदेव भोग्यजातम् , अल्पं च [6]स्यात् ! तत्राह[6]—

## ५४२. विकारावर्ति च तथा हि स्थितिमाह ॥ ४–४–१ ॥ (सि)

विकारे जन्मादिके न वर्तत इति विकारावर्ति । [7]निर्धूतनिखिलविकारं[7] निखिल-

---

व्यासेनोपादानम् । [तस्यैव व्याख्या] श्रुत्येति । विकारलोकान्—कार्यलोकान् । 'विकार' शब्दो धर्मिपरः । अकर्मेति । भगवद्विभूतित्वेन-अत्यन्तभोग्यता स्यादित्यर्थः । [अतः] हेयातीतस्य मुक्तस्य हेयास्पदविकारलोकापेक्षा कथम्? इति नाशङ्का । एवं कामान्नीत्यादि-श्रुतिवाक्यं व्याख्यातम् । तदेवमिति, उक्तश्रुतिवाक्यार्थप्रतिपादकसूत्रार्थनिगमनम् ॥ [मुक्तस्य उभयविभूतिविशिष्टब्रह्मानुभवे आधिकारिकहिरण्यगर्भादिलोकस्थभोगस्याऽपि अन्तर्गतत्वेन; तन्मात्रविषयाः उपात्तश्रुतयः । न तु जगद्व्यापारपराः – इति । (शा.शा.दी) ] ॥ १८ ॥

विकारेत्यादि । मुक्तस्य सविभूतिकब्रह्मानुभवितृत्वेन स्थितिवचनात् , सर्वत्र कामचारादयो भवन्ति ; न नियन्तृत्वादिकम् इत्यर्थः ॥ [द्विषोद्रेकात् , 'एतत् साम गायन्नास्ते ।

---

[सूत्रार्थः । विकारावर्ति च—निर्धूतनिखिलविकारं परं ब्रह्मैव सविभूतिकम्' (मुक्तात्मा अनुभवति) तथा हि—तथा ब्रह्मानुभवितृत्वेन हि, स्थितिम्—परस्मिन् ब्रह्मणि मुक्तात्मनः अवस्थानम् , आह—'यदा ह्येवैषः....भवति' 'रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' इत्यादिश्रुतिर्ब्रवीति ॥ ]

'सविभूति परं ब्रह्म मुक्तोऽनुभवति स्वराट् । यदा ह्येवैष इत्युक्तेर्जीवस्य ब्रह्मणि स्थितेः ॥' (ब्र.प. 542)

---

[1] विकारि—वा. अधिकान्—द. [2] र्वतिना—द.
[3] अधिकारि—त.थ. [4] भोगान्—त.थ.
[5] तद्व्यापारः—थ. [6] स्यात्—थ. [7] निर्धूत—थ. द.

हेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म 'सविभूतिकं[1] सकलकल्याणगुणम्, अनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्। तथा हि ! परस्मिन् ब्रह्मणि निर्विकारे अनवधिका[2]तिशयानन्दे,[2] मुक्तस्य अनुभवितृत्वेन स्थिति[3]माह श्रुतिः[3]—

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते।
अथ सोऽभयं गतो भवति।' (तै.उ.आन. 7–2–1)

'रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽनन्दी भवति' (तै.उ.आन. 7–2–1)

इत्यादिका। तद्विभूतिभूतं च जगत् तत्रैव वर्तते ;

'तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन।' (कठ.उ. 5–8)

इति श्रुतेः।

[कामचारश्रुतेः जगद्व्यापारपरत्वाभावः]

अतः 'सविभूतिकं ब्रह्म अनुभवन्, विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते' इति,

'सर्वेषु लोकेषु कामचारः' (छां.उ. 7–25–2)

इत्यादिनोच्यते ; न मुक्तस्य जगद्व्यापारः ॥ १९ ॥

---

हा वु हा वु हा वु ॥' इत्यादिश्रुतिप्रतिपन्नसामगानवत्, हर्षोद्रेकात् यथेष्टं सञ्चरतीत्यर्थः। तथा च 'उपस्थितेऽतस्तद्वचनात्' इत्यत्र ब्रह्मोपसम्पत्तिः कामचारे हेतूकृता। अत एव निवृत्ततिरोधानस्य मुक्तस्य, परमपदनिलयस्यैव सर्वविभूतियुक्तब्रह्मानुभवसम्भवात्, सञ्चरणं वृथेति शङ्काऽपि परास्ता ; हर्षोद्रेकप्रयुक्तचेष्टायाः प्रयोजनोद्देशप्रवृत्तत्वाभावात्। लब्धसविभूतिकब्रह्मानुभवस्याऽपि चक्षुरादीन्द्रियजन्यसाक्षात्कारादिलिप्सया शरीरान्तरपरिग्रहयथेष्टसञ्चरणाद्युपपत्तेः। अत्र 'विकारावर्ती'ति ब्रह्म निर्दिशतः सूत्रकृतः अयं भावः—अपक्षय-विनाशशून्यब्रह्मानुभवस्य आनन्दस्य न वृद्धिह्रासौ ; सततैकरूपत्वात्। ईदृशं ब्रह्मानुभवतो मुक्तस्य, न अत्यासन्न आनन्दः अन्योऽस्ति। येन ब्रह्मानुभवस्य आधिकारिकमण्डलस्थभोगापेक्षया न्यूनता कल्प्येतेति ॥ (भा.प्र.) ॥ ] न मुक्तस्येति। [अतो न मुक्तस्य सृष्ट्यादिविषयं जगदैश्वर्यम् इत्यर्थः ॥ (शा.शा दी.) ॥ १९ ॥

---

[1] सविभूति—त. थ.　[2] तिशयानन्दस्य—त.　[3] माह—थ.

[श्रुति-स्मृतिभ्यां जगन्नियमनस्य परमात्मासाधारणता]

## ५४३. दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४–४–२०॥ (सि)

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य, नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं, न सम्भवतीत्युक्तम्। निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति, दर्शयतः श्रुति-स्मृती।

'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च।
मृत्युर्धावति पञ्चमः' (तै.उ.आन. 8–1)

इति;

'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. 5–8–9)

इत्यादि; तथा,

'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां
लोकानामसम्भेदाय' (बृ.उ. 6–4–22)

इति च श्रुतिः[1]। स्मृतिरपि,

'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते[2]॥' (भ.गी. 9–10)

इति[2];

'विष्टभ्याऽहमिदं कृत्स्नमेकांशेन स्थितो जगत्।' (भ.गी. 10–42)

इति च॥ तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याऽप्यानन्दस्य[3], परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः—

'एष ह्येवाऽऽनन्दयाति' (तै.उ.आन- 7–21)

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते।'

---

[सूत्रार्थः। प्रत्य····माने—श्रुति-स्मृती उभे अपि, एवं च—जगन्नियमनं परमपुरुषस्यैवेति, दर्शयतः—स्फुटीकुरुतः॥]

'सृष्ट्यादिकं नियमनं परस्येति श्रुतेः स्मृतेः। 'अहं सर्वस्य' 'तस्माद्वा एतस्मा'दिति गम्यते॥' (म.प. 544)

---

[1] श्रुतिः—थ. [2] परिवर्थते—त.न [3] स्याऽनन्दस्य—द.

स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ (भ.गी. 14-26)
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याऽव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥' (भ.गी. 14-27)

इति ॥

[अन्याधीनत्व-नित्यत्वयोर्विरोधशङ्का-परिहारौ]

यद्यपि—अपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः, प्रत्यगात्मनः स्वाभाविक 'एवाऽविर्भूतः'[1]; तथाऽपि—तस्य तथाविधत्वमेव परमपुरुषायत्तम् । तस्य नित्यस्थितिश्च तदायत्ता । परमपुरुषस्य एतन्नित्यतताया नित्येष्टत्वात्—नित्यतया वर्तत इति, न कश्चिद्विरोधः ॥

एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य [2]च नित्यतया[2] शास्त्रा[3]वगतस्य[3], परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति, शास्त्रादवगम्यते । अतः मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च, जगद्व्यापारवर्जम् ॥ २० ॥

[मुक्तैश्वर्यस्य जगद्व्यापारवर्जत्वे भोगसाम्यश्रुतिः]

## ५४४. भोगमात्रसाम्यलिङ्गाच्च ॥ ४-४-२१ ॥ (सि)

---

ब्रह्म—जीवः । अमृतम्—मोक्षः । शाश्वतधर्मः—ज्ञानम् । सुखम्—आनन्दः ।

तस्य—अपहतपाप्मत्वादिगुणस्य । तथाविधत्वम्—स्वाभाविकत्वम् । तस्य—प्रत्यगात्मस्वरूपस्य नित्यस्थितिः तदायत्तेत्यर्थः ।

एवमिति । मुक्तस्य नियन्तृत्वाभावात् न आनन्दवैकल्यम् । प्रत्युत तत्पौष्कल्यमेव । सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च । तथा पुरुष-पश्वादिषु दृश्यते । तस्मात् आत्मनः आविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्ष-यतः, स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात् । तद्विपर्ययेणेशितृत्वम् अत्यन्तानिष्टमेव । तस्मान्नानन्दवैकल्यम्; अपि तु तत्पौष्कल्यमेव ॥ २० ॥

---

[सूत्रार्थः । भोगमात्रे—ब्रह्मानुभवरूपे भोगे एव केवलं, साम्यलिङ्गाच्च—ब्रह्मसाम्यस्य श्रुत्या बोधनात् ज्ञापकादपि जगद्व्यापारवर्जमेव मुक्तैश्वर्यमिति ॥ ]

'ब्रह्मणा सह कामानित्यस्माल्लिङ्गाच्च सर्वथा । भोगमात्रे ब्रह्मसाम्यं मुक्तानां तु भवेदिति ॥' (ब्र प. 544)

---

[1] एवाविष्कृतः—द.    [2] नित्यतया—त. थ.    [3] दवगतस्य—द.

ब्रह्मयाथात्म्यानुभवरूपभोग[1]मात्रेण[1] मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात्, जगद्व्यापारवर्जमित्यवगम्यते ;

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै.उ.आन. 1-2)

इति । अतः मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च, परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति, जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥

[मुक्तैश्वर्यस्य परमपुरुषायत्तत्वेऽपि न जीवस्य पुनरावृत्तिशङ्का]

यदि परम[2]पुरुषायत्तं[2] मुक्तैश्वर्यम् ! तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पात् मुक्तस्य पुनरावृत्ति[3]सम्भवाशङ्का[3] ; इत्यत्राह—

## ५४५. अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥४-४-२२॥ (सि)

यथा—निखिलहेयप्रत्यनीककल्याणैकतानः, जगज्जन्मादिकारणं, समस्तवस्तुविलक्षणः, सर्वज्ञः, सत्यसङ्कल्पः, आश्रितवात्सल्यैकजलधिः, परमकारुणिकः, [4]निरस्त[4]समाभ्यधिकसंभावनः, [5]परब्रह्मा[5]भिधानः परमपुरुषः अस्तीति शब्दादवगम्यते ; एवम्—अहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूप[6]तत्समाराधन[6]प्रीतः, उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तरकर्मसंचयरूपाविद्यां विनिवर्त्य, स्वयाथात्म्यानु-

---

भोगमात्रेति । ब्रह्मयाथात्म्येति । 'छागो वा मन्त्रवर्णात्' (पू.मी.सू.) इति न्यायात् सामान्येनावगतं साम्यं, भोगसाम्ये दृष्टे तादृशसाम्यविशेषे पर्यवस्यतीति भावः ॥ २१ ॥

अनावृत्तिरिति । अनावृत्तिश्रुतिः पाक्षिकविषया ; ईश्वरस्वातन्त्र्यात् कस्यचिदावृत्तिसंभवात्—इति पूर्वपक्ष्यभिप्रायः । निखिलहेयप्रत्यनीकत्वादिगुणाः, मुक्तस्य भगवता अपरित्याज्यत्वोपपादनार्थं, तस्य ब्रह्मानुभवजिहासानुदयज्ञापनार्थं, प्रामाणिकत्वे दृष्टान्तसिद्ध्यर्थं च उक्ताः । निरस्तेत्यादि, अन्येन निवृत्तिशङ्काव्यावृत्त्यर्थम् ।

---

[सूत्रार्थः । अनावृत्तिः—मुक्तात्मनः संसारचक्रे पुनरप्रवेशः, शब्दात्—'नावर्तन्ते, नच पुनरावर्तते, इत्यादिकात् प्रमाणभूतात् शब्दादेवावगम्यते ॥]

मुक्तस्याऽपुनरावृत्तिः शब्दादेवावगम्यते । ब्रह्मणोऽपि हि सद्भावे प्रमाणं शब्द एव हि ॥ (ब्र.प. 545)

---

[1] मात्र—रा. ग्रं.
[2] पुरुषायत्तमेव—न.
[3] सम्भावनाशङ्का—
[4] समस्त—न.
[5] परं ब्रह्मा—भा.
[6] तत्संराधन—द.

भवरूपानवधिकातिशयानन्दं [1]प्रापय्य[1], पुनर्नावर्तयति—इत्यपि, शब्दादेव [2]अवगम्यते[2] ॥ शब्दश्च—

'स खल्वेवं वर्तयन् यावदायुषं, ब्रह्मलोकमभिसम्पद्यते,
[3]न च पुनरावर्तते न च पुनरावर्तते[3]' (छां.उ. 8-15-1)

इत्यादिकः। [4]तथा च[4] भगवता स्वयमेवोक्तम्—

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ (भ.गी. 8-15)
आब्रह्म [5]भुवना[5]ल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥' (भ.गी. 8-16)

इति ॥

[पुनरावृत्तिसम्भवशङ्कानिरासः]

न च उच्छिन्नकर्मबन्धस्य असङ्कुचितज्ञानस्य परब्रह्मानु[6]भवैक[6]स्वभावस्य तदेकप्रियस्य अनवधिकातिशयानन्दं ब्रह्माऽनुभवतः, अन्यापेक्षा-[7]तदर्थारम्भा[7]द्यसम्भवात्, पुनरावृत्तिशङ्का।

[भगवत्सङ्कल्पस्य पुनरावृत्त्यापादकत्वनिरासः]

न च परमपुरुषः सत्यसङ्कल्पः, अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति। य एवमाह—

---

पुनर्जन्मेत्यादि, 'स यदि पितृलोककामः' इत्याद्युक्तभगवत्परिचरणार्थविग्रहव्यावृत्त्यर्थमुपात्तम्। 'पुनर्जन्म न विद्यते' इत्यादिवचनम्, दुःखालयत्वादिविशेषणाभावेऽपि एतदैकार्थ्यं स्यादित्यभिप्रायेणोदाहृतम्। अनेन-आवृत्तिः कर्मकृता न भवति; 'इमान् लोका'नित्युक्तकामसंचारात्—इति च फलितम् ॥

**न च ...शङ्केति**। कर्मणः सवासनस्य विनष्टत्वात्, कर्मान्तरारम्भासम्भवात्, न कर्म पुनरावृत्तिहेतुः। अनवधिकातिशयानन्दभगवदनुभवैकतानस्य न अन्यापेक्षेति, न स्वयं (स्वेच्छा) स्वस्य पुनरावृत्तिहेतुरित्यर्थः।

**सत्यसङ्कल्पः इति**, 'मुक्तान् पुनर्नावर्तयिष्यामि' इति सङ्कल्पो नाऽन्यथा स्यात् इत्यभिप्रायेणोक्तम्। ज्ञानिनः अत्यर्थं प्रियत्वाच्च तथा सङ्कल्पः। **य एवमाहेति**, अत्यर्थ-

---

[1] प्राप्य—थ.   [2] गम्यते—द.   [3] न च पुनरावर्तते—घ. ङ. च. ञ.
[4] तथा—द. न.   [5] भवना—क. घ. ङ.   [6] भव—थ.
[7] तदर्थान्तरारम्भा—व.

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ (भ.गी. 7-17)
आस्थितः सहि युक्तात्मा मामेवाऽनुत्तमां गतिम् ।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ (भ.गी. 7-18)
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' । (भ.गी. 7-19)

इति ॥

सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥ २२ ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

—o—

इति श्रीभगवद्रामानुजविरचिते [भगवद्बादरायणमुनिकृत] शारीरकमीमांसायाः
भाष्ये (श्रीभाष्ये) चतुर्थस्य [फलाध्यायस्य] चतुर्थः पादः
(मुक्तिपादः) समाप्तः ॥

समाप्तश्चाऽध्यायः । शास्त्रं [1]च परि[1]समाप्तम् ॥

॥ श्रीभाष्यं समाप्तम् ॥

श्रीरस्तु । शुभमस्तु । श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

---

प्रियत्वे प्रमाणम् । **न चेति,** अपुनरावृत्तिश्रुतेरनुग्राहकस्तर्क उक्तो भवति ॥ **इति सर्वं समञ्जसमिति** । 'सर्व'शब्देन भेदश्रुत्यभेदश्रुतिघटकश्रुतिगुणादिविधिनिषेधश्रुति-भगवत्कृपा-स्वातन्त्र्यादिपरवाक्य-प्रत्यक्षादीन्यभिप्रेत्य, तेषां सामञ्जस्यमुक्तम् । **इतिशब्दः,** 'अखिल-भुवने'त्यादिभाष्योक्ताशेषार्थपरामर्शी । 'सर्व'शब्देन अनुदाहृतश्रुतिस्मृतीतिहासपुराणवचांसि, तदनुग्राहकं तर्कजातं च विवक्षितम् । तेषामनया दिशा सामञ्जस्यं द्रष्टव्यम् । उक्तार्थ-बाधकत्वेन ये प्रमाणतर्काः परैः प्रयुक्ताः, तेषां सर्वेषां परिहारः अत्राऽस्त्येव । एतदनन्तर्भूतार्थो नास्ति । तस्मात् उक्तप्रकारेण बाधकप्रमाणतर्कपरिहारश्चाऽनुसन्धेयः इत्यभिप्रायः ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

—o—

ऋतुनाथवंशजन्मा श्रीवासराघवाख्यगुरुसूनुः ।
श्रीरामभद्रनामा श्रीभाष्यग्रन्थमादितो ह्यान्तम् ॥
टिप्पण्या योजितवान् ध्येतॄणां सुबोधसंसिद्ध्यै ।
व्याख्याः सङ्गृह्यैवं श्रीकृष्णायार्पितं भूयात् ॥

---

[1] च — ख. छ.

तृतीयाध्याय-चतुर्थाध्यायौ समाप्तौ

—०—

# इति श्रीभगवद्रामानुजविरचितं शारीरकमीमांसाभाष्यं समाप्तम्

श्रीः

*अनुबन्धः—१.

१) शारीरकन्यायकलापसङ्ग्रहः

२) तत्त्वसारः

३) अधिकरणसारावलिः

४) अधिकरणार्थसङ्ग्रहः

५) नयसङ्गतिमालिका

अनुबन्धः—२.

१) प्रमाणार्थकोषः

२) पदार्थकोषः

३) ऋष्यादिनामानि

४) सिद्धान्तोक्तयः

५) अधिकरणादीनामकाराद्यनुक्रमणी

६) प्रमाणसङ्केताक्षरविवरणी, सङ्ख्याबोधिनी च

—o—

* [इमे अनुबन्धाः (सव्याख्याः) आदितः आन्तं श्रीभाष्य-सम्पादकेन N. S. रामभद्राचार्येण निर्माय संयोजिताः । ]

॥ श्रीः ॥

गुरुपरम्परायै नमः । श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

तृतीयस्याऽध्यायस्य प्रथमः पादः ॥

## (96) तदन्तरप्रतिपत्त्यधिकरणम् ॥ ३–१–१ ॥

### (1) श्रीमद्भिः सेनेश्वरार्यैर्विरचितः शारीरकन्यायकलापसंग्रहः ॥ (३-१-१)

[जगद्द्वारः सुविन्यस्तः सेनेशे यत्र विष्णुना ।
तस्यावतारमपरं सेनानाथगुरुं भजे ॥ ]

(106) न भूतसूक्ष्मैः सह याति देही तत्रैव तेषां सुलभत्वहेतोः ।
नैवैवमापः पुरुषा भवन्तीत्येवं श्रुतत्वात् सह तैः प्रयाति ॥ १ ॥

**देही**—जीवात्मा, **भूतसूक्ष्मैः सह** — देहनिर्माणाद्युपयोगिभिः आकाशादिभूतानां सूक्ष्मैर्भागैः संगतः सन्, **न याति**—देहात् देहान्तरप्राप्तिकाले न गच्छति, **तत्रैव**—देहान्तरसम्पत्त्यर्थं यं देशं गच्छति तस्मिन् देशे एव, **तेषाम्**—तदुपयोगिनां भूतसूक्ष्माणाम्, **सुलभत्वहेतोः**—(नित्यविभूतेरधः प्रदेशे व्यापित्वेन सर्वत्र सतां) सुखेन लब्धुमर्हत्वात्, (इति पूर्वपक्षे) **एवं नैव**—उक्ता रीतिर्नैवोचिता, **'आपः पुरुषा भवन्ति' इत्येवं श्रुतत्वात्**—'अबुपलक्षितानि भूतानि देहिशब्दवाच्यानि भवन्ति' इत्येवं श्रुतौ स्पष्टमुक्तत्वात्, **तैः सह प्रयाति**—भूतसूक्ष्मैः सहैव जीवः गच्छति ; न केवलः ॥ १ ॥

### (2) श्रीमद्भिः वेदान्ताचार्यैः विरचिता अधिकरणसारावलिः ॥ (श्लो 1–6)

[श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥]

(269) साध्या मुक्तिर्न चेत् स्यात् ! प्रसजति विफला साधनाध्यायक्लृप्तिः
साध्या चेन्नश्वरी स्यात् ! कथमिह पुनरावृत्तिशून्योऽपवर्गः ? ।
नैवं ब्रह्मानुभूतिः परभजनवता प्रागसिद्धैव साध्या
धीसङ्कोचप्रणाशस्त्वियमिति च भवत्युत्तरावध्यतीता ॥ १ ॥

**मुक्तिः**—मुक्तिपदेन शास्त्रेषु प्रतिपादिता जीवस्य अवस्थितिः, **साध्या न स्याच्चेत्**—वस्तुतो निष्पाद्या, जन्या न भवति यदि ; तदा, **साधनाध्यायक्लृप्तिः**—साधननाम्नः शारीरकतृतीयाध्यायस्य रचना, **विफला प्रसजति**—निरर्थिका आपतति ; (साध्येतरां मुक्तिं प्रति साधनचिन्तायाः शशविषाणचिन्तातौल्यात्) **मुक्तिः साध्या चेत्**—जीवस्य मुक्तिरूपा अवस्थितिः

यदि यत्ननिष्पाद्या भवति तर्हि, **नश्वरी स्यात्**—च्यवनस्वभावैव भवेत्, (नाशं प्रति जन्यभावतायाः प्रयोजकत्वात्) एवं स्थिते, **इह**—वेदान्तेषु (विहितः) **अपवर्गः**—अपवर्गाख्यः आत्मनः स्थितिविशेषः, (**इह अपवर्गः**—आत्मनि जायमानः अपवर्गाख्योऽवस्थाविशेषः इति वा) (**कथं पुनरावृत्तिशून्यः**—आत्मगतपुनर्जन्मासमानाधिकरण इति कथं वा सिध्यति ? (असिद्धौ 'न च (स) पुनरावर्तते' इति श्रुतेर्वैयर्थ्यम्), **मैवम्**—ईदृशं शङ्कनं मास्तु, **ब्रह्मानुभूतिः मुक्तिः**—परिपूर्णपरब्रह्मानुभवरूपा या शास्त्रोक्ता मुक्तिः सा खलु, **प्राक् असिद्धैव**—परमात्मोपासनात्पूर्वम् अनिष्पन्नस्वरूपैव जीवे, **परभजनवता**—परमपुरुषोपासनरूपवेदान्तोदितसाधनविशेषसम्पन्नेन चेतनविशेषेणैव, **साध्या**—सम्पाद्यस्वरूपैव भवति, **इयम्**—परमपुरुषोपासनसाध्या मुक्तिः, **धीसंकोचप्रणाशस्तु**—स्वभावतः सिद्धायाः असंकुचितायाः धियः (धर्मभूतज्ञानस्य) यः अनादिकर्मायत्तः संकोचः (भगवत्स्वरूप-गुण-विभूतिरूपार्थानामग्राहिता) तस्य विरामस्वरूपः, **इति च**— अस्मादेव च हेतोः, **उत्तरावध्यतीता भवति**—पश्चात्तनकालपरिच्छेदरहिता अप्रच्युतस्वभावा सती जागर्ति ॥ (अतो न कोऽपि दोषलेशः) ॥ (ध्वंसस्य ध्वंसाभावादिति यावत्) ॥ १ ॥

(270) पादाभ्यामत्र पूर्वं जनयति भविनां ब्रह्मविद्याधिकारं
पश्चात् तेषामुभाभ्यां वदति बहुविधां तामशेषैः सहाऽङ्गैः ।
ऐश्वर्यादौ विरक्तिं निरवधिविभवे पूरुषे चाभिलाषं
विद्याभेदावलम्बं तदुपकरणमप्याह पादैः क्रमेण ॥ २ ॥

**अत्र**—साधनाख्ये तृतीये अध्याये, **पूर्वं पादाभ्याम्**—आद्याभ्यां वैराग्योभयलिङ्गाख्याभ्यां द्वाभ्यां चरणाभ्याम्, **भविनाम्**—(अनादिभगवच्छासनातिवृत्तिकृत) संसारसम्बन्धवतां चेतनानाम्, (चेतनान् प्रति) **ब्रह्मविद्याधिकारम्**—(ऐहिकामुष्मिकफलभोगेषु वैराग्योत्पादनतः) शमादिसम्पत्तिरूपां ब्रह्मविद्यार्हताम्, **पूर्वं जनयति**—आदौ (अध्यायप्रथमकृत्यतया) सम्पादयति, **पश्चात् उभाभ्याम्**—अनन्तराभ्यां द्वाभ्यां गुणोपसंहारा-ङ्गाख्याभ्यां पादाभ्याम्, **तेषाम्**—प्राप्तब्रह्मविद्याधिकाराणां संसारिचेतनानाम्, (चेतनानुद्दिश्य) **बहुविधां ताम्**—नानाप्रकारां ब्रह्मविद्याम्, **अशेषैः अङ्गैः सह**—समस्तैः विद्यानिष्पत्त्युपकारकैः साकम्, **पश्चात् वदति**—(एतदध्यायीयानन्तरकृत्यतया) अनन्तरं स्पष्टं बोधयति, **पादैः**—एतदध्यायीयैः चतुर्भिः पादैः, **क्रमेण**—यथायोग्यपूर्वापरभावमनुरुध्य, **ऐश्वर्यादौ विरक्तिम्**—(आद्यपादेन) ऐश्वर्यादिविषयिणीं वितृष्णताम्, **निरवधिविभवे पूरुषे च अभिलाषम्**—अपरिच्छिन्नानन्ताश्चर्यवैभवस्वभावे परमपुरुषे एव जीवस्य सतृष्णताम् (द्वितीयपादेन), **विद्याभेदावलम्बम्**—

मोक्षार्थं (स्वानुष्ठानार्हं) विद्याविशेषस्यैकस्याश्रयणम् , (तृतीयेन चरणेन), **तदुपकरणमपि**— विद्यानिष्पत्त्याधायकं तदतिशयाधायकमपि च उपकारकजातम् (तुर्येण चरणेन च), **आह**— सम्यग्विवृतवान् (चेतनानुजिघृक्षावान् ) बादरायणः ॥ २ ॥

(271) संसारोद्विग्नचेतास्तनुभृदधिकरोत्यत्र शारीरकांशे
वैराग्यार्थस्तु पादः किमिति पुनरसौ सूत्रकारैर्निबद्धः ? ।
सत्यं प्राप्यान्तराणां निरयगणतुलारोपणं मुक्त्युपाय-
प्रारम्भेऽभ्यर्हितं स्यात् त्वरत इह खलु स्पष्टदृष्ट[1]स्वदोषः[1] ॥ ३ ॥

**संसारोद्विग्नचेताः**—अनादेः कालात् सन्तन्यमानस्य जन्मजरामरणप्रवाहस्य स्वस्मिन् इतः पश्चादप्यनुवृत्तिचिन्तनेनाऽऽहितोद्वेग (तीव्रभय) वदन्तःकरणः, **तनुभृत्**—देही(शास्त्रार्थ-चिन्तनौपयिकविशिष्टदेहादिसम्पन्नः) चेतनः, **अत्र**—धर्मविचारशास्त्रात्मकमीमांसान्तःपातिनि, **शारीरकांशे**—परमधर्मभूतपरब्रह्मविचारात्मकशारीरकाख्योत्तरमीमांसाध्ययने, **अधिकरोति**— प्रवृत्तो भवति. (एवं स्थिते) **वैराग्यार्थः**—परमात्मेतरवैतृष्ण्यप्रयोजनकः, **असौ पादः**—तृतीय-स्यादिमः वैराग्याभिधः पादः, **सूत्रकारैः**—शारीरकसूत्रकृद्भिः बादरायणैः, **किमिति पुनः निबद्धः**—कुतो वा शारीरके पुनर्योजितः ? (साधनीयांशाभावेन विफलत्वापातात्) इति शङ्कायाम् , **सत्यम्**—उक्तमेतदभ्युपगमनीयमेव, यत् सिद्धस्यैव वैराग्यस्य सम्पादनार्थं प्रवृत्तौ वैफल्यमिति, शारीरकारम्भात् पूर्वं वैराग्यं सिद्धमिति च ; तथाऽपि, **प्राप्यान्तराणाम्**— लम्भनीयत्वेन सम्भाव्यमानानां परब्रह्मेतरेषां सर्वेषामपि, **निरयगणतुलारोपणम्**—अत्यन्तदूरी-कार्यनरकस्तोमसमत्वज्ञापनम् (परमवैराग्यजननम् ), **मुक्त्युपायप्रारम्भे**—अपवर्गसाधनीभूत-विद्याचिन्तनारम्भकाले, **अभ्यर्हितं स्यात्**—अत्यन्तमावश्यकमेव भवेत् ; नैवाऽत्र संशयः, **स्पष्टदृष्टस्वदोषः (बोधः) खलु**—स्फुटप्रतिपन्नसोपाधिक-निरुपाधिकस्वस्वरूपवानेव खलु चेतनः, **इह**—विद्याख्यसाधनावलम्बने, **त्वरते**—अविलम्बेन प्रवर्तते (अतः साधनाध्यायादौ वैराग्यचिन्ता सफलतमैवेत्याशयः) ॥ ३ ॥

**अधिकरणारम्भः**

(272) देहाद्यं भोग्यनीत्या दिवि भुवि च गतौ तत्र तत्रैव लभ्यं
प्राणाद्यैर्भूतसूक्ष्मैरपि किमिह मुधा पूर्वदेहाद् गृहीतैः ।
जीवस्याणोर्गतिश्च स्वयमुपजनयेदीश्वरः प्राणनीत्या
मैवं स्वच्छन्दकॢप्त्ये श्रुतिमितनियतौ गौरवोक्तेरयुक्तेः ॥ ४ ॥

---

[1] स्वबोधः—चि.पा.

**गतौ**—जीवस्य देहाद्देहान्तरप्राप्तौ सम्भवन्त्याम्, **दिवि भुवि च**—स्वर्गे भूलोके वा, **भोग्यनीत्या**—भोगार्हाणि वस्तूनीव, **देहाद्यम्**—शरीरेन्द्रियादिभोगावच्छेदकं भोगसाधनमपि च, **तत्र तत्रैव**—नियतिवशतो यत्र यत्र गच्छति तस्मिंस्तस्मिन् स्थान एव, **लभ्यम्**—सुसम्पादम्, (एवं स्थिते) **पूर्वदेहात्**—त्यज्यमानात् प्राक्तनाद्देहात्, **मुधा**—निष्फलमेव, **गृहीतैः**—प्रयाणकाले स्वीकृतैः, **प्राणाद्यैः**—प्राणेन्द्रियादिभिः जीवनज्ञानादिसाधनैः, **भूतसूक्ष्मैरपि**—पञ्चभूतानां सूक्ष्मैरंशैरपि च देहान्तरनिष्पादनसाधनैः, **इह किम्**—गतागताश्रये जीवे को लाभः ? **अणोः**—परिच्छिन्नपरिमाणस्य—**जीवस्य**—चेतनस्य, **गतिं च**—देहाद्देहान्तरप्राप्तिरूपं गमनमपि, **प्राणनीत्या**—प्राणस्य गतिं यथा तथा तद्वदेव, **स्वयम्**—भूतसूक्ष्मादीनां सहकारमनवलम्ब्यैव, **ईश्वरः**—सर्वनियन्तृभूतः परमात्मा, **उपजनयेत्**—निर्वहेदेव ; न तु तत्रासमर्थो भवेत्, (अतः जीवस्य प्रयाणकाले भूतसूक्ष्मादिभिः सह गमनं नाभ्युपगन्तव्यम् ; गौरवात्—इति पूर्वपक्षे) **मैवम्**—ईदृश्या स्वकपोलकल्पितया युक्त्या श्रुतिविरुद्धार्थचिन्तनं माऽस्तु, **स्वच्छन्दकृत्ये**—ईश्वरस्य स्वसङ्कल्पमात्राधीने कार्ये, **श्रुतिमितनियतौ**—श्रुतिमात्रनिर्णेयसुव्यवस्थावति सति, (तद्विषये) **गौरवोक्तेः**—कल्प्येऽर्थे सम्भवतः लाघव-गौरवचिन्ताप्रयुक्तस्य व्यवहारस्य, **अयुक्तेः**—अयोगात्-असङ्गतत्वात् ॥ ४ ॥

(273) नानाजातीयराशिं व्यपदिशति जनो भूयसोंऽशस्य नाम्ना
प्राचुर्यादेव'मापः पुरुषवचस' इत्युच्यते भूतवर्गः ।
व्यष्टिं पञ्चीकृतैस्तैः सृजति हि ! स विभुस्तारतम्यं पुनश्च
'श्रद्धा'शब्दस्त्विहाऽपः कथयति निगमे तत्समाख्यावदुक्तेः ॥ ५ ॥

**जनः**—व्यवहर्ता लोकः, **नानाजातीयराशिम्**—विविधजात्याक्रान्तपदार्थघटितं समुदायम्, **भूयसोंऽशस्य नाम्ना**—तादृशसमुदायघटकीभूताधिकांशवाचकेन शब्देन, **व्यपदिशति**—व्यवहरति (इत्यानुभविकम्) **एवम्**—भूयोंऽशवाचकशब्दस्य तद्घटितसमुदाये प्रयोगनीतिमाश्रित्य, **प्राचुर्यात्**—भूतत्रया (भूतपञ्चका)त्मकसमुदाये (अपाम्) आधिक्यात्, (आधिक्यं निमित्तीकृत्य) **भूतवर्गः**—भूतानां स्तोमः, **'आपः पुरुषवचसः' इति**—उक्तश्रुतिवाक्ये 'अप्'शब्देन, **उच्यते**—व्यवहृत आस्ते इत्येतद्युक्तमेव, **व्यष्टिम्**—'व्यष्टि'पदाभिधेयं देहादिकं सृज्यं सर्वमर्थम्, **स विभुः**—समष्टिरूपार्थानां स्रष्टृत्वेन श्रुतिप्रतिपन्नः सर्वेश्वरः, **पञ्चीकृतैर्हि**—पञ्चीकरणाख्यं सृष्टियोग्यतापादकं संस्कारविशेषं प्राप्तैरेव हि, **तैः**—पञ्चभिर्भूतैः, **सृजति**—उत्पादयति, (अत एव च) **पुनश्च**—भूयोऽपि, **तारतम्यम्**—स्वरूप-स्वभावादिगतं नैरन्तर्येण सन्तन्यमानं वैलक्षण्यं च सम्भवति, **इह'श्रद्धा'शब्दस्तु**—पञ्चाग्निविद्यायां होम्यार्थ-

परतया प्रयुक्तः 'श्रद्धा' इत्ययं शब्दः परम्, **अपः कथयति**—जलाख्यमर्थमेव तदुपलक्षितभूत-सूक्ष्माण्येव अभिधत्ते ; (न तु आत्मसम्बन्धिनं मनोवृत्तिविशेषम्), **निगमे**—'श्रद्धा वा आपः' इत्यस्मिन् श्रुतिवाक्ये, **तत्समाख्यावदुक्तेः**—अब्वाचकशब्दतौल्येन श्रद्धाशब्द-प्रयोगदर्शनात् ॥ ५ ॥

(274) द्यौः पर्जन्योऽथ पृथ्वी तदनु च पुरुषो योषिदित्येवमेतान्
पञ्चाग्नीन् कल्पयित्वा परिकरसहितांस्तेषु पञ्चाग्निविद्या ।
श्रद्धाख्यं भूतसूक्ष्मं क्रमपरिणतितः सोमवर्षान्नरेतो-
रूपं हव्यं सजीवं तनुधरमरुतो जुह्वतीति ब्रवीति ॥ ६ ॥

**द्यौः**—द्युनामा सुकृतिचेतनप्राप्यः लोकः सुखानुभवौपयिकः, **पर्जन्यः**—पुण्योपरमानन्तरम् अवरोहणसमये प्राप्यः स्थानविशेषः (मेघापरपर्यायः), **अथ**—अनन्तरं प्राप्या, **पृथ्वी**—पृथिवी-पदवाच्यः स्थानविशेषः, **तदनु च**—तदनन्तरप्राप्यः, **पुरुषः**—पृथिवीसञ्जातसस्यप्रभवधान्यादि-भोक्ता देही चेतनः, **योषित्**—(पुरुषे रेतोभावाद्यनन्तरं तद्रुपेण प्राप्यः) स्त्रीरूपोऽर्थः, (अवरोहतो जीवस्य गर्भे धारयिता स्थानविशेषः), **इत्येवमेतान् पञ्च**—उक्ताकारानर्थान् पञ्चसंख्यान्, **परिकरसहितान्**—स्वस्वपरिकरैः यथाक्रमम् आदित्यादिभिः वाय्वादिभिः संवत्सरादिभिः वागादिभिः उपस्थादिभिश्च अग्निपरिकरत्वेन अध्यस्यमानैः युक्तान्, **अग्नीन् पञ्च कल्पयित्वा**—अग्निभावापन्नाः पञ्चेति अग्निधर्मसादृश्यतः अध्यस्य, **तेषु**—द्यु-पर्जन्य-पृथिवी-पुरुष-योषित्सु, **तनुधरमरुतः**—देहधारकाः प्राणाः, **श्रद्धाख्यम्**—आदौ श्रद्धेत्याख्या प्राप्तुमर्हम्, **क्रमपरिणतितः**—क्रमप्राप्तात् परिणाम (अवस्था) विशेषात्, **सोमवर्षान्नरेतो-रूपम्**—सोमराज इति वर्ष इति अन्नमिति रेत इति च रूपविशेषं प्राप्तम्, **सजीवम्**—अवरोहता जीवेन सहितम्, **भूतसूक्ष्मं हव्यम्**—सूक्ष्मभूतपञ्चकरूपम् अग्नौ प्रक्षेप्यसदृशम्, **जुह्वतीति**—प्रक्षिपन्तीति इममर्थम्, **पञ्चाग्निविद्या**—पंचाग्निविद्याख्यः छान्दोग्यसम्बन्धी औपनिषदः भागविशेषः, **ब्रवीति**—प्रतिपादयति ॥ ६ ॥

—o—

## (3) अधिकरणार्थसंग्रहः

एवम् आद्येन विषयद्विकाभिख्येन अध्यायद्वयेन—'चेतनाचेतनविलक्षणं निखिल-जगदेककारणं ब्रह्म'—इति स्थापितम् ।

विषयिद्विकाभिख्येन अनन्तराध्यायद्वयेन—'ब्रह्मप्राप्त्युपायैः सह तत्प्राप्तिप्रकारः चिन्त्यते ।

तत्र तृतीये उपासनाध्याये—उपायभूतम् उपासनं चिन्त्यते । तत्र जीवदोषपादे प्रथमे—जाग्रदाद्यवस्थस्य जीवस्य दोषाः । उभयलिङ्गपादे द्वितीये—परमात्मनः निर्दोषत्वं कल्याणगुणाकरत्वं च, उपासनारम्भाय प्राप्यव्यतिरिक्तवैतृष्ण्यजननार्थं प्राप्यतृष्णाजननार्थं च,—प्रतिपाद्यते ॥

तत्र तदन्तरप्रतिपत्त्यधिकरणे—देहाद्देहान्तरं गच्छन् जीवः, तत्र तत्र भूतसूक्ष्माणां सुलभत्वात्, तैः असम्परिष्वक्त एव गच्छति—इत्याशङ्क्य,

'वेत्थ यथा' इत्यादि प्रश्न-प्रतिवचनाभ्यां भूतसूक्ष्मसम्परिष्वक्त एव गच्छति—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

वैराग्यमुभयं लिङ्गं विद्या विद्याङ्गमेव च ।
तार्तीयीकाध्यायपादप्रधानार्था इमे मताः ॥ १११ ॥
कुतो मूर्तिप्रसङ्गः प्रागिह मूर्त्यन्तरग्रहे ।
तदन्तरनये भूतसूक्ष्मयोगो निरूप्यते ॥ ११२ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

—o—

## (70) कृतात्ययाधिकरणम् ॥ ३–१–२ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(107) 'प्राप्यान्त'मित्यादिभिरेव वाक्यैरायातु जीवो न तु कर्मशेषी ।
नैतत् फलं कर्मनिबन्धनं तु कपूयचारा इति च श्रुतत्वात् ॥ २ ॥

**प्राप्याऽन्त....वाक्यैः**—'प्राप्यान्तं कर्मणस्तस्य' इत्येवमादिभिः पुण्योपरमानन्तर-जीवावरोहप्रतिपादकैः श्रुतिवाक्यैः, **जीवः**—स्वर्गादिकर्मफलानुभवी चेतनः, **आयातु**—मर्त्यलोकमागच्छतीत्यभ्युपगम्यतां नाम, **कर्मशेषी तु न**—पूर्वकृतकर्मशेषरूपस्य अनुशयस्य आश्रयः सन् आयातीति तु नैवाङ्गीकर्तुं शक्यम्; (इति पूर्वपक्षे) **नैतत्**—न युक्तमेवं शङ्कनम्;

**फलं कर्मनिबन्धनं तु**—अवरोहानन्तरकालिकं उत्तमाधमकुलजन्मादिरूपं फलं तत्प्रयोजककर्महेतुकमेव, (न निर्हेतुकम् ; आकस्मिकत्वापत्तेः) **कपूयचाराः इति श्रुतत्वात् च**—' कपूयचरणाः कपूयां, रमणीयचरणाः रमणीयां योनिम् ' इति श्रुतौ स्पष्टीकृतत्वादपि कर्मशेषवानेव जीवः प्रत्यवरोहतीत्यङ्गीकार्यम् ॥ २ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 7-10)

(275) इष्टापूर्तादिरूपं तनुभृदिह शुभं कर्म यत्किंच कुर्याद्
भुक्त्वा कृत्स्नं तदन्ते पुनरवनिमियादित्यसद् दृष्टबाधात् ।
कार्त्स्न्येनेत्यश्रुतत्वात् सुकृतफलतया जाति-भोगाद्यधीते-
स्तस्मात् प्रारब्धशेषैस्तदितरसहितैरापतेत् स्वर्गपान्थः ॥ ७ ॥

**तनुभृत्**—देही जीवः, **इह**—पृथिव्याम्, **शुभम्**—सुखोदयहेतुभूतम्, **इष्टापूर्तादिरूपम्**—इष्टपदाभिधेयं यागादिकं, पूर्तपदवाच्यं तटाकारामनिर्माणादिकं, तथा दानादिकमपि वा, **यत्किंच कर्म कुर्यात्**—श्रौतं स्मार्तं वा आचाराद्यागतं वा यद्यत्कर्म अनुतिष्ठेत्, **कृत्स्नं भुक्त्वा**—तत्सर्वमपि स्वर्गादिफलरूपेणानुभूय, **तदन्ते**—निःशेषतादृशकर्मावसाने, **पुनः अवनिम् इयात्**—भूयः पृथिवीम् आगच्छेत्, नूतनकर्मार्जनाय, **इति असत्**—एवं शङ्कनमसाधु, **दृष्टबाधात्**—प्रत्यक्षतोऽवगम्यमानस्य चेतनगतस्य उत्तमाधमयोनिषु जन्मप्राप्तिरूपस्य फलवैषम्यस्य कर्मवैषम्यं विना अयोगात्, (विषमकर्मशेषस्य अवर्जनीयत्वात् ;) **कार्त्स्न्येनेति अश्रुतत्वात्**—'प्राप्यान्तं कर्मणः' इति श्रुतिवाक्ये कार्त्स्न्येन-अनवशेषेण अनुभूयेति अकथनात्, **सुकृतफलतया जाति-भोगाद्यधीतेः**—कर्मार्जितपुण्यपरिपाकतया जात्यायुर्भोगादिफलानां 'तद्य इह रमणीयचरणाः' इत्यादिश्रुतौ पठनात्, **तस्मात्**—उक्तादेतस्माद्धेतुजातात्, **स्वर्गपान्थः**—स्वर्गमार्गसञ्चारी चेतनः, **प्रारब्धशेषैः तदितरसहितैः**—अवशिष्टैः प्रारब्धकर्मभिः सञ्चितकर्मयुक्तैः, **आपतेत्** —प्रत्यवरोहेत् ; न कर्मशेषरहितः ॥ ७ ॥

(270) धूमं रात्रिं च पक्षं तिमिरकलुषितं दक्षिणावृत्तिमासान्
पश्चाल्लोकं पितॄणां गगनमपि मृतश्चन्द्रमभ्येति कर्मी ।
प्रत्यावृत्तौ तु चन्द्राद्गगन-सततगौ धूममभ्रं च मेघं
व्रीह्यादीन् याति रेतःसिचमथ जननीं यातनाचक्रवर्ती ॥ ८ ॥

**कर्मी**—इह काम्यबुद्ध्या कृतश्रौतस्मार्तादिकर्मा सन्, **मृतः**—देहवियोगं प्राप्तश्चेतनः (क्रमेण) **धूमं रात्रिम्**—धूमरूपं निशाख्यं च स्थानविशेषम्, **तिमरकलुषितं पक्षम्**—तमोदूषितं कृष्णाख्यं पक्षम्, **दक्षिणावृत्तिमासान्**—सूर्यस्य दक्षिणायनपरिवृत्तिहेतून् षट् मासान्, (दक्षिणायनाख्यं स्थानम्) **पश्चात्**—तदनन्तरम् **पितॄणां लोकम्**—पितृलोकाख्यं स्थानम्, **गगनमपि**—पश्चात् आकाशपदाभिधेयं स्थानम्, **चन्द्रम्**—ततः चन्द्रपदाभिधेयं स्थानविशेषं च, **अभ्येति**—(आरोहणकाले प्राप्य प्राप्य) याति। **प्रत्यावृत्तौ तु**—पुण्यकर्मणः फलान्यनुभूय पुनः भुवं प्रति अवरोहणवेलायां तु, **चन्द्रात्**—निशाकरात् (चन्द्राख्यात् स्थानात्) **गगन-सततगौ**—आकाश-वाय्वाख्यौ स्थानविशेषौ (लभते), **धूमम् अभ्रं च मेघम्**—धूमाख्यं स्थानं, जलधराख्यं स्थानम्, मेघपदवाच्यं जलवर्षणावस्थं स्थानम्, (ततः) **व्रीह्यादीन्**—व्रीहि-प्रभृतीन् चेतनैः भक्षणाद्यर्हान्, (ततः) **रेतः सिचम्**—योषिति रेतसः सेक्तारं प्राप्स्यमानपितृभावं पुरुषविशेषम्, **अथ**—तदनन्तरं च, **जननीम्**—मातृभावं प्राप्तुमर्हां स्त्रियं च, **यातनाचक्रवर्ती**—दुःखमयेषु चक्रवत् निरन्तरपरिवर्तनस्वभावेषु अस्थिरेषु स्थानविशेषेषु भ्रमन्नेव वर्तमानः जीवः **याति**—(स्थानात् स्थानान्तरं) प्राप्नोति ॥ ८ ॥

(277) आचारांशस्य साध्यं चरणवचनतो जाति-भोगादिकं स्यात्
कर्माचारौ विभक्तौ श्रुतित इति न सद् गत्यभावात् तथोक्तेः।
मुख्यं वृत्त्या हि! कर्मण्यपि चरणवचो नैकदेशे निरोध्यं
जात्यादिः कर्मभेदप्रभव इति[1]मिते चिन्त्य[1]माहारसाध्यम् ॥ ९ ॥

**चरणवचनतः**—'रमणीयचरणाः, कपूयचरणाः' इति श्रुतिप्रयुक्तात् 'चरण' शब्दात्, **आचारांशस्य साध्यम्**—(श्रौतादिकर्मभिः (सामयिकादिभिः) सन्ध्यादिभिराचारैश्च अनुष्ठेयतया सिद्धैरपि) तयोर्मध्ये आचारपदवाच्यार्थसम्पाद्यम्, **जाति-भोगादिकं स्यात्**—सदसदादियोनिजन्म दीर्घ-मध्याल्पाद्यायुः—उत्तम-मध्यमादिभोगादिफलं च सम्पद्यते, **कर्माचारौ**—कर्मपदाभिधेयोऽर्थः आचारपदवाच्योर्थश्च, **श्रुतितः**—'अनवद्यानि कर्माणि, अस्माकं सुचरितानि' इत्येवंरूपात् श्रुतिवचनात्, **विभक्तौ**—पृथक्स्वरूपौ खलु वर्णितौ **इति न सत्**—एवं शङ्कनमसाधु, **तथोक्तेः**—कर्माचारयोः विविक्तस्वरूपतोक्तेः, (तादृशशङ्कात्मिकायाः उक्तेः, **गत्यभावात्**—निर्वाहकाभावात्, **हि**—यतः, **चरणवचः**—'रमणीयचरणाः' इति

---

[1] मितेऽचिन्त्य - चि. पा.

प्रयुक्तं चरणपदम्, **कर्मण्यपि**—यागादौ विहितकर्मण्यपि (आचारे इव) **वृत्त्या मुख्यम्**—शब्दवृत्तिकृतपुष्कलप्रवृत्तिनिमित्तवदेव ; न गौणवृत्तिकम् ; अतः, **एकदेशे**—अन्यतरमात्रे, **न निरोध्यम्**—न निरुद्धवृत्तिकतया वर्णयितुं शक्यम्, **जात्यादिः**—जन्म, आयुः, भोगश्च, **कर्मभेदप्रभवः**—विलक्षणकर्मसाध्यः, **इति मिते**—इत्येवम् आर्षवचनैः प्रमाविषयीकृते सति, **आचारसाध्यम्**—आचारैः सन्ध्यादिभिः सम्पाद्यम्, **चिन्त्यम्**—शास्त्रार्थावधारणसंस्कृतेन मनसा सावधानं विचिन्त्य निर्णेयम्; न निष्फलतया निर्णेयम् ॥ ९ ॥

(278) प्राप्ताचारातिवृत्तौ प्रतिपदमृषयः सस्मरुः प्रत्यवायान्
प्राचीनांहःप्रणाशं तदनुसरणतः पुण्यकर्मार्हतां च ।
नाऽतः सत्कर्ममात्रात् त्रिदिव इति धिया तत्परित्यागशङ्का
न ह्याचारप्रहीणे श्वदृतिजलसमः शोधको वेदवर्गः ॥ १० ॥

**प्राप्ताचारातिवृत्तौ**—पारम्परिकतया आगतस्य सन्ध्यादेराचारस्य अकरणतः अतिलङ्घने क्रियमाणे सति, **प्रत्यवायान्**—पतनादिरूपान् दोषान्, **ऋषयः**—धर्माधर्मस्वरूपज्ञाः महर्षयः, **प्रतिपदम्**—पदे पदे, भूयो भूयः, **सस्मरुः**—स्वीयासु स्मृतिषु प्रतिबोधितवन्तः, **तदनुसरणतः**—प्राप्तानामाचाराणामनुष्ठानात्, **प्राचीनांहःप्रणाशम्**—पूर्वार्जितानामघानां क्षयम्, **पुण्यकर्मार्हतां च**—स्वर्गादिप्रदसत्कर्मानुष्ठानयोग्यतामपि च स्मृतिषूक्तवन्तः । **अतः**—आचारोल्लङ्घने प्रत्यवायात् अनुष्ठाने पापनाशादिसम्पत्तेश्च सत्त्वात्, **'सत्कर्ममात्रात् त्रिदिवः' इति धिया**—'यागादिविहितकर्मानुष्ठानमात्रतः स्वर्गः' इति बुद्ध्या, **तत्परित्यागशङ्का न**—सन्ध्याद्याचारत्यागशङ्का न कार्या, **वेदवर्गः**—जगत्पावनभूतः श्रुतिसमूहोऽपि, **आचारप्रहीणे**—परित्यक्तसन्ध्याद्याचारे जने, **श्वदृतिजलसमः**—श्वचर्मनिक्षिप्तोदकसदृशः सन्, **न हि शोधकः**—पवित्रतापादको न भवति ॥ १० ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

कृतात्ययाधिकरणे—लोकान्तरात् प्रत्यवरोहन् जीवः, 'प्राप्याऽन्तं कर्मणः' इत्यादिभिः लोकान्तरे कृत्स्नकर्मफलानुभवस्योक्तत्वात्, कर्मशेषरहित एव प्रत्यवरोहति—इत्याशङ्क्य,

'तद्य इह रमणीयचरणाः' इत्यादिभिः प्रत्यवरूढानां पुण्य-पापश्रवणात् 'प्राप्यान्तं' इत्यादेश्च फलदानप्रवृत्तकर्मविषयत्वात्, कर्मशेषरहित एव प्रत्यवरोहति—इत्युक्तम् ॥

(4) **नयसङ्गतिमालिका ॥**

अथैकभविकन्यायात् कर्मशेषविलोपने ।
मुक्तशिष्टस्य सम्बन्धः कृतात्ययनयोदितः ॥ ११३ ॥

इति कृतात्ययाधिकरणम् ॥ २ ॥

—o—

## (71) अनिष्टादिकार्यधिकरणम् ॥ ३–१–३ ॥

(1) **शारीरकन्यायकलापसंग्रहः ॥**

(108) ये वै च केऽपीत्यविशेषशब्दात् धूमादिकं केवलपापिनां च ।
इति त्वसत् स्यादथ येति वाक्यात् पुण्यावलम्बी[1]तु विशेष[1]शब्दः ॥ ३ ॥

**ये वै च केऽपीत्यविशेषशब्दात्**—'ये वै के चाऽस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्येवम् अविशेषतः (समानतया) सर्वबोधकसामान्यशब्दश्रवणात्, **केवलपापिनां च**—इष्टापूर्तादिकमकृतवतां पापमात्रकारिणामपि, **धूमादिकम्**—प्रयाणमार्गे स्थानभूतं धूम-रात्रि-प्रभृतिकं वर्तत एव, **इति तु असत्**—एवं शङ्कनमसाधु, **अथ य इति वाक्यात्**—'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते....ते धूममभिसम्भवन्ति' इति वाक्यस्य श्रूयमाणत्वात्, ('ये वै के च' इत्यादिः उक्तवाक्यात्मकः शब्दः) **पुण्यावलम्बी**—इष्टादिपुण्यनिबन्धनः सन्, **विशेषशब्दस्तु स्यात्**—पुण्यकर्मिरूपविशिष्टाधिकारिबोधकः शब्द एव भवितुमर्हति ; न तु सुकृति-दुष्कृतिनोः अविशेषेण बोधकः ॥ ३ ॥

—o—

(2) **अधिकरणसारावलिः ॥** (श्लो. 11–12)

(279) सर्वेषां देहपाते सति नियमवती चन्द्रमः प्राप्तिरुक्ता
तस्मात पापोत्तगणां निरयगतिपुरस्कारिणी सेति चेन्न ।
लोकः सम्पूर्यते तैर्न पर इति गिरा संकुचेत् सर्वशब्द-
स्तेऽतस्तद्यातनान्ते तत इह सहसा कुत्सितां यान्ति योनिम् ॥ ११ ॥

---

[1] स्वविशेष—श्री.

**सर्वेषाम्**—इष्टादिकारिणाम् अनिष्टादिकारिणां चेति समस्तानामपि देहिनाम्, **देहपाते सति**—प्राप्तस्य शरीरस्य पतने (मरणे) सम्प्राप्ते सति, (तदनन्तरम्) **नियमवती**—अवश्यं भाविनी, (अनिवार्या) **चन्द्रमःप्राप्तिः**—चन्द्ररूपस्थानसमागतिः, **उक्ता**—'चन्द्रमसमेव ते सर्वे गच्छन्ती'ति श्रुतौ पठिता, **तस्मात्**—श्रुत्युक्तत्वाद्धेतोः, **पापोत्तराणाम्**—केवलपापकारिणाम्, **सा**—चन्द्रसमागतिः, **निरयगतिपुरस्कारिणी**—नरकप्राप्तिसमनन्तरभाविनी, **इति चेत् न**—एवं शङ्कनं न युक्तम्, **'तैः परः लोकः न सम्पूर्यते' इति गिरा**—'पापमात्रकारिभिः (चन्द्राख्यः) परलोकः पूरितो न भवति' इत्यर्थिकया 'तेनाऽसौ लोको न सम्पूर्यते' इति श्रुतिवाचा, **सर्वशब्दः**—'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति वाक्यस्थः 'सर्व'शब्दः, **सङ्कुचेत्**—इष्टादिकारिसर्वमात्रविषयकः सन् असङ्कोचेन सर्वबोधको न भवेत्।

**अतः**—तद्वाक्यस्थसर्वशब्दस्य इष्टादिपुण्यकृत्सर्वविषयकत्वात्, **ते**—केवलपापकारिणः, **तद्यातनान्ते**—तदनुभाव्यनारकवेदनावसाने, **ततः**—नारकवेदनानुभवस्थानतः **सहसा**—हठादेव, आहुतिपञ्चकमनपेक्ष्यैव, **इह**—भूलोके, **कुत्सितां योनिम्**—स्वसङ्गतपापशेषफलानुभवौपयिकीम् पापयोनिम् **यान्ति**—प्रतिपद्यन्ते ॥ ११ ॥

(280) जन्मप्राप्तिर्जरायुप्रभृतिषु भविनां कर्मपाकैर्विचित्रा
भूयिष्ठैः पुण्य-पापै(स्व)रपवदनवती पञ्चमाहुत्यपेक्षा ।
तद्वद् धूमादिमार्गः कति कति च शुभैरुत्कटैर्देहपाते
दिव्यं रूपं विमानादिकमपि सपदि प्राप्य याताःप्रसिद्धाः ॥ १२ ॥

**भविनाम्** संसरणप्रवृत्तानां जीवानाम्, **कर्मपाकैः**—तत्कर्मणां परिणामविशेषैः, **जरायुप्रभृतिषु**—गर्भवेष्टनचर्मपुटे अण्डादौ च, **जन्मप्राप्तिः**—शरीरागतिः, **विचित्रा**—अवर्णनीयस्वरूपा अत्यद्भुता वर्तते, **पञ्चमाहुत्यपेक्षा**—जन्मलाभे श्रुतिसिद्धायाः पञ्चम्या आहुतेः आवश्यकताऽपि, **भूयिष्ठैः पुण्य-पापैः**—प्राप्तातिशयेन पुण्यकलापेन, तादृशेन पापकलापेन च, **अपवदनवती**—औत्सर्गिक्येव; न निरपवादा सती सार्वत्रिकी, (विशिष्टाभ्यां पुण्य-पापाभ्यां जन्मापि विशिष्टं भवितुमर्हम्) **तद्वत्**—जन्मलाभे पञ्चम्या आहुतेः सापवादत्वमिव, **धूमादिमार्गः**—धूमादिमार्गतः प्रयाणमपि सापवादमेव, **कति कति**—कियन्तोऽनेके चेतनाः, **उत्कटैः शुभैः**—अतिशयितैः पुण्यैः साधनभूतैः, **देहपाते**—प्राप्तदेहस्य पतनकाले, **दिव्यं रूपं विमानादिकमपि**—स्वर्गिप्राप्यं विलक्षणं रूपविशेषम्, (तथा) प्राप्यस्थानं प्रति गमनसाधनं दिव्यविमानप्रभृतिकमपि, **सपदि**—तत्क्षण एव, **प्राप्य**—दैवानुग्रहात् लब्ध्वा, **याताः**—स्वर्गादिकं लोकं गतवन्तः, **प्रसिद्धाः**—इतिहास-पुराणादौ श्रुतचराः ॥ १२ ॥

——o——

(3) अधिकरणार्थसङ्ग्रहः ॥

अनिष्टादिकार्यधिकरणे—'ये वै के चाऽस्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति' इति अविशेषेण सर्वेषां गतिश्रवणात्, पापकारिणोऽपि चन्द्रमसं गच्छन्ति—इत्याशङ्क्य,

'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इत्युक्त्वा, 'ते धूममभिसम्भवन्ति' इत्यादिना इष्टादिकारिणामेव पितृयाणश्रवणात्, 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति वचनस्याऽपि इष्टादिकारिविषयतया नेयत्वात्, पापकारिणः चन्द्रमसं न गच्छन्ति—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

प्राक्छ्रुतेष्टापूर्तदत्तकारिणां चन्द्रमोगतिः ।
आशङ्क्य सैषाऽनिष्टादिकारिणां प्रतिषिध्यते ॥ ११४ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

—o—

## (72) तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ३–१–४ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(109) तद्देहता स्याद्वियदादिभावः सोमत्ववन्नाऽस्ति यतो विशेषः ।
नैवं न भोगोऽस्ति यतोऽत्र तस्मात् सादृश्यमेवाऽत्र न तत्तनुत्वम् ॥ ४ ॥

**वियदादिभावः**—अवरोहतो जीवस्य श्रुतावुक्तः आकाशादिभावः, **तद्देहता स्यात्**—आकाशादिशरीरकतैव भवितुमर्हति, **सोमत्ववत्**—सोमभावो यथा सोमशरीरकत्वम् तद्वत्, **नास्ति यतो विशेषः**—तयोः सोमभावाकाशभावयोः यस्माद्वैषम्ये हेत्वभावः, (इति शङ्कने) **नैवम्**—उक्तरीत्या शङ्कनं नोचितम्, **अत्र**—आकाशभावे, **यतः भोगः न अस्ति**—यस्मात् भोगपदाभिधेयसुख-दुःखानुभवप्रसङ्गो जीवस्य नास्ति, **तस्मात्**—ततो हेतोः, **अत्र**—आकाशभावे, **सादृश्यमेव**—आकाशसादृश्यमेव विवक्षितं; **न तत्तनुत्वम्**—न तु आकाशशरीरकत्वं जीवस्य ॥ ४ ॥

—o—

## (2) अधिकरणसारावलिः

(281) आहुत्योर्देहवत्त्वं प्रथमचरमयोर्निर्विवादं तथा स्या-
जन्मैवाऽऽकाश-वायुप्रभृतिषु भवतेरन्वयादित्यसारम् ।
रेतःसिग्भावनीत्या पृथगभिलपनानर्हतामात्र(मेव)मत्र
द्युक्वोः(द्युभ्वोः) पुण्यप्रसाध्यं फलमिह पठितं नाऽस्ति भोगश्च मध्ये ॥१३॥

**प्रथम-चरमयोः आहुत्योः**—'देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा-सम्भवति' इत्युक्तायां सोमभावापादिकायाम् आद्यायामाहुतौ(तथा)'पुमान् रेतः सिञ्चति.... पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युक्तायां पुरुषभावापादिकायां चरमायामाहुतौ च, **देहवत्त्वं निर्विवादम्**—तत्तच्छरीरकत्वात्मकं देहसम्बन्धित्वं अविप्रतिपन्नं यथा, **तथा**-तयैव रीत्या, **आकाश-वायुप्रभृतिषु** आकाश-वाय्वादिभावस्थलेऽपि, **जन्मैव स्यात्**—देहपरिग्रह एव तत्तद्भावो-भवितुमर्हति, **भवतेः अन्वयात्**—आद्यन्तयोः श्रुतस्य 'भू' धातोः अत्रापि सम्बन्धात (तस्य च विषमरूपतायां हेत्वभावात्) **इत्यसारम्**—एवं चिन्तनं अदृढम् (स्थापकयुक्तिदूरम्) **रेतःसिग्भावनीत्या**—'यः रेतः सिञ्चति तद्भूय एव भवति' इत्युक्तरेतःसिक्पुरुषभावापत्ति-न्यायेन, **अत्र**—आकाशादिविषये, **पृथग....मात्रम्**— पृथक्प्रतिपत्ति व्यवहाराद्यनर्हः सम्बन्ध-विशेष एव आकाशादिभावशब्देन विवक्षितः; न तत्तच्छरीरकत्वरूपः सः **इह**—अस्मिन् प्रकरणे, **द्युक्वोः**—दिवि भुवि च, **पुण्यप्रसाध्यम्**—सुकृतसम्पादनीयम्, **फलम्**—भोगरूपं प्रयोजनम्, **पठितम्**—श्रुतौ आद्यन्ताहुत्योरुक्तम्, **मध्ये च**—देवभावादनन्तरं मर्त्यभाव-प्राप्तेरर्वाक् (एतयोरन्तरा), **भोगः नास्ति**—पुण्यफलानुभवप्रसक्तिर्न वर्तते; तेषु तेषु स्थाने-ष्ववस्थितिमात्रमिति ॥ १३ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

तत्स्वाभाव्यापत्त्यधिकरणे—'अथैतमेवाऽध्वानं पुनर्निवर्तन्ते यथेतमाकाशम्, आकाशा-द्वायुं, वायुर्भूत्वा धूमो भवति' इत्यादिवाक्ये, जीवस्य आकाशाद्यवस्थापत्तिः, श्रद्धावस्थस्य सोमभाववत्, अविशेषात् आकाशशरीरकत्वापत्तिः—इत्याशङ्क्य,

सोमभावे इव, आकाशादौ सुख-दुःखभोगाभावेन तच्छरीरकत्वानुपपत्तेः, आकाशा-द्यापत्तिर्नाम—तत्संयोगकृततत्सादृश्यापत्तिः—इत्युक्तम् ॥

—o—

### (4) नयसंगतिमालिका ॥

इष्टादिकारिणामत्र मृगाङ्कादवरोहताम् ।

तत्स्वाभाव्यापत्तिनीत्याऽभ्रादिभावपरिष्क्रिया ॥ ११५ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

— o —

## (73) नातिचिराधिकरणम ॥ ३-१-५ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(110) आव्रीहिभावादचिराच्चिराद्वा सन्तिष्ठतेऽयं नियतेरभावात् ।

नैवं विशङ्क्यं परतो विशेषादतो [1]हि[1] दुर्निष्प्रतमित्यमुष्मात् ॥ ५ ॥

**अयम्**—पुण्यफलानुभवादनन्तरं भुवं प्रति अवरोहन् जीवः, **आव्रीहिभावात्**—व्रीहित्वापत्तिपर्यन्तम्, **अचिरात् चिराद्वा**—अविलम्बेन विलम्बेन वा, **सन्तिष्ठते**—अवस्थायावस्थाय प्रयाति, (कुतः ?) **नियतेः-अभावात्**—अन्यतरपक्षनियामकाभावात्, ( इति पूर्वपक्षे ) **एवं न विशङ्क्यम्**—उक्तया रीत्या न शङ्कनीयम्, **'अतो हि दुर्निष्प्रतम्' इत्युमुष्मात्**—'अतो वै खलु दुर्निष्प्रपतरम्' इत्यस्मात् वाक्यात्, **परतः**—व्रीह्यादिभाववेलायाम्, **विशेषात्**—स्थानात् स्थानान्तरप्राप्तौ निष्क्रमणस्य कृच्छ्रसाध्यतारूपस्य अवगमात् 'आदौ आकाशादिभावकाले अविलम्बः, व्रीह्यादिभावसमये विलम्बः' इति निश्चीयते ॥ ५ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(282) व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहानेः

शुक्लावस्थानयात् स्यादनियतिरिति न स्वारसिक्याः प्रवृत्तेः ।

व्रीह्यादिभ्यो हि ! [2]दुर्निष्प्रपतरमिति तु[2] श्रूयते तेन पूर्वं

शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते वाक्यशक्त्या ॥ १४ ॥

---

[1] न—क. ग. [2] दुर्निष्प्रपततरमिति—को. पा.

**व्योमादिस्थित्यवस्था**—अवरोहतो जीवस्य आकाशादौ अवस्थितिरूपा श्रुत्युक्ता (अवस्था) दशा, **शुक्लावस्थानयात्**—रेतःसङ्गतावस्थायां विलम्बाविलम्बनियमाभावो यथा तद्वत्, **अनियतिः**—शैघ्र्य-विलम्बरूपनिश्चितकालावधिशून्यैव, **चिरम् अचिरमिति व्यक्त-निर्देशहानेः**—विलम्बबोधकेन चिरादिशब्देन शैघ्र्यबोधार्थकाचिरादिशब्देन वा श्रुतौ स्फुट-निर्देशस्याभावात्, (इति पूर्वपक्षे) इति **न**—एवं शङ्का नोचिता, **स्वारसिक्याः प्रवृत्तेः**—स्वभावसिद्धायाः श्रुतिवाक्यगतायाः बोधनार्थव्याप्तेरेव अन्यतरपक्षनिश्चायकत्वात्। **हि**—यतः, **व्रीह्यादिभ्यः**—जीवावस्थितिस्थानभूतेभ्यः व्रीह्यादिरूपेभ्यः अर्थेभ्यः (अवधिभूतेभ्यः) **दुर्निष्प्रपतरमिति श्रूयते**—दुःखतरनिष्क्रमणसाध्यताबोधकः 'दुर्निष्प्रपततरम्' इत्ययं शब्दः लुप्तैकतकारः श्रुतौ पठ्यमानोऽस्ति, **तेन**—व्रीह्यादिभावात् निष्क्रमणविलम्बबोधकश्रौतशब्दारुय-नियामकसत्त्वेन, **पूर्वम्**—आकाशादिभावदशारूपपूर्वतनकाले, **शीघ्रम्**—अविलम्बेनैव, **तत्तद्दशायाः**—आकाश-वाय्वभ्रमेघाद्यवस्थायाः, **त्यजनमिति**—प्रहाणमिति, **वाक्यशक्त्या**—श्रुतिवाक्यगतया आवश्यकार्थबोधनशक्त्या, **परिज्ञायते**—असन्दिग्धं निश्चीयते ॥ १४ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

नातिचिराधिकरणे—जीवस्य आकाशादिप्राप्तौ तत्र तत्रावस्थाने कालविशेषनियमो नास्ति ; विशेषहेत्वभावात्—इत्याशङ्क्य,

व्रीह्यादिप्राप्तौ, 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभि-धानात्, आकाशादिप्राप्तौ अचिरेण निष्क्रामति—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

अभ्रादिभावावस्थायां चिराचिरविचारणा ।

कृता नातिचिरन्याये जीवदुःखप्रसिद्धये ॥ ११६ ॥

इति नातिचिराधिकरणम् ॥ ५ ॥

—o—

## (74) अन्याधिष्ठिताधिकरणम् ॥ ३–१–६ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(111) 'जायन्त' [1]इत्येव[1] विशेषशब्दाद् व्रीह्यादिदेहास्तु भवन्ति जीवाः ।
नैतत् तु गौणं जननाभिधानं तद्धेत्वभावात् परतस्तु भावात् ॥ ६ ॥

**'जायन्त' इत्येव विशेषशब्दात्**—'जायन्ते' इत्येवं शरीरसम्बन्धात्मकजन्मवाचकस्य विशेषशब्दस्यैव सत्त्वात् ('व्रीहियवा....जायन्ते' इति), **जीवाः**—स्वर्गादिरूपात् स्थानविशेषादवरोहन्तो जीवाः, **व्रीह्यादिदेहास्तु**—व्रीहियवादिशरीरका एव सन्तः, **भवन्ति**—जन्मभागिनो भवन्ति ; (न तु तत्संश्लेषमात्रवन्तः), इति शङ्कने, **एतत् न तु**—इदं शङ्कनं नैव साधु, **जननाभिधानम्**—'जायन्ते' इत्यनेन उत्पत्तेर्वर्णनम् , **गौणं तु**—अवस्थान्तरप्राप्तिमात्रतः औपचारिकमेव, (न तु जन्माख्यावस्थाविशेषप्रतिपादनेन मुख्यम् ), **तद्धेत्वभावात्**—व्रीहिभावेन भोगापादकस्य कर्मणः अनवशेषात् , **परतस्तु भावात्**—अनन्तरप्रतिपादितपञ्चमाहुतिसम्पत्त्यनन्तरमेव देहापादकस्य तद्द्वारा भोगापादकस्य च रमणीय-कपूयादिकर्मणः सद्भावतः व्याप्तिप्रतिपादनात् ॥ ६ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(283) जन्म व्रीह्यादिनाम्ना श्रुतमिह तदिदं देवमर्त्यत्ववत् स्या-
न्नैगम्यं स्थावराणां न च निगमविदः स्थापयन्तीति चेन्न ।
पुण्यस्यैव प्रवृत्ते फलपरिगणने स्थावरत्वोक्त्ययोगाद्
रेतःसिग्वर्ष्मणीव ह्युपचरति जनिं स्थावरेऽप्यन्यदेहे ॥ १५ ॥

**व्रीह्यादिनाम्ना**—व्रीहि-यवादिना अभिधायकशब्देन सम्बद्धुमर्हम् , **जन्म**—जन्मपदाभिधेयं शरीरग्रहणम् , **इह श्रुतम्**—पञ्चाग्निविद्याप्रकरणे 'त इह व्रीहियवा....जायन्ते' इति वाक्ये पठितम्, **तदिदम्**—श्रुतौ पठितमेतत् व्रीह्यादिभावेन जन्मवर्णनम्, **देव-मर्त्यत्ववत् स्यात्**—'देवो मनुष्यो जायते' इति देवभावमापन्नस्य मनुष्यभावापत्तिवत् पूर्वं स्वर्गिणः, सतो देवस्य व्रीह्यादिभावापत्तिरित्येव युक्तं भवेत् , **निगमविदः**—वेदमार्गनिपुणाः, **स्थावराणाम्**—

[1] इत्यादि—ग.

वृक्षौषध्यादीनामचराणाम्, **नैरात्म्यम्**—आत्मानधिष्ठितत्वम्, **न च स्थापयन्ति**—नैव व्यवस्थापयन्ति, (चतुर्विधस्याऽपि देहस्य आत्माधिष्ठाननैयत्यात्) **इति चेत्**—(अतः अवरोहन् जीवः व्रीह्यादिशरीरक एव) इति शङ्कने. **न**—इदं न साधु, **प्रवृत्ते**—वर्णयितुमारब्धे, **पुण्यस्यैव फलपरिगणने**—पुण्यमात्रफलकमप्रसङ्ख्याने, **स्थावरत्वोत्त्ययोगात्**—स्थावरत्वरूपकर्मदोषफलवर्णनस्य अनौचित्यापत्तेः, (अतः) **रेतःसिग्वर्ष्मणीव**—रेतःसेक्तृपितृशरीरे इव (भविष्यत्पुत्रभावस्य चेतनस्य, संश्लेषमात्ररूपः पितृदेहे योग इव) **स्थावरे**—अजङ्गमे, **अन्यदेहेऽपि**—आत्मान्तराधिष्ठितेऽपि देहे, **जनिम्**—जन्मबोधकं जन् धातुम्, **उपचरति**—गौण्यावृत्त्या प्रयुङ्क्ते श्रुतिः । संश्लेषमात्रमेव जन्मेति उपचारतः श्रुतिर्व्यवहरतीति वार्थः ।। १५ ।।

(284) हिंसायोगादशुद्धं श्रुतिविहितमपि न्याय्यमिष्टादिकं तत्
पापांशं व्रीहिभावप्रभृतिषु सुकृती भुङ्क्त इत्यप्ययुक्तम् ।
उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सा'वदेषा[1]
ब्रूते यज्ञे वधोऽसाववध इति मनुः स्तौति निन्दाविदाऽन्यत् ।। १६ ।।

**इष्टादिकम्**—यागादिरूपं कर्म, **श्रुतिविहितम्**—चेतनेषु वत्सलतरेण वेदाख्येन शास्त्रेणैवोपदिष्टम्, **न्याय्यमपि**—हितप्रवृत्तेन शास्त्रेणैव विहितत्वात् न्यायादनपेतमपि (अथापि) **हिंसायोगात्**-(पशुयागादौ पशुसंज्ञपनकृता) वर्ज्य प्राणिहिंसा सम्बन्धात् **अशुद्धम्**- पापसंवलितमेवास्ति, **तत्**—तस्माद्धेतोः **सुकृती**—इष्टादिपुण्यकर्मकृत् चेतनः, **पापांशम्**—श्रुतिप्रतिपादितस्वर्गसुखप्रदे कर्मणि सम्बद्धमेकदेशभूतं पापम्, **व्रीहिभावप्रभृतिषु**—स्वेन प्राप्तेषु व्रीहियवादिस्थावरभावेषु, **भुङ्क्ते**—फलद्वारा अनुभवति (अतः अवरोहतो जीवस्य स्थावरभावः पुण्यफलानुभवानन्तरकालिकः पापफलानुभव एवेति, तस्य मध्ये कथनमपि नानौचित्याय) **इत्यप्ययुक्तम्**—एवं शङ्कनमपि नोचितम्, **सा**—पापत्वेनाशंक्यमाना पशुप्राणवियोगौपयिकव्यापारात्मिका हिंसा, **मन्त्रार्थवादैः**—'न वा उवेतन्म्रियसे' इत्यादिभिर्मन्त्रैः, 'हिरण्यशरीरः' इत्येवंप्रभृतिभिरर्थवादैश्च, **पशुहितमिति उक्ता**—पशोः भाविसुखहेतुत्वेन हितात्मिकेति परिगणिता, **तत्**—हितरूपत्वात्, **एषा**—हिंसात्वेन शंक्यमाना पशुमारणक्रिया, **चिकित्सावत्**—वैद्यस्य भैषज्यव्यापारसदृशी ; न घातुकव्यापारसदृशी, **मनुः**—वैदिको मन्त्रविशेषः, मन्वाख्यऋषिर्वा, **यज्ञे**—श्रौते देवयजने, **असौ वधः**—पशुसंज्ञपनादिरूपः वधत्वेन शङ्क्यमानः

[1] वदेषाम्—पद.पा

व्यापारविशेषः, **अवध इति**—पापाजनकतया वस्तुतो वधपदवाच्य एव न भवतीति **ब्रूते**—वक्ति, **इह निन्दा तु**—यज्ञादिकर्मविषये हिंसात्वकथनतो निन्दा परम्, **अन्यत्**—कर्मण इतरत् ज्ञानम्, **स्तौति**—प्रशंसति ('नश्वरे स्वर्गादिसुखे न यतेत; शाश्वते मोक्षे एव यतेत' इत्येतद्बोधयति) ॥ १६ ॥

(285) कर्तुर्दोषं दिशेत् संज्ञपनमिह पशोस्तत् क्रतोश्चोपकुर्यात्
तस्मादस्मिन्निषेधं क्षिपति न विधिरित्यब्रुवन् सांख्यभक्ताः ।
निर्धूते पश्वनर्थे न खलु तदुचितं पिष्टपश्वादिकल्प-
स्तत्तत्कालाधिकारिप्रतिनियत इति क्वाऽपि न स्याद्विरोधः ॥ १७ ॥

**इह**—पशुयागादौ श्रौते कर्मणि, **पशोः संज्ञपनम्**—पशुविशसनरूपो व्यापारः, **कर्तुः**—पशुना यागं कुर्वाणस्य पुरुषस्य, **दोषं दिशेत्**—प्राणिहिंसानिमित्तं पापं जनयतु, **क्रतोश्च**—यागस्याऽपि, **उपकुर्यात्**—अतिशयाधानं करोतु नाम, अनयोः को विरोधः? **तस्मात्**—पुरुषदोषावहत्व-क्रतूपकारकत्वयोर्विरोधाभावात्, **विधिः**—'पशुमालभेत' इत्ययं पश्वालम्भनविधिः, **अस्मिन् निषेधम्**—'न हिंस्यात्' इतीमं हिंसासामान्यप्रतिषेधं श्रुत्यन्तसिद्धम्, **न क्षिपतीति**—अपवादतामाश्रित्य बाधते इति, **सांख्यभक्ताः**—सांख्यानुसारिणः **अब्रुवन्**—उक्तवन्तः, **पश्वनर्थे**—यागस्य पशुहिंसनात्मकत्वे, **निर्धूते**—पशुस्वर्गज्ञापकैः श्रौतैर्वाक्यैः निवारिते सति, **तत्**—(उत्सर्गापवादभावाश्रयणेन विना) कर्तृदोषापादकत्व-क्रतूपकारकत्वयोः विषययोः पृथक्करणेन समीकरणे यतनम्, **नोचितं खलु**—न हि युक्तं भवति, **पिष्टपश्वादिकल्पः**—पिष्टमयं पशुमाश्रित्य यागनिर्वहणप्रकारस्तु, **तत्तत्का....नियत इति**—कालविशेषाधिकारिविशेषानुविधायिव्यवस्थावलम्बीति, **क्वापि**—कस्मिन्नपि विषये, **विरोधः न स्यात्**—वैघट्यं नैव प्राप्नोति (इति यथाव्यवस्थं सर्वं समञ्जसमेव) ॥ १७ ॥

(286) किंचोत्सर्गापवादक्रममिह जहतः कीदृशी नित्यहिंसा
शुद्धं न क्वापि सिध्येत् तव हि विधिपदं [1]स्पृष्ट[1]तत्तन्निषेधम् ।
यत्राऽसत्यादि वैधं तदनु च विहिता निष्कृतिस्तन्निमित्ता
तत्राऽगत्या तथा स्यादितरवदथवा केवलं तन्निमित्तम् ॥ १८ ॥

**किं च**—अपि च, **इह**—सामान्य-विशेषविधिस्थले, **उत्सर्गापवादक्रमम्**—'विशेषविधिविषयव्यतिरिक्तविषयकत्वं सामान्यविधेः' इत्येवंरूपं उत्सर्गापवादन्यायम्, **जहतः**—

---

[1] स्पष्टा—ब.पा.

अनभ्युपगच्छतः साङ्ख्यादेः, **नित्यहिंसा**—अकरणे प्रत्यवायं निविवारयिषोः स्वर्गादिके फले अनाकाङ्क्षस्य ज्योतिष्टोमादिनित्यकर्मानुष्ठाननान्तरीयका पश्वालम्भनादिजन्या हिंसा, **कीदृशी**—रागतो जन्येति वा विधितः प्राप्तेति वा कीदृशीति निश्चेतुं शक्या ? **तव**—उत्सर्गापवादन्यायत्यागिनस्तव, **शुद्धम्**—पापमिश्रतारहितं (विधिविषयतावत्) **क्वापि**—यत्र कुत्रापि, **न सिध्येत्**—नैव लब्धस्वरूपं भवेत्, **हि**—यतः, **विधिपदम्**—विधिगोचरीभूतं सर्वमपि, **स्पृष्टतत्तन्निषेधम्**—तत्तत्स्थलीयेन तेन तेन निषेधविशेषेण आक्रान्तस्वस्वरूपमेव दृश्यते सर्वत्र, **यत्र**—विवाहादौ विषयविशेषे, **असत्यादि**—(निषिद्धस्वरूपमेव) अनृतवचनादिकं **वैधम्**—शास्त्रीयाया अभ्यनुज्ञायाः आस्पदभूतम् ('पञ्चानृतान्याहुरपातकानि' इति) **तदनु च**—तदनन्तरमेव च, **तन्निमित्ता**—अनृतोक्त्यादिहेतुका, **निष्कृतिः**—तज्जन्यदोषनिवारिका प्रायश्चित्तिश्च **विहिता**—शास्त्रत एव ज्ञापिता च, **तत्र**—तादृशे स्थलविशेषे, **अगत्या**—उत्सर्गापवादभावतो विधिनिषेधयोर्विषयभेदाख्यगत्यभावात्, **तथा स्यात्**—विधानं तत्प्रायश्चित्तं चेत्युभयमपि शास्त्रत एव सिद्धं भवतु नाम, **अथवा**—यद्वा, **इतरवत्**—अनृतोक्तिविधानवत्, **केवलं तन्निमित्तम्**—अनृतोक्तिं निमित्ततया केवलमाश्रित्य ; (न तु दोषत्वेन विभाव्य) अक्षारलवणं भोजनादिकं विधीयते ।। १८ ।।

—o—

## (3) अधिकरणार्थसंग्रहः

अन्याधिष्ठिताधिकरणे—'मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इत्यादिवाक्ये, 'देवो जायते' इत्यादिवत्, 'जायन्ते' इति वचनात्, 'आत्मानः व्रीह्यादिशरीरा जायन्ते'—इत्याशङ्क्य,

आकाशादिमेघपर्यन्तवत्, केवलतद्भावापत्तिवचनात्, अन्याधिष्ठितेषु संश्लेषमात्रम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका

व्रीह्यादिभावो जीवानामवरूढवतामिह ।
आश्लेषोऽन्याधिष्ठितेन तेन व्रीह्यादिनोच्यते ॥ ११७ ॥

इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

—o—

पादोपसंहारः ॥

## (1) शारीरकन्यायकलापसंङ्ग्रहः ॥

(112) भूतसूक्ष्मैः परिष्वङ्गः कर्मशेषसहायता ।
अपुण्यानामनारोहो वियदादिसदृक्षता ॥ ७ ॥

(113) तत्राऽचिरादवस्थानं व्रीह्यादेः [1]श्लेषणं तथा[1] ।
इत्यर्थाः षडमी सम्यक् पादेनाऽनेन चिन्तिताः ॥ ८ ॥

**भूत....ष्वङ्गः**—(आद्येऽधिकरणे) देहाद्देहान्तरप्राप्तिसमये जीवस्य देहारम्भौपयिकैः सूक्ष्मैः पञ्चभिर्भूतैः सङ्गतस्यैव गमनम्, **कर्म....यता**—(द्वितीये) स्वर्गाद्यनुभवपश्चात्कालमवरोहणसमये स्वीयभुक्तकर्मशेषसहकृततयैव स्थितिः, **अपु....रोहः** (तृतीये) केवलपापिनां चन्द्रानारोहः; **विय....क्षता**—(चतुर्थे) अवरोहकाले आत्मन आकाशादिभावस्य आकाशादिसादृश्यरूपत्वम्, **तत्रा....स्थानम्**—(पञ्चमे) आकाशादिषु स्थानेषु स्थितौ अविलम्बः, **व्रीह्या....णं तथा**—(षष्ठे) श्रुत्युक्तस्य आत्मनो व्रीह्यादिभावस्य तत्संश्लेषमात्ररूपत्वम्, **इति अमी षट् अर्थाः**—एवं षट्संख्याः अर्थाः, **अनेन पादेन**—तृतीयाद्येन पादेन, **सम्यक् चिन्तिताः**—निपुणं विचारिताः भवन्ति ॥ ७, ८ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(287) अश्लिष्टं विग्रहाद्यैर्नभ इव मुसलैः क्षेत्रिणं [2]केचिदाहुः[2]
कर्माकर्तारमेवं फलमपि विविधोपाधिभेदैकनिष्ठम् ।
अव्यक्तस्याऽपवर्गं भवभुजमपि चाऽनादिमुक्तस्वभावं
तेषामित्थं मनीषां बहिरकृत नयैरेष वैराग्यपादः ॥ १९ ॥

**केचित्**—कापिल-मायावादिसमयनिष्ठाः, **क्षेत्रिणम्**—क्षेत्रज्ञभूतं चेतनम्, **नभः मुसलैरिव**—गगनं प्रहारसाधनीभूतैः मुसलैर्यथा तथैव, **विग्रहाद्यैः**—बन्धसाधनीभूतैः देहेन्द्रियादिभिः, **अश्लिष्टम् आहुः**—अस्पृष्टस्वभावमेव वर्णयन्ति; **एवम्**—देहाद्यसंस्पृष्टमिव, **कर्माकर्तारम्**—बन्धकस्य कर्मणोऽप्यकर्तृभूतम् आहुः, **फलमपि** संसरणाख्यं कर्मजन्यं फलम्, तथा संसरणजन्यमपि च फलम्, **विविधो....निष्ठम्**—विविधेषु देहिष्वत्यन्तविलक्षणस्वरूपस्वभावापत्तियोग्यः उपाधिविशेषात्मकः अहङ्कारः तन्मात्रवृत्तिस्वभावम् आहुः, **अपवर्गम्**—

[1] श्लेष्मणस्तथा—ग. [2] केचिदूचुः—पा.

संसारबन्धापगमाख्यं मोक्षमपि, अव्यक्तस्य—अव्यक्तपदाभिधेयप्रकृतिविकारभूतस्यैवाऽऽहुः, भवभुजमपि—संसारभाक्त्वेन भाव्यमानमपि जीवम्, अनादि....भावम्—अनादेः कालात् स्वभावत एव मुक्तम्, (न तूपायानुष्ठानैः) आहुः, तेषाम्—उक्तानां द्विविधसामयिकानामपि, इत्थं मनीषाम्—एवंप्रकारां मतिम् (आत्मस्वरूप-तत्कर्म-तत्फल-तन्मोक्षविषये अयथाभावावगाहिनीं धियम्) नयैः—अधिकरणैरेभिः, एषः—तृतीयाद्यः, वैराग्यपादः—वैराग्यपादनामा पादः, बहिरकृत—बहिष्कृतवान् (श्रुतेरनभिमतं बोधयामास) ॥ १९ ॥

(288) पादेऽत्वर्थाः षडस्मिन् वपुरिह विजहद्भूतसूक्ष्मैः सहेयाद्
भुक्तस्वर्गोऽवरोहेदनुशयसहितो [1]मात्रया भिन्न[1]मार्गः ।
चन्द्रावाह्यादि न स्यान्निरयपथजुषामम्बरादौ सदृक्त्वं
तस्माच्छीघ्रोऽवरोहः परवपुषि चिरं व्रीहिपूर्वे तु योगः ॥ २० ॥

अस्मिन् पादे तु—तृतीयस्यादिमे वैराग्याख्ये चरणे तु, अर्थाः—चिन्तिताः निर्णीतार्थाः, षट्—षट्संख्याः, 1) इह—मर्त्यलोके, वपुः—स्वीकृतं पूर्वतनं देहम्, विजहत्—परित्यजन् जीवः, भूतसूक्ष्मैः सह—देहान्तरारम्भोपयोगिभिः सूक्ष्मैः पञ्चभिर्भूतैः सहित एव, इयात्—लोकान्तरं गच्छेत्, 2) भुक्तस्वर्गः—पुण्यफलभूतस्वर्गानुभवसम्पत्त्या क्षीणपुण्यः, अनुशयसहितः—भुक्तशिष्टकर्मयुक्त एव सन्, मात्रया भिन्नमार्गः—आरोहणमार्गात् किंचिदिव व्यत्यस्तवर्त्मा, अवरोहेत्—स्वर्गस्थानाद्भुवं प्रत्यवरोहं प्राप्नुयात्, 3) निरयपथजुषाम्—केवलपापकर्माचरणेन नरकमार्गमात्रावलम्बिनाम्, चन्द्रावाह्यादि—चन्द्रावाह्यादिकम्, न स्यात्—नैव भवेत्, 4) अम्बरादौ—आकाशभावादिप्राप्तिवेलायाम्, सदृक्त्वम्—आकाशादिसाम्यमेव; न आकाशादिशरीरकत्वम्, 5) तस्मात्—आकाशादेः स्थानात्, शीघ्रः अवरोहः—अविलम्बित एव प्रत्यागमनक्रमः, 6) व्रीहिपूर्वे—व्रीहियवाद्यात्मके, परवपुषि—जीवान्तरशरीरे, चिरम्—विलम्बितकालं यावत्, योगस्तु—अवरोहणकाले जीवस्य संश्लेषमात्रम्; न शरीरिता—इति ॥ २० ॥

—o—

## नयसङ्गतिमालिका ॥

इत्थं तृतीयाध्यायाद्यपादे षण्णीतयः क्रमात् ।
प्रसङ्गसङ्गत्यैवैकपेटिकान्तर्गता मिथः ॥ ११८ ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

—o—

[1] मात्रयाऽभिन्न—पा.

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

तृतीयस्याऽध्यायस्य द्वितीयः पादः ॥ ३–२ ॥

## (75) सन्ध्याधिकरणम् ॥ ३–२–१ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

[पादोपोद्घातः]

(114) [1]गमनागमन[1]प्रकारचिन्ता विहितोपासिसिषा[2]प्रसिद्धि[2]हेतोः ।
न(स)तु कश्चन दोषमात्मसंस्थं यदि नेक्षेत तदा परं ह्युपास्ते ॥ १ ॥

**गमनागमनप्रकारचिन्ता**—जीवात्मनः देहाद्देहान्तरप्राप्तिः, तदर्थं लोकान्तरगमनम्, लोकान्तरात् भुवं प्रति आगमनं च केन प्रकारेणेत्यंशस्य यो विचारः, (पूर्वपादे कृतः) सः **विहितोपसिसिषाप्रसिद्धिहेतोः**—ब्रह्मप्राप्त्युद्देशेन वेदान्तैर्विहितं यदुपासनं तद्विषयिण्या उत्कटेच्छायाः सम्पत्तये, **कश्चन**—यः कश्चित् जीवः, **आत्मसंस्थम्**—जीवात्मनि विद्यमानम्, **दोषम्**— अपुरुषार्थभूतमंशम्, **यदि न नेक्षेत तु तदा**—न पश्यतीत्यंशः कदाऽपि यदि नैव स्यात् तदा, (संसरतः स्वस्य अपुरुषार्थमयत्वं, जाग्रदाद्यवस्थस्वस्वरूपसार्वदिकचिन्तनतः खचितं यदा भवति तदा), **परं हि**—(तादृशापुरुषार्थगन्धविदूरं) परमात्मानमेव खलु, **उपास्ते**—(निर्दोषनिरुपाधिकस्वस्वरूपाविर्भावप्राप्तये) ध्यानरूपेण कर्मणा उपास्ते ॥ १ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (1–5 श्लो.)

(289) ब्रह्मैव स्वैः स्वभावैर्बहुमुखमवदत् प्राक्तनाध्याययुग्मे
तस्येहाऽऽकृष्य चिन्ता किमिति पुनरसौ साधनाध्यायमध्ये ।
मैवं विद्याः प्रभेत्तुं विशदयति परं तद्धि ! तद्रूपभेदात्
सिद्धोपायादिभावं प्रथयति च विभोः प्राप्यतृष्णाप्रथिम्ने ॥ १ ॥

**प्राक्तनाध्याययुग्मे**—पूर्वं सम्पन्ने शारीरकीये समन्वयाविरोधाख्याध्यायद्वये, **ब्रह्मैव**—परतत्वभूतं परं ब्रह्मैव (कर्मभूतम्), **स्वैः स्वभावैः**—जगत्कारणत्वानन्दमयत्वमोक्षप्रदत्वादिभिः

---

[1] गमनं गमन—ख. [2] प्रसिद्ध—ख.

स्वासाधारणैः धर्मैः, **बहुमुखम्**—बहुभिः प्रकारैः, **अवदत्**—बादरायणो न्यरूपयत्, **तस्य**—निरूपितस्यैव परब्रह्मणः, **इह साधनाध्यायमध्ये**—प्रस्तुते ब्रह्मप्राप्तिसाधनभूतोपायप्रतिपादनपर-तृतीयाध्यायान्तर्भूते द्वितीये पादे, **असौ आकृष्य पुनःचिन्ता**—चर्वितचर्वणसदृशी आकर्षण-पूर्विका भूयो विचारणा, **किमिति**—कस्मै फलाय क्रियते? (नूनं न किमपि फलं सिध्यतीत्यर्थः) **मैवम्**—अनया रीत्या शङ्कनं नोचितम्, **विद्याः**—ब्रह्मप्राप्तौ उपायभूताः सद्विद्याऽऽनन्दमयविद्यादिरूपाः विद्याः, **प्रभेत्तुम्**—विविच्य प्रतिपादयितुम्, **परम्**—ब्रह्म सिद्धोपायभूतम्, **विशदयति**—निर्दोषत्व-निखिलकल्याणगुणाकरत्वाभ्यां स्पष्टं निरूपयति सूत्र-कारः, **तत् हि**—विशदतया परब्रह्मनिरूपणं हि, **तद्रूपभेदात्**—ब्रह्मसम्बन्धिनां गुण-विभूत्या-दीनां रूपाणां विशेषादेव सिध्यति, **प्राप्यतृष्णाप्रथिम्ने**—सर्वैरप्यात्मभिः प्राप्यत्वस्वाभाव्यवति परस्मिन् ब्रह्मणि विषयान्तरवैतृष्ण्यपूर्वकं उत्कटेच्छाविशेषस्य जननाय, **विभोः**—प्राप्यत्व-प्रापकत्वोभयवतः परमात्मनः, **सिद्धोपायादिभावम्**—विद्यागतसाध्योपायत्वविलक्षणं सिद्धत्व-समानाधिकरणमुपायत्वं (तथा) उपायत्वसमानाधिकरणमुपेयत्वं (प्राप्यत्वं) च, **प्रथयति**—विस्तारेण प्रतिपादयति अस्मिन् उभयलिङ्गपादे ॥ (अतो नात्र साधनाध्याये सिद्धब्रह्मनिरूपणेऽपि असाङ्गत्य-पौनरुक्त्यादिकं पदमादधातीति भावः ॥) ॥ १ ॥

(290) नैर्गुण्यं ब्रह्मणश्चेद् वितथ इह गुणैर्ब्रह्मविद्याविभागः

सोऽस्त्वेतैः कल्पितैश्चेच्छ्रुतिमतविहतिर्नात्र दृष्टिक्रमोऽपि ।

निर्दोषत्वं च नित्यं यदि वदसि मुधा दोषशान्त्यर्थयत्नः

कल्प्यं चेद्दुष्टता स्यात् प्रकृतिरिति परक्षिप्तये चैष पादः ॥ २ ॥

**ब्रह्मणः**—उपास्यस्य प्राप्यस्य परब्रह्मणः, **नैर्गुण्यं चेत्**—गुणसामान्याभाव एव पारमार्थिको यदि! तदा, **इह**—शारीरकगतसाधनाध्याये, **गुणैः ब्रह्मविद्याविभागः**—उपास्यविशेषणभूतपरमात्मगुणनिबन्धनः ब्रह्मप्राप्तिसाधनतयोपदिष्टानां विद्यानां पार्थक्यव्यपदेशः, **वितथः**—निष्प्रयोजनः, **सः**—गुणनिबन्धनो ब्रह्मविद्याविभागः, **कल्पितैः एतैः अस्तु चेत्**—अध्यस्तैरेव गुणैर्भवतु इति शङ्कने, **श्रुतिमतविहतिः**—('स्वाभाविकी ज्ञानबलक्रिया च') श्रुतितात्पर्यविकोपापत्तिः, **अत्र**—मोक्षार्थोपासनस्थले, **दृष्टिक्रमोपि**—फलविशेषार्थम् अन्यस्मिन् अन्यधर्माध्यासात्मकः 'मनो ब्रह्म' इत्यादौ दृष्टः प्रकारोऽपि, **न**—नैव वक्तुं शक्यते, **नित्यं निर्दोषत्वं च यदि वदसि**—ब्रह्मणः सार्वकालिकदोषविदूरत्वं स्वीकुरुषे चेत्! **दोष-शान्त्यर्थयत्नः**—ब्रह्माभिन्नस्य जीवस्य वेदान्तश्रवण-शम-दमादिरूपः दोषहरणौपयिकः सर्वोऽपि

प्रयत्नः **मुधा**—व्यर्थः स्यात्, **कल्प्यं चेत्!**— ब्रह्मणो निर्दोषत्वं न नित्यं ; किन्तु कल्पनीयमेव' इति यद्युच्येत! **दुष्टताप्रकृतिः स्यात्**—सदोषत्वं ब्रह्मणः स्वाभाविकमेव स्यात्, **इति परक्षिप्तये**—एवं रीत्या मायावादिमतीयान् निराकर्तुम्, **एष पादः**—अयं तृतीयद्वितीयः उभयलिङ्गपादः ॥ २ ॥

(291) किं चादौ चिन्त्यभावः प्रमितिविषयता स्वप्रभत्वं सुखत्वं
विश्वाधिष्ठानता च स्वबहुभवनधीर्निर्विशेषे कथं स्यात्?।
सर्वश्रुत्यर्थहानं स्ववचनविहतिः सर्वमानैश्च बाधो
मायावैयात्यभाजामिति सगुणदशोपास्तिपादश्च दुःस्थः ॥ ३ ॥

**किं च**—अपि च **आदौ**—शास्त्रारम्भे, **चिन्त्यभावः**—ब्रह्मणो जिज्ञास्यता, **प्रमितिविषयता**—शास्त्रजन्यप्रमागोचरत्वम्, **स्वप्रभत्वम्**—स्वयंप्रकाशस्वरूपत्वम्, **सुखत्वम्**—आनन्दैकतानत्वम्, **विश्वाधिष्ठानता च**—जगदध्यासधर्मित्वम्, **स्वबहुभवनधीः**—स्वस्यैव बहुरूपत्वप्राप्तिसङ्कल्पः, (इतीदं धर्मजातं) **निर्विशेषे**—निर्धर्मकधर्मिमात्रस्वरूपे ब्रह्मणि **कथं स्यात्!**—(निर्विशेषत्वरक्षणाय उक्तानामेषां जिज्ञास्यत्वादीनामेव अवास्तविकतास्वीकारे) श्रुतिप्रतिपन्नस्यैव सर्वस्यार्थस्य परित्यागप्रसङ्गः सर्वासामपि श्रुतीनां निरभिप्रायकत्वापत्तिर्वा, **स्ववचनविहतिः**—स्वैरेवोक्तयोः निर्विशेषत्व-जिज्ञास्यत्वयोः मिथो व्याघातापत्तिः, **सर्वमानैश्च बाधः**—सर्वैरपि प्रत्यक्षानुमानागमाख्यैः प्रमाणैः स्वोक्तार्थस्य बाधितत्वं च, **मायावैयात्यभाजाम्**—मायाख्यस्यैकस्यार्थस्यावलम्बनेन सर्वं समर्थयामः' इत्येवं धार्ष्ट्ययुक्तानां मृषावादिनामद्वैतिनाम् प्रसज्यते, **इति**—एवं रीत्या चिन्तने, **सगुणदशोपास्तिपादश्च**—सगुणदशायामेव ब्रह्मणः उपासनप्रतिपादनपरः गुणोपसंहारपादोऽपि तृतीयतृतीयश्चरणः, **दुःस्थः**—दुर्घटैकस्थितिर्भवति ॥ (अतः शारीरकं सर्वमपि तेषां दौर्घट्यमयमेवेति भावः ॥ ३ ॥

(292) त्यक्तं दोषैर्गुणाढ्यं यदि पुनरिह तद् ब्रह्म चिन्त्येत पादे
जीवस्वप्नाद्यवस्थामननमथ कथं [1]सङ्घटेतेति[1] चेन्न ।
स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै
जन्तोरस्य स्वमुक्तावतिपरवशताज्ञप्तये चैतदत्र ॥ ४ ॥

**इह पादे**—अस्मिन् प्रक्रान्ते उभयलिङ्गपादे, **दोषैः त्यक्तम्**—निर्दोषत्वैकस्वरूपम्, **गुणाढ्यम्**—अनन्तकल्याणगुणपरिपूर्णस्वरूपं च, **तत् ब्रह्म**—प्राप्यं सिद्धोपायभूतं **यदि पुनः**

[1] जाघटीतीति—पा.

**चिन्त्येत**—विचिचारयिषितं यदि, तदा, **जीव····मननम्**—जीवात्मनः स्वप्न-सुषुप्तिप्रभृति-दशाविषयकं न्यायतश्चिन्तनम्, **कथं सङ्गटेत?**—कया रीत्या सङ्गतं भवेत्? (भगवद्गुण-निरूपणपरे जीवधर्मनिरूपणस्य असङ्गतत्वात्), **इति चेत् न**—इत्येवं न साधु, **अत्र**—अस्मिन् परमात्मगुणोपसंहारपरे पादे, **एतत्**—जीवीयस्वप्नादिदशाचिन्तनम्, **स्वाप्ना····सिद्ध्यै**—अचिन्तितानामत्याश्चर्यरूपाणां स्वप्नदशासम्बन्धिनामर्थानां सृष्टिकर्तृत्वादिरूपं यत् नानाप्रकारं परब्रह्मणो माहात्म्यं तस्य स्फुटप्रतिपत्तये, (तथा) **अस्य जन्तोः**—संसरतो जीवात्मनः, **स्वमुक्तौ**—स्वीयायां मोक्षावस्थायाम्, **अति····ज्ञप्तये च**—अत्यन्तपरमात्मपारतन्त्र्यज्ञापनाय च, अतो न काप्यसाङ्गत्यमिति ॥ ४ ॥

(293) पादस्याऽस्याऽऽद्यमर्धं कतिचिदधिजगुः पूर्वपादस्य शेषं
[1]पश्चादर्धन्तु(श्च)[1] साक्षादनुघटितमुपास्त्यर्थतत्तद्गुणोक्तेः ।
एतन्नाऽतीव हृद्यं शबलितकथने चातुरीवैपरीत्याद्
ब्रह्मोक्तौ जीवदोषग्रह इह तु मुखं तत्प्रतिद्वन्द्वसिद्धेः ॥ ५ ॥

**कतिचित्**—शारीरकार्थचिन्तने प्रवृत्ताः केचन, **अस्य पादस्य**—तृतीयद्वितीयस्य उभयलिङ्गपादस्य (अधिकरणाष्टकसम्पन्नस्य), **आद्यम् अर्धम्**—प्राथमिकम् अधिकरणचतुष्टयात्मकं भागम्, **पूर्वपादस्य**—अतीतस्य वैराग्यपादस्य, **शेषम्**—तन्निरुपितावशिष्टांशभूत-जीवीयस्वप्न-सुषुप्त्याद्यवस्थागतदोषप्रतिपादकतया तदुपकारकम्, (तथा) **पश्चादर्धन्तु**—तदनन्तरप्रवृत्तं अधिकरणचतुष्टयात्मकं एतत्पादीयोत्तरार्धभागं तु, **उपास्त्य....णोक्तेः**—परमात्मोपासनौपयिकानां भगवद्गुणविशेषाणां तत्र प्रतिपादनाद्धेतोः, **साक्षादनुघटितम्**—पारम्परिकतां विना साक्षादेवैतत्पादीयप्रधानार्थसम्बद्धम् इति च—**अधिजगुः**—उक्तवन्तः, **एतत्**—ईदृशं वर्णनम्, **अतीव हृद्यं न**—अत्यन्तं रमणीयं न भवति, **शबलितकथने**—विलक्षणमिलितार्थद्वयनिरूपणे एकस्मिन् पादे कृते सति, **चातुरीवैपरीत्यात्**—सूत्रकृतः अचातुर्यापत्तेः, (एवमभिप्रायकत्वे पूर्वपादशेषं पूर्वपादे एव योजयेत्; उत्तरार्धं च गुणोपसंहारपादे एव योजयेत् । न त्वीदृशं अनुगतैकार्थरहितं पादमेकं रचयेत् सूत्रकारः इति ।) **ब्रह्मोक्तौ**—नित्यनिर्दोषस्य ब्रह्मणः निखिलकल्याणगुणाकरस्य प्रतिपादने क्रियमाणे, **इह**—अस्मिन् पादे, **जीवदोषग्रहः**—जीवसम्बन्धिनां दोषाणां ग्रहणम्, **मुखं तु**—द्वारमात्रमेव भवति, **तत्प्रतिद्वन्द्विसिद्धेः**—दोषाभावप्रतिभटस्य सदोषत्वस्य अवगमसिद्धेः (अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्) ॥ ५ ॥

—o—

[1] पश्चार्धं चात्र—पा.

[अधिकरणारम्भः]

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

(115) गुणित्वतः संनिधितश्च जीवः स्वाप्नार्थकर्तेति न शङ्क्यमेतत् ।
असम्भवत्त्वादहितक्रियायास्तिरोहितत्वेन गुणस्य [1]चाऽस्य[1] ॥ २ ॥

**जीवः**—स्वाप्नाद्यर्थानामनुभविता संसारी जीवः, **गुणित्वतः**—स्वानुभाव्यार्थस्रष्ट्यौपयिकसत्यसङ्कल्पत्वादिगुणाश्रयत्वात्, **संनिधितश्च**—स्वेनानुभूयमानार्थेन साकं स्वस्य नियतसामीप्यवत्त्वाच्च हेतोः, **स्वाप्नार्थकर्तेति**—स्वप्नदशायामनुभूयमानानामर्थानां स्रष्टेति पूर्वपक्षे, **न शङ्क्यमेतत्**—उक्तं स्वाप्नार्थस्रष्टृत्वं न शङ्कार्हम्, **अहितक्रियायाः**—स्वदुःखपरिणामिन्याः स्वाप्नार्थ(दुःख)सृष्टिक्रियायाः, **असम्भवत्त्वात्**—स्वेनैव बुद्धिपूर्वं सम्भावितत्वाभावात्, **अस्य गुणस्य**—एतदीयस्य स्वाभाविकस्याऽपि सत्यसङ्कल्पत्वादिगुणस्य, **तिरोहितत्वेन च**—अनाविर्भूतत्वेन च हेतुना उक्तार्थसिद्धेः ॥ २ ॥

—o—

(2) अधिकरणसारावलिः ॥ (श्लो. 6–10)

(294) स्वप्नेऽर्थाः सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र
प्रध्वस्तानामिदानीन्तनवदनुभवात् स्थायिताद्भ्रमाच्च ।
सत्यं श्रुत्यादिसिद्धे श्रुतपरिहरणायोगतः सृष्टिमात्रं
स्वीकृत्यांशे तु बाधात् भ्रममपि हि यथा जागरे न क्षिपामः ॥ ६ ॥

**स्वप्ने**—स्वप्नाख्ये जीवसम्बन्धिनि अवस्थाविशेषे, **अर्थाः**—तस्मिन् काले तदवस्थेन जीवेन अनुभाव्याः अर्थविशेषाः, **सृष्टाः सन्तु**—निर्मिता इत्यभ्युगम्यताम, **तदपि**—तथा सत्यपि, **अत्र**—स्वाप्नार्थविषये, **बहुविधा**—नानाप्रकारा, **भ्रान्तिः**—अयथार्थधीः, **दुस्त्यजा**—अपरिहार्याभ्युपगमा, (उक्तर्थे हेतू) **प्रध्वस्तानाम्**—बहोः कालात् पूर्वमेव नष्टानां मातापितृपुत्र-कलत्रादीनां विविधानां चेतनाचेतनरूपाणां वस्तूनाम्, **इदानीन्तनवत्**—एतत्कालविद्यमानवस्तुवत्, **अनुभवात्**—सुस्पष्टग्रहणात्, **स्थायितादिभ्रमाच्च**—अनुभूयमानेष्वस्थिरतमेष्वपि तेषु वस्तुषु स्थिरत्वावगाहिन्या धियो भ्रान्तिरूपाया उत्पत्तेश्च, (इति पूर्वपक्षे) **सत्यम्**—शङ्कितोऽर्थः किञ्चिदंशेऽभ्युपगमनीय एव; न सर्वांशे त्याज्यः, **श्रुत्यादिसिद्धे**—श्रुतिस्मृत्यनु-

---

[1] चाथ—क. ग.

भवादिना सत्यत्वेन निश्चीयमानेऽर्थे **श्रुतपरिहरणायोगतः**—श्रुतांशस्य परित्यागानौचित्यात्, **सृष्टिमात्रं स्वीकृत्य**—स्वप्नार्थसृष्टिरूपं विषयं वास्तवस्वरूपमभ्युपगम्य, **अंशे तु**—इतरांशे एव कस्मिंश्चित्, **बाधात्**—प्रामाणिकात् तदभावावगाहिज्ञानात, **भ्रममपि**—भ्रान्तिरूपतामपि, **यथा जागरम्**—जाग्रद्दशानुभाव्येष्वर्थेषु यथा प्रमायाः भ्रमस्य चेत्युभयोरपि यथायोग्यं संवलनमस्ति तथा स्वप्नेऽप्युभयोर्यथायोग्यं मेलनं विद्यमानम्, **न क्षिपामः**—नैव प्रत्याख्यास्यामः ॥६॥

(295) कश्चिद्योगप्रभावान्निजपरभवनस्वैरसञ्चारनीत्या
निष्क्रान्तः पूर्वदेहाद्विशति परवपुः पूर्वमाप्नोति भूयः ।
इत्थं स्वप्नेऽप्युदन्तस्थितिरिति कतिचिच्छ्वासवृत्त्या[1]ऽन्यथाऽन्ये[1]
चित्तोद्यद्धीप्रसृत्येतरतनुभजने सौभरिन्यायसिद्धेः ॥ ७ ॥

**निज... नीत्या**—(लोके सर्वेषां जनानां) स्वभवने अन्यदीयभवने च (स्वसङ्कल्पसहकृतस्वीयहस्तपादादिव्यापारतः) यथेच्छं देहिनः गतागतव्यापारो यथा संप्रवर्तते तथैव, (तत्सदृशादेव) **योगप्रभावात्**—योगविशेषजन्यात् चित्तादिगतात् सामर्थ्यविशेषात्, **कश्चित्**—प्राप्तसामर्थ्यः कश्चन योगी, **पूर्वदेहात्**—प्राक्तनात् स्वशरीरात्, **निष्क्रान्तः**—उत्थितः सन्, **परवपुः**—अन्यदीयं शरीरम्, **विशति**—प्रविशति, **भूयः**—पुनः, **पूर्वम्**—प्राक्तनं स्वीयं शरीरम्, **आप्नोति**—प्रवेशेन सम्बध्नाति (इदं हठयोगादितः सम्पद्यत इति योगशास्त्रतः इतिहासपुराणादितश्च अवगतम्), **इत्थम्**—एवमेव **स्वप्नेऽपि**—स्वप्नाख्ये जीवीये दशाविशेषेऽपि, **उदन्तस्थितिरिति**—वृत्तान्तावस्थानमिति, **कतिचित्**—केचन जीवनव्यवहारचिन्तकाः (स्वप्नव्यवहारं निर्वहन्ति) **अन्ये**—अपरे केचन, **श्वासवृत्त्या**—पूर्वतने शरीरे श्वासोच्छ्वासादिकं दैहिकं व्यापारं विद्यमानमालोच्य, **अन्यथा**—स्वाप्नव्यवहारं प्रकारान्तरेण निर्वहन्ति. (किं तत् प्रकारान्तरमिति चेत्!) **चित्तोद्यद्धीप्रसृत्या**—चित्तसहकारतः उद्यन्ती—विकासं प्राप्नुवन्ती या धर्मभूतज्ञानाख्या धीः तस्याः प्रसरणरूपया व्यापृत्या, (शयानदेहे स्वप्नसृष्टदेहे च व्यापारनिर्वाहो भवतीति) **इतरतनुभजने**—शरीरान्तराश्रयणे क्रियमाणे, **सौभरिन्यायसिद्धेः**—सौभरिनाम्ना ऋषिणा नानाशरीरपरिग्रहकाले, एकस्मिन् देहे चेतनस्यावस्थानं; शिष्टेषु तद्धीव्याप्त्या व्यवहारनिर्वाहः इत्ययमंशो यथा दृष्टः; तथा स्वप्नदशापन्ने जीवेऽपि शयानदेहे श्वासादिव्यापारः अन्यत्र गतागतादिव्यापारश्चेति सर्वव्यवहारसामीचीन्यसिद्धेः ॥ ७ ॥

---

[1] तथाऽन्ये—पा.

(296) उक्तं पत्या प्रजानां भविनि दहरवत् सत्यसङ्कल्पताद्यं
पुत्रादेश्चैष कर्ता प्रकृत इह सृजेत् स्वाप्नमर्थं च मैवम् ॥
मुक्तौ तादृग्गुणोक्तेरनभिमतसमुत्पादनादेरयोगात्
[1]स्वाप्नानां[1] सूचकत्वादपि निखिलजगत्कर्तुरेषाऽ(हि)पि सृष्टिः ॥ ८ ॥

**प्रजानां पत्या**—प्रजापतिना चतुर्मुखेन, **दहरवत्**—दहराकाशपदाभिधेये परमात्मनीव, **भविनि**—(संसारस्य भागिनि) जीवात्मन्यपि, **सत्यसङ्कल्पताद्यम्**—सत्यसङ्कल्पत्व-सत्यकामत्व-प्रभृतिगुणजातम्, **उक्तम्**—'एष आत्माऽपहतपाप्मा' इत्यादिना वाक्येन प्रतिपादितम्, (अतः) **एषः**—जीवात्मा, **पुत्रादेश्च कर्ता**—पुत्र-कलत्रादिरूपसर्वविधकाम्यार्थस्रष्टृत्ववानपि, **इह प्रकृतः**—अस्मिन् प्रकरणे प्रस्तुतश्च, ('कामं कामं पुरुषो निर्मिमाणः, पुत्रपौत्रान् वृणीष्व' इत्यादौ कठवाक्ये) **स्वाप्नमर्थं च सृजेत्**—स्वप्नावस्थायां स्वेनाऽनुभाव्यमर्थविशेषं च निर्मातुं प्रभवेदेव. (इति शङ्कने), **मैवम्**—इत्थं शङ्कनं नोचितम्, **मुक्तौ तादृग्गुणोक्तेः**—जीवात्मनः मुक्तिकाले एव सत्यसङ्कल्पत्वादिगुणजाताविर्भावस्य प्रजापतिवाक्ये प्रतिपादनात्, **अनभिमतसमुत्पादनादेः अयोगात्**—(स्वप्ने यतः अनुकूलानर्थानिव प्रतिकूलानप्यर्थान् पश्यति) स्वयं स्रष्टृत्वे प्रतिकूलार्थसृष्टिरूपव्यापारस्य अघटमानत्वात्, (नहि कश्चित् स्वप्रतिकूलमेव स्वयं निर्मातुमिच्छति यतते वा) **स्वाप्नानाम्**—स्वप्नदशायामनुभूयमानानामर्थानाम्, **सूचकत्वात्**—जाग्रद्दशाभावीष्टानिष्टार्थविषयकज्ञानजनकत्वस्य श्रुत्यादिप्रतिपन्नत्वादपि च, **एषा सृष्टिरपि**—स्वाप्नार्थविषयिणी सृष्टिक्रियाऽपि, **निखिलजगत्कर्तुः**—सकलभुवननिर्मातुर्भगवत एव; न जीवस्येति ॥ ८ ॥

(297) कामंकामं विधातेत्यपि णमुलुचितोऽनूद्यते चेश इत्थं
सोऽयं सुप्तेषु जागर्त्यपि विशदमिदं सम्परिष्वङ्गवाक्यात् ।
तत्तत्कालावसानाः कति कति नियता जागरेऽप्यर्थभेदा-
स्तत्तत्कर्मानुरूपं फलवितरणमित्येतदप्युक्तमाप्तैः ॥ ९ ॥

**कामंकामं विधातेति**—कठवल्लीगते 'कामंकामं पुरुषो निर्मिमाणः' इत्यस्मिन् वाक्ये, ('विधाता' इति निर्मिमाणः' इत्यस्य श्रौतपदस्य अर्थानुवादः) **णमुलपि उचितः**—'कामम्' इति द्विरुक्तः शब्दः क्त्वाप्रत्ययार्थक'णमुल्'प्रत्ययान्तः इत्येव समीचीनोऽर्थः; न तु द्वितीयाविभक्त्यन्तः इति, (तेन 'कमु-कान्तौ' इत्यस्मात् णमुलि 'सङ्कल्प्य' इत्येवार्थः;

---

[1] स्वप्नानां—ष.

न तु 'काम्यमानं पुत्रमित्रकलत्रादिकं नानाविधमर्थजातम्' इति) **इत्थम्**—अनेन प्रकारेण, (जीवकर्मानुगुणनानासङ्कल्पकर्तृत्वेन) **ईशश्च**—सर्वेश्वरः परमात्मैव, **अनूद्यते**—श्रुत्यन्तरे तथोपदिष्ट एव पुनर्ज्ञाप्यते, **सोऽयम्**—विविधसङ्कल्पपूर्वकस्रष्टृत्ववत्तया ज्ञापित एवाऽयं परमात्मा, **सुप्तेषु जागर्त्यपि**—जीवेषु उपरतबाह्यव्यापारतया अवस्थितेषु सत्सु अविस्मृतस्वकर्तव्यः अप्रमत्त एवावतिष्ठते, **इदम्**—जीवस्य सुप्तत्वदशायां परमात्मनो जाग्रत्त्वम्, **सम्परिष्वङ्गवाक्यात्**—'प्राज्ञेनात्मना सम्परिष्वक्त' इति प्राज्ञपदघटितात् सुषुप्तौ जीवस्य परमात्मपरिष्वङ्गबोधकश्रुतिवाक्यात्, **विशदम्**—स्पष्टम्, **जागरेऽपि**—जाग्रद्दशायां दृश्यमाने जगत्यपि, **कति कति**—कियन्तः असङ्ख्याताः, **अर्थभेदाः**—अर्थविशेषाः, **नियताः**—पुरुषविशेषमात्रानुभाव्यत्वनियमवन्तः, **तत्तत्कालावसानाः**—अनुभवयोग्यकालविशेषमात्रे गते अवसित(विनष्ट)स्वरूपाः, वर्तन्त इत्यनुभूतचरम्; (विद्युद्वृष्ट्यादीनां आकालिकत्वात्) **आप्तैरपि**—दैवज्ञ-महायोगिप्रभृतिभिः तत्त्वज्ञैरपि, **तत्तत्कर्मानुरूपम्**—तत्तज्जीवीयकर्मानुगुणम्, **फलवितरणमित्येतत्**—परमात्मना चिरस्थाय्याशुविनाशिसुखदुःखादिभोगप्रदानमिति नैजं तत्त्वम्, **उक्तम्**—शास्त्रेषु विशदीकृतम् ॥ ९ ॥

(298) मायामात्रोक्तिलाभाच्छ्रुतिमुखसुगता विश्वमिथ्यात्वमाहुः

शास्त्रारम्भे तदेभिः कथितमिह ततोऽसङ्गतत्वादिदुःस्थम् ।

मायाशब्दो न मिथ्यावचन उपचर'[1]स्त्वत्र तत्' किं ततः स्यात्

सत्येऽस्त्रादौ प्रयोगादुचितनियमने सोऽयमाश्चर्यतार्थः ॥ १० ॥

**मायामात्रोक्तिलाभात्**—'मायामात्रं तु' इति शारीरकसूत्रे 'मायामात्र'शब्दस्य बादरायणात् सूत्रकृतः सकाशाल्लब्धत्वात्, **विश्वमिथ्यात्वम्**—जगतः अपारमार्थ्यम्, **श्रुतिमुखसुगताः**—श्रुतीन् मुखे उच्चारयन्तः वैदिकत्वं स्वेषां प्रख्याप्य अन्ततो बौद्धीये शून्यत्वे कृतमतयः अद्वैतिसामयिकाः, ('गोमुखव्याघ्रः' इतिवद्वा) **आहुः**—वर्णयन्ति, **तत्**—विश्वमिथ्यात्वम्, **शास्त्रारम्भे**—शारीरकप्राथमिकसूत्रव्याख्यान एव, **एभिः**—अद्वैतिसामयिकैः, **कथितम्**—सूत्रतात्पर्यविषयतया वर्णितम्, **ततः**—तस्माद्धेतोः, **इह**—साधनाध्यायीयेऽस्मिन्नधिकरणे मायामात्रत्वस्थापनम्, **असङ्गतत्वादिदुःस्थम्**—असाङ्गत्य-पौनरुक्त्यादिदोषजटिलं भवेत्, **मायाशब्दः**—'माया' इत्ययं शब्दः, **न मिथ्यावचनः**—अपारमार्थ्यवाचको न भवति; ('माया वयुनं ज्ञानम्' इति नैघण्टुकोक्त्या सङ्कल्पापरपर्यायज्ञानविशेषवाचकत्वावगतेः) **अत्र**—

---

[1] स्त्वन्ततः—पा.

मायामात्रमिति सूत्रे, **तत्**—मायापदम्—**उपचरतु**—गौण्या वृत्त्या (आभिधानिकार्थत्यागेन) मिथ्यात्वबोधकं भवतीत्यभ्युपगम्यतां नाम, **ततः किं स्यात्**—तेन किं वा प्रयोजनं लभ्येत ; न किमपि, **सत्ये**—परमार्थभूते एव, **अस्त्रादौ**—अस्त्रादिरूपेऽर्थे, **प्रयोगात्**—'तेन मायासहस्रं तत्' इत्यादिपौराणिकप्रयोगदर्शनात्, **उचितनियमने**—(औपचारिकानौपचारिकविवेकेन) योग्यार्थे मायाशब्दशक्तेः व्युत्पादने (विद्वद्भिः) क्रियमाणे सति, **सोऽयम्** - विप्रतिपन्नार्थकतया प्रस्तुतः सूत्रस्थः मायाशब्दः, **आश्चर्यतार्थः**—आश्चर्यत्वं प्रवृत्तिनिमित्ततयाऽऽश्रित्य स्वाप्नस्य अर्थविशेषस्य बोधकः—इति निश्चीयते ॥ १० ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

अथ सन्ध्याधिकरणे—'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादिना, 'स हि कर्ता' इति प्रकृतस्य जीवस्य कर्तृत्वश्रवणात्, 'स्वाप्नार्थसृष्टिः तस्यैव'—इत्याशङ्क्य,

जीवस्य, संसारदशायां सत्यसङ्कल्पत्वाद्यनाविर्भावेन विचित्रार्थसृष्ट्यशक्तत्वात्, 'य एषु सुप्तेषु जागर्ति' इत्यादौ स्वाप्नसृष्टेः परमात्मकर्तृत्वावधारणात्, 'स्वाप्नसृष्टिः परमात्मकर्तृकैव' —इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

जाग्रद्दोषविनिर्मुक्तः जीवः स्वप्नदशास्थितः ।
निर्दोष इति शङ्कैषा सान्ध्यनीत्या प्रतीर्यते ॥ ११९ ॥

इति सन्ध्याधिकरणम् ॥ १ ॥

—o—

## (76) तदभावाधिकरणम् ॥ ३–२–२ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(116) श्रुतौ [1]विशेषाग्रहणात्[1] सुषुप्ते[2]र्नाड्यः[2] पुरीतत् [3]परमो[3]ऽथवा स्यात् ।
भूमिस्त्ववतीदं न विकल्पदोषात् प्रासाद-खट्वा-[4]शयनादिवत्[4] स्यात् ॥ ३ ॥

**श्रुतौ**—जीवीयसुषुप्तिस्थानज्ञापनपरे श्रुतिवाक्ये, **विशेषाग्रहणात्**—यस्य कस्यचनैकस्य विशिष्य अनुपादानात्, **सुषुप्तेः**—जीवसम्बन्धिन्याः निद्रापरपर्यायायाः सुषुप्तिदशायाः,

---

[1] विशेषग्रहणात्—ग. [2] नाद्यः—क [3] परतो—क. [4] शयनैरिव—क.

**भूमिः**—आधारभूतं स्थानम् , **नाड्यः**—हिताख्याः नाड्यः, **पुरीतत्**—तन्नामकनाडीविशेषो वा, **अथवा**—यद्वा, **परमः**—परमात्मैव वा (एतदन्यतमो विकल्पेन यः कश्चन) **स्यात्**—भवितुमर्हति, **इति**—एवं शङ्कने, **इदं न**—ईदृशं शङ्कनं न साधु, **विकल्पदोषात्**—कल्पित-विकल्पस्थले अष्टदोषाणां सत्त्वात् , **प्रासाद ....वत् स्यात्**—प्रासाद-तद्गतपर्यङ्क-तद्गततल्पवत् त्रयाणां समुच्चित्यैव स्थानता भवितुमर्हतीति ॥

—o—

## (2) अधिकरणसारावलिः ॥

(299) स्थानं जन्तोः सुषुप्तौ श्रुतिरनियमतो वक्ति नाड्यः पुरीतद्
हार्दं ब्रह्मेति तस्मादिह भवतु मिथो नैरपेक्ष्याद् विकल्पः ।
तन्न प्रासाद खटवा-शयनवदुपकृत्यन्तरैर्योजितानां
पक्षे पक्षे विकल्पः क्रमघटितचतुर्दोषयुक्तो न युक्तः ॥ ११ ॥

**नाड्यः पुरीतत् हार्दं ब्रह्म**—हिताख्या नाड्यः, पुरीतन्नामकः लोहितमांसपिण्डविशेषः, हार्दापरपर्यायं अन्तर्यामिभूतं परंब्रह्म चेति त्रयः अर्थाः, **जन्तोः**—देहिनश्चेतनस्य, **सुषुप्तौ स्थानम् इति**—सुषुप्तिकालीनावस्थानाधिकरणमिति, **अनियमतः**—यं कञ्चिदेकं नियमेन अनिर्दिश्य, **श्रुतिः वक्ति**—'हिता नाम नाड्यः ....आसु तदा नाडीषु सुप्तो भवति' 'पुरीतति शेते' 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिरूपा वेदवाक् उपदिशति । **तस्मात्**—श्रुतौ एवमनि-यतोपदेशदर्शनात् , **इह**—जीवात्मनः सुषुप्तिस्थानताविषये, एतेषु त्रिष्वर्थेषु मध्ये वा, **विकल्पः**—पर्यायेणैकतरस्य सुषुप्तिस्थानता, **भवतु**—अङ्गीकृतं भवतु, **मिथो नैरपेक्ष्यात्**—विकल्पाभ्युपगमे अन्योन्यापेक्षाराहित्येन आधारत्वसिद्धेः , (इति शङ्कने) **तत् न**—तादृशं शङ्कनम् असाधु, **प्रासाद-खटवा-शयनवत्**—निद्रातुमुद्युक्तस्य पुरुषस्य प्रासादः तल्पं पर्यङ्कश्च यथा निद्राकाले आधारभूतं भवति तथा, **उपकृत्यन्तरैः**—अन्यान्यैः विविधैरुपकारैः, **योजितानाम्**—सम्बन्धं प्रापितानां हिताख्यनाडी-पुरीतत्-परमात्मनां त्रयाणामर्थानाम् , **पक्षे पक्षे**—विकल्पगर्भप्रविष्टैकैकपक्षावलम्बने, **क्रमघटितचतुर्दोषयुक्तः**—पर्यायप्राप्तदोषचतुष्टय-युक्तः, आहत्याष्टदोषबहुलः, **विकल्पः**—समुच्चयवर्जं एकैकवेलायां एकैकाश्रयणेन कालभेदतः उक्तार्थयोजनम् , **न युक्तः**—साङ्गत्यं नावलम्बते ; (समुच्चये, सापेक्षत्वेन योजनेऽपि अष्ट-दोषाणामभावतः विकल्पापेक्षया समुच्चयस्यैव न्याय्यत्वात् ) ॥ ११ ॥

—o—

(3) अधिकरणार्थसंग्रहः ॥

तदभावाधिकरणे—'अथ यत्रैतत् पुरुषः सुप्तः' इत्यादिवाक्येषु, 'नाडीषु सुप्तः' 'पुरीतति शेते' 'सता सोम्य तदा सम्पन्नः' इति, नाडी-पुरीतत्-ब्रह्मणां सुषुप्तिस्थानत्वश्रवणात्, युगपत् जीवस्य अनेकत्र प्रवृत्त्यसम्भवाच्च, तेषां सुषुप्तिस्थानत्वं विकल्पेन-इत्याशङ्क्य, त्रयाणां सुषुप्तिस्थानत्वश्रवणात् प्रासाद-खट्वा-पर्यङ्कवत् नाड्यादीनां कार्यभेदात् । समुच्चये सम्भवति, पाक्षिकबाधगर्भविकल्पासम्भवात्, समुच्चयेनैव स्थानत्वम्—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

(120) स्वाप्नो जीवोऽथ दुष्टोऽस्तु सौषुप्तो दोषवर्जितः ।
तदभावनये चैषा शङ्कैव प्रत्युदीर्यते ॥ १२० ॥

इति तदभावाधिकरणम् ॥

—o—

## (77) कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३–२–३ ॥

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

(117) [1]प्राप्त्या[1] परस्याऽखिलकर्मनाशादन्यः प्रबोद्धा न पुनः सुषुप्तः ।
[2]नैवाऽर्थवत्त्वा[2]द्विधि-कर्मणो स्यादनुस्मृतेर्व्याघ्र इति[3]श्रुतेश्च[3] ॥ ४ ॥

**परस्य प्राप्त्या**—सुषुप्तिकाले परब्रह्मणोऽधिगमेन, **अखिलकर्मनाशात्**—जीवसम्बन्धिनां सर्वेषां कर्मणां विनष्टत्वात्, **प्रबोद्धा**—सुषुप्तेः प्रबोधं प्राप्नुवानः, **अन्यः**—अतिरिक्त एव, **न पुनः सुषुप्तः**—जाग्रद्दशातः सुषुप्तिं प्रविष्ट एव न भवितुमर्हति, (इति शङ्कने) **नैव स्यात्**—इदं नोचितमेव भवेत्, **विधि-कर्मणोः अर्थवत्त्वात्**—मोक्षोपायभूतोपासनविधीनां, सार्थक्यावश्यंभावात्, सुप्तेन देहिना पूर्वं कृतानां कर्मणां फलावश्यंभावात् तदनुभवार्थं तस्यैव प्रबोधोक्तेः), **अनुस्मृतेः**— यः रात्रौ सुप्तः स एवाऽहं स्वापादुत्थितः' इति उत्थितस्य प्रत्यभिज्ञोदयात्, **व्याघ्र इति श्रुतेश्च**—'व्याघ्रो वा वराहो वा ....यद्यद् भवन्ति' इति तस्यैव सुप्तोत्थितायाः श्रुतितोऽवगमादपि ज्ञापकात् ॥ १२ ॥

—o—

[1] प्राप्ता—क. [2] नैवार्थवत्त्वा—क. [3] स्मृतेश्च—ग.

(2) **अधिकरणसारावलिः ॥ (श्लो· 12-13)**

(300) मुक्तिर्ब्रह्मण्यपीतिर्जहदसुखगणा तादृशीयं सुषुप्तिः
श्रुत्यैव ख्याप्यतेऽतस्तदनु तनुभृदुद्बुध्यमानस्ततोऽन्यः ।
मैवं कर्मानुवृत्तेः स्मरणनियमतः पूर्व एवेति शब्दा-
न्मोक्षोपायादिशिष्टैः स्वपदनुवदनात् प्राच्य एव प्रबुद्धः ॥ १२ ॥

**मुक्तिः**—मुक्तिपदाभिधेयोऽर्थो नाम **जहदसुखगणा**—निवृत्तदुःखस्तोमा, **ब्रह्मणि अपीतिः**—परमात्मनि जीवात्मनो लयः, आत्यन्तिकसंश्लेषः, **इयं सुषुप्तिः**—प्रस्तुता (निद्रा-पर्यायपर्याया) जीवस्य सुषुप्तिनाम्नी दशाऽपि, **तादृशी**—ब्रह्मणि गाढपरिष्वङ्गरूपा स्वाप्ययाख्या आत्यन्तिकदुःखनिवृत्तियोग्या मुक्तिरेवेति वक्तुं शक्यते, **श्रुत्यैव**—'स्वमपीतो भवति, प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' 'सता सोम्य तदा सम्पन्नः' इत्येवमादिरूपया श्रुत्यैव, **ख्याप्यते**—सुषुप्तेः ब्रह्मणि जीवस्य अप्ययरूपता प्रकटीक्रियते, **अतः**—मुक्तिसुषुप्त्योः अविलक्षणत्वाद्धेतोः, **तदनु**—स्वापानन्तरम्, **उद्बुध्यमानः**—प्रबोधं प्राप्नुवानः तनुभृत्—जीवः, **ततोऽन्यः**—सुप्ताज्जीवादतिरिक्त एव, (इत्येवं शङ्कने) **मैवम्**—अनया रीत्या शङ्कनं माऽस्तु, **कर्मानुवृत्तेः**—जाग्रति जीवे यत् प्राक्तनं प्रारब्धं कर्म वर्तते, तस्य स्वप्नसुषुप्त्यात्मकस्वापनेऽपि तस्मिन् अनुवर्तनात्, सुप्तोत्थितेऽपि तदनुवृत्तेः, **स्मरणनियमतः**—'स एवाऽहम्' इति सुषुप्त-जाग्रतोः अभेदस्यैव प्रत्यभिज्ञानात् (तथा) स्वापात्पूर्वकालमनुभूतानां विषयाणां उत्थितेनैव स्मरणं नान्येनेति नियमदर्शनात्, **पूर्व एवेति शब्दात्**—व्याघ्रवराहादिरूपेण पूर्वमवस्थित एवायं सुप्तोत्थितः ; नान्य-इत्यर्थकात् 'व्याघ्रो वा वराहो वा....यद्यद्भवन्ति तदाभवन्ति' इति श्रुतिवाक्यात्, **मोक्षोपायादिशिष्टैः**—सुषुप्तेर्मुक्तिरूपत्वे जीवसामान्यस्य स्वापरूपाया मुक्तेर्निसर्गसिद्धतया मोक्षोपाय-तदङ्गजातायनुष्ठानविधायिन शास्त्राणामानर्थक्यप्रसङ्गेन तद्रूपत्वानभ्युपगतेः अपुनरावृत्त्यवस्थात्मकत्वासम्भवेन तस्यैव प्रबुद्धत्वस्यावश्यंभावात्, **स्वपदनुवदनात्**—इन्द्रप्रजापतिसंवादे 'नाऽह खल्वयम्' इत्यादिना सुप्तं पुरुषमनूद्य तदीयावस्थायाः अभोग्यत्वस्य 'नाहमत्र भोग्यं पश्यामि' इत्यनेन वाक्येनोक्तेः तस्या मुक्तिरूपत्वायोगादपि, **प्रबुद्धः**—सुषुप्तितः जाग्रद्दशां गतः पुरुषः, **प्राच्य एव**—पूर्वं जाग्रद्दशातः (तस्मिंस्तस्मिन्देहे) सुषुप्तिं प्राप्तः पुरुष एव; नाऽन्यः॥ १२॥

(301) जीवानादित्वमूचे दृषदनुकरणं क्षेप्स्यते चाऽपवर्गे
स्वर्गाद्यर्थप्रवृत्तिः श्रुतिनयविदिता सौगताद्याश्च भग्नाः ।
कल्पान्तेऽप्येकतोक्तिर्नियमितविषया नामरूपप्रहाणाद्
भूयश्चिन्ता सुषुप्तेः प्रलयसमदशासञ्जिहासादिसिद्ध्यै ॥ १३ ॥

**जीवानादित्वम्**—चेतनानामुत्पत्तिराहित्येन अनादिताम्, **ऊचे**—पूर्वमेव बादरायणो व्यवस्थापितवान् 'न कर्माऽविभागात्' इत्यादिसूत्रेण, **अपवर्गे**—मुक्तिदशायाम्, **दृषदनुकरणम्**—पाषाणकल्पताश्रयणेन चैतन्योच्छेदवत्त्वम्, **क्षेप्स्यते च**—'भोगमात्रसाम्ये'त्यादिसूत्रतः निराक्रियत एव, **स्वर्गाद्यर्थप्रवृत्तिः**—स्वर्गाद्युद्देशेन चेतनस्य देहिनः यो यागादौ यत्नः सः, **श्रुतिनयविदिता**—कर्मकाण्डसम्बन्धिन्या श्रुत्या, तदर्थविचारात्मकेन पूर्वमीमांसाशास्त्रेण च अवधृतस्वरूपः, (ऐहिकामुष्मिकौपयिककर्मव्यवस्थायाः स्थायिजीवाभ्युपगमैकनिबन्धनत्वात्) **सौगताद्याश्च**—आत्मानित्यत्वपर्यवसितसिद्धान्ता बौद्ध-चार्वाकाद्या असद्दार्शनिका अपि, **भग्नाः**—परपक्षप्रतिक्षेपपरे द्वितीयेऽध्याये निराकृता एव, **कल्पान्ते**—महाप्रलयदशायाम्, **एकतोक्तिरपि**—परे देवे जीवस्य एकीभावश्रुतिरपि, **नामरूपप्रहाणात् नियमितविषया**—पृथक्प्रतिपत्तिव्यवहारार्हनामरूपविभागात्यन्तविगममात्राभिप्राया ; न स्वरूपैक्यपरा, (एवमेतेषामर्थानां सर्वेषां अन्यतः सिद्धौ सत्याम्) **भूयश्चिन्ता**—अस्मिन् अधिकरणे कृतो विचारश्च, **सुषुप्तेः**—निद्राख्यायाः **देहिचेतनगतायाः** अवस्थायाः, **प्रलय....सिद्ध्यै**—प्रलयदशासदृशतामात्रसाधनेन मुक्तिदशायाः तद्विलक्षणत्वसिद्ध्या जाग्रद्दशावत् सुषुप्तिदशाया अपि त्याज्यत्वबुद्धेः सम्पत्तये ॥ १३ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

कर्मानुस्मृतिशब्दविध्यधिकरणे—सुषुप्तौ सर्वोपाधिविनिर्मुक्तस्य सता सम्पन्नस्य मुक्तादविलक्षणत्वात्, प्रबोधसमये सुप्तादन्य एव उत्तिष्ठति—इत्याशङ्क्य,

पूर्वकृतपुण्यापुण्ययोः तेनैव अनुभाव्यत्वात्, 'य एवाऽहं सुप्तः स एव प्रबुद्धोऽस्मि' इति प्रत्यभिज्ञानात्, स्वापमात्रेण मुक्तत्वे मोक्षशास्त्रानर्थक्यप्रसङ्गाच्च, सुप्त एव उत्तिष्ठति—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

कर्मानुस्मृत्यधिकृतौ सुषुप्तान्यसमुत्थितौ ।
निर्दोषो जीव एव स्याच्छङ्कैषा प्रत्युदीर्यते ॥ १२१ ॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

—o—

# (78) मुग्धाधिकरणम् ॥ ३–२–४ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(118) प्राणस्य सर्वेन्द्रियसंहृतेश्च व्यापारहानेर्मरणं तु मूर्च्छा ।
[1]मुग्धेऽर्धलाभो[1] मरणस्य सा स्यादाकारवैषम्य-समुत्थितिभ्याम् ॥ १३ ॥

**मूर्च्छा**—देहिनि कदाचिद्दृश्यमाना मूर्च्छाख्या अवस्था, **मरणं तु**—मरणपदाभिधेया अवस्थैव, **प्राणस्य व्यापारहानेः**—(तस्यामवस्थायां) प्राणायत्तव्यापारविशेषस्य देहे नाशात्, **सर्वेन्द्रियसंहृतेश्च**—सर्वेषामेव अन्तर्बाह्येन्द्रियाणां उपरतव्यापारत्वदर्शनादपि, (इति शङ्कने नैतत्) यतः, **सा**—मूर्च्छा, **मुग्धे**—मूर्च्छिते पुरुषे विद्यमाना (अवस्था), **मरणस्य अर्धलाभः स्यात्**—मरणदशाया अर्धावस्थाप्राप्तिरूपैव भवेत्, **आकारवैषम्य-समुत्थितिभ्याम्**—इतरावस्थागताकारापेक्षया मूर्च्छागताकारस्य विलक्षणत्वात्, (तथा) मूर्च्छातः पुनः जाग्रद्दशाप्राप्तिरूपस्य समुत्थानस्य दर्शनाच्च ॥ १३ ॥

—o—

## (2) अधिकरणसारावलिः

(302) जाग्रत्-स्वप्नौ न बाह्यावगमविरहितौ श्वासपूर्णा सुषुप्तिः
तस्मान्मुग्धिर्मृतिः स्यात् प्रशमितकरण-प्राणवर्गेति चेन्न ।
मृत्यादेर्हेतुभेदात् स्थिति-मृतिविशयादुत्थितेरानियत्या-
न्मर्तुं प्रक्रम्य मध्ये विरमति विधिनेत्यत्र तुर्याधभावः ॥ १४ ॥

**जाग्रत्-स्वप्नौ**—जीवसम्बन्धिनौ प्रबोध-स्वप्नाख्यौ अवस्थाविशेषौ, **बाह्यावगमविरहितौ न**—बहिरर्थविषयकप्रज्ञाशून्यौ न भवतः, **सुषुप्तिः**—निद्राख्या दशा, **श्वासपूर्णा**—बाहुल्येन श्वासोच्छवासव्यापारवती, **तस्मात्**—जाग्रत्-स्वप्न-सुषुप्तीनां मूर्च्छाविलक्षणत्वैकान्त्यात्, **प्रशमितकरण-प्राणवर्गा**—उपरतव्यापारप्राणेन्द्रियस्तोमा, **मुग्धिः**—मूर्च्छाख्या अवस्था, **मृतिरेव**—(अविलक्षणत्वात्) मरणरूपैव, **इति चेत् न**—एवं शङ्कनं न साधु, **मृत्यादेः**—मरण-मूर्च्छयोरवस्थयोः, **हेतुभेदात्**—जनकवैलक्षण्यात्, **स्थिति-मृतिविशयात्**—मूर्च्छितविषये अयं स्थितो वा मृतो वा? इति सन्देहोत्पत्तेः, **उत्थितेः आनियत्यात्**—मूर्च्छातः उत्थानस्य ध्रौव्याभावात्, **मर्तुं प्रक्रम्य**—हेतुतः मरणाय प्रयन्, **विधिना**—दैवोपनिपातेन, **मध्ये विरमति**—मृतिदशाकाष्ठामप्राप्तः सन् जागरादुत्क्रान्तः सन् तिष्ठति, **इति**—एवं

---

[1] नैवाऽर्धलाभो—क. ख.

तात्त्विकार्थचिन्तने, अत्र—मूर्च्छायां देहिनो दशायाम् , तुर्यार्धभावः—जाग्रत्-स्वप्न-सुषुप्ति-मरणेषु चतुर्थी या दशा मरणरूपा, तस्या अर्धावस्थात्मकतैव न्याय्या ॥ १४ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

मुग्धाधिकरणे—स्वापादिष्वेव मूर्च्छाप्रमितिसिद्ध्युपपत्तेः, अवस्थान्तरकल्पने प्रमाणाभावाच्च, 'सुषुप्त्यादिष्वन्यतमावस्थैव मूर्च्छा'—इत्याशङ्क्य,

ज्ञानप्रसराभावेन जागर-स्वप्नयोः अनन्तर्भावात् , हेतुवैषम्याकारवैषम्याभ्यां सुषुप्ति-मरणयोरनन्तर्भावाच्च, पारिशेष्यात् , मरणार्धसम्पत्तिरूपावस्थान्तरं मूर्च्छा—इत्युक्तम् ॥

—o—

## (4) नयसंगतिमालिका ॥

उक्तावस्थात्रयस्थस्य दोषभूयस्त्वसिद्धये ।
मुग्धन्यायः सम्प्रवृत्तः तेनोपोद्घातसङ्गतिः ॥ १२२ ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

—o—

[एतत्पादद्वयीयपेटिकाविभागप्रदर्शनार्था]

## (2) अधिकरणसारावलिः ॥

(303) जन्तूनां जागरादिस्थितिषु भवति यद् वैशसं दर्शितं तत्
तत्तत्स्थानादियोगेऽप्यनघशुभगुणं ब्रह्म संशोध्यतेऽद्य(त्र) ।
संसर्गैक्यादिमूलान् परिहरति ततो दोषवर्गानुभाभ्यां
हीनत्वौदार्यहानी परमपनयते नीतियुग्मेन नेतुः ॥ १५ ॥

**जन्तूनाम्**—देहिनाम् , **जागरादिस्थितिषु**—जाग्रत्-स्वप्न-सुषुप्ति-मूर्च्छाद्यवस्थासु, **यत् वैशसम्**—यादृशं विविधदुःखभागित्वं वर्तते, **तत् दर्शितम्**—तत्सर्वं तृतीयादिममारभ्य एतावदन्तेन अधिकरणजातेन विचार्य स्पष्टीकृतम् , **अत्र**—इत उपरितते पेटिकाभागे परं,

**तत्तत्स्थानेषु(नादि)योगेऽपि**—जागरादिदशापन्नतत्तज्जीवीयशरीरेषु सम्बन्धेऽपि, **अनघशुभगुणम्**—दोषासंस्पृष्टकल्याणैकतानम्, **ब्रह्म**—परं ब्रह्म, **संशोध्यते**—प्रमाणतो युक्तितश्च स्फुटं प्रदर्श्यते, **ततः**—उपरितनस्य चतुरधिकरणात्मकस्य पादशेषस्य निर्दोषपरब्रह्मप्रतिपादनप्रवृत्तत्वात्, **उभाभ्याम्**—उभयलिङ्गाहिकुण्डलाधिकरणाभ्याम्, **संसर्गैक्यादिमूलान्**—तत्तदवस्थशरीरसंसर्ग-जगदभेदादिनिबन्धनतया शङ्कितुमर्हान्, **दोषान्**—निर्दोषत्वनिर्णयविरोधिनोंऽशान्, **परिहरति**—ब्रह्मासंस्पृष्टतया बोधयति, (सूत्रकारः)। **परं नीतियुग्मेन**—तत्पश्चात्तनेन पर-फलाधिकरणात्मकाधिकरणद्वयेन, **नेतुः**—जगदीशितुः, **हीनत्वौदार्यहानी**—स्वाम्यधिकवस्तुरूपं हीनत्वम् स्वोपासकफलप्रदातृत्वाभावरूपामौदार्यहानिं च, परिहरति ॥ १५ ॥

## (79) उभयलिङ्गाधिकरणम् ॥ ३-२-५ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(119) आत्मेच्छया वाऽ[1]प्यतिहेय[1]भावात् पूयादिसङ्गः स परस्य दोषः।
तत्स्थानसम्बन्धितयेति नैतत् सर्वत्र निर्दोष[2]गुणित्व[2]शब्दात् ॥ १४ ॥

**तत्स्थानसम्बन्धितया**—अपुरुषार्थास्पददेहेन्द्रियादितत्तत्स्थानावस्थितिमत्त्वेन हेतुना, **आत्मेच्छया वाऽपि**—स्वसङ्कल्पायत्तत्वसत्त्वेऽपि, **पूयादिसङ्गः**—पूय-शोणितादिसम्पर्कः **अतिहेयभावात्**—अत्यन्तं हेयत्वात्, **परस्य**—परमात्मनः, **सः**—उक्ताशुचिसम्बन्धः, **दोषः**—अपुरुषार्थापादक एव, **इति**—एवं पूर्वपक्षे, **नैतत्**—इदं नैव युक्तिमत्, **सर्वत्र**—श्रुतिस्मृत्यादिषु सर्वप्रमाणेषु, **निर्दोष-गुणित्वशब्दात्**—परमात्मनः निरस्तनिखिलदोषत्वसमस्तकल्याणगुणाकरत्वप्रतिपादकात् शब्दात् ज्ञापकात् ॥ १४ ॥

—o—

### (2) तत्त्वसारः ॥ (श्लो. 68–70)

यत् सामान्य-विशेषवर्त्मसु गुणप्रत्यास-विध्यात्मसु
त्रय्यन्तेषु जनार्दनप्रणयिषु प्राबल्य-दौर्बल्ययोः।
प्रस्तावं प्रतिपेदिरे कतिचनाऽपच्छेदनीतिच्छला-
न्मीमांसापदवीपरिश्रमकथादूरेषु तच्छोभते ॥ ६८ ॥

---

[1] प्यतिदेह—क. [2] गुणत्व—ख.

**जनार्दनप्रणयिषु**–मोक्षप्रद (मोक्षमिच्छेत्-जनार्दनात) श्रीमन्नारायणप्रवणेषु **त्रय्यन्तेषु**–वेदान्तभागेषु, **सामान्य-विशेषवर्त्मसु**—सामान्यविशेषन्याय (संशयपरिहाराय शब्दोपात्तविशेषविषये सामान्यशब्दस्य अर्थसङ्कोचः) माश्रित्य अर्थबोधनप्रवृत्तेषु, **गुणप्रत्यासविध्यात्मसु**—ब्रह्मणो गुणवत्तानिषेध-गुणविधिस्वरूपेषु (गुणनिषेधस्सामान्यविषयकःगुणविधिः विशेषविषयकः ; विहितव्यतिरिक्ताः गुणाः न सन्तीति) **कतिचन**—वेदान्तिपदव्यवहार्याः केचन, (अद्वैतिनः) **अपच्छेदनीतिच्छलात्** —अपच्छेदाधिकरणीयन्यायानुसरणव्याजेन, **प्राबल्य-दौर्बल्ययोः प्रस्तावम्**—निर्गुणवाक्येषु प्राबल्यस्य सगुणवाक्येषुदौर्बल्यस्य च प्रसञ्जनं, **प्रतिपेदिरे यत्**-अनुचिन्तितवन्त इति यदस्ति, **तत्**—तादृशं चिन्तनम् , **मीमांसा**.... **दूरेषु**—कर्ममीमांसामार्गाभ्यासगन्धरहितेषु (मन्दप्रज्ञेषु) **शोभते**—आभासते ; (न तु वस्तुतो मीमांसकेषु ;) अपच्छेदन्यायस्य अतत्स्वरूपतायाः सम्यक्चिन्तनतोऽवगमात् ।। ६८ ।।

यद् ब्रह्मणो गुणविकारशरीर(जन्म)भेद-
कर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्ध-
मर्हन्ति तन्न विधयः प्रतिषेधबाध्याः । ६९।।

**ब्रह्मणः**–परमात्मनः (सम्बन्धिन्यः), **गुण....प्रतिषेधवाचः**–गुणविधायकाः तन्निषेधकाः, विकारबोधकाः तदभावबोधकाः, शरीरित्वज्ञापकाः अशरीरत्वज्ञापकाः, (जन्म-तदभावपराः) जीवात् भेदबोधनपराः अभेदबोधनपराः (तथा) क्रियावत्त्व निष्क्रियत्वप्रतिपादकाश्च श्रुतिस्मृत्यादिगताः गिरः, **यत्**—यस्माद्धेतोः **अन्योन्यभिन्नविषयाः**—मिथोबाध्य-बाधक-भावानापन्नासङ्कोचार्थगोचराः, **तत्**—तस्माद्धेतोः, **विरोधगन्धं न अर्हन्ति**—परस्परापहार्यविषयकत्वरूपविरोधलेशमपि नैव भजन्ते· **तत्**—तस्मादेव, **विधयः**—गुणादिसद्भावोपदेशपरा वाचः, **प्रतिषेधबाध्याः न**—गुणाद्यभावप्रतिपादनेदम्परैर्वाक्यैः अपहृतविषयत्वरूपबाध्यतावत्यो नैव भवन्ति ।। ६९ ।।

अग्नीषोमीयहिंसा निजविधिविहिता किं निषिद्धा 'न हिंस्या-
द्भूतानीत्येतयोक्त्या पशुपदविषयश्छाग एव न्यरूपि ।
'छागो वा मन्त्रवर्णा'दिति च तदुभयन्यायतो हेयधर्म-
क्षेपार्था निर्गुणोक्तिः श्रुतशुभगुणके निर्मले ब्रह्मणि स्यात् ॥ ७० ॥

**निजविधिविहिता**--'अग्नीषोमीयं पशुमालभेत' इति स्वस्वरूपविधायकवाक्येनोपदिष्टा, **अग्नीषोमीयहिंसा**—अग्नीषोमाङ्गपशुविशसनरूपा क्रिया, **न हिंस्या....योक्त्या**—'न हिंस्यात्

सर्वा भूतानि' इत्येवमाकारया हिंसासामान्यप्रतिषेधपरया श्रुतिगिरा, **किं निषिद्धा**—बाधितविषया भवति किम् ? ; नैव, **पशुपदविषयः**—तद्विधिगतः पशुपदार्थश्च, **छाग एव**—छागाख्यः पशुविशेष एव ; न पशुसामान्यमिति, **छागो वा.... दिति च**—'छागो वा मन्त्रवर्णात्' इत्येवंरूपेण जैमिनीयसूत्रेण च, **न्यरूपि**—पूर्वमीमांसायां न्यायनिरूपणतः निर्णीतम्, **तदुभयन्यायतः**—उक्तेनोत्सर्गापवादन्यायेन (पू. मी. 10-8-8) छागपशुन्यायेन (पू.मी. 6-8-9) चेति न्यायद्वयेन, **निर्मले**—निरस्तनिखिलदोषे, **श्रुतशुभगुणके**—श्रुतिप्रतिपन्नकल्याणगुणजाते, **ब्रह्मणि**—परमात्मनि, **हेयधर्मक्षेपार्था**—अपुरुषार्थभूतगुणानां दूरीकरणार्था, **निर्गुणोक्तिः**—गुणनिषेधवाचोयुक्तिः (श्रुत्यादिगतेति ज्ञेयम्) ॥ ७० ॥

—o—

### (3) अधिकरणसारावलिः ॥ (श्लो. 16-21)

(304) नैर्गुण्यं निर्गुणोक्तेर्गुणवचनमिहाऽऽविद्यधर्मार्थवादो

नैर्दोष्यं वस्तुवृत्त्या तदितरदखिलं स्वाप्नभोगादितुल्यम् ।

इत्थं जीवेशभूमापहरणकुहनावादमोमुह्यमानान्

क्षेप्तुं 'न स्थानतोऽपी'त्यधिकरणमिहारभ्यतेऽनेकशृङ्गम् ॥ १६ ॥

**निर्गुणोक्तेः**—गुणशून्यत्वप्रतिपादकश्रुतिवाक्य ('निर्गुणं निरञ्जनम्' श्वे.उ.) बलात्, **नैर्गुण्यम्**—ब्रह्मणो निर्विशेषत्वमेव, **इह**—ब्रह्मणि धर्मिभूते, **गुणवचनम्**—धर्मतया सत्यकामत्वादिगुणवर्णनम्, **आविद्यधर्मार्थवादः**—अविद्यायत्तस्य धर्मस्य ब्रह्मप्ररोचनौपयिकः अर्थवादः (प्रशंसापरं वचनम्) न तु वास्तविकार्थस्य वादः, **वस्तुवृत्त्या**—वास्तविकस्थितेश्चिन्तने तु, **नैर्दोष्यम्**—दोषराहित्यबोधनमेव अर्थवादपरमफलम् ; न तु गुणवत्ताबोधनम्, **तदितरत् अखिलम्**—परमतात्पर्यगोचरनैर्दोष्येतरत् गुण-विग्रह-विभूत्यादिकमखिलं इतिहासपुराणादिप्रतिपाद्यम्, **स्वाप्नभोगादितुल्यम्**—स्वप्नानुभवसदृशमेव ; (न तु ब्रह्मणि स्वाभाविकम्, न वा वास्तविकम्, कालान्तरबाध्यत्वात्), **इत्थम्**—अनेन प्रकारेण, **जीवेश.... मानान्**—प्रत्यक्परमात्मनोः महिम्नः अपलापार्थं मायावादप्रवर्तनपूर्वकं भृशं प्राप्तमोहान् अन्यान् मोहयतश्च वेदान्त्येकदेशिनः, **क्षेप्तुम्**—निराकर्तुम्, **इह**—शारीरकीयतृतीयाध्यायद्वितीयचरणे, **न स्थानतोऽपीत्यधिकरणम्**—'न स्थानतोऽपी'त्यादिमसूत्रकमुभयलिङ्गाधिकरणम्, **अनेकशृङ्गम्**—नानाविधशङ्का-समाधानबहुलत्वाद् बहुप्रकारं सत्, **आरभ्यते**—प्रक्रम्यते सूत्रकारेण ॥ १६ ॥

(305) हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद्दुःखकृत् स्वेच्छयाऽपि
त्याज्यत्वं नाऽन्यथा स्यादिति न निरुपधेर्हेयभावस्य हानेः ।
नित्यस्वातन्त्र्यभाजो भविन इव दशाभेदतो नाऽप्यवद्यं
श्रुत्यैवैकत्र देहे पर-तदितरयोः शुद्ध्यशुद्धी ह्यधीते ॥ १७ ॥

**यत् वस्तु**—यादृशमर्थस्वरूपम्, **स्वतः**—स्वीयस्वरूप-स्वभावाभ्याम्, **हेयम्**—त्यागार्हम्, अपरिग्राह्यम्, **इह**—तादृशेऽस्मिन्वस्तुनि, **स्थितिः**—विद्यमानता, **स्वेच्छयाऽपि**—परप्रेरणां विना स्वसङ्कल्पेनैव प्राप्तापि सती, **दुःखकृत्**—प्रातिकूल्यापादिका, **भवेत् हि**—सम्पद्येतैव ; (अशुचिसम्पर्कस्य स्वकृतत्वे परकृतत्वेऽपि वा, मालिन्यप्रयोजकत्वे अविवादात्) **अन्यथा**—तथात्वाभावे, **त्याज्यत्वं न स्यात्**—(तस्य वस्तुनः) हेयतैव न सिध्येत् (न हि किंचित् कस्यचिद्धेयं ; कस्यचिद्ग्राह्यं भवितुमर्हति, स्वभावनैयत्याभावापत्तेः) **इति न**—एवं शङ्कनं न साधु, **निरुपधेः**—उपाधिसामान्यासंस्पृष्टं परमात्मानं प्रति, **हेयभावस्य**—कस्मिन्नपि वस्तुनि प्रतिकूलत्वकृतायास्त्याज्यतायाः, **हानेः**—प्रसक्तेरेवाभावात्, **नित्यस्वातन्त्र्यभाजः**—अनाहितस्वाभाविकस्वाधीनस्वप्रवृत्त्यादिमतः परमपुरुषस्य, **भविन इव**—बद्धजीवस्येव, **दशाभेदतोऽपि**—अवस्थाभेदायत्तमपि, **अवद्यम्**—दोषभागित्वम्, **न**—नैव आपद्यते, **हि**—यतः, **एकत्र देहे**—एकस्मिन्नेव शरीरे, **परतदितरयोः**—परमात्म-जीवात्मनोः, **शुद्ध्यशुद्धी**—शरीरावस्थानकृतदोषायोगः, तत्कृतदोषयोगश्च, **श्रुत्यैव**—'द्वा सुपर्णे'ति श्रुत्यैव, **अधीते** — तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति खण्डेन पठिते ॥ १७ ॥

(306) ब्रह्म-क्षत्रादिदेहेष्वणुरिव विभुरप्यात्मभावेन तिष्ठ-
स्तत्तच्छब्दाभिलप्यस्तदिह स न कथं तत्तदादेशवश्यः ।
मैवं न ज्ञाप्यतेऽसावविदितविरहाच्छासितृत्वान्न शास्यः
किञ्चिज्ज्ञो ह्यन्यतन्त्रो जगति हितविदा बोध्यते प्रेर्यते च ॥ १८ ॥

**ब्रह्मक्षत्रादिदेहेषु**—ब्राह्मण-क्षत्रियादिपदवाच्येषु शरीरभेदेषु, **अणुरिव**—अणुपरिमाणो जीव इव, **विभुरपि**—अपरिच्छिन्नपरिमाणः ईश्वरोऽपि, **आत्मभावेन तिष्ठन्**—अधिष्ठाय नियन्तृभावेनाऽवस्थितः सन्, **तत्तच्छब्दाभिलप्यः**—'ब्राह्मणः, क्षत्रियः' इत्यादिभिः तत्तद्देहवाचिभिः शब्दैः प्रतिपाद्यो भवितुमर्हत्येव, **तत्**—तेन हेतुना, **सः**—सर्वशरीरी परमात्मा, **इह**—स्वशरीरभूते ब्राह्मणादौ, **तत्तदादेशवश्यः कथं न**—विधि-निषेधात्मकस्य तस्य तस्य शास्त्रविशेषस्य कथं वा विधेयो न भवेत् ? ; (अवश्यं भवेदेव ; इति पूर्वपक्षे), **मैवम्**—एवंरीत्या शङ्कनं न युक्तं भवति, **असौ**—परमात्मा, **अविदितविरहात्**—(तस्य) अज्ञातांशस्य

कस्याप्यभावात्, **न ज्ञाप्यते**—ज्ञापनीयो न भवति, (अतः ईश्वरे अज्ञातज्ञापनरूपस्य विधिप्रयोजनस्याऽभावः) **शासितृत्वात्**—सर्वनियन्तृत्वस्वाभाव्यात्, **शास्यः न**—अन्यकर्तृकस्य प्रशासनस्य अगोचरः (अतः ईश्वरे अप्रवृत्तप्रवर्तनरूपस्य विधिप्रयोजनस्याभावः) **जगति**—लोके, **हितविदा**—क्षेमसाधनं जानता पुरुषेण, **किंचिज्ज्ञो हि**—ज्ञेयैकदेशमात्रज्ञानवान् हि पुरुषः, **बोध्यते**—अज्ञाते विषये ज्ञाप्यते, **प्रेर्यते च**—पूर्वं प्रवृत्तेरविषयेऽर्थे प्रवर्त्यते च ॥ १८ ॥

(307) उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्माद् ब्राह्मे गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः ।
एवं शान्ते विरोधे न हि समविषयापच्छिदान्यायसिद्धि-
र्दृष्टो नित्यं निषेधः पर इह च ततः स्यादुपक्रान्तिनीतिः ॥ १९ ॥

**नयविदः**—मीमांसानिपुणाः, **उत्सर्गेण**—सामान्यशास्त्रेण, **अपवादं क्षोभणीयम्**—अपवादापरपर्यायस्य विशेषशास्त्रस्य बाध्यत्ववादम्, **न क्षमन्ते खलु**—नैव सहन्ते इति प्रसिद्धमेतत्, **तस्मात्**—विशेषशास्त्रस्य सामान्यशास्त्राबाध्यत्वसिद्धेः, **ब्राह्मे गुणादौ**—परब्रह्म-सम्बन्धिगुणविग्रहादिधर्मविषये, **निषेधः**—निर्गुणवाक्यादिप्रतिपन्नो गुणाभावः, गुणाभावज्ञापकः निर्गुणमित्यादिर्निषेध इति वा, **विधिविषयम्**—गुणज्ञापकशास्त्रगोचरं-सत्यकामत्वादिकम्, **अतिक्रम्य**—विहायैव **तिष्ठेत्**—अवस्थितस्वरूपो भवेत्; (न तु विधिगोचरमाक्रम्य वर्तेत) **एवम्**—विषयभेदचिन्तनत, **विरोधे**—विधि-निषेधयोर्मध्ये एकतरेण अपरस्य अपहृतविषयत्वे, **शान्ते**—निराकृते सति, **सम ...सिद्धिः**—समानविषयमात्रगोचरस्य अपच्छेदाधिकरणन्यायस्य सगुण-निर्गुणवाक्यविषयतालाभः, **न हि**—न सम्भावितः खलु, **निषेधः**—प्रतिषेधवादः, **नित्यं परः दृष्टः**—नियतं विध्यानन्तर्यवानेव अनुभवसिद्धः; न त्वनियतपौर्वापर्यवान्; (अपच्छेदन्यायस्तु अनियतपौर्वापर्यमात्रविषयः; उद्गातृप्रतिहर्त्रोरपच्छेदविषये पौर्वापर्यनैयत्या-सिद्धेरिति) **ततः**—निषेधस्य विध्यानन्तर्यनियमात्, **इह**—सगुण-निर्गुणवाक्यविषये (गुणसिद्धि-नैयत्यसापेक्षे, **उपक्रान्तिनीतिः**—असञ्जातविरोधोपक्रमाधिकरणन्यायः, **स्यात्**—प्रवृत्तिमर्हति न तु अपच्छेदन्यायः ॥ १० ॥

(308) सत्त्वं कार्यस्य गोपायति 'कथमसतः सद्भवेदित्यधीति-
र्द्रव्यान्यत्वं हि कार्ये व्यपनयति परं 'मृत्तिकेत्येव' शब्दः ।
अन्तर्भावाद्विशिष्टे भगवति जगतो 'नेह नाने'ति युक्तं
निर्दिष्टेयत्त्वशङ्कां प्रशमयति परे 'नेतिनेती'ति चोक्तिः ॥ २० ॥

**कथमसतः....धीतिः**—('सदेव सोम्येदमग्र आसीत्' इति प्रक्रम्य प्रवृत्तः) 'कथमसतः सज्जायेत?' इत्ययं श्रुतिपाठः, **कार्यस्य सत्त्वम्**—जायमानस्य वस्तुनः सद्रूपताम्, **गोपायति**—अबाधितमापादयति कार्य-कारणयोरेकरूप्यावश्यंभावेन सद्रूपस्य जगदाख्यकार्यस्य करणेनाऽपि सद्रूपेणावश्यंभवितव्यम्, न असदात्मकेन इति) **मृत्तिकेत्येव शब्दः**—'वाचारम्भणं विकारो नामधेयं' इत्यनन्तरमुक्तः 'मृत्तिकेत्येव सत्यम्' इत्ययं श्रौतः शब्दः, **कार्ये**—उत्पद्यमाने वस्तुनि, **द्रव्यान्यत्वं परं व्यपनयति हि**—कारणभूतद्रव्यापेक्षया आत्यन्तिकभेदमेव खलु व्यावर्तयति ; (न तु कार्यस्य असत्यत्वम्-अवास्तविकत्वं बोधयति), **विशिष्टे-भगवति**—चेतनाचेतनात्मकसर्वजगद्विशिष्टे परमात्मनि, **जगतः**—प्रपञ्चस्य, **अन्तर्भावात्**—विशिष्टैकदेशतारूपांशत्वसत्त्वात्, **नेह नानेति**—'नेह नानाऽस्ति किंचन' इति ब्रह्मानात्मकेतरनिषेधपरं श्रौतं वाक्यम्, **युक्तम्**—अबाधितार्थकम्, (न तु ब्रह्मेतरनिषेधपरतया युक्तम्) **'नेति नेति' इत्युक्तिश्च**—'अथाऽत आदेशो नेति नेति' इति बृहदारण्यकश्रुतिरपि, **परे**—परस्मिन् ब्रह्मणि, **निर्दिष्टेयत्त्वशङ्काम्**—पूर्वोक्तगुणसम्पन्नत्वमात्रताभ्रान्तिम्, **प्रशमयति**—दूरीकरोति ; न तु गुणवत्तां निषेधति (ततोऽप्यधिकगुणानां वचनात्) (अतः ब्रह्मणः उभयलिङ्गत्वाविरोधः) ॥ २० ॥

(309) तत्तद्वस्तुप्रदेशे सकलगुणतया पूर्णदृश्यः परात्मा
वृद्धिह्रासादिभेदोज्झित इति हि ! जलाधारसूर्योपमोक्तिः ।
अस्पर्शोदाहृतिश्चेन्न हि ! घटकरकाकाशदृष्टान्तयुक्ति-
स्तस्माद्ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः ॥ २१ ॥

**परात्मा**—परमपुरुषः, **तत्तद्वस्तुप्रदेशे**—पृथिव्यादीनां तेषां तेषामर्थानां प्रदेशे, **सकलगुणतया**—समस्तकल्याणगुणपरिपूर्णत्वेन, **पूर्णदृश्यः**—अपरिच्छिन्नतया योगिभिरनुभाव्यः, **वृद्धिह्रासादिभेदोज्झित इति हि !**—उपचयापचयादेः (परिच्छिन्नेषु सतो) विशेषस्य अनाश्रयः, इत्याशयेन खलु, **जलाधारसूर्योपमोक्तिः**—जलधारगतसूर्यसादृश्यवर्णनोपपत्तिः (परमात्मनि) **अस्पर्शोदाहृतिश्चेत्**—जलाधारसूर्यदृष्टान्तः परमात्मनि स्पर्शायोग्यतायाः उदाहरणमिति शङ्कनं तु (न युज्यते) **हि**—यतः **घट....युक्तिः न**—घट-करकादि जलाधारस्थितवास्तविकाकाशदृष्टान्तसाङ्गत्यम् न भवति, **तस्मात्**—उक्तात् हेतुजातात्, **ब्रह्म**—परं ब्रह्म, **द्विलिङ्गम्**—उभयलिङ्गम्, **द्विविधविभवम्**—त्रिपाद्विभूति-लीलाविभूत्याख्यविभूतिद्वयवत्, **इत्येव**—एवमेव, **वेदान्तपक्षः**—औपनिषद आशयः ॥ २१ ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

उभयलिङ्गाधिकरणे—जाग्रत्-स्वप्न-सुषुप्त्यादिस्थानेषु, तत्तत्स्थानप्रयुक्ताः जीवस्य ये दोषाः, ते परमात्मनोऽपि सम्भवन्ति ; तत्राऽवस्थानात्—इत्याशङ्क्य,

'अपहतपाप्मा' 'निरवद्यं निरञ्जनम्' इत्यादिभिः उभयलिङ्गत्वश्रवणात्, तत्र तत्र स्थितस्याऽपि न दोषः—इत्युक्तम् ॥

—o—

(5) **नयसङ्गतिमालिका ॥**

अथाऽत्रोभयलिङ्गाधिकरणे परमात्मनः ।
चेतनत्वेन सामान्यात् प्राप्तो दोषो व्यपोद्यते ॥ १२३ ॥

इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

—o—

## (80) अहिकुण्डलाधिकरणम् ॥ ३–२–६ ॥

(1) **शारीरकन्यायकलापसंग्रहः ॥**

(120) नानात्वैकत्व[1]युक्तेः[1] परिणमन[2]मचित्त्वेन[2] चेद् [3]बाधितत्वं[3]
निर्दोषत्वश्रुतेः स्यादथ तदुभययोरेकसामान्ययोगः ।
[4]नैतत् स्या[4]न्नैव लोके क्वचिदपि कथितः खण्डशब्देन मुण्डः
तस्मादंशत्वमंशित्वमपि हि जगतो ब्रह्मणश्चाऽऽत्मवत् स्यात् ॥ १५ ॥

**नानात्वैकत्वयुक्तेः**—जगति ब्रह्मभिन्नत्वाभिन्नत्वरूपोभयव्यपदेशोपपत्तिं हेतूकृत्य, **अचित्त्वेन परिणमनं चेत्**—ब्रह्मणः अचिदात्मना परिणतिः अभ्युपगम्यते यदि, तदा, **निर्दोषत्वश्रुतेः बाधितत्वं स्यात्**—ब्रह्मणि अपुरुषार्थासंस्पर्शपरायाः श्रुतेः अपहृतविषयत्वमापद्येत, **अथ**—यदि, **तदुभययोः**—(तच्च उभयं च तदुभये ; तयोः) ब्रह्मणः चिदचिद्द्वयस्य च, **एकसामान्ययोगः**—(प्रकाश-प्रभयोः तेजस्त्वरूपैकजातिसम्बन्ध इव) ब्रह्मत्वरूपया एकया जात्या अन्वयः, (स्वीक्रियेत तदा) **एतत् न स्यात्**—एवमभ्युपगमनं नैव सङ्गतं भवेत्,

---

[1] युक्तः—क. [2] मणुत्वेन—क. [3] साधितत्वं—क. [4] नैकत्वं—क.

**लोके**—जगति, **क्वचिदपि**—कस्मिन्नपि व्यवहारे **मुण्डः**—मुण्डाख्यः अशृङ्गगोजातिविशेषः, **खण्डशब्देन**—खण्डाख्यार्धशृङ्गगोजातीयवाचकेन शब्देन, **नैव कथितः**—सर्वथा नैव प्रयुक्तः खलु, **तस्मात्**—उक्तोभयपक्षयोरपि अनौचित्यात्, **जगतः ब्रह्मणश्च** - अचेतनप्रपञ्चस्य परमात्मनश्च, **अंशत्वम् अंशित्वमपि**—विशिष्टैकदेशत्वरूपत्वमंशत्वम्, विशिष्टत्वरूपमंशित्वं चेत्युभयमपि, **आत्मवत् स्यात्**—जीव-ब्रह्मणोरंशांशिभाव इव न्याय्यो भवेत ।। १५ ।।

—o—

(2) **अधिकरणसारावलिः ।।** (श्लो. 22-23)

(310) विश्वस्रष्टुः स्वदुःखप्रजननमिह न स्वांशतोऽचित्त्वक्लृप्तौ
मृत्-तत्कार्यादिकं च स्वरसमिह बहूदाहृतं सप्रतिज्ञम् ।
तस्मादव्याकृतादिर्विहरणनियता विक्रियैवेति चेन्न
स्वांशे मौढ्यं वितन्वन् विहरति भगवाननित्यनर्थानपोहात् ।। २२ ।।

**विश्वस्रष्टुः**—जगत्कारणस्य परमात्मनः, **स्वांशतः**—ब्रह्मणः स्वस्य एकदेशेन, **अचित्त्वक्लृप्तौ इह**—अचिद्रूपपरिणामापादनाभ्युपगमरूपेऽस्मिन् पक्षे, **न स्वदुःखप्रजननम्**—सृष्ट्या स्वस्य दुःखसम्पादनम् इत्ययं दोषो नापतति ब्रह्मणः, **इह**—अस्मिन् पक्षे, **सप्रतिज्ञम्**—'यस्मिन् नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकम्, **उदाहृतम्**—दृष्टान्तीकृतम्, **मृत्-तत्कार्यादिकं च बहु**—मृत्-अयः-सुवर्णाख्यकारणद्रव्य-तत्कार्यभूतविकारप्रभृतिकमपि श्रुत्युक्तं सर्वम्, **स्वरसम्**—अनुपचरितार्थयुक्तमेव भवति; (ब्रह्मांशापरिणामसिद्धान्ते तु तदन्वयः क्लिष्टः), **तस्मात्**—उक्तादौचित्यात्, **अव्याकृतादिः**—प्रकृति-प्राकृतादिः सर्वाऽपि सृष्टिः, **विहरणनियता**—लीलावश्यंभाविनी, **विक्रियैव**—ब्रह्मविकाररूपैव ; **इति चेत् न**—एवं शङ्कनमसाधु, (तथाऽभ्युपगमे) **भगवान्**—परमात्मा, **स्वांशे**—ज्ञानानन्दमये स्वैकदेशे, **मौढ्यं वितन्वन् विहरतीति**—ज्ञानानन्दरहितजडस्वरूपतां प्रापयन् स्वलीलां सम्पादयतीति कृत्वा, **अनर्थानपोहात्**—तस्मिन्नपि मौढ्यापत्तिरूपस्य अपुरुषार्थसम्बन्धस्य अपरिहारात् ।। २२ ।।

(311) कश्चिन्नित्योऽचिदंशो विविधविकृतिमान् ब्रह्मणीत्याहुरेके
फेनादिन्यायतोऽन्ये सति विकृतिवशाद् ज्ञाज्ञसर्वज्ञभागान् ।
चन्द्र-ज्योत्स्नादिनीत्या कतिचिदिह जगद्-ब्रह्मणोरैकजात्यं
सर्वे ते सर्ववेदस्वरसगतिहतेरत्र वित्रासनीयाः ।। २३ ।।

**एके**—दार्शनिकाः केचन, **ब्रह्मणि**—परमात्मनि, **कश्चित्**—कश्चनैकः, **नित्यः**—अनादिसिद्धः एव सन्, **अचिदंशः**—अचेतनभागः, **विविधविकृतिमान्**—नानारूपविकारभाक् भवति, **इत्याहुः**—इति स्वसिद्धान्तं वर्णयन्ति, **अन्ये**—अपरे केचन तत्त्ववर्णनपराः, **सति**—सत्पदाभिधेये परस्मिन्ब्रह्मणि, **फेनादिन्यायतः**—सागरे फेन-बुद्बुद-तरङ्गवत्, **विकृतिवशात्**—स्वगतविकारविशेषतः, **ज्ञाज्ञ-सर्वज्ञभागान्**—चेतनाचेतनेश्वराख्यान् त्रीन् अंशान्, **आहुः**—कथयन्ति, **कतिचन**—इतरे च केचन, **इह**—तत्त्वविवेचने (प्रवृत्ताः सन्तः), **जगद्-ब्रह्मणोः**—प्रपञ्च-परमात्मनोः, **चन्द्र-ज्योत्स्नादिनीत्या**—इन्दु-तत्प्रभयोरिव तेजस्त्वम्, **ऐकजात्यम्**—ब्रह्मस्वरूपसमानजात्यन्वयमाहुः, **सर्वे ते**—त्रिविधा अपि ते, **अत्र**—अस्मिन्विषये, **सर्ववेदस्वरसगतिहतेः**—अखिलश्रुतिस्वारस्यभङ्गापत्तेर्हेतोः, **वित्रासनीयाः**—(दण्डनेन दूरीकरणीयाः) खण्डनेन अवाचःकार्याः ॥ २३ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

अहिकुण्डलाधिकरणे—अचिद्वस्तुनः ब्रह्मरूपत्वम्, अहिकुण्डलवत् अवस्थाभेदेन, अथवा प्रभा-प्रभावतोरिव एकजातियोगेन—इत्याशङ्क्य,

पक्षद्वयस्याऽपि अनुपपन्नत्वात्, जीववत् अंशांशिभावेन—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

तथाऽहिकुण्डलनये प्रोक्तशुद्धिविशुद्धये ।
अचितो ब्रह्मरूपत्वं तेनोपोद्घातसङ्गतिः ॥

इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

—o—

## (81) पराधिकरणम् ॥ ३–२–७ ॥

### (1) शारीरकन्यायकलापसंङ्ग्रहः ॥

(121) सेतुत्वव्यपदेशतो मितधिया संशब्दनात् प्रापक-
श्रुत्या चाऽपि ततो यदुत्तरतरं रिक्त्येव भेदग्रहात् ।
प्राप्योऽन्यः परतोऽपि कश्चिदिति यन्नैतत्त्वसम्भेदनाद्
ध्येयत्वादपवर्गसाधनतया (से)हेतुत्व[1]संशब्दनात्[1] ॥ १६ ॥

---

[1] सन्दर्शनात्—क.

**सेतुत्वव्यपदेशतः**—'अथ य आत्मा स सेतुः' इति, जगत्कारणभूतस्य परमात्मनोऽस्य सेतुत्वेन श्रुतौ व्यवहारात्, (सेतुत्वमादायैव च, 'एतं सेतुं तीर्त्वा' इति तरितव्यत्वोक्तेश्च) **मितधिया संशब्दनात्**—'चतुष्पाद्ब्रह्म' 'षोडशकलं ब्रह्म' इति पाद-कलाकृतपरिमितत्वबुद्ध्या व्यवहारात्, **प्रापकश्रुत्या चापि**—'अमृतस्यैष सेतुः' इति अस्य कारणस्य, प्रापकत्वेन हेतुना प्राप्यस्यान्यस्य सत्ताया अवगतेरपि, **ततो यदुत्तरतरं त्वित्येत्र भेदग्रहात्**— 'ततो यदुत्तरतरम्' इति, प्राप्यस्यार्थस्य जगत्कारणभूतार्थावधिकपरत्ववत्तया श्रौतव्यपदेशेन, परस्मिन्नर्थे एतद्भेद-निश्चयात्, **परतोऽपि अन्यः कश्चित्**—जगत्कारणतः परभूतार्थादन्यः कश्चनार्थः परात्परः, **इति यत्**—अस्तीति यदस्ति शङ्कनम्, **नैतत्**—इदं न साधु, **असम्भेदनात्**—सर्ववस्तूनां स्वरूपस्वभावासाङ्कर्यरक्षकत्वात्, **अपवर्गसाधनतया ध्येयत्वात्**—जगत्कारणभूतस्य परमात्मनः मुक्तिप्रापकत्वेन हेतुना उपास्यत्वात्, **से(हे)तुत्वसंशब्दनात्**—श्रुतौ सेतुत्वेन व्यवहृतत्वात् ॥ (अतः परब्रह्मणि तरणसाधनत्वमात्रस्य, तरितव्यत्वस्य, प्राप्यं प्रति केवलप्रापकतामात्रस्य, प्राप्यार्थगतपरत्वावधितामात्रस्य वा नाऽऽशङ्का सङ्गच्छते) ॥ १६ ॥

—o—

## (2) तत्त्वसारः ॥ (श्लो. 71–97)

कस्त्वं तत्त्वविदस्मि वस्तु परमं किं तर्हि विष्णुः कथं
तत्त्वेदम्परतैत्तिरीयकमुखत्रय्यन्तसन्दर्शनात् ।
अन्यास्तर्हि गिरः कथं गुणवशादत्राऽऽह रुद्रः कथं-
तद्दृष्ट्या कथमुद्भवत्यवतरत्यन्यत् कथं नीयताम् ॥ ७१ ॥

1) **त्वं कः ?**—पण्डित-पामरसङ्कलिते जनस्तोमे भवान् कस्यां कोटौ प्रविष्टः ? (इति प्रश्नः),

2) **तत्त्ववित् अस्मि**—पण्डितकोटौ प्रविष्टोऽस्मि, उपास्यभूतपरतत्त्वार्थवेत्ता वर्ते (इत्युत्तरम्),

3) **तर्हि परमं वस्तु किम् ?**—भवतः परतत्त्ववेत्तृत्वे, त्वयोपास्यं परं तत्त्वं किं नामकम् ? (इति प्रश्नः)

4) **विष्णुः**—'विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' इत्युक्तविष्णुनामैव, तत्तत्त्वम् (इत्युत्तरम्)

5) **कथम् ?**—श्रुत्यादौ ब्रह्म-विष्णु-रुद्रे-न्द्रादेः तत्र तत्र वर्णनीयदेवतास्तुतये उत्कृष्टत्वकथनेन 'विष्णुरेव परं तत्त्वम्' इति कथं निश्चयः ?

6) **तत्त्वे....र्शनात्**—प्राप्योपास्यपरतत्त्वनिर्णये एव प्रधानतात्पर्यवन्तो ये तैत्तिरीय-श्रुत्यादयो वेदान्ताः, 'नारायणपरं ब्रह्म तत्त्वं नारायणः परः' इत्याद्याः, तेषां सम्यगध्ययनतोऽवबोधात् (इति प्रश्नोत्तरे)

7) **तर्हि अन्याः गिरः कथम् ?**—विष्णोः परतत्त्वतानिर्णये सति, शिवादीनां-परत्व-ध्येयत्वादिबोधकाः श्रुत्यादिगता वाचः, केन प्रकारेण सुसङ्गतार्था वर्णयितुं शक्यन्ते? (इति प्रश्नः)

8) **गुणवशात्**—विष्णुगतनिरुपाधिकसुखजनकत्व-निरतिशयमङ्गलकरत्वादिगुणमादाय विष्णावेव शिव-शम्भ्वादिशब्दानां प्रयोगात् (अविरोधेन साङ्गत्यात्) (इत्युत्तरम्)

9) **अत्र रुद्रः कथमाह ?**—उक्तेऽर्थे असन्दिग्धे सति, रुद्रः यदाह—'अहमेकः प्रथममासं वर्तामि च भविष्यामि च' इति (स्वस्यैव सृष्टेः पूर्वं पश्चाच्च विद्यमानतायाः प्रतिपादनात्) तत् कथमबाधितं भवति ?

10) **तद्दृष्ट्या**—स्वान्तरात्मनि विष्णौ, स्वस्मिंश्च तन्नियाम्ये अभेदस्यानुसन्धानेन (इति प्रश्नोत्तरे)

11) **कथमुद्भवति ?**—जगत्कारणभूतो विष्णुः 'ब्रह्म-विष्णु-रुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते, श्रुतिप्रतिपन्न (सम्प्रसूति) जननाश्रयः कथं भवितुमर्हः ? (सर्वकारणस्योत्पत्त्य-योगात्) (इति प्रश्नः)

12) **अवतरति**—विष्णुः आविर्भावाख्यावतारवाने ; न तु कर्मकृतजननवान् (इत्युत्तरम्)

13) **अन्यत् कथं ?**—'ततो यदुत्तरतरम्' इत्यादिकं वाक्यं ततोऽपि परस्याऽर्थस्य बोधकमिव भासमानं कया रीत्या सङ्गमनीयम् ? (इति प्रश्नः)

14) **नीयताम्** — 'ततः—तस्माद्धेतोः' इत्यादिरीत्या अबाधितान्वयेन सङ्गतं क्रियताम् (इत्युत्तरम्) ॥ ७१ ॥

य उक्तो याज्ञिक्यामुपनिषदि निःसीममहिमा
स उक्तः पुंसूक्ते परमपुरुषः कारणतया ।
पुनः सौबालिक्यामुपनिषदि माहोपनिषदी
गतिश्चैवं तद्वत्कलय कठवल्लीप्रभृतयः ॥ ७२ ॥

**याज्ञिक्याम् उपनिषदि**—तैत्तरीयनारायणोपनिषदि अम्भसीत्यादिकायाम् , **निःसीम-महिमा**—निरवधिकमाहात्म्यशालितया , **य उक्तः**—'यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः' इत्यादिवाग्भिः यः पुरुषः प्रतिपादितः, **सः परमपुरुषः**—सः सर्वोत्कृष्टः पुरुष एव, **पुंसूक्ते**—पुरुषसूक्ताख्ये सर्ववेदानां सारभूते श्रुतिभागे, **कारणतया उक्तः**—'छन्दांसि जज्ञिरे तस्मात्' इत्यादिना 'तथा लोकाँ अकल्पयन्' इत्यन्तेन सर्वजगत्स्रष्टृत्वेन प्रतिपादितः (तस्यैव 'वेदाहमेतं पुरुषं महान्तम्' इति प्रतिपादनात्) **पुनः**—अत्र प्रतिपादितत्वे-नोक्त एवार्थः, **सौबालिक्यामुपनिषदि**—सुबालनामघटितायाम उपनिषद्यपि, 'यः पृथिवी-मन्तरे सञ्चरन् यस्य पृथिवी शरीरम्....दिव्यो देव एको नारायणः' इति, तथा ततः पूर्वमेव, 'मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः....हृदयात् सर्वमिदं जायते' इति सर्वाकारतया उक्तः, **माहोपनिषदी गतिश्च**—महोपनिषदः सम्बन्धिनी कारणभूतार्थवर्णनरीतिरपि, **एवम्**—नारायणाख्यपरमपुरुषस्यैव सर्वकारणत्वपराः दृश्यन्ते 'एको ह वै नारायण आसीत्' इत्यादिना, **तद्वत्**—उक्तयाज्ञिक्याद्युपनिषद इवैव, **कठवल्लीप्रभृतयः**—कठोपनिषद्गताः वल्ल्योऽपि 'तद्विष्णोः परमं पदम्' 'एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति' इत्याद्याः गिरः ; तथा उपनिषदन्तरस्थाः अन्यान्या वाचोऽपि सर्वाः महापुरुषस्यैव अपारमहिम्नो विष्णोः कारणत्वपरा इति, **कलय**—निश्चिनु ॥ (अतः सर्वा अपि वैदिक्यो वाचः विष्णोरेव सर्वोत्कृष्टत्वसहितकारणत्वपराः ; नाऽत्र विप्रतिपत्त्यन्यथाप्रतिपत्त्यादेरवकाश इति) ॥ ७२ ॥

व्याजह्रे जगदेककारणतया साकूतमेको ह वा
इत्यारम्भवता महोपनिषदुद्घोषेण नारायणः ।
ब्रह्मेशच्युवसुन्धरोडुसलिलस्वाहेशसोमांशुमत्-
पूर्वाशेष'जगत्प्रणाशवति[1]' यः काले समुन्मीलति ॥ ७३ ॥

**नारायणः**—भगवान् महाविष्णुः, **साकूतम्**—अभिप्रायविशेषसहितं यथा तथा, **'एको ह वा' इत्यारम्भवता**—'एको ह वै नारायण आसीत्' इत्येवमारम्भयुक्तेन,

---

[1] जगत्प्रणाशयति—पा.

**महोपनिषदुद्घोषेण**—महोपनिषदः असन्दिग्धस्पष्टशब्दसन्दर्भेण, **जगदेककारणतया**—सर्वस्याऽपि जगतः निमित्तानतिरिक्तोपादानाख्याद्वितीयकारणताश्रयत्वेन, **व्याजह्रे**—व्यपदिष्टो वर्तते। (तथा) **यः**—जगदेककारणभूतो यो नारायण एव, **ब्रह्मेशद्यु....प्रणाशवति**—विधि-शिव-व्योम-पृथिवी-नक्षत्र-जल-वैश्वानर(अग्नि)-विधु(चन्द्र)-प्रभृति समस्त विश्वाशेषप्रणाशास्पदे काले, **समुन्मीलति**—अविकलः सन् जागर्ति (स एव जगज्जन्म-स्थिति-लयानामेकैकः कारणभूतः सर्वस्मात्परः परमपुरुषः)॥ ७३॥

अप्राप्तत्वान्महत्यामुपनिषदि जगत्कारण[1]स्याऽनुवादो[1]
न स्यादेको ह वा इत्ययमुपरि हि देवेभ्य इत्यादिनीत्या।
वाक्यस्वारस्यतो हि व्यगणि भगवतः कारणत्वं परेषां
कार्यत्वं चाऽविरुद्धं तदपि न परमस्त्यत्र किंचिद्विधेयम्॥ ७४॥

**महत्याम् उपनिषदि**—महोपनिषदि विद्यमानः, **एको ह वा इत्ययम्**—'एको ह वै नारायण आसीत' इत्ययं श्रुतिभागः, **अनुवादो न स्यात्**—विहितार्थज्ञापनपरवाक्यरूपो न भवेत्; (किन्तु अज्ञातज्ञापनपरो विधिरेव) **जगत्कारणस्य अप्राप्तत्वात्**—नारायणाख्यस्य जगत्कारणभूतस्यार्थस्य प्रमाणान्तरेण सिद्धत्वाभावात्, (ह वै इत्यव्यययोः अनुवादत्वज्ञापकयोः सत्त्वात् अनुवादत्वं न्याय्यमिति तु नोचितम्;) **उपरि हि देवेभ्य इत्यादिनीत्या**—'उपरि हि देवेभ्यो धारयति' इत्यस्मिन् वाक्ये 'हि' शब्दस्य सत्त्वेऽपि, उपरि धारणस्य मानान्तरासिद्धत्वेन अप्राप्तार्थबोधकत्वकृतं विधित्वं, तस्य वाक्यस्य यथा निर्णीतम् 'विधिस्तु धारणेऽपूर्वत्वात्' (पू.मी.सू. 3-4-5) इत्यत्र तद्वत् (एवम्) 'यदाग्नेयोऽष्टाकपालो भवति' इत्यस्मिन् वाक्ये अनुवादलिङ्गस्य यच्छब्दस्य सत्त्वेऽपि, आग्नेययागस्य प्रमाणान्तरतोऽसिद्धत्वात् अनुवादत्वं परित्यज्य विधित्वमेव यथा निर्णीतम् 'वचनानि त्वपूर्वत्वात्' (पू.मी.सू. 10-4-14) इत्यत्र तद्वच्च; (अथवा), **हि**—यतः, **भगवतः**—ज्ञानादिषड्गुणैश्वर्यपूर्णस्य नारायणस्य, **कारणत्वम्**—सर्वजगत्स्रष्टृत्वम्, **परेषाम्**—ब्रह्मरुद्रेन्द्रादीनाम्, **कार्यत्वं च**—भगवता सृज्यत्वमपि, **वाक्यस्वारस्यतः**—अक्लिष्टान्वयो यथा भवति तथा 'एको ह वै' इत्यादिसम्पूर्णवाक्यस्वरूपचिन्तनतः, **व्यगणि**—विचार्य निश्चितम् अतः, (निर्णीतमिदं सर्वमपि) **अविरुद्धम्**—अप्रतिहतम्, **तदपि**—'ह वै' इत्यनयोः विधित्वभञ्जकत्वाभ्युपगमेऽपि सिद्धार्थानुवादकत्वाभ्युपगमेऽपि वा, **भगवतः—परम्**—भगवतो नारयणस्यापेक्षया परत्वाश्रयभूतं, किञ्चित्—तत्त्वान्तरम्,

---

[1] त्वानुवादो—कु. पा.

**विधेयम्**—सृष्टि-प्रलययोर्विद्यमानत्वेन विधातुमर्हम्, **न अत्रास्ति**—अस्मिन् महोपनिषद्वाक्य-सन्दर्भे नैव विद्यते ॥ ('सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' इति श्रुत्यन्तरसिद्धानुवादित्वेऽपि 'ह वै' शब्दद्वयाप्यस्यानुवादत्वस्य चारितार्थ्यात्, 'न ब्रह्मा नेशान' इत्यादि-स्पष्टनिषेधसमभिव्याहारेण नारायणकारत्वस्य विरोधशङ्कागन्धानाक्रान्तत्वाच्च) ॥ ७४ ॥

यत् संज्ञामूर्तिकर्तुः परमपुरुषतः किंचिदाकाशनाम्नो
हृत्पद्मे स्यादुपास्यं श्रुतिशिरसि [1]परं[1] सामगानामगायि ।
तत्र प्रश्नोत्तराभ्यामघविहतिमुखान् सत्यसङ्कल्पतान्ता-
नष्टौ शिष्टांस्तदीयाननिदमुदयिनस्तद्गुणानुद्गृणन्ति ॥ ७५ ॥

**सामगानां**—छन्दोगनाम्ना सामशाखाध्यायिनाम्, **श्रुतिशिरसि**—अध्येतव्यवेद-शाखाया अन्तभागे, (उपनिषदि) **संज्ञा-मूर्तिकर्तुः**—सर्वसृज्यार्थसम्बन्धिनोर्नाम-रूपयोर्निर्वोढुः, **आकाशनाम्नः**—आकाशपदेन तत्रैव व्यवहृतात्, **परमपुरुषतः**—पुरुषोत्तमात्, **परम्**—अन्यत्, **किञ्चित्**—तत्र अनिर्दिष्टविशिष्टस्वरूपम्, **हृत्पद्मे उपास्यं स्यात्**—हृदयपुण्डरीकावच्छेदेन उपासनीयं भवेत् (इति) **यत् अगायि**—यद्वस्तु विहितं ('तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति श्रुतिखण्डेन), **तत्**—उपास्यभूतं तद्वस्तु, **अघविहतिमुखान् सत्यसङ्कल्पतान्तान्**—अपहतपाप्मत्वाद्यान् सत्यसङ्कल्पत्वपर्यन्तान्, **तदीयान्**—आकाशपदवाच्यार्थसम्बन्धिनः, **अनिदमुदयिनः**—मोक्षकाले इदंप्रथमाविर्भावार्हजीवीयगुणविलक्षणान् स्वाभाविकान्, **शिष्टान्**—तत्रैवोपदिष्टान्, **अष्टौ गुणान्**—अपहतपाप्मत्व-विजरत्व-विमृत्युत्व-विशोकत्व-विजिघत्सत्व-अपिपासत्व-सत्यकामत्व-सत्यसङ्कल्पत्वरूपान् अष्टसङ्ख्यान् गुणान्, **तत्र प्रश्नोत्तराभ्याम्**—छान्दोग्यीयदहरविद्याप्रकरणस्थाभ्याम् तद्विषयकाभ्याम् अनुयोग-पर्यनुयोगाभ्याम् 'किं तदत्र विद्यते ? ...अस्मिन् कामाः समाहिताः' इत्येवमाकाराभ्याम् (तात्पर्यनिश्चायकाभ्याम्) **उद्गृणन्ति**—निश्चित्य कथयन्ति तदर्थचिन्तनपटवः (आकाशपदार्थान्तर्वर्ति उपास्यं, तदीयं गुणाष्टकमेव नाऽन्यत् इति) ॥ ७५ ॥

प्रस्तुत्यामृतहेतुमादिपुरुषं न्यक्कृत्य मार्गान्तरं
तस्यैतद्घटनाय निष्प्रतिभटामुद्घुष्य सार्वेश्वरीम् ।
उक्तिस्तत्र ततो यदुत्तरतरं तन्मुक्तिदायीति या
तच्छ्वेताश्वतरागमे निगमनं प्रोक्तस्य हेतूक्तिमत् ॥ ७६ ॥

---

[1] परा—कु. पा.

**आदिपुरुषम्**—जगत्कारणभूतं पुरुषोत्तमं नारायणम्, **अमृतहेतुं प्रस्तुत्य**—(श्वेताश्वतरश्रुतौ) मृत्युतरणसाधनत्वेन वर्णयितुं प्रक्रम्य, ('वेदाहमेतं पुरुषं....तमेव विदित्वाऽतिमृत्युमेति' इति) **मार्गान्तरम्**—मृत्युतरणे उपायमन्यम्, **न्यक्कृत्य**—तिरस्कृत्य (अविद्यमानत्वेनोपदिश्य), ('नान्यः पन्थाः' इति), **एतद्घटनाय**—आदिपुरुषस्य मृत्य्वत्ययसाधनतायाः, अन्यत्र तदभावस्य चोक्तार्थस्य दृढीकरणाय, **तस्य**—प्रस्तुतस्याऽऽदिपुरुषस्य, **निष्प्रतिभटां सार्वेश्वरीम्**—अप्रतिहतं सर्वेश्वरभावम्, **उद्घुष्य**—'यस्मात्परं नापरम्....पुरुषेण सर्वम्' इति श्रुत्या घण्टाघोषेण स्फुटीकृत्य, **तत्र**—तस्मिन् सन्दर्भे, **ततो यदुत्तरतरं तत् मुक्तिदायि इति या उक्तिः**—'ततो यदुत्तरतरं तदरूपमनामयम्। य एतद्विदुरमृतास्ते भवन्ति' इति यद्वचनं दृश्यते, **तत्**—उत्तरोत्तरस्य वस्तुनः निर्विकारत्व-नीरूपत्व-मुक्त्युपायभूतज्ञानविषयत्वानां प्रतिपादकं तद्वाक्यम्, **श्वेताश्वतरागमे प्रोक्तस्य**—समग्रश्वेताश्वतरश्रुतौ वर्णितस्य विशिष्टार्थस्य, **हेतूक्तिमत्**—(ततः तस्माद्धेतोः इति)हेतुकथनयुक्तम्, **निगमनम्**—उपसंहरणमेव; न तु नूतनतया परात्परभूतस्यार्थस्य इदम्प्रथमतया वर्णनम् ॥ (अतः जगत्कारणं ब्रह्मैव परात्परम्; न तु ततोऽन्यत् किंचित् तत्त्वान्तरम्) ॥ ७६ ॥

यच्छ्वेताश्वतरागमो भगवति स्पष्टप्रयोगान्तरं
तस्मिन् निर्दिशति ध्रुवं शिवपदं प्रक्रान्तमुक्तिप्रदे।
सर्वव्यापिनि सर्वतोमुखशिरोग्रीवे स एव प्रभुः
सत्त्वस्यैष महान् प्रवर्तक इति व्यक्तः पुनः पूरुषः ॥ ७७ ॥

**श्वेताश्वतरागमः**—'सर्वाननशिरोग्रीवः....तस्मात् सर्वगतः शिवः' इत्ययं श्वेताश्वतरोपनिषन्मन्त्रः, **भगवति स्पष्टप्रयोगान्तरम्**—ज्ञानादिषड्गुणैश्वर्यवति वासुदेवे एव अन्यत्र असन्दिग्धप्रयोगवन्तं, ('शिवमच्युतम्' 'सर्वः शर्वः शिवः' इत्यादौ) **शिवपदम्**—शिवशब्दम्, **यत् निर्दिशति**— यतो बोधकत्वेन प्रयुङ्क्ते ('सर्वगतः शिवः') इति; ततो हेतोः, **ध्रुवम्**—इदं निश्चितम् (किमिति?) **प्रक्रान्तमुक्तिप्रदे**—प्रकरणतः प्रस्तुते (तथा) मुक्तेश्च प्रदायके, **सर्वव्यापिनि**—बहिरन्तरविशेषेण निखिलजगद्व्यापनस्वभावे, **सर्वतोमुखशिरोग्रीवे**—असङ्कोचेन सर्वत्राऽपि मुख-शिरो-ग्रीवाकार्यनिर्वहणसमर्थे (पुरुषसूक्तप्रसिद्धमहापुरुषवैभवे), **तस्मिन्**—भगवति वासुदेवे एव, **शिवपदं निर्दिशति**—शिवेति शब्दं बोधकतया प्रयुङ्क्ते; (न तु संहारमात्रकर्तृत्वेन सिद्धे शिवे) इति, **स एव**—मङ्गलप्रदत्वात् अबाधितशिवशब्दो भगवान् वासुदेव एव, **महान् प्रभुः**—अपरिच्छिन्नस्वरूपः सर्वनियन्ता, **सत्त्वस्य प्रवर्तकः**—मोक्षोपायानुष्ठानौपयिकगुणान्तरानुपमृदितसत्त्वाख्यगुणप्रवर्तनसमर्थः (मोक्षमिच्छेज्जनार्दनात्),

**पुरुषः इति**—पुरुषोत्तमः निरुपाधिकपुरुषत्ववान् वेति, **पुनः व्यक्तः**—'महान् प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्तकः' इति श्वेताश्वतरश्रुत्यैव पुनरपि स्पष्टीकृतः ॥ (अतोऽयं शिवशब्दः, न केवलरूढः; निरुपाधिकमङ्गलप्रदत्वेन निमित्तेन नारायणपरत्वादिति) ॥ ७७ ॥

यच्छ्वेताश्वतरश्रुतिः शिवपदं वक्ति प्रयुक्तं हरा-
वग्रे जाग्रति विश्वकारणपरं तत्रैव युक्तं हि ! तत् ।
साधारण्यविदूरविष्णुभगवन्नारायणाद्याह्वयै-
राहुः कारणमेनमौपनिषदा भागास्तदाकाङ्क्षिणः ॥ ७८ ॥

**श्वेताश्वतरश्रुतिः**—श्वेताश्वतरोपनिषत्, **हरौ प्रयुक्तम्**—विष्णौ भगवति बोधकतया 'शाश्वतं शिवमच्युतम्' 'सर्वः शर्वः शिवः स्थाणुः' इत्यादौ प्रयोगे उपयुक्तम्, **यत् शिवपदम्**—यादृशं शिवेतीमं शब्दम्, **वक्ति**—'यदा तमस्तन्न दिवा....न सन्न चासच्छिव एव केवलः' इति वाक्ये प्रयुङ्क्ते, **तत्**—शिवपदम्, **हि**—यतः, **विश्वकारणपरम्**—जगत्कारणभूततत्त्वप्रतिपादनतात्पर्यवत् अतो हेतोः, **अग्रे जाग्रति**—सृष्टिपूर्वकाले प्रलयदशायामपि संहृतत्वं विहाय अप्रच्युतस्वरूप-स्वभावतयाऽवस्थिते, **तत्रैव**—परमकारणे हरावेव, **युक्तम्**—प्रयोक्तुं न्याय्यम्, **औपनिषदाः भागाः**—उपनिषत्सम्बन्धिनः प्रदेशविशेषाः, **तदाकाङ्क्षिणः**—कारणत्वौपयिकधर्मविशेषविशिष्टवेषेण बोधनोद्युक्ताः सन्तः, **कारणम् एनम्**—जगत्कारणतया निश्चितमिमं पुरुषम्, **साधारण्य....द्याह्वयैः**—भगवदसाधारणैः 'विष्णुः भगवान् नारायणः पुरुषः' इत्येवमादिभिर्नामधेयैः, **आहुः**—तत्र तत्र बोधयन्ति ॥ (शिवादयः सामान्यशब्दाः; सोपाधिकनिरुपाधिकोभयविधशिवत्ववत्यर्थे प्रवृत्तेः। नारायणादयस्तु असाधारणाः। द्विविधानामपि शब्दानां तेषु तेष्वर्थेषु प्रयोगो न हि बाधार्हः ॥ ७८ ॥

यदग्रे जागर्ति श्रुतशिवपदं ब्रह्म परमं
जगद्धेतुः श्वेताश्वतरनिगमान्ते स भगवान् ।
प्रयुक्तो यत् तस्मिन् यजुषि शिवशब्दः श्रुतिशिर-
स्यतत्साधारण्यं न समगणि नारायणगिरः ॥ ७९ ॥

**श्रुतशिवपदम्**—श्रुतिगतशिवपदाभिधेयत्वेन निश्चितम्, **यत् परमं ब्रह्म**—यादृशं परब्रह्मभूतं तत्त्वम, **श्वेताश्वतरनिगमान्ते**—श्वेताश्वतराख्ये उपनिषदि, **अग्रे जागर्ति**—'किं कारणं ब्रह्म....परमं तु ब्रह्म' इति उत्तरत्र स्पष्टप्रतिपादनगोचरो वर्तते, **सः**—शिवपदाभिधानगोचरः ब्रह्मरूपोऽर्थः, **जगद्धेतुः भगवान्**—'एको ह वै नारायण आसीत्' इत्यादौ जगतः

प्राक्कालविद्यमानतया श्रुतिप्रतिपन्नो नारायण एव, नान्यः ; **तस्मिन्**—जगत्कारणभूते नारायणे विषये, **शिवशब्दः**—शिवेत्ययं शब्दः, **यजुषि श्रुतिशिरसि**—यजुर्वेदान्तःपातिनि तैत्तिरीय-नारायणोपनिषदि, **यत् प्रयुक्तः**—यस्माद्धेतोः प्रतिपादकतया उपयुक्तः, 'शाश्वतं शिवमच्युतम्' इत्यादौ ; तस्मात्, **नारायणगिरः**—नारायणेतिशब्दस्य, **अतत्साधारणम्**—नारायण-तदितरो-भयप्रतिपादनसमर्थशब्दत्वम्, **न समगणि**—प्रमाणैः प्रामाणिकैश्च न अङ्गीकृतमभवत् ॥ (शिवपदं, मङ्गलप्रदत्वं निमित्तीकृत्य नारायणे तदितरस्मिंश्च रुद्रादौ तद्गुणलेशयोगवति, प्रयोक्तुमर्हम् । नारायणपदं तु, न केनाऽपि प्रकारेण अन्यत्र प्रयोगार्हम् ; शब्दवृत्तेरनितर-साधारण्यात् इति) ॥ ७९ ॥

यद् देवैरनुयुक्त उत्तरमुशन् रुद्रो निवृत्यात्मनि
व्याजह्रे महतीमधीश्वरधुरामाथर्वणे मूर्धनि ।
स प्रादुर्भवदन्तरात्मभगवद्भूमाऽफ(भ)णत् सोन्तरा-
दन्तः प्राविशदित्यधीनविधया तद्वामदेवादिवत् ॥ ८० ॥

**आथर्वणे मूर्धनि**—अथर्वशिरआख्ये उपनिषद्भागे, **देवैः**—सुरैः, **अनुयुक्तः**—'को भवान्' इति पृष्टः, **रुद्रः**—रुद्राख्यः संहाराधिपो देवः, **उत्तरमुशन्**—तेषामुत्तरं दातुकामः (उत्तरदाने प्रवृत्तः सन्) **आत्मनि**—स्वस्वरूपे, **महतीम्**—असङ्कुचितम्, **अधीश्वरधुराम्**—सर्वैश्वर्यकाष्ठाम्, **विवृत्य**—'अहमेकः प्रथममासम्' इत्यारभ्य 'धर्मेण धर्मं तर्पयामि स्वेन तेजसा' इत्येतदन्तं विस्तरश उक्त्वा, **व्याजह्रे यत्**—प्रत्युत्तरं दत्तवान् इति यदस्ति, **तत्**—विचार्य चिन्त्यमानं उत्तरदानं तत, (एवं निश्चाययति) **सः**—उत्तरदानप्रवृत्तो रुद्रः, **प्रादुर्भव....द्भूमा**— साक्षात्क्रियमाणतापन्नस्वान्तर्यामिभूतभगवन्महिमवान्, **सोन्तरा.... विशदित्यधीतविधया**—तत्रैवाथर्वशिरसि 'सोन्तरादन्तरं प्राविशत्'—रुद्राख्यो जीवः देहाद्यपेक्षया सूक्ष्मात् जीवादपि सूक्ष्मं परमात्मानं प्राविशत्'—स्वस्य तस्मिन्स्वान्तरात्मत्वधी-प्राप्तिरूपां सूक्ष्मां स्थितिमवाप इति श्रुतिपठितप्रकारेण, **वामदेवादिवत् अभणत्**—स्वस्मिन् भगवदपृथक्स्थितिं दृष्टवन्तो वामदेवादयो यथा स्वात्मानं परमात्माभेदेन व्याजह्रुः, तथा (अधीश्वरभूतभगवदभेदानुसन्धानेन) स्वात्मस्वरूपमुक्तवान् इति ॥ ८० ॥

नान्यः कश्चिन्मत्त इत्युग्रवाक्यादूर्ध्वं नेतिस्तत्समाधिं ब्रवीति ।
प्राग्वत् पश्चादुग्रवाक्यानुवृत्तेः सोऽहं नित्योऽनित्य इत्यादिभङ्ग्या ॥ ८१ ॥

**नाऽन्यः कश्चिन्मत्तः इति**—अथर्वशिरःस्थात् 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्येवमाद्याकारात, **उग्रवाक्यात्**—उग्रपदाभिधेयरुद्रोक्ताद्वाक्यात्, **ऊर्ध्वम्**—पश्चाच्छ्रूयमाणः

**इतिः**—इतिशब्दः ('नान्यः कश्चिन्मत्तो व्यतिरिक्त इति' इति वाक्यानुपूर्वी) **तत्समाप्तिम्**—रुद्रवाक्यस्यावसानम्, **न ब्रवीति**—न प्रतिपादयति, **प्राग्वत्**—एतद्वाक्यात् पूर्वं 'अहमेक' इति रुद्रवाक्यस्य सत्त्वमिव, **पश्चात्**—इतिशब्दावसितैतद्वाक्यानन्तरमपि, **उग्रवाक्यानुवृत्तेः**—(इतिशब्दस्य) अनुवर्तमानरुद्रवाक्यकत्वात्, (तज्ज्ञानस्य तद्वाक्यावसानबुद्धिविरोधित्वात्) **'सोऽहं नित्योऽनित्य' इत्यादिभङ्ग्या**—(उत्तरत्र रुद्रवाक्यानुवृत्तिः कथं निश्चीयते?—इति चेत्। इत्थम्) 'सोऽहं नित्यानित्योऽहं व्यक्ताव्यक्तोऽहम्' इत्येवमात्मिकया 'अहं'शब्द-घटितया वाक्यशैल्या। ('अहमेकः प्रथमम्' इति 'अहं'शब्दघटितं वाक्यं येन प्रयुक्तम्; तेनैव खल्विदमप्यहंशब्दघटितं वाक्यं प्रयुक्तं भवति; नान्येनेति)। (एतन्मध्यगतं 'सोऽन्तरा-दन्तरं प्राविशत्' इति वाक्यं श्रौतं सत् प्रकृततत्त्वार्थावेदकम्; न रुद्रवाक्यान्तर्गतम्। सः—परमात्मा नारायणः, अन्तरात्—देहान्तर्वर्तिनः प्राणादेरपि, अन्तरम्—अन्तर्वर्तिनं जीवम्, प्राविशत्—अनुप्रविष्टवान्। अतः परमात्मनः रुद्राख्ये जीवे अन्तः प्रविष्टत्वात्, तदभेद-प्रतिसन्धानप्रवृत्ता, 'अहमेकः' इत्यादिरूपा रुद्रस्योक्तिः; न तु स्वस्मिन् परमात्मभ्रमेण' इति श्रुत्युक्तिर्मध्ये प्रवृत्ता। अनुवर्तते च पुना रुद्रवाक्यमिति)॥ ८१ ॥

सोऽतो हेतुं वक्ति नेतिः प्रकारं प्रह्लादोऽक्तो हेतुरन्तः प्रवेशः।
प्रह्लादोक्तिः सर्वगत्वादनन्तस्येति व्यक्ता वैष्णवाख्ये पुराणे॥ ८२ ॥

**अतः**—'नाऽन्यः कश्चिन्मत्तो व्यतिरिक्त इति' श्रूयमाणस्येतिशब्दस्य समाप्त्यर्थकत्वा-योगात्, **स इतिः**—तद्वाक्यस्थोऽयम् 'इति'शब्दः, **हेतुं वक्ति**—('सोन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्' इति वाक्यानन्तरं निविष्टः सन्) 'परमात्मनः अन्तर्बहिः सर्वत्र निविष्टत्वाद्धेतोः' इत्येवमाशयं ब्रूते, **न प्रकारम्**—समाप्तिं यथा न ब्रवीति, तथा 'नाऽन्यः कश्चिन्मत्तो व्यतिरिक्त इत्येवमब्रवीत्' इति), प्रकारमप्यर्थं न ब्रवीति, **अन्तः प्रवेशः**—परमात्मनः सर्वान्तरनुप्रवेशः, **हेतुः**—स्वस्मिन् परमात्माभेदप्रतीतिव्यवहारयोः प्रयोजकः इति, **प्रह्लादोक्तः**—प्रह्लादेन व्यक्तीकृत एव, **प्रह्लादोक्तिः**—उक्ताभिप्राया प्रह्लादस्य सूक्तिश्च, **सर्वगत्वादनन्तस्येति**—'सर्वगत्वादनन्तस्य स एवाऽहमवस्थितः' इत्येवमाकारा, **वैष्णवाख्ये पुराणे**—अष्टादशपुराणेषु वैष्णवत्वेन प्रसिद्धे पुराणविशेषे, **व्यक्ता**—स्फुटा परिदृश्यते। ('सोन्तरा'दिति श्रुतिश्च न रुद्रवाक्यरूपा; किन्तु श्रुतिवाक्यरूपा। तदर्थश्च पूर्वश्लोके उक्तः)॥ ८२ ॥

अथवेति पदेन हेतुरत्र व्यतिरेकोऽकथि नाऽन्य इत्यधीतः।
अहमेक इतीरितान्वयस्य प्रतिपत्तुं सुकरः प्रकारपक्षः॥ ८३ ॥

**अथवा**—'इति' शब्दस्य श्रुतिस्थस्य स्थानान्तरनिवेशं परित्यज्य स्वस्थाने एव निवेशेऽपि, **अत्र नाऽन्य इत्यधीतः**—अथर्वशिरसि 'मत्तो व्यतिरिक्तः अन्यः कश्चन न' इति श्रुतिप्रतिपन्नः, **व्यतिरेकः**—अहमेक इति वाक्यगताहम्पदार्थातिरिक्त (भगवत्पृथक्सिद्ध) स्वनिष्ठवस्त्वन्तरस्याभावः, **अहमेक इतीरितान्वयस्य**—'अहम् एक एव सृष्टेः पूर्वकाले सृष्टिकाले प्रलयकाले च कालत्रयेऽपि स्वनिष्ठवस्तुरूपः वर्ते' इत्येवमुक्तस्य भावसम्बन्धस्य, (भावसम्बन्धं प्रति) **हेतुः अकथि**—श्रुतिगतादिति शब्दात्प्रयोजकत्वेन प्रतिपादितः, (यतः कालत्रयेऽप्यप्रच्युतस्वरूपस्वभावः सन् अद्वितीयोऽहमेवाऽवतिष्ठे ; अत एव मत्तोन्यः स्वनिष्ठोऽर्थः कश्चिदपि नास्त्येव इति) **प्रकारपक्षः**—इतिशब्दस्य प्रकारार्थकत्वपक्षोऽपि, **प्रतिपत्तुम्**—अभ्युपगन्तुम्, **सुकरः**—सुलभो भवति । (**इति**—एवं रीत्येत्यर्थः) ॥ ८३ ॥

('यतः वह्न्यभाववति नियमेन धूमस्याभावः ; अतः धूमवति नियमेन वह्निरस्त्येव' इति धूमवह्न्योः अन्वयव्याप्तिसिद्धौ, वह्न्यभाव-धूमाभावयोः व्यतिरेकभूतयोः अव्यभिचारो यथा साधकः ; तथा कालत्रयेऽपि स्वनिष्ठस्य परमात्मेतरस्याभावात्, सर्वदेश-सर्वकाल-सर्वावस्थासु परमात्मन एकस्यैवावस्थानं सङ्गतं भवतीति) ॥

रुद्रस्योक्तिः 'सोऽन्तरा'दित्यतोऽसौ
तस्मादन्यः कोऽपि तस्यान्तरात्मा ।
अन्येषां चेत्युच्यते सोन्तरादि-
त्युक्त्या रौद्र्या सोऽपि विष्णुः प्रसिद्धः ॥ ८४ ॥

**अतः**—'इति' शब्दस्य प्रकारार्थकत्वाभ्युपगमात्, **'सोऽन्तरात्' इत्यसौ उक्तिः**—'सोन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्' इतीयं श्रुतिगता उक्तिः, **रुद्रस्य**—शिवस्यैव ; न श्रुतेः, **तस्मात्**—'सोऽन्तरा'दित्यस्य रुद्रवाक्यत्वात्, **रौद्र्या सोन्तरादित्युक्त्या**—रुद्रवक्तृकया सोन्तरादित्यनया वाचा, **तस्य अन्येषां च**—रुद्रस्य तदितरेषां च जीवात्मनाम्, **अन्यः कोऽपि**—रुद्रादतिरिक्तः कश्चन अनिर्दिष्टनामधेयः देवताविशेषः, **अन्तरात्मेत्युच्यते**—अन्तः प्रविश्य धारको नियन्ता चेति प्रतिपाद्यते, **सोऽपि**—अन्तरात्मभूतो देवताविशेषोऽपि, **विष्णुः प्रसिद्धः**—'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्येवमादिश्रुत्या, 'तवान्तरात्मा मम च' इत्यादिस्मृत्या च, विष्णुरेवेति ज्ञातो भवतीति ॥ ८४ ॥

इत्युक्तिर्वा समाप्तिं वदतु हरगिरः सोऽन्तरादित्यतोऽसौ
माभूद्रुद्रोक्तिरित्थं सति न विघटना किञ्चिदस्मन्मतस्य ।
रुद्रः स्वात्मात्मभूतं हरिममलधिया संप्रविष्टश्चिकीर्षु-
र्मेधावीव स्ववश्यं नरमपरमिति व्यज्यते वेदवाचा ॥ ८५ ॥

**इत्युक्तिः**—'नान्यः कश्चिन्मत्तो व्यतिरिक्त इति' इत्येतद्वाक्यस्थः 'इति' शब्दः, **हरगिरः**—'अहमेकः' इति प्रक्रान्तायाः शिवोक्तेः, **समाप्तिं वा वदतु**—अवसानमेव प्रतिपादयतु नाम, **अतः**—'इति' शब्दस्य रुद्रोक्तिसमाप्तिबोधकत्वात् रुद्रोक्तेः पश्चादननुवृत्तेः, **असौ सोन्तरादिति**—'सोऽन्तरादन्तरम्' इतीयं वाक्, **रुद्रोक्तिः माभूत्**—शिववाक्यरूपा नैवाऽस्तु, **इत्थं सति**—एवमभ्युपगमेऽपि, **अस्मन्मतस्य**—नारायणस्य सर्वान्तरात्मत्वाभ्युपगन्तृ-वैष्णवमतस्य, **किंचित्**—अल्पाल्पमपि, **न विघटना**—शैथिल्यसंभावनाऽपि नैव भवति, **रुद्रः**—परमशिवः, **स्वात्मात्मभूतम्**—स्वात्मनः स्वस्वरूपस्यापि नियन्तृतया धारकं परमशेषिणं च, **हरिम्**—भगवन्तं नारायणम्, **अमलधिया**—निर्मलया मनीषया, **स्ववश्यं चिकीर्षुः**—स्वस्मिन् प्रसन्नान्तःकरणं कर्तुकामः सन्, **सम्प्रविष्टः**—जग्राह, शुद्धबुद्ध्या भगवत्स्वरूपं गृहीतवान्, प्रपदनात्मिकया शेमुष्या भगवति स्वस्य सर्वार्पणं कृतवानिति वा (तस्य च वशीकरणं तच्छरणागतिरेव); (कथं सम्प्रविष्टः? इति जिज्ञासायाम्,) **अपरं नरम्**—अन्यं जनम्, **स्ववश्यं चिकीर्षुः** स्वानुकूलाचरणशीलं कर्तुकामः, **मेधावीव**—उपायकुशलः पुरुषविशेष इव, (पुरुषान्तरं स्वानुकूलप्रवृत्तिमन्तमापादयितुं प्रवृत्तः, यथा तस्मिन् पुरुषान्तरे सम्प्रविष्टः सन् तदिङ्गितादिपरिज्ञानैकप्रवणो भवति ; तेन च तस्मिन् पुरुषे (यं सम्प्रविष्टः इति व्यवह्रियते च ; तद्वत्, परमः शिवोऽपि परमात्मनि सम्प्रविष्टोऽभवदित्यर्थं सोऽन्तरादिति श्रुतिर्वदति ॥) **इति वेदवाचा व्यज्यते**—अयमर्थः अथर्वशिरोगिरा द्योत्यते ॥ ८५ ॥

श्रुत्वा रुद्रवचस्तदीयमहिमस्तोत्राय लब्धोद्यमाः
सर्वैश्वर्यमथर्वमूर्ध्नि यदपि व्याजह्रिरेऽस्याऽमराः ।
तेऽन्तर्यामिसमाधिहेतव इह व्यक्ता हि ! रुद्रोक्तय-
स्तद्युक्तास्तदनूक्तयस्तु दिविषद्वाकास्तदेकाशयाः ॥ ८६ ॥

**अथर्वमूर्ध्नि**—अथर्वशिरोनाम्न्यामुपनिषदि, **अमराः**—सुराः, **रुद्रवचः श्रुत्वा**—'अहमेकः प्रथमसासम्' इत्यादिकं शिवेरितं वाक्यं निशम्य, **तदीयमहिमस्तोत्राय**—रुद्रगतस्य भगवदन्तर्यामिकत्वापरोक्ष्यकृतस्य वैभवस्य मुक्तकण्ठं कथनाय, **लब्धोद्यमाः**—सम्पन्नप्रयत्नाः

सन्तः, **अस्य**—भगवदन्तर्यामिकत्वसिद्धिमतो रुद्रस्य, **सर्वैश्वर्यमपि**—सर्वनियन्तृत्वरूपं सर्वापेक्षया अतिशयितं प्रभुत्वमपि, **व्याजह्रिरे यत्**—'यो वै रुद्रः स भगवान्' इत्यादिना स्पष्टं व्याहृतवन्तः इति यदस्ति, **ते**—अमरव्याहाराः, **अन्तर्यामिसमाधिहेतवः**—रुद्राख्ये स्वरूपे तदन्तर्यामिभूतभगवद्भावनानैरन्तर्यकृता एव (सर्वैश्वर्यम् तदन्तर्यामिनिष्ठमेव, रुद्रे तु भेद-भावनावशात् चिन्तितम् अन्तर्यामिसमाधेः तादृशस्वाभाव्यात् ) **हि**—यतः, **इह**—एतदुपनिषद्गते अस्मिन् प्रकरणे, **तद्युक्ताः**—अन्तर्यामिसमाधिसम्पन्नाः, **रुद्रोक्तयः**—'अहमेकः' इत्याद्याः शिववाचः, **व्यक्ताः**—स्पष्टा एव विद्यन्ते, **तदेकाशयाः**—तत्तात्पर्यप्राधान्यवन्तः, **दिविषद्वाकाः**—देवानां व्याहाराः अपि **तदनूक्तयस्तु**—रुद्रोक्त्यनुसार्युक्तिरूपा एव ।। (अतः अन्तर्यामिभावनानैरन्तर्येण प्रवृत्ताः देवानां स्तोत्रादिवाचः, इतरेषामपि अन्तर्यामिभावनानैरन्तर्ये हेतवश्च भवन्तीति ज्ञेयम् ) । ८६ ।।

**ओङ्कारपूर्वकतया प्रतिपादितानि नामान्तराणि ननु रुद्रपुरःसराणि ।**
**आथर्वणे शिरसि तानि तु न प्रसिद्धरुद्रेशितृत्वमुपपादयितुं क्षमन्ते ।। ८७ ।।**

**आथर्वणे शिरसि**—अथर्वशिरआख्यायामुपनिषदि, **रुद्रपुरःसराणि नामान्तराणि**—रुद्रेशानप्रभृतीन्यन्यानि अभिधानानि, **ओङ्कारपूर्वकतया प्रतिपादितानि ननु**—प्रणवप्रतिपादनपूर्वकं कथितानि खलु, **तानि तु**—तानि नामानि परम्, **प्रसिद्धरुद्रेशितृत्वम्**—त्रिमूर्तिमध्यस्थस्य केवलसंहारकारकतया श्रुत्यादिविख्यातस्य रुद्रस्य सर्वेश्वरभावम्, **उपपादयितुम्**—युक्तं बोधयितुम्, **न क्षमन्ते**—न समर्थानि भवन्ति ।। ८७ ।।

**समाख्याः प्रक्रान्तप्रणवविषयिण्यः प्रतिपदं**
**निरुक्ता रुद्राद्या यदपि हि महादेवशिरसः ।**
**श्रुतेराथर्वण्याः शिरसि तदिदं तारविभवं**
**व्यनक्त्योङ्कारः स्यादुपरितनविद्यापरिकरः ।। ८८ ।।**

**आथर्वण्याः श्रुतेः शिरसि**—अथर्वशिरउपनिषदि (पञ्चमे खण्डे), **प्रक्रान्तप्रणवविषयिण्यः**—भगवत्प्रतिपादकतया पूर्वखण्डप्रस्तुतोङ्कारसम्बन्धिन्यः, **रुद्राद्याः महादेवशिरसः**—रुद्रशब्दप्रभृति महादेवशब्दपर्यन्ताः, **समाख्याः**—नामधेयरूपा वाचः, **प्रतिपदं निरुक्ताः यदपि**—एकैकस्मिन्नपि पदे अवयवव्युत्पत्तिप्रदर्शनेन कृतनिर्वचनाः इत्येतदपि यदस्ति, **तदिदम्**—तदेतन्निर्वचनप्रदर्शनं श्रुतिगतम्, **तारविभवं व्यनक्ति**—ओङ्कारस्य माहात्म्यं स्पष्टीकरोति (वाचकशब्दवैभवस्य तद्वाच्यभूतार्थगतवैभवपर्यवसायित्वात् ), **ओङ्कारः**—वैभववत्तया

प्रकटीक्रियमाणः प्रणवः, **उपरितनविद्यापरिकरः स्यात्**—षष्ठखण्डप्रतिपाद्यायाः रुद्राख्य-देवताकञ्चुकितभगवदुपासनरूपायाः विद्यायाः अङ्गभूतः सन् आवश्यको भवेदेव ॥ ८८ ॥

[1]पन्था बन्धस्य शान्तेः[1] पशुपतिभजनं [2]नन्विहाथर्व[2]मूर्ध्नि
प्रोक्तः प्राच्या तदुक्त्या स्फुरति हरिरिहोपासनीयस्तदात्मा ।
यद्वन्मध्वादिविद्यास्वितरसुरतनुः स्रष्टृ-सृज्यादिभावः
श्रौतस्त्वत्राऽपि तुल्यःश्रुतमिह भसितं प्रस्तुतोपास्तिशेषम् ॥ ८९ ॥

**इह अथर्वमूर्ध्नि**—अस्याम् अथर्वशिरआख्यायामुपनिषदि, **पशुपतिभजनम्**—पशुपत्याख्यस्य रुद्रस्योपासनम्, **बन्धस्य शान्तेः**—पशुसंज्ञानां जीवानां पाशाख्यस्य बन्धस्यापगमं प्रति, **पन्थाः प्रोक्तः**—उपायत्वेन विहितः खलु! (एवं स्थिते रुद्रोपासनपराया उपनिषदः, कथं वा भगवदुपासनपरत्वसाधनप्रवृत्तिः शोभते युष्माकम्?—इति चेत्!) **प्राच्या तदुक्त्या**—पूर्वखण्डस्थया 'सोऽन्तरादन्तरं प्राविशत्' इत्यादिरूपया शिवस्य वाचा, 'तदेतद्रुद्रचरितम्' इत्यादिकया उपनिषदुक्त्या वा, **तदात्मा हरिः**—रुद्रान्तर्यामी भगवान् नारायणः, **इह उपासनीयः**—अथर्वशिरसि उपास्यतया विहितः, (इत्युत्तरम्)। (रुद्रशरीरकस्य परमात्मनः किमर्थमुपास्यत्वम्? इति चेत्!) **मध्वादिविद्यासु**—मधुविद्या-इन्द्रप्राणविद्यादिषु, **इतरसुरतनुः यद्वत्**—वस्वादित्यादिशरीरकः परमात्मा, इन्द्रशरीरकः परमात्मा च यथा उपासनीयः ; तथैव अत्र रुद्रशरीरकः परमात्मा उपास्यः, (इत्युत्तरम्) **श्रौतः**—श्रुत्युक्तः, **स्रष्टृ-सृज्यादिभावः**—कारणता कार्यता च, **तुल्यः**—वस्विन्द्राद्योः भगवतः, रुद्रस्य भगवतोऽपि च समानः, ('ललाटात् क्रोधजो रुद्रो जायत' इति श्रुतेः) **इह श्रुतम्**—अस्मिन् प्रकरणे (धार्यमाणतया) श्रुतिविहितम्, **भसितम्**—भस्म, **प्रस्तुतोपास्तिशेषम्**—प्रक्रान्तरुद्रशरीरकपरमात्मोपासनाङ्गभूतम्; न तु पाशुपतागमसिद्धभस्मधारणमेतत् ॥ ८९ ॥

प्रस्तुत्य रुद्रवपुषः पुरुषोत्तमस्य विद्यामथर्वशिरसीरितमङ्गमस्याः ।
भस्मप्रसक्तिरितरत्र न चास्ति यद्वत् सौत्रामणिप्रकरणोक्तसुराग्रहस्य ॥ ९० ॥

**रुद्रवपुषः**—संहारकर्माधिकृतरुद्राख्यदेवताविशेषशरीरकस्य, **पुरुषोत्तमस्य**—भगवतो महाविष्णोः, **विद्याम्**—उपासनाम्, **अथर्वशिरसि प्रस्तुत्य**—अथर्वशिरोपनिषदि विधातुं प्रक्रम्य, **अस्याः अङ्गम्**—प्रस्तुतायाः रुद्रशरीरकभगवदुपासनाख्यायाः विद्याया उपकारकतया, **भस्म**—(उपासकस्य) भस्मस्नान-भस्मधारणादिकं कर्म, **ईरितम्**—'अग्निरिति भस्म' 'भस्म

---

[1] पन्थानं बन्धशान्तेः—पा. [2] निर्बंहाऽथर्व—पा. निर्विहाथर्व—पा.

गृहीत्वा विमृज्याङ्गानि संस्पृशेत् ' इत्यादिना विहितमस्ति, **प्रसक्तिः**—तादृशभस्मधारण-प्रसक्तिः, **इतरत्र**—उपासनान्तरे, **न चाऽस्ति**—नैव संभावनामर्हति, **सौत्रामणि....ग्रहस्य**—सौत्रामणिनामकयागप्रस्तावे 'सुराग्रहान् गृह्णाति' इति श्रुतिविहितस्य सुराग्रह (पात्रविशेष) ग्रहणस्य, **इतरत्र**—यागान्तरे, **यद्वत् न प्रसक्तिः**—यथा ग्रहणप्रसङ्गो नैव सम्भाव्यते; तथैव ।। ९० ।।

आथर्वण्यां शिखायामगणि भगवतो या जनिः कारणैक-
ध्येयत्वेदम्परायां जगदुपकृतये सोऽयमिच्छावतारः ।
यद्विष्णोः कारणैकप्रवणफणितिभिः कारणत्वोपदेशः
स्पष्टो दृष्टप्रयोगः सुखजनकतया शम्भुशब्दोऽपि तस्मिन् ।। ९१ ।।

**कारणैक....रायाम्**—'कारणं तु ध्येयः' इति कारणस्यैकस्यैव ध्येयत्वे प्रधानतात्पर्येण प्रवृत्तायाम्, **आथर्वण्यां शिखायाम्**—अथर्वशिखाख्यायामुपनिषदि, **भगवतः**—महाविष्णोः **या जनिः अगणि**—या उत्पत्तिः कथिता वर्तते 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते' इति, **सोऽयम्**—उत्पत्तिरूपेण श्रुतिप्रतिपन्नः अंशः, **जगदुपकृतये**—दुष्टनिग्रह-शिष्टपरित्राणादि-रूपलोकोपकारोद्देश्यकः, **इच्छावतारः**—कर्मानधीनः सङ्कल्पपूर्वकः आविर्भावः, **यत्**—येन हेतुना, **विष्णोः**—परमात्मनो नारायणस्य, **कारणत्वोपदेशः**—अज्ञातस्य जगत्कारणत्वस्य ज्ञापनम्, **कारणै....फणितिभिः**—जगज्जन्मादिकारणभूततत्त्वप्रतिपादने प्रधानतात्पर्यवतीभिः (कारणभूते एकस्मिन्नेवाऽर्थे इति वा) 'एको ह वै नारायण आसीत्' 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति' 'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्' इत्यादिश्रुति-स्मृत्यादिगीर्भिः, **विष्णोः कारणत्वोपदेशः**—विष्णोरेव जगत्कारणत्वविधिरित्ययमंशः, **स्पष्टः**—असन्दिग्धः, **तस्मिन्**—जगत्कारणतया निश्चिते विष्णौ, **शम्भुशब्दोऽपि**—शंभुरित्ययं शब्दोऽपि, **सुखजनकतया**—सुखोत्पादकत्वेन निमित्तेन, **दृष्टप्रयोगः**—अन्यत्र परिचितप्रयोग एव ॥ ९१ ॥

उदितमुपासनद्वयमथर्वशिरःशिखयोः स्फुटमपुनर्भवाय पुरवैरिकलेबरिणः ।
कमलदृशः क्वचित् क्वचन कारणतत्त्वपरश्रुतिविहितस्य हार्दसुषिमध्यजुषो विदुषः ॥९२॥

**अथर्वशिरः-शिखयोः**—अथर्वशिरउपनिषदि अथर्वशिखोपनिषदि च, **अपुनर्भवाय**—मोक्षार्थम् (मोक्षार्थोपायतया) **उदितम्**—विहितम्, **उपासनद्वयम्**—'तदेतदुपासितव्य'मिति, 'शम्भुराकाशमध्ये ध्येयः' इति चोपासनद्वयम् विविक्तस्वरूपमिति, **स्फुटम्**—सुविदितं भवति,

(तत्र) **क्वचित्**—उक्तोपनिषदन्यतरस्यां अथर्वशिरउपनिषदि, **पुरवैरिकलेबरिणः**—रुद्राख्येन देवविशेषेण शरीरिणः, **कमलदृशः**—पुण्डरीकाक्षस्य भगवतः (उपासनम्), **क्वचन**—अनन्तर-श्रुतायाम् अथर्वशिखायामुपनिषदि **कारण .... हितस्य**—जगत्कारणभूतपरतत्त्वप्रतिपादनप्रवृत्तासु श्रुतिषु उपदिष्टस्य, **विदुषः हार्दसुषिमध्यजुषः**—उपासकचेतनीयहृदयाकाशमध्यस्थस्य, **कमल-दृशः**—पुण्डरीकाक्षस्य (विष्णोः) उपासनमिति सुज्ञेयमित्यर्थः ॥ (अतः उपनिषद्द्वयविहित-मप्युपासनम् सद्वारकाद्वारकभेदेन भगवदुपासनमेवेति नात्र किञ्चित् क्लिष्टमस्ति) ॥ ९२ ॥

उक्तं केनचिदीश्वरः पुरुष इत्युक्ती शिव-श्रीशयो
वर्तेते बहुशो महत्परमवाग्युक्ते वियुक्ते अपि ।
इत्युत्कर्ष-निकर्षगोचरपदव्याख्यातयोरेतयो-
रुत्कर्षो गिरिशस्य वक्तुमुचितः पुंसः प्रधानादिव ॥ ९३ ॥

**महत्-परमवाग्युक्ते**—आदौ 'महत्'शब्देन 'परम'शब्देन च उपपदेन विशेषिते, (तथा) **वियुक्ते अपि**—ताभ्यामुपपदाभ्यां रहिते केवले अपि, **ईश्वरः पुरुषः इत्युक्ती**—ईश्वर-पुरुष-शब्दौ, (महेश्वरः परमेश्वरः ईश्वरः) एवम् (महापुरुषः परमपुरुषः पुरुषः) **बहुशः**—प्रायशः, **शिव-श्रीशयोः वर्तेते इति**—शम्भौ लक्ष्मीपतौ च बोधकौ विद्येते इति, (अतश्च) **उत्कर्ष-निकर्षगोचरपदव्याख्यातयोः**—प्रशस्तत्वबोधकेन 'ईश्वर'पदेन, तदपेक्षया अपकृष्टत्वबोधकेन पुरुषपदेन (सेवकादिसाधारणवृत्तिना) च व्यक्तीकृतस्वरूपयोः **एतयोः**—शिव-विष्ण्वोर्मध्ये, **प्रधानात् पुंस इव**—प्रकृतितत्त्वात् पुरुषतत्त्वस्येव, **गिरिशस्य**—शिवस्य, **उत्कर्षः वक्तु-मुचितः**—व्यवहर्तुं योग्यः, ('प्रधान-पुरुषौ' इत्युक्तयोर्मध्ये 'पुरुष उत्कृष्टः, प्रधानमपकृष्टम्'; तथा 'शिव विष्णू' इत्युक्तयोर्मध्ये 'शिव उत्कृष्टः विष्णुरपकृष्टः' इति) **इति केनचिदुक्तम्**—शिवपारम्यकथनप्रवृत्तेन केनचन जनेनोक्तम् ॥ ९३ ॥

नैतत् साधु समाख्यया हि बलवद्वाक्यादिभग्नार्थया
नोत्कर्षो गिरिशस्य वक्तुमुचितः केनाऽपि देवेन्द्रवत् ।
इन्द्रः स्यात् परमेश्वरस्त्वितरथा तत्तत्समाख्यावशा-
दाख्या हि ! प्रबलप्रमाणविहता तस्मिन् महावृक्षवत् ॥ ९४ ॥

**एतत्**—पुरुषशब्दप्रवृत्तितः श्रीशे अपकर्षकल्पनं, ईश्वरशब्दप्रवृत्तितः शम्भौ उत्कर्ष-कल्पनं चेत्युभयमपि, **न साधु**—न समीचीनं, **हि**—यतः, **बलवद्वा....र्थया**—अधिकबलयुक्तैः वाक्य (समभिव्याहार) लिङ्ग (सामर्थ्य) श्रुति (निरपेक्षस्व) रूपैः प्रमाणैः प्रतिरुद्ध स्वाभिधेय प्रतिपत्तिमत्या, **समाख्यया**—श्रुतिलिङ्गादिमध्यपातिन्या प्रमाणभूतयौगिकशब्दाख्यया

समाख्यया, (साधनत्वेनाश्रितया) **गिरिशस्य उत्कर्षः**—शिवस्य विष्णवपेक्षया अतिशयः, **केनाऽपि**—प्रमाणबलाबलचिन्तनपटुना येन केनाऽपि, **वक्तुं नोचितः**—कथयितुं योग्यो न भवितुमर्हति, (ईश्वर-पुरुषादिशब्दाः, कल्प्यमानव्युत्पत्तिविशेषवन्तः सन्तः, समाख्यात्वं प्रतिपद्यन्ते। तदानुगुण्येन च, अर्थविशेषप्रतिपत्तौ प्रमाणतां च लभन्ते। वाक्य-लिङ्ग-श्रुतयस्तु समाख्यातः पूर्वमेव सिद्धप्रमाणभावा इति हेतोः, समाख्यया सम्पिपादयिषितमर्थनिश्चयं प्रतिरुन्धन्तीत्यर्थः) **देवेन्द्रवत्**—'महादेव-देवेन्द्र'योर्मध्ये कतरः श्रेयान्? इति विचारे प्रवृत्ते, शब्दव्युत्पत्तिचिन्तनया, महत्त्वाश्रयदेवभूतशिवापेक्षया परमैश्वर्यवद्देवभूतस्य शक्रस्य, अतिशयनिर्णयो यथा नोचितः तद्वत्, **इतरथा**—प्रमाणबलाबलचिन्तनं विहाय, केवलेन एकदेशग्रहणेनाऽपि अर्थनिर्णयो यदि साधुः स्यात् तदा, **तत्तत्समाख्यावशात्**—अवयवव्युत्पत्ति-विशेषवतः (इदि परमैश्वर्ये) इन्द्र-महेन्द्रादिशब्दानवलम्ब्य, **इन्द्रः**—देवराजः शक्र एव, **परमेश्वरः स्यात्**—सर्वावधिकनिरङ्कुशैश्वर्यवत्तया अभ्युपगम्यो भवेत् न गिरिशः; नाऽपि श्रीशः, **हि**—यतः, **आख्या**—अभिधायकः शब्दः, **तस्मिन्**—शक्रे, **महावृक्षवत्**—क्षुद्रे वृक्षविशेषे यथा 'महावृक्ष'शब्दः प्रयुज्यमानः प्रत्यक्षतो बाधितावयवार्थः तद्वत्, **प्रबलप्रमाण-विहता**—अभिधायकशब्दापेक्षया प्राबल्यवता श्रुति-स्मृत्यादिप्रमाणेन बाधितार्थकः। तथैव महेश्वरादिशब्दोऽपि आपेक्षिकैश्वर्यमहत्त्वादिप्रतिपादनेन निष्पन्नप्रयोजनः सन्, भगवति श्रुत्यादिसिद्धं निरवधिकनिरुपाधिकनिरङ्कुशैश्वर्यं प्रतिरोद्धुं नैव प्रभवेदिति ॥ ९४ ॥

किं जीवः पुरुषोक्तिगोचर इति श्रीशोऽपि तद्गोचरो
जीवः स्याद्गिरिशो ध्रुवो भवति किं तौ स्थाणुसंज्ञाविति।
तक्षत्वाय घटेत किं मुखभुवामाचार्यसंशब्दनं
मण्डूकत्वमुपैति किं हरिपदस्पर्शेन कण्ठीरवः ॥ ९५ ॥

**जीवः**—जीवात्मा, **पुरुषोक्तिगोचर इति**—पुरुषशब्दबोध्य इति हेतोः, **तद्गोचरः**—पुरुषशब्दाभिधेयभूतः, **श्रीशोऽपि**—नारायणोऽपि, **किं जीवः स्यात्?**—जीवो भवितुमर्हति वा; नैव, **तौ**—शङ्कुरूपो दारुविशेषः शम्भुश्चेत्युभावपि, **स्थाणुसंज्ञाविति**—स्थाणुपदवाच्याविति कृत्वा, **गिरिशः**—शम्भुरपि, **ध्रुवो भवति किम्?**—शङ्कुरूपो दारुर्भवति वा; नैव, **मुखभुवाम्**—ब्रह्मजन्मनां विप्राणाम्, **आचार्यसंशब्दनम्**—आचार्यपदाभिलप्यत्वम्, **तक्षत्वाय**—(ब्राह्मणानामपि) वर्धकिभावमापादयितुम्, **घटेत किम्?**—समर्थं भवेत् किम्? नैव भवेत् खलु, **कण्ठीरवः**—सिंहोऽपि, **हरिपदस्पर्शेन**—वाच्यतया हरिशब्दसम्बन्धमात्रेण,

**मण्डूकत्वम् उपैति किम्**—भेकत्वं प्राप्नोति किम्? नैव प्राप्नोति खलु! ॥ शब्दैक्यमात्रं, भिन्नयोरर्थयोः भेदप्रतिघातकं नैव भवति इत्यर्थः ॥ ९५ ॥

प्राणाकाशमुखैः पदैरुपनिषद्भागेषु जोघुष्यते
किं न ब्रह्म परं परत्वगणना जागर्ति किं तावता ।
प्राणाद्येषु शिवादिशब्दकथि(गदि)तं तच्चेत् परत्वं कुत-
स्तत्तत्कारणवाक्यसिद्धभगवत्सृज्येषु रुद्रादिषु ॥ ९६ ॥

**परं ब्रह्म**—सृष्ट्यादिकारणत्वेन सम्प्रतिपन्नं परं ब्रह्म, **उपनिषद्भागेषु**—त्रय्यन्तभागेषु, **प्राणाकाशमुखैः पदैः**—'प्राणः आकाशः' इत्यादिभिः शब्दैः, **न जोघुष्यते किम्**—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इत्यादिरूपेण तत्र तत्र बहुशः उद्घुष्यमाणं न श्रुतं किम्?; श्रुतमेव खलु, **तावता**—तन्मात्रेण, **प्राणाद्येषु**—प्राणाकाशादिष्वर्थेषु, **परत्वगणना**—सर्वोत्कृष्टत्वव्यवहारः, **किं जागर्ति**—प्रवर्तते वा?; नैव प्रवर्तते खलु, **तत्**—परं ब्रह्म, **शिवादिशब्दकथितं चेत्**—शिव-रुद्र प्रभृतिभिः शब्दैः निर्दिश्य बोधितमित्येतावन्मात्रेण, **तत्तत्कारण....सृज्येषु**—तैस्तैः एको ह वै नारायण आसीत्' 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति' इत्यादिभिः कारणवाक्यैः कारणत्वेन सिद्धेन भगवता स्रष्टुमर्हेषु, **रुद्रादिषु**—चेतनभूतेषु रुद्राद्यर्थेषु, **परत्वं कुतः**—सर्वस्मात् परत्वं—अतिशयितत्वं केन हेतुना सिद्ध्येत् ॥ ९६ ॥

यदुपनिषद्भि[1]रप्रथि[1] परिब्रढिमा परमः
कमलदृशो विशुद्धनयलब्धपरिष्कृतिभिः ।
इतरगिरोऽनुरोद्धुमिदमेव घटन्त इति
स्फुटमुपबृंहयन्ति मुनयोऽपि मनुप्रमुखाः ॥ ९७ ॥

**विशुद्धनयलब्धपरिष्कृतिभिः**—प्रमाण-तर्कादिप्रतिघातरहितैः शारीरकलब्धैः वेदान्तार्थनिर्णयसमर्थैर्न्यायैः मिथोविरोधादिशङ्कापरिहाररूपं परिष्कारं प्राप्तवतीभिः, **उपनिषद्भिः**—वेदान्तवाग्भिः, **कमलदृशः**—पुण्डरीकदलामलायतेक्षणस्य भगवतो नारायणस्य, **परमः**—निरस्तसमाभ्यधिकः, **परिब्रढिमा**—उत्कर्षातिशयः, **अप्रथि यत्**—सम्यक् प्रकटीकृत इति यदस्ति **इदमेव**—उपनिषत्प्रकटितं भगवतः सर्वातिशाय्युत्कर्षवत्त्वमेव, **इतरगिरः**—अधीता-

[1] रप्रथि—पा.

नधीतवेदशाखान्तरगताः सर्वा अपि श्रुतिवाचः, **अनुरोद्धुम्**—अनुसर्तुम्, **घटन्त इति**—समर्था भवन्तीति, **मनुप्रमुखाः मुनयोऽपि**—मनुपराशरप्रभृतयः वेदार्थस्मृतिप्रवणा अपि, **स्फुटम्**—असन्दिग्धं यथा तथा, **उपबृंहयन्ति**—(तमेवार्थं परिपोष्य) स्ववाग्भिरपि वर्णयन्ति अतः परं ब्रह्म विष्णुरेव परात्परः ॥ ९७ ॥

—o—

(3) **अधिकरणसारावलिः** ॥ (श्लो॰ 24–26)

(312) सेतुं तीर्त्वेत्यधीतेः 'परिमिति'[1]वचनात् प्राप्यसम्बन्धितोक्तेः
अन्याधिक्यश्रुतेरप्यतिवहननयात् कारणं प्रापकं स्यात् ।
प्राप्यं त्वन्यद् भवेदित्यसदनवधिके कारणे प्राप्यतोक्तेः
सेतुत्वाद्युक्तिरस्मिन् बहुभिरविहतां वृत्तिमङ्गीकरोतु ॥ २४ ॥

**कारणम्**—जगत्कारणतया श्रुत्यादिसिद्धं वस्तु, **प्रापकं स्यात्**—प्राप्यवस्त्वन्तरप्राप्तौ साधनमेव भवितुमर्हम्, न प्राप्यं भवितुम्, **प्राप्यं तु**—प्राप्तिसाधनैः सम्पद्यमानं वस्तु तु, **अन्यत् भवेत्**—प्रापकत्वाभिमतादतिरिक्तमेव भवितुं युक्तम्, (अत्र ज्ञापकानि) **सेतुं तीर्त्वेत्यधीतेः**—'एतमेव सेतुं तीर्त्वा' इति, जगत्कारणभूतस्यार्थस्य सेतुत्वोक्तिपूर्वकं उल्लङ्घनीयत्वश्रुतेः, **परिमितिवचनात्**—चतुष्पात्त्व-षोडशकलत्वादिशब्दैः अस्य परिच्छिन्न-परिमाणतया वर्णनात्, **प्राप्यसम्बन्धितोक्तेः**—मुमुक्षुप्राप्यं यदमृतं तत्प्रापकत्वरूपतत्सम्बन्ध-वत्तया एव 'अमृतस्यैष सेतुः' इति श्रुत्या कथनात्, **अन्याधिक्यश्रुतेरपि**—जगत्कारण-भूतात् अस्माद्वस्तुनोऽतिरिक्तस्यार्थस्य सर्वातिशायितायाः 'ततो यदुत्तरतरम्' इति श्रुत्या प्रतिपत्तेरपि ज्ञापकात् । (कारणस्याऽस्य प्राप्यार्थप्रापकत्वं च) **अतिवहननयात्**—आतिवाहिकैः अर्चिरादिभिः अधिकृतैः पुरुषैर्यथा परमं पदं नीयते विद्वान्; तद्वदेव, **इत्यसत्**—एवं चिन्तनमसाधु, **अनवधिके**—त्रिविधपरिच्छेदातीते, **कारणे**—निरुपाधिकसर्वकारणे परात्पर-वस्तुन्येव अमृतस्वरूपे, **प्राप्यतोक्तेः**—(ध्येयत्व) ध्यानप्राप्यत्वस्य श्रुत्या 'ब्रह्मविदाप्नोति परम्' इत्यादिकया कथनात्, (न प्रापकस्य प्राप्यत्वविरोधः) । **अस्मिन्**—प्राप्ये कारणे चास्मिन् ब्रह्मणि, **सेतुत्वाद्युक्तिः**—प्रापकत्वायत्तसेतुत्ववर्णनं, उन्मानादिवर्णनं च, **बहुभिः**—अन्यैः प्रमाणवाक्यैः, **अविहतां वृत्तिम्**—विरोधानास्पदभूतां स्वार्थप्रतिपादनरीतिम्, **अङ्गीकरोतु**—अवलम्बताम् (अतः कारणमेव परात्परं प्राप्यं प्रापकं चेति) ॥ २४ ॥

---

[1] परिमित – वा. मितमिति—च.

(313) सेतुत्वं सेतुतुल्याद् विधरणनियमाद् बन्धनाद्वाऽत्र युक्तं
व्याप्तेऽप्यस्मिन्नुपाधेः परिमितिवचनं सार्थकं सूत्रितं प्राक् ।
चातुष्पाद्यं च [1]तत्तच्छ्रुतिभि[1]रनुगुणं कल्प्यतेऽनन्तभूम्नः
स्वस्येत्येवाऽमृतस्येत्यभिहितमथवा मुक्तिरेवाऽमृतं स्यात् ॥ २५ ॥

**अत्र**—प्राप्ये परस्मिन् ब्रह्मणि, **सेतुत्वम्**—'एष सेतुर्विधरणः' इति श्रुतिप्रतिपन्नं सेतुत्वं तावत्, **सेतुतुल्यात्**—लोकपरिदृष्टस्य सेतोः तस्य च साधारणधर्मभूतात्, **विधरणनियमात्**—अव्यभिचरितात्सर्वधारकत्वात्, **बन्धनाद्वा**—सर्वस्याप्यर्थस्य असाङ्कर्येणावस्थापनरूपात् मर्यादाबद्धत्वापादनाद्वा, **युक्तम्**—सङ्गतमेव भवति, **व्याप्तेऽप्यस्मिन्**—सर्वव्याप्ते विभावप्यस्मिन् परमात्मनि, **परिमितिवचनम्**—परिच्छिन्नत्वस्य तत्र तत्र श्रुत्यादौ वर्णनम्, **उपाधेः सार्थकम्**—हृदयायतनत्वादिरूपोपाधिसम्बद्धत्वायत्तं सत् सप्रयोजनं भवतीति, **प्राक् सूत्रितम्**—'अर्भकौकस्त्वात्तद्व्यपदेशाच्चे'त्यादिना शारीरकसूत्रेण पूर्वं स्पष्टीकृतम्, **अनन्तभूम्नः**—अपरिच्छेद्यमहिमवतोऽपि परस्य ब्रह्मणः, **तत्तच्छ्रुतिभिरनुगुणम्**—छान्दोग्य-तैत्तिरीयादिगत श्रुतिवाक्यानुरोधि यथा भवति तथा, **चातुष्पद्यं च**—पादचतुष्टयपरिमितत्वमपि **कल्प्यते**—उपासनौपयिकया दृष्ट्या चिन्त्यते; (न तावता अपरिच्छिन्नत्वहानिः) **अमृतस्येति**—'अमृतस्यैष सेतुः' इति श्रुतौ अमृतस्येति पदेन, **स्वस्येत्येव अभिहितम्**—'एषः—परमात्मा, अमृतस्य—अमृतरूपस्य स्वस्य, सेतुः—प्रापकः' इत्येवोक्तम्; न तु स्वस्मादन्यस्य अमृतस्येति, (अतः प्रापकत्वोक्तिः न प्राप्यत्वबाधिका भवतीति) **अथवा**—अर्थान्तरे चिन्त्यमाने, **अमृतम्**—अमृतपदाभिधेयोऽर्थः, **मुक्तिरेव स्यात्**—संसारबन्धस्य विमोक एव भवेत्, 'एषः—भगवान् नारायणः, अमृतस्य—संसारविमोकस्य, सेतुः प्रापकः, मुक्तिदः' इत्यर्थात्, न प्राप्यप्रापकयोरैक्यरूपमसाङ्गत्यम् ॥ (अतः कारणं ब्रह्मैव परात्परमिति) ॥ २५ ॥

(314) अन्यस्याधिक्यवादे परमवधितया कारणं यत्र दृष्टं
तत्र ह्यव्याकृतादिस्त्ववधिरितरापेक्षयाऽसौ परश्च ।
यस्मादन्यत्परं नेत्यभिहितविषये तत्परोक्तेरयुक्ते-
रेवन्त्वादित्यनूक्तिस्तत इति यदि वा व्याप्यमुक्तं तदस्तु ॥ २६ ॥

**यत्र**—यादृशस्थले, **कारणम्**—तत्त्वविशेषस्य कारणतया श्रुतिसिद्धम्, **परम्**—'पर' शब्दाभिधेयं वस्तु, **अवधितया दृष्टम्**—अर्थविशेषगतं परत्वं प्रति(अपकर्षवत्तया) निरूपकं

---

[1] तत्तन्मतिभि—पा.

सत् श्रुतम्, (तादृशे), **अन्यस्याऽधिक्यवादे**—वस्त्वन्तरस्योत्कर्षप्रतिपादके वचने 'अक्षरात् परतः परः' इत्यादौ, **तत्र**—तादृशे स्थले, **तदवधिः**—द्वितीयस्य परत्वस्य निरूपकः अपकृष्टोर्थः, **अव्याकृतादिः**—सन्दर्भानुगुण्येन 'अव्यक्ततत्त्वम्, जीवः, समष्टिपुरुषो हिरण्यगर्भः,' इत्येवं वाच्यः, **असौ**—अव्याकृतादिरर्थः, **इतरापेक्षया**—स्वकार्यापेक्षया, अचेतनापेक्षया, स्वव्यष्ट्यपेक्षया च, **परश्च हि**—अतिशयवानपि भवत्येव खलु !; नात्र विवादः, **यस्मादन्यविषये**—'यस्मात् नाऽपरमस्ति किंचित्' इति पञ्चम्यन्तयच्छब्दबोध्येऽर्थे स्वावधिकपरान्तरराहित्यप्रतिपादनस्थले **तत्परोक्तेरयुक्तेः**—पूर्ववाक्ये सर्वस्मात्परमुक्त्वा उत्तरवाक्ये ततोऽपि परस्य कथनं बाधितमिति हेतोः, **तत इति**—'ततो यदुत्तरतरं तदरूपम्' इति वाक्यस्थं 'ततः' इति पदम्' **एवन्त्वादिति अनूक्तिः**—अस्य उक्तात् सर्वस्मात् परत्वाद्धेतोः इत्यर्थकं सः उक्तानुवादरूपमेव भवति; न तु परत्वं प्रति अवधिसमर्पकं भवति, (येन परान्तरतात्पर्यभ्रमः स्यात्) **यदि वा**—यद्वा, **तत्**—पञ्चम्यन्ततच्छब्देन 'ततः' इत्यनेन बोध्यम्, **उक्तं व्याप्यमस्तु**—'तेनेदं पूर्णं पुरुषेण सर्वम्' इति पुरुषेण व्याप्तत्वेनाऽभिहितं सर्वमेव भवतु। (ततः—स्वव्याप्तात् सर्वस्मात् इत्यर्थः) ॥ २६ ॥

—o—

## (4) अधिकरणार्थसंग्रहः ॥

पराधिकरणे—'एष सेतुर्विधरणः' इति परब्रह्मणः सेतुत्वव्यपदेशात्, 'सेतु'शब्दस्य च कूलान्तरप्राप्तिहेतौ प्रसिद्धेः, अतोऽन्यत् प्राप्यमस्ति—इत्याशङ्क्य,

'सिनोति-बध्नाति स्वस्मिन् असङ्करं चिदचिद्वस्तुजातम्' इति व्युत्पत्त्या, 'सेतु'शब्दस्य असङ्कीर्णधारणपरत्वात्, 'यस्मात् परं नाऽपरमस्ती'त्यादिना परान्तरनिषेधाच्च, 'ब्रह्मणोऽन्यत् प्राप्यं नास्ति—इत्युक्तम् ॥

—o—

## (5) नयसङ्गतिमालिका ॥

उपादानात् प्रपञ्चस्य निमित्तं परमिष्यते ।
विशुद्धं तत्त्वमित्येवं चोद्यं परनयोऽच्छिनत् ॥ १२५ ॥

इति पराधिकरणम् ॥ ७ ॥

—o—

# (82) फलाधिकरणम् ॥ ३-२-८ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(122) साक्षात् क्रमाद्वा फलदत्वदृष्टेरत्राऽपि कर्मैव फलं ददातु ।
नैवेद[1]मन्यार्थतया[1] तु क्लृप्तेः श्रुतिस्मृतिभ्यश्च स एव दत्ते ॥ १७ ॥

**साक्षात्**—(मर्दनादौ) अद्वारकतया वा, **क्रमाद्वा**—(कृष्यादौ) सद्वारकतया परम्परया वा, **फलदत्वदृष्टेः**—(कर्मणः) फलजनकत्वदर्शनात्, **अत्राऽपि**—त्रिवर्गापवर्गसाधनतया श्रुत्यादिप्रतिपन्नयागोपासनादावपि स्थले, **कर्मैव**—यागादिकम् उपासनादिकमेव च, **फलम्**—त्रिवर्गाख्यम् अपवर्गाख्यं च फलम्, **ददातु**—प्रयच्छतु ; (न त्वन्यस्य फलप्रदातुरावश्यकतास्ति इति शङ्कने) **इदं नैव**—कर्माराध्यं विना कर्मण एव फलप्रदत्वमित्येतत् नैव साधु, **श्रुति-स्मृतिभ्यश्च**—वेदेभ्यः तदुपबृंहणेभ्यः इतिहास-पुराणादिभ्यश्च, **अन्यार्थतया तु**—स्वेतरदेवताविशेषप्रीत्यापादनार्थमेव च, **क्लृप्तेः**—यागोपासनादेः विधानदर्शनात्, **स एव**—कर्मोपासनाराध्यः परमात्मैव, **दत्ते**—स्वर्गमोक्षादिकं फलं प्रयच्छति ॥ २७ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(315) आराध्यः कर्मकाण्डस्थितनयनिवहस्थापितानां क्रियाणा-
मध्यक्षो देवतानामनुपधिमहिमा मध्यकाण्डोदितानाम् ।
अत्राऽप्येतावतोक्तो भवभयचकितप्राप्त्युपास्त्येक[2]लक्ष्य-
स्तत्त[2]च्छास्त्रार्थयोग्यं दिशति फलमिति स्थाप्यतेऽथात्युदारः ॥ १७ ॥

**कर्मकाण्ड ···· स्थापितानाम्**—द्वादशलक्षण्यात्मिकायां पूर्वमीमांसायां क्लृप्तैः उपसद्धैः न्यायसमुदयैः विप्रतिपत्त्यादेः अनवकाशो यथा भवति तथा विचार्य इदमित्थमिति निर्णीतानाम्, **क्रियाणाम्**—यागादिरूपाणां चोदनालक्षणानामर्थानाम्, **आराध्यः**—तज्जन्यप्रीत्याश्रयत्वतो भोक्ता, **मध्यकाण्डोदितानाम्**—सङ्कर्षपरनाम्नि कर्म-ब्रह्मकाण्डयोर्मध्यवर्तिनि काशकृत्स्नप्रभवे देवताकाण्डे कर्मभिर्यजनीयतया सिद्धानाम्, **देवतानाम्**—अग्नीन्द्रादिकानां देवतापदाभिधेया-नामर्थानाम्, **अनुपधिमहिमा अध्यक्षः**—तत्तदन्तर्यामिभूतः सन् तत्तदीयतृप्तेः पर्यवसान-काष्ठाभूतः स्वाभाविकवैभवयुक्तो नियन्ता च, **अत्रापि**—अन्तिमेऽस्मिन् शारीरकाख्यब्रह्म-

---

[1] मभ्यासतया—क. [2] लक्ष्यं तत्त—पा.

काण्डेपि, **एतावता**—आदितो दशभिः पादैः, **भवभय....लक्ष्यः**—संसारदावानलसाध्वसेन अनन्यगतिकतया दिग्भ्रान्तान्तःकरणानां चेतनानाम् प्रात्येकलक्ष्यत्वनिश्चयतः उपासनैकलक्ष्यभूतः, परमपुरुष एव, **तत्तच्छास्त्रार्थयोग्यम्**—यागादिरूपस्य कर्मविधायिशास्त्रार्थस्य, उपासनादिरूपस्य मोक्षोपायविधायिशास्त्रार्थस्य च यथायथम् अनुगुणम्, **फलम्**—प्रयोजनभूतं त्रिवर्गमपवर्गं च तत्तदीप्सितम्, **दिशतीति**—अनुगृह्णातीति प्रतिपाद्य, **अत्युदारः अथ स्थाप्यते**—(स्वविभूतिमारभ्य स्वात्मपर्यन्तप्रदानरूप) निरस्तसमाभ्यधिकमहौदार्यसम्पन्नोऽयमिति अस्मिन्नधिकरणे दृढीक्रियते ॥ २७ ॥

(316) कृष्यादेर्मर्दनादेरपि भवति फलं द्वारतो वाऽन्यथा वा

धर्माणां साधनत्वं श्रुतिभिरवगतं दोषबाधोज्झिताभिः ।

तस्मादीशप्रसादात् फलमिति तु वचस्तत्प्रशंसेति चेन्न

श्रौताराध्यप्रसादत्यजनकदनतोऽपूर्वक्लृप्तेरयोगात् ॥ २८ ॥

**कृष्यादेः मर्दनादेरपि**—भूमौ बीजानामावापपूर्वकं कर्षणादिव्यापारतः, (तथा) **मर्दनादेरपि**—तैललेपपूर्वकं अङ्गमर्दनादेर्व्यापारतोऽपि च, **द्वारतो वा**—मध्ये यत् किंचिद्द्वारीकृत्य वा, **अन्यथा वा**—यत् किंचिन् अद्वारीकृत्य वा, **फलं भवति**—आरोग्यसम्पत्तिसस्यसम्पत्त्यादिकं फलं सम्पद्यते, (तद्वत्) **धर्माणाम्**—याग-दान-होमोपासनादिरूपाणां धर्मपदाभिधेयानां कर्मणाम्, **साधनत्वम्**—त्रैवर्गिकापवर्गिकफलाधायकत्वम्, **दोष-बाधोज्झिताभिः**—नित्यनिर्दोषस्वभावाभिः प्रमाणान्तरबाधरहिताभिश्च, श्रुतिभिः (वेदवाग्भिः) **अवगतम्**—स्पष्टमेव ज्ञातमस्ति, **तस्मात्**—कर्मणां धर्मपदाभिधेयानामेव फलप्रदत्वसिद्धेः, **ईशप्रसादात् फलमितिवचस्तु**—भगवदनुग्रहादेव फलसिद्धिरित्यर्थकं पुराणादिवचनं परम्, **तत्प्रशंसा**—ईश्वरस्तुत्यर्थवादरूपमेव, **इति चेन्न**—एवं शङ्कनं साधु न भवति, **श्रौताराध्य....कदनतः**—'स एवैनं भूतिं गमयति' इत्यादिश्रुतिप्रतिपन्नस्य कर्माराध्यदेवताप्रसादस्य फलप्रदत्वपरित्यागरूपदोषापत्तेः, **अपूर्वक्लृप्तेः**—कर्मोपासनादेः स्वर्गापवर्गादेश्चान्तरा अपूर्वनाम्नः अश्रुतपूर्वस्य कस्यचनार्थस्य फलप्रदत्वकल्पनायाः, **अयोगात्**—औचित्यासम्भवात् ॥ २८ ॥

(317) यद्यप्याराध्यमूलं फलमिति फलितं देवताधिक्रियायां

कर्मापेक्षा तथोक्ता फलजननपरप्रेरणादौ तथाऽपि ।

साक्षित्वानादरत्वप्रभृतिपरगुणान् प्रेक्ष्य तत्प्रीणनादौ

शङ्कातङ्कैर्निरुद्धांस्त्वरयितुमधुना तादृशोदारतोक्तिः ॥ २९ ॥

**यद्यपि**—वस्तुतश्चिन्त्यमाने, **फलम्**—(फलोद्देशेन क्रियमाणस्य) कर्मणः उद्देश्यभूतं फलम्, **आराध्यमूलमिति**—कर्मणा प्रीणनीयो यः तत्कारणकमेवेति, **देवताधिक्रियायाम्**—आद्याध्यायीये देवताधिकरणे, **फलितम्**—देवतास्वरूप-तद्विग्रह तत्सन्निधान-तदुपासनयोग्यतादि-विचारफलतया सिद्धमेव, **तथा**—तद्वदेव, **फलजनन-परप्रेरणादौ**—(परदेवताभूतस्य भगवतः) फलप्रदाने, विहित-निषिद्धाख्येषु कर्मसु प्रवर्तने, अग्न्यादीनां वागाद्यनुप्रवेशेपि च, **कर्मापेक्षा**—तत्तज्जीवीयपूर्वकर्मसहकारावलम्बना, **उक्ता**—परायत्ताधिकरणादौ निरूपिता, **तथाऽपि**—एतेषामर्थविशेषाणामधिकरणान्तरतो लाभेऽपि, **साक्षित्वा....गुणान्**—केवलद्रष्टृत्वे सति निर्व्यापारस्वरूपं यत् साक्षित्वम्, अवाप्तसमस्तकामत्वेन निखिलं जगत् तृणीकृत्य जोषमासीनत्वरूपं यत् अनादरत्वं, तदादिकान् अभिगम्यत्वप्रतिबन्धकतया भासमानान्, परमात्मगतान् गुण-विशेषान्, **प्रेक्ष्य**—शास्त्रतोऽवगतानालोच्य, **तत्प्रीणनादौ**—तादृशगुणविशेषयुक्तपरमात्म-प्रीतिजननादौ व्यापारे, **शङ्कातङ्कैर्निरुद्धान्**—संशय-भीत्यादिभिः स्थगितप्रवृत्तीन्, जनान्, **त्वरयितुम्**—अनौदासीन्येन तीव्रतया तत्प्रीणनोद्युक्तान् कर्तुम्, **अधुना**—साधनाध्यायीये अस्मिन् अधिकरणे, **तादृशोदारतोक्तिः**—वात्सल्यातिशयेन सर्वकर्मफलप्रदानतत्परत्वरूपस्य महौदार्यस्य भगवति निरूपणम् ॥ २९ ॥

(318) सम्राजा सानुकम्पात् पितुरुचितविदः साम्यभाजो वदान्यात्
स्थाने विन्दन्ति पुत्रा नियतरुचिभिदा यन्त्रितास्तं तमर्थम् ।
तत्र प्राप्यं स्वतो यद्विहतिरिह यतस्तत्प्रशान्तिश्च यस्मा-
द्द्वेयं [1]यद्वाऽ[1]विशेषाद्गमनमपि यथालोकमत्राऽपि तत् स्यात् ॥ ३० ॥

**सानुकम्पात्**—दयालोः, **उचितविदः**—उचितानुचितयोर्मध्ये उचितं विविच्य जानतः, **साम्यभाजः**—पुत्रेष्वविषमवृत्तेः, **वदान्यात्**—उदारप्रवृत्तेः, **साम्राजः**—मण्डलेश्वरात्, **पितुः**—स्वजनकात् (सकाशात्) **पुत्राः**—तत्सुताः, **नियत....यन्त्रिताः**—स्वं स्वं प्रति निसर्ग-कृतव्यवस्थावता रुचिविशेषेण नियन्त्रितप्रार्थनाः सन्तः, **स्थाने**—योग्ये समये, **तं तमर्थम्**—स्वप्रार्थितमर्थविशेषम्, **विन्दन्ति**—लभन्ते, **तत्र**—सम्राट्पितापुत्रस्थले, **यत्**—यादृशं गृह-क्षेत्रारामादि, **स्वतः प्राप्यम्**—स्वभावत एव लभ्यम्, **यतः**—यादृशात् आज्ञोल्लङ्घनाद्धेतोः, अनिष्टकर्माचरणाद्वा, **इह विहतिः**—स्वतः प्राप्यार्थविषये विघातो भवति, **यस्मात्**—क्षमा-प्रार्थनात्, **तत्प्रशान्तिश्च**—प्राप्तस्य विघातस्य निवृत्तिर्भवति, **अविशेषात्**—सर्वपुत्र-

---

[1] **याचा पा.**

साधारण्यतः, **यद्वा**—यदपि च वस्तु, **देयम्**—राज्ञैव पुत्रेभ्यः प्रदेयं वर्तते, **दमनमपि**—अपराधं कृत्वा क्षमाया अप्यप्रार्थने दण्डनं च यदस्ति, **तत्**—तत् सर्वमपि, **यथालोकम्**—लोकवदेव, **अत्राऽपि**—दार्ष्टान्तिकभूतजीव-परमात्मस्थलेऽपि, **स्यात्**—सङ्गततया अन्वियात् ॥३०॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

फलाधिकरणे—'यजेत स्वर्गकामः' इत्यादिशास्त्रे स्वर्गकामकर्तव्यतया यागाद्यभिधानान्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमवगमयतीति, धर्म एव फलप्रदः—इत्याशङ्क्य,

'अन्नादो वसुदानः' 'एष ह्येवाऽऽनन्दयाति' इत्यादिभिः, तत्तत्कर्मभिराराधितस्य परमात्मन एव भोगापवर्गरूपफलप्रदत्वश्रवणात्, अश्रुतापूर्वादिकल्पनायोगाच्च परमात्मैव फलप्रदः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

फलप्रदं यदा कर्म कारणोपासना तदा ।
व्यर्थेत्याक्षेपशान्त्यर्थं दाता फलनयोदितः ॥ १२६ ॥

इत्थमष्टाधिकरणी पेटिकाद्वयभूषिता ।
तृतीयस्य द्वितीयेऽस्मिन् पादेऽन्योन्यं सुसङ्गता ॥ १२७ ॥

इति फलाधिकरणम् ॥ ८ ॥

—o—

[अधिकरणार्थसङ्क्षेपादिः]

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(123) स्वप्नः सुषुप्तिः प्रतिबोधनं च 'मूर्च्छा च'[1] जीवस्य परस्य [2]चाऽपि[2] ।
निर्दोषभावो जगदंशिभावः सर्वेश्वरत्वं फलदातृता च ॥ १८ ॥

(एतत्पादीयाद्याधिकरणमारभ्य यथाक्रमं) **जीवस्य च**—प्रत्यगात्मनश्च, **स्वप्नः**—'सन्ध्य'-पदाभिधेया स्वप्नावस्था, **सुषुप्तिः**—बाह्यान्तःकरणव्यापारोपरतिरूपा निद्राख्याऽवस्था, **प्रति-**

---

[1] मूर्च्छाऽपि—क.   [2] वाऽपि—क.

**बोधनं च**—सर्वेन्द्रियव्यापारावस्था जाग्रदाख्या च, (तथा) **मूर्च्छा च**—सुख-दुःखव्यपोह-कार्यवस्था रोगविशेषरूपा चेति (एताः जीवगतावस्थाः), **परस्याऽपि**—परमात्मनोऽपि, **निर्दोषभावः**—दोषसामान्यासंस्पृष्टत्वम्, अखिलहेयप्रत्यनीकत्वरूपं समस्तकल्याणगुणाकरत्व-सहितम्, **जगदंशिभावः**—अहिकुण्डलन्यायेन मूर्तामूर्तजगदाकाराश्रयत्वम्, **सर्वेश्वरत्वम्**—सर्वस्मात् परस्मात् परत्वयुतं सर्वनियन्तृत्वम्, **फलदातृता च**—तस्यैव त्रैवर्गिकापवर्गिक-सर्वफलस्याऽपि प्रदातृता सद्वारकाद्वारकतयेति (अपूर्वकल्पनानावश्यकता) एते अष्टभिरधिकरणैः प्रतिपादिता अर्थाः ॥ १८ ॥

(124) न्यायैश्चतुर्भिराद्यैर्विचिन्तितः पूर्वपादशेषस्तु[1] ।
तस्मादत्र तु पादे सुसङ्गतं पञ्चमात् प्रभृति ॥ १९ ॥

**आद्यैः चतुर्भिः न्यायैः**—एतत्पादीयैः प्राथमिकैः (सन्ध्य-तदभाव-कर्मानुस्मृतिशब्द-विधिमुग्धाख्यैः) चतुरधिकरणैः, **पूर्वपादशेषस्तु**—जीवदोषप्रतिपादनपरप्रथमपादशेषभूतोंऽश एव, **विचिन्तितः**—विचार्य निर्णीतः। **तस्मात्**—उक्ताद्धेतोः, **अत्र पादे**—द्वितीये पादे, **पञ्चमात् प्रभृति तु**—उभयलिङ्गाधिकरणमारभ्य अधिकरणचतुष्टयमेव, (उभयलिङ्ग-अहिकुण्डल-पर-फलाख्यम्) **सुसङ्गतम्**—प्रधानपादार्थान्वयेन सुष्ठु सङ्गतिमद्भवति ॥ १९ ॥

(125) स्थानित्वादचिदैक्या[2]दवरत्वादफलदत्वाच्च[2] ।
अनुपास्यमिति तु शङ्कां शकलयति स्मोत्तरै[3]श्चतुर्भिरिह[3] ॥ २० ॥

**स्थानित्वात्**—परस्य ब्रह्मणः दोषमयदेहादिस्थानसम्बद्धत्वात् (अन्तर्यामित्व-सर्वव्यापकत्व-कृतात्) **अचिदैक्यात्**—सततविकारिस्वभावेन अचेतनाख्येन वस्तुना सह परस्य अंशांशिभाव-कृतादभेदात्, **अवरत्वात्**—स्वापेक्षया अधिकस्य अन्यस्य सत्त्वेन तदपेक्षया अस्य कारणस्य परब्रह्मणः अपकृष्टत्वसिद्धेः, **अफलदत्वाच्च**—चोदितस्य धर्मपदाभिधेयस्य यागदानादेरेव च त्रैवर्गिकापवर्गिकफलजनकतया परमात्मनः पुरुषार्थप्रदायकत्वाभावादपि च, **अनुपास्यम्**—परं ब्रह्म उपासनेन आराधयितुमनर्हम्, **इति शङ्काम्**—एवं रूपामाशङ्काम्, **इह**—अस्मिन् पादे, **उत्तरैः चतुर्भिः**—पञ्चमादिभिः चतुरधिकरणैः, **शकलयति स्म**—चूर्णीकरोति, शमयति स्म ॥ २० ॥

—o—

[1] पादशेषः सः—ग. [2] दंशत्वादफलकत्वाच्च—ख.
[3] श्चतुर्भिः—क. श्चतुर्भिरिमाम्—ख.

## (2) अधिकरणसारावलिः ॥

(319) शुद्धानन्दे तदित्थं शुभगुणजलधौ सत्यनित्यस्वदेहे
देवीभूषायुधाद्यैरतिशयिनि कनद्भोगलीलाविभूतौ ।
शेषित्वाधारभावप्रभृति बहुविधस्यास्तुसम्बन्धदीप्ते
दृष्टिः स्वर्गापवर्गप्रसवितरि हरौ निर्निमेषा श्रुतिर्नः ॥ ३१ ॥

**तत्**—परमात्मनः सर्वफलदत्वसाधनात्, **इत्थम्**—अत्र वक्ष्यमाणया रीत्या, **शुद्धानन्दे**—दुःखलवेनाप्यसंस्पृष्टानन्दैकस्वरूपस्वभावे, **शुभगुणजलधौ**—अपुरुषार्थासम्भिन्नानां स्वस्य परेषां च अनुकूलैकरूपाणां अनन्तानां मङ्गलानां गुणानां निधानभूते, **सत्य-नित्यस्वदेहे**—परमार्थभूत-सदातनदिव्यमङ्गलविग्रहशालिनि, **देवीभूषायुधाद्यैरतिशयिनि**—लक्ष्म्यादिदेवीभिः, श्रीवत्स-कौस्तुभादिभिः दिव्याभरणैः, सुदर्शनादिभिः दिव्यायुधैश्च सर्वविलक्षणोत्कर्षवति, **कनद्भोग-लीलाविभूतौ**—सदा देदीप्यमानया परमपदाख्यया भोगविभूत्या निरन्तरं प्रवाहरूपेणानु-वर्तमानया लीलाविभूत्या च विराजमाने, **शेषित्वा....दीप्ते**—निरुपाधिकसर्वशेषित्व-स्वाभाविक-समस्तजगदाधारत्व-सर्वनियन्तृत्व-सर्वप्रकारित्व-सर्वापृथक्सिद्धत्व-सर्वशरीरित्व-सर्वकारणत्वमुखैः विविधैः यावदात्मभाविभिः (जगतः स्वस्य च) सम्बन्धैर्विलक्षणशोभावति, **स्वर्गापवर्ग-प्रसवितरि**—अचिन्त्यानन्तमहिम्नि स्वस्मिन्नेव, गर्भीकारेण निहितं त्रैवर्गिकापवर्गिकफलजातं उचिते काले यथायोग्यमनुग्रहीतरि, **हरौ**—श्रीमति मुकुन्दे भगवति विषये, **नः**—अस्माकम्, **श्रुतिः**—नित्यनिर्दोषवेदराशिरेव, **निर्निमेषा दृष्टिः**—प्रमादादिगन्धविदूरो नेत्रस्थानीयः प्रमाण-मूर्धन्यः । (अयं पादप्रधानतात्पर्यगोचरोऽर्थः) ॥ ३१ ॥

(320) पादे स्वाप्नार्थहेतुस्तदयमिह सुषुप्त्याधृतिः सुप्तगोप्ता
मुग्धेद्धोधादिकर्ता त्वनघशुभगुणोऽचिद्भिरंशी स्वदेहैः ।
पारम्यस्यैकसीमा सकलफलद इत्युच्यते भक्तिभूम्ने
[1]सत्ये त्वेवं[1] गुणादावथ परभजने रूपभेदादि चिन्त्यम् ॥ ३२ ॥

**तत्**—पादप्रधानार्थस्य ईदृशत्वात्. **इह पादे**—अस्मिन् तृतीयाध्यायीयद्वितीयचरणे, (अष्टस्वप्यधिकरणेषु) **अयम्**—दिव्यगुणविग्रहविभूत्यादिसम्पन्नः परब्रह्मभूतः परमात्मा नारायणः,

---

[1] सत्ये ह्येवं—पा.

**स्वाप्नार्थहेतुः**—जीवात्मना स्वप्नदशायामनुभूयमानानामर्थानां सृष्टिकर्ता, **सुषुप्त्याधृतिः**—सुषुप्त्याख्यायामवस्थायां जीवस्यायस्तकरणकलेबरस्य विश्रामस्थानभूतः, **सुप्तगोप्ता**—सुषुप्तस्य यावत्स्वापं प्रदायाश्वासं प्रबोधप्रदानेन रक्षिता, **मुग्धोद्बोधादिकर्ता**—प्राप्तमूर्च्छानां यथाकर्म पुनः प्रबोधस्य मरणस्य वा सम्पादकः, **अनघशुभगुणः**—निरस्तसमस्तहेयदिव्यमङ्गलगुणः, **अचिद्भिः स्वदेहैरंशी**—मूर्तामूर्ताख्याचेतनजगदात्मकैः शरीरैः सांशः, **पारम्यस्य एकसीमा**—परत्वस्य परमकाष्ठाभूतः, **सकलफलदः**—ऐहिकामुष्मिकसर्वफलप्रदाता, **इति**—एवंरीत्या (पुरुषार्थभूतगुणाश्रयतया) **भक्तिभूम्ने**—उपासनवृद्ध्यै, **उच्यते**—परमात्मैव अधिकरण-भेदैर्वर्ण्यते । **एवम्**—उक्तरीत्या, **सत्ये तु**—परमार्थभूते एव, **गुणादौ**—गुणविग्रहादौ सति, **अथ**—पश्चात्तने तृतीयपादे, **परभजने**—परमात्मोपासने ; **रूपभेदादि**—उपास्यविशेषणभूतं भिन्नभिन्नं रूपादिकम् , **चिन्त्यम्**—उपासनविषयतां प्राप्तुमर्हम् ।। ३२ ।।

इति तृतीयस्याऽध्यायस्य द्वितीयः पादः ।। २ ।।

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

तृतीयस्याऽध्यायस्य तृतीयः पादः ॥

## (83) सर्ववेदान्तप्रत्ययाधिकरणम् ॥ ३-३-१ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(126) अविशेषतः श्रुतत्वात् प्रकरणभेदाच्च भेदिनी विद्या ।
नैवं प्रतिपत्तॄणां भिन्नत्वा[1]च्चोदनाद्यभेदाच्च[1] ॥ २१ ॥

**अविशेषतः श्रुतत्वात्**—एकत्र शाखाविशेषे यथा श्रुतम्; तथा शाखान्तरेऽपि अविलक्षणतया पुनः श्रुतत्वात् हेतोः, **प्रकरणभेदाच्च**—एकस्यामेव शाखायामपि श्रवणस्थले प्रस्तावरूपस्य विद्याप्रकरणस्य भिन्नत्वादपि हेतोः, **विद्या**—दहरवैश्वानरादिरूपा विद्या, **भेदिनी**—छान्दोग्यादिगतात् वाजसनेयादिगता अत्यन्तं भिन्नैव, इति शङ्कने, **नैवम्**—ईदृशरीतिकं नोचितम्, **प्रतिपत्तॄणां भिन्नत्वात्**—तत्तच्छाखाध्येतॄणां विभिन्नत्वात्, **चोदनाद्यभेदाच्च**—विधिस्वरूप-रूप-आख्या-फलसंयोगानाम् अभिन्नत्वादपि शाखाभेदतः प्रकरणभेदतश्च अविशेषपुनःश्रुत्यादिका विद्याभेदसाधिका न भवति ॥ २१ ॥

—o—

### (2) अधिकरणसारावलिः (पादोपोद्घातभागः) (श्लो. 1-5) ॥

(321) तत्त्वज्ञानानुविद्धं हिततममनघं मोक्ष्यमाणस्य वक्तुं
तत्त्वे निर्धूय तर्कज्वरजनितमहासन्निपातप्रलापान् ।
निष्पन्ने तत्त्वबोधे न किमपि विदुषा साध्यमित्युद्गृणद्भ्यो
यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिलाभाय वक्ति ॥ १ ॥

**मोक्ष्यमाणस्य**—स्वस्वरूपाविर्भावप्रतिबन्धकेभ्यो विमोकं प्राप्स्यतः पुरुषस्य, **तत्त्वज्ञानानुविद्धम्**—चिदचित्तत्त्वनियामकत्व-शेषित्व-धारकत्वादिमतः ईश्वररूपस्य परतत्त्वस्य विविच्य ज्ञानतः प्रवृत्तम् तत्सहकृतं च, **अनघम्**—सर्वपापनिरसनक्षमम्, **हिततमम्**—परम-

[1] चोदनाद्यविशेषाच्च—क.

पुरुषार्थप्रापकतया अभ्यर्हितोपायभूतम्, (उपासनाख्यं साधनम्) **वक्तुम्**—वेदान्तसिद्धं न्यायतो निर्णेतुम्, **तत्त्वे**—चेतनाचेतनेश्वराख्यतत्त्वत्रयविषये, **तर्कज्वरजनितमहासन्निपातप्रलापान्**—परमार्थनिर्णयापर्यवसायिनो येऽप्रतिष्ठितास्तर्काः केवलमुपतापहेतुत्वेन ज्वरपदाभिधेयाः, तेषां निरन्तरानुवृत्त्या उत्पन्नो यः संनिपातपदाभिधेयः विषमावस्थाविशेषः तत्कालीनान् व्यवहारविशेषान्, **निर्धूय**—दूरीकृत्य, **तत्त्वबोधे निष्पन्ने**—निर्विशेषचिन्मात्राख्यस्य परस्य ब्रह्मणः प्रत्यक्तत्वस्य अवबोधे सिद्धे सति, **विदुषा**—प्राप्ततत्त्वावबोधेन **साध्यम्**—मोक्षोपयोगितया कर्तव्यम्, **किमपि न**—यत्किंचिदपि नैव विद्यते, **इति उद्गृणद्भ्यः**—एवं वादिनोऽद्वैतदार्शनिकानुद्दिश्य, **मुक्तिलाभाय**—मोक्षावाप्तये, **यावज्जीवानुवर्त्यं मुररिपुभजनम्**—देहधारणं यावत् आप्रयाणमनुष्ठेयं भगवदुपासनम्, **वक्ति**—हिततमतया बोधयति अध्यायशेषेण बादरायणः ॥ १ ॥

(322) भीमाभ्यो यातनाभ्यः पितृपथगमनावर्तनादेश्च बिभ्यत्
तृष्णां कृष्णामृताब्धौ परिणयति परां यावता तावदुक्तम् ।
इत्थं लब्धाधिकारः परमधिकुरुते साधने यत्र साङ्गे
पादद्वन्द्वे परस्मिन् तदिह बहुभिदा बर्बरं निर्ब्रवीति ॥ २ ॥

**भीमाभ्यः**—अत्यन्तं भयङ्करीभ्यः, **यातनाभ्यः**—नारकीभ्यो वेदनाभ्यः सकाशात्, (तथा) **पितृपथगमनावर्तनादेश्च**—पितृयाणाख्ये वर्त्मनि सुकृतायत्तात् आरोहात्, सुकृतक्षयप्रयुक्तात् अवरोहाच्च पौनःपुन्येन गर्भप्रवेशादिजनकतया सन्तन्यमानादपि च, **बिभ्यत्**—भयं प्राप्नुवन् चेतनः, **यावता**—जीवदोष-भगवद्गुणादियावदर्थज्ञानेन, **कृष्णामृताब्धौ**—श्रीकृष्णाख्ये अमृतमये महोदधौ, **परां तृष्णाम्**—उत्कटामिच्छां (तत्प्राप्तिं विना आत्मधारणालाभपर्यवसितां परां काष्ठामारूढामाशाम्) **परिणयति**—स्वाविनाभूततया निरन्तरं स्वीकुर्यादेव, **तावत्**—ज्ञेयं तावद्विषयजातम्, **उक्तम्**—प्राक्तनेन पादद्वयेन प्रतिपादितम् । **इत्थम्**—अनेन इच्छासम्पत्तिरूपेण प्रकारेण, **लब्धाधिकारः परम्**—साधनानुष्ठानप्रवृत्त्यर्हतां प्राप्त एव चेतनः, **साङ्गे**—परिकरसम्पत्तिमति, **यत्र साधने**—भगवदुपासनाख्ये यस्मिन् परमोपाये (अष्टाङ्ग-षडङ्गाख्ये भक्ति-प्रपत्त्योरन्यतरस्मिन् परमपुरुषनिग्रहसङ्कल्पनिवर्तके) **अधिकुरुते**—प्रवृत्तिं प्राप्नुयात्, **तत्**—तादृशं परमपुरुषोपासनम्, **इह**—एतदध्यायीये **परस्मिन् पादद्वन्द्वे**—पश्चात्तने तृतीय-तुर्याख्यपादद्वये, **बहुभिदा बर्बरम्**—तत्तद्वेदान्तोक्तबहुभेदजुष्टम्, **निर्ब्रवीति**—वक्तव्यसर्वार्थविवरणपूर्वकं प्रतिपादयति भगवान् बादरायणः ॥ २ ॥

(323) एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्-
भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात् ।
तस्मादस्मिन् प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये
वेद्यावच्छिन्नविद्यानियमकृदयमि'त्यैदमर्थ्यं[1] समर्थ्यम् ।। ३ ।।

**निपुणनयकृता**—कुशलेन न्यायग्रन्थकारेण, **एकस्मिन् पादे एव**—न्यायग्रन्थान्तः-पातिनि अभिन्ने चरणे एव, **द्वयोः तर्कणम्**—उभयोरर्थयोश्चिन्तनम्, **न स्यात्**—नैव युक्तं भवेत्, **इह**—अस्मिन् पादे, **भेदोऽभेदश्च एकः विषयो न भवेत्**—विद्यानां भेदाभेदान्यतर-देकं विचारणीयार्थरूपं न भवितुमर्हम्, **अन्यहानप्रसङ्गात्**—भेदतर्कणे अभेदस्य, अभेदतर्कणे भेदस्येति अपरार्थस्य परित्यक्तत्वापत्त्या भेदाभेदविचाररूपत्वायोगापत्तेः, **तस्मात्**—उक्तानुपपत्ति-रूपाद्धेतोः, **अस्मिन्**—तृतीये पादे, **नयविततिः**—अधिकरणगणयोजना, **प्रकीर्णा**—सङ्कीर्ण-बह्वर्थैव ; न तु समग्रपादानुगतैकार्था, **इति**—एवमाकारे, **प्रेक्षितग्रन्थचोद्ये**—आचार्यमुखात् अगृहीतार्थस्य केवलं भाष्यग्रन्थावलोकिनः पुरुषस्य शङ्कने प्रवृत्ते सति; **अयम्**—तृतीयः पादः, **वेद्या-मकृदिति**—तत्तद्गुणविशेषविशिष्टब्रह्मरूपवेद्यार्थयुक्तविद्याविशेषव्यवस्थाकारी इति, **ऐदमर्थ्यम्**—निर्दिष्टैकार्थकत्वम्, **समर्थ्यम्**—स्पष्टं साधनीयम् ॥ ३ ॥

(324) आख्यावन्तं गुणानां निजगदुरुपसंहारतः पादमेतं
विद्यैक्यार्थे तदस्मिन्नपवदनतया भेदचिन्ता प्रसक्ता ।
इत्थं शुश्रूषुशङ्कामिह शिथिलयितुं भाषितं भाष्यकारै-
स्तद्भेदाभेदमीमांसनमिह "विषयस्त्वत्र"[2] चोक्तोऽनुवृत्तः ।। ४ ।।

**एतं पादम्**—तृतीयाध्यायीयं तृतीयं पादम् **गुणानामुपसंहारतः**—एकाभिधानासु विद्यासु सर्ववेदान्तवाक्यैरवगतानां ब्रह्मगुणानाम् एकत्र सङ्गृह्योपासनोपयोगाद्धेतोः, **आख्या-वन्तम्**—गुणोपसंहारपाद इत्यभिधानवन्तम्, **निजगदुः**—(एतदर्थचिन्तका वृद्धाः) व्यवजह्रुः, **तत्**—ततो हेतोः, **विद्यैक्यार्थे**—विद्यानामभेदनिरूपणतत्परे, **अस्मिन्**—तृतीयचरणे, **भेदचिन्ता**—विद्यानां भेदविचारः, **अपवदनतया प्रसक्ता**—पादप्रधानभूतार्थाभवादांशप्रदर्श-नार्थमात्रोद्देशतः आपतितः ; न पादस्वभावायत्तः. **इत्थम्**—एवं प्रकारम्, **इह**—पादार्थविषये प्रवृत्ताम्, **शुश्रूषुशङ्काम्**—शिष्यहृदयगतामाशङ्काम्, **शिथिलयितुम्**—परिहृतुम्, **भाष्य-कारैः**—भाष्यकृद्भिः भगवद्रामानुजैः, **तद्भेदाभेदमीमांसनम्**—विद्यानां भेदाभेदयोरुभयोरपि

[1] त्यैक्यमर्थं—? सा.र.प्र.  [2] विषयस्तत्र—च.

तर्कणमेव, **इह भाषितम्**—पादारम्भे, कर्तव्यतया स्पष्टमुक्तम्, **अत्र**—पादेऽस्मिन्, **अनुवृत्तो विषयस्तु**—अनुगतः एकोऽर्थस्तु, **उक्तः**—वेद्यावच्छिन्नविद्यानियमकत्वम् इति, पूर्वश्लोके उक्तः ॥ ४ ॥

(325) निस्सीमानन्दनाडिन्धमनिरुपधिकानन्तसम्पद्गुणौघे
विद्याभेदैर्विभज्य प्रणिधिरिह यदि प्राप्तिरप्यंशतः स्यात् ।
मैवं तैरेव धर्मैस्तदितरसहितैः पूर्णकामस्य पूर्णं
प्राप्यं ब्रह्मैव नाऽन्यत् किमपि फलमतस्तत्क्रतुन्यायसिद्धिः ॥ ५ ॥

**निस्सीमा....द्गुणौघे**—निरवधिकमहानन्दातिशयाधायकस्वाभाविकापरिच्छिन्नसमृद्धियुतकल्याणगुणगणभरिते परब्रह्मभूते परमात्मनि विषये **विद्याभेदैः**—उपासनाविशेषैः, **विभज्य**—अस्यामस्यां विद्यायां एवमेवंगुणकभगवदुपासनमित्येवं विविच्य (असङ्कीर्णरूपेण), **इह प्रणिधिर्यदि**—उपायानुष्ठानकाले अविच्छिन्नध्यानसन्ततिरूपमुपासनं क्रियते यदि, **प्राप्तिरपि**—उपेयसम्पत्तिरपि, **अंशतः स्यात्**—(अनन्तगुणगणस्यापि भगवतः) यत्किंचिद्गुणवदात्मके एव भागे स्यात् । ('यत्प्रकारकमुपासनम् ; तत्प्रकारेण भगवदनुभवरूपा प्राप्ति'रिति तत्क्रतुन्यायात् ।) इति शङ्कने, **मैवम्**—एवं प्रकारं शङ्कनमनुचितम्, **पूर्णकामस्य**—परिपूर्णब्रह्मानुभवकामस्योपासितुः, **तैः धर्मैरेव**—उपासनकाले ब्रह्मगुणतया चिन्तितैरेव गुणैः, **तदितरसहितैः**—(अनुभवकाले) उपासितेतरगुणसमानाधिकरणतापन्नैः, **पूर्णं ब्रह्मैव**—नित्यजुष्टं परं ब्रह्मैव **प्राप्यम्**—मोक्षदशायामनुभाव्यतया उपेयम्, **नाऽन्यत् किमपि फलम्**—परिपूर्णपरब्रह्मानुभवादितरत् फलमुपासकस्य नास्ति, **अतः**—अनेन हेतुना, **तत्क्रतुन्यायसिद्धिः**—तत्क्रतुन्यायस्य (उपासनानुभवकालयोरैकरूप्येण) निर्वाहः ॥ ५ ॥

—o—

[अधिकरणार्थनिरूपणम्]

(326) भेदः शब्दान्तराद्यैर्विधिषु नियमितः कर्म[1]काण्ड[1]द्वितीये
संयोगाद्यैश्चयतोऽन्यः समुदयनियतात् सैव विद्यासुनीतिः ।
आदौ तेनैव शाखान्तरनयमुदितं चोदनादेरभेदा-
च्छुत्यैवाऽऽक्षिप्य भूयः [2]प्रतिसमधित तं[2] भेदकान्यार्थतोक्त्या ॥ ६ ॥

---

[1] काण्डे—च.   [2] प्रतिसमधिगतं—च.

**विधिषु**—चोदनापरपर्यायेषु लिङादिघटितशब्देषु 'यजेत' इत्यादिषु **भेदः**—भिन्नस्वरूपता **कर्मकाण्डद्वितीये**—पूर्वमीमांसीयद्वितीयाध्याये, **शब्दान्तराद्यैः**—शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणाख्यैः षड्भिः प्रमाणैः, (निर्णय इति) **नियमितः**—व्यवस्थापिता, **अन्यः**— तदितरा अभिन्नस्वरूपता, **समुदयनियतात्**—अन्योन्यसहकारेण समुच्चितात्, **संयोगाद्यैक्यतः**—संयोग-रूप-चोदनाऽऽख्यानाम् अविशेषात्, **नियमितः**—व्यवस्थापिता, **विद्यासु**—दहर-वैश्वानरादिविद्यासु विषयभूतास्वपि, **सैव नीतिः**—भेदाभेदव्यवस्थायां कार्याया कर्मकाण्डोक्त-प्रमाणानामवलम्बनैव साधनभूता ; नाऽन्या विधा आश्रयणीया, **तेनैव**—तद्रीत्यवलम्बनेनैव, **चोदनादेरभेदात्**—चोदनादीनामवैलक्षण्यरूपात् प्रमापकात्, **आदौ उदितम्**—सूत्रकारेण प्रथमत उक्तं, **शाखान्तरनयम्**—विद्यानां सर्ववेदान्तप्रत्ययत्वम्, **श्रुत्यैव आक्षिप्य**-तेषामेवैतामिति मुण्डकान्तश्रुत्यवलम्बनत एव शङ्कितानौचित्यं कृत्वा, **तम्**—स्वोक्तं सर्ववेदान्तप्रत्ययत्वमेव, **भेदकान्यार्थतोक्त्या**—भेदकत्वशङ्कागोचरस्य श्रुतिवाक्यस्य तात्पर्यान्तरवर्णनेन, **भूयः प्रतिसमधित**—पुनः सुप्रतिष्ठितं चकार ॥ ६ ॥

(327) शाखासु प्रक्रियाऽन्या श्रवणमपि पुनर्दृष्टमात्राविशेषं
विद्याभेदस्ततः स्यादिति न तदुभयं युक्तमध्येतृभेदात् ।
तेषामेवेति वाक्यात् क्वचिदुपजनिता भेदशङ्का त्वयुक्ता
स्वाध्याये ब्रह्मविद्यापदमिह हि ! भवेत् तद्व्रतेनाऽन्वयोक्तेः ॥ ७ ॥

**शाखासु**—विभिन्नासु शाखासु, **प्रक्रिया अन्या**—प्रकरणान्तरम्, (तथा) **पुनः श्रवणमपि अविशेषम्**—अभ्यासापरपर्यायम् विशेषान्तरश्रवणरहितं पुनः श्रवणमपि च, **दृष्टम्**—उपलब्धम्, **ततः**—प्रकरणान्तराभ्यासादेः विधेयार्थभेदकस्य उपलम्भात्, **अत्र विद्याभेदः स्यात्**—अक्षर-दहर वैश्वानरादिष्वपि विभिन्नशाखादृष्टोपासनेषु पृथग्विद्यात्वं सम्भाव्यमेव, **इति न**—एवं शङ्कनं नोचितम्, **तदुभयम्**—प्रकरणान्तरम् अभ्यासश्चेत्येतद्द्वयमपि, **अध्येतृभेदात् युक्तम्**—तत्तच्छाखाविशेषाध्येतृपरम्पराजनितानां पुरुषाणां भिन्नत्वेन (अन्यथासिद्धत्वात्) **युक्तम्**—विद्याभेदकत्वस्याभावेऽपि सफलमेव, **क्वचित्**—मुण्डकीयाक्षरविद्याख्ये विषयविशेषे, **तेषामेवेति वाक्यादुपजनिता**—'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्येवमाकारात् अन्तिमश्रुतात् वाक्यात् तेषामेवेति अवधारणतः शिरोव्रतानुष्ठातृमात्रविश्रान्तत्वावगमेन जाता, **भेदशङ्का तु**—उपनिषदन्तरीयाक्षरविद्यातः भिन्नत्वसम्भावना परम्, **अयुक्ता**—नोचिता, **हि**—यतः, **इह**—'तेषामेवे'ति वाक्ये, **ब्रह्मविद्यापदम्**—ब्रह्मविद्येति पदम्, **तद्व्रतेन**—आथर्वणिकैरनुष्ठेयेन वेदव्रतभूतेन शिरसि अङ्गारपात्रधारणरूपेण व्रतेन,

सह, **अन्वयोक्तेः**—'नैतदचीर्णव्रतोऽधीते' इत्येवं सम्बन्धश्रवणात् ज्ञापकात्, **स्वाध्याये भवेत्**—वेदशाखारूपेऽर्थे एव वाचकतया भवितुमर्हम्; न तु अक्षरविद्याख्ये मुण्डकशाखाबोध्ये उपासनविशेषे इति न कोऽपि दोषः ॥ ७ ॥

(328) रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्यमन्यो गुणश्चेद्
भेदो न स्याद् विकल्प्यं तदिह किमफला तेन चिन्तेति चेन्न ।
वेद्याकारैक्यमैक्यं दिशति तदधिकं किञ्चिदाकृष्यतेऽङ्गं
कर्मण्यप्येवमेव ह्युपहृतिविषयो भेदकांशातिरिक्तः ॥ ८ ॥

**रूपैक्यात्**—उपास्यभूतस्य वैश्वानरादेः अभेदात्, **ऐक्यसिद्धौ**—तदुपासनरूपाया विद्याया अपि अभेदनिश्चये सति, **उपसंहार्यम्**—उपास्यरूपादतिरिक्तं, शाखान्तरादाहृत्य समुच्चित्य उपासने चिन्तनीयम्, **किमन्यत्**—किं वा अवशिष्टं सम्भवति, ? **अन्यो गुणश्चेत्**—वेद्याकारादतिरिक्तः वेद्यगतः विद्याविशेषप्रतिनियतः गुणविशेष एवोपसंहार्यो यदि तदा, **भेदो न स्यात्**—विद्याभेदरूपोऽर्थ एव न सिध्येत् (सर्वस्य सर्वत्रोपसंहारतः विद्यासु प्रतिनियतस्य विशेषस्यैव कस्यचन अनवशेषात्), **तत्**—तस्माद्धेतोः, **इह**—विद्याविशेषे, **विकल्प्यम्**—विद्यान्तरादनुपसंहृत्य तत्र तत्रैवोपयोज्यत्वेन निर्णेयं विशिष्टं रूपम्, **किम्?**—न किमप्यस्तीत्यापद्यते, **तेन**—प्राप्तेनेदृशेन प्रसङ्गेन, (तत्तद्विद्याप्रतिनियतस्य असाधारणस्य रूपविशेषस्य अनुपसंहार्यताया अवर्जनीयत्वात्) **चिन्ता**—गुणोपसंहार-विकल्पनिर्णयाय क्रियमाणा विचाररूपा चिन्ता, **अफला इति चेत्**—न सप्रयोजना इति शङ्कनम्, **न**—न साधु, (सिद्धान्तार्थः—) **वेद्याकारैक्यम्**—उपास्यविशेषणभूतगुणाद्यात्मकस्य वेद्याकारस्यैक्यम्, **ऐक्यं दिशति**—विद्यैक्यं निश्चाययति, (न तूपास्यैक्यमात्रं विद्यैक्यं दिशति) **तदधिकम्**—विद्यैक्यनिश्चयाधायकात् वेद्याकारादतिरिक्तम्, **किंचित् अङ्गम्**—उपासनौपयिकम् (स्वस्मिन्नश्रुतं सत् अन्यत्र श्रुतम्), **आकृष्यते**—उपसंह्रियते, **कर्मण्यपि**—अग्निहोत्रादिकर्मण्यपि विषये, **एवमेव हि**—स्वशाखायामश्रुतस्यैवाङ्गकलापस्य शाखान्तरत आहरणमिति दृढम्, (अतः) **उपहृतिविषयः**—उपसंहारास्पदः अंशः, **भेदकांशातिरिक्तः**—विद्याकर्मणोः स्वरूपभेदकात् अंशाद्भिन्नः अङ्गभूतः अंश एवेति सार्वत्रिकतया ज्ञेयम् ॥ ८ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

ब्रह्मोपासनेच्छाजननार्थं जीवस्य सदोषत्वं, परस्य कल्याणगुणाकरत्वं च—उक्तम् । अथ गुणोपसंहारपादे तृतीये—ब्रह्मोपासनानां गुणोपसंहार-विकल्पनिर्णयार्थं विद्याभेदाभेदचिन्ता क्रियते।

तत्र सर्ववेदान्तप्रत्ययाधिकरणे—अनेकासु शाखासु श्रूयमाणायाः वैश्वानरादिकायाः विद्यायाः, किम् एकविद्यात्वम् ? उत न ?—इति संशये,

अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य च भेदकत्वात्, शाखान्तरे तयोः अवर्जनीयत्वाच्च, विद्याभेदः—इत्याशङ्क्य,

'वैश्वानरमुपास्ते' इति चोदनायाः अविशिष्टत्वात्, ध्येयैक्यात्, आख्या-रूपाविशेषात्, अविशेषपुनःश्रवणादेः प्रतिपत्तृभेदनिबन्धनत्वाच्च, न विद्याभेदः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

उपासनाप्रसक्तेशफलदत्वप्रसङ्गतः ।
अनुष्ठानोपयोगाय तद्भेदाभेदचिन्तना ॥ १२८ ॥

शाखान्तराधिकरणप्रोक्तयुक्तिसमुच्चयात् ।
तद्वैश्वानरविद्यादौ सर्ववेदान्तनीतितः ॥ १२९ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

—o—

## (84) अन्यथात्वाधिकरणम् ॥ २ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(127) उद्गीथैक्यं चोदनादेरभेदाच्छन्दोगानां वाजिनां चेति नैतत् ।
उद्गीथांशोद्गीथयोः प्राणदृष्ट्या[1]रूपानैक्यात्[1] कर्म-[2]कर्त्रो[2]स्तथा च ॥ २२ ॥

**छन्दोगानां वाजिनां च**—सामशाखिनां छान्दोग्ये, वाजसनेयशाखिनां बृहदारण्यके च श्रुत्योः, **चोदनादेरभेदात्**—(विधेयस्वरूपावगमकस्य) विध्यादेः (फल-रूप-नामधेयानां च) ऐकरूप्यात्, **उद्गीथैक्यम्**—उद्गीथविद्याख्ये उपासने स्वरूपतोऽभेदः वक्तव्यः, **इति**—

---

[1] रूपस्यैक्यात्– क.  [2] कर्तृ—क

एवं शङ्कने, **एतत् न**—उक्तं विषयोरुद्गीथाख्ययोः अभिन्नस्वरूपत्वम् नोचितम्, **उद्गीथांशोद्गीथयोः प्राणदृष्ट्या** - छन्दोगेषु उद्गीथावयवभूते प्रणवे प्राणदृष्टिः ; वाजसनेयिषु समस्ते उद्गीथे एव प्राणदृष्टिः इति उभयत्र वैलक्षण्यात् ज्ञापकात्, **तथा च**—तथैव, **कर्म-कर्त्रोः प्राणदृष्ट्या च**—छन्दोगेषु उद्गानकर्मणि प्राणदृष्टिः, वाजसनेयिषु उद्गानकर्तृभूते उद्गातरि प्राणदृष्टिरिति वैलक्षण्याच्च, **रूपानैक्यात्**—विधेयगतरूपयोः भिन्नत्वावगमात् ॥

—o—

## (2) अधिकरणसारावलिः ॥

(329) प्राग्वच्छाखाविभेदेऽप्युपशमितभिदा तादृगुद्गीथविद्या
स्यादेका चोदनाद्यैस्तदसदुभयथा रूपभेदोपलब्धेः ।
गाता गेयं च गेये सकलमसकलं चेति वैषम्यसिद्धौ
शेषाभेदोऽप्यभेदं न गमयति भिदात्वेकभेदेऽपि सिध्येत् ॥ ९ ॥

**प्राग्वत्**—पूर्वं निरूपितायां वैश्वानरविद्यायामिव **शाखाविभेदेऽपि**—वेदशाखायाः छान्दोग्यवाजसनेयकरूपेण भिन्नत्वेऽपि, **उद्गीथविद्या**—(तयोः शाखयोर्विहिता) उद्गीथाख्या विद्या, **चोदनाद्यैः एका**—विधि-फलसंयोग-नामधेयैः एकस्वरूपा सती, **उपशमितभिदा**—आपाततो भासमानस्य भेदस्य औपचारिकत्वतः उपशमं प्राप्ता, **तादृक् स्यात्**—वैश्वानरविद्यावदेव अभिन्नस्वरूपा भवेत्, (इति शङ्कने) **तदसत्**—उद्गीथविद्यायाः वैश्वानरविद्याया इव शाखाद्वय-विहिताया अपि अभेदचिन्तनमसाधु, **उभयथा रूपभेदोपलब्धेः**—द्वय्या रीत्याऽपि भिन्न-रूपतायाः तत्तच्छाखागतश्रुतिवाक्येषु दर्शनात्, **गाता**—वाजसनेयके-उद्गानकर्ता प्राणदृष्ट्यो-पास्यः, **गेयं च**—छान्दोग्ये-गानकर्मभूतमुद्गीथपदाभिधेयं प्राणदृष्ट्या उपास्यम्, (तथैव) **गेये च**—गानकर्मभूते उद्गीथेऽपि, **सकलम् असकलं चेति**—वाजसनेयके समस्तमुद्गीथस्वरूपं प्राणदृष्ट्योपास्यम् छान्दोग्ये च उद्गीथावयवभूतं प्रणवस्वरूपं प्राणदृष्ट्योपास्यमिति, **वैषम्य-सिद्धौ**—उभयशाखाप्रतिपन्नयोः उद्गीथस्वरूपयोः असमानरूपतायाः निर्णीतौ जातायाम्, **शेषाभेदोऽपि**—रूपातिरिक्तचोदनाद्यंशे एकाकारताऽपि, **अभेदं न गमयति**—उद्गीथविद्यैक्यं नाऽवबोधयति, (वैषम्यनिर्णयस्य प्रबलतया, स्वरूपाभेदज्ञानबाधकत्वात्) **भिदा तु**—स्वरूपे नानात्वं तु, **एकभेदेपि सिध्येत्**—एकांशमात्रे वैषम्येऽपि निश्चीयेतैव ; किमुत रूपद्वये भेदावगमे ॥ ११ ॥

(330) छन्दोगोद्गीथशब्दस्तदवयवपरः प्रक्रमादिप्रसिद्धेः

कृत्स्नोद्गीथाभिधायी प्रकरणनियमाभावतो वाजिनां स्यात् ।

उद्गीथोक्तिश्च नैषामुप[1]चरण[1]वती गातरि प्रक्रमस्था

तत्कर्त्रा साधनीये द्विषदुपशमने तत्फलत्वोक्त्यबाधात् ।। १० ।।

**छन्दोगोद्गीथशब्दः**—छान्दोग्यगतोद्गीथविद्याप्रकरणे श्रुतः 'उद्गीथ' इत्ययं शब्दः, **प्रक्रमादिप्रसिद्धेः**—उपनिषद उपक्रमे खण्डावसाने च 'ओमित्येदक्षरमुद्गीथमुपासीत' 'अक्षरमुद्गीथमुपास्ते' इत्येवं 'ओम्' इत्येवमाकाराक्षरपरत्वावगमात्, **तदवयवपरः**—उद्गीथाख्यस्य सामावयवभक्तिविशेषस्य एकदेशभूतो यः प्रणवः तत्तात्पर्यकः इति निश्चीयते, **वाजिनाम्**—बृहदारण्यकीयः उद्गीथशब्दस्तु, **प्रकरणनियमाभावतः**—छान्दोग्ये इव प्रकरणाख्यस्य नियामकस्याभावेन नियमस्याप्यसिद्ध्या, (सङ्कोचाभावात्) **कृत्स्नोद्गीथाभिधायी स्यात्**—प्रणवाख्यैकदेशघटितस्य समस्तस्यैव उद्‌गीथस्य वाचको भवितुमर्हति (नैकदेशस्य), **एषाम्**—वाजसनेयिनाम्, **प्रक्रमस्था**—उपक्रमे श्रुता, **उद्गीथोक्तिश्च**—'उद्‌गीथेनाऽत्ययाम' इति वाक्यगतः 'उद्‌गीथ'शब्दश्च, **गातरि उपचरणवती न**—उद्‌गीथस्य गातृभूते उद्गातरि, औपचारिकः (अमुख्यः) प्रयोग इति शंकार्हो न भवति, **तत्कर्त्रा साधनीये**—उद्‌गीथाख्यसामभक्तेः उद्गानकर्त्रा पुरुषेण सम्पाद्ये, **द्विषदुपशमने**—असुराख्यशत्रुपराभवरूपे फले, **तत्फलत्वोक्त्यबाधात्**—कर्त्रा व्यापारद्वारा साध्ये फले व्यापारफलत्वस्याबाधिततया उद्‌गीथकरणकत्वोक्तेः अनुपचरितत्वसिद्धेः ।। १० ।।

(331) यद्यप्यब्रह्मविद्या परपरिभवनाद्यैहिकार्थप्रयुक्ता

न ग्राह्या मोक्षशास्त्रे तदपि समतया तत्परीक्षेति केचित् ।

काम्या विद्याऽप्यनिष्टव्यपनयनमुखैर्ब्रह्मविद्योपयुक्तै-

स्तत्तत्साध्यप्रभेदैर्भवति समुचितालोचनेत्याहु[2]रन्ये[2] ।। ११ ।।

**यद्यपि**—वस्तुतश्चिन्त्यमाने, **परपरि....प्रयुक्ता**—स्वेतरशत्रुन्यक्करणादिरूपाणि ऐहिकप्रयोजनान्युद्दिश्य प्रवृत्ता, **अब्रह्मविद्या**—ब्रह्मेतरोपासनरूपा इयमुद्‌गीथनामिका विद्या, **मोक्षशास्त्रे**—निःश्रेयसमात्रोपायभूतार्थविचाररूपे शारीरके शास्त्रे, **न ग्राह्या**—नैवोपादेया ; न विचारार्हा, **तदपि**—तथापि, **समतया**—श्रुतिविहितोपासनरूपतायाः ब्रह्मविद्यानाम् अस्याश्च अविशिष्टतया, **तत्परीक्षा**—उद्‌गीथविद्याचिन्ताऽपि युक्ता, **इति केचित्**—एवमौपनिषदकोटि-

---

[1] (चरितवती) ?—सा. [2] (रेके)—सा.

प्रविष्टा एव केचन अभिप्रयन्ति । **अन्ये**—अपरे च तादृशाः, **काम्या विद्याऽपि**—फल-सङ्गिना फलविशेषकामनया अनुष्ठानार्हाऽपीयमुद्गीथविद्या, **अनिष्टव्यपनयनमुखैः**—विद्या-सिद्धिरूपेष्टविरोधिपापाख्यशत्रुनिरसनप्रभृतिभिः, **ब्रह्मविद्योपयुक्तैः**—ब्रह्मोपासनौपयिकैः, **तत्त-त्साध्यप्रभेदैः**—तत्तदुपासकापेक्ष्यमाणैः फलविशेषैः, (ऐहिकफलविरक्तैरपि अनुष्ठेयतां प्रतिपद्यत इति हेतोः) **समुचितालोचना भवतीति**—विचारणौचित्यवती सम्पद्यत इति, **आहुः**—वदन्ति ॥ ११ ॥

(332) अज्ञातब्रह्मतत्त्वः कथमिव विमृशेत् कुत्रचिद् ब्रह्मदृष्टिं
तस्मात् तत्तादृशीनां समुचितमगतेरत्र मीमांसनं स्यात् ।
आदध्युः कर्मणां च स्वफलवितरणे वीर्यवत्त्वातिरेकं
ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितं तत् ॥ १२ ॥

**अज्ञातब्रह्मतत्त्वः**—ब्रह्मरूपपरतत्त्वविषयकज्ञानरहितः पुरुषः, **कुत्रचित्**—ब्रह्मण इतरत्र यत्र कुत्राऽपि उद्गीथावयवप्रणवादौ, **ब्रह्मदृष्टिम्**—ब्रह्मभावनाम्, **कथमिव विमृशेत्**—केन वा उपायेन आश्रयेत्? (आरोपधर्मिणोऽज्ञाने इव, आरोप्यमाणाज्ञानेऽपि आरोपासिद्धेः; (न हि सर्पाज्ञाने रज्जौ सर्पबुद्धिर्जायेत!) **तस्मात्**—विना ब्रह्मज्ञानं, दृष्ट्युपासनानामसिद्धत्वात् हेतोः, **अगतेः**—गत्यन्तरविरहात्, **तत्तादृशीनाम्**—अब्रह्मणि ब्रह्मदृष्टिरूपाणामासां विद्यानाम्, **अत्र**—मोक्षार्थचिन्ताप्रवृत्ते शारीरके एव, **मीमांसनम्**—विचारणम्, **समुचितं स्यात्**—युक्तं भवेत् । (एताः उद्गीथादिविद्याः) **कर्मणाम्**—उपासनाङ्गभूतानां कर्मणाम्, **स्वफलवितरणे वीर्यवत्त्वातिरेकम्**—विद्यासिद्धिप्रतिबन्धकनिवृत्ति-विद्यासमृद्ध्यादिफलजनने कार्ये, **वीर्यवत्त्वाति-रेकम्**—अप्रतिबद्धशक्तिकत्वरूपं वीर्यातिशयम्. **आदध्युः**—सम्पादयेयुः, **तत्**—उक्ताद्धेतोः, **ब्रह्म.... ....जननतः**—परमात्मोपासनौपयिककर्मसाद्गुण्योत्पादनात्, **प्रस्तुतापेक्षितम्**—प्रकृतशारीरकशास्त्रलक्ष्यसिद्ध्युपयोग्येवेदं शारीरके दृष्टिविधिचिन्तनमिति ॥ १२ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

एवं चोदनाद्यविशेषाद् विद्यैक्यमुक्तम् । अतः परं काश्चन विद्याः अधिकृत्य, चोदनाद्य-विशेषः अस्ति? नास्ति?—इति विचार्यते ।

तत्र अन्यथात्वाधिकरणे—छान्दोग्य-वाजसनेयकयोः, 'देवा उद्गीथमाजह्रुः; अनेनैना-नभिहनिष्यामः' इत्यादिना, 'देवा ऊचुः, हन्तासुरान् यज्ञ उद्गीथेनाऽत्ययाम' इत्यादिना च

आम्नातयोः उद्गीथविद्ययोः, अध्यस्तप्राणभावोद्गीथविषयत्वात् रूपाद्यविशेषात्, एकविद्यात्वम्—इत्याशङ्क्य,

छान्दोग्ये, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति प्रस्तुतस्यैव प्रणवस्य, प्राणदृष्ट्या उपास्यत्वात्; वाजसनेयके तु, कृत्स्नोद्गीथविषयत्वाच्च रूपभेदात्—विद्याभेदः—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

अथाऽन्यथात्वाधिकृतौ प्राग्वैश्वानरनीतिवत् ।
उद्गीथोपासनानामप्येकताऽपोद्यतेऽधुना ॥ १३० ॥

इति अन्यथात्वाधिकरणम् ॥ २ ॥

—o—

## (85) सर्वाभेदाधिकरणम् ॥ ३-३-३ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(128) प्राणस्य ज्यैष्ठ्यादौ [1]सत्यपि न[1] वसिष्ठतादयः कथिताः ।
भेदो [2]रूपविभेदान्नैतत् स्युस्तेऽपि[2] तदितराभेदात् ॥ २३ ॥

**प्राणस्य**—प्राणविद्योपास्यभूतस्य प्राणस्य, **ज्यैष्ठ्यादौ सत्यपि**—छन्दोग-वाजसनेयि-कौषीतकीश्रुतिषु ज्यैष्ठ्य-श्रैष्ठ्ययोः उपास्यगुणयोः समानत्वे सत्यपि, (कौषीतक्यां) **वसिष्ठतादयः**—वागादिद्वारा वसिष्ठत्वादयो गुणाः, **न कथिताः**—उपास्यगुणतया न प्रतिपादिताः इत्यतः, **रूपविभेदात्**—कौषीतकीप्राणविद्यायां, छन्दोग-वाजसनेयिश्रुतिप्रतिपन्नरूपापेक्षया रूपस्य विशेषात्, **भेदः**—नानात्वम्, न तु अभेदः (इति शङ्कने) **नैतत्**—इदं शङ्कनमसाधु; **तदितराभेदात्**—वसिष्ठत्वादिभिन्नानां सर्वेषां रूपाणाम् अभिन्नत्वात्, **तेऽपि**—वागादिगताः वसिष्ठत्वादिगुणा अपि, **स्युः**—कौषीतकीप्राणविद्यायामपि प्राणसम्बन्धिनो भवेयुरेवेति सर्वाः प्राणविद्या अप्यभिन्ना एव ॥ २३ ॥

—o—

---

[1] सत्यपि—क. सत्यपि च—ख.

[2] रूपविभेदा अनेकस्यास्तस्याऽपि—क. रूपविभेदा न्नैतत्तस्यास्तेऽपि—ख. रूपविभेदान्नैतस्यास्तेऽपि—ग.

## (2) अधिकरणसारावलिः

(333) ज्यैष्ठ्य-श्रैष्ठ्यादिसाम्ये क्वचन समधिकं भाति वासिष्ठ्यपूर्वं
तेनेत्थं रूपभेदाद् बहुनिगमगता भिद्यतां प्राणविद्या ।
मैवं ; वागादितत्तद्गुणपरवशतावर्णनस्याऽविशेषाद्
वागाद्यैः स्वस्वधर्मोपचरणमकृतं [1]तावता[1] स्यान्न भेदः ॥ २४ ॥

**ज्यैष्ठ्य-श्रैष्ठ्यादिसाम्ये**—ज्येष्ठत्व-श्रेष्ठत्वप्रभृतीनां मुख्यप्राणगतानां धर्माणां छान्दोग्य-वाजसनेयक-कौषीतकीश्रुतिषु उपास्यगुणतया प्रतिपत्तेः अविशेषेऽपि **क्वचन**—कौषीतकी-श्रुतिव्यतिरिक्तश्रुतिद्वये, **वासिष्ठ्यपूर्वम्**—वसिष्ठत्वादिकं गुणजातम् , **समधिकं भाति**—कौषीतकीश्रुतिप्रतिपन्नगुणापेक्षया अतिरिक्तं सत् प्रतिपन्नं भवति, **तेन**—सर्वस्योपास्यगुणस्य सर्वत्र प्रतिपत्त्यभावकृतेन वैषम्येण, **इत्थम्**—उक्तेन प्रकारेण, **रूपभेदात्**—उपास्यगुणात्मके रूपे वैलक्षण्यसत्त्वात् , **बहुनिगमगता**—नानावेदशाखास्था, **प्राणविद्या**—प्राणोपासनरूपा विद्या **भिद्यताम्**—मिथोऽतिरेकं प्राप्नोतु नाम ; (अतिरेकनिश्चायकसत्त्वात् ) इति पूर्वपक्षे, **मैवम्**—इत्थं शङ्कनं नोचितम् ; **वागादि ....वर्णनस्य**—वाक् प्रभृति तत्तत्प्राणगतानां सर्वेषां गुणानां मुख्यप्राणायत्ततप्रतिपादनस्य **अविशेषात्**—सर्वासु श्रुतिषु समानत्वात् , **वागाद्यैः**—वाक्प्रभृतिभिरिन्द्रियैः, **स्वस्वधर्मोपचरणम्**—स्वेषां स्वेषां वसिष्ठत्व-प्रतिष्ठात्वादिधर्माणां मुख्यप्राण-सम्बन्धित्ववर्णनरूपमुपचरणं छान्दोग्य-वाजसनेययोः दृश्यमानम् , **अकृतम्**—कौषीतक्यां न कृतम्, **तावता**—तावन्मात्रेण, **भेदः न स्यात्**—प्राणविद्यायां मिथोव्यतिरेकः सम्भाव्यो न भवति ॥ २४ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

सर्वाभेदाधिकरणे—छान्दोग्ये कौषीतकिशाखायां च, ज्यैष्ठ्य-श्रैष्ठ्यगुणकप्राणोपासनं विधीयते । तत्र छान्दोग्ये, वसिष्ठत्वादिगुणान्विततया उपास्यत्वात्, इतरत्र तद्विधुरतया उपास्यत्वाच्च, रूपभेदात विद्याभेदः—इत्याशङ्क्य,

कौषीतकिवाक्ये, वसिष्ठत्वादीनां प्राणसम्बन्धित्वानुक्तावपि, तत्सम्बन्धिनां वागादीनां प्राणायत्तस्थितित्वादिप्रतिपादनेन वसिष्ठत्वादीनां प्राणसम्बन्धस्य अर्थसिद्धत्वात् , रूपभेदाभावात् , विद्यैक्यमुक्तम् ॥

—o—

[1] (यत्ततः) ?—सा.

(4) **नयसङ्गतिमालिका** ॥

सर्वाभेदाधिकरणे रूपभेदविधानतः ।

प्राणविद्याभेदशङ्काऽपोद्यतेऽन्तर्गतत्वतः ॥ १३१ ॥

इति सर्वाभेदाधिकरणम् ॥

—o—

## (86) आनन्दाद्यधिकरणम् ॥ ३-३-४ ॥

(1) **शारीरकन्यायकलापसङ्ग्रहः** ॥

(129) अप्रकरणपठितत्वादानन्दाद्या गुणा न सङ्ग्राह्याः ।

सर्वास्विति तु न शङ्क्यं तैस्तु विना तन्निरूपणाशक्तेः ॥ २४ ॥

**आनन्दाद्याः गुणाः**—आनन्दत्वादयः परब्रह्मस्वरूपानुबन्धिनोऽपि गुणाः, **अप्रकरणपठितत्वात्**—(तत्तद्विद्यासूपसंहारं प्रति प्रयोजकस्य) तत्तद्विद्याप्रकरणाम्नातत्वस्याभावात्, **सर्वासु विद्यासु**—ब्रह्मविद्यात्वाक्रान्तासु निखिलासु विद्यासु, **न सङ्ग्राह्याः**—उक्तैर्गुणैः साकं समुच्चित्य ब्रह्मगुणत्वेन उपास्यतावच्छेदकीभवितुं नार्हन्ति, **इति तु न शङ्क्यम्**—एवं शङ्कितुं न युक्तम्, **तैः विना**—आनन्दत्वादिभिः ब्रह्मस्वरूपनिरूपकैः गुणैर्विना, **तन्निरूपणाशक्तेस्तु**—ब्रह्मस्वरूपनिरूपणस्यैव असाध्यत्वात् ॥ २४ ॥

—o—

(2) **अधिकरणसारावलिः** ॥ (श्लो. 14-18)

(334) नाना शब्दादिभेदादिति खलु ! भिदुरां वक्ष्यति ब्रह्मविद्यां

रूपं विद्यान्तरस्य प्रकरण[1]पठिता[1]न्नान्यदन्यत्र योज्यम् ।

तस्मात् सत्यत्वपूर्वास्तदितरगुणवत् स्युर्व्यवस्थापनीया

मैवं ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ॥ १४ ॥

**नाना....दिति खलु**—शब्दादिभेदाधिकरणे हि ! 'नाना शब्दादिभेदात्' इत्येवंरूपेण सूत्रेण, **भिदुराम्**—भिन्नप्रकारमेव, **ब्रह्मविद्याम्**—ब्रह्मोपासनरूपां विद्याम्, **वक्ष्यति**—

[1] (पठित')—? सा.

निरूपयिष्यति भगवान् बादरायणः, **प्रकरणपठितात् अन्यत्**—तत्तद्विद्याप्रकरणे आम्नातादतिरिक्तम्, **विद्यान्तरस्य रूपम्**—विद्यान्तरसम्बन्धि ब्रह्मगुणात्मकं रूपम्, **अन्यत्र न योज्यम्**—विद्यान्तरे योजनां नार्हति, **तस्मात्**—विद्यान्तरप्रकरणस्थस्य विद्यान्तरे योजनस्य अनुचितत्वात्, **सत्यत्वपूर्वाः**—सत्यत्व-ज्ञानत्वानन्तत्वानन्दत्वादयो ब्रह्मगुणा अपि, **तदितरगुणवत्**—तत्तद्विद्याप्रतिनियतत्वेन सम्प्रतिपन्ना अन्यान्ये गुणा इव, **व्यवस्थापनीयाः स्युः**—आनन्दमयविद्यामात्रविश्रान्ताश्चिन्तनीयाः ; न तु अव्यवस्थया सर्वविद्यानुगतया ज्ञेया भवेयुः, (इति शङ्कने), **मैवम्**—एवं शङ्कनं नोचितं भवति, **हि**—यतः, **इह**—ब्रह्मविद्याप्रसङ्गे, **यतः**—यादृशाद्धर्मजातात्, **ब्रह्मस्वरूपावगतिः**—उपास्यब्रह्मस्वरूपस्यैव अवगमो भवति ; न (ब्रह्मसम्बन्धितामात्रे पर्यवसानम्) **तत्**—तादृशं ब्रह्मगुणभूतं धर्मजातम्, **सर्वासु**—अविशेषेण ब्रह्मविद्यासामान्ये, **अपेक्ष्यम्**—उपास्यतावच्छेदकीभूतब्रह्मगुणतया आश्रयणीयम् ।। १४ ।।

(335) सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहानेः
ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च ।
त्रिद्व्येकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यत्
तस्याऽनन्त्यं वियोगात् तिसृभिरपि सदा निर्मलानन्दधाम्नः ॥ १५ ॥

**विश्वहेतौ**—जगन्निरूपितनिमित्तत्वोपादानत्वाख्यद्विविधकारणत्ववति परस्मिन् ब्रह्मणि, **बहु....जालहानेः**—नानाप्रकारस्य चेतनेष्वचेतनेषु च कारणत्ववस्तु परिदृश्यमानस्य विकाराख्यदोषजातस्य अस्पर्शात्, **सत्यत्वम्**—(श्रुतिस्थ) सत्यशब्दाभिधेयत्वम्, **ज्ञानत्वम्**—ज्ञानपदवाच्यत्वम्, **ज्ञातृभावात्**—ज्ञानं प्रति आश्रयत्वात् (ज्ञानम् अस्य अस्तीति ज्ञानम् इति अर्श आद्यच्प्रत्ययान्तः), **स्वप्रकाशत्वतश्च**—स्वयंप्रकाशत्वाच्च (ज्ञानपदवाच्यत्वं ब्रह्मणः), (उभयमिदम्) **स्वरबहुलतया**—ज्ञानशब्दे अन्तोदात्तस्वरस्य वैकल्पिकत्वेन हेतुना सिध्यति, (अन्तोदान्तस्वरवता ज्ञानशब्देन, नित्यासंकुचितज्ञानधर्मकत्वसिद्धिः ; तद्रहितेन च तेन स्वयंप्रकाशत्वसिद्धिरिति) **ब्रह्मणोऽन्यत् सर्वम्**—ब्रह्मातिरिक्तं चेतनाचेतनात्मकं सर्वमपि, **त्रिद्व्येकाभिः परिच्छित्तिभिः**—देश-काल-वस्तुकृतै त्रिभिः परिच्छेदैः, देश-वस्त्वायत्ताभ्यां द्वाभ्यां परिच्छेदाभ्याम्, कालकृताच्चैकस्मात् परिच्छेदात्, **इह प्रमितम्**—अस्मिन् वाक्ये परिच्छिन्नत्वबोधनतः व्यावर्तितम्, (प्रकर्षेण मितम्—प्रमितम्) **सदा निर्मलानन्दधाम्नः तस्य**—कालत्रयेऽपि हेयप्रत्यनीककल्याणैकतानस्य परस्य ब्रह्मणः, **तिसृभिरपि वियोगात्**—त्रिप्रकाराभिरपि परिच्छित्तिभिः विश्लेषात्, **आनन्त्यम्**—श्रुतिगतानन्तपदवाच्यत्वम्—इति ('सत्यं ज्ञानमनन्त'मिति शोधकवाक्येन कारणत्वशङ्कितदोषनिवर्तकेन सिद्धम्) ।। १५ ।।

(336) उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुना ब्रह्मलक्ष्म
स्यात् तेनैव स्वरूपावगतिरिह मुधा सत्यतादीति चेन्न ।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे
शङ्कारूढे क्रमेणेतरविभजनतस्तस्य साफल्यसिद्धेः ।। १६ ।।

**जन्मादिसूत्रे**—शारीरकीये 'जन्माद्यस्य यतः' इत्यस्मिन् सूत्रे, **जगद्धेतुता**—विश्वनिदानत्वम्, **ब्रह्मलक्ष्म**—ब्रह्मलक्षणमिति, **उक्तं ननु**—('यतो वा इमानी'त्यादि श्रुतितः) वर्णितं खलु, **तेनैव**—जगज्जन्मादिकारणत्वेनैव लक्षणभूतेन, **ब्रह्मस्वरूपावगतिः स्यात्**—ध्येयस्य ब्रह्मस्वरूपस्य ज्ञानं भवत्येवेति, **इह**—आनन्दाद्यधिकरणे, **सत्यतादि**—('सत्यं-ज्ञानमनन्तं ब्रह्मे'ति श्रुतिमादाय) सत्यत्व-ज्ञानत्वानन्तत्वादि-लक्षणस्य (ब्रह्मावगत्यर्थं) वर्णनम्, **मुधा इति चेत्**—व्यर्थमेवेति शङ्कनम्, **न**—नोचितम्, **हेतोः ईशस्य**—जगत्कारणभूतस्य परमात्मनः, **हेत्वन्तर....प्रसङ्गे**—लोकपरिदृष्टकारणान्तरवर्तिनानाप्रकारदोषजातापादने, **शङ्का-रूढे**—सम्भावनास्पदे सति, **क्रमेण**—आनुपूर्व्येण, **इतरविभजनतः**—अचेतनसंसृष्टेभ्यो बद्धचेतनेभ्यः, प्रकृतिसंसर्गमुक्तेभ्यश्चेतनेभ्यः, अस्पृष्टप्रकृतिसम्बन्धेभ्यो नित्येभ्यश्च सकाशात् ब्रह्मणि पार्थक्यबोधनद्वारा, **तस्य**—इहोदाहृतस्य (आनन्दवल्लीगतवाक्यप्रतिपन्नस्य) सत्यत्वादि-गुणजातस्य (स्वरूपनिरूपकस्य), **साफल्यसिद्धेः**—सार्थकतालाभात् ।। १६ ।।

(337) नन्वाध्यानं प्रियाद्यैरपि भवति शिरः-पक्ष-पुच्छादिरूपैः
बाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः ।
पुच्छाद्यंशो निरंशे न भवति न च तद्दृष्टिरुत्कृष्टतत्त्वे
तस्माच्चित्याग्निरूपकमवदिह कृतं रूपणं ब्रह्मणि स्यात् ।। १७ ।।

**आध्यानम्**—ब्रह्मणोऽनुचिन्तनम्, **शिरःपक्षपुच्छादिरूपैः**—शिरस्त्व-पक्षत्व-पुच्छत्वादिना काल्पनिकेनाकारेण रूप्यमाणैः, **प्रियाद्यैरपि**—प्रिय-मोद-प्रमोदानन्दैरपि आनन्दांश-भूतैः, **भवति ननु**—संपन्नं भवत्येव खलु, (एवं च सत्यत्वादेः यथा सर्वोपासनान्वयित्वं, तथा प्रियादेरपि सर्वोपासनान्वये, को वा विरोधः?) इत्याक्षेपे, **बाढम्**—उक्तोऽर्थः अङ्गीकार्य एव, **तत्र**—आनन्दे एकदेशतया वर्तमानैः, **प्रियाद्यैः**—प्रिय-मोद-प्रमोदानन्दैः, **तदवगतिः**—आनन्दमयपरब्रह्मस्वरूपनिश्चयः सम्पद्यते, **अतः**—अस्मादेव च हेतोः, **ते**—प्रियाद्या अर्थाः, **सर्वानुवृत्ताः तु**—सर्वासु विद्यासु अनुगामिन एव, (अथाऽपि) **निरंशे**—निरवयवे, ब्रह्मणि, **पुच्छाद्यंशः**—वालादिरूपः परिच्छिन्नो भागविशेषः, **न भवति**—नैव अवस्थितो भवेत्, (तथैव) **उत्कृष्टतत्त्वे**—सर्वोत्कृष्टे परतत्त्वभूते ब्रह्मणि, **तद्दृष्टिश्च**—निकर्षाश्रयपुच्छपक्षादित्वा-

शेषतः उपासनमपि, **न**—नैव **युज्यते** (फलविशेषाश्रये निकृष्टे उत्कृष्टदृष्टेरेव दृष्टद्युपासनेषु दर्शनेन, उत्कृष्टे निकृष्टदृष्टेः शास्त्रादनवगते) **तस्मात्**—उक्ताद्धेतोः, **इह**—आनन्दवल्ली-गतनन्दमयब्रह्मनिरूपणावसरे, **ब्रह्मणि कृतं रूपणम्**—परमात्मविषये काल्पनिकतया प्रवर्तितं प्रियशिरस्त्वादिवर्णनम्, **चित्याग्निरूपकमवत्**—(पूर्वविकल्पाधिकरणे) विद्यामयक्रत्वनुप्रविष्टे मनश्चिद्वाक्चिदादौ येन क्रमेण क्रियामयक्रत्वनुप्रविष्टचयनार्हाग्नित्वस्य रूपणं क्रियते, तमेव क्रममाश्रित्य, **स्यात्**—सम्पन्नं भवेत् ॥ १७ ॥

(338) आनन्दत्वप्रधानं कतिचिदिह विदुः सौत्रमानन्दशब्दं
धर्मानन्दाभिधानं तदुभयवचनं चेति पश्यन्ति केचित् ।
ज्ञानोक्तौ [1]चैतदेवं[1] तदितरसमता यावता स्यान्न शङ्क्या
तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि स्थाप्यतेऽत्र ॥ १८ ॥

**इह**—आनन्दाद्यधिकरणे, **सौत्रम्**—'आनन्दादयः प्रधानस्ये'तिसूत्रस्थम्, **आनन्द-शब्दम्**—'आनन्दे'ति प्रातिपदिकम्, **आनन्दत्वप्रधानम्**—ब्रह्मस्वरूपगतानन्दत्वरूपभाव-प्राधान्यवत् इति, **कतिचित् विदुः**—केचन व्याख्यातारो जानन्ति, **केचित्**—अपरे च केचन, **धर्मानन्दाभिधानम्**—भगवत्स्वरूपधर्मभूतो य आनन्दः तद्वाचकमिति केचिदाहुः, **तदुभयवचनं चेति**—तन्त्रतः स्वरूपगतस्यानन्दत्वस्य धर्मभूतस्यानन्दस्येति द्विविधस्याप्यर्थस्य वाचकमिति, **केचित् पश्यन्ति**—अन्ये च केचन व्याख्यातारो जानन्ति, **एतत्**—स्वरूपगतज्ञानत्वरूपधर्म-परत्वं, धर्मभूतज्ञानपरत्वं, तदुभयपरत्वं चेति अभिप्रायवैविध्यम्, **ज्ञानोक्तौ च**—सत्यं ज्ञानमिति ज्ञानपदेऽपि सौत्रादिशब्दोल्लेख्ये, **एवम्**—आनन्दशब्दवदेव वर्तते, **यावता**—यावता स्वरूप-निरूपकधर्मजातेन ब्रह्मणि प्रतिपादितेन, **तदितरसमता**—ब्रह्मातिरिक्तचेतनाचेतनतुल्यता, **न शङ्क्या स्यात्**—ब्रह्मणि प्रसञ्जनार्हा न भवेत्, **तावद्धर्मानुवृत्तिः**—तावतां विशेषणभूतानां धर्माणां उपास्यतावच्छेदकतयाऽन्वयः, **बहुभजनपदे**—नानोपासनगोचरे, **ब्रह्मणि**—परस्मिन् ब्रह्मणि, **अत्र स्थाप्यते**—अस्मिन् अधिकरणे दृढीक्रियते ॥ १८ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

अन्यप्रकरणे श्रुतानाम् अन्यत्रोपसंहारे प्रमाणाभावात्, आनन्दादयः न सर्वविद्यानु-यायिनः—इत्याशङ्क्य,

---

[1] चैवमेतत्—च.

सर्वविद्यासु गुणिनो ब्रह्मण एकत्वात्, गुणानां च गुण्यपृथग्भावात्, आनन्दादीनां स्वरूपनिरूपकत्वाच्च, आनन्दादयः सर्वविद्यानुयायिनः—इत्युक्तम् ॥

—o—

### (4) नयसंगतिमालिका ॥

सत्यादिविद्या भिन्ना स्यात् प्रक्रियारूपभेदतः ।
इति शङ्काऽऽनन्दनये स्वरूपात् प्रत्युदीर्यते ॥ १३२ ॥

इति आनन्दाद्यधिकरणम् ॥ ४ ॥

—o—

## (87) कार्याख्यानाधिकरणम् ॥ ३–३–५ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(130) आचामेदिति विहितं 'प्राणोपास्त्यङ्गमन्यदाचमनम्[1] ।
नैतदनूद्य विधेयं ह्यप्राप्तेः प्राणवासस्त्वम् ॥ २५ ॥

**'आचामेत्' इति विहितम्**—विधित्वज्ञापकलिङ्प्रत्ययान्तेन 'अशिष्यान्नाचामेत्, अशित्वाऽऽचामेत्' इति वाक्यस्थेन शब्देन नूतनतया ज्ञापितम्, **प्राणोपास्त्यङ्गम्**—प्राणोपासनाङ्गभूतम्, **अन्यदाचमनम्**—स्मृत्युक्तान्नित्याचमनाद्भिन्नं विशिष्टमाचमनम्, (इति शङ्कने) **एतत् न**—इदं न साधु, **हि**—यतः, **एतदनूद्य**—ज्ञातमाचमनम् अनुवादेन निर्दिश्य, **प्राणवासस्त्वम्**—आचमनीयानाम् अपां, प्राणं प्रति वासस्त्वानुसन्धानम्, **विधेयम्**—अज्ञातमेव ज्ञाप्यम्, **अप्राप्तेः**—पूर्वं शास्त्रतोऽसिद्धत्वात् (अप्राप्ते हि शास्त्रमर्थवद्भवति) ॥ २५ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (श्लो॰ 19-20)

(339) आचामेदित्यपूर्वाचमनमिह विधेः प्राणविद्यावतः स्या-
न्नैवं स्मृत्यादिसिद्धेः परमनुविहिता प्राणवासस्त्वदृष्टिः ।
भुञ्जीतेत्यादिनीत्या विधिरपि घटते प्राप्तधात्वर्थनिष्ठः
प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः ॥ १९ ॥

---

[1] प्राणे वासस्त्वाङ्गमन्याचमनम्—क.

**आचामेत् इति**—'तस्मादेवंवित् अशिष्यन् आचामेत्, अशित्वा चाचामेत्' इति वाक्येन विधीयमानम्, **इह विधेः**—अत्र वाक्ये लिङ्रूपविधिप्रत्ययश्रवणात्, **प्राणविद्यावतः**—प्राणोपासनाधिकृतस्य पुरुषस्य विहितम्, **अपूर्वाचमनं स्यात्**—स्मृतिसिद्धादाचमनाद्भिन्नं नूत्नमेव आचमनाख्यं कर्म भवेत्, (इति शङ्कने) **मैवम्**—ईदृशं शङ्कनं न साधु, **स्मृत्यादिसिद्धः अनुविहिता**—स्मृत्याचाराभ्यां प्राप्तमाचमनकर्मानुसृत्य विधेयतां प्रापिता, **प्राणवासस्त्वदृष्टिः परम्**—आचमनीयास्वप्सु प्राणं प्रति वासस्त्वानुसन्धानरूपा दृष्टिरेव (अप्राप्ता), **प्राप्तधात्वर्थनिष्ठः**—शास्त्रान्तरतो लब्धे धात्वर्थे अन्वयितया भासमानः, **विधिरपि**—विधिप्रत्ययोऽपि, **भुञ्जीतेत्यादिनीत्या**—'स्नात्वा भुञ्जीत' इत्यत्र यथा रागप्राप्तभोजनानुवादतः पूर्वं स्नानानुष्ठानस्य नियमविधावेव पर्यवस्यति ; तद्वत्, **घटते**—अविरुद्धः सङ्गतो भवति, **प्राक्**—आनन्दाद्यधिकरणतः पूर्वस्मिन्नधिकरणे, **प्राणविद्या**—प्राणे ज्यैष्ठ्य-श्रैष्ठ्याद्युपासनात्मिका विद्या, **उक्ता**—चिन्तिता, **अस्याः अङ्गं तु**—प्राणविद्याया अङ्गभूतमाचमनविशिष्टवासस्त्वानुसन्धानं तु, **तदिदम्**—पूर्वप्रसक्तमेव सत्, **अवसरे चिन्तितम्**—बलवत्याः शङ्कायाः आनन्दाद्यधिकरणतः समाधानालाभेन उचिते समये लब्धे सति विचारितमस्ति ॥ १९ ॥

(340) आदावन्ते च वासः परिधिरभिहितो मन्यतिश्चाऽत्र दृष्ट्यै

सा चाऽऽराध्यप्रियार्था स्तुतिरिह न भवेद् [1]गत्यभवा[1]भिनन्द्या ।

युक्तश्चाऽपूर्वभावात् परिदधतिगिरा तद्विधानाभिसन्धिः

प्राणश्चाराधनीयः परिहितवसनो युज्यते सद्भिरद्भिः ॥ २० ॥

**आदौ अन्ते च**—उपक्रमे उपसंहारे च, **वासः परिधिः अभिहितः**—'किं मे वासः' इति वासः शब्देन, 'अद्भिः परिदधति' इति परिदधतिना च परिधानरूपोऽर्थ उक्तः, **अत्र मन्यतिश्च**—अस्यां प्राणविद्यायां 'एतदनमनग्नं कुर्वन्तो मन्यन्ते' इति अनुसन्धानार्थको मन् धातुश्च, **दृष्ट्यै**—अनुसन्धानरूपोपासनबोधिका सत्यपि, दृष्टिरूपताया बोधिकाऽपि वर्तते, **सा च**—दृष्टिश्च, **आराध्यप्रियार्था**—उपास्यायाः प्राणदेवतायाः प्रियत्वापादनफला, **गत्यभावाभिनन्द्या**—गत्यन्तरविरहे एवाश्रयणीया, **स्तुतिरपि**—वासस्त्वानुसन्धानस्य प्रशंसामात्रे विश्रान्तिरपि, **इह न भवेत्**—अत्र आश्रयणीया न भवितुमर्हति, **परिदधतिगिरा**—'अद्भिः परिदधति' इति वचसा, **तद्विधानाभिसन्धिः**—वासस्त्वानुसन्धानविधित्वनिर्णयोऽपि, **अपूर्वभावात् युक्तः**—पूर्वमप्राप्तत्वात् न्याय्य एव, **आराधनीयः**—प्रीणनीयः, **प्राणश्च**—प्राणाख्यो

---

[1] **(गत्य-लाभा)—सा**

देवताविशेषोऽपि **अद्भिः परिहितवसनः**—अन्नूपपरिधानतापन्नवसनाश्रयः सन्, **सद्भिः युज्यते**—सत्पुरुषकर्तृकयोगविषयो भवति ॥ २० ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

कार्याख्यानाधिकरणे—छान्दोग्य-वाजसनेयकयोः 'स होवाच किं मे वासः ?' इत्यादौ, 'तस्मादशिष्यन्नाचामेत्, अशित्वा चाचामेत्' इत्यादौ च, आचमने विधिप्रत्ययश्रवणात्, प्राणविद्याङ्गम् आचमनान्तरं विधीयते—इत्याशङ्क्य,

'किं मे वासः, अद्भिः परिदधति' इत्यादिभिः उपक्रमोपसंहारयोः वाक्यस्य अपां प्राणवासोदृष्टिपरत्वप्रतीत्या आचारप्राप्तमाचमनमनूद्य, आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानं विधीयते—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

कार्याख्यानाधिकरणे प्राणवासस्त्वचिन्तना ।
नियतेत्याह पूर्वाधिकरणन्यायसाम्यतः ॥ १३३ ॥

इति कार्याख्यानाधिकरणम् ॥ ५ ॥

—o—

## (88) समानाधिकरणम् ॥ ३–३–६ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(131) सङ्कल्पसत्यवशिताद्यतिरेकाद् 'रूप(स्य) विभेदतो ह्यस्याः[1] ।
[2]भेद इति नैव[2] यस्माद्वशिता सङ्कल्पसत्यताविततिः ॥ २६ ॥

**सङ्कल्पसत्यवशिताद्यतिरेकात्**—सत्यसङ्कल्पत्व-वशित्वादिधर्मयोः एकैकत्र अधिकृतयोक्तयोः मिथो भेदात्, **रूपस्य विभेदतः**—विद्यास्वरूपनिरूपणहेतोः रूपस्य भिन्नत्वात्, **अस्याः भेदः इति**—अग्निरहस्य-बृहदारण्यकीयतयोपात्तायाः शाण्डिल्यविद्यायाः अन्योन्यं भेद—

---

[1] रूपभेदतो ह्यन्यः—पा रूपभेदतोप्यन्यः—क.

[2] विद्येति नैव—पा.

एव इति शङ्कने, नैव—न चैवेदं युक्तम्, यस्मात्—यतो हेतोः, वशिता—बृहदारण्यकोक्तो वशित्वाख्यो गुणः, सङ्कल्पसत्यताविततिः—अग्निरहस्योक्तायाः सत्यसङ्कल्पतायाः कार्यत्वरूपा विस्तृतिरेवेति रूपभेदाभावात् न विद्याभेदः इति ॥

—o—

(2) अधिकरणसारावलिः ॥ (श्लो. 21-23)

(341) स्थानद्वन्द्वे वशित्वप्रभृतिविरहिता वाजिभिस्तद्युता चाऽ-
धीता शाण्डिल्यविद्या तदिह भिदुरता कल्पनीयेति चेन्न ।
आरण्योक्तं वशित्वाद्यपि खलु विततिः सत्यसङ्कल्पतायाः
साऽधीताऽग्ने रहस्येऽप्यधिकविरहतो नाऽत्र विद्यैक्यबाधः ॥ २१ ॥

स्थानद्वन्द्वे—वाजसनेयकाग्निरहस्ये बृहदारण्यके चेति स्थानद्वये, वाजिभिः—शुक्लयजुःशाखाध्येतृभिः, वशित्वप्रभृतिविरहिता तद्युता च—एकत्र वशित्वादिगुणाभावेन अपरत्र वशित्वादिगुणसाहित्येन च, शाण्डिल्यविद्या अधीता—शाण्डिल्यविद्या पठिता वर्तते, तत्—ततो हेतोः, इह—उभयत्र पठितयोः शाण्डिल्यविद्ययोः, भिदुरता कल्पनीया—भेदोऽनुमेयः, इति चेत् न—एवं शङ्कनमनुचितम्, आरण्योक्तम्—बृहदारण्यकपठितं वशित्वादिकमपि, सत्यसङ्कल्पतायाः—(परमात्मगतस्य) सत्यसङ्कल्पतारूपगुणस्य, विततिः खलु—कार्यरूपो विस्तार एव खलु, सा—वशित्वाख्यविततिमूलभूता सत्यसङ्कल्पता, अधिकविरहितः—रूपभेदापादकगुणाधिक्यराहित्यतः, अग्नेरहस्येऽपि—वाजसनेयकाग्निरहस्यब्राह्मणेऽपि, अधीता—पठितास्तीति, अत्र—शाण्डिल्यविद्याविषये, विद्यैक्यबाधः न—विद्यैक्यनिर्णयस्य न कोऽपि विरोधोऽस्ति ॥ २१ ॥

(342) शाखैक्येऽध्येतृभेदो न भवति न गुणः कश्चिदन्यो विधेयः
तस्मादुक्ताविशेषश्रवणमिह पुनः किं न विद्या विभिन्द्यात् ?
मैवं यद्यप्यनूक्तिर्ननु गुणविषये 'कल्पतेऽस्यास्त'[1] थापि
व्यक्त्यै सौकर्यतश्च व्यसन-समसनन्यायतस्त्वैक्यसिद्धेः ॥ २२ ॥

शाखैक्ये—अग्निरहस्य-बृहदारण्यकयोः एकशाखात्मकत्वे सति, अध्येतृभेदो न भवति—(समग्रायाः शाखायाः एकैकेनाप्यध्येत्रा अवश्यमध्येयत्वात्) अध्येतृपुरुषभेदायत्तः विद्याया द्विवारं पाठः इति समाधानं वक्तुं न शक्यते, विधेयः—एकत्र पाठे अज्ञातः नूतनतया

[1] (कल्पते स्यात्त)—? सा.

ज्ञापनीयश्च, **अन्यः कश्चिद्गुणः न**—अपरश्च कश्चन गुणविशेषो नैव वर्तते, (येन ज्ञापितेन द्वैतीयीकः पाठः सार्थकः स्यात्,) **तस्मात्**--अध्येतृभेद-विधेयभेदयोरभावात्, **इह पुनः उक्ताविशेषश्रवणम्**—पूर्वमुक्तस्यैव अविशेषतः पुनःश्रवणरूपं भेदकत्वेन प्रकरणेऽस्मिन् ज्ञायमानम्, **विद्याम्**—शाण्डिल्यविद्याम्, **किं न विभिन्द्यात् ?**—कुतो वा अतिरिक्तस्वरूपां न ज्ञापयेत् ?, (इति पूर्वोक्तोपरि शङ्कने) **मैवम्**—नोचितमिदं शङ्कनम्, **यद्यपि**—वस्तुतः, **अस्याः अनूक्तिः**—उक्ताया एवास्या विद्यायाः स्थलान्तरे पुनर्वचनरूपोऽनुवादः, **गुणविधये न तु कल्पते**—गुणविशेषस्य विधानाय नैव प्रभवति, **तथापि**—अज्ञातगुणविशेषोपदेशरूपप्रयोजनाभावेऽपि, **व्यसन-समसनन्यायतः**—'इष्टं हि विदुषां लोके समासव्यासधारणम्' इति न्यायात्, **व्यक्त्यै सौकर्यतश्च**—(विभज्योक्तिः) अभिव्यक्तिवैशद्यार्थम् (सङ्क्षिप्योक्तिः) ग्रहणधारणसौकर्यार्थं चेति (अनूक्तिःसफलेति **ऐक्यसिद्धेः**—एकस्यामेव शाखायां स्थानद्वयपठितायाः अस्या विद्याया अभेदनिर्णयलाभादिति ॥ २२ ॥

(343) छन्दोगैर्वाजिभिश्च स्फुटमनुपठिता भाति शाण्डिल्यविद्या
भेदाभेदावमर्शस्त्विह किमिति न सन्दर्शितो भाष्यकारैः ।
तद् ब्रूमो यत्र यत्राऽधिकपरिपठनं तत्र तत्राऽधिकाना-
मन्तर्भावादियुक्तावनधिकमधिकं[1] वेति साधारणोक्तेः ॥ २३ ॥

**छन्दोगैः वाजिभिश्च**—सामशाखीयैः शुक्लयजुःशाखीयैश्च, **शाण्डिल्यविद्या**—शाण्डिल्याख्या विद्या, **स्फुटम्**—अतिरोहिता सती, **अनुपठिता भाति**—छान्दोग्ये वाजसनेयके च अधीता प्रकाशते, **इह**—एतच्छाखास्थयोः शाण्डिल्यविद्ययोर्विषये, **भेदाभेदावमर्शः**—भिन्नत्वाभिन्नत्वविचारः, **भाष्यकारैः**—श्रीभाष्यकृद्भिः रामानुजार्यैः, **किमिति**—किं वा निमित्तमाश्रित्य, **न सन्दर्शितः**—विचारणीयतया न प्रकटितः, **तद् ब्रूमः**—तत्रोचितं समाधानं वर्णयामः, **यत्र यत्र**—यस्मिन् यस्मिन् शाखाविशेषे, **अधिकपरिपठनम्**—वशित्वादेरधिकस्यांशस्य आम्नानं वर्तते, तत्र **तत्र**—तस्मिंस्तस्मिंस्थले, **अधिकानाम्**—इतरत्रानाम्नातानां वशित्वादीनाम्, **अन्तर्भावादियुक्तौ**—आम्नाते सत्यसङ्कल्पत्वादौ कार्यत्वैकांशत्वादिना प्रविष्टत्वादियोगे सम्भवति सति, **अनधिकमधिकं वेति साधारणोक्तेः**—पठितं रूपमतिरिक्तं वा अनतिरिक्तं वा इति विचारप्रतिपादिकाया उक्तेः सर्वस्थलान्वय्युक्तिरूपत्वात्, तत्राप्यनेनैव विचारेण निर्णयलाभात् ॥ २३ ॥

—o—

[1] (वधिकमनधिकं—) ? सा.

### (3) अधिकरणार्थसंग्रहः ॥

समानाधिकरणे—वाजसनेयकेऽग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्या आम्नायते । तत्राऽग्निरहस्ये, सत्यसङ्कल्पत्वादिविशिष्ट उपास्यः । इतरत्र वशित्वादिगुणक इति, रूपभेदाद्विद्याभेदः—इत्याशङ्क्य,

उभयत्राऽपि मनोमयत्वादिके समाने सति, वशित्वादेश्च सत्यसङ्कल्पत्वगुणादभिन्नत्वात् रूपभेदाभावात् न विद्याभेदः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

समानाधिकृतौ चाऽपि रूपभेदाभिमानतः ।
विद्याभेदोऽपोद्यतेऽन्तर्गतं हि ! वशितादिकम् ॥

इति समानाधिकरणम् ॥ ६ ॥

—o—

## (89) सम्बन्धाधिकरणम् ॥ ३–३–७ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(132) भास्वद्धृषीकासनयोरुपास्याभेदादभेदादुभयाह्वये[1] द्वे[1] ।
न रूपभेदात् स्थलजाद्विभिन्ने [2]व्यवस्थितैकाह्वयने[2] यथाक्रमम् ॥ २७ ॥

**भास्वद्-हृषीकासनयोः**—आदित्याक्षिमण्डलरूपस्थानयोः, **उपास्याभेदात्**—उपास्यस्य ब्रह्मण एकत्वात्, **अभेदात्**—विद्यैक्यापादकस्य रूपभेदाभावस्य सत्त्वात्, **उभयाह्वये**—अव्यवस्थितनामद्वयवती, **द्वे**—इमे द्वे विद्ये, न भिन्नस्वरूपे भवतः; (इति पूर्वपक्षे प्राप्ते) **न**—नोचितमिदं शङ्कनम्, **स्थलजात्**—उपासनाधिष्ठानभूतस्थान (अक्षि-आदित्य) कृतात्, **रूपभेदात्**—विद्यानेकत्वापादकस्य रूपभेदस्य सत्त्वात् **यथाक्रमम्**—क्रमानुगुण्येन, **व्यवस्थितैकाह्वयने**—नियतैकैकनामके पृथग्विद्ये एव भवत इति सिद्धान्तः ॥ २७ ॥

—o—

[1] ते—क. [2] ऽप्यवस्थितैकाह्वयने—क.

## (2) अधिकरणसारावलिः ॥

(344) अक्ष्यादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदा-
देकं स्यात्तेन नाम्नोरनियतिरिति न स्थानतो रूपभेदात् ।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति न चेत् स्यान्न रूपातिदेश-
स्तस्मादर्काक्षियोगादहरहमिति तन्नामनी स्थापनीये ॥ २४ ॥

**अक्ष्यादित्योपलक्ष्ये**—अक्षि-आदित्यमण्डलरूपस्थानाभ्यां (चन्द्रस्य शाखाग्रवत्) उपलक्षणभूताभ्यां ज्ञाप्ये, **भगवति**—परमात्मनि विषये, **भजनम्**—उपासनम्, **चोदनादेः अभेदात्**—विधेः फलयोगस्य, रूपस्य, आख्यायाश्च अविशिष्टत्वाद्धेतोः, **एकं स्यात्**—अभिन्नमेव भवेत्, **तेन**—उपासनस्यैकत्वेन हेतुना, **नाम्नोः**—'अहः अहं' इति नाम्नोः अव्यवस्थितत्वमेव, **इति न**—एवं शङ्का न कार्या, **स्थानतः रूपभेदात्**—उपासनस्थान(भेद)-कृतात् विद्यासम्बन्धिनो रूपस्य भिन्नत्वात्, **स्थानम्**—भगवतः अक्षिरूपम् आदित्यमण्डलरूपं च स्थानम्, **तत्स्थत्वबुद्ध्यै हि**—अक्ष्यादित्यरूपस्थानावस्थितत्वप्रतिपत्तये खलु, **उपदिशति**—श्रुतिर्ज्ञापयति, **न चेत्**—विद्याभेदः श्रुतितात्पर्याविषयः स्याद्यदि, **रूपातिदेशः न स्यात्**—'तस्यैतस्य तदेव रूपं यदमुष्यरूपम्' इति रूपस्यातिदेशः श्रुतौ न क्रियमाणः स्यात्, **तस्मात्**—उक्तया रीत्या विद्ययोर्भेदात्, **अर्काक्षियोगात्**—आदित्यरूपस्थानयोगात्, अक्षि-रूपस्थानयोगाच्च, **अहः अहम् इति तन्नामनी**—'अहः' इति विद्याया एकं नाम, 'अहम्' इति च एकं नाम विद्ययोः यथाक्रमम्, **स्थापनीये**—व्यवस्थया उपसंहर्तव्ये ॥ २४ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

सम्बन्धाधिकरणे—बृहदारण्यके, 'तद्यत् सत्यमसौ स आदित्यः' इत्यादिना आदित्य-मण्डले अक्षिणि च, सत्यस्य ब्रह्मणः व्याहृतिशरीरकत्वेन उपासनमुक्त्वा, 'तस्योपनिषदह-रित्यधिदैवतम्' 'तस्योपनिषदहमित्यध्यात्मम्' इति द्वे रहस्यनामनी उपासनविषयतया आम्नायेते । तत्र व्याहृतिशरीरकस्य सत्यस्य, उभयत्राप्युपास्यत्वेन रूपभेदाभावेन विद्यैक्यात्, नामद्वयमपि स्थानविशेषनियमेन उभयत्राऽप्यनुसन्धेयम्—इत्याशङ्क्य,

ब्रह्मण एकत्वेऽपि, एकत्र आदित्यमण्डलस्थानतया अन्यत्र अक्ष्याधारतया उपास्यत्वेन रूपभेदात् विद्याभेदे, स्थानविशेषव्यवस्थयैव नामद्वयमनुसन्धेयम्—इत्यभिहितम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

अथ सम्बन्धाधिकृतौ रूपभेदाभिमानतः ।
अक्ष्यर्कविद्यैक्यशङ्काऽपोद्यते स्थानभेदतः ॥ १३५ ॥

इति सम्बन्धाधिकरणम् ॥ ७ ॥

—o—

## (90) सम्भृत्यधिकरणम् ॥ ३–३–८ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(133) किंचिन्नारभ्योक्तेः द्युव्याप्तिःसम्भृतिश्च वीर्याणाम् ।
सर्वास्विति तु न यस्माद् द्युव्याप्तिर्नाऽल्पदेशसंग्राह्या ॥ १८ ॥

**किंचित्**—विशिष्टमुपासनादिकम्, **नारभ्य**—अप्रस्तुत्य, **उक्तेः**—वचनात्, **द्युव्याप्तिः**—ब्रह्मगता द्युलोकव्याप्तिः, **वीर्याणां सम्भृतिश्च**—जगन्निर्वहण-भक्तानुग्रह-अवाप्त-समस्तकामत्वाद्यौपयिकवीर्यसम्भरणं च, **सर्वासु**—अविशेषेण निखिलास्वप्युपासनासु, (उपास्यगुणत्वेनाऽनुसन्धेयतामश्नुते), **इति न**—एवं शङ्कनं न युक्तिमत्, **यस्मात्**—यतो हेतोः, **द्युव्याप्तिः**—द्युलोकव्यापनाख्यं ब्रह्मविशेषणम्, **अल्पदेशसंग्राह्या**—अल्पस्थानविषयासु शाण्डिल्य-दहरादिकासूपास्तिषु उपसंहार्यं न भवितुमर्हति ॥ १८ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(345) सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतः सर्वविद्या-
स्वन्वीयेतेति चेन्न क्वचिदगति[1]कतो[1]लिङ्गतः स्थापितत्वात् ।
अल्पस्थानासु विद्यास्वघटितवपुषः स्वोचितस्थानवृत्ते-
र्द्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानिनोऽन्ये ॥ २५ ॥

**सम्भृत्यादिः गुणौघः**—'ब्रह्मज्येष्ठा वीर्या सम्भृतानि' इत्यादिशाखाविशेषस्थमन्त्रोक्तः विशिष्टवीर्यसम्भरण-द्युलोकव्याप्तिरूपापरिच्छिन्नस्वरूपत्वादिः परमात्मगुणसमूहः, **प्रकरण-**

---

[1] (मतो) ?—सा.

**पठनाभावतः**—अर्थविशेषं प्रधानभूतं प्रक्रम्य आम्नातस्य अनुपलब्धेः, **सर्वविद्यासु अन्वीयेत**—[पूर्वमीमांसान्यायमुपरुध्य (अनारभ्याधीतस्य सर्वकर्मान्वयित्वम् इति)] सर्वास्वपि ब्रह्मविद्यासु ब्रह्मगुणतया उपसंह्रियेत, **इति चेत् ! न**—एवं शङ्कनं न युक्तम्, **अगतिकतो लिङ्गतः**—अन्यथासिद्धं लिङ्गमाश्रित्य, **क्वचित्**—[अनारभ्याधीतानामपि] क्वचिदेवाऽन्वय इति, **स्थापितत्वात्**—पूर्वमीमांसायामेव असन्दिग्धं समर्थितत्वात्, **अल्पस्थानासु विद्यासु**—मनुष्यहृदयादिरूपात्यन्तपरिमितप्रदेशवर्तितया परमात्मोपासनरूपासु दहरादिविद्यासु, **अघटितवपुषः**—अन्वयानर्हस्वरूपायाः, **द्युव्याप्तेः**—द्युलोकव्याप्तिरूपायाः स्थितेः, **स्वोचितस्थानवृत्तेः**—पृथिव्यन्तरिक्षद्युलोकात्मकसर्वस्थानसम्बन्धस्वाभाव्यप्रतिपरः अवर्जनीयत्वात्, **एकमन्त्रे सहपठनवशात्**—एकस्मिन्नेव ब्रह्मज्येष्ठेति मन्त्रे वीर्यसम्भृति-द्युलोकव्याप्त्योः समानाधिकरणत्वबोधकात् आम्नानात् ज्ञापनात्, **अन्ये**—वीर्यसम्भरणादयः द्युव्याप्तित इतरे गुणाः सर्वे, **तत्समस्थानिनः**—द्युव्याप्तिरूपगुणाश्रयतया प्रतिपद्यमानब्रह्माश्रयगुणप्रतिपादकविद्यान्वयार्हा एव ॥ २५ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

सम्भृत्यधिकरणे—'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि' इति वाक्यावगतयोः, ब्रह्मणि ज्येष्ठानां वीर्यादीनां सम्भृति-द्युव्याप्त्योश्च, विद्याविशेषमनारभ्याऽधीतत्वात् सम्भृति-द्युव्याप्ती सर्वविद्यासु उपसंहार्ये—इत्याशङ्क्य,

हृदयाद्यल्पस्थानविषयासु विद्यासु द्युव्याप्तेः उपसंहर्तुमशक्यत्वात्, सम्भृतेश्च तत्साहचर्यात्, तयोः न सर्वत्रोपसंहारः—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

सम्भृत्यधिकृतौ स्थानभेदाभावनिबन्धना ।
व्याप्तिः सर्वगता स्यादित्याशङ्का प्रत्युदीर्यते ॥ १३६ ॥

इति सम्भृत्यधिकरणम् ॥ ८ ॥

—o—

## (91) पुरुषविद्याधिकरणम् ॥ ३-३-९ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(134) विद्याभेदः सत्यपि संज्ञैक्ये पुरुषविद्येति ।
सवनादियज्ञसंपरिकल्पनभेदकृत[1]रूपभेदत्वात्[1] ॥ २९ ॥

**पुरुषविद्येति संज्ञैक्ये सत्यपि**—'पुरुषविद्या' इत्येवंरूपायाः विद्याख्यायाः एकाकारत्वे विद्यमानेऽपि, **विद्याभेदः**—तैत्तिरीयक-छान्दोग्यगतयोः पुरुषविद्ययोः नानात्वमेव ; न **एकत्वम्**, **सवनादि ...भेदत्वात्**—छान्दोग्ये त्रेधा विभक्ते पुरुषायुषादौ सवनादिकल्पनम् ; तैत्तिरीये सायंप्रातरादौ तत्कल्पनं, यजमान-पत्न्यादितः यज्ञादिकल्पनमिति कल्पनादिभेदकृतस्य रूपभेदस्य सत्त्वात् ॥ २९ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (श्लो. 26–28)

(346) आख्याद्यैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तं
यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात् तैत्तिरीये परभजनफलं मुक्तिरत्राऽप्यनूक्ता
छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥ २६ ॥

**आख्याद्यैक्यात्**—विद्यासंज्ञाप्रभृतीनां विद्यासम्बन्धिनामंशानां पार्थक्याभावात्, **पुरुषविषययोर्विद्ययोः**—तैत्तिरीय-छान्दोग्यगतयोः विषयतया पुरुषाश्रितयोः (पुरुष) विद्ययोः, **अभेदः**—नानात्वस्याभावः (ऐक्यम्), **इत्ययुक्तम्**—एवं शङ्कनं न सुष्ठु, **इह**—तैत्तिरीय-छान्दोग्ययोः, **यज्ञाद्याकारक्लृप्तेः**—यज्ञ-सवनादिरूपकल्पनस्य, **विषमतया**—समानत्वाभावेन, विलक्षणत्वेन वा, **रूपभेदप्रसिद्धेः**—(स्वरूपभेदावगमकस्य) रूपानैक्यस्य सुज्ञेयत्वात्, **तादर्थ्यात्**—तैत्तिरीयगतपुरुषविद्यायाः न्यासविद्यात्मकब्रह्मविद्याशेषत्वात्, **परभजनफलम्**—परमात्मोपासनफलभूतः **मुक्तिः**—ब्रह्मप्राप्तिरूपोऽर्थः, **अत्राऽपि**—पुरुषविद्यायामपि, **अनूक्ता**—फलत्वेन निर्दिष्टोऽस्ति, **छान्दोग्ये**—छान्दोग्यश्रुतौ तु, **पूर्णमायुः**—षोडशोत्तरशतवर्षाख्यं परिपूर्णायुरेव, **फलमिति तु**—पुरुषविद्या साधनस्य प्रयोजनमिति, एतदेव, **तयोः**—वेदशाखाद्वयगतयोर्द्वयोः पुरुषविद्ययोः, **संयोगभेदः**—फलयोगनिरूपणे विशेषः (विद्याभेदापादकः), **भाति**—स्पष्टमवगम्यत एव ॥ २६ ॥

---

[1] रूपभेदतः—क.

(347) स्पष्टे रूपादिभेदे हठसमुपनतो नामसाम्यादिमात्रात्
पुंविद्यापूर्वपक्षो मृदुरिति विफलाऽधिक्रियैषेति चेन्न ।
अन्यैव न्यासविद्याप्रकरणपठिता तद्विधानप्रधाने-
त्यस्वातन्त्र्यादिसिद्ध्यै विभजनमनयोरित्यतीवाऽर्थवत्त्वात् ॥ २७ ॥

**रूपादिभेदे**—( तैत्तिरीयछान्दोग्यगतयोः पुरुषविद्ययोरुभयोरपि) मिथो भेदावगमके रूपादितो वैषम्ये, **स्पष्टे**—स्फुटप्रतिपन्ने सति, **नामसाम्यादिमात्रात्**—अविलक्षणाख्याकत्वं केवलमादाय, **हठसमुपनतः**—आपातप्रतीतिमात्रापतितः, **पुंविद्यापूर्वपक्षः**—पुरुषविद्यासम्बन्धी अधिकरणाङ्गभूतोऽयं पूर्वः पक्षः, **मृदुरिति**—क्षोदक्षमो न भवतीत्यतः, **एषा अधिक्रिया**—पुरुषविद्याधिकरणमिदं शारीरकीयम्, **निष्फला इति चेत्**—व्यर्थेति शङ्कनम्, **न**—न साधु भवति, **न्यासविद्याप्रकरणपठिता**—न्यासाख्यायाः विद्यायाः (ब्रह्मविद्यायाः) उपक्रमपूर्वकमाम्नाता, **तद्विधानप्रधाना**—प्राधान्येन न्यासविद्योपदेशाय प्रवृत्ता पुरुषविद्या, **अन्यैव**—सर्वथा भिन्नैव तैत्तिरीयगता, **इति अस्वातन्त्र्यादिसिद्ध्यै**—(छान्दोग्यीयपुरुषविद्यायां स्वतन्त्रतायाः पूर्णायुरवाप्त्यादिपृथक्फलादेः) एवं तैत्तिरीयगतायां परविद्याशेषतैकस्वरूपत्वफलार्थक्याभावादेः अर्थविशेषस्य लाभाय, **अनयोः विभजनमिति**—प्रस्तुतयोर्द्वयोः पुरुषविद्ययोः पार्थक्यज्ञापनमिति हेतुना, **अतीव अर्थवत्त्वात्**—अस्याऽधिकरणस्य सर्वथा सार्थक्यात् ॥ २७ ॥

(348) यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे
यज्ञस्याऽनङ्गभूतं कथमिह विविधं कल्प्यते तत्र तत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथाऽन्ये
तिष्ठत्वेतद्द्विधापि प्रकृत[1]सुघटिता[1] सम्प्रदायस्तु चिन्त्यः ॥ २८ ॥

**सानुबन्धे**—अन्तर्बाह्याख्यपरिकरसहिते, **परविदि**—परमात्मविषयकवेदनसम्पन्ने निष्पन्नोपासने, **पुरुषे**—चेतने (अधिष्ठानभूते), **यज्ञदृष्टिः**—यज्ञ(त्व)कल्पना, **यदि चोद्यते**—श्रुत्या यदि विधीयते ; तर्हि, **यज्ञस्य अनङ्गभूतम्**—कंचन यागविशेषं प्रति अङ्गतामनापन्नं (स्वयमेव प्रधानभूतं दर्शपूर्णमासादिकं) **विविधम्**—नानाप्रकारं कर्मजातम्, **इह**—यज्ञमध्ये, **तत्र तत्र**—'ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धाः' इत्यादितत्तद्वाक्यखण्डे, **कथं कल्प्यते ?**—केन वा प्रकारेण (कां वा योग्यतामाश्रित्य) अध्यासतश्चिन्ताविषयतामापद्यते ?, **तस्मात्**—उक्तात्

[1] (सुघटता) ?—सा.

**वैधर्म्यात्**, **इयम्**—'तस्यैवं विदुषः' इत्यादिरूपा कल्पनाततिः, **उचिता**—विद्याप्ररोचनौपयिकी, **प्रक्रान्तविद्यास्तुतिः**—आरब्धायाः न्यासविद्यायाः केवला प्रशंसा, **इति एके आहुः**—एवंरीत्या केचन व्याख्यातारो विवृण्वते, **अन्ये अन्यथा**—अपरे च प्रकारान्तरेण श्रुतेः विषयनिरूपणे औचित्यान्तरानपेक्षं स्वातन्त्र्यं वर्णयन्ति, **प्रकृतसुघटिता**—प्रकृतार्थानुरोधित्वरहिता, **एतद्विधाऽपि तिष्ठतु**—आदौ अनन्तरं चोक्ता उभयविधाऽपि रीतिरास्तां नाम, **सम्प्रदायस्तु चिन्त्यः**—न्यासविद्याप्रकरणार्थविषयकः पारम्परिकः प्रकारविशेषः परम् अत्र सम्यक्चिन्तनीयः ; (यः विशिष्टाद्वैतिनां श्रीवैष्णवानामात्मोत्तारणपटुरिति शास्त्रागमयोगिजनानुभवैः सुनिर्णीतः) ॥ २८ ॥

—o—

(3) **अधिकरणार्थसङ्ग्रहः** ॥

पुरुषविद्याधिकरणे—छान्दोग्ये तैत्तिरीयके च आम्नातयोः पुरुषविद्ययोः ऐक्यमाशङ्क्य, रूपभेदाद् विद्याभेदः—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका** ॥

ब्रूते पुरुषविद्याधिकृतिः सन्निधिमात्रतः ।
पुंविद्यां परविद्याङ्गं साधर्म्यादिह याजुषीम् ॥ १३७ ॥

इति पुरुषविद्याधिकरणम् ॥ ९ ॥

—o—

## (92) वेधाद्यधिकरणम् ॥ ३–३–१० ॥

(1) **शारीरकन्यायकलापसङ्ग्रहः** ॥

(135) 'शं नो मित्रे'त्याद्या मन्त्रा विद्याङ्गमन्तिकामननात् ।
नहि शुक्रादिकमन्त्रवदध्ययनाङ्गं तथैव सामर्थ्यात् ॥ ३० ॥

**शं नो मित्रेत्याद्या मन्त्राः**—उपनिषदारम्भे अधीयमानाः 'शं नो मित्रः शं वरुणः' इत्येवंप्रभृतिकाः मन्त्राः, **अन्तिकामननात्**—विद्यासन्निधिपाठरूपात् ज्ञापकात्, **विद्याङ्गम्**—उपासनशेषत्ववन्तः, (इति शङ्कने) **न हि**—न युक्तमेतत्, **शुक्रादिकमन्त्रवत्**—'शुक्रं

**प्रविध्ये'त्यादिमन्त्रा इव, अध्ययनाङ्गम्**—अध्ययनशेषभूता एवैते मन्त्राः, **तथैव सामर्थ्यात्**—तेष्विव अत्राऽपि विद्यमानात् मन्त्रगतात् लिङ्गात् ॥ ३० ॥

—o—

## (2) अधिकरणसारावलिः ॥

(349) युज्येरन् ब्रह्मविद्यापरिसरपठिताः शं न इत्यादिमन्त्रा-
स्तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात् ।
नो चेदन्येऽपि तद्वत् सविधपठनतः सन्तु शुक्रं प्रविध्ये-
त्येवंप्रायास्तदर्था न च घटत इदं लिङ्गतो दुर्बलत्वात् ॥ २९ ॥

**ब्रह्मविद्यापरिसरपठिताः**—उपासनप्रतिपादकोपनिषत्संनिधिसमाम्नाताः, **'शं न'-इत्यादिमंत्राः**—'शं नो मित्रः' शुक्रं प्रविध्ये[1]त्येवंप्रभृतयो मन्त्राः, **तादर्थ्यात्**—विद्याशेषत्वसाम्यात्, **सर्वविद्यासु युज्येरन्**—निखिलेष्वप्युपासनेषु अङ्गतयाऽन्वयिनो भवितुमर्हन्ति, **इति न**—एवं शङ्कनं न साधु, **तदु....लिङ्गात्**—तत्तन्मन्त्रप्रतिपन्नमध्ययनं शेषत्वसाधकात् मन्त्रगतात्सामर्थ्यात्, (संनिधिपाठावगतविद्याशेषत्वस्य विघटनात्) **नो चेत्**—मन्त्रवाच्यमध्ययनं प्रति अङ्गतां परित्यज्य संनिध्यायत्तविद्याशेषत्वस्यैवौचित्याभ्युपगमे, **तद्वत्**—शंनो मित्रादिमन्त्रवत्, **अन्येऽपि शुक्रं प्रविध्येवंप्रायाः**—इतरेऽपि 'शुक्रं प्रविध्य हृदयं प्रविध्ये'-त्येवमादयोऽपि मन्त्राः, **सविधपठनतः**—केवलसंनिधिपाठबलात्, **तदर्थाः सन्तु**—विद्याशेषभूता एवेत्यङ्गीक्रियन्ताम्, **इदं न च घटते**—एवमङ्गीकरणं नैव सङ्गच्छते, **लिङ्गतो दुर्बलत्वात्**—लिङ्गापेक्षया संनिधिपाठस्य न्यूनबलत्वात् (प्रबलसंनिधौ स्वकार्यकरणाक्षमत्वात् विद्याङ्गत्वगमकतावैघट्यात) सर्वविद्याङ्गत्वकल्पनायाः असिद्धेः ॥ २९ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

वेधाद्यधिकरणे—'शुक्रं प्रविध्ये'त्यादिमन्त्राणां विद्याङ्गत्वमाशङ्क्य, अन्यत्र लिङ्गादिभिर्विनियोगात्, न विद्याङ्गत्वम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

अथ वेधाद्यधिकृतौ पुंविद्योक्तप्रयत्नतः ।
शुक्रमित्यादिमन्त्राणां शङ्किताऽपोद्यतेऽङ्गता ॥ १३८ ॥

इति वेधाद्यधिकरणम् ॥ १० ॥

—o—

## (93) हान्याधिकरणम् ॥ ३–३–११ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(136) [1]पुण्यादिहान्युपायनयोरेकं चिन्त्यं समुच्चितं नेह[1] ।
[2]पृथगाम्नान[2]फलत्वान्नैतत् [3]सापेक्षत्वात्[3] परस्परतः ॥ ३१ ॥

**पुण्यादि....नयोः**—पुण्य-पापत्यागः अन्यत्र संक्रमः इत्यनयोः ब्रह्मप्राप्नुवत्पुरुष-सम्बन्धित्वेन श्रुतयोः अर्थयोर्मध्ये, **एकम्**—अन्यतरदेव, **चिन्त्यम्**—उपासनाङ्गतया चिन्तनीयं भवति, **न समुच्चितम्**—मिलितमुभयं न चिन्तनीयम्, **इह**—अस्मिन् प्रकरणे, **पृथगा....त्वात्**—पार्थक्येनैकैकपाठफलस्य वाच्यत्वात्, (इति शङ्कने) **नैतत्**—इदं नोचितम्, **परस्परतः**—हान्युपायनयोर्मिथः, **सापेक्षत्वात्**—साकांक्षतासत्वात्, (अन्यत्रोपायनार्थं हानम् हानसिद्ध्यर्थ-मुपायनम् इति परस्परापेक्षा) ॥ ३१ ॥

—o—

### (2) अधिकरणसारावलिः (श्लो. 30–32) ॥

(350) शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणं
ब्रूतेऽन्या तत्प्रवेशं प्रिय-तदितरयोर्दायसंक्रान्तिकाले ।
हानं चोपायनं च क्वचिदिति पृथगाम्नातसम्पर्कसिद्धि-
र्वाक्यं शाखान्तरस्थं भवति हि विहिताकाङ्क्षया वाक्यशेषम् ॥ ३० ॥

**मुक्तिभाजः**—(निष्पन्नोपासनस्य) मुक्तिं प्राप्स्यतः पुरुषस्य, **क्वचन**—कालविशेषे, **पुण्यपापप्रहाणम्**—(अनादितः स्वस्मिन् संक्रान्तयोः) सुकृत-दुष्कृतयोः त्यागमात्रम्, **द्वे शाखे**—सामगानां छान्दोग्यशाखा, आथर्वणिकानां मुण्डकशाखा च, **कथयतः**—'विधूय-पापम्' 'पुण्य-पापे विधूय' इत्येवं प्रतिपादयतः, **अन्या**—शाट्यायनिनां शाखा च, **दायसंक्रान्तिकाले**—स्वगतयोः दायरूपेण स्वस्मादन्यत्र संक्रमणसमये, **प्रिय-तदितरयोः**—सुहृद्-द्विषतोः, **तत्प्रवेशम्**—सुकृत-दुष्कृतयोः उपायनम् (प्राप्तिम्) **ब्रूते**—'तस्य पुत्रा दायम्' इत्यादिना वदति, **क्वचित्**—कौषीतकिनां शाखायाम्, **हानं चोपायन चेति**—सुकृतदुष्कृतयोः

---

[1] पुण्यादिहान्युपायन....सञ्चितास्वेव—इति मातृकायामुपलब्धम् ।
सञ्चिता सेवा—ग. समुच्चितं वेह—मुद्रिते ।

[2] पृथगज्ञान—क. [3] सापेक्षातः—मुद्रिते.

प्रहाणम् अन्यत्रोपायनं चेत्युभयमप्युक्तमिति हेतोः, **पृथगाम्नातसम्पर्कसिद्धिः**—प्रत्येकं प्रत्येकमभिहितयोर्द्वयोरपि मेलनस्य (श्रुत्या) अवगतिर्भवति, **हि**—यतः, **शाखान्तरस्थम्**—अन्यस्यां शाखायां विद्यमानमपि, **वाक्यम्**—श्रौतं वाक्यम्, **विहिताकाङ्क्षया**—विधिविषययोरर्थयोः मिथोऽन्वयापेक्षया, **वाक्यशेषं भवति**—(सर्वशाखाप्रत्ययन्यायेन) वाक्यगताकाङ्क्षापूरकतया एकवाक्यतां प्राप्नुवत् निराकाङ्क्षबोधाधायकं भवति ॥ ३० ॥

(351) इत्थं ब्रह्मज्ञकर्मत्यजनमितरसंक्रान्तिसम्पृक्तमस्तु
स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् क्लृप्तिदौःस्थ्यात् ।
सर्वेषां मुक्तिभाजां द्वितयमपि यथोपास्तिसाध्यं समानं
तच्चिन्ताऽसौ तथा तन्महिमविद इति स्थापनीयोभयत्र ॥ ३१ ॥

**इत्थम्**—हानोपायनयोः अन्योन्यसापेक्षत्वतः उपायनवाक्यस्य हानवाक्यं प्रति शेषत्वेन, **ब्रह्मज्ञकर्मत्यजनम्**—ब्रह्मविदा क्रियमाणं पुण्य-पापयोः परित्यागरूपं कर्म, **इतर.... पृक्तमस्तु**--सुहृद्-द्विषतोः पुण्य पापयोः प्रवेशेन संवलितं भवतु नाम, **चिन्तायाम्**—उपासककर्तृकब्रह्मविन्महिमानुसन्धानविषये परम्, **व्यवस्था स्यात्**—विकल्पकृता एकैकस्य एकत्रैकत्र चिन्तनमिति नियम एव पर्यवस्यतु, **पृथगनुपठनात्**—अमिलिततयैव तत्तच्छाखाम्नानात्--(इति शङ्कने), **इत्यसत्**—एवं शङ्कनमसाधु, **क्लृप्तिदौःस्थ्यात्**—चिन्ताया विषये विकल्पकल्पनायाः न्याय्यत्वासिद्धेः, **सर्वेषां मुक्तिभाजाम्**—मोक्षं लभमानानां निखिलानामपि चेतनानाम्, **उपास्तिसाध्यम्**—ब्रह्मविद्यानिष्पाद्यम्, **द्वितयमपि**—सुकृत-दुष्कृतयोः प्रहाणम् अन्यत्र सङ्क्रमश्चेत्युभयम्, **यथा समानम्**—अविशिष्टं यथा भवति, **तथा**—तत्साम्येन, **तन्महिमविदः**—विद्यामाहात्म्यज्ञस्य उपासकस्य, **असौ तच्चिन्ता**—विद्यासाध्यार्थविषयिणी विद्यामाहात्म्यानुसन्धानरीतिः, **इति उभयत्र स्थापनीया**—एवं फले इव साधनेऽपि च हानोपायनोभयविषयकत्वेन समानता दृढीकार्या ॥ ३१ ॥

(352) कर्त्रा तेनैव भोज्यं(ग्यं) शुभमितरदिति स्थापितं कर्मकाण्डे
तस्माद् ब्रह्मज्ञकर्म द्विषति सुहृदि वा नापतेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद् विगलति विदुषः कर्म तत्साध्यतुल्यं
विद्वत्प्रद्वेष-भक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः ॥ ३२ ॥

**तेनैव कर्त्रा**—विहितनिषिद्धानुष्ठातृत्ववता पुरुषेणैव, **शुभमितरत्**—शुभात्मकं अशुभात्मकं वा कर्म, **भोग्यमिति**—फलभूतसुखादिद्वारा अनुभाव्यम् अनुभाव्यमेव चेति,

**कर्मकाण्डे**—पूर्वमीमांसारूपे कर्मस्वरूपादिनिर्णायके एतच्छास्त्रपूर्वभागे, **स्थापितम्**—विचार्य निर्णीतम् (तृतीयसप्तमपादीये अष्टमाधिकरणे—'शास्त्रफलं प्रयोक्तरि तल्लक्षत्वात् ; तस्मात् स्वयं प्रयोगे स्यात्, (पू.मी.सू. 3-7-18) इत्यत्र), **तस्मात्**—कर्मफलभूतस्य पुण्यादेः कर्त्रैकानुभाव्यतानिश्चयात्, **ब्रह्मज्ञकर्म**—ब्रह्मवित्समवेतं पुण्य-पापाख्यं कर्म, **सुहृदि द्विषति वा**—मित्रे अमित्रे वा, **न आपतेत्**—नैव सङ्क्रमार्हं भवेत्, **इत्ययुक्तम्**—ईदृशः केषाञ्चिदाशयः समीचीनो न भवति, **विद्यामाहात्म्यतः**—उपासनानुष्ठानमहिम्ना, **विदुषः**—उपासितुः सिद्धोपायात् पुरुषात्, **यत् कर्म विगलति**—पुण्यरूपं पापरूपं वा यत् कर्मपदाभिधेयं विश्लिष्टं भवति, **तत्साध्यतुल्यम्**—तादृशकर्मजन्यत्वार्हफलसजातीयम्, **विद्वत्प्रद्वेष-भक्त्योः फलम्**—ब्रह्मवित्पुरुषद्वेषस्य तद्भक्तेश्च (पुरुषान्तरसम्बन्धिनोः) साध्यं भवति, **इति कथने**—एवं वर्णने, **वाक्यतात्पर्यसिद्धेः**—'सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्याम्' इति वाक्यविवक्षितार्थस्य (निर्दुष्टस्वरूपस्य) लाभात् ॥ ३२ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

हान्यधिकरणे—'पुण्य-पापे विधूय, सुहृदः साधुकृत्याम्' इत्यादिष्वाम्नातानां हानादि-चिन्तनानां विकल्पेनाऽनुष्ठानम्—इत्याशङ्क्य,

उपायनस्य हानिशेषत्वात्, समुच्चयेनैव सर्वत्रानुष्ठानम्—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

प्रोच्यते हान्यधिकृतौ प्राग्यथा कर्मशेषता ।
तथैव वस्तुसामर्थ्यलिङ्गादन्योन्यशेषता ॥ १३९ ॥

इति हान्यधिकरणम् ॥

—o—

## (94) साम्परायाधिकरणम् ॥ ३-३-१२ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(137) पुण्यादि[1]हानिचिन्ता गत्युपपत्ते[1]र्मृतौच मार्गे च ।
[2]कार्येति नैव मरणे कर्तव्या तावदित्युक्तेः[2] ॥ ३२ ॥

---

[1] हानिचिन्ता गत्युपपत्ति—क. ख.

[2] कार्येणैव हि मरणे कार्ये नैव च मरणे—ख. कर्तव्यतावदित्युक्तेः—क.

पुण्या....चिन्ता—सुकृत-दुष्कृतयोः हानोपायनविषयकमनुसन्धानम्, मृतौ च मार्गे च कार्या—देहवियोगकाले तथा तदनन्तरं पथि यानकाले च भाविनोः हानोपायनयोर्विषये कर्तव्यम् इति युक्तम्, गत्युपपत्तेः—तथा सत्येव कर्मसाध्यायाः अर्चिरादिगतेः सम्भवात्, इति नैव—एवं शङ्कनं नैव साधु, मरणे कर्तव्या—देहवियोगकाले एव सर्वकर्मक्षयानुसन्धानं कार्यम्, तावदित्युक्तेः—'तस्य तावदेव चिरम् यावन्न विमोक्ष्ये' इति देहपातमात्रावधिकतायाः श्रुत्या कथनात् ॥ ३२ ॥

—o—

(2) अधिकरणसारावलिः ॥ (श्लो. 33-34)

(353) कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिषदि श्रूयते साम्पराये
मार्गेऽन्यस्यां द्विधैवं शकलश इह तच्चिन्तनं चाऽस्तु मा भूत्।
न ह्युक्तं कर्मसाध्यं पथि फलमथ गत्यर्थदेहानुवृत्ति
मुक्त्यै विद्यैव कुर्यादघहतिवचने पाठतोऽर्थो बली(यान्) च ॥ ३३ ॥

मुमुक्षोः—संसारबन्धाद्विगलतो विदुषः, कर्मोद्धूतिः—सुकृत-दुष्कृतयोर्विमोकः, साम्पराये—शरीरवियोगसमये इति, क्वचित् उपनिषदि—ताण्डिभिरधीयमानायां छान्दोग्योपनिषदि, श्रूयते—आम्नातोऽस्ति, अन्यस्याम्—कौषीतक्यामुपनिषदि तु, मार्गे—अर्चिरादौ देवयाने पथि गमनसमये कर्मविमोक आम्नायते, इह—अस्यामवस्थायाम् (विकल्पानर्हतया उभयोः समप्रामाण्ये अङ्गीकार्ये सति) एवम्—श्रुतिद्वयोक्तया रीत्या, द्विधा—प्रकारद्वयेनाऽपि, शकलशः—(कर्मराशौ) कतिपयांशस्य शरीरवियोगवेलायाम् (तथा) अवशिष्टांशस्य पथि गमनवेलायां च खण्डशः क्षयो भवतीति, तच्चिन्तनं च—उपासनाङ्गभूतं कर्मक्षयचिन्तनमपि, द्विधा शकलशश्च अस्तु—द्वय्या रीत्या खण्डशो भावित्वेनैव शास्त्रविवक्षितं भवतु, (इति शङ्कने) मा भूत्—एवं नाङ्गीकार्यम्, कर्मसाध्यं फलम्—आत्मन्यवशिष्टेन सता कर्मणा अनुभाव्यं किंचित्फलम्, पथि—(गमनकाले) मार्गे अनुभाव्यतया, नहि उक्तम्—न खलु श्रुत्या चोदितमुपलभ्यते, अथ—शरीरवियोगसमये सर्वकर्मक्षयानन्तरम् गत्य....वृत्तिम्—अर्चिरादौ पथि गमनोपयोगिनः सूक्ष्मदेहस्य गमननिर्वृत्तिपर्यन्तावस्थानम्, मुक्त्यै—स्वफलभूतभगवत्सायुज्यनिर्वहणाय, विद्यैव—मोक्षसाधनतया वेदान्तविहिता विद्यैव, कुर्यात्—(विना कर्मानुवृत्तिं) साधयेत्, अघहतिवचने—(कौषीतकिनां) पापक्षयवाक्ये, पाठतः—पाठक्रमापेक्षया, अर्थः—अर्थगतः क्रमः, बली च—बलवानपि वर्तते। [औचित्यमपि श्रुत्यर्थनिर्णये सहकारि] ॥ ३३ ॥

(354) निश्शेषं कर्म नश्येदिह यदि विदुषः स्थूलदेहान्तमात्रे
विश्राम्येत्तस्य तावच्चिरमिति हि वचो नाऽर्थवत्त्वं गतेः स्यात् ।
गत्वा सम्पद्य चाऽऽविर्भवनमिति न सम्बोभवीतीत्ययुक्तं
स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतः सूक्ष्मसंस्कारयोगः ।। ३४ ।।

**विदुषः**—निष्पन्नोपासनस्य चेतनस्य, **स्थूलदेहान्तमात्रे**—स्थूलशरीरापगमे एव, **इह**—अर्चिरादियानपूर्वावधिभूते स्थाने एव, **कर्म निश्शेषं नश्येद्यदि**—पुण्य-पापाख्यं कर्म निरवशेषं यथा स्यात् तथा क्षीयेत यदि, **तस्य तावच्चिरमिति वचः**—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति मोक्षपरसम्पत्तिविलम्बावधिप्रतिपादकं वाक्यम्, **स्थूलदेहान्तमात्रे हि! विश्राम्येत्**—स्थूलदेहावसानस्यैव अवधितापतिपादने खलु पर्यवस्येत्, (तदा च) **गतेः अर्थवत्त्वं न स्यात्**—अर्चिरादिगतिश्रुतेः प्रतिपाद्यार्थवत्त्वं न भवेत्, (गतेः पूर्वमेव मोक्षलाभे गत्यादेः अभावापत्तेः) (तथैवाऽभ्युपगम्यताम्; को दोषः? इति तु न शङ्क्यम्) **गत्वा**—अर्चिरादिना मार्गेण प्रयाय, **सम्पद्य च**—परं ज्योतिरभिसम्पद्यैव, **आविर्भवनमिति**—स्वस्वरूपाविर्भावप्राप्तिरिति श्रुत्युक्तोऽर्थः, **न सम्बोभवीति**—असम्भावितः स्यात्, **इत्ययुक्तम्**—देहवियोगकाले एव सर्वकर्मक्षयं प्रति एवं विरोधोपवर्णनं न युक्तिमत्, **धीसङ्कोचमात्रस्थितिकृत्**—गुणाष्टकाविर्भावविरोधिनः धर्मभूतज्ञानसङ्कोचस्य केवलस्याऽवस्थानहेतुः, **सूक्ष्मसंस्कारयोगः**—अनादिप्राप्तसूक्ष्मसंस्कारावशेषान्वयः, **अनुगतः स्यात्**—अनुवृत्तो भवितुमर्हति (इति पूर्वमेव निःशेषकर्मक्षयेऽपि सर्वसामञ्जस्यात्) ।। ३४ ।।

—o—

## (3) अधिकरणार्थसङ्ग्रहः ।।

साम्परायाधिकरणे—उपासकस्य, देहवियोगकाले अर्चिरादिमार्गे च कर्मनाशः—इत्याशङ्क्य,

देहवियोगानन्तरम् उपासनफलव्यतिरेकेण अनुभाव्यफलाभावात्, कृत्स्नकर्मणामपि देहवियोगकाले एव नाशः—इत्युक्तम् ।।

—o—

## (4) नयसङ्गतिमालिका ।।

साम्परायाधिकरणे हानोपायनचिन्तना ।
स्थाप्यते कालनिष्कर्षात्तेनोपोद्धातसङ्गतिः ।। १४० ।।

इति साम्परायाधिकरणम् ।। १२ ।।

—o—

## (95) अनियमाधिकरणम् ॥ ३-३-१३ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(138) तद्विद्यानिष्ठानां तद्विद्योक्तार्चिरादिगति[1]चिन्ता स्यात्[1] ।
प्रकरणभेदान्नैतत् तद्य इति तु समानतावचनात् ॥ ३३ ॥

**तद्विद्यानिष्ठानाम्**—याः विद्याः प्रकृत्य अर्चिरादिका गतिराम्नाता तद्विद्यानिष्ठानामेव केवलम्, **तद्विद्यो....न्ता**—तत्तद्विद्याप्रकरणसमान्माताया: अर्चिरादिगतेः तदुपासनाङ्गभूतं चिन्तनम्, **स्यात्**—युक्तं भवेत् ; न विद्यान्तरनिष्ठानाम्, **प्रकरणभेदात्**—विद्याप्रकरणानां एकैकत्र पार्थक्येन, प्रकरणान्तरगतस्य प्रकरणान्तरेऽन्वये, सर्वत्र सर्वान्वयप्रसङ्गेन प्रकरणस्य अङ्गत्वग्राहकप्रमाणताया विलोपापत्तेः, (इति शङ्कने) **नैतत्**—इदं शङ्कनं न साधु, **'तद्य' इति तु समानतावचनात्**—'तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति अर्चिरादिगतेः सर्वेषामुपासकानां साधारण्यस्योक्तत्वात् ॥ ३३ ॥

—o—

### (2) अधिकरणसारावलिः (श्लो 35-37)

(355) पन्थाः स्यादर्चिरादिः फलमिह सकलब्रह्मविद्यासु मा वा
प्रारभ्याऽधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न ।
सर्वासां तद्य इत्थं विदुरिति वचसाऽ(त्राऽथ)थाऽत्र ये चेति चोक्त्या
मार्गे साधारणेऽस्मिंस्तदनुसरणतस्तद्वदेवाऽस्य चिन्ता ॥ ३५ ॥

**इह**—(मोक्षोपायतया) वेदान्ते प्रतिपादितासु, **सकलब्रह्मविद्यासु**—उपकोसलाक्ष्यन्तरादित्यदहरपंचाग्निवैश्वानराद्यासु ब्रह्मोपासनात्मिकासु सकलासु विद्यासु, **अर्चिरादिः पन्थः**—अर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्ग्लौविद्युद्वरुणेन्द्रधातृविरजारूपः प्रयातव्यो मार्गः, **फलं स्यात् मा ? वा ?**—(ब्रह्मप्राप्तिवत्) उपासनफलतया चिन्तनीयतया च सिध्येत् ? उत न सिध्येत् ? (इति संशये), **प्रारभ्याऽधीतियोगात्**—उपकोसलपञ्चाग्न्याख्यविद्याविशेषं प्रकृत्य आम्नातत्वात् ज्ञापकात्, **तस्य चिन्ता**—अर्चिरादेः पथः (उपासनाङ्गतया) चिन्तनम्, **प्रकरणनियता**—यां विद्यां प्रक्रम्योक्तोऽर्चिरादिर्मार्गः तद्विद्यामात्रे (फलतया) प्रतिनियतमेव ; न सर्वविद्यान्वयि, **इति चेत् ! न**—एवं शङ्कनमनुचितम्, **तद्य इत्थं विदुरिति वचसा**—

[1] चिन्ता—ग.

'तत्र इत्थं विदुरिति' पञ्चाग्निविद्यानिष्ठोद्देश्यकवाक्येन, **अथ**—पश्चात्, **अत्र**—अस्मिन्नेव वाक्ये, **ये चेति चोक्त्या**—'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति ब्रह्मोपासकसामान्योद्देश्यकवाक्येन च, **अस्मिन् मार्गे**—अर्चिरादौ पथि, **सर्वासां साधारणे**—वेदान्तोदितब्रह्मविद्यानामखिलानां समाने सति, **तदनुसरणतः**—तदनुरोधेन, **तद्वदेव**—साधारणं फलं यथा तथैव, **अस्य चिन्ता**—पथः चिन्तनमपि साधारणमेवेति ॥ ३५ ॥

(356) हेयोपादेयमार्गद्वितयमुपदिशन् मुक्तिदाता मुमुक्षो-
योगी यः कश्चनैतत्सरणियुगलविन्मुह्यते नेत्यगायत् । ?
तस्मादस्मादृशाधीत्यविशदविशदीकर्तृवाक्यावमर्शाद्
ब्रह्मप्राप्त्यर्हकृत्स्न[1]प्रणिहितविहितं[1] मार्गचिन्ताविधानम् ॥ ३६ ॥

**मुक्तिदाता**—मोक्षप्रदानकुशलो भगवान् गीताचार्यः, **मुमुक्षोः**—मोक्षाभिलाषिणो ब्रह्मनिष्ठस्य, **हेयो....द्वितयम्**—पुनरावृत्तिदुष्टतया दूरीकार्यम् अनावृत्तिदार्ढ्येन स्वीकार्यं च वर्त्मद्वयम्, **उपदिशन्**—हितैषितया ज्ञापयन्, **एतत्सरणियुगलवित्**—या धूम-रात्रि-अपरपक्ष-दक्षिणायनषण्मास-पितृलोक-आकाश-चन्द्रमसाम् (आवृत्तियुक्ता जरामरणावर्तापादन-जटिला) सरणिः पितृयाणाख्या, या च अर्चिर्-अहः-शुक्लपक्ष-उत्तरायण-षण्मास-संवत्सर-आदित्य-चन्द्रमस्-वैद्युत-वरुण-इन्द्र-प्रजापति-विरजाख्या (अनावृत्तिगम्भीरा) सरणिः देवयानाख्या, ईदृशमार्गद्वयवेत्ता, **यः कश्चन योगी**—यादृशोऽपि वा कश्चिदुपासको ब्रह्मनिष्ठः, **न मुह्यते**—स्पष्टमार्गतया न भ्रान्तो भवति, **इति अगायत्**—भगवद्गीतायामेवं जगौ, 'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन' इति, **तस्मात्**—भगवता एवं गीतत्वात्, **अस्मा....मर्शात्**—मितप्रज्ञानामस्मादृशानां वेदान्ताध्ययनतः स्पष्टमज्ञातो योऽर्थः तत्स्फुटीकरणहेतोर्गीतावाक्यस्य साभिप्रायपरिचिन्तनात्, **ब्रह्मप्राप्त्यर्ह....विहितम्**—परब्रह्मसम्पत्तौ निरन्तरायमर्हतापादकानि यानि प्रणिधानानि तदङ्गतया तद्रूपतया वा विधिगोचरीभूतम् इदं देहादुत्क्रान्तेन विदुषा गन्तव्यस्याऽध्वनः उपायानुष्ठानदशायामपि परिचिन्तनप्रकारात्मकमिति अवगन्तव्यम् ॥ ३६ ॥

(357) ध्यानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारै-
र्विद्याङ्गत्वादिसिद्ध्यै यदि भवतु तदाऽनन्तरे पाद एतत् ।
नैवं विद्याङ्गतायामपि भजनमिवेदं च धीत्वाविशेषात्
कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति ॥ ३७ ॥

---

[1] प्रणिहित वहितं—च. (प्रणिहितिविहितम्)—सा.

**सूत्रकारैः**—शारीरकसूत्रकृद्भिः बादरायणाचार्यैः, **हानादेः अर्चिरादेरपि चिन्तनम्**—विदुषः सुकृत-दुष्कृतयोर्हानोपायनरूपार्थस्य (तथा) विदुषा गन्तव्यस्य अर्चिरादेरध्वनो देवयानस्य च परिचिन्तनं नाम यदस्ति तत्, **किमभिहितम्**—कस्मै प्रयोजनाय प्रतिपादितम्? **विद्याङ्गत्वादिसिद्ध्यै यदि**—चिन्तनस्य उपासनं प्रत्युपकारकतायाः उपासनवदेव अहरहरावर्तनीयतायाश्च सिद्धिप्रतिपत्तये यदि, **तदा**—तर्हि, **एतत्**—ईदृशार्थनिरूपणम्, **अनन्तरे पादे**—पश्चात्तने चतुर्थे अङ्गपादे (विद्याङ्गनिरूपणपरे), **भवतु**—क्रियतां नाम; न तु विद्याप्रभेदनिरूपणमात्रोद्देशेन प्रवृत्ते गुणोपसंहारपादेऽस्मिन्, (इति शङ्कने) **मैवम्**—अनया रीत्या न शङ्क्यम्, **विद्याङ्गतायामपि**—उपासनाङ्गत्वसत्वेऽपि (चिन्तनस्य), **इदं च**—चिन्तनमपि, **भजनमिव**—उपासनवदेव, **धीत्वाविशेषात्**—ज्ञानरूपत्वांशे (उपासनचिन्तनयोः) अवैलक्षण्याद्धेतोः, **कर्मादिभ्यो विभक्तं कथयितुम्**—पश्चात्तनपादनिरूपणीयेभ्यः उपासनाङ्गकर्मजात-शम-दमाद्यन्तरङ्गबहिरङ्गसहकार्याख्येभ्यः पृथग्भूतमावेदयितुम्, **इह**—साधनपरेऽस्मिन् तृतीयपादे, **तत्सूत्रणम्**—हानादेचिन्तनस्य सौत्रं निरूपणम्, **स्थानपाति**—योग्यस्थानप्राप्तमेव ॥ ३७ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

अनियमाधिकरणे—उपकोसलविद्यादिष्वाम्नातया अर्चिरादिगत्या, तन्निष्ठानामेव ब्रह्मप्राप्तिः—इत्याशङ्क्य,

'ये चेमेऽरण्ये, श्रद्धां सत्यं' इत्यादिषु श्रुतिषु स्मृतिषु च सर्वब्रह्मनिष्ठानाम् अर्चिरादिगतिप्रतिपादनात्, सर्वेषाम् अर्चिरादिगत्यैव ब्रह्मप्राप्तिः—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

तथैवाऽनियमन्याये सर्वेषामर्चिरादिका ।
गतिश्चेत् पूर्वसिद्धान्ता भवेयुरुपपादिताः ॥ १४१ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

—o—

## (96) अक्षरध्यधिकरणम् ॥ ३–३–१४ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(139) विद्याविशेषकथितास्त्वस्थूलाद्या भवन्ति तत्रैव ।
[1]नाऽन्यत्र[1] मानहानेर्नैवाऽऽनन्दादिव[2]न्निरूपकतः[2] ॥ ३४ ॥

**विद्याविशेषकथिताः**—मुण्डक-वाजसनेयकगतयोः अक्षरब्रह्मविद्ययोरेव केवलमुपात्ताः, **अस्थूलाद्याः**—अस्थूलादिपदोपस्थिताः अस्थूलत्वानणुत्वादयो ब्रह्मगुणाः परम्, **तत्रैव**—तस्मिन् विद्याविशेषे एव अनुसन्धेयाः, **नाऽन्यत्र**—इतरासु विद्यासु अविशेषतो नाऽनुसन्धेयाः, **मानहानेः**—(तत्र तत्र अनुपात्ततया) तद्विद्याप्रवेशे प्रमाणराहित्यात्, व्यवस्थाभङ्गापत्तेश्च, (**इति शङ्कने**), **नैव**—इदं नैव युक्तम्, **आनन्दादिवत्**—आनन्दत्व-सत्यत्व-ज्ञानत्वानन्तत्वामलत्वादिवत्, **निरूपकतः**—तेऽपि ब्रह्मस्वरूपनिरूपका एव यतः ॥ ३४ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (श्लो. 38-40)

(358) यस्यामस्थूलतादिः [3]प्रपठित उचितं[3] चिन्तनं तस्य तस्यां
नाऽन्यस्यां मानहानेर्न यदि नियमन कस्य कुत्रेति चेन्न ।
हेतुत्वोन्नेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥ ३८ ॥

**अस्थूलतादिः**—अस्थूलत्वानणुत्वप्रभृतिको गुणस्तोमः, **यस्यां प्रपठितः**—यादृशविद्यायां प्रक्रान्तायामाम्नातः श्रुतिषु, **तस्याम्**—तादृश्यामक्षरविद्यायामेव, **तस्य चिन्तनम्**—तस्य गुणस्य उपास्यब्रह्मगुणत्वेनाऽनुसन्धानम्, **उचितम्**—न्याय्यम्, **न अन्यस्याम्**—न तु इतरस्यां ब्रह्मविद्यायाम्, **मानहानेः**—प्रमाणाभावात्, **न यदि**—प्रमाणाभावतः अन्यविद्योपात्तगुणानाम् अन्यत्रानन्वयो न संमतश्चेत्! **कस्य कुत्र नियमनम्?**—कस्यापि कुत्राऽपि व्यवस्था नाऽभ्युपगन्तुं शक्येतेति, (सर्वास्वपि विद्यासु सर्वविद्यागता अपि गुणा उपसंहार्या भवेयुरिति, रूपभेदाद्यधीनो विद्याभेद एव विलीयेत,) **इति चेत् न**—एवं शङ्कनं न साधु, **इह**—अस्मिन् गुणोपसंहारपादे, **सर्वासु ब्रह्मविद्यासु**—ब्रह्मोपासनासु वेदान्तोदितासु निखिलास्वपि, **हेतुत्वो....यनम्**—ब्रह्मणि जगन्निमित्तोपादानत्वतः आशङ्क्याः ये दोषाः तेषामसम्भाव्यत्वज्ञापनम्,

---

[1] नेतरत्र—क. [2] निरूपतः—ग. [3] (प्रपठितमुन्चितम्)—सा.

**आनन्दा....यमितमिति**—आनन्दाधिकरणप्रतिपादितप्रक्रियया व्यवस्थापितमिति हेतोः, (अमलत्वप्रतिष्ठापनतः) **अस्य**—विद्याविशेषोक्तस्याप्यस्थूलत्वादेः, **सार्वत्रिकत्वात्**—सर्वविद्यान्वयित्वस्यैव न्याय्यत्वात् ।। ३८ ।।

(359) सत्यत्वाद्यैः स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या
भूयस्तत्तुल्यधर्मेष्वधिकरणमिदं स्याद् वृथैवेति चेन्न ।
कैश्चिज्ज्ञातस्वरूपे क्वचिदितरगतं किञ्चिदन्यन्निषेध्यं
व्यावृत्त्या न स्वरूपावगतिरत इति [1]प्रेक्षणस्याऽत्र[1] रोधात् ॥ ३९ ॥

**सत्यत्वाद्यैः**—आनन्दत्व-सत्यत्व-ज्ञानत्वानन्तत्वामलत्वैः, ब्रह्मस्वरूपनिरूपकैर्धर्मैः, **स्वरूपावगतिः**—ब्रह्मस्वरूपस्य उपास्यस्य प्रतिपत्तिः, **सर्वविद्यानुवृत्त्या**—तेषां गुणानां सर्वविद्यासाधारण्यप्रतिपादनद्वारा, **अभिहिता**—आनन्दाद्यधिकरणे स्पष्टं समर्थितैव, **तत्तुल्यधर्मेषु**—स्वरूपनिरूपकत्वेन सत्यत्वादिसदृशेषु धर्मेष्वस्थूलत्वादिषु विषये, (सर्वविद्यान्वयित्वसमर्थनप्रवृत्तम्) **भूयः**—पुनः, **इदमधिकरणम्**—अक्षरध्यधिकरणम्, **वृथैव स्यात्**—गतार्थविषयकतया न अपूर्वप्रयोजनवद्भवितुमर्हति, **इति चेत् न**—एवं शङ्कनं न साधु, **कैश्चित् ज्ञातस्वरूपे**—कतिपयैर्धर्मैः अधिगतस्वस्वरूपे, **क्वचित्**—कस्मिंश्चिद्धर्मिणि, **इतरगतं किञ्चित्**—धर्म्यन्तरवृत्ति प्रकृते धर्मिणि निषेधार्हं यत्किञ्चित्, **अन्यत्**—इतरत् (धर्मिण्यविद्यमानम्), **निषेध्यम्**—निषेधतः व्यावर्तयितुमर्हं भवति, (न तु केनाऽपि धर्मेणाऽनवगतस्वरूपे धर्मिणि) **व्यावृत्त्या**—इतरस्माद्धर्मिणः प्रकृतधर्मिणो व्यावृत्तिप्रतिपादनमात्रेण, **न स्वरूपावगतिः**—प्रकृतधर्मिणः प्रतिपत्तिर्न भवतीति, **इति प्रेक्षणस्य**—एवंरूपस्य मन्दमतेश्चिन्तनस्य, **अत्र रोधात्**—अस्थूलत्वादेः निषेधात्मकधर्मस्याऽपि स्वरूपनिरूपकत्व-तत्कृतसर्वविद्यान्वयित्वाभ्यां एतदधिकरणनिर्णीताभ्यां निवारणात् ॥ ३९ ॥

(360) व्यावर्त्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तं ततस्त-
[2]च्चिन्ताऽकिञ्चिज्ज्ञ[2]साध्या जलधितरणवन्नोपदिश्येत नैवम् ।
तत्तत्सामान्यधर्मानुगतिकवलिताशेषभेदोपदेशे
तादृक्चिन्तोपपत्तेरनवममिति वा गृह्यतां संगृहीतिः ॥ ४० ॥

**व्यावर्त्यानन्त्यतः**—व्यावर्तनीयानां प्राकृतानां स्थूलादीनामर्थानामसङ्ख्यातत्वात्, **तद्व्युदसनमपि**—अनन्तप्रतियोगिकं व्यावर्तनमपि, **अनन्तं स्यात्**—असङ्ख्यातमेव भवेत्,

[1] (प्रेक्षणस्योप)—सा. [2] चिन्ता किञ्चिज्ज्ञ—सा.

**ततः**—तस्मात्, **अकिञ्चिज्ज्ञसाध्या**—सर्वज्ञैरेव केवलं प्राप्या, **तच्चिन्ता**—अनन्तगुणव्यावर्तनचिन्ता, **जलधितरणवत्**—बाहुभ्यां सागरलङ्घनमिव, **न उपदिश्येत**—उपदेष्टुमर्हा न भवेत्, (इति आक्षेपे) **मैवम्**—एवमाक्षेपो माऽस्तु, **तत्तत्साम।…पदेशे**—(शुक्ल नील तद्घटतद्घटादिप्रतियोगिकानन्ताभाववति **भूतले** घटत्वरूपव्यापकधर्मावच्छिन्नैकाभाववत्त्वमिव) 'अपरिच्छिन्नम्' इत्येवमादिरूपेण व्याप्यधर्मावच्छिन्नयावद्धर्मिप्रतियोगिनिष्ठव्यापकधर्मावच्छिन्नप्रतियोगिताकभेदज्ञापने, **तादृक्चिन्तोपपत्तेः**—व्यावृत्तिमुखेन धर्मिस्वरूपावगतिसिद्धेः, **अनवममिति वा**—अखिलहेयप्रत्यनीकमित्युपदेशो वा तत्सिद्धेः, **संगृहीतिः**—व्यावर्त्यसर्वकोडीकारः, **गृह्यताम्**—सुलभ इत्यवगम्यताम् ॥ ४० ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

अक्षरध्यधिकरणे—अस्थूलत्वादीनां स्वप्रकरणश्रुतविद्यामात्रसम्बन्धः—इत्याशङ्क्य,

व्यावृत्तब्रह्मस्वरूपप्रतिपत्तेः अस्थूलत्वादिभिर्विना असम्भवात्, आनन्दादिवत् तेषामपि सर्वविद्यानुयायित्वम् ।

—o—

## (4) नयसङ्गतिमालिका ॥

अथाऽक्षरध्यधिकृतावर्चिरादिगतेरिव ।
स्यात् सम्बन्धोऽक्षरधियामिति दृष्टान्तसङ्गतिः ॥ १४२ ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

—o—

# (97) अन्तरत्वाधिकरणम् ॥ ३-३-१५ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(140) प्रश्नोर्भेदेऽपि तथा व्यतिहारः प्राणनाशनायाद्योः ।
वाक्यं सद्विद्यावद् यत्साक्षादिति समानतः 'प्रश्ने'[1] ॥ ३५ ॥

---

[1] प्रश्नोः—क.

**प्रष्ट्रोः**—प्रश्नकर्त्रोः, **भेदेऽपि**—उषस्त-कहोलरूपेण द्वित्वे सत्यपि, **प्रश्ने**—प्रतिवचनोत्थापके जिज्ञासावाक्ये, **यत् साक्षादिति समानतः**—'यत् साक्षादपरोक्षात्....तन्मे व्याचक्ष्व' इति, प्रकारतः परमात्मविषयकत्वतश्च समानाकारतासत्त्वात्, **प्राणनाशनायाद्योः**—प्रतिवचनगम्ययोः ब्रह्मसम्बन्धिनोः धर्मयोः सर्वप्राणिप्राणनहेतुत्वाशनायातीत्वप्रभृतिकयोः, **तथा व्यतिहारः**—बुद्ध्या उभयत्र उभयरूपयोरपि परस्परविनिमयतः आहरणम्, (कार्यम्) व्यतिहृत्यैव च पश्चात् उपासनं कर्तव्यम्, **वाक्यम्**—प्रतिवचनद्वयरूपं वाक्यं तु, **सद्विद्यावत्**—छान्दोग्यगतसद्विद्याप्रकरणे एकस्मिन्नेव, 'भगवांस्त्वेव....ब्रवीतु' 'भूय एव ज्ञापयतु' इतिवत् पुनः पुनरुपदेशौचित्यवद्भवति ॥ ३५ ॥

—o—

(2) **अधिकरणसारावलिः** (श्लो. 41-43) ॥

(361) सूत्रस्वारस्यलाभात् प्रथममसुभृतः पूर्वपक्षे निवेशः

सिद्धान्ते ब्रह्मणश्चेत्यधिकरण[1]गतिरस्तोक[1]शङ्कापनुत्त्यै ।

साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशङ्कैव न स्या-

दित्यालोच्याऽथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः ॥ ४१ ॥

**सूत्रस्वारस्यलाभात्**—'भूतग्रामव'त्पदघटितं सूत्रं स्वरसतया अन्वीयमानमालोच्य, **प्रथमम्**—आद्ययोजनायाम्, **पूर्वपक्षे असुभृतो निवेशः**—पूर्वपक्षे प्राणायत्तजीवनस्य प्रत्यगात्मनः उपास्यत्वेन निवेशनम्, **सिद्धान्ते ब्रह्मणश्च निवेशः**—उत्तरपक्षे तु परमात्मनो निवेशनमुपास्यत्वेन, **इत्यधिकरणगतिः**—एवं रूपाधिकरणरचनाक्रमः, **स्तोक(तोक)शङ्कापनुत्त्यै**—अल्पायाः (दुर्बलायाः) बालिशानां वा शङ्कायाः निवारणाय, **साक्षाद् ब्रह्मेति वाक्यद्वयम् अवमृशताम्**—'यत् साक्षाद्ब्रह्म' इत्येवमाकारत एव श्रुतौ विद्यमानम् उभयमपि वाक्यम् उषस्तकहोलप्रश्नसम्बन्धि चिन्तयताम्, **अन्यशङ्का नैव स्यात्**—साक्षाद् ब्रह्मेतरविषयिणी शङ्का नैव उदियात्, **इत्यालोच्य**—इत्येवं श्रुतिस्वारस्यं विचिन्त्य, **अथ**—द्वितीययोजनायाम्, **भाष्ये**—एतदधिकरणश्रीभाष्ये, **पूर्वपक्षोऽपि**—निरसनीयः आद्यः पक्षोऽपि, **परविषयतया उपात्तः**—परमात्मविषयकतयैव स्वीकृतः, 'अपि'शब्दात् सिद्धान्तोऽपि ॥ ४१ ॥

[1] (गतिस्तोक)—सा.

(362) यत् साक्षादित्यमुष्मिन् श्रुतिशिरसि परं ब्रह्म वेद्यं यदेवे-
त्येतस्मिंश्चाऽस्त्वथाऽपि प्रतिवचनभिदा तत्र रूपं भिनत्ति ।
विद्याभित् प्रष्टृभेदोऽप्ययमिति यदि नाऽनूद्य भूयोऽनुयोगात्
पश्चादुक्तश्च दोषात्यय इह न भिदां सौति साधारणत्वात् ।। ४२ ।।

**'यत् साक्षा'दित्यमुष्मिन्**—उषस्तप्रश्नगते 'यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' इत्येवंरूपे, **'यदेवे'त्येतस्मिंश्च**—कहोलप्रश्नगते 'यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः' इत्येवंरूपे च, **श्रुतिशिरसि**—उपनिषद्वाक्ये, **परं ब्रह्म वेद्यमस्तु**—परं ब्रह्मैकमेव वेद्यत्वेन तात्पर्यविषय इत्यभ्युपगम्यताम्, **अथाऽपि**—प्रश्नवाक्ये अवैषम्येण परमात्मन एव वेद्यत्वेऽपि, **तत्र प्रतिवचनभिदा**—तयोः प्रश्नयोः याज्ञवल्क्यदत्ते उत्तरवाक्ये प्रत्येकं लक्ष्यमाणं वैलक्षण्यम्, **तत्र रूपं भिनत्ति**—विद्ययोः वेद्यमाकारं भिन्नं ज्ञापयति, **अयम्**—अस्मिन् सन्दर्भे दृश्यमानः, **प्रष्टृभेदोऽपि**—प्रश्नकर्त्रोः उषस्त-कहोलयोरन्यताऽपि, **विद्याभित्**—विद्यास्वरूपगतं मिथोभेदं लक्षयति, **इति यदि**—एवं शङ्क्यते चेत्!, **न**—नेदमुचितम्, **अनूद्य भूयोऽनुयोगात्**—प्राक् कृतप्रश्नस्यैव आनुपूर्व्या अनुवादं कृत्वा पुनः प्रश्नकरणमिति अवगमात्, **पश्चादुक्तः**—द्वितीयवारं प्रतिपादितः, **दोषात्ययश्च**—अशनायादिदोषोत्तीर्णत्वं तु, **न भिदां सौति**—नैव विद्याया भेदं ज्ञापयति, **साधारणत्वात्**—दोषोत्तीर्णत्वस्य अमलत्वात्मकतया, स्वरूपनिरूपकधर्मत्वात् सर्वासु विद्यास्वनुगतत्वादेव भेदकत्वाभावात् ।। ४२ ।।

(363) सद्विद्यायां यथा हि प्रतिवचनभिदा प्रश्नभेदानुसाराद्
विद्यैकत्वे 'विशेष्यं'[1] प्रकटयति परां देवता'मेव तत्र'[2] ।
तेनोषस्तः कहोलश्रुतमपि स च तत्संश्रुतं सङ्कलय्य
ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत् तत्र सब्रह्मचर्यम् ।। ४३ ।।

**सद्विद्यायाम्**—छान्दोग्यषष्ठप्रपाठकगतसद्विद्यास्थले, **विद्यैकत्वे**—विद्याया एकत्वे आदितः आन्तं प्रकरणपरिशीलनतः सिद्धे सति, **प्रश्नभेदानुसारात्**—एकेनैव श्वेतकेतुना क्रियमाणं प्रश्नवैलक्षण्यमनुसृत्य, **प्रतिवचनभिदा**—उद्दालकेन दीयमानेषु प्रत्युत्तरवाक्येषु मिथोवैलक्षण्यं, **तत्र**—सम्पूर्णायामेव सद्विद्यायाम्, **परां देवतामेव**—सच्छब्दाभिहितां परां देवतामेव, **यथा हि विशेष्यं प्रकटयति**—उपासनविशेष्यतया स्पष्टं प्रतिपादयति ; तथैवाऽत्राऽपि एकरूपमेव ब्रह्मविद्यावेद्यमिति, प्रतिवचनं स्पष्टीकरोति, **तेन**—विद्याया एकत्वस्य स्पष्टसिद्धत्वेन, **उषस्तः**—तदाख्य उपासकः, **कहोलश्रुतमपि**—कहोलेन गुरुमुखाच्छ्रुत्वाऽधिगतमपि उपास्यस्वरूपवैशेष-

[1] (विशिष्य)—सा. [2] (मेवमत्र)—सा.

प्रदमंशम्, स च—कहोलोऽपि, तत्संश्रुतम्—उषस्तेन श्रवणतो गृहीतमपि वैशद्यावहमंशम्, सङ्कलय्य—इतरत्रेतरत्र मिथो व्यतिहृत्य, सर्वान्तरमिति—सर्वान्तरात्मत्वेन रूपेण, ब्रह्म ध्यायेताम्—उपास्यं परं ब्रह्म ध्यानास्पदमापादयेताम्, इति—एवं तयोरधिगमे सम्पन्ने, तत्र सब्रह्मचर्यम्—तद्विद्याविषये तयोर्द्वयोरपि एकप्रवृत्तिमत्त्वम्, फलवत्—उपास्यवैशद्यसिद्धिरूपैकफलवद्भवति ॥ ४३ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

अन्तरत्वाधिकरणे—बृहदारण्यके उषस्ति-कहोलप्रश्नप्रतिवचनश्रुत्योः विद्याभेदः—इत्याशंक्य,

प्रश्नैकरूप्यात् विधिपदैक्याच्च विद्या एका—इति सिद्धान्तितम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

ब्रह्मणो ह्येयराहित्यात् प्राणनादेरसम्भवात् ।
अन्तरत्वाधिकरणे जीवशङ्का व्यपोद्यते ॥ १४३ ॥

इति अन्तरत्वाधिकरणम् ॥ १५ ॥

—o—

# (98) कामाद्यधिकरणम् ॥ ३–३–१६ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(141) आकाश-तच्छयानौ समुपास्यौ यदि न दहरविद्यैका ।
सामान्यात्तु गुणानां क्वचिदाकाशस्य हृदयवाचित्वात् ॥ ३६ ॥

**आकाश-तच्छयानौ**—(छान्दोग्य—वाजसनेयकाम्नातयोः दहरविद्ययोः यथाक्रमं) आकाशत्व-आकाशे शयानत्वात्मकरूपभेदवन्तौ परमात्मानौ, **समुपास्यौ यदि**—उपास्यतया विहिताविति हेतोः, वेदशाखाद्वयप्रतिपन्ने दहराख्यैकसंज्ञावत्यौ विद्ये मिथो भिन्ने इति यदि

शङ्क्यते, **न**—तत् शङ्कनं नैव साधु, **गुणानाम्**—विद्यां प्रति रूपभूतानां हृदयायतनत्व-सत्यकामत्व-सत्यसङ्कल्पत्वादीनाम् उपास्यतावच्छेदकानां ब्रह्मगुणानाम्, **सामान्यात्तु**—समानत्व-कृतात् रूपाभेदादेव, **दहरविद्या एका**—शाखाद्वयप्रतिपन्नाऽपि दहराख्या विद्या अभिन्नैव, **क्वचित्**—वाजसनेयकगतदहरविद्याप्रकरणे, **आकाशस्य**—'आकाशस्तस्मिन् शेते' इति वाक्यस्थस्य शयनस्थानवाचिनः 'आकाश'शब्दस्य, **हृदयवाचित्वात्**—हृदयाख्यस्थानबोधकत्वात् (तस्य चार्थस्य छान्दोग्येऽपि तुल्यत्वात् ॥ ३६ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 44–46)

(364) आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या
भिद्येताऽत्रेति चेन्न द्विविध इह यतो ब्रह्मनिर्देश एषः ।
सर्वाधारत्वपूर्वैः परतरविषयः सामगाकाशशब्दो
विश्वेशाधारतोक्त्या सुषिरविषयताऽन्यत्र रूपं तु नान्यत् ॥ ४४ ॥

**ताण्डिनः**—छन्दोगाः, **आकाशम्**—आकाशपदाभिधेयं परमात्मानम्, **अधिजगुः**—दहरविद्यायाम् उपास्यतया अधीतवन्तः, **वाजिनः**—शुक्लयजुःशाखिनस्तु, **तच्छयितम्**—आकाशाख्ये स्थाने शयानं परमात्मानम्, **अधिजगुः**—उपास्यत्वेनाऽधीतवन्तः, **तेन**—उपास्य-स्वरूपयोः आकाशत्वाकाशशयितत्वयोः मिथो भिन्नत्वेन, **अत्र**—अनयोरुभयोः शाखयोः विधीयमाना, **विद्या**—दहराख्या विद्या, **भिद्येत**—परस्परविभिन्नस्वरूपैव भवेत, **इति चेत्!** **न**—एवमाशङ्कनं नैव युक्तम्, **यतः**—यस्माद्धेतोः, **इह**—दहरविद्याप्रतिपादकशाखाद्वये, **ब्रह्मनिर्देशः**—उपासनधर्मिभूतस्य परमात्मनो व्यपदेशः, **द्विविध एषः**—'आकाशः, आकाशे शयितः' इति आकारद्वैविध्यमात्रवानयं परिदृश्यते ; न तु स्वरूपतो भेदवान्, **सामगाकाश-शब्दः**—छान्दोग्यस्थ आकाशशब्दः, **सर्वाधारत्वपूर्वैः**—सर्वजगदाधारत्वप्रभृतिभिः गुणैः, **परतरविषयः**—सर्वोत्कृष्टोपास्यभूतपरमात्मविषयकः, **अन्यत्र**—वाजसनेयकगते आकाशशब्दे, **विश्वेशाधारतोक्त्या**—'सर्वस्य वशी सर्वस्येशानः' इत्युक्तं जगन्नियामकं प्रति आधारतायाः आकाशपदाभिधेयेऽर्थे वर्णनेन, ('आकाशस्तस्मिन् शेते' इति) **सुषिरविषयता**—दहराख्यात्यन्त-सूक्ष्महृदयकुहरपरत्वमेव ; न तु छान्दोग्योक्तोपास्यभूताकाशपरत्वमिति, **रूपं नत्वन्यत्**—उपास्यरूपं नैव भिन्नम् ; अतो न विद्याभेदः ॥ ४४ ॥

(365) छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टं
तच्चाऽन्येषां वशित्वप्रभृतिघटितमित्यस्तु [1]रूपस्य[1] भेदः ।
मैवं यत् तद्वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः
इत्यैकार्थ्यं निरूढं परमपि दहरोपासनं तद्वदूह्यम् ।। ४५ ।।

**छन्दोगानाम्**—ताण्डिनाम्नां सामशाखिनाम्, **इह**—दहरविद्यायाम्, **अष्टभिः गुणैः जुष्टम्**—अपहतपाप्मत्वप्रभृतिभिः अष्टसङ्ख्यैः गुणैर्युक्तम्, **ब्रह्म**—परं ब्रह्म, **उपास्यं प्रथितम्**—उपासनप्रधानधर्मीति स्पष्टमेव, **तच्च**—तदेव ब्रह्म, **अन्येषाम्**—वाजसनेयिनाम्, **वशित्वप्रभृति-घटितमिति**—वशित्व-सर्वेशानत्वादिगुणगणजुष्टं सत् उपास्यमिति, **अस्तु रूपस्य भेदः**—अङ्गीक्रियतां नाम रूपभेदः, ततश्च विद्याभेदोऽपि—इति शङ्कने, **मैवम्**—एवं प्रकारेण चिन्तनं नैव साधु, **इह**—वाजसनेयिनां दहरविद्यायाम्, **तद्वशित्वाद्यपि यत्**—उपास्यभूतब्रह्मगतं वशित्वप्रभृतिकं गुणजातं श्रूयमाणं यद्वर्तते, **तत्**—वशित्वादिकं ब्रह्मगुणभूतम्, **सत्यसङ्कल्प-तायाः भिदा**—सत्यसङ्कल्पत्वनाम्ना प्रख्यातस्य ब्रह्मगुणस्यावान्तरभेद एव ; नाऽन्यः, **इति ऐकार्थ्यं निरूढम्**—अनेन प्रकारेण, दहरविद्याप्रकरणद्वयस्याऽपि उपास्यैकधर्मिविषयकत्वनिर्वहणं सम्पन्नं भवति, **परं दहरोपासनमपि**—इतोऽन्यदिव भासमानं तैत्तिरीयगतं 'दहं विपाप्मं' इत्यादिकं दहरविद्याप्रकरणमपि, **तद्वत् उह्यम्**—छान्दोग्यादिगतप्रकरणवदेव यथायोग्यं विचिन्त्य अभिन्नविद्यापरत्वेन निर्वाह्यमिति ।। ४५ ।।

(366) नन्वाकाशो गुणाद्यैः पर इति दहराधिक्रियायां पुरोक्तं
तस्मान्नाऽन्यार्थशङ्केत्यधिकरणमिदं नोज्जिहीतेति चेन्न ।
व्योमातीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः
पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमिताश्छिन्नमूलत्वमत्र ।। ४६ ।।

**ननु**—भोः, **पुरा दहराधिक्रियायाम्**—प्रथमाध्यायतृतीयपादीये दहराधिकरणे, **गुणाद्यैः**—परमात्मासाधारणभूतैर्गुणादिभिः ज्ञापकैः, **आकाशः**—'दहरोऽस्मिन्नन्तर आकाशः' इत्युक्ताकाशपदाभिधेयः, **पर इति**—परमात्मैवेति, **उक्तम्**—निर्णीतमेवाऽस्ति, **तस्मात्**—एतदधिकरणकार्यस्य पूर्वमेव निष्पन्नत्वात्, **अन्यार्थशङ्का नेति**—आकाशपदस्य परमात्मेतरार्थकत्व-शङ्का नैवोत्पत्तुमलमिति, **इदमधिकरणम्**—कामाद्यधिकरणम्, **नैव उज्जिहीत**—नैव उदय-माप्नुयात् (कृतकरत्वापत्तेः) **इति चेत् न**—एवं शङ्कनमनुचितम्, **निमित्तम्**—जगन्निमित्त-

[1] रूपेतु—सा.

कारणभूतं वस्तु, **व्योमातीतम्**—दहाकाशापेक्षया परभूतं तत्त्वमेव, **इदं दहरम्**—दहराकाश-रूपमिदं वस्तु तु, **उपादानम्**—अस्वतन्त्रमुपादानकारणमेव, **इति उद्गृणन्तः**—एवं वादिनः (व्योमातीतवादिनः) **पूर्वं क्षिप्ताः**—इतः पूर्वतनैस्तैस्तैरधिकरणैर्निरस्तप्रायाः । **अत्राऽपि**—एतदधिकरणीयाद्यसूत्रेऽपि, **प्रसङ्गात्**—निर्गुणतत्त्वनिरसनप्रसङ्गमाश्रित्य, **पुनः**—भूयः, **छिन्न-मूलत्वं गमिताः**—निर्मूलत्वतात्पर्यकतां प्रापितास्ते इति अधिकरणोदयात् ॥ ४६ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

कामाद्यधिकरणे—छान्दोग्य–वाजसनेयकयोः आम्नाता दहरविद्या भिद्यते—इत्याशङ्क्य, रूपैक्यात् विद्या न भिद्यते—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

कामाद्यधिकृतौ पूर्वन्यायेन वशितादिकम् ।
नियतं स्यादितीयं तु शङ्काऽपि प्रत्युदीर्यते ॥ १४४ ॥

इति कामाद्यधिकरणम् ॥ १६ ॥

—o—

## (99) तन्निर्धारणानियमाधिकरणम् ॥ ३–३–१७ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(142) उद्गीथस्योपास्तिर्नियता स्यादङ्गवत् तदाश्रयतः ।
अनियमनमर्थवत्त्वादनुपासितुरपि च [1]कर्मिताहेतोः[1] ॥ ३७ ॥

**उद्गीथस्योपास्तिः**—क्रतुषु उद्गीथाख्यस्य सामभागस्य अवयवभूतप्रणवोपासनक्रिया, **अङ्गवत्**—क्रत्वङ्गानामिव, **नियता स्यात्**—अवर्जनीयतया उपादेया भवितुमर्हति, **तदाश्रयतः**—उद्गीथोपासनस्य क्रत्वङ्गभूतोद्गीथाश्रितत्वात् (इति शङ्कने) **अनियमनम्**—उद्गीथोपासनस्य

---

[1] कर्मताहेतोः—क.

अनुष्ठाननैयत्यं न श्रुत्यभिमतम्, **अर्थवत्त्वात्**—कर्मफलाप्रतिबन्धरूपपृथक्फलवत्त्वात् तस्य, **अनुपासितुरपि**—उद्गीथोपासनं त्यक्तवतोऽपि, **कर्मिताहेतोः**—अनुष्ठितक्रतुत्वस्य 'तेनोभौ कुरुतः' इति श्रुतिवाक्यतोऽवगतत्वाद्धेतोः ॥ ३७ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 47-48)

(367) उद्गीथादौ क्रियाङ्गे भजनमपि भवेत् पर्णताद्युक्तनीत्या
कर्माङ्गं तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभग्नम् ।
स्वर्गादीनां फलत्वं क्रतुषु तदधिको ह्यत्र वीर्यातिरेकः
पर्णत्वादौ न वाक्यं वदति करणतां कर्म चाऽऽहाऽनुपास्तौ ॥ ४७ ॥

**क्रियाङ्गे**—क्रतूपकारकतया विहिते, **उद्गीथादौ**—उद्गीथप्रस्तावादिरूपसामभक्ति (भाग) विशेषे अनुष्ठीयमाने, **भजनमपि**—तदवयवभूतप्रणवोपासनमपि, **पर्णताद्युक्तनीत्या**—होमसाधनभूतजुह्वां पलाशप्रकृतिकतायाः अव्यभिचरितक्रतुसम्बन्धकृतक्रत्वङ्गतायाः कर्मकाण्डे (पू.मी. 3-3-1) निर्णीतया रीत्या, **कर्माङ्गं भवेत्**—नियमेन क्रत्वनुष्ठानसहचरितानुष्ठानविषयो भवेत्, **इह**—क्रतुप्रकरणे, **तत्फलोक्तिस्तु**—उपासनफलस्य क्रतुफलात् पृथक्कीर्तनं परम्, **नुतिः**—(पर्णतायाम् अपापश्लोकत्वस्य पृथक्कीर्तनमिव) स्तुतिमात्रम्; न तु फलान्तरवत्त्वे तात्पर्यम्, **इति**—एवं शङ्कनम्, **गोदोहनन्यायभग्नम्**—[गोदोहनन्यायः (पू.मी. 4-1-2)] गोदोहनपात्रेण क्रतूपयोगिनोऽपां प्रणयनस्य पशुकाममुद्दिश्य (चमसेनाऽपः प्रणयेद्गोदोहनेन पशुकामस्येति) विहितस्य, क्रत्वनुष्ठातृपुरुषविशेषापेक्षितफलविशेषप्रदत्वेन न सर्वक्रत्वर्थत्वम्—इति पूर्वमीमांसान्यायेन निराकृतम्, **क्रतुषु**—सामान्यतः क्रतुपदाभिधेयेषु कर्मसु, **फलत्वम्**—प्रवृत्त्युद्देश्यभूतप्रयोजनत्वम्, **स्वर्गादीनाम्**—'स्वर्गकामः' इत्यादिप्रतिपन्नानां स्वर्गप्रभृतिकानामेव, **अत्र**—उद्गीथोपासने, **वीर्यातिरेकः**—'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इत्युक्तो वीर्यातिशयः, (प्रबलकर्मान्तरेण प्रकृतकर्मफलप्रतिबन्धाभावरूपः) **तदधिको हि**—क्रतुफलापेक्षया अतिरिक्त एव खलु, **पर्णत्वादौ**—जुह्वाः पलाशदारुप्रकृतिकताविधायकस्थले तु, **वाक्यम्**—'यस्य पर्णमयी जुहू'रिति वाक्यम्, **करणतां न वदति**—(पर्णप्रकृतिकतायाः) अपापश्लोकतां प्रति करणत्वं नैव बोधयति; ('विद्यया' इतिवत् 'पर्णतया' इति तृतीयाश्रुतेरभावात्,) **अनुपास्तौ च**—उपासनरूपवेदनाभावेऽपि, **कर्म**—क्रत्वनुष्ठानम्, **आह**—'तेनोभौ कुरुतः, यश्चैतदेवं वेद यश्च न' इति वाक्येन प्रतिपादयति ॥ ४७ ॥

(358) उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलं तत्
स्वीकृत्य प्राग्विचारः स्थित इति विहतः पूर्वपक्षोऽत्र मैवम् ।
अत्रत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र विद्यैक्यशङ्का
त्यक्त्वाऽङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥ ४८ ॥

**उद्गीथे-प्राणदृष्टौ** —उद्गीथावयवभूतप्रणवधर्मिकप्राणत्वप्रकारकोपासने, **क्रतुघटित-फलादन्यत्**—क्रत्वन्वितफलाद्भिन्नम्, **फलम्**—असुरविध्वंसनरूपं फलम्, **उक्तम्**—'हन्ताऽसुरानुद्गीथेनाऽत्ययामे'ति श्रुतौ स्पष्टीकृतम्, **तत् स्वीकृत्य**—तदभ्युपगम्य, **प्राक्**—अन्यथात्वाधिकरणे पूर्वम्, **विचारः स्थित इति**—विचारः प्रस्तुत इति हेतोः, **अत्र पूर्वपक्षो विहतः**—अस्मिन्नधिकरणे पूर्वपक्षो भग्नः (पूर्वपक्षप्रवृत्तिरेव नैव घटते) इति शङ्कने, **मैवम्**—पूर्वपक्षानुदयाक्षेपो नोचितः, **अत्रत्ये**—एतदधिकरणनिर्णीते, **अनङ्गभावे**—उपासनस्य क्रत्वङ्गत्वाभावे, **स्थिरनिहितधियः**—अचाल्यदृढावस्थमतेः पुरुषस्यैव, **तत्र विद्यैक्यशङ्का**—तस्मिन्नधिकरणे विद्याभेदाभेदचिन्ता कृता, (अथवा) **अङ्गानङ्गभावौ त्यक्त्वा**—क्रत्वङ्गत्वानङ्गत्वविचारं परित्यज्य, **पृथगपृथगिति**—विद्या भिन्ना? अभिन्ना वा? इति, **पूर्वत्र**—अन्यथात्वाधिकरणे, **चिन्ता स्याच्च**—विचारप्रवृत्तिर्भवेदपि ॥ ४८ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

तन्निर्धारणानियमाधिकरणे—उद्गीथाद्याश्रयाण्युपासनानि कर्मसु नियमेन अनुष्ठेयानि—इत्याशङ्क्य,

पृथक्फलत्वेन गोदोहनादिवत् अनियमेन अनुष्ठेयानि—इत्युक्तम् ॥

—o—

### (4) नयसंगतिमालिका ॥

स्यात् तन्निर्धारणन्याये प्राङ्न्यायाधीनशङ्कया ।
उद्गीथोपासनानां च नियमोऽपि व्यपोह्यते ॥ १४५ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

—o—

# (100) प्रदानाधिकरणम् ॥ ३-३-१८ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(143) साधारणत्वहेतोः गुणी तु गुणचिन्तनेषु [1]नाऽवर्त्यः[1] ।
नैवं विशिष्टभेदात् [2]प्रतिगुण[2]मावर्तनीय एव गुणी ॥ ३८ ॥

**साधारणत्वहेतोः**—सर्वान् गुणान् प्रति परमात्मनो गुणित्वेन साधारण्यात्, एकवारं गुणिचिन्तनेनैव कार्यसिद्धेः, **गुणचिन्तनेषु**—पृथक् पृथक्कार्यताविहितेषु गुणचिन्तनावर्तनेषु, **गुणी**—चिन्त्यमानगुणानां धर्मिभूतः परमात्मा, **न आवर्त्यः**—न आवर्तनीयचिन्तनविषयः, (इति शङ्कने) **नैवम्**—एवंरीतिकं शङ्कनं न साधु, **विशि-दात्**—तत्तद्गुणविशिष्टगुणिस्वरूपस्य भिन्नत्वाद्धेतोः, **प्रतिगुणम्**—चिन्त्यमानगुणभेदानुगुण्येन, **गुणी**—गुणानां धर्मिभूतः परमात्मा, **आवर्तनीय एव**—आवर्त्यमानचिन्तनविषय एव ॥ ३८ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 49-51)

(369) कामानेतांश्च सत्यानिति वचनबलाद् धर्म्युपास्ते[3]र्विभक्ता[3]
धर्मोपास्तिस्तदर्थं गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम् ।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधि गुणिनश्चिन्तनावृत्तिरर्थ्या
राजत्वाद्यैः पृथक्त्वाद् भवति हि हविषो दानमावृत्तमिन्द्रे ॥ ४९ ॥

**कामा....बलात्**—'तद्य इह....व्रजन्त्येतांश्च सत्यान् कामान्' इति परमात्मगुणपृथगुपासनविधायकश्रुतिवाक्यान्यथानुपपत्त्या, **धर्म्युपास्तेर्विभक्ता**—परमात्मस्वरूपोपासनादतिरिक्ता, **धर्मोपास्तिः**—तद्धर्मभूतानां गुणानां सत्यकामत्वादीनामुपासना भवत्येव, **तदर्थम्**—पृथक्तया तद्गुणानामुपासनार्थम्, **गुणिपरिगणनम्**—तादृशगुणधर्मिभूतस्य परमात्मनः गुणानुध्यानवेलायामपि पृथक् अनुध्येयगुणाश्रयतया चिन्तनं (विहाय) **तन्त्रतोऽस्तु**—धर्म्युपासनार्थं कृतया एकवारं चिन्तयैव धर्मिसिद्ध्या गुणोपासननिर्वाहो भवतु; न तु प्रतिगुणचिन्तनं गुणिचिन्तनावृत्तिः कर्तव्याऽस्तु, **इत्ययुक्तम्**—एवं शङ्कनमनुचितम्, **गुणिनः**—गुणाश्रयस्य धर्मिणः **तत्तद्वैशिष्ट्यभेदात्**—तत्तद्गुणवैशिष्ट्यकृतं भेदमाश्रित्य, **प्रतिविधि**—धर्म्युपासनविधौ धर्मोपासनविधौ च, **चिन्तनावृत्तिः**—मुहुर्मुहुरावृत्तं चिन्तनम्, **अर्थ्या**—अपेक्षणीयमेव,

---

[1] नाऽचिन्त्यः—क. [2] प्रतिदिन—क. [3] (र्विभक्तो)—सा.

**हि**—यतः, **राजत्वाद्यैः पृथक्त्वात्**—राजत्व-अधिराजत्व-स्वाराट्त्वाख्यैः विशेषणैः कृतं पार्थक्यमवलम्ब्य, **इन्द्रे**—इन्द्राख्ये एकस्मिन्नेव यागोद्देश्यभूते धर्मिणि विषये **हविषो दानम्**—विध्युक्तं हविस्त्यजनम्, **आवृत्तं भवति**—त्रिरावृत्तमेव कार्यमिति पूर्वकाण्डे निर्णीतमेव वर्तते ॥ ४९ ॥

(370) तत्तद्भोग[1]प्रतीते[1]र्गुणघटितपरोपासना भोगहेतु-

मुक्तिश्च स्यात् क्रमादित्यसदगुणवचस्यान्यपर्याभिधानात् ।

शास्त्रेऽस्मिन्नासमाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं

नोच्छास्त्रं च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैष पादः ॥ ५० ॥

**गुण....पासना**—सगुणब्रह्मोपासना, **भोगहेतुः**—मुक्तिरूपार्थासमानाधिकरणस्य भोग-रूपस्यैन्द्रियकसुखानुभवस्यैव कारणभूता ; न तु ब्रह्मभावाख्याया मुक्तेः, **मुक्तिश्च**—(मोक्षाभिलाषिणः सगुणोपासितुः) मोक्षलाभस्तु, **क्रमात् स्यात्**—क्रमिकतयैव भवेत् ; (सगुणोपास्त्या भोगस्थानेषु भोगानन्तरं, निर्गुणोपास्त्या ब्रह्मभावरूपा मुक्तिः इति, न तु उपासनानुपदमेव) **इत्यसत्**—एवं कल्पनमयुक्तम् । **अगुणवचसि**—श्रुतिगते गुणनिषेधकत्वेनापाततो भासमाने वाक्ये, **आन्यपर्याभिधानात्**—(सामान्यविशेषादिन्यायसञ्चारतः) विहितेतरहेयादिगुणनिषेध-तात्पर्यकतायाः पूर्वमेव स्पष्टं प्रतिपादनात्, (किं च) **अस्मिन् शास्त्रे**—वेदान्तार्थव्युत्पादनोप-योगिन्यायनिर्णयप्रवृत्ते शारीरकमीमांसाशास्त्रे, **आसमाप्तेः**—आदितः परिसमाप्तिपर्यन्तम्, **क्व**—कस्मिन् अधिकरणे कस्मिन् वा सूत्रे ?, **निर्गुणोपास्तिसाध्यं फलम्**—परमात्मनः सर्वगुणराहित्येन उपासनतः सम्पादनीयं प्रयोजनम्, **अभिहितम्** सूत्रकारैः प्रतिपादितमस्ति ? (सूक्ष्मेक्षिकया अन्वेषणेऽपि न कुत्राऽप्युपलभ्यते) **उच्छास्त्रं च**—शास्त्रोल्लङ्घि च किंचिदप्यर्थ-जातम्, **न प्रकल्प्यम्**—शास्त्रार्थविवरणप्रवृत्तेन स्वमतिबलात् नैव योजयितुमर्हम्, **अयं पादश्च**—साधनाध्यायीयः तृतीयः पादश्च, **गुणनियमनतः**—तत्तदुपासनान्वयिनां गुणानां सुदृढं विविच्य व्यवस्थापनतः, **ख्यातिमान्**—प्रसिद्धनामा 'गुणोपसंहारपादः' इति, (न चाऽत्र निर्गुणतागन्धप्रसरः इति) ॥ ५० ॥

(371) प्रत्येकं मेलनाद्वा दहरगुणगणेऽप्यत्र सञ्चिन्त्यमाने

गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशङ्केति चेन्न ।

बुद्ध्यारोहे गुणानां यदवधि गुणिनो रूपमर्थ्यं [2]ततोऽन्यद्[2]

विद्यैकान्तं तदावृत्त्यनुघटिततदावृत्ति चिन्ताप्रवृत्तेः ॥ ५१ ॥

---

[1] (प्रतीती)—सा. [2] (यदन्यत्)—

**अत्र**—दहरोपासने, **दहरगुणगणे**—उपास्यस्य दहराकाशरूपिणः अपहतपाप्मत्वादिके गुणजाते, **प्रत्येकं मेलनाद्वा सञ्चिन्त्यमानेऽपि**—'पर आत्मा अपहतपाप्मा, विजरः' इत्येवमादिरीत्या एकैकशः तत्तद्गुणवत्तायां विशेषणतया वा, 'परमात्मगताः अपहतपाप्मत्वाद्याः अष्टौ गुणाः' इत्येकत्र धर्मिणि नानाधर्माणां मिलिततया विशेष्यतया वा अनुसन्धीयमानेऽपि, **गुण्या....लब्धेः**—गुणान् प्रत्याश्रयतया गुणिचिन्तनपौनःपुन्यस्य स्वयमेव लाभात्, **इह**—अस्मिन् प्रदानाधिकरणे, **तद्....शङ्का**—गुणिचिन्तनावृत्तेः अभावाक्षेपः, **कथम्?**—केन वा प्रकारेण युज्येत? **इति चेन्न**—एवम् एतदधिकरणपूर्वपक्षानुत्थितिशङ्का नैव युक्ता, **गुणानां बुद्ध्यारोहे**—एतद्विद्याप्रकरणाम्नातानां ब्रह्मगुणानां उपासनोपयोगिन्या बुद्ध्या विषयीकरणे लम्भनीये, **यदवधि**—यावत् पर्यन्तम्, **गुणिनो रूपम्**—गुणाश्रयस्य धर्मिणः स्वरूपम्, **अर्थ्यम्**—अवश्यमपेक्षितम्, **ततोऽन्यत्**—तादृशसत्यत्वादिस्वरूपनिरूपकधर्मापेक्षया भिन्नगुणविशिष्टं धर्मिस्वरूपम्, **विद्यैकान्तम्**—प्रकृताया दहरविद्याया एवासाधारणं यत् दहराकाशत्वाख्यरूपविशिष्टब्रह्मस्वरूपमस्ति, **तदावृत्त्य....प्रवृत्तेः**—तादृशधर्मिस्वरूपचिन्तनावृत्त्यन्विततत्तत्प्रतिगुणचिन्तनसम्बन्धिपूर्वोत्तरपक्षयोः प्रवृत्त्युपपत्तेः (अधिकरणोत्थानस्यार्थवत्त्वादिति) ।। ५१ ।।

—o—

## (3) अधिकरणार्थसंग्रहः ॥

प्रदानाधिकरणे—दहरविद्यायां गुणचिन्तने दहरचिन्तनं नाऽनुवर्तनीयम्—इत्याशङ्क्य,

दहरमात्रात् गुणविशिष्टदहरस्य भिन्नत्वेन विशिष्टानुसन्धानसिद्ध्यर्थं गुणचिन्तने, दहरचिन्तनमावर्तनीयम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

अपवादसमायातं पूर्वाधिकरणं यतः ।
स्यात् प्रदानाधिकरणं कामाधिकृतिशेषतः ॥ १४६ ॥

इति प्रदानाधिकरणम् ॥ १८ ॥

—o—

# (101) लिङ्गभूयस्त्वाधिकरणम् ॥ ३-३-१९ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(144) पूर्वानुवाक'नीत्या[1] [2]दहरोपास्तिसमुपास्य[तत्त्व] निर्णयनम्[2] ।
प्रकृतत्वादिति [3]नैवं[3] स्ववाक्यबलतः समस्तनिर्णयनम् ॥ ३९ ॥

**पूर्वानुवाकनीत्या**—पूर्वस्मिन् अनुवाके दहराख्यस्य उपास्यस्य प्रसक्तत्वात्, तमेव न्यायमनुरुध्य, **दहरो....यनम्**—तत्पश्चात्तने सहस्रशीर्षानुवाकेऽपि दहरोपासने उपास्यं यत् तत्त्वं तस्यैव विशेषतो निर्णयः क्रियते, **प्रकृतत्वात्**—तस्यैव प्रक्रान्तत्वात्, (तच्छेषतया तदपेक्षितार्थनिर्णयस्यैवोचितत्वात्), **इति, नैवम्**—एवं शङ्कने, नेदं साधु, **स्ववाक्यबलतः**—स्वगतपरमात्मचिह्नपरबहुवाक्यबलेन, **समस्तनिर्णयनम्**—सकलपरविद्योपास्यस्य तत्त्वस्यैव निर्णयः अस्मिन् अनुवाके क्रियते इत्येव साधु ॥ ३९ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 52-54)

(372) प्रक्रान्ता दह्रविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये
तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्धारणार्थोऽस्तु मैवम् ।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्य शब्दै-
स्तस्मिन् नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥ ५२ ॥

**तैत्तिरीये**—तैत्तिरीयशाखान्तःप्रविष्टनारायणोपनिषदि, **दह्रविद्या**—दहराकाशाख्य-हार्दस्थानविशेषावस्थितस्य दहराकाशनाम्न एव परमात्मन उपासनरूपा दह्रनाम्नी विद्या, **प्रक्रान्ता**—'अणोरणीया' नित्याद्यनुवाके प्राक्तने प्राप्तोपक्रमा, **उपरि च**—पश्चात्तने सहस्र-शीर्षानुवाकेऽपि, **प्रकटं ज्ञायते**—'पद्मकोशप्रतीकाशं हृदयम्' इत्येवं तस्यैव प्रस्ताव इति स्फुटं प्रत्यभिज्ञायते, **तस्मात्**—उपक्रान्तात् प्रकरणात्, **ऊर्ध्वानुवाकः**—पश्चात्तनः 'सहस्रशीर्षं देव'-मित्यनुवाकः, **प्रकृत....र्थोऽस्तु**—प्रक्रान्तदहरोपासनोपास्यभूतार्थविशेषनिर्णयफलो भवतु, (इति शङ्कने) **मैवम्**—एवं शङ्कनमसाधु, **तत्तद्विद्योदितैः तैः शब्दैः**—परमात्मोपासनविधानप्रवृत्त-विविधविद्याप्रकरणपठितपरब्रह्म-परतत्त्व-परज्योतिः-परमात्मादिभिः विविधैः शब्दैः, **परं**

---

[1] सिद्धया—ख. [2] 'दह्रोपास्त्युपास्यतत्त्वनिर्णयनम्' इति स्थिते छन्दऔचित्यं भाति.
[3] नैव—पा.

**पुरुषम्**—सर्वासु विद्यासु उपास्यतया विहितं परमपुरुषम्, **इह प्रत्यभिज्ञाप्य**—अस्मिन्ननुवाके स एवाऽयमिति प्रतिसंज्ञाप्य, **तस्मिन्**—सर्वविद्योपास्यत्वेन रूपेण प्रत्यभिज्ञापिते परमपुरुषरूपे तत्त्वे, **नारायणत्वं वदत्**—नारायणपदाभिधेयपरदेवताविशेषस्वरूपतामुपदिशत्, **वाक्यम्**—'सहस्रशीर्ष'मित्यनुवाकप्रविष्टं वाक्यप्रमाणतापन्नं वाक्यजातम्, **प्रक्रियातः**—प्रकरणाख्यप्रमाणापेक्षया, **अधिकबलं हि**—प्रमाणान्तरानुपमर्द्यस्वतात्पर्यविषयार्थकत्वरूपबलाधिक्यवत् खलु ॥ ५२ ॥

(373) वाक्यैः सर्वार्थतायां दहरभजनमप्यत्र भागीति सार्थ-
स्तल्लिङ्गोपेतभागो न च बहुभिरलं योद्धुमेकं [1]कृतार्थम्[1] ।
नैकस्याऽस्योपकुर्यात् प्रकरणमलसं किं च सर्वोपजीव्ये
तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥ ५३ ॥

**वाक्यैः**—'सहस्रशीर्ष'मित्यूर्ध्वानुवाकस्थैः परमात्मचिह्नबहुलैः बहुभिर्वाक्यैः (अबाधितप्रमाणभावैः) **सर्वार्थतायाम्**—अस्याऽनुवाकस्य सर्वपरविद्योपास्यदेवताविशेषनिर्धारणार्थतायां लब्धायाम्, **दहरभजनमपि**—सर्वपरविद्यान्तर्गतं दहरोपासनमपि, **अत्र भागि इति**—प्रकृते निर्णेयोपास्यकत्वेन लक्ष्यभूतमेवेति हेतोः, **तल्लि....भागः**—दहरविद्याप्रकाशनसमर्थशब्दविशेषवान् 'पद्मकोशप्रतीकाश'मित्यादिको भागः, **सार्थः**—लब्धप्रयोजनः, (अत्रापि उपास्यतत्त्वलाभात्) **कृतार्थम्**—सम्पन्नप्रयोजनम्, **एकम्**—'पद्मकोशे'त्यादिकं दहरप्रकाशनसामर्थ्यरूपलिङ्गवद्वाक्यम्, **बहुभिः**—नानाविद्यातात्पर्यकैः लब्धप्रमाणभावैर्बहुभिर्वाक्यैः सह, **योद्धुं नालम्**—बाधकभावेन स्थातुं नैव समर्थं भवेत्, **एकस्य अस्य**—तादृशवाक्यस्तोमप्रविष्टस्य असहायस्य दहरसम्बन्धिनः 'पद्मकोशे'ति वाक्यस्य, **अलसम्**—स्वसम्बन्धिनो वाक्यस्य तद्गतलिङ्गत एव स्वशेषत्वलाभदर्शनतः मन्थरप्रवृत्तिमत्, **प्रकरणम्**—दहरविद्यासम्बन्धिप्राक्तनवाक्यनिचयरूपं-प्रकरणम्, **न उपकुर्यात्**—एतद्वाक्यघटितस्य समग्रस्याऽनुवाकस्य दहरविद्याशेषत्वनिर्णयजननौपयिकं सत् सहकारि न भवेत्, **किं च**—वाक्य-प्रकरणादिगतविरोधचिन्ता परं शमिता । तत्कथा अस्तु नाम, **सर्वोपजीव्ये**—सर्वासामपि परविद्यानां अविशेषेण उपासनधर्मित्वतः एकैकाश्रयभूते, **तत्त्वे**—परतत्त्वभूते श्रीमति नारायणे, **तात्पर्यम्**—प्राधान्येन तदेकप्रतिपादनविवक्षा, **अत्र स्फुटमिति**—अस्मिन् अनुवाके अनपह्नवनीयतया अकथञ्चिन्नेयतया च स्पष्टेति हेतोः, **तत्परित्यागक्लृप्तिः**—तादृशात्यन्तस्फुटश्रुतितात्पर्यापलापप्रयत्नः, **वितथा**—न साफल्यवान् भवति ॥ ५३ ॥

---

[1] (गतार्थम्)—सा.

(374) आत्मैक्यं देवतैक्यं त्रिकसमधिगता तुल्यतैक्यं त्रयाणा-

मन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।

त्रय्यन्तैरेककण्ठैस्तदनुगुणमनु-व्याससमुख्योक्तिभिश्च

श्रीमान् नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ।। ५४ ।।

**आत्मैक्यम्**—आत्मपदाभिधेयं तत्त्वमेकमेव ; न नाना, इति, **देवतैक्यम्**—देवता-रूपोऽर्थ एक एव ; न बहुरिति, **त्रिकसमधिगता तुल्यता**—ब्रह्म-विष्णु-महेश्वरात्मकं देवतात्रयमाश्रिता न्यूनाधिकभावराहित्येन समानतैवेति, **त्रयाणाम् ऐक्यम्**—ब्रह्म-विष्णु-महेश्वराणाममेद एव ; न स्वरूपभेद इति, **अन्यत्रैश्वर्यम्**—त्रिमूर्त्युत्तीर्णे तत्त्वविशेषे एव सर्वेशितृत्वम्, इति, **इत्याद्य ...णितीः**—एवमाद्याः तीव्रतया शास्त्रार्थविचाराक्षमाणां उक्तीः, **सन्तः**—प्रमाणैः उपास्यतत्त्वनिर्णयक्षमाः पराङ्कुशनाथयामुनाद्याः, **न आद्रियन्ते**—प्रमाणानां प्रामाणिकानां च विश्वास्यतया न मन्यन्ते, **एककण्ठैः**—मिथोविरोधगन्धराहित्येन स्पष्टैकार्थकैः, **त्रय्यन्तैः**—वेदान्तवाक्यैः सर्वैः, **तद ...क्तिभिश्च**—वेदान्तवाक्यानुयायिस्वभावाभिः आप्तत्वेन सम्प्रतिपन्नानां मनु-व्यासादीनां साक्षात्कृतपरावरतत्त्वानां तत्त्वार्थनिर्णयेदम्पराभिर्वाग्भिश्च, (निश्चितोऽयमर्थः) **नः पतिः**—अनन्तजीवरूपाणां चेतनानामस्माकं शेषिभूतः स्वामी, **अखिलतनुः**—समस्तचेतनाचेतनशरीरी, **श्रीमान् नारायणः**—लक्ष्मीसमालिङ्गितः निरपायि-श्रीकः, नारायणाख्यः परदेवताविशेष एव, (स एव च) **मुक्तिदः**—मोक्षाख्यपरमपुरुषार्थ-प्रापकः, **मुक्तभोग्यः**—मुक्तैराविर्भूतस्वरूपैश्चेतनैः भोग्यतया फलभूतश्च । (परमपुरुषार्थोपाय-भूतः उपेयभूतः परमपुरुषार्थश्च) ।। ५४ ।।

—o—

## (3) अधिकरणार्थसंग्रहः ।।

**लिङ्गभूयस्त्वाधिकरणे**—तैत्तिरीयके नारायणानुवाकस्य, प्रकृतदहरविद्योपास्यविशेष-निर्धारणार्थत्वम्-आशङ्क्य,

भूयसीषु विद्यासु श्रुतान् अक्षरादीन् अनूद्य, नारायणत्वविधानात्, सर्वविद्योपास्य-विशेषनिर्धारणार्थत्वम्—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

प्राक् सर्वेदहविद्यैक्ये प्रक्रियाबलसंमते ।
लिङ्गभूयस्त्वाधिकृतौ वाक्याच्छङ्का व्यपोद्यते ॥ १४७ ॥

इति लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

—o—

## (102) पूर्वविकल्पाधिकरणम् ॥ ३-३-२० ॥

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

*(145) [1]अविधेयः स्वस्य विधौ च क्रियामयेष्टकचितादिवह्नीनाम् ।
वाक्यात् कल्प्यविधित्वात् विद्यामय्यो मनश्चिताद्याः स्युः[1] ॥ ४० ॥

[विधि-फलयोः पृथग्व्यदृष्टेः प्रकृतत्वाच्च क्रियामयस्याऽग्नेः ।
तादृग्विधाः स्युरेते मैवं वाक्याद्विधेः क्लृप्तेः ॥ ]

**विधि फलयोः पृथगदृष्टेः**—मनश्चिदाद्यग्निविषयिण्याः विधिवाचः, (तथा) तत्साध्यभूतफलस्य च इष्टकचिताख्यक्रियामयाग्निविधि-फलाभ्यां पृथक्तया अग्निरहस्यब्राह्मणे अश्रवणात्, **क्रियामयस्याग्नेः प्रकृतत्वाच्च**—इष्टकचिताख्यस्य दैहिकव्यापारसाध्यस्याग्नेः प्रकरणप्राप्तत्वात् तत्प्रकरणान्तःपातित्वाच्च मनश्चिदादीनामप्यग्नीनाम्, **एते**—मनश्चिदादयोऽप्यग्नयः, **तादृग्विधाः स्युः**—इष्टकचिताग्नितुल्यतया क्रियामयक्रत्वनुप्रविष्टा एव भवेयुः ; (इति शङ्कने) **मैवम्**—एवं इष्टकचिताग्निसादृश्येन मनश्चिदादयो नाऽभ्युपगन्तव्याः, **वाक्यात्**—उत्तरत्र विद्यमानात्, 'मनसैवाऽधीयन्त' 'ते हैते विद्याचित एवे'त्यादिवाक्यात्, **विधेः क्लृप्तेः**—मनश्चिदादिसम्बन्धिनो विधिवाक्यस्य फलश्रवणसहितस्य पृथक्कल्पनात् । अतो मनश्चिदादयः विद्यामयक्रत्वन्तःपातिन एव ॥ ४० ॥

—o—

* [अस्याः कारिकायाः क्लिष्टान्वयत्वात्, तात्पर्यानुरोधेन एतदर्थः एवं कारिकोल्लेखेन विव्रियते]

['[1] अविधेः क्रतोः स्वदेशे क्रियामयता स्यान्मनश्चिदादीनाम् ।
वाक्यात् कल्प्यविधित्वात् विद्यारूपा मनश्चिदाद्याः स्युः ॥'
इति स्याच्चेत् समन्वित इव भाति—श्री]

(2) **अधिकरणसारावलिः ॥** (श्लो. 55-56)

(375) अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोः स्याद्
बुद्ध्यात्माऽग्निर्मनश्चित्प्रभृतिरपि यथा मानसं द्वादशाहे ।
तद्वीर्यस्यातिदेशादिति न सदुदितोह्यत्र विद्यामयोऽङ्गी
श्रुत्याद्यैरेव तस्मिन्नुपकृतिसमताबोधनार्थोऽतिदेशः ॥ ५५ ॥

**मनश्चित्प्रभृतिः**—'मनश्चित्' 'वाक्चित्' इत्यादिना अग्निरहस्ये प्रतिपादितः, **अग्निः**—निधीयमानाग्न्याधारभूतोऽर्थः, **बुद्ध्यात्माऽपि**—केवलं ज्ञानैकाकारोऽपि, **द्वादशाहे**—कर्मकाण्डीये द्वादशाहाख्ये क्रतौ, **मानसं यथा**—केवलमनोव्यापारसाध्यं मानसं नाम ग्रह-(पात्रम्) इव, **पूर्व....स्थापितस्य**—ततः प्रागुपक्रान्तेन इष्टकचिताख्येन क्रियामयेनाऽग्निना (स्थण्डिलविशेषेणाग्न्याधारभूतेन) बुद्धिस्थतां प्रापितस्य, **क्रतोः**—दैहिकव्यापारसाध्य (क्रियामय) यागविशेषस्य, **अङ्गं स्यात्**—इष्टकचिताग्निस्थाने वैकल्पिकीं प्राप्तिमवलम्ब्य उपकारको भवितु-मर्हति, **तद्वीर्यस्य**—इष्टकचिताग्निगतस्य क्रतूपकरणसामर्थ्यस्य, **अतिदेशात्**—'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति वाक्येन, मनश्चिदादौ तत्साद्दश्यतः प्रतिपादनात्, (इति शङ्कने) **इति न सत्**—एवं शङ्कनं न समीचीनम्, **अत्र**—मनश्चिदाद्युपस्थापके अग्निरहस्यवाक्य एव, **विद्यामयः अङ्गी**—मनोव्यापारमात्रसाध्यज्ञानैकाकारताश्रयः क्रतुः मनश्चिदाद्युपकार्यः, **श्रुत्याद्यैरेव**—अङ्गाङ्गिभावनिर्णायकप्रमाणभूतैः 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इत्येवमादिगतश्रुति-लिङ्गादिभिरेव, **उदितः**—स्फुटप्रतिपन्नः, **अतिदेशः**—'तावान्....यावान्' इत्यनेन वाक्येन क्रियमाणः मनश्चिदादौ इष्टकचितवीर्यातिदेशः, **तस्मिन्**—मनश्चिदादौ मनः साध्येऽग्नौ, **उपकृतिसमताबोधनार्थः**—इष्टकचिताग्नौ स्वसाध्यं क्रियामयं क्रतुं प्रति सम्पाद्यः याद्दश उपकारः तत्साम्यस्य ज्ञानसाध्यं क्रतुं प्रति प्रतिपादनसिद्ध्यर्थः इति ज्ञेयम् ॥ ५५ ॥

(376) कल्प्यो ह्यत्र क्रियात्मा क्रतुरपि तदपि प्रागुपात्ताङ्गशक्त्या
वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु ।
दूरस्थाकृष्टयोगात् स्ववचनपठिताकृष्टयोगो [1]बलीया-[1]
नप्राप्तेऽर्थे विधित्वं ह्यनुवदनसमेऽप्याश्रितं तद्वदत्र ॥ ५६ ॥

**अत्र**—प्रक्रान्तेऽस्मिन् प्रकरणे, **क्रियात्मा**—दैहिकव्यापारायत्तस्वरूपलाभवान्, **क्रतु-रपि**—यागविशेषोऽपि, **कल्प्यो हि!**—कल्पनीयविध्यधीनकर्तव्यताज्ञानगोचर एव खलु, **तदपि**—

[1] लघीयान्—पा.

क्रतुविधिकल्पनमपि, **प्रागुपात्ताङ्गशक्त्या**—पूर्वप्रस्तुतेष्टकचिताग्निसम्बन्धिनामङ्गानां स्वोपकार्यार्थाविनाभावरूपसामर्थ्येनैव, **विद्यामयस्तु**—मनोव्यापारमात्रसाध्यत्वकृतविद्यैकस्वरूपः मनश्चिदादिः क्रतुस्तु, इह **वाक्यस्थैश्च**—एतत्प्रकरणोपलभ्यमानवाक्यगतशब्दोपस्थाप्यैरेव, **अनुबन्धैः**—क्रतुस्वरूपनिष्पादनोपयोगिभिरर्थैः स्तोत्र-शस्त्र-ग्रहादिभिर्मानसैः, **समुपनतः**—संनिहितशब्दोपात्तस्वरूपः सन्, **भाति**—बुद्ध्यारूढो भवति, **दूरस्थाकृष्टयोगात्**—भिन्नकाण्डगतत्वतः असंनिहितः इष्टकचिताख्यक्रियामयाङ्गोपस्थित्या आकर्षणविषयभूतो यः क्रियामयः क्रतुः तेन सह अङ्गाङ्गिभावेनाऽन्वयापेक्षया, **स्ववचन....योगः**—विद्यामयार्थजातबोधकवाक्योपात्तः उत्तरत्राकृष्टश्च यो विद्यामयः क्रतुः तेन साकमङ्गतया योगः, **बलीयान्**—शीघ्रोपस्थितिकत्वकृतबलाधिक्यवान्, **अप्राप्ते**—प्रमाणतः अज्ञातस्वरूपे, **अर्थे**—अनुष्ठेयत्वेनावश्यज्ञेये विषये, **अनुवदनसमेऽपि**—अनुवादवाक्यसदृशाकारवत्तया ज्ञायमानेऽपि वाक्यविशेषे, **विधित्वम्**—विधिकल्पनौपयिकत्वरूपं विधित्वम्, **आश्रितं हि**—कर्ममीमांसकैरभ्युपगतं खलु। शेषभक्षणाधिकरणे तृतीयपञ्चमे, **अत्र तद्वत्**—मनश्चिदादिविषयकेऽपि अनुवादस्वरूपे वाक्ये तत्रैव विधिकल्पनतः विद्यामयक्रतुनिर्वाहः चिन्तनीयः ॥ ५६ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

पूर्वविकल्पाधिकरणे—बृहदारण्यके 'मनश्चितो वाक्चितः' इत्यादिनाभिहिताः मनश्चिदादयोऽग्नयः, क्रियामयक्रत्वनुप्रवेशिनः—इत्याशङ्क्य,

'ते हैते विद्याचित एव' इति विद्यार्थचितत्ववचनात् विद्यामयक्रत्वनुप्रवेशिनः—इत्युक्तम् ॥

—o—

## (4) नयसंगतिमालिका ॥

अपवादकवाक्यस्याऽभावात् प्रकरणात् पुनः ।
शङ्का पूर्वविकल्पाख्यनयेन प्रत्युदीर्यते ॥ १४८ ॥

इति पूर्वविकल्पाधिकरणम् ॥ २० ॥

—o—

# (103) शरीरे भावाधिकरणम् ॥ ३–३–२१ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(146) कर्तृत्वादिविशिष्टो जीवो ध्येयः शरीरिताहेतोः ।
[1]नैवं[1] गुणाष्टकयुतः प्राप्यत्वात् स्याद् यथाक्रतुन्यायात् ॥ ४१ ॥

**कर्तृत्वादिविशिष्टः**—कर्तृत्वभोक्तृत्वेहामुत्रसञ्चारक्षमत्वादिगुणविशिष्टतयैव, **जीवः**—परमात्मविशेषणतया (तद्विशेष्यतया वा)चिन्तनीयः प्रत्यगात्मा, **ध्येयः**—उपासनविषयतामापादनीयः; (न तु सर्वोपाधिविनिर्मुक्तस्वरूपवत्तया), **शरीरिताहेतोः**—उपासनदशायां तस्य शरीरावस्थितत्वात्, (तदा कर्तृत्वादीनामवर्जनात्), (इति शङ्कने) **नैवम्**—एवंरीत्या शङ्कनमसाधु, **गुणाष्टकयुतः स्यात्**—सर्वोपाधिविगमावस्थाकालीनापहतपाप्मत्वादिगुणाष्टकसम्पन्नतयैव जीवः उपासनविषयीकार्यो भवेत्, (न तु संसारदशाकालीनगुणवत्तया), **यथाक्रतुन्यायात्**—'यथोपासनं फलप्राप्तिः' इति न्यायमनुरुध्य, **प्राप्यत्वात्**—आविर्भूतगुणाष्टकयुक्तस्वात्मस्वरूपस्यैव मोक्षदशायां स्वेन प्राप्तव्यत्वात् ॥ ४१ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 57–59)

(377) तत्कालाकारिणः स्यादहमिति भजने कञ्चुकस्याऽऽत्मनो धी-
रासत्तेर्मामुपास्वेत्युदितवदिति चेन्नाऽन्यथा सन्निकर्षात् ।
शुद्धो ह्यात्माऽत्र साध्यः फलमतिरविनाभाविनी बोद्धृकृत्ये
बुद्ध्यासन्नेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥ ५७ ॥

**अहमिति भजने**—'अहं ब्रह्माऽस्मी'त्येवं स्वात्मशरीरकपरमात्मोपासने, **कञ्चुकस्य आत्मनः धीः**—परमात्मशरीरभूतस्य स्वात्मनः विषयतया ग्रहणम्, **तत्कालाकारिणः स्यात्**—उपासनकालीनकर्तृत्वाद्याकारवत एव स्वस्य भवितुमर्हति; (न तु मुक्तिकालीननिरुपाधिकाकारवतः स्वस्य), **आसत्तेः**—कर्तृत्वाद्याकारस्यैव उपासनकाले संनिहितत्वात् (निरुपाधिकाकारस्य च विप्रकृष्टत्वात्), **मामुपास्वेत्युदितवत्**—प्रतर्दनं प्रति उपास्यतया मामुपास्वेति इन्द्रेण चोदितस्येन्द्रस्य उपास्याकारः त्रिशीर्षत्वाष्ट्रहन्तृत्वादिरेवेति संनिधानादवगम्यते; न मुक्ताकारः;

[1] नैव गुणाष्टकयुक्तः—ख.

तत्काले तस्याकारस्य असंनिधानेन बुद्धावनारोहात् इति यथा निश्चीयते तद्वत्, **इति चेत् न**—एवं शङ्कनं न युक्तम्, **अन्यथा संनिकर्षात्**—प्रकारान्तरतः संनिकर्षस्य शुद्धात्मगताकारे विद्यमानत्वात्, (यतः मुमुक्षोरुपासकस्य स्वप्राप्यः स्वगतः शुद्धाकारः निरन्तरं बुद्धिस्थ एव) **अत्र**—चिकीर्षिते साधनभूते उपासने, **साध्यः**—फलतया विवक्षितः, **शुद्धः आत्मा हि**—विगतसमस्तोपाधिः जीव एव खलु, (न तूपाधिमान्; तस्य उपासनात्पूर्वमेव प्राप्तत्वेन उपासनस्यैवाऽनुपयोगापत्तेः), **फलमतिः**—साधनीयार्थविषयिणी धीः परम्, **अविनाभाविनी**—यावत्फलावाप्ति साधकस्य अप्रच्युता नियमेन वर्तमाना जागर्ति, **बोद्धृकृत्ये**—उपायोपेयविषयकबोधवता पुरुषेण सम्पाद्ये **बुद्ध्यासन्ने**—अत एव सदा बुद्धेः संनिहिते फले, **अन्तरङ्गे सति**—निवर्तनीयसांसारिकाकारापेक्षया सम्पादनीये मुक्ताकारे लब्धान्तरङ्गभावे पुरोवर्तिवस्तुवत् जाग्रति सति, **तत्क्रतुन्यायसिद्धिः**—यथोपासनफलावाप्तिन्यायलाभः, **विधिनियता**—उपासनविधिनैव शुद्धात्माकारे अवर्जनीयान्वयवान् ॥ ५७ ॥

(378) कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं दृष्टभोगार्थयत्ने
स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा ।
मुक्त्यर्थे प्राप्यवस्थाप्रणिधिकथनतस्तत्क्रतुन्याय[1]वाचा[1]
[2]चिन्त्यस्य प्राप्यतार्थो गमित[2] इति कुतोऽतिप्रसङ्गादिशङ्का ॥ ५८ ॥

**इष्टभोगार्थयत्ने**—ऐहिकफलोपभोगसाधनभूतलौकिककर्मारम्भे क्रियमाणे, **कर्तुः**—कर्मारम्भप्रवृत्तस्य पुरुषस्य, **भोक्तृत्वमात्रं गणयितुमुचितम्**—अनुष्ठास्यमानकर्मजन्यफलानुभवितृत्वमेव केवलम् कर्मारम्भकाले चिन्तयितुमर्हम्, **स्वर्गाद्यर्थे**—स्वर्गाद्यामुष्मिकफलसाधनभूतयागादिकर्मारम्भे क्रियमाणे, **स्वाधिकारानुविद्धा**—अनुष्ठातृभूतस्वगतत्रैवर्णिकत्वादिरूपयागानुष्ठानौपयिकाधिकारचिन्तनसहकृता, **अन्यदेहानुगतिरपि**—यागाद्यनुष्ठानसाधनभूतशरीरातिरिक्तदुःखासम्भिन्नसुखविशेषानुभवोपयोगिशरीरावाप्त्यर्हताऽपि, **परम्**—आधिक्येन कर्तुः चिन्तनार्हा भवति, **मुक्त्यर्थे**—मोक्षसाधनत्वेन वेदान्तविहितोपासने क्रियमाणे तु **प्राप्यव....नतः**—उपासनफलावाप्तिकाले लभ्यायाः स्वकीयावस्थाया अपि ध्येयत्वस्य श्रुतौ स्पष्टमुक्तत्वात् (तदनुरोधेन) **चिन्त्यस्य प्राप्यतार्थः**—उपासितस्य अनुभाव्यतारूपोऽर्थः, **तत्क्रतुन्यायवाचा गमित इति**—'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इत्येवंरूपया 'यथोपासनं फलावाप्तिः' इत्यंशस्य सार्वत्रिकत्वज्ञापिकया श्रुतिगिरा अत्रापि विषये बुद्ध्यारोहं प्रापित इति

[1] (वाचां)—सा. [2] तद्युक्तोपास्यरूपं विषय—पा.

**हेतोः, अतिप्रसङ्गादिशङ्का कुतः ?**—अस्यार्थस्य लौकिके कर्मणि वैदिके च स्वर्गाद्यर्थे कर्मणि प्रसङ्गः इत्यादिरूपा शङ्का नैवोदेति । (अस्य न्यायस्य वेदान्तविहितोपासनप्रतिनियतत्वादिति) ॥ ५८ ॥

(379) विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्तेऽपि चिन्त्ये
प्राप्यं सर्वोपपन्नं [1]तत इह कथन[1]प्राप्यचिन्तानिषेधः ।
तस्माद्बद्धस्य चिन्तास्त्विति न कलुषितो न ह्यहंशब्दमुख्यः
प्राजापत्यात्तु वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥ ५९ ॥

**विद्याभेदेषु**—मिथोविलक्षणेषु विद्याविशेषेषु, **वेद्या....तया**—उपासनकाले चिन्तनीयानाम् उपास्यार्थसम्बन्धिनामाकाराणामपि विलक्षणत्वेन, **यावदुक्ते**—तत्र तत्र विहितमात्र एवाकारे, **चिन्त्येऽपि**—चिन्तनीयतया सिद्धेऽपि, **सर्वोपपन्नम्**—समस्तविशेषण (उभयविभूति) विशिष्टमेव ब्रह्म, **प्राप्यम्**—फलदशायां (मुक्तौ) अनुभाव्यं भवति, **ततः**—समस्तविशेषणकोटिप्रविष्टबद्धावस्थजीवरूपविशेषणयुक्तस्याऽपि ब्रह्मणः प्राप्यत्वावश्यंभावात्, (अप्राप्यस्यांशस्याभावात) **अप्राप्यचिन्तानिषेधः कथम्**—अस्मिन् अधिकरणे निर्णीयमानः, उपासकेन मुक्तिकाले अप्राप्यस्य जीवीयरूपस्य उपासनकाले चिन्तायाः प्रतिषेधः (अभावः) केन वा प्रकारेण युक्तः स्यात् ? **तस्मात्**—बद्धजीवीयाकारस्याऽपि सर्वविशेषणविशिष्टब्रह्मविशेषणतापन्नजीवविशेषणतया मुक्तावपि प्राप्यत्वात्, **बद्धस्य चिन्ता अस्तु**—बन्धकालीनसोपाधिकाकारवतोऽपि जीवस्य उपासनदशायां चिन्तनं श्रुतिसंमतमित्येवाऽभ्युपगम्यतां ; को दोषः, ? **इति न**—एवं शङ्कनमनुचितम्, **कलुषितः**—बन्धकालीनौपाधिकाकाररूपकालुष्यवान् जीवः, **'अहं'-शब्दमुख्यो न हि !**—'अहं ब्रह्माऽस्मी'त्यहङ्ग्रहोपासनविधिवाक्यीयस्य 'अहं'शब्दस्य (पुष्कलं प्रवृत्तिनिमित्तमादाय बोध्य(तावान्), मुख्योऽर्थो न भवितुमर्हति खलु, (स्वाभाविकाकारस्यैव शब्दप्रवृत्तिनिमित्तत्वात्) **प्राजापत्यात् तु वाक्यात्**—'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति छान्दोग्याष्टमप्रपाठकाम्नातात् प्रजापतेर्वाक्यादेव, (जीवात्मोपासनपरात्), **अकलुषदशया भावनीयत्वसिद्धिः**—आविर्भूतगुणाष्टकवत्तारूपनिवृत्तसर्वकालुष्यावस्थयैव जीवविशेषणतापन्नया जीवस्य उपासनकाले चिन्तनीयत्वस्य श्रुतितात्पर्यविषयतालाभो भवतीति ॥ ५९ ॥

—o—

[1] तदिह तु कथ—पा. (खलु तदिहकथं प्राप्य)—सा.

(3) **अधिकरणार्थसङ्ग्रहः ॥**

शरीरे भावाधिकरणे—उपासनदशायां जीवस्य कर्तृत्वाद्याकारेणाऽनुसन्धानम्—इत्याशङ्क्य,

अपहतपाप्मत्वाद्याकारेणैव अनुसन्धानं कर्तव्यम् ; अपहतपाप्मत्वाद्याकारस्यैव प्राप्यत्वेन, प्राप्तेश्च यथोपासनभाव्यत्वात्—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

अथाऽऽसत्तेरतिशयात् तत्कालाकारचिन्तनम् ।
उपासकेऽपोद्यतेऽथ शरीरे भावनीतितः ॥ १४९ ॥

इति शरीरे भावाधिकरणम् ॥ २१ ॥

—o—

## (104) अङ्गावबद्धाधिकरणम् ॥ ३–३–२२ ॥

(1) **शारीरकन्यायकलापसंग्रहः ॥**

(147) उद्गीथस्योपास्तिर्नियता स्वास्वेव [1]नेतरास्वमितेः[1] ।
नैवं शङ्क्यमुपास्तेः केवलमुद्गीथमात्रविषयत्वात् ॥ ४२ ॥

**उद्गीथस्योपास्तिः**—क्रत्वङ्गभूतोद्गीथाश्रिता उपासनक्रिया, **स्वास्वेव नियता**—यासु शाखासु आम्नाता तास्वेव नियमतः प्राप्ता, **न इतरासु**—तदाम्नानरहितास्वन्यासु वेदशाखासु क्रत्वङ्गभूतोद्गीथाश्रिता न भवितुमर्हति, **अमितेः**—तासु विधेरभावेन कर्तव्यत्वप्रमाया अजननात् , (इति पूर्वपक्षे प्राप्ते) **न एवं शङ्क्यम्**—अनया रीत्या न शङ्कनीयम् , **उपास्तेः**—उपासनरूपायाः चिन्तनक्रियायाः, **उद्गीथमात्रविषयत्वात्**—तत्तच्छाखीयत्वानुल्लेखेन उद्गीथसामान्यगोचरत्वात् (तत्सामान्यस्य च सर्वशाखीयक्रत्वङ्गोद्गीथेष्वप्यविशिष्टत्वात् ) ॥ ४२ ॥

—o—

[1] **नेतरास्वमितैः—क.**

## (2) अधिकरणसारावलिः ॥

(380) उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसान्निध्यगीते
मैवं सर्वाङ्गिभूतक्रतुमुखत इहाशेषसांनिध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावच्-
छब्दश्चोद्गीथमात्रं वदति न तु भिदां छागनीतिस्तु नाऽत्र ॥ ६० ॥

**असौ भजनविधिः**—'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्ययम् उद्गीथोपासनविधिः, **स्वसांनिध्यगीते उद्गीथादेर्विशेषे स्यात्**—उपासनविध्याम्नानकण्ठोक्तिमच्छाखाविशेषीयक्रत्वङ्गोद्गीथरूपे विशिष्टे विषये एव उपासनविधायको भवितुमर्हति ; न तु सर्वशाखीयोद्गीथसामान्ये, (इति प्राप्ते) **मैवम्**—एवमङ्गीकरणं न साधु, **सर्वाङ्गि....मुखतः**—कृत्स्नोद्गीथोपकार्यक्रतुद्वारा, **इह**—उद्गीथोपासनाम्नानकण्ठोक्तिमत्यां शाखायामपि, **अशेषसांनिध्यसिद्धेः**—सकलोद्गीथानां (नानाशाखीयानामपि) संनिहितत्वलाभात्, **सामान्यम्**—सामान्यत्वेनोच्यमानं सर्वमपि, **व्यक्त्यपेक्षक्रियमपि**—'निर्विशेषं न सामान्यम्' इति न्यायेन विशेषभूतां व्यक्तिमपेक्ष्यैव अनुष्ठेयतावत् यद्यपि, ('गामानये'त्युक्तौ आनयनानुष्ठानं गोविशेषाश्रितमेव खलु भवति) (तथापि), **नियमादर्शने**—विशेषमात्रपर्यवसानौपयिकप्रमाणानुपलम्भे सति, **व्रीहितावत्**—चरुसाधनभूतव्रीहित्वाश्रयस्य यस्य कस्याऽपि 'व्रीहिभिर्यजेते'त्यनेन ग्रहणमिव सामान्ये पर्यवसानवद्भवति, **शब्दश्च**—'उद्गीथमुपासीते'त्ययं विधिवाक्यरूपः शब्दश्च, **उद्गीथमात्रं वदति**—उद्गीथत्वाश्रितत्वेन रूपेण सामान्यमेव बोधयति ; **न तु भिदाम्**—न शाखाविशेषीयमुद्गीथम्, **छागनीतिस्तु**—छागपशुन्यायः परम् ('पशुना यजेते'त्यस्य सामान्यस्य 'छागस्य वपाया मेदसः' इति प्रैषानुगुण्येन छागाख्यपशुविशेषे पर्यवसानन्यायः (पू.मी.) **अत्र न**—अस्मिन् विषये नाऽवकाशं लभते ; (विशेषपर्यवसायकाभावात्) ॥ ६० ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

अङ्गावबद्धाधिकरणे—उद्गीथोपासनानि यासु शाखासु, तास्वेव तेषामनुसन्धानम्—इत्याशङ्क्य,

सामान्येन उद्गीथादिसम्बन्धितया विहितत्वात्, सर्वत्र उद्गीथादेः संनिहितत्वाच्च, सर्वशाखासु उद्गीथाद्युपासनानि सम्बध्येरन्—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

पूर्वाधिकृतिसिद्धान्तादासत्यतिशयेऽपि च ।
अङ्गावबद्धनीत्या स्यात् सर्वोद्गीथसमन्वयः ॥ १५० ॥

इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

—o—

## (105) भूमज्यायस्त्वाधिकरणम् ॥ ३–३–२३ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(148) उभयत्र फलसमुक्तेर्व्यस्तो व्यस्तसमस्तो वा ।
वैश्वानरो विचिन्त्यो नैव निषेधात् समस्त एव स्यात् ॥ ४३ ॥

**उभयत्र**—वैश्वानरविद्यासम्बन्धिनि त्रैलोक्यशरीरस्य परमात्मनो व्यस्तोपासने, (एकैकावयवशः प्रत्येकं चिन्तने) समस्तोपासने च (सकलावयवयुतस्यैव चिन्तनेऽपि) ; **फलसमुक्तेः**—'सुतं प्रसुतमासुतं कुले दृश्यते, अत्यन्नं पश्यति प्रियम् , भवत्यस्य ब्रह्मवर्चसं कुले' इत्येवमादिना (व्यस्तोपासने) ' स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति' इति च (समस्तोपासने) प्रत्येकं पृथक् फलनिर्देशाद्धेतोः, **व्यस्तो वा व्यस्तसमस्तो वा**—एकैकावयवयुक्तो वा, तथा अवयवशः अवयवसामस्त्येनेति च वा, **वैश्वानरः विचिन्त्यः**—वैश्वानरः परमात्मा उपास्यः, (इति शङ्कने) **नैव**—वैश्वानरः परमात्मा व्यस्तः व्यस्तसमस्तो वा नैवोपास्यः, **निषेधात्**—व्यस्तोपासनस्य 'मूर्धा ते व्यपतिष्यत् ' इत्यादितः अनिष्टफलप्रकटनपूर्वकं अकर्तव्यताज्ञापनात् , **समस्त एव स्यात्**—समस्तः समग्रावयवयुक्त एव वैश्वानरात्मा उपास्यो भवितुमर्हति ॥ ४३ ॥

—o—

### (2) अधिकरणसारावलिः (श्लो 61-62)

(381) व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः
कृत्स्नोपास्तौ फलोक्तिः स्तुतिरिह यदि वा कृत्स्नरूपोऽप्युपास्यः ।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिः स्तुतिः स्याद्
दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा तेन चिन्त्यः समस्तः ॥ ६१ ॥

**वैश्वानरात्मा**—वैश्वानरविद्यायां भजनीयतया प्रतिपन्नः वैश्वानराख्यः परमात्मा, **व्यस्तः चिन्तनीयः**—त्रैलोक्यात्मके शरीरे द्युमूर्धत्वादित्यचक्षुष्ट्वादिरूपेण पृथक्पृथगेव प्रत्येकश एवोपास्यः, **प्रतिनियतफलोदाहृतेः**—तत्तदवयवयुतोपासनमात्रव्यवस्थितस्यैव प्रत्येकफलस्य 'अत्यन्नं पश्यति प्रियम्; भवत्यस्य ब्रह्मवर्चसं कुले' इत्यादिना, श्रुतौ प्रत्यवयवोपासनं विभक्ततयैवोक्तत्वात्. **इह**—अस्मिन्नेवोपासनप्रकरणे, **कृत्स्नोपास्तौ फलोक्तिः**—सकलावयवयुतोपासनक्रियायां निर्वर्तितायां सम्भवतः 'सर्वेषु....अन्नमत्ति' इत्येवंरूपस्य फलस्य वाचोयुक्तिस्तु, **स्तुतिः**—एकैकशः एकैकावयवयुतोपासनपूर्तौ सत्यां सम्पद्यमानस्य फलजातस्य मिलितोक्त्या उपासनपूर्तेः प्रशंसारूपैव; (न तु पृथङ्मिलितोपासनस्य विधानतात्पर्यिका) **यदि वा**—अथवा **कृत्स्नरूपोऽपि**—द्युमूर्धत्वादिनिखिलरूपवानपि वैश्वानरात्मा, **उपास्यः**—(व्यस्तोपासनवदेव समस्तोपासनेनाऽपि) भजनीयः; न तु केवलं समस्तोपासनेन, (वैश्वानरात्मनः व्यस्तं समस्तं चोपासनं कार्यमित्यर्थः) **मैवम्**—एवंरीत्या अभ्युपगमो नैव साधुः, **व्यस्तेषु**—प्रत्येकशः क्रियमाणेषु उपासनेषु **दोषः**—सम्भवन् अनर्थः, पृथक् **अनुकथितः**—प्रतिव्यस्तांशोपासनानुपदमेव वर्णितः 'मूर्धा ते व्यपतिष्यत्' इत्यादिना, **तत्फलोक्तिः स्तुतिः स्यात्**—मूर्धाद्येकैकांशोपासनफलवचनव्यक्तिः, समग्रोपासनैकदेशस्यानुपेक्षणीयत्वप्रतिपादनाभिप्रायवती प्रशंसा भवितुमर्हति, **अष्टाकपालप्रभृतिषु च**—द्वादशकपालजातेष्ट्येकदेशभूतेष्वष्टाकपालादिषु अपृथगनुष्ठेयतया सिद्धेषु कर्मस्वपि, **तथा**—अष्टाकपालाद्येकदेशफलकीर्तनं विशिष्टैकदेशानुवादरूपम्, **दृष्टं हि !**—'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति वैश्वानरदेवताकां जातेष्टिं विधाय, अनुपदमेव 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालः' इत्यादिकं प्रत्येकमेकदेशफलोत्कीर्तनरूपं कर्मकाण्डे श्रुतमेव खलु !, **तेन**—पृथक्फलकीर्तनस्य स्तुतिपरत्वेनाऽन्यथासिद्धत्वनिश्चयेन, एकैकोपासनस्य निन्दितत्वावगमेन च (तथा) समस्तोपासनफलस्य पृथगन्ते कीर्तनेनाऽपि च, **समस्तः चिन्त्यः**—वैश्वानरात्मा समग्रत्रैलोक्यशरीरतया विशिष्ट एवोपास्यः ॥ ६१ ॥

(382) [1]सामस्त्यस्यैव[1] योगे द्रढिमवति महावाक्यतात्पर्यवृत्त्या
व्यस्तेष्वंशाननूद्य स्तुतिनियतनयादान्यपर्यं फलोक्तेः ।
नामादीनामुपास्तौ फलमवधितयाऽपेक्षितं भूमवाक्ये
नाऽप्येवं प्रत्यवायः श्रुत इति विषमोदाहृतिर्नाऽर्थसिद्ध्यै ॥ ६२ ॥

---

[1] **(सामस्त्येनैव)—सा.**

**महावाक्यतात्पर्यवृत्त्या**—विवक्षितार्थबोधनसाधनभूतेन प्रकरणपर्यालोचनावगतेन महावाक्यतात्पर्येण, **सामस्त्यस्यैव योगे**—वैश्वानरात्मसम्बन्धिनिखिलावयवस्तोमस्यैव उपासन-सम्बन्धे, **द्रढिमवति**—अचाल्यतया निश्चिते सति, **व्यस्तेषु**—अवयवस्तोमैकदेशभूतेषु उपासनविषयेषु मूर्धादिषु, **अंशाननूद्य फलोक्तेः**—एकैकशः अनुवादपूर्वकं 'सुतं प्रसुतमासुतं कुले दृश्यते' इत्यादिना प्रत्येकफलवर्णनस्य, **अंशाननूद्य स्तुतिनियतनयात्**—जातेष्टिरूपद्वादश-कपालपुरोडाशसाध्ययागैकदेशभूताष्टाकपालनवकपालाद्यनुवादपूर्वकं प्रशंसातत्परवाक्यगतं न्याय-मनुरुध्य, **आन्यपर्यम्**—शब्दवाच्यार्थतात्पर्यराहित्येन उपासनैकदेशस्याऽपि प्राशस्त्यबोधनै-दम्पर्यमेव ग्राह्यम्, (नत्वेकदेशोपासनविधानपरत्वम्), **भूमवाक्ये**—भूमविद्यासम्बन्धिनि, **नामादीनामुपास्तौ**—नाम-वाङ्-मनआदीनामुपासने कृते प्राप्यतया श्रूयमाणम्, **फलम्**—नामगोचरयावद्देशकामचारादिरूपं फलम्, **अवधितया अपेक्षितम्**—उत्तरोत्तरोपासनजन्यफलो-त्कर्षनिरूपकत्वेन उत्कर्षबोधौपयिकम्, **एवम्**—वैश्वानरविद्यायामिव, **प्रत्यवायः**—एकैकांशो-पासनस्य फलभूतः अनर्थः, **न श्रुत इति**—भूमविद्यैकदेशभूतनामाद्युपासने फलतया श्रुतौ न निर्दिष्ट इति हेतोः, **विषमोदाहृतिः**—दृष्टान्तत्तौपयिकसाम्यरहितस्य दृष्टान्तत्वेनोपादानम्, **न अर्थसिद्ध्यै**—अभिमतार्थलाभोपयोगि न भवति ॥ ६२ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

भूमज्यायस्त्वाधिकरणे—त्रैलोक्यशरीरकवैश्वानरोपासने द्युमूर्धत्वादीनां व्यस्तोपासनं, व्यस्तस्य समस्तस्य चोपासनं वा कर्तव्यम्—इत्याशङ्क्य,

व्यस्तोपासने, 'मूर्धा ते व्यपतिष्यत्' इति प्रत्यवायकथनात्, समस्तमेवोपासनम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

उद्गीथोपासनन्यायाद् वैश्वानरमतावपि ।
समस्त-व्यस्तताशङ्का भूम्नो न्यायादपोद्यते ॥ १५१ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

—o—

## (106) शब्दादिभेदाधिकरणम् ॥ ३–३–२४ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(149) फलचोदनाद्यभेदादेकत्वं स्यात् सदादिविद्यानाम् ।
नैवं संज्ञारूपप्रभेदतो भिन्नतैव स्यात् ।। ४४ ।।

**सदादिविद्यानाम्**—(ब्रह्मप्राप्त्येकफलानां) सद्विद्या-भूमविद्याप्रभृतिकानां परमात्मोपासनात्मिकानां वेदान्तोदितानां विद्यानाम्, **फल-चोदनाद्यभेदात्**—ब्रह्मप्राप्तिरूपफलस्य 'ध्यायेत्, विद्यात्, उपासीत' इत्यादिरूपाविच्छिन्नस्मृतिसन्ततिविषयकविध्यादेश्च भेदाभावात्, **एकत्वं स्यात्**—अभेद एव भवितुमर्हति, (इति पूर्वपक्षे) **नैवम्**—एवं शङ्कनमसाधु, (यतः) **संज्ञारूपप्रभेदतः**—'सद्विद्या-भूमविद्या-दहरविद्ये'त्यादिकानां विद्यानामधेयानां अनेकत्वात्, (तथा) उपास्याकारादीनां रूपाणां भिन्नत्वादपि हेतोः, **भिन्नतैव स्यात्**—(विद्यानां) नानात्वमेव सिद्ध्येत्; न त्वेकत्वमिति ।। ४४ ।।

—o—

### (2) अधिकरणसारावलिः (श्लो. 63–65) ॥

(383) सर्वासु ब्रह्म वेद्यं फलमपि खलु तद् ब्रह्मविद्येति चाख्या
ध्यानाद्युक्त्येकलक्ष्ये विधिरपि भजने सर्वविद्यैक्यमित्थम् ।
तन्नाऽऽख्यारूपभेदात् तदुपहितविधौ तेन वैशिष्ट्यसिद्धे-
र्मिश्रं मध्वादिविद्याफलमिह च पृथक् काम्यविद्यासु चैवम् ॥ ६३ ॥

**सर्वासु**—वेदान्तोदितास्वखिलासु विद्यासु, **ब्रह्म**—ब्रह्माख्यमेकमेव वस्तु, **वेद्यम्**—उपास्यभूतम्, **फलमपि तत् खलु**—विद्यानिष्पत्तेः प्रयोजनभूतं साध्यं वस्त्वपि ब्रह्मैकमेव खलु, **आख्या च**—अभिधायकः शब्दोऽपि, **ब्रह्मविद्येति**—'ब्रह्मविद्या' इति अविषमाकार एव, **ध्यानाद्युक्त्येकलक्ष्ये**—'ध्यायेत्, उपासीत, विद्यात्,' इत्यादिविविधानुपूर्वीकाणां धातुघटितानां वाचामपि अवैषम्येण तात्पर्यविषयभूते, **भजने**—अव्यवहितविजातीयप्रत्ययान्तररहितनिरन्तरस्मृतिसन्ततिरूपेऽर्थे, **विधिरपि**—विधायकः शब्दोऽप्येक एव, (अतः संयोग-रूप-चोदनाऽऽख्यानामविशेषः प्रतिपादितः) **इत्थम्**—संयोगादीनामविशेषायत्तम्, **ऐक्यम्**—तत्र तत्र प्रतिपन्नानां सर्वासामपि विद्यानामेकत्वमेव, (इति शङ्कने) **तन्न**—विद्यानामेकत्वमिति यच्छङ्कितं तत् न साधु,

**आख्या-रूपभेदात्**—'सद्विद्या, भूमविद्या' इत्यादितत्तद्विद्याविशेषसंज्ञानाम् (तथा) वेद्याकाराख्यस्य विद्यासम्बन्धिनो रूपस्य च भिन्नत्वात्, **तदुपहितविधौ**—तत्तद्गुणविशेषोपधानवतो वेद्यस्य वेदने विधीयमाने सति, **तेन**—उपधीयमानेन वेद्यविशेषणभूतेन तेन तेन गुणेन, **वैशिष्ट्यसिद्धेः**—विधिस्वरूपे विशेषस्य वैलक्षण्यस्य लाभात्, **इह**—वेदान्तोदितासु विविधासु विद्यासु, **मध्वादिविद्याफलं मिश्रं पृथक् च**—मधुविद्यादिरूपासु कासुचन विद्यासु विद्यासाध्यं फलं फलान्तरसम्भिन्नं अन्यासु कासुचित् तदसम्भिन्नं चेति यथायथं फलसंयोगेऽपि भेदोऽवर्जनीयः। (अतः संयोगरूपचोदनाऽऽख्यासु सर्वास्वपि भेद उक्तः) **एवम्**—मोक्षैकफलासु ब्रह्मविद्यास्विव, **काम्यविद्यासु च**—मोक्षेतरफलासु दृष्टिविद्याप्रभृतिकास्वपि संयोगादिविशेषकृतो विशेषः ऊह्य इति ॥ ६३ ॥

(384) नाना शब्दादिभेदादिति कथमवदत् सूत्रकृच्छब्दसाम्ये
न ह्येते याग-दानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेद[1]द्रढिम्ने[1]
ज्ञानं ये चाऽविधेयं करणमिति जगुस्तन्निरासेऽभिसन्धिः ॥ ६४ ॥

**शब्दसाम्ये**—उपासनविधायिनां 'ध्यायीत, उपासीत, विद्यात्,' इत्यादिशब्दानां पर्यायत्वनिबन्धने अभेदे स्फुटे सति, **सूत्रकृत्**—शारीरकसूत्रप्रणेता बादरायणः, **'नाना शब्दादिभेदात्' इति कथमवदत्**—उक्तेन सूत्रेण शब्दादीनां भेदं कथं वा उक्तवान्, ? **एते**—ध्यानोपासनवेदनादिशब्दाभिधेया अर्थाः, **याग-दानादय इव**—'देवतोद्देशेन द्रव्यत्यागो यागः, स्वस्वत्वापाकरणपूर्वकं परस्वत्वापादनं दानम्, त्यागपूर्वकदेशविशेषविशिष्टद्रव्यप्रक्षेपो होमः' इत्येवं विविक्तस्वरूपा यागदानप्रभृतयोऽर्था इव, **न हि भिदुराः**—न खलु मिथो विलक्षणस्वरूपा भवन्ति, **भक्तिविश्रान्तिसिद्धेः**—ध्यानोपासनाद्यर्थानां 'वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ । सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति' इत्युक्तया रीत्या भक्तौ पर्यवसानस्यैव सिद्धान्तसिद्धत्वात्, (इति शङ्कने) **सत्यम्**—किंचिदंशोऽङ्गीकार्य एवाऽयमाक्षेपः, **अयं शब्दस्य भेदस्तु**—सूत्रोक्तः शब्दभेदः परम्, **रूपभेदद्रढिम्ने**—विद्याभेदापादकरूपभेदावगतिदार्ढ्यार्थम्, **उपचरितः**—अमुख्यया वृत्त्या प्रयुक्तः, (शब्दभेदपदेन पूर्वकाण्डोक्तशब्दान्तरपर्यायेण अत्र रूपभेद एव विवक्षित इति) **ये च**—ये पुनर्द्वैतवादिनः, **अविधेयं ज्ञानम्**—विधातुमनर्हं वाक्याधीनसिद्धिमत् तत्त्वमस्यादिमहावाक्यार्थज्ञानमेव, **करणमिति**

[1] द्रढिम्ना—दा.

**जगुः**—मोक्षसाधनमित्युद्घोषितवन्तः, **तन्निरासे**—तस्य सर्वथा शास्त्रतात्पर्याविषयताख्यापने, **अभिसन्धिः**—परमं तात्पर्यमिति । (विधेयभूतज्ञानस्यैव विद्योपासनादिनाम्नः मोक्षसाधनत्वात्) ॥ ६४ ॥

(385) यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्-

न्यासोपासे विभक्ते यजन-हवनवच्छब्दभेदादभाक्तात् ।
आख्या-रूपादिभेदः श्रुत इतरसमः किं च भिन्नोऽधिकारः
शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ ६५ ॥

**यद्वा**—अथवा, (व्याख्यानप्रकारान्तरमेतत्) **शब्दादिभेदादिति तु कथयता**—(पदान्तरं विहाय) 'शब्दादिभेदात्' इतीममेव विशिष्टं शब्दं प्रयुञ्जानेन, **सूत्रकारेण**—बादरायणेन, **अभाक्तात्**—शब्दभेदपदमुख्यार्थभूतात्, **शब्दभेदात्**—पर्यायत्वरहितविलक्षणशब्दात्मकात् (पूर्वकाण्डे शब्दान्तरपदेनाऽभिहितात्) श्रुत्यादिषु विद्यमानात् न्यासोपासनविधिरूपात् 'शरणं व्रज, भजस्व' इत्यादिकात्, (**शब्दभेदात्**) **यजन-हवनवत्**—यजतिजुहोतिभ्यां भिन्नशब्दाभ्यां याग-होमाविव, **न्यासोपासे**—ब्रह्मप्राप्त्येकफले प्रपत्तिः भक्तिश्चेतीमे उभे अपि विद्ये, **सम्यक् विभक्ते**—पृथक्तया स्पष्टं प्रतिपादिते, **आख्यारूपादिभेदः**—प्रपत्तिरिति भक्तिरिति च द्वयोः संज्ञाभेदः, मोक्षार्थोपायस्थाननिविष्टत्वं सत्यत्व-ज्ञानत्वानन्दत्वादिकं चेति द्वयोः रूपभेदः (एवमेवावान्तरभेदाद्यपि) शीघ्र-विलम्बितप्राप्त्यादि चेति फले भेदः, **श्रुतः**—विधायकप्रकरणेषु प्रतिपन्नः सर्वोऽपि, **इतरसमः**—कर्मकाण्डीययागहोमदानादिष्विव अत्रापि समानः, **किं च**—इतोऽधिकं किंचिदस्ति, **अधिकारः**—मोक्षार्थं भक्तौ प्रवर्तमानस्य प्रपत्तौ प्रवर्तमानस्य च चेतनस्य प्रवृत्त्यर्हतापादको धर्मः, **शीघ्रप्राप्त्यादिभिः भिन्नः स्यात्**—एतद्देहावसान एवेति जन्मान्तरावाप्तिकृतविलम्बासहिष्णुत्व-तत्सहिष्णुत्वादिकृतः, विलक्षण एव भवेत्, **इति च**—एवं रीत्यैव च, **मधूपासनादौ**—मधुविद्यादृष्टवस्वादिशरीरकपरमात्मोपासनतादृशभगवत्प्रपत्त्योरपि, **व्यवस्थाम्**—सूत्रकारविवक्षितां वस्वादिपदप्राप्तिपूर्वकपरमात्मप्राप्तिसाक्षाद्भगवत्प्राप्तिभ्यां प्रतिनियतस्वरूपताम्, **जगुः**—सूत्राशयवर्णनपराः आचार्याः स्फुटीकृतवन्तः ॥ ६५ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

शब्दादिभेदाधिकरणे—सद्विद्या-दहरविद्यादीनाम् ऐक्यम्—आशङ्क्य,

शब्दादिभेदात् विद्याभेदः—इत्युक्तम् ।

—o—

(4) नयसङ्गतिमालिका ॥

नानाशब्दाधिकरणे वैश्वानरनयक्रमात् ।
सदक्षिहार्दादिधियामैक्यशङ्का व्यपोद्यते ॥ १५२ ॥

इति शब्दादिभेदाधिकरणम् ॥

—o—

## (107) विकल्पाधिकरणम् ॥ ३-३-२५ ॥

(1) शारीरकन्यायकलापसंग्रहः ॥

(150) ब्रह्मानुभूत्यपेक्षाबाहुल्यात् स्यात् सदादिविद्यानाम् ।
एकत्रैव समुच्चितिरिति नैव फलस्य [1]सर्वथैवैक्यात्[1] ॥ ४५ ॥

**सदादिविद्यानाम्**—(निरतिशयानन्दब्रह्मानुभवैकफलानामपि) सद्विद्यादिपदाभिधेयानाम् औपनिषदविद्यानाम्, **ब्रह्मा....स्यात्**—ब्रह्मानुभवविषयकेच्छाभूयस्त्वात् (तद्विषयभूतानुभवभूयस्त्वसम्पादनाय) **एकत्रैव**—(मोक्षार्थोपायानुष्ठातरि) एकस्मिन्नेव पुरुषेऽपि, **समुच्चितिः स्यात्**—विद्यान्तरसहभावेन तदन्यविद्यानुष्ठानम् (समुच्चितानुष्ठानम्) भवितुमर्हति, (इति पूर्वपक्षे) **नैव**—एकेनैव पुरुषेण समुच्चित्य नानाविद्यानुष्ठानम्, सर्वथा न युज्यते, **फलस्य सर्वथैव ऐक्यात्**—ब्रह्मानुभवरूपफलस्य अत्यन्तमविलक्षणत्वात् ॥ ४५ ॥

—o—

(2) अधिकरणसारावलिः ॥ (श्लो. 66-67)

(386) ज्योतिष्टोमाग्निहोत्रप्रभृतिवदधिकानन्दसिद्ध्यै समुच्चि-
त्यर्हाः स्युर्ब्रह्मविद्या न च भजनविधिः कश्चिदेकं प्रति स्यात् ।
कर्तुं ताः कालभेदात् क्षममिति न मिथो वासनास्थैर्यबाधात्
सम्पूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥ ६६ ॥

**ज्योति....वत्**—कर्मकाण्डे विहितानि स्वर्गैकफलानि ज्योतिष्टोमाग्निहोत्रादिविभिन्नाख्या-स्वरूपाणि विविधानि कर्माणीव, **ब्रह्मविद्याः**—ब्रह्मप्राप्त्येकफलाः विभिन्नाख्या-स्वरूपादि-

---

[1] सर्वैक्यात्—ग.

मत्योऽपि नानाविद्याः, **अधिकानन्दसिद्ध्यै**—आनन्दाधिक्यलाभमुद्दिश्य, (स्वर्गफलगताधिक्यायेव) **समुच्चित्यर्हाः स्युः**—एकैकस्मिन्नपि पुरुषे समुच्चयेन अनुष्ठानयोग्या भवेयुः, **कश्चित् भजनविधिः**—यः कोऽपि उपासनात्मकब्रह्मविद्याविधिः, **एकं प्रति न च स्यात्**—यं कंचिदेकं पुरुषमुद्दिश्य नैव भवितुमर्हति, (शास्त्रस्य लोकहिताय प्रवृत्तत्वात्) **ताः**—नानाभूता अपि विद्याः, (कर्म) **कालभेदात्**—भिन्न-भिन्न कालविशेषमवलम्ब्य, **कर्तुम्**—अनुष्ठितुम्, (उपासितुम्) **क्षमम्**—साध्यं भवति, **इति न**—एवं शङ्कनं न साधु, **मिथः**—परस्परम् (विद्याभिः) **वासनास्थैर्यबाधात्**—एकैकविद्यासम्बन्धिचिन्तनीयार्थविशेषविषयकसंस्कारदार्ढ्यस्य प्रतिघातात्, (उपासनशैथिल्यप्रसङ्गेन अकृतसाम्यापत्तेः) **इह**—मोक्षोपायविधायिनि वेदान्ते, **सम्पूर्णब्रह्मलब्ध्यै**—परिपूर्णब्रह्मानुभवरूपं फलमुद्दिश्य, **प्रायणान्ते समाधौ विधिः**—यावदायुषम् अहरहनुष्ठेयनिरन्तरपरब्रह्मोपासनरूपसमाधिविषयको विधिः, **पृथक् च**—प्रत्येकमेव, (एकैकस्य पुरुषस्यैकैकविद्याविषयक एवेति, न समुच्चितानुष्ठाने शास्त्रतात्पर्यविषयतेति विकल्पितानुष्ठानार्हा एव विद्याः ॥ ६६ ॥

(387) रूपादीनां विशेषैर्ननु परभजनं नैकरूपं विभक्तं
सामग्रीभेदतस्तत्फलमपि विषमं [1]संमतं न्यायतः[1] स्यात् ।
न स्यात् सर्वासु विद्यास्वपि हि ! फलतया वक्ष्यते भोगसाम्यं
प्राप्यैक्यं च प्रसिद्धं बहुसरणिजुषां लोकतो वेदतश्च ॥ ६७ ॥

**रूपादीनां विशेषैः**—रूप-संयोग-चोदनाऽऽख्यानां भेदैः **परभजनम्**—परब्रह्मोपासनम्, **नैकरूपम्**—नानास्वरूपतया, **विभक्तं ननु**—पृथग्भूतमेव विहितं खलु, **सामग्रीभेदतः**—कार्यजनकस्य कारणस्तोमस्य वैलक्षण्ये, **तत्फलमपि**—भिन्नसामग्रीसाध्यं कार्यमपि, **विषमम्**—विलक्षणमित्येतत्, **न्यायतः संमतं स्यात्**—'कारणभेदे कार्यभेदः' इति न्यायाधीनाभ्युपगन्तव्यतावत् भवेत्, (इति विद्यारूपोपायभेदः अवश्यं प्राप्यं फलं भिनत्ति। अतः फलैक्यं पूर्वोक्तं न घटते इति शङ्कने) **न स्यात्**—उक्तमेतन्न सिध्यति, **हि**—यतः, **सर्वासु विद्यास्वपि**—मोक्षार्थमनुष्ठीयमानासु निखिलास्वपि वेदान्तोदितासु विद्यासु, **भोगसाम्यम्**—सर्वांशेऽप्यविषमः ब्रह्मानन्दानुभवरूपो मुक्तभोग एव, **फलतया वक्ष्यते**—'परमं साम्यमुपैति' इति श्रुतिसिद्धः शारीरकेऽपि 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू. 4-4-21) इत्युत्तरत्र प्रतिपादयिष्यते, **बहुसरणिजुषाम्**—विविधतत्तत्पथमाश्रित्य गन्तॄणामपि नाना

---

[1] (संमतन्यायतः)—या.

जनानाम्, **प्राप्यैक्यं च**—एकमात्रगम्यस्थानवत्त्वम्, **लोकतो वेदतश्च प्रसिद्धम्**—लोके नदी-ग्रामारामादिगन्तृषु, वेदेऽपि विविधेष्टापूर्ताद्यवलम्बिषु काम्यफलविशेषप्रेप्सुषु च (विषयभूतेषु) लौकिकास्तिकजनावगतमिति (न फलैक्यविरोधः) ।। ६७ ।।

—o—

### (3) अधिकरणार्थसङ्ग्रहः ।।

विकल्पाधिकरणे—फलविशेषार्थं विद्यानां समुच्चयः—इत्याशङ्क्य,
ब्रह्मप्राप्तिरूपफले विशेषाभावात्, विद्यानां विकल्प एव—इत्युक्तम् ।।

—o—

### (4) नयसङ्गतिमालिका ।।

विद्याभेदव्यवस्थायामेकस्यैवाऽधिकारिणः ।
समुच्चयस्याऽपवादः विकल्पनियमो यथा ।। १५३ ।।

इति विकल्पाधिकरणम् ।। २५ ।।

—o—

## (108) यथाश्रयभावाधिकरणम् ।। ३-३-२६ ।।

### (1) शारीरकन्यायकलापसङ्ग्रहः ।।

(151) उद्गीथाद्यनु[1]चिन्तन[1]नियमाभावस्तु नैव पूर्वोक्तः ।
अफलत्वतः स्ववाक्ये नैव तथाऽऽश्रयविधेः [2]फलित्वाच्च[2] ।। ४६ ।।

**पूर्वोक्तः**—तन्निर्धारणानियमाधिकरणे प्रतिपादितः, **उद्गीथा....भावस्तु**—कर्माङ्गभूतोद्गीथाद्युपासनस्य नियमेन सर्वक्रतुषु उपादेयत्वानियमरूपोऽर्थस्तु, **नैव**—न युज्यत एव, **स्ववाक्ये**—'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यस्मिन् उद्गीथोपासनविधिवाक्ये, **अफलत्वतः**—('गोदोहनेन प्रणयेत् पशुकामस्य' इत्यस्मिन् गोदोहनवाक्ये इव) वीर्यवत्तरत्वरूपस्योपासनफलस्य अश्रवणात् (काम्यत्वनिर्णायकसामग्र्यभावेन नित्यताया एव अबाधेन निश्चयात्, नित्यस्य च कर्मणः सर्वत्रोपादेयत्वात्—इति शङ्कने) **नैव तथा**—नैवोचितं तथा शङ्कनम्, **आश्रयविधेः**

---

[1] चिन्ता—ग. [2] फलत्वाच्च—क.

**फलित्वाच्च**—'यदेव विद्यये'ति वाक्यावगतवीर्यवत्तरत्वरूपफलसाधनभूता विद्या, किमाश्रित्य वीर्यवत्तरत्वं जनयतीत्याकाङ्क्षायाम्, 'उद्गीथमुपासीत' इति उपासनविषयभूतमुद्गीथमाश्रित्येति अवगमेन, अस्यैवाऽऽश्रयविधेः वीर्यवत्तरत्वरूपफलसम्बन्धसत्त्वात् उक्तार्थे एव दार्ढ्यात् ॥ ४६ ॥

—o—

(2) **अधिकरणसारावलिः** ॥ (श्लो. 68-69)

(388) तत्तद्विद्यासु तादृक्फलतरतमतां वारयित्वा प्रसङ्गात्
प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
मा भूदुक्तं स्ववाक्ये फलमिह तु न सा पर्णमय्यादिनीतिः
स्पष्टा खल्वत्र विद्या फलकरणतया वर्तमानोक्तितोऽपि ॥ ६८ ॥

**तत्तद्विद्यासु**—वेदान्तैः मोक्षोपायतया विहितासु सद्विद्यादिकासु ब्रह्मोपासनासु, **तादृक्फलतरतमताम्**—अनादिकालप्राप्तभगवन्निग्रहनिवृत्तिपूर्वकस्वभावप्राप्तनिरवधिकातिशयब्रह्मानन्दानुभवलाभरूपे फले (सर्वेषामपि विदुषाम्) विषमताशङ्काम्, **वारयित्वा**—विकल्पाधिकरणेन परिहृत्य, (यस्याः कस्याश्चिदेकस्या एव विद्याया अनुष्ठानेन मोक्षावाप्तिनिर्णयतः) **प्रसङ्गात्**—विद्याफलविचारकृतात् प्रस्तावात्, (प्रस्तावं व्याजीकृत्य) **अथ**—तत्पश्चात्तनेऽस्मिन् यथाश्रयभावाधिकरणे, **प्रागुक्तो....फलम्**—पूर्वं तन्निर्धारणानियमाधिकरणे प्रतिपादितमपि सत्, उद्गीथोपासनफलम्, (क्रत्वनुष्ठानप्रवृत्तपुरुषकामनानिर्वर्तनप्रयुक्तपुरुषार्थरूपत्वम्) **पुनः**—द्वितीयवारमपि, **आक्षिप्य**—क्रतुस्वरूपनिर्वृत्त्यायत्तक्रत्वर्थरूपत्वशङ्कनेन पर्यनुयोज्य, **गाढीकरोति**—आक्षेपालग्नकत्वप्रतिपादनतः दृढीकरोति, **इह स्ववाक्ये**—उद्गीथोपासनविधौ ('ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यस्मिन् विधिवाक्ये) **फलम् उक्तं मा भूत्**—'फलं किञ्चित् (वीर्यवत्तरत्वम्) श्रुतं न भवति' इत्येतत्, पर्णतावाक्यसादृश्यापादकमस्तु नाम, (अथापि) **सा पर्णमय्यादिनीतिस्तु न**—'यस्य पर्णमयी जुहूर्भवति ; न सपापं श्लोकं शृणोति' इत्यत्र यं न्यायमाश्रित्य 'जुहूपर्णतायाः क्रत्वर्थता, अपापश्लोकश्रवणरूपफलस्य जुह्वां पलाशप्रकृतिकत्वप्राशस्त्यमात्रपरता' इत्यादिनिर्वाहः क्रियते सः न्यायस्तु, (पू.मी 4-3-1) उद्गीथोपासनवाक्यविषये नैव प्रवर्तते, **अत्र**—उद्गीथोपासनप्रकरणे, **विद्या**—उद्गीथाश्रिता उपासना, **फलकरणतया**—वीर्यवत्तरत्वरूपं फलं प्रति करणत्वेन न तु क्रतुं प्रति, **स्पष्टा खलु**—'यदेव विद्यया करोति' इति वाक्ये 'विद्यया' इति तृतीयाविभक्तिरूपया श्रुत्या करणत्वेनाऽङ्गत्वग्राहिकया असन्दिग्धप्रतिपत्तिभागिनी खलु, (तथा) **वर्तमानोक्तितोऽपि**—'यस्य पर्णमयी जुहूर्भवति' इति वाक्य

इव अत्राऽपि, 'यदेव विद्यया करोति' इति (कुर्यादिति विधिरूपं विहाय) लट्लकारेण यत् वर्तमानकालिकत्वं व्यपदिष्टं तत् ज्ञापकत्वेनाऽऽऽश्रित्याऽपि, पर्णमयीन्यायानुसरणं नाऽत्र सम्भवतीत्यर्थः ॥ ६८ ॥

(389) तादर्थ्यं नाऽत्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्राद्
विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थिप्रसङ्गे ।
तारे सोपासनेऽस्तु स्तवनमनुगमात् तावता सा तु नाङ्गं
प्राग् वक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ६९ ॥

**अत्र**—उद्गीथोपासनविधिवाक्ये 'उद्गीथमुपासीते'त्यत्र, **कर्मश्रुतिः**—'उद्गीथम्' इति द्वितीयाश्रुतिः, **तादर्थ्यम्**—तदुद्देश्यकत्व-तदुपकारकत्वापरपर्यायम् अङ्गत्वम्, **न अवगमयेत्**—नैव बोधयितुं शक्नुयात्, **आश्रयालम्बमात्रात्**—उपासनस्य उद्गीथाख्याश्रयावलम्बनस्यैव केवलं द्वितीयया अवगमात्, **विद्याहानौ च**—उद्गातृकर्तृकस्य उद्गीथप्रणवैक्यविज्ञानरूपवेदनस्य अभावरूपे दुरुद्गीथे अशक्त्यादिना समापतिते च, **तत्फलार्थिप्रसङ्गे**—उद्गीथोपासनफलभूतक्रतुवीर्यवत्तरत्वरूपफलकामिनः कर्माधिकारे प्रस्तुते, **प्रतिविधिवचनम्**—दुरुद्गीथप्रयुक्तदोषप्रहाणतः प्रकारान्तरेण कामितफलसम्पादनोपायकथनम् (होतृगतोद्गीथप्रणवैक्यविज्ञानतः तत्समाधानप्रदर्शनम्) **युक्तम्**—न्याय्यमेव खलु, **अनुगमात्**—'तेनेयं त्रयी विद्या वर्तते' इत्यादिना वेदत्रयेऽपि ओमित्यस्य आश्रवण-शंसनोद्गानेष्वनुवृत्तान्वयोक्तितः, **सोपासने तारे**—उपासनरूपवेदनसम्बद्धे प्रणवे, **स्तवनमस्तु**—प्राशस्त्यं प्रतिपादितं भवतु नाम, **तावता**—प्रणवस्य सोपासनस्य प्रशंसनमात्रेण, **सा तु**—प्रणवोपासना परम्, **न अङ्गम्**—क्रत्वङ्गत्वेन नैव सिद्धा भवति, (पुरुषार्थभूततद्वर्णनस्य प्रशंसाफलित्वे विरोधाभावात्) **प्राक्-वक्तव्यस्य**—तन्निर्धारणानियमाधिकरणे एव उपपाद्यस्य क्रत्वङ्गत्वाभावांशस्य, **हित्वा**—तत्स्थानगतत्वं विहाय, **उपरि**—पादान्ते अत्र, **इदं वचः**—क्रतुद्गीथोपासनयोः अङ्गाङ्गिभावाभाववर्णनमिदम्, **स्थापनीयप्रसक्त्यै**—तुर्ये पादे (अङ्गपादे) विद्यां प्रति अङ्गाङ्गिभावप्रतिपादनस्य प्रसङ्गाख्यसङ्गतिसम्पत्तये एव (अतः अत्र स्थाने चिन्तनं स्थाने एव) ॥ ६९ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

**यथाश्रयभावाधिकरणे—पूर्वप्रकृत** एव उद्गीथादिविद्यानाम् अनुष्ठानानियमः, कैश्चित् लिङ्गैः आक्षिप्य समाहितः ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

उद्गीथोपास्तिनियमो विकल्पनियमो यथा ।
इति शङ्काऽपोद्यतेऽत्र यथाश्रयनये पुनः ॥ १५४ ॥

एवं तृतीयाध्यायेऽस्मिन् तृतीयचरणेऽपि च ।
षड्विंशत्यधिकाराणां सङ्गतिः समुदाहृता ॥ १५५ ॥

इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

—o—

## (108) प्रत्यधिकरणम् अर्थसङ्क्षेपः ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(152) विद्यैक्यमुद्गीथभिदा प्राणोपास्त्येकता तथा ।
आनन्दादिसमाहारः प्राणवासस्त्वचोदनम् ॥ ४७ ॥

**विद्यैक्यम्**—विद्याविधिस्वरूपाद्यविशेषे सति दहरवैश्वानरादिनामकानां विद्यानां सर्ववेदान्तगतानामपि अभेदः, **उद्गीथभिदा**—छान्दोग्य-वाजसनेयकगतयोः उद्गीथविद्ययोः आख्याया अभेदेऽपि स्वरूपतो भेदः, **तथा प्राणोपास्त्येकता**—छान्दोग्य-वाजसनेयकगतयोः प्राणविद्ययोः प्रकारभेदकृतः अभेदः, **आनन्दादिसमाहारः**—ब्रह्मसम्बन्धिनाम् आनन्दादीनां गुणानाम् सर्वासु विद्यासूपसंहारः, **प्राणवासस्त्वचोदनम्**—आचमनीयानामपां प्राणं प्रति वासस्त्वानुसन्धानविधिः (न आचमनस्येति), ॥ ४७ ॥

(153) शाण्डिल्यैक्यं व्यवस्था च [1]नाम्नोर्द्युव्यापनस्य च[1] ।
विभेदः पुरुषोपास्तेर्वेधाद्यध्ययनाङ्गता ॥ ४८ ॥

**शाण्डिल्यैक्यम्**—अग्निरहस्य-बृहदारण्यकोक्तयोः शाण्डिल्यविद्ययोरैक्यम्, **व्यवस्था च नाम्नोः**—उपासनाधिष्ठानभूतादित्यमण्डलाक्षिरूपस्थानभेदकृतः 'अहः अहम्' इति नाम्नोर्व्यवस्थया विद्याभेदः, **द्युव्यापनस्य च व्यवस्था**—शाखाविशेषश्रुतस्य द्युलोकव्याप्ति-सम्भृत्यादेः ब्रह्मगुणस्य सर्वासु विद्यासु अनुपसंहारश्च, **पुरुषोपास्तेः विभेदः**—तैत्तिरीय-छान्दोग्ययोः

[1] नामाद्युद्व्यापनस्य च—क. नातो द्युव्यापनस्य च—ग.

श्रुतस्य पुरुषोपासनस्य मिथोविभिन्नस्वरूपता, **वेधाद्यध्ययनाङ्गता**—'शुक्रं प्रविध्ये'त्यादेः वेधादि-मन्त्रस्य विद्याविधायकवेदभागाध्ययनोपकारकत्वमेव ; न तूपासनोपकारकत्वमिति निर्णयः ॥४८॥

(154) हानाद्यन्योन्यसम्बन्धः [1]कालस्तच्चिन्तनाविधेः[1] ।
साधारण्यं सरण्याश्च तथाऽस्थूलादिसाम्यता ॥ ४९ ॥

**हानाद्यन्योन्यसम्बन्धः**—यत्र सुकृत-दुष्कृतयोः हानमात्रं श्रुतं उपायनमात्रं वा तत्रोभयत्राऽपि हानोपायनयोरुभयोरपि मिथोऽविनाभावरूपः सम्बन्धः, **तच्चिन्तनाविधेः कालः**—विदुषः सुकृत-दुष्कृत-हानोपायनचिन्तनविधानस्य देहादुत्क्रमणकालावच्छिन्नतद्विषयकता, **सरण्याः साधारण्यं च**—विदुषः अर्चिरादिमार्गः इत्यस्य वेदान्तोदितसर्वविद्यानिष्ठान् प्रत्यपि अविशिष्टता, **तथा अस्थूलादिसाम्यता**—अक्षरपरब्रह्मविद्याम्नातानां ब्रह्मगुणानामस्थूलत्वादीनां वेदान्तोदितासु सर्वविद्यासूपसंहारः ॥ ४९ ॥

(155) प्राणाशनायाद्येकत्वं ततश्च दहरैकता ।
उद्गीथोपास्त्यनियमो [2]गुण्यावृत्त्यनुचिन्तनम् [2] ॥ ५० ॥

**प्राणाशनायाद्येकत्वम्**—उषस्त-कहोलप्रश्नप्रतिवचनयोः 'यः प्राणेन प्राणिति' 'योऽशनाया-पिपासे' इति द्विविधयोरपि प्रतिपन्नस्य उपासनस्य अभेदः, **ततश्च**—तदनन्तराधिकरणे च, **दहरैकता**—छान्दोग्य-वाजसनेयोक्तयोर्दहरविद्ययोः अभेदः, **उद्गीथोपास्त्यनियमः**—कर्माङ्गाश्रितोद्गीथाद्युपासनस्य क्रतुषु उपादानानैयत्यम्, **गुण्यावृत्त्यनुचिन्तनम्**—सर्वेष्वपि ब्रह्मगुणानां चिन्तनेषु गुणिभूतस्य ब्रह्मणोऽपि चिन्तनावृत्तिः, ॥ ५० ॥

(156) सर्वोपास्यविनिर्णीतिर्विद्यात्वं च मनश्चिताम् ।
जीवस्य [3]गुणितो[3]पास्तिः सर्वत्रोद्गीथचिन्तनम् ॥ ५१ ॥

**सर्वोपास्यविनिर्णीतिः**—तैत्तिरीयकगतस्य 'सहस्रशीर्ष'मित्याद्यनुवाकस्य वेदान्तोदित-सर्वविद्योपास्यतत्त्वविशेषनिर्णायकत्वम्, **मनश्चितां विद्यात्वं च**—'मनश्चितो वाक्चितः प्राणचितः' इत्येवमादिना अग्निरहस्यब्राह्मणोक्तानामग्नीनां विद्यामयक्रत्वनुप्रवेश एव ; न तु क्रियामयक्रत्वनुप्रवेश इति निर्णयः, **जीवस्य गुणितोपास्तिः**—जीवात्मन उपासने कार्ये जीवसम्बन्धिनां निरुपाधिकानां गुणानामेव मुक्तिकालीनानामुपास्यता ; न तु बन्धकालीनानाम् (यथोपासनफलप्राप्तेः चिन्तनीयत्वात्) इति निर्णयः, **सर्वत्रोद्गीथचिन्तनम्**—उद्गीथाश्रितोपासनस्य उद्गीथवत्सर्वक्रत्वन्वयिता ॥ ५१ ॥

---

[1] कालस्तच्चिन्तनं विधिः—ख. [2] गुण्यावर्तनचिन्तनम्—ग. [3] गुणतो—क.

(157) वैश्वानरस्य सामस्त्यं सद्विद्यादेर्विभिन्नता ।
विद्यानामसमाहार उद्गीथानियतिः पुनः ॥ ५२ ॥

**वैश्वानरस्य सामस्त्यम्**—वैश्वानरविद्यायां त्रैलोक्यशरीरस्यैव वैश्वानरात्मनः समस्तोपासनस्य कार्यता ; न व्यस्तोपासनस्येति स्थापनम्, **सद्विद्यादेः विभिन्नता**—वेदान्तोदितासु सर्वासु विद्यासु उपास्यस्य ब्रह्मण एकत्वेऽपि तदुपासनभूतानां सदादिकानां विद्यानां मिथो भेद एव ; नत्वभेदः, **विद्यानाम् असमाहारः**—मोक्षोपायत्वेन अनुष्ठीयमानानां विद्यानां न समुच्चयेनाऽनुष्ठानं किं तु विकल्पेनैवेति निर्णयः, **पुनः उद्गीथानियतिः**—तन्निर्धारणानियमाधिकरणे निर्णीतस्यैवार्थस्य क्रत्वङ्गाश्रितोद्गीथाद्युपासनस्य क्रतुषूपादेयतानियमाभावस्य पुनरेकवारं दृढीकारः ॥ ५२ ॥

(158) भेदाभेदौ च विद्यानां गुणानां च ग्रहाग्रहौ ।
इत्थमेतेन पादेन साधिष्ठं परिचिन्तितम् ॥ ५३ ॥

**विद्यानां भेदाभेदौ**—मोक्षोपायतया (दृष्टिरूपतया वा) श्रुतिप्रतिपन्नानां विद्यानां मिथोविभिन्नस्वरूपत्व-तदभावौ, **गुणानां च ग्रहाग्रहौ**—विद्यासु ब्रह्मगुणानां उपसंहारानुपसंहारौ, **इत्थम्**—आहत्यैवं प्रकारेण, **एतेन पादेन**—तृतीयतृतीयेन गुणोपसंहाराख्येन पादेन, **साधिष्ठम्**—अभ्युपगन्तव्येष्वावश्यकतमं अर्थजातम्, **परिचिन्तितम्**—षड्विंशतिसंख्याकेष्वधिकरणेषु विचार्य सम्यङ्निर्णीतं वर्तते ॥ ५३ ॥

॥ इति शारीरकन्यायकलापसङ्ग्रहे तृतीयः पादः ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 70–72)

(390) विद्यैक्योद्गीथविद्याद्वितयविभजनप्राणविद्यैकभावाः
सर्वास्वानन्दतादेर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोः सम्भृतेः स्थानसीमा
पुंविद्याया विभेदोऽध्ययननियतता शं न इत्यादिकानाम् ॥ ७० ॥

**विद्यैक्यो....भावः**—(तृतीय-तृतीयचरणे आदित आरभ्य यथाक्रमम्) फलसंयोगाद्यविशेषे सति शाखाभेदेपि विद्यास्वरूपे भेदाभावः, छान्दोग्य-वाजसनेयकोक्तयोः उद्गीथविद्ययोः उद्गीथावयवप्रणवे मुख्यप्राणदृष्टिः, उद्गातरि प्राणदृष्टिरित्येवं विभज्य प्रदर्शनतः मिथो भेदव्यवस्थापनम्, (तथा) तादृशशाखाद्वयोक्तयोः प्राणविद्ययोः प्रकाराभेदकृतोऽभेदः

**सर्वासा....गतिः**—आनन्दत्वामलत्वादिकानां ब्रह्मस्वरूपनिरूपकाणां गुणानां उपास्यस्य गुणाश्रयस्य ब्रह्मण इव सर्वासु विद्यासु चिन्तनीयतया अनुवृत्तिः, **प्राणवासस्त्वदृष्टिः**—आचमनीयानामपां मुख्यप्राणं प्रति वासोरूपत्वानुसन्धानविधिः, **शाण्डिल्यैक्यम्**—वेदशाखाद्वयोदितयोः शाण्डिल्यविद्ययोरेकत्वम्, **अहरहमोः विभज्य स्थितिः**—व्याहृतिशरीरकत्वेन आदित्यमण्डले अक्षणि च उपास्यस्य ब्रह्मणः 'अहः अहम्' इति रहस्यनाम्नोः तत्तदुपासनप्रतिनियततया पार्थक्येनावस्थानम्, **सम्भृतेः स्थानसीमा**—विलक्षणवीर्यसम्भरणादेः ब्रह्मगुणजातस्य विशिष्टस्थानोपास्यब्रह्मोपासनेष्वेवान्वय इति स्थाननियमः, **पुंविद्यायाः विभेदः**—तैत्तिरीयाम्नातायाः छान्दोग्याम्नातापेक्षया पार्थक्यम्, **'शं न' इत्यादिकानाम्**—शं नो मित्रादिशान्तिकरमन्त्राणाम्, **अध्ययननियतता**—वेदभागाध्ययनमात्रशेषत्वेन विद्याङ्गत्वाभावव्यवस्थापनम् (इत्येतेऽर्थाः दशस्वधिकरणेषु साध्याः) ॥ ७० ॥

(391) हानाद्यन्योन्ययोगस्तदुचितसमयो देवयानादिसाम्यं
सर्वत्राऽस्थूलतादि व्यतिहरणमथाऽनेकशिष्यश्रुतानाम् ।
दह्रोपास्त्येकभावो गुणफलविधिरुद्गीथमाश्रित्य दृष्टौ
गुण्यावृत्तिर्गुणार्था[1] निखिलपरतरोपास्तिवेद्यावसायः ॥ ७१ ॥

**हानाद्यन्योन्ययोगः**—विदुषः मुक्तेः पूर्वं सुकृत-दुष्कृतयोः प्रहाणान्यत्रसंक्रमयोः चिन्तनविषये सर्वत्र समुच्चित्य स्थितिः, **तदुचितसमयः**—पुण्यपापप्रहाण-संक्रमयोः योग्यः कालः (देहादुत्क्रमणकालः) **देवयानादिसाम्यम्**—सर्वविधविद्यानिष्ठानामपि विदुषां देवयानपदवाच्यस्य अर्चिरादिमार्गप्रयाणस्य अविशिष्टता, **सर्वत्राऽस्थूलतादि**—वेदान्तोदितसर्वविद्यास्वपि चिन्तनीयं ब्रह्मस्वरूपनिरूपकाणाम् अस्थूलत्वादिगुणानां बृन्दम्, **अथ अनेकशिष्यश्रुतानाम् व्यतिहरणम्**—अनन्तरम् द्वाभ्यां उषस्त-कहोलाभ्यां (याज्ञवल्क्यं प्रति) शासनीयत्वेन पृष्टतया श्रुतितोऽवगतानाम्, 'यः प्राणेन प्राणिति' इति, 'योऽशनाया-पिपासे' इति चोक्तानामुभयत्राप्युत्तरतयाऽन्वित्य चिन्तनीयत्वम्, **दह्रोपास्त्येकभावः**—दहरविद्ययोः छान्दोग्यबृहदारण्यकाम्नातयोः अभिन्नस्वरूपता, **उद्गीथमाश्रित्य दृष्टौ**—कर्माङ्गभूतमुद्गीथमवलम्ब्य प्रवृत्ते उपासने 'उद्गीथमुपासीते'ति श्रुते उद्गीथोपासनरूपगुणस्य वीर्यवत्तरत्वरूपफलसम्बन्धविधानरूपत्वम्, **गुणार्था गुण्यावृत्तिः**—दहरविद्योक्तप्रतिब्रह्मगुणचिन्तनार्थम् आश्रयस्य ब्रह्मण-

---

[1] **(गुणार्थं)—सा.**

श्चिन्तन वृत्तिः **निखिल....वसायः**—तैत्तिरीयगतसहस्रशीर्षानुवाकेन सर्वपरविद्योपास्यपरतत्त्व-निर्धारणम्, (इत्येतेऽर्थाः एकादशाधिकरणतः एकोनविंशाधिकरणपूर्तिं यावत् नवसु अधिकरणेषु संसाधनीयाः प्रवृत्ताः) ।। ७१ ।।

(392) विद्यारूपा मनश्चित्प्रभृतय उचितज्ञानरूपक्रतुस्थाः

क्षेत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः ।

सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्ति-

र्मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोचे ।। ७२ ।।

**विद्यारूपाः मनश्चित्प्रभृतयः**—'मनश्चितो वाक्चितः' इत्यादिना अग्निरहस्यब्राह्मणोक्ताः चेतव्या ज्ञानरूपा अग्नयः, **ज्ञानरूपक्रतुस्थाः**—विद्यामयक्रत्वनुप्रवेशिन एव इति **उचिताः**—अभ्युपगन्तव्यत्वौचित्यवन्तः इति निर्णयः, ('ते हैते विद्याचित एव' इत्युक्तेः) **क्षेत्री**—जीवः, **शुद्धः**—आविर्भूतनिरुपाधिकस्वरूपवानेव, **अनुचिन्त्यः**—भगवदुपासनाङ्गभूत-स्वोपासनगोचरः ; (न तु बन्धकालीनकर्तृत्वाद्यौपाधिकधर्मवत्तया उपास्यः) इति व्यवस्थापनम्, **क्रतुगुणसकलोद्गीथपूर्वेषु**—क्रत्वङ्गभूतोद्गीथप्रभृतिषु सर्वेषु (सर्वशाखाम्नातेष्वपि) **दृष्टिः**—उपासनासम्बन्धः, **वैश्वानरभजनम्**—वैश्वानराख्यपरमात्मोपासनं वैश्वानरविद्याम्नातम्, **सामस्त्येनैव**—समस्ततयैव ; न तु व्यस्ततया, **अथ अनेकविद्योपपत्तिः**—अनन्तरं मोक्षार्थानाम् उपासनानां नानात्वमेव ; न त्वेकत्वमित्यंशसमर्थनम्, **मोक्षार्थानां विकल्पः**—मोक्षोपायभूतानां विद्यानां सद्-दहर-वैश्वानराद्याख्यानाम् एकस्मिन् पुरुषे असमुच्चयतः पाक्षिकमेकमात्रानुष्ठानम्, **पुनः उद्गीथदृष्टेः अनियतिः**—तन्निर्धारणानियमाधिकरणे निर्णीतस्यैव 'उद्गीथोपासनस्य नियमेनाऽनुष्ठेयत्वाभावः' इत्यस्य पुनरेकवारं दार्ढ्यमुद्दिश्योपपादनम् (इत्येतेंऽशाः विंशाधि-करणमारभ्य षड्विंशत्यधिकरणपूर्तिंयावत् समर्थिताः) ।। ७२ ।।

इति तृतीयस्याऽध्यायस्य तृतीयः पादः ।। ३ ।।

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

तृतीयस्याऽध्यायस्य चतुर्थः पादः ॥३–४॥

# (109) पुरुषार्थाधिकरणम् ॥ ३–४–१ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(159) कर्माङ्गत्वात् कर्तृनिर्णायिकाया विद्यायास्तत् कर्म दत्ते फलानि ।
नैतज्जीवाधीशनिर्णायकत्वाद् विद्या दत्ते कर्म चाङ्गं त्वमुष्याः ॥ ५४ ॥

**कर्तृनिर्णायिकायाः**—श्रुतिविहितकर्मसु कर्तृभूतस्य चेतनस्य यथावस्थितस्वरूपनिर्णयौपयिक्यः, **विद्यायाः**—वेदान्तविहिताया उपासनरूपाया विद्यायाः, **कर्माङ्गत्वात्**—कर्तृद्वारा कर्मोपकारकत्वात्, **तत् कर्म**—वेदान्तविहितविद्याङ्गकं कर्मकाण्डोदितं कर्मैव, **फलानि दत्ते**—पुरुषार्थरूपाणि फलानि प्रयच्छति ; न तु अङ्गभूता विद्या ; अङ्गिन एव फलप्रदानसामर्थ्यस्य न्याय्यत्वात्—(इति शङ्कने) **नैतत्**—विद्यायाः कर्मप्रति अङ्गत्वं, कर्मणः फलप्रदत्वं चेत्युभयमपि नैव युक्तम्, **जीवा....कत्वात्**—जीवशरीरकः जीवनियन्ता च य ईश्वरः परब्रह्मभूतः तस्यैव निर्णायकत्वाद्वेदान्तोदितविद्यायाः सर्वस्या अपि, **विद्या दत्ते**—विद्यैव पुरुषार्थरूपाणि फलानि प्रयच्छति ; न कर्म, **कर्म च**—कर्म तु, **अमुष्याः अङ्गं तु**—अस्या विद्यायाः अङ्गमेव ॥ ५४ ॥

## (2) तत्त्वसारः ॥

ऐदम्पर्यमपौरुषेयवचसामर्थेषु नैसर्गिकं
साक्षादक्षरसिद्धिपर्यवसितः स्वाध्यायविध्याशयः ।
व्याहन्तीति वदन्ति ये जपविधिन्यायेन सन्तुष्यता-
मायुष्मद्भिरनन्यलभ्यविषये शब्दः समुज्जृम्भते ॥ ९८ ॥

**अपौरुषेयवचसाम्**—स्वतन्त्रपुरुषोच्चारितत्वरूपपौरुषेयत्वरहितानां वेदवाचाम्, **अर्थेषु**—स्वर्गापवर्गादिफलवत्सु यागोपासनादिरूपेषु सेतिकर्तव्यताकेष्वर्थेषु, **नैसर्गिकम्**—स्वभावायत्तम्, **ऐदम्पर्यम्**—बोधनतात्पर्यम् (कर्म), **साक्षात्**—मुख्यया वृत्त्या, **अक्षरसिद्धिपर्यवसितः**—वर्णग्रहणमात्रे विश्रान्तः, **स्वाध्यायविध्याशयः**—'स्वाध्यायोऽध्येतव्यः'

इत्यस्याऽध्ययनविधेरभिप्रायः, **व्याहन्ति**—विरुणद्धि, **इति ये वदन्ति**—इत्येवं ये वर्णयन्ति, **आयुष्मद्भिः [तैः]**—बालिशबुद्धिभिस्तैः प्राभाकरैः, **जपविधिन्यायेन**—'त्रिः स्वाध्यायं वेदमधीयीत' 'वेदमेव जपेन्नित्यम्' इति वेदजपविधायकवाक्यार्थनिर्णयरीतितः, (जपविधेर्वर्णावृत्तिपरतायाः स्वाभाविकत्वेऽपि पद-तदर्थसङ्गतिज्ञस्य स्वत एव भवन् अर्थबोधो जपविधिना यथा न बाध्यते; तथा अध्ययनविधावपि विधेरक्षरग्रहणमात्रविश्रामेऽपि स्वतः सम्भवतोऽर्थबोधस्य न तेन प्रतिबन्धः इति विचिन्त्य) **सन्तुष्यताम्**—वेदानां निरर्थकतापत्तिरिति खेदं विसृज्य स्थीयताम्, **शब्दः**—विधिरूपः शब्दः **अनन्यलभ्यविषये**—प्रमाणान्तरतः अप्राप्ते एवाऽर्थे, **समुज्जृम्भते**—निरङ्कुशव्याप्तिमान् भवति (इत्ययं न्यायविदभ्युपगतोऽर्थः) ॥ ९८ ॥

> यः स्वार्थेष्वनिदंपराः श्रुतिगिरः स्वाध्यायविध्याशया-
>
> दाचष्टे स विकल्पमर्हति विधिः सार्थः किमास्थीयताम् ।
>
> यद्वाऽनर्थक इत्यनेन वचसा तुल्यत्वमासां गिरा-
>
> माद्ये स्यादितरत्र तत्प्रतिभटः किंस्यादकस्माद्विधिः ॥ ९९ ॥

**यः**—'स्वाध्यायोऽध्येतव्यः' इत्यस्य अर्थज्ञानपर्यवसायित्ववर्णनाग्रही यः प्राभाकरः, **स्वाध्यायविध्याशयात्**—'अक्षरग्रहणविधानमात्रेण विरतव्यापारः अध्ययनविधिः, इत्यस्याशयस्यानुरोधतः, **श्रुतिगिरः**—वेदवाचः, **स्वार्थेषु अनिदंपराः आचष्टे**—स्वबोध्येष्वर्थेषु बोधनतात्पर्यरहिता भवेयुरिति आपादयति, **सः**—आपादको मीमांसकैकदेशी, **विकल्पमर्हति**—वक्ष्यमाणरीत्या विकल्प्य प्रश्नविषयीभवितुमर्हति, (किमिति?) **विधिः**—'स्वाध्यायोऽध्येतव्यः' इत्ययं विधिः, **किं सार्थः आस्थीयताम्? यद्वा अनर्थक इति आस्थीयताम् इति**—स्वार्थतात्पर्यक इति अङ्गीक्रियतां वा? स्वार्थतात्पर्यकत्वरहित इति अभ्युपगम्यतां वा? इति, **आद्ये**—अर्थपरत्वाङ्गीकारपक्षे, **आसां गिराम्**—सर्वासामपि वेदवाचाम्, **अनेन तुल्यत्वं स्यात्**-(स्वार्थग्रहणविधायकविध्यन्तरस्याऽभावेऽपि यथा अध्ययनविधिः गृहीतार्थ एव भवति स्वाभाव्यात्, तद्वत्, सर्वस्य वेदस्य अर्थग्रहणविधायकवाक्याभावेऽपि स्वभावादेव गृहीतार्थता सिद्धा भवेदिति) अध्ययनविधिना साम्यं सिध्यति. **इतरत्र**—अध्ययनविधिः अनर्थक आस्थीयते इति पक्षे, **विधिः**—अध्ययनविधिः **अकस्मात्**—विनैव नियामकम्, **तत्प्रतिभटः किं स्यात्?**-स्वतो व्युत्पत्तिबलाद् भवतः अर्थज्ञानस्य विरोधी भवति किम्? नैव; (पक्षद्वयेऽपि अर्थज्ञानसिद्धेः प्रतिबन्धाभाव इति) ॥ ९९ ॥

यच्छ्रोतुर्गृहमेधिनो गुरुगृहे काष्ठोदकाद्याहृति-

व्यासक्तस्य न सम्भवत्यवसरस्तत्तत्स्वकर्मक्रमे ।

स्याच्चेद्गुर्वनुवर्तनाद्यनुगुणः कुत्राऽवकाशो भवे-

दित्युक्तं कतिभिश्चिदत्र कुशलैरित्थं समाधीयते ॥ १०० ॥

**गृहमेधिनः**—स्वीकृतगृहस्थाश्रमस्य, **श्रोतुः**—वेदार्थविचारश्रवणप्रवृत्तस्य, **गुरुगृहे काष्ठोदकाद्याहृतिव्यासक्तस्य**—अत एव गुरुकुले अवस्थाय गुरुशुश्रूषोद्देशेन एधो-जलादीनां गुर्वर्थानामाहरणे तत्परस्य सतः, **तत्तत्स्वकर्मक्रमे**—तेषां तेषां स्वस्ववर्णाश्रमविहितधर्माणां पूर्वापरीभावनैयत्यसहितानुष्ठाननैरन्तर्ये, **अवसरो न सम्भवति**—समयो नैव सिध्यति, **स्याच्चेत्**—स्वधर्मानुष्ठाने समयलाभो यदि भवति, **गुर्वनुवर्तनाद्यनुगुणः अवकाशः**—गुरुशुश्रूषौपयिकः समयः, **कुत्र भवेत्**—कीदृशकालाश्रितो भवितुमर्हति, ? **इति**—एवम्, **कतिभिश्चित्**—विध्यर्थानुष्ठानसामञ्जस्यचिन्तनप्रवृत्तैः कैश्चित् मीमांसकैकदेशिभिः, **उक्तम्**—अध्ययनविधि-व्यापारस्य अक्षरग्रहणमात्रज्ञापनेन विश्रान्तिवादिनामुपरि दूषणमुक्तम्, **अत्र**—अस्मिन् सङ्कटप्राये विषये, **कुशलैः इत्थं समाधीयते**—निपुणैर्दार्शनिकैः वक्ष्यमाणया रीत्या समाधानं क्रियते ॥ १०० ॥

यद्वेदाक्षरराशिसिद्ध्युपरतः स्वाध्यायविध्याशय-

स्तत्तन्मूलकशिष्यकृत्यविरतेर्लब्धावकाशाः क्रियाः ।

श्रोतुः श्रावयितुर्यथेत्यवसरः श्रोतुश्च सिद्ध्येत्तथा

स्नेहेन स्पृहया च वित्त-यशसोः शिष्यं गुरुः श्रावयेत् ॥ १०१ ॥

**यत्**—येन हेतुना, **स्वाध्यायविध्याशयः**—'स्वाध्यायोऽध्येतव्यः' इत्यस्याऽध्ययनविधेः अभिप्रायः, **वेदा....परतः**—वेदाख्यवर्णसमुदायकर्मकाध्ययनसम्पाद्यत्वज्ञापनमात्रेण विश्रान्त-व्यापारः, **तत्**—तेन हेतुना, **श्रोतुः**—वेदार्थविचारश्रवणोद्युक्तस्याऽपि गृहस्थस्य, **तन्मूल.... विरतेः**—वेदप्राप्तिफलकतया शास्त्रप्राप्तस्य गुरुशुश्रूषारूपस्य शिष्यानुष्ठेयक्रियाकलापस्य वेदलाभा-नन्तरकाले निवृत्तेः, **क्रियाः**—नित्य-नैमित्तिकाभिधाः कर्मकलापाः, **लब्धावकाशा इति**—सम्पन्नसमया इति हेतोः, **श्रावयितुर्यथा**—वेदार्थश्रावकस्याचार्यस्येव, **श्रोतुश्च**—श्रवण-प्रवृत्तस्य शिष्यस्याऽपि, **अवसरः सिध्येत्**—समयो लभ्येतैव **तथा**—अध्ययनकाले शिष्यकृतया परिचर्ययेव, (विचारश्रवणसमये) **स्नेहेन**—शिष्यवात्सल्येन, **वित्त-यशसोः स्पृहया च**—लाभ-ख्यात्योर्विषयिण्या इच्छया च सहकारिभूतया, **गुरुः**—विद्वान् आचार्यः **शिष्यं**

**श्रावयेत्**—शिष्यमुद्दिश्य वेदार्थतत्त्वं बोधयेदेव ; न असम्भावितमेतत् । (इति सर्वं समीचीनमेव ॥ १०१ ॥

श्रीवात्स्यवरदगुरोः कृपया तद्रचिततत्त्वसारस्य ।
प्रथिता पदार्थविवृतिर्विदुषा श्रीरामभद्रेण ॥
क्रतुनाथान्वयजनुषा श्रीवासराघवार्यतनयेन ।
साधननाम्न्यध्याये तेन हरिः प्रसन्नहृदयोऽस्तु ॥

इति श्रीमति तत्त्वसारे तृतीयोऽध्यायः ॥

—o—

(3) **अधिकरणसारावलिः** ॥ (श्लो. 1–7)

(393) कर्म प्राक् चिन्तयित्वा ननु परममथ ब्रह्म जिज्ञास्यमुक्तं
पादे विद्याङ्गतोक्तिः पुनरिह वितथाऽनेकधा त्याज्यतोक्तेः ।
**मैवं कर्मैव** तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नं
विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्या[1]न्निवृत्त्येक[1]संज्ञम् ॥ १ ॥

**प्राक्**—ब्रह्मविचारात् पूर्वम्, **कर्म चिन्तयित्वा**—कर्मस्वरूपं विचार्य, **अथ**—तत्पश्चाद्भावेन, **परमं ब्रह्म**—सर्वेश्वराभिधानं परं ब्रह्म, **जिज्ञास्यम्**—अभीप्सितविचाराख्य-ज्ञानगोचरतामापादनीयमिति, **उक्तं ननु**—'अथातो 'ब्रह्मजिज्ञासे'ति शास्त्रारम्भप्रतिज्ञासूत्र एव प्रतिपादितं खलु, (हेयोपादेययोर्मध्ये 'हेयस्य प्रथमं चिन्तोपादेयस्य ततः परम्' इति रीत्या कर्मणः प्रथमं विचार्य त्यक्तत्वात्) **अनेकधा**—नानाप्रकारेण, **त्याज्यतोक्तेः**—कर्मणामध्रुवत्वा-दृढत्वबन्धकत्वादिदोषान् निमित्तीकृत्य परित्याज्यतायाः शास्त्रेषु वर्णितत्वात्, **पुनः**—पूर्वमेव प्रस्तुतं कर्म पुनरपि प्रस्तुत्य, **इह पादे**—तृतीयाध्यायस्य चतुर्थे चरणे, **विद्याङ्गतोक्तिः**—कर्मणां विद्याङ्गत्वप्रतिपादनप्रक्रिया, **वितथा**—निरुपयोगा (त्याज्ये विषये अङ्गत्वानङ्गत्वयो-श्चिन्तायाः प्रेक्षावद्भिः कर्तुमनर्हत्वात्) [इति पादवैयर्थ्यशङ्कने], **मैवम्**—एवं शङ्कनमनुचितम्, **कर्मैव**—कर्मकाण्डोक्तं बन्धकत्वादिदोषतस्त्याज्यतया निश्चितं याग-दान-होमादिकं कर्मैव, **तत्तद्गुण....भावेन**—फलाभिसन्धिराहित्यादिगुणसहभावतो विनियोगकृतपार्थक्येन हेतुना, **भिन्नम्**—त्याज्यत्वप्रतिपत्तिगोचरात् कर्मणः सकाशादतिरिक्तमेव सत्, **विद्यानिष्पत्तिहेतुः**—विद्याप्रतिबन्धकदूरीकरण-सत्त्वविवृद्ध्यादिद्वारा विद्यासिद्धेः प्रयोजकं भवति, **किमपि च**—

[1] **निवृत्तैक—च.**

कर्मकाण्डोक्तेभ्य: कर्मभ्य: अत्यन्तविलक्षणमपि च, **निवृत्त्येकसंज्ञम्**—निवृत्तिधर्ममात्रतया भगवच्छास्त्रादिषु व्यपदिश्यमानम्, **सुकृतम्**—दुष्कृतसम्पर्कलेशरहितं सत् सुकृतमात्ररूपं भगवत्सेवात्मकं कर्म च वर्तत इति, (तादृशकर्मणां विद्याङ्गत्वनिर्णय: एतत्पादप्रयोजन-मिति) ।। १ ।।

(394) त्याग: काम्यक्रियाणां क्वचन परविद: काऽप्यनर्हक्रियाणां
स्वैकाधीनत्वबुद्धे: क्वचिदनुपधिकस्वार्थबुद्धेश्च गीत: ।
अत्राऽहिंसादि[1]कानां त्वघ[1]विहतिकृतां सर्वसाधारणानां
ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ।। २ ।।

**क्वचन**—भगवद्गीतायां प्रदेशविशेषे, **परविद:**—परब्रह्मज्ञानिन:, **काम्यक्रियाणां त्याग:**—भगवत्प्रीतीतरफलापेक्षया प्रवर्त्यमानानां श्रुत्याद्युदितकर्मणां स्वरूपतो वर्जनम्, **क्वाऽपि**—अन्यत्र क्वचन स्थानविशेषे च, **अनर्हक्रियाणाम्**—निषिद्धकर्मणां स्वरूपतस्त्याग: **क्वचित्**—अपरत्र स्थानविशेषे च, **स्वैकाधीनत्वबुद्धे:**—कर्मसु जीवस्य स्वातन्त्र्येण स्वकर्तृता-बुद्धे: त्याग: (तथा) **अनुपधिकस्वार्थबुद्धेश्च**—कर्मफलेषु परमात्मशेषतां विहाय स्वातिशय-प्रयोजनकत्वबुद्धेस्त्यागश्च, **गीत:**—आवश्यकत्वेन भगवता कीर्तित:, **अत्र तु**—तृतीयचतुर्थ-पादे तु, **अघविहतिकृताम्**—पापक्षयफलकानाम्, **सर्वसाधारणानाम्**—सर्वेषां वर्णानामाश्रमाणां च अविशेषत आचरणीयानाम्, **अहिंसादिकानाम्**—हिंसावर्जन-स्तेयाकरण-सत्यवदनादीनां धर्माणाम्, (तथा) **वर्णाश्र....मतामपि**—तत्तद्वर्ण-तत्तदाश्रमादिविशेषमुद्दिश्य विहितानां कर्मविशेषाणामपि च, **उपास्त्यङ्गभावम्**—उपासनरूपां विद्यां प्रति उपकारकत्वरूपमङ्गत्वम्, **ब्रूते**—विचार्य निर्णयति भगवान् बादरायण: ।। २ ।।

(395) कर्ताऽऽत्मा कर्मणां यस्तदधिकमिह न ब्रह्म तस्मान्मखादौ
तद्बुद्ध्यैवोपयुक्ता: स्युरुपनिषद [2]इत्यर्घ[2] मीमांसकोक्तौ ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं
प्राह क्षिप्तान्यलिङ्ग: कलुषशमनत: सत्त्वसंवर्धकानाम् ।। ३ ।।

**कर्मणां कर्ता**—अग्निहोत्रादीनां श्रौतानां स्मार्तानां वा कर्मणां कर्तृत्वेन प्रतिपन्न:, **य: आत्मा**—योर्थ: जीवाख्यो वर्तते देही, **तदधिकम्**—तदपेक्षया अतिरिक्तमतिशयितं वा, **ब्रह्म**—ब्रह्मपदाभिधेयं वस्तु, **इह**—वेदान्तेषु वेद्यभूतं किंचित्, **न**—नैवास्ति, **तस्मात्**—

---

[1] **कानामघ—च.** [2] **इत्यज्ञ—पद॰पा.**

जीवातिरिक्तब्रह्माख्यचेतनविशेषाभावादेव, **मखादौ**—यज्ञादिरूपे कर्मणि, **तद्बुद्ध्यैव**—कर्तृभूतजीवस्वरूपविवेचनजननतात्पर्येणैव, **उपनिषदः**—त्रय्यन्तभागाः, **उपयुक्ताः स्युः**—प्राप्तप्रयोजना भवेयुः, **इति**—एवं रीत्या, **अर्धमीमांसकोक्तौ**—विचार्य निर्णेयस्य तत्त्वजातस्य अर्धे एकदेशे एव विश्रान्तानां मीमांसकानां व्याहारे प्रवृत्ते सति, **क्षिप्तान्यलिङ्गः**—स्वाभिमतविरुद्धार्थगमकतया अर्धमीमांसकोक्तानि लिङ्गानि प्रतिक्षिप्तवान् सन्, **कलुषशमनतः**—विद्यौपयिके सत्त्वगुणे कलुषभावं प्राप्नुवतां अतिरेकदशापन्नानां राजसतामसाद्यंशानां शमनपूर्वकम्, **सत्त्वसंवर्धकानाम्**—सत्त्वातिरेकापादकानाम्, **कर्मणाम्**—श्रौत-स्मार्तात्मकानां नित्य-नैमित्तिकादिरूपाणां च कर्मणाम्, **जीवान्य....विधौ**—(चेतनेभ्यः) प्रत्यगात्मभ्यः सकाशात् अतिरिक्तस्य ब्रह्मपदाभिधेयस्य परमात्मनः निरन्तरध्यानरूपे उपासने (मानसे कर्मणि), **अङ्गभावम्**—अतिशयाधायकत्वरूपम् अङ्गत्वम्, **प्राह**—निरूपयति भगवान् बादरायणः ॥ ३ ॥

(396) पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैर्गगनलिपि[1]निभैः[1] क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ४ ॥

**अत्र**—ब्रह्मविचारार्थमेव प्रवृत्ते शारीरकमीमांसाशास्त्रे, **एवम् एकादशभिः पादैरपि**—आदितः एतदन्तैः एकादशसङ्ख्यैश्चरणैरपि, **परं ब्रह्म**—सर्वातिशायि ब्रह्माख्यं वस्त्वेव, **वेद्यं निरूढम्**—मुमुक्षुभिरवश्यं विचार्य (श्रवणादिद्वारा) साक्षात्करणीयमिति च सुष्ठु दृढीकृतमास्ते, (एवं स्थिते) **भूयः**—पुनरस्मिन् पादे, **गगनलिपिनिभैः**—व्योमलिखितवर्णरेखासमैः अत एव अकिञ्चित्करैः, **क्षुद्रलिङ्गैः**—अल्पैर्गमकैः (पूर्वपक्षोद्भावनहेतुभिः) **ब्रह्मविद्या**—वेदान्तविचारात्मिका (मुमुक्षूणां हृदये निरूढा विद्याहेतुत्वाद्विद्या) विद्या, **किम्**—कस्मै प्रयोजनाय, **क्षोभ्यते**—चाल्यते, अपनीत्युपक्षेपेण सकम्पा क्रियते!, (इति शङ्कने) **सत्यम्**—ब्रह्मणोऽधिकत्वं निरूढमस्तीति यदुच्यते तदसन्दिग्धमेव; परम्, **तत्तादृगल्प....क्षेमाय**—विलक्षस्वभावानां किंचिज्ज्ञानां विप्रतिपत्तिमहिम्ना प्राप्तसाध्वसाः ये अपरिणता अन्तेवासिनः तद्वृन्दस्य हितकामनया (प्रवृत्तो) बादरायणः, **जैमिन्य....थितं पक्षम्**—जैमिन्यृषिणा पूर्वमीमांसायां तात्पर्यान्तरेणोक्तं जीवातिरिक्तब्रह्माभावपक्षम्, **उत्क्षिप्य हन्ति**—अत्र पादे उद्भाव्य निराकरोति ॥ ४ ॥

---

[1] समैः—चि.पा.पद.पा.

(397) कुर्वन्नेवेति वाक्यं परविदि नियताचारतोक्तिः [1]सहत्वेऽ[1]-
न्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।
विद्यापूर्वं क्रियाणां करणमनुवदद्वाक्यमन्यार्थयुक्तं
न ह्येतद् ब्रह्मविद्यामनुवदति न चोद्गीथविद्या क्रियाङ्गम् ।। ५ ।।

**कुर्वन्नेवेति वाक्यम्**—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्येवंरूपम् ईशावास्यगतं वाक्यम्, **परविदि**—परतत्त्ववेत्तरि (ब्रह्मज्ञे), **नियताचारतोक्तिः**—श्रुत्यादिप्रतिपन्नाचारावर्जनरूपनियमबोधकं वचनम्, **धी-क्रियाभ्याम् अन्वारम्भोऽपि**—विद्यया कर्मणा च मिथः (एकस्मिन् विदुषि उत्तरत्र स्वस्वफलप्रदानाय) संश्लेषोक्तिरपि, **सहत्वे**—सामानाधिकरण्यमात्रे एव तात्पर्यवती सती, **अङ्गतामङ्गितां वा न नियमयेत्**—विद्यायाः कर्म प्रति अङ्गभावं वा अङ्गिभावं वा निष्कृष्य बोधयितुं नैव शक्नुयात्, **क्रियाणाम्**—विहितानां कर्मणाम्, **करणम्**—अनुष्ठानम्, **विद्यापूर्वं वदत्**—जीव-परयाथात्म्यज्ञानानन्तरभाव्येव समग्रं भवतीति प्रतिपादयत्, **वाक्यम्**—गार्गिब्राह्मणगतं 'यो वा एतदक्षरं गार्गि विदित्वा' इत्यादिकं वचनम्, **अन्यार्थम् उक्तम्**—विद्यारहितस्य कर्मणः ('हता चाज्ञानिनां क्रिया' इति रीत्या) उपासननिष्पत्त्यौपयिकतावैकल्यप्रतिपादनायैव प्रवृत्तम्; न विद्यां प्रति अङ्गितायाः प्रतिपादनायेति, **हि**—यतः, **एतत्**—'यो वा एतदक्षरं गार्गि विदित्वा....अविदित्वा' इत्यादिकं वाक्यम्, **ब्रह्मविद्याम्**—मोक्षार्थपरमात्मोपासनात्मिकां विद्याम्, **न अनुवदति**—कर्माङ्गत्वज्ञापनाय अनुवादं न करोति; (येन ब्रह्मविद्यायाः कर्म प्रति अङ्गता उक्ता स्यात्; किं तु वेदान्तागतं श्रवणजज्ञानमेव) **उद्गीथविद्या च**—'ओमित्येतदक्षरमुद्गीथमुपासीते'ति विहिता उद्गीथोपास्तिरपि, **न क्रियाङ्गम्**—न कर्म प्रति अङ्गत्ववती; वीर्यवत्तरत्वरूपफलविशेषसिद्धिनिमित्तत्वादिति ।। ५ ।।

(398) स्वाध्यायप्राप्तये ह्यध्ययनमुदितमाधानवन्नोत्तराङ्गं
विद्याङ्गं[2]चाऽर्थ[2]बोधो भवतु यदधिका सा स्वरूपैः फलैश्च ।
नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नाऽन्यविद्या
काम्यत्यागः सविद्ये कथमिह भविता साऽपि यद्यङ्गमेषाम् ।। ६ ।।

**अध्ययनम्**—अध्ययनपदाभिधेयं कर्म, **स्वाध्यायप्राप्तये हि**—स्वाध्यायाख्यस्य स्वीयकुलक्रमागतस्य शाखाविशेषस्य स्वायत्तीकरणाय खलु, **उदितम्**—'स्वाध्यायोऽध्येतव्यः'

---

[1] सहैवाऽ—पद.पा.    [2] स्वर्थे—पप. पा.

इत्यनेन श्रुतिवाक्येन विहितम्, **न उत्तराङ्गम्**—तत्पश्चात्कालभाविकर्मानुष्ठानाङ्गतया न विहितम्, **आधानवत्**—'अग्नीनादधीते'ति वाक्येन यथा केवलमग्निसिद्धिमुद्दिश्यैव अग्न्याधानाख्यं कर्म विहितम्; न तु तदनन्तरकालिकाग्निहोत्रादिकर्मानुष्ठानार्थतया विहितम्; (सन्निहितस्यैव साक्षात्फलत्वौचित्यात्) तद्वत्, **अर्थबोधः**—वेदन्तवाक्यार्थविषयको बोधः, **विद्याङ्गं च भवतु**—उपासनात्मिकायाः ब्रह्मविद्याया उपकारकत्वतः अङ्गमपि आस्तां नाम, **यत्**—यस्माद्धेतोः, **सा**—उपासनरूपा ब्रह्मविद्या, **स्वरूपैः**—आदितः प्रत्यहं क्रियमाणेन ध्यानाभ्यासेन प्राप्स्यमानातिशयत्व-विशदतमप्रत्यक्षरूपत्व-निरतिशयप्रियत्व ब्रह्मप्रापकत्वादिभिः स्वगतैः धर्मैः, **फलैश्च**—अनाद्यविद्यानिःशेषनिवृत्तिपूर्वकब्रह्मप्राप्ति-तदनन्तर—निरवधिकब्रह्मानुभवपरम्परादिरूपैः स्वप्रयोजनभूतैरर्थैश्च, **अधिका**—वाक्यार्थश्रवणजन्यज्ञानापेक्षया सर्वात्मना अतिशयिता, **क्रतुषु**—श्रुतिविहितेषु ऐहिकामुष्मिकार्थेषु कर्मसु, **नियमतः**—अवर्ज्यतया, **अपेक्षितम्**—उपयोक्ष्यमाणत्वेन सम्पादनीयम्, **नित्यात्मज्ञानमात्रम्**—देहवत् ध्वंसमप्राप्नुवतः स्थायिनः चेतनस्य, कर्मफलानामनुभवितुः अस्तित्वज्ञानमेव, **न अन्यविद्या**—जीवात्मनोऽप्यधिकस्य सर्वनियन्तुः परमात्मनः उपासनरूपं ज्ञानम् कर्मानुष्ठानोपयोगितया नैव अपेक्षणीयं भवति, (अतः सर्वथा न कर्माङ्गत्वं ब्रह्मविद्यायाः) **साऽपि**—जीवाधिकस्य ब्रह्मणो विद्याऽपि, **एषाम्**—कर्मकाण्डोदितानां सर्वेषामेव कर्मणाम्, **यदि अङ्गम्**—उपकारकमित्येतत् शास्त्रसंमतं चेत्!, **सविद्ये**—नित्यनैमित्तिक-काम्यानां सर्वकर्मणामप्यङ्गभूतत्वेनापाद्यया ब्रह्मविद्यया सम्पन्ने पुरुषे, **इह**—विद्याङ्गकेषु कर्मसु मध्ये **काम्यत्यागः**—विद्याङ्गकानामेव सतां फलार्थानां कर्मणां वर्जनरूपोऽर्थः, **कथं भविता**—केन वा प्रकारेण शास्त्राभिमतो युक्तः स्यात्? (कस्याऽपि काम्यानुष्ठातुरेवाभावप्रसङ्गेन तद्विधानस्यैव वैयर्थ्यापातात्) ॥ ६ ॥

(399) नाऽङ्गं विद्या मखादेर्नहि तदधिकृतेष्वेव तामामनामः
स्यात्तत्तत्कर्मणां सेत्यपि न बहुविधाद्वैपरीत्योपदेशात् ।
जाबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च तस्मात्
प्राप्तिर्ग्राह्याऽन्यथाऽपि स्वयमिह तु विधिस्तन्निषेधः सरागे ॥ ७ ॥

**विद्या**—ब्रह्मोपासनात्मिका वेदान्तोदिता विद्या, **मखादेः**—यज्ञादेः कर्ममात्रस्य, **न अङ्गम्**—अङ्गत्वेन न श्रुतिसंमतम्, **हि**—यतः, **ताम्**—ब्रह्मविद्याम्, **तदधिकृतेष्वेव**—यज्ञादिकर्माधिकारवत्सु गृहस्थादिपुरुषेष्वेव, (तादृशपुरुषमात्राधिकृतत्वेन) **न आमनामः**—श्रुतौ नाधीमहे; (किन्तु कर्मानधिकृतपारिव्राज्यवत्स्वपि) अतो न कर्माङ्गता विद्यायाः,

**तत्तत्कर्मणां स्यात्**—तत्तदाश्रमविहितानां कर्मणामेवाङ्गं भवेत्, **सा**—ब्रह्मविद्या, **इत्यपि न**—इत्येवमभ्युपगमोऽपि नोचितः, **बहुविधात्**—नानाप्रकारात्, **वैपरीत्योपदेशात्**—विद्यायाः कर्म प्रति अङ्गत्वविपरीतस्य अङ्गित्वस्यैव श्रुतिषूपदिष्टत्वात्, **ऊर्ध्वरेतोविधिरपि**—सन्न्यासादिकानां पारिव्राज्याश्रमानामपि विधायकः श्रौतः शब्दः, **जाबालैः**—जाबालाख्यशाखाविशेषाध्यायिभिः, **पठितः**—'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इत्यादिरूपेणाधीतो दृश्यते, **अन्यैश्च**—शाखान्तराध्येतृभिरपि (छन्दोगैरपि) **अनूद्यते**—'त्रयो धर्मस्कन्धाः' इत्यादिना कृतानुवादो दृश्यते, **तस्मात्**—उक्तात् ज्ञापकात्, **प्राप्तिः ग्राह्या**—अनुवादान्यथानुपपत्तिं निमित्तीकृत्य विधायकवाक्यमपि किंचित् तच्छाखीयसंमतमभ्युपेत्यम्, **अन्यथाऽपि**—विधायकवाक्यान्तराकल्पनेऽपि च, **इह तु**—अत्रैव, **स्वयम्**—'त्रयो धर्मस्कन्धाः' इत्यादिवाक्यमेव, **विधिः**—विधायकं भवितुमर्हति, **तन्निषेधः**—'वीरहा वा एष देवानाम्' इत्यादिना अग्नित्यागिनिन्दया पारिव्राज्याश्रमनिषेधपर्यवसानम्, **सरागे**—अविरक्ताधिकारिणि विश्रान्तं ज्ञेयम् ॥ ७ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

पुरुषार्थाधिकरणे—विद्याङ्गकात् कर्मणः पुरुषार्थः—इत्याशङ्क्य,

'तमेवं विद्वानमृत इह भवति' इति श्रवणात्, कर्माङ्गकाद्वेदनात् पुरुषार्थावाप्तिः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

चतुर्भिः सप्तभिर्द्वाभ्यां द्वाभ्यां न्यायैश्चतुर्विधैः ।
अङ्गपादे पञ्चदशाधिक्रियाणां समन्वयः ॥
नोद्गीथोपास्तिवद् ब्रह्मप्राप्तेः क्रत्वर्थतेष्यते ।
पुरुषार्थाधिकरणे सङ्गतिः प्रत्युदाहृतिः ॥

इति पुरुषार्थाधिकरणम् ॥

—o—

# (110) स्तुतिमात्राधिकरणम् ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(160) कर्माङ्गोद्गीथादिसम्बन्धमात्रं दृष्टं यस्मात् तत्स्तुतित्वं रसादेः ।
नाऽसान्निध्यात् तद्विधेयप्रकर्षादप्राप्तत्वाच्चाऽत्र कल्प्यो विधिः स्यात् ॥५५॥

**यस्मात्**—यतो हेतोः, **कर्माङ्गो....मात्रम्**—क्रत्ववयवभूतस्योद्गीथादेरुपासनस्य सम्बन्ध एव केवलम्, **दृष्टम्**—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' इति श्रुतिवाक्ये ज्ञातोऽस्ति, **तत्**—तस्माद्धेतोः, **रसादेः**—उद्गीथादौ रसतमत्वादिप्रतिपादकस्योक्तजातीयवाक्यस्य, **स्तुतित्वम्**—सिद्धानुवादेन प्राशस्त्यमात्रप्रतिपादनपरत्वमेव युक्तम्, (इति शङ्कने) **न**—एतदसाधु, **असांनिध्यात्**—उद्गीथादिविधिप्रकरणस्यासंनिहितत्वात्, **तद्विधेयप्रकर्षात्**—क्रतुविधिविधेयभूतक्रतुगतं वीर्यवत्तरत्वरूपं उत्कर्षं फलभूतं निमित्तीकृत्य अस्य विधेयताया औचित्यात्, **अप्राप्तत्वाच्च**—उद्गीथादौ रसतमत्वादेः प्रमाणान्तरतः असिद्धत्वाच्च हेतोः, **अत्र**—'स एष रसानामिति वाक्ये, **विधिः**—उद्गीथादौ रसतमत्वादिदृष्टिविधिः, **कल्प्यः स्यात्**—कल्पनीय एव भवेत् ॥ ५५ ॥

## (2) अधिकरणसारावलिः ॥ (श्लो. 8-10)

(400) जुह्वादिस्तोत्रनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वं
मैवं तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।
तत्तद्दृष्टेर्विधानं विविधमिह समालक्षि चैतत्समीपे
तेनाऽनन्यार्थशिष्टे फलवति च विधिर्युज्यते कल्प्यमानः ॥ ८ ॥

**जुह्वादिस्तोत्रनीत्या**—'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इति वाक्यं, यथा जुह्वां पृथिवीत्वस्य, आहवनीये स्वर्गत्वस्य च प्रतिपादनमुखेन जुह्वाहवनीययोः प्रशंसापरं ; तद्वत्, **रसतमाद्युक्तिः**—'स एष रसानाम्' इति उद्गीथे रसतमत्वोक्तिरपि, **अङ्गस्तुतित्वम्**—यज्ञाङ्गभूतोद्गीथप्राशस्त्यपरवाक्यताम्, **भजतु**—प्राप्नोतु ; न तु विधित्वम्, (इति शङ्कने) **मैवम्**—एवंरीत्या न शङ्कनीयम्, **तत्तद्वि....युक्तेः**—उद्गीथादिविधिप्रकरणात्मकसांनिध्यराहित्ये सति, प्रमाणान्तरानधिगतार्थकथनरूपात् विधित्वज्ञापकभूताद्धेतोः, (तत्तद्विधिप्रकरणस्थत्वं, प्राप्तार्थानुवादश्च अर्थवादताज्ञापकौ ; विध्यसान्निध्यं अप्राप्तार्थकथनं च विधित्वज्ञापकाविति भावः) **इह**—प्रकरणे चाऽस्मिन्, **एतत्समीपे च**—उद्गीथे रसतमत्वप्रतिपादकवाक्यसंनिधावपि,

**विविधम्**—नानाप्रकारम्, **तत्तद्दृष्टेर्विधानम्**—उद्गीथे दृष्टिविशेषस्य फलविशेषार्थं ज्ञापनमपि, **समालक्षि**—स्फुटं दृश्यमानमेवाऽस्ति, (दृष्टिविधिसांनिध्यमपि अस्य दृष्टिविधित्वनिश्चायकमिति भावः) **तेन**—उक्तेनाऽनेन ज्ञापकजातेन, **अनन्यार्थशिष्टे**—इतरानुपकारकत्वेन श्रुतिसिद्धे, **फलवति च**—ऋतुवीर्यवत्तरत्वरूपफलजनके च उद्गीथोपासनाख्ये क्रियाविशेषे, **विधिः कल्प्यमानः**—विधित्वकल्पनमेव, **युज्यते**—युक्तिसम्पन्नं भवति ; न तु प्राशस्त्यपरतया अर्थवादत्वकल्पनम् (अतः अन्यार्थशिष्टफलरहितजुह्वादिन्यायो नात्र स्वीकार्य इति) ॥ ८ ॥

(401) किं च प्राप्तेरभावान्न तदनुवदनं नाऽधिरोप्यस्तुतिर्वा

युक्ता विध्येकवाक्ये गतिरियमगतेः साऽत्र नाऽऽसक्तिहानेः ।

उत्कर्षः कल्प्यते चेदगतिकविषये तत् प्रसह्य प्रसह्यं

मध्ये विद्याविधीनां वचनमिदमिति स्यात् तु [1]विद्यार्थं[1] मेतत् ॥ ९ ॥

**किं च**—अपि च (युक्तिचिन्तायां कृतायां उक्तेऽर्थ एव दार्ढ्यमिति) **प्राप्तेरभावात्**—'स एष रसाना' मित्युक्तस्याऽर्थस्य एतदतिरिक्तेन वाक्यान्तरेणानधिगतेः, **न तदनुवदनम्**—रसतमत्वादिकथनं विहितार्थानुवादरूपं न भवति, (अत एव च) **न अधिरोप्यस्तुतिर्वा**—अतादृशेऽर्थे आरोपतश्चिन्तनीयस्यांशस्य प्राशस्त्यकथनप्रवृत्तमपि न भवतीदं वाक्यम्, **इयम्**—अधिरोप्यस्तुतित्ववर्णनरूपा, **अगतेः गतिः**—गत्यन्तररहितस्य चिन्तनीया निर्वहणरीतिः, **विध्येकवाक्ये युक्ता**—विधायकवाक्येन सहैकवाक्यतापन्ने वाक्ये एव सामञ्जस्यवती ; न तु तद्रहिते, **सा**—तादृशी रीतिः, **अत्र न**—'स एष रसाना' मित्यादिके वाक्ये न युक्ता भवति, **आस(क्ति)त्तिहानेः**—विधिवाक्यसंनिधेरभावात् (विधिवाक्यैकवाक्यताया वक्तुमशक्यत्वात्) **उत्कर्षः**—स्वाभाविकतया यत्र वर्तते विधिः तत्संनिहितत्वारोपेण तदैकवाक्यम्, **कल्प्यते चेत्**—(वस्तुतोऽविद्यमानमपि) अध्यस्यते इति चिन्तनमपि न साधु भवति, (यतः) **प्रसह्य प्रसह्यम्**—बलात्कृत्य अभ्युपगम्यम्, **तत्**—उत्कर्षकल्पनम्, **अगतिकविषये**—निर्वाहकोपायान्तररहिते स्थले एव युक्तं भवति ; न तु दृष्टिविधिपरतया निर्वहणयोग्ये प्रकृतस्थले, **विद्याविधीनां मध्ये**—उपासनविधायकानां बहूनां वाक्यानां मध्ये, **इदं वचनमिति**—'स एष रसाना' मिति वाक्यमस्तीति हेतोः, **एतत्**—प्रस्तुतं वाक्यम्, **विद्यार्थं स्यात्त**—विद्याविधानप्रयोजनकं भवेदेवेति ॥ ९ ॥

---

[1] विध्यर्थं—च. [2] विध्यर्थत्वेऽपि—च.

(402) [2]विद्यार्थत्वेऽपि[2] युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं
दृष्टयुद्देशेऽतिचारादथ च विशयनं स्यादिति त्वर्भकोक्तिः ।
नित्येऽस्मिन् ह्यप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे
त्वित्थम्भावे बुभुत्स्ये वच इह फलवद् दृष्टिविध्यर्थमेव ॥ १० ॥

**विद्यार्थत्वेपि**—उपासनविधितात्पर्यकत्वेऽपि, **इयम्**—'स एष रसाना'मित्येवंरूपा रसतमत्वोक्तिः, **असतः कीर्तनात्**—उद्गीथरूपेऽर्थे असम्भविनः रसतमत्वस्य कथनाद्धेतोः, **स्तुतिः**—प्राशस्त्यकथनरूपाऽपि भवितुमर्हति, (अन्यदीयगुणानामन्यत्र धर्मिण्यसतामारोपस्यैव स्तुतित्वात्) इति **अयुक्तम्**—एवं शङ्कनं न युक्तिमत्, (कुतः?) **दृष्टयुद्देशे**—अन्यत्र अन्यदृष्टिविधिपरे (विषहारिमन्त्रादिप्रयोगस्थलीये 'आत्मानं गरुडं ध्यायेत्' इत्यादिवाक्ये, **अतिचारात्**—'यत्राविद्यमानार्थकथनरूपत्वं तत्र स्तुतिरूपत्वम्' इति व्याप्तेः नैयत्यभङ्गात्, तस्य स्तुतित्वाव्याप्यत्वात्, **अथ च**—व्याप्तिनिश्चयाभावेपि, **विशयनं स्यात्**—व्यापकत्व-संशयेनाऽहितः स्तुतिरूपत्वसंशयोऽपि वा भवितुमर्हः, **इति तु अर्भकोक्तिः स्यात्**—एवं कथनं तु बाल-भाषितमेव भवेत्; न तु व्यवहारव्युत्पन्नवचनं स्यात्, **हि**—यतः, **अस्मिन्**—संशये, **नित्ये**—सार्वकालिकतयाऽनुवर्तमाने सति, **निगमः**—वेदः, **अप्रमाणं प्रसजति**—निश्चयाजननाद्धेतोः (प्रमाजनकत्वं हि प्रमाणत्वमिति) प्रमाणत्वरहित आपतति, **युक्तिवार्यत्वपक्षे तु**—संशयस्य सार्वकालिकतां विहाय विशेषदर्शनादिरूपया युक्त्या परिहार्य इत्यभ्युपगमे तु, **इत्थम्भावे**—प्रमाणानुग्राहके न्याये, **बुभुत्स्ये**—बोधनीयतया विवक्षार्हे सति, **इह**—एतत्प्रकरणगतम्, **फलवत् वचः**—वीर्यवत्तरत्वरूपफलोत्कीर्तनयुक्तं 'यदेव विद्यया' इति वाक्यम्, **दृष्टिविध्यर्थमेव**—रसतमत्ववाक्यस्य उद्गीथे रसतमत्वदृष्टिरूपोपासनविधित्व-निश्चायकमेव न तु स्तुतित्वपर्यवसानसहम् ॥ १० ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

स्तुतिमात्राधिकरणे—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' इत्यादिवाक्यानाम् उद्गीथादिस्तुतिपरत्वमाशङ्क्य,

रसतमत्वादीनां प्रमाणान्तराप्राप्तत्वात्, उद्गीथादिषु रसतमत्वादिदृष्टिविधानार्थानि—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

ब्रह्मसंस्थार्थवादत्वाभावेऽप्याश्रमवाक्ययोः ।
शङ्कोद्गीथार्थवादत्वे स्तुतिनीत्या प्रतीयते ॥ १५८ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

—o—

## (111) पारिप्लवार्थाधिकरणम् ॥ ३–४–३ ॥

(1) शारीरकन्यायकलापसंग्रहः ॥

(161) प्रतर्दनाद्यास्तु विशेषसंज्ञाः पारिप्लवार्था विनियोगहेतोः ।
विद्याविधार्थास्तु [1]तदेकवाक्या[1]न्मन्वादिसंज्ञाचरितार्थनाच्च ॥ ५६ ॥

**प्रतर्दनाद्याः विशेषसंज्ञाः**—'प्रतर्दनो ह वै दैवोदासिः' इत्याद्यारभ्य उपनिषत्सु श्रुताः आख्यानविशेषाः सर्वे, **विनियोगहेतोः पारिप्लवार्थाः**—'आख्यानानि पारिप्लवे शंसन्ति' इत्येवम् आश्वमेधिकपारिप्लवशस्त्रे विनियोगदर्शनात् पारिप्लवप्रयोगार्था एव ; न विद्याविध्युपयोगिनः, (इति शङ्कायाम् , नेदं युक्तम्) **तदेकवाक्यात्**—प्रकरणगतविद्याविधिना साकमेकवाक्यतामवलम्ब्य, **विद्याविधार्थास्तु**—विद्या(उपासन)विध्युपयोगिन एव, (प्रकृतविद्यास्तावकत्वेन विद्याविध्यन्वयिन एव) एवमभ्युपगमे, **मन्वादिसंज्ञाचरितार्थनाच्च**—'राज्ञे पारिप्लवमाचक्षीत, प्रथमेहनि मनुर्वैवस्वतो राजेति' इत्येवं मन्वादिपदघटिताख्यानविशेषाभिधानपूर्वकं शंसनविधानसार्थक्यसम्पत्तेः, (अविशेषेण सर्वेषामेवाऽऽख्यानानां पारिप्लवप्रयोगेऽन्वयस्य श्रुतितात्पर्यविषयत्वे, विशेषणाख्यानोत्कीर्तनस्य वैयर्थ्यापत्तेः) ॥ ५६ ॥

—o—

(2) अधिकरणसारावलिः ॥

(403) विद्यास्वाख्यानभेदा विधिमहिमहृताः सन्तु पारिप्लवार्था
न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः ।
मन्वाद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थं
तेनाऽऽकाङ्क्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः ॥ ११ ॥

---

[1] तदैक्यवाक्या—ख.

**विद्यासु**—तत्तद्विद्याविशेषप्रक्रमवतीषूपनिषत्सु दृष्टाः, **आख्यानभेदाः**—प्रतर्दन-श्वेतकेकेत्वादिसम्बद्धा सर्वेप्येते आख्यायिकाविशेषाः, **विधिमहिमहृताः**—'आख्यानानि पारिप्लवे शंसन्ति' इत्येवंविधविधिगतेन सामर्थ्येन कृतप्रापणाः सन्तः, **पारिप्लवार्थाः सन्तु**—आश्वमेधिकपारिप्लवशस्त्रे विनियोगयोग्या भवन्तु, (इति शङ्कने) **न स्युः**—सर्वेऽप्याख्यानविशेषाः पारिप्लवे विनियोक्तुमर्हा न भवेयुः, **प्रकरणपठितैः**—आख्यायिकाप्रक्रमतः आम्नातैः, **विद्याविधानैः**—तत्तद्विद्योपदेशपरैः श्रुतिवाक्यैः साकम्, **एकवाक्यत्वदृष्टेः**—तदर्थान्वितार्थप्रतिपादकत्वरूपैकवाक्यताया आख्यानेषु दर्शनात्, **तत्र**—पारिप्लवनामके शास्त्रे विधीयमाने च, **कथितम्**—विशिष्य निर्दिष्टम्, **मन्वाद्याख्यानमात्रम्**—मन्वादिरूपाणामाख्येयपुरुषाणां प्रतिनियतानाम् आख्यानमेव, **पारिप्लवार्थं भवति**—पारिप्लवाख्ये शस्त्रे विनियोज्यं भवति, **तेन**—विशिष्योक्तेन मन्वाद्याख्यानविशेषेणैव, **आकाङ्क्षानिवृत्तौ**—आख्यानशंसनविधिगतायाः आकाङ्क्षायाः (स्वार्थनिर्वहणव्यापृतेः) शान्तौ संभवन्त्याम्, **तदधिक**....**क्लृप्तिः न**—विशिष्योक्तेभ्य आख्यानेभ्योतिरिक्तानां इतरविषयकाणामाख्यानानां सर्वेषामपि पारिप्लवशस्त्रार्थविनियोज्यताकल्पनम्, न सङ्गतं भवति ।। ११ ।।

—o—

## (3) अधिकरणार्थसङ्ग्रहः ।।

पारिप्लवार्थाधिकरणे—'प्रतर्दनो ह वै दैवोदासिः' इत्याद्याख्यानानां 'आख्यानानि शंसन्ति' इति विहितशंसने विनियोगार्थत्वमाशङ्क्य,—

'मनुर्वैवस्वतः' इत्यादीनामाख्यानविशेषाणामेव शंसने विनियोगात्, 'प्रतर्दनः' इत्यादीन्याख्यानानि, न शंसनमात्रोपयोगीनि ; किन्तु विद्यार्थानि—इत्युक्तम् ।।

—o—

## (4) नयसङ्गतिमालिका ।।

उद्गीथोपस्तिविधिवत् पारिप्लवविधिर्भवेत् ।
इति शङ्काऽपोद्यतेऽत्र विद्यार्थत्वव्यवस्थया ।। १५९ ।।

इति पारिप्लवार्थाधिकरणम् ।। ३ ।।

—o—

# (112) अग्नीन्धनाद्यधिकरणम् ॥ ३–४–४ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(162) विद्यास्तु यज्ञादितदङ्गहानेः प्रव्राजकानां न हि सम्भवन्ति ।
नैतद् यदिच्छन्त इति श्रुतत्वादग्न्याद्यपेक्षारहितैव साऽस्ति ॥ ५७ ॥

**विद्यास्तु**—सद्विद्यादयः मोक्षोपायभूतोपासनरूपाः ब्रह्मविद्याविशेषाः परम्, **प्रव्राजकानाम्**—'ऊर्ध्वरेतः' पदाभिधेयानां सन्न्यासाश्रमिणां चेतनानाम्, **न हि सम्भवन्ति**—नैव अनुष्ठानयोग्यानि भवितुमर्हन्ति, (कुतः ?) **यज्ञादितदङ्गहानेः**—'विविदिषन्ति यज्ञेन दानेन तपसा' इत्यादिश्रुतिषु विद्याङ्गत्वेनाऽवगतानां यज्ञ-दानादीनां अकृतदारेषु त्यक्तदारेषु वा संन्यासाद्याश्रमिषु अग्न्याधानादिक्रियानर्हत्वकृताप्राप्तिरूपान्निमित्तात्, (इति शङ्कने) **नैतत्**—एवं संन्यासिषु विद्याभावशङ्कनं न युज्यते, **यदिच्छन्त इति श्रुतत्वात्**—'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इत्येवं ब्रह्मवेदनेच्छया ब्रह्मचर्यानुष्ठानस्य श्रुतिप्रतिपन्नतया, ब्रह्मचर्यस्य ब्रह्मचारि-संन्यासिषु सतः ब्रह्मविद्याङ्गताया एवावगमात्, **सा**—ऊर्ध्वरेतसामाश्रमेषु सम्भवन्ती ब्रह्मविद्या, **अग्न्याद्यपेक्षारहितैव अस्ति**—दारसंग्रहायत्ताग्न्याधान-तदनन्तरप्राप्ताग्निहोत्राद्यनुष्ठानादिनिर-पेक्षैव सती, तत्तदाश्रमविहितकर्मसापेक्षतयैव च निरन्तराया स्वसिद्धिं लभत इति ॥ ५७ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(404) यज्ञादेरङ्गभावान्न तदनधिकृतेष्वङ्गिनोऽधिक्रिया स्यात्
विद्यैवं नोर्ध्वरेतस्स्विति न बहुविधस्वाश्रमार्हाङ्गतोक्तेः ।
विद्यायोगश्चतुर्णां विधिरपि हि समः श्रूयते स्मर्यते च
प्रायेणौचित्यभूम्ना मुनिभिरभिहितं क्वाऽपि मोक्षाश्रमत्वम् ॥ १२ ॥

**यज्ञादेः**—अग्निहोत्र-दर्शपूर्णमासादेः अग्न्याधानानन्तरसिद्धिकस्य कर्मजातस्य, **अङ्गभावात्**—'विविदिषन्ति यज्ञेन दानेन तपसा' इत्यादिश्रुत्यवगतोपकारकतायाः विद्यां प्रति सद्भावात्, **तदनधिकृतेषु**—अग्नि-तत्साध्यकर्माधिकाररहितेषु संन्यासाद्याश्रमिषु, **अङ्गिनः**—यज्ञादिकर्मोपकार्यत्वैकस्वभावायाः मोक्षोपायभूतायाः ब्रह्मविद्यायाः विषये, **अधिक्रिया न स्यात्**—अनुष्ठानार्हतारूपोऽधिकारः नैव भवितुमर्हः, **एवम्**—अनेन हेतुना, **ऊर्ध्वरेतस्सु**—अकृतदाराश्रमिषु,

**न विद्येति**—ब्रह्मविद्या नैव सम्भावितेति शङ्कने, **न**—नेदं साधु, **बहुविधस्वाश्रमाहाङ्ग-तोक्तेः**—यज्ञकर्मादीनि विहाय नानाविधानां तत्तदाश्रममाश्रितानुष्ठानयोग्यानां प्रणवजप-संगवर्जन-प्रभृतीनामेव विद्योपकारकतायाः श्रुतिस्मृत्यादिषु उक्तत्वात्, **चतुर्णाम्**—चतुर्ष्वाश्रमेषु प्रवृत्ता-नामपि त्रैवर्णिकानाम्, **विद्यायोगः**—अपवर्गोपायभूतब्रह्मविद्यास्वनुष्ठातृत्वेनान्वयः, **विधिरपि**—विद्या-तदनुष्ठानप्रकाराद्युपदेशश्च, **समः**—अग्न्यधिकारवद्गृहस्थाद्यपेक्षया अविशेषेण, **श्रूयते स्मर्यते च हि**—श्रुतिवाक्यतो ज्ञायते स्मृतिभ्योऽवगम्यते च खलु, (एवंस्थिते) **क्वाऽपि**—यत्र क्वचित् स्मृतिपुराणादौ **मोक्षाश्रमत्वम्**—संन्यासाश्रमस्य मोक्षाश्रमत्वेन व्यपदेशः, **प्रायेणौ-चित्यभूम्ना**—विद्यासम्पादनौचित्याधिक्येन, **मुनिभिः**—ऋषिभिः धर्मतत्त्वावेदनप्रवृत्तैः, **अभिहितम्**—कथितमास्ते ॥ १२ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

अग्नीन्धनाद्यधिकरणे—ऊर्ध्वरेतस्कानामाश्रमेषु यज्ञाद्यभावात्, तदङ्गिका ब्रह्मविद्याऽपि तेषां न सम्भवति—इत्याशङ्क्य,

'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिश्रुतेः, तेषामपि ब्रह्मविद्यावगमात्, तेषां विद्या अग्नीन्धनाद्यनपेक्षा—इत्युक्तम्।

—o—

### (4) नयसङ्गतिमालिका ॥

स्तुतिप्रसक्तौ न्यायौ द्वौ पारिव्राज्ये स्थिते सति।
कर्मणोऽनङ्गताशङ्काऽपोद्याऽग्नीन्धननीतितः ॥ १६० ॥

इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

—o—

## (113) सर्वापेक्षाधिकरणम् ॥ ३–४–५ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(163) साधारणत्वाद्गृहमेधिनां च प्रव्राजिवत् सा तु तदङ्गहीना।
नैवं तु यज्ञादिकवाक्यभावात् सर्वत्र च स्वाश्रमधर्मवत्त्वात् ॥ ५८ ॥

**सा तु**—अपवर्गोपायतया श्रुत्यवगता ब्रह्मविद्या परम्, **प्रव्राजिवत्**—संन्यासाश्रमिणामिव, **गृहमेधिनां च**—गृहस्थानामपि, **तदङ्गहीना**—विद्याङ्गभूतकर्माकार्या न भवति, **साधारणत्वात्**—(मोक्षोपायविद्यात्वस्य संन्यासि-गृहस्थाख्यानुष्ठातृभेदमात्रेण भिन्नरूपताया अप्राप्तेः) अविशिष्टस्वरूपत्वात्, ('संन्यासिषु अनङ्गिकाया एव तस्याः लब्धस्वरूपता ; गृहस्थेषु पुनः साङ्गाया एव स्वरूपसिद्धिः' इति भेदकल्पनायोगात्) (इति शङ्कने) **नैवं तु**—एवं नैव शङ्कार्हम्, **यज्ञादिकवाक्यभावात्**—'यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिविद्याङ्ग-ज्ञापकवाक्यस्य सत्तां (आशयं वा) अवलम्ब्य, **सर्वत्र च**—सर्वस्मिन्नप्याश्रमे, **स्वाश्रमधर्म-वत्त्वात्**—स्वस्वाश्रमानुगुणधर्माणामेव विद्याङ्गतायाः सिद्धेः (कुत्राप्यङ्गहीनायाः स्वरूपानिष्पत्तेः)॥ [उक्तश्रुतौ 'यज्ञेन दानेन' इत्यस्य, गृहस्थधर्मोपलक्षकता ; 'तपसाऽनाशकेन' इत्युक्त-कायशोषणादिरूपव्रतोपवासादेः, यज्ञादिकर्मानधिकृताश्रमधर्मोपलक्षकतेत्यपि व्याख्यानसम्भवः] ॥

—o—

## (2) अधिकरणसारावलिः ॥

(405) त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्सु दृष्ट्या
विद्या तेनाऽनपेक्षा गृहवति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिः श्रुतिभिरवगता ह्यस्य सा तत्प्रसाध्या
जिज्ञासार्थत्ववादो जिगमिषति पदेत्यादिनीत्या निवर्त्यः ॥ १३ ॥

**ऊर्ध्वरेतस्सु**—यज्ञादिकर्मानधिकृताश्रमिषु ब्रह्मचर्य-पारिव्राज्याश्रमवत्सु, **यज्ञादिधर्मे**—यज्ञप्रभृतिके विद्याङ्गत्वेन श्रुतिचोदितेऽर्थे, **त्यक्ते**—अननुष्ठितेऽपि, **परभजनविधेः**—मोक्षोपाय-भूतपरविद्याविधानस्य (अनुष्ठानस्य वा) **दृष्ट्या**—श्रुतौ दर्शनेन ज्ञापकेन, **गृहवति च**—गृहस्थाश्रमवत्यपि पुरुषे, **विद्या**—परोपासनात्मिका सद्विद्यादिका, **तेन**—यज्ञादिधर्मेण, **अनपेक्षा**—असहकृतैव सती, **भवेत्**—निष्पन्नस्वरूपा भवितुमर्हति, **इति**—एवंरूपा उक्तिः, **अनालोचितोक्तिः**—युक्ति-प्रमाणचिन्तारहिता वाक्, **हि**—यतः, **अस्य**—गृहस्थाश्रमवतः, **सा**—विद्या, **यज्ञेनेत्यादिकाभिः श्रुतिभिः**—'यज्ञेन दानेन तपसाऽनाशकेन' इत्येवमादिभिः श्रुतिभिः. **तत्प्रसाध्या अवगता**—यज्ञाद्यङ्गनिष्पाद्यत्वेनैव ज्ञाता भवति, **जिज्ञासार्थत्ववादः**—यज्ञादिकर्मणां विविदिषासाधनत्ववादः (अद्वैतिभिर्वर्ण्यमानः) **'पदा जिगमिषति' इत्यादि-नीत्या**—'पदा जिगमिषति' इति वाक्यात्, यथा पादकरणकस्य गमने एव प्रतीतिः ; न तु गमनेच्छायां तथा, **निवर्त्यः**—अयुक्तत्वेन समर्थनीयः 'विविदिषन्ति यज्ञेने'ति वाक्यस्य

यज्ञादिना विद्यानिष्पत्तिसाधनभूतेन विद्यां स्वेषु निष्पादयितुमिच्छन्ति-इति, शब्दार्थ-सिद्धेः ॥ १३ ॥

(406) नन्विच्छार्थत्वहानि जिगमिषति पदेत्यादिके गत्यभावाच्-

छ्रुत्युक्तेऽस्मिंस्तथा नेत्यसदिह च यतो गत्यभावः समानः ।

इच्छा स्याद् धीविशेषात् तदनुपजनने कर्मभिः सा न साध्या

जिज्ञासां प्राप्तुमिच्छोर्न च न भवति तज्ज्ञानमिष्टं पुरैव ॥ १४ ॥

**'पदा जिगमिषति' इत्यादिके**—'पदा जिगमिषति, अश्वेन जिगमिषति, असिना जिघांसति' इत्येवंप्रभृतिके प्रयोगविशेषे, **इच्छार्थत्वहानिः**—(पदा, अश्वेन, असिना' इति तृतीयान्तपदबोध्यस्य पाद-अश्व-असिप्रभृतेरर्थस्य) गमनेच्छा-हननेच्छाद्यात्मके सन्नन्तार्थे करणत्वेनान्वयपरित्यागः, **गत्यभावात् ननु**—प्रयोगानुगुणार्थे अयोग्यतारूपं विरोधमालोच्य उपायान्तरविरहतः खलु क्रियते, **श्रुत्युक्ते**—'विविदिषन्ति यज्ञेन' इत्याद्युपनिषद्वाक्यावगते, **अस्मिन्**—यज्ञादिकर्मरूपे साधने, **तथा न**—वेदनेच्छार्थत्वपरित्यागः, न कर्तुं शक्यः; (अर्थस्य श्रौतत्वेन विरोधाविरोधचिन्तायाः अस्माभिरकर्तव्यत्वात्) **इत्यसत्**—एवं शङ्कनमसाधु, **यतः**—यस्माद्धेतोः, **इह च**—प्रकृते श्रुतिवाक्येऽपि, **गत्यभावः**—यज्ञादेः कर्मणः ज्ञानेच्छासम्पादकत्वायोगरूपः उपायान्तरविरहः **समानः**—अविशिष्ट एव, **इच्छा**—ज्ञानविषयिणी लिप्सा, **धीविशेषात् स्यात्**—इष्यमाणार्थगतसुखतमत्वज्ञानात् (सौन्दर्यज्ञानाद्वा) उत्पत्तुमर्हति, (जानाति, इच्छति यतते इति नीतेः) **तदनुपजनने**—विषयसौन्दर्यज्ञानस्यानुत्पत्तौ सत्याम्, **सा**—वेदनविषयणी लिप्सा, **कर्मभिः**—यज्ञादिभिः, **न साध्या**—न उत्पत्तुमर्हा, **जिज्ञासां प्राप्तुमिच्छोः**—विविदिषाप्रेप्सोः पुरुषस्य, **तत् ज्ञानम्**—कर्मसाध्यया विविदिषया विषयीकरणीयं वेदनम्, **पुरैव**—विविदिषार्थयज्ञाद्यनुष्ठानतः, प्रागेव, **इष्टं न भवति न च**—ईप्सितं नासीदिति नैव वक्तुं शक्यम् (अवश्यमिष्टमेवासीदिति तदर्थं कर्माचरणानुपपत्तिरेव) ॥१४॥

(407) नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योज्यं ततः किं

नेच्छार्थं धीविशेषप्रजननमुदितं तावता वारितं स्यात् ।

ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नाऽपलापक्षमं ते

निध्यानन्यायतोऽतस्त्वनुवदति विधेयेष्टतां सम्प्रयोगः ॥ १५ ॥

**ननु**—अयि भोः! **अत्र**—'विविदिषन्ति यज्ञेने'त्यादिश्रुतिवाक्ये, **इदं कर्म**—यज्ञाद्याचरणरूपं कर्म, **इच्छानुवृत्तिं प्रति**—ब्रह्मवेदनेच्छासान्तत्यं प्रति हेतुतया, **विहितं**

**योज्यम्**—उपदिष्टमिति अनुवर्तितव्यं तत् (अन्वेतव्यम्) (न तु केवलां साधारणेच्छां प्रति ; येन पूर्वसिद्धत्वान्योन्याश्रयादिकं आपाद्येत ; इति चिन्तने), **ततः किम्**—तस्मात् को लाभः ?, (न कोऽपि लाभः इच्छासान्तत्याय कर्मसान्तत्ये, कर्मणो ज्ञानासहभावित्वं सिद्धान्तसिद्धं भज्येत) **इच्छार्थं उदितं धीविशेषप्रजननम्**—विविदिषार्थं प्रथमतः ज्ञानविशेषस्य उत्पत्तेरावश्यकत्वं यदुक्तं तत्, **तावता**—इच्छासन्तत्यतात्पर्यकत्वाभ्युपगममात्रेण, **न वारितं स्यात्**—नैव प्रतिविहितं भवेत्, (ज्ञानं विना इच्छायाः सर्वथा अनुत्पादात्) **ज्ञानार्थं कर्मविध्यन्तरमपि**—मोक्षोपायभूतं ज्ञानमुद्दिश्य प्रवृत्तं कर्मविधायकं वाक्यान्तरमपि, **विविधम्**—श्रौतं स्मार्तं चेति नानाप्रकारमुपलभ्यमानम्, **ते**—भवतः, **अपलापक्षमं न**—नास्तीत्यपह्नवार्हं न भवति, (प्रत्यक्षव्याहतेः), **अतः**—उक्ताद्धेतोः, **सन्प्रयोगः**—'विविदिषन्ती'त्ययं इच्छार्थसन्प्रत्ययघटितः शब्दः, **निध्यानन्यायतः**—'निदिध्यासितव्यः' इति सन्घटितशब्दवत्, **विधेयेष्टताम्**—विधेयभूतस्य वेदनस्य इच्छाविषयताम्, **अनुवदति**—ज्ञातामेव पुनरपि वदति (स्पष्टतायै दार्ढ्याय च) ।। १५ ।।

—o—

(3) **अधिकरणार्थसङ्ग्रहः ।।**

सर्वापेक्षाधिकरणे—यदि ! ऊर्ध्वरेतसां विद्या यज्ञाद्यनपेक्षा ; तर्हि गृहस्थेष्वपि सा तदनपेक्षैव स्यात्—इत्याशङ्क्य,

'यज्ञेन दानेन' इति श्रुतेः, गृहस्थेषु विद्या यज्ञाद्यपेक्षैव—इत्युक्तम् ।।

—o—

(4) **नयसङ्गतिमालिका ।।**

यज्ञानपेक्षा विद्यैषा स्यादग्नीन्धननीतिवत् ।
इति शङ्काऽपोद्यतेऽथ सर्वापेक्षानये पुनः ।। १६१ ।।

इति सर्वापेक्षाधिकरणम् ।। ५ ।।

—o—

## (114) शमदमाद्यधिकरणम् ।। ३–४–६ ।।

### (1) शारीरकन्यायकलापसंग्रहः ।।

(164) व्यापारकर्माधिकृतत्वहेतोः तेषां तु विद्या न शमादियुक्ता ।
नैतच्छमादेस्तु तदङ्गभावाद्‌द्वयोस्तयोर्भिन्ननिबन्धनत्वात् ।। ५९ ।।

**व्यापारकर्माधिकृतत्वहेतोः**—निवृत्तिरूपतारहितेषु बाह्यान्तरकरणव्यापाराख्येषु कर्मसु प्राप्ताधिकारताया दर्शनात्, **तेषां विद्या**—गृहस्थानां मोक्षोपायभूता ब्रह्मविद्या, **शमादियुक्ता न तु**—शमाद्यन्तरङ्गोपायोपकृता नैव भवितुमर्हा, (इति शङ्कने) **नैतत्**—न युक्तं चेदं शङ्कनम्, **शमादेस्तु**—शमादेरपि, **तदङ्गभावात्**—प्रमाणप्रतिपन्नायाः विद्योपकारकतायाः सत्त्वात्, **तयोः द्वयोः**—बाह्यकरणव्यापारतन्निवृत्तिरूपयोः कर्म-शमाद्योर्द्वयोरपि, **भिन्ननिबन्धनत्वात्**—विहितव्यापृति-निषिद्धाविहितनिवृत्तिरुपतया मिथोविरोधाभावात् ॥ ५९ ॥

—o—

(2) **अधिकरणसारावलिः** (श्लो. 16–17)

(408) यज्ञादिव्यापृतत्वादनिभृतकरणे सर्वकालं गृहस्थे
शान्त्यादीनामयोगात्तदितरविषयास्ते गुणा इत्ययुक्तम् ।
प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्ते-
स्तत् सर्वं सह्यते चेत् सह तदपि फलाद्युज्झनं चात्र तुल्यम् ॥ १६ ॥

**सर्वकालम्**—समग्रेऽपि जीवितकाले, **यज्ञादिव्यापृतत्वात्**—श्रुतिविहितयज्ञ-दानादिक्रियासु निरन्तरप्रवृत्तत्वाद्धेतोः, **अनिभृतकरणे**—स्तिमितावस्थाऽयोग्येन्द्रियग्रामे, **गृहस्थे**—गार्हस्थ्यवति पुरुषे, **शान्त्यादीनाम्**—अन्तर्बाह्येन्द्रियव्यापारनिरवशेषोपरतिस्वभावानां शम-दमादीनामन्तरङ्गोपायानाम्, **अयोगात्**—विहितैः कर्मभिः सह असहभावरूपाद्विरोधात्, **ते गुणाः**—शम-दमादयो विद्योपकारका गुणाः, **तदितरविषयाः**—कर्माव्यापृतपरिव्राड्विषया एव, **इति अयुक्तम्**—एवं शङ्कनं युक्तिविदूरम्; **प्रव्रज्यादिस्थितानामपि**—संन्यासादिषु कर्मकलापरहितेष्वाश्रमेषु तिष्ठतामपि, **तदुपधिकानेकधर्मप्रवृत्तेः**—संन्यासादिनिबन्धनानां भिक्षाचरण-ग्रामैकरात्रसंचरणादिविविधधर्मेषु स्वेषां प्रवर्तनस्य शास्त्रीयत्वात्, **तत् सर्वं सह्यते चेत् !**—तदखिलं परिव्राडादिगतं शमाद्यविरुद्धस्वभावतया यथायोग्यं समीक्रियते चेत् ! **तदपि सह**—गृहस्थे कर्मादिकमपि शमाद्यविरुद्धयोजनेन समीकृतं भवतीति चिन्तनतः सुखमवतिष्ठस्व; न क्षुब्धस्वान्तो भव; **फलाद्युज्झनम्**—कर्मफलकर्तृत्वाभिसन्ध्याद्यश्लेषेणावस्थानम्, **अत्र च**—परिव्राट्स्विव गृहस्थेष्वपि, **तुल्यम्**—अविशिष्टस्वरूपमेवेति ॥ १६ ॥

(409) प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायै-
रात्मार्हैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते ।
इत्थं नः शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारैर्विभक्तै-
र्निष्प्रत्यूहः प्रसादो निरुपधिसुहृदः श्रीधरस्याऽधिगम्यः ॥ १७ ॥

**प्रज्ञातस्वापराधाः**—(लोके खलु राजसेवापराः पुरुषाः ज्ञानादज्ञानतो वा कृतापराधाः सन्तः, राजकोपास्पदतां प्राप्ताः) स्वम् आगः (राज्ञोऽनभिमतं स्वेनाऽपतितं) कालविशेषे जानन्तः, **अनुपतने**—पश्चात्तापे जाते सति, **प्रभुम्**—स्वसेव्यभूतं राजानम्, **आत्मार्हैः**—स्वैरनुष्ठातुं योग्यैः, **लोकसिद्धैः**—लोके एवाऽन्यत्राऽवगतैः **उपायैः**—क्षमायाचन-पुरुषकार-योजन-तदभिमतोपायनसमर्पणप्रभृतिभिः प्रभुप्रसादनोचितैः व्यापारैः, **अर्चयन्तः**—पूजयन्तः, प्रसन्नान्तःकरणं कुर्वन्तः, **क्रमशमितरुषः**—कालक्रमेण निवारित (प्रभु) कोपाः, **तस्य सेवाम्**—(पूर्वं क्रियमाणां सतीं) प्रभोः चित्तप्रसादनीं तत्संमतामेव किङ्करभावयुतां (तत्संनिधौ) व्यापृतिम्, **लभन्ते**—पुनरपि प्राप्नुवन्ति खलु !, **इत्थम्**—अनेनैव प्रकारेण, **शास्त्रसिद्धैः**—शास्त्रतोऽवगतैः, **इदमनिदमिति विभक्तैः**—'इदं कर्म अनुष्ठेयम्, इदं नाऽनुष्ठेयम्' इत्येवं पृथक् पृथक् (निर्दिष्ट) विविक्तस्वरूपस्वभावैः, **स्वाधिकारैः**—स्वस्ववर्णाश्रमकालदेशाद्यनुगुणैः (निरुपाधिकनिरवधिकप्रभुप्रसादनव्याजभूतैः) व्यापारैः, **निरुपधिसुहृदः**—अव्याजसखस्य, **श्रीधरस्य**—लक्ष्मीपतेः, **निष्प्रत्यूहः**—शङ्कातङ्कविदूरः, **प्रसादः**—अनुग्रहः, **नः**—अस्माकम्, **अधिगम्यः**—सम्पाद्यो भवति ॥ १७ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

शमदमाद्यधिकरणे—यज्ञादीनां प्रवृत्तिस्वरूपत्वात्, शमादीनां निवृत्तिरूपत्वेन च तद्विरोधित्वात्, शमादीनां यज्ञाद्यङ्गकविद्याङ्गता न सम्भवति—इत्याशङ्क्य,

विषयभेदेन विरोधाभावात्. 'शान्तो दान्तः' इति श्रवणाच्च, शमादीनां विद्याङ्गत्वमस्त्येव—इति सिद्धान्तितम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

गृहस्थस्याऽपि विद्या चेच्छान्तिदान्त्याद्ययोगतः ।
शमाद्यनङ्गताशङ्का शमनीत्या व्यपोह्यते ॥ १६२ ॥

इति शमदमाद्यधिकरणम् ॥ ६ ॥

—o—

# (115) सर्वान्नानुमत्यधिकरणम् ॥ ३–४–७ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(165) [1]सर्वान्नभुक्तिस्तु[1] विशेषहानेः स्यात् सर्वदा प्राणविदामितीदम् ।
न शोभते शक्तिविशेषभाजः प्राणात्यये ब्रह्मविदोऽपि दृष्टेः ॥ ६० ॥

**प्राणविदाम्**—प्राणविद्यानिष्ठानाम्, **सर्वान्नभुक्तिः**—(नियमाननुसरणेन) सर्वान्नभक्षणाभ्यनुज्ञानम्, **विशेषहानेः**—(ब्रह्मविदां प्राणविदां च विद्यानिष्ठत्वसाम्येन) वैलक्षण्यस्याभावात्, (ब्रह्मविदां तदनुमतौ प्राणविदामपि तदनुमतिसिद्धेः) **सर्वदा तु स्यात्**—सार्वकालिकमेव भवितुमर्हति, **इतीदम्**—एवंरूपं एतच्छङ्कनम्, **न शोभते**—नैव सुष्ठु भवति, **शक्तिविशेषभाजः**—प्राणविदपेक्षया महिमातिशयवतः, **ब्रह्मविदोऽपि**—ब्रह्मविद्यानिष्ठस्यापि, **प्राणात्यये**—प्राणसंशयापत्तिवेलायामेव, **दृष्टेः**—उक्तस्य सर्वान्नानुज्ञानस्य शास्त्रसिद्धत्वदर्शनात् ॥ ६० ॥

—o—

## (2) अधिकरणसारावलिः

(410) आहारस्य व्यवस्था न भवति वचनात् प्राणविद्याधिकर्तुः
सामान्यस्थो निषेधो बलवति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाऽविधेः स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे
पश्यैतत्प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठे[2]ह्युषस्तौ[2] ॥ १८ ॥

**प्राणविद्याधिकर्तुः**—प्राणोपासननिष्ठस्य, **वचनात्**—'न ह वा.... किंचनानन्नं भवति' इति अनदनीयाभावबोधकाद्वाक्यात्, **आहारस्य व्यवस्था न भवति**—'अयमेवाहारः स्वीकार्यः, अयं च न' इत्येवंरूपो विवेकः, नैवाऽस्तीति गम्यते, **हि**—यतः, **सामान्यस्थः**—सामान्यधर्मावलम्बी, **निषेधः**—प्रतिषेधपरः शब्दः, **विधौ**—निषेधप्रतियोगिभूतार्थविधायके शास्त्रे, **बलवति**—अनन्यथासिद्धत्वेन (निषेधवाक्येन स्वविषयापहारतः) बलिष्ठे सति, **सङ्कुचेत्**—विध्युद्देश्यतावच्छेदकवर्जितस्वोद्देश्यताको भवेत्, (स्मृति-शिष्टाचारादिना प्राप्ताया नियताहारतायाः, 'न ह वा....अनन्नं भवति' इति सर्वान्नानुमत्या प्राणविदतिरिक्तोद्देश्यकत्वसिद्धेः) **इत्ययुक्तम्**—एवमाहारव्यवस्थापकशास्त्रस्यैव विषयसङ्कोचचिन्तनं, नैव युक्तिसिद्धं भवति,

---

[1] सर्वानुभूतिस्तु—क.   [2] ऽप्युषस्तौ—च.

**अङ्गत्वेन अविधेः**—प्राणोपासनं प्रति सर्वान्नभक्षणस्य उपकारकतया विधितोऽसिद्धेः, **अनुमति-वचनम्**—सर्वान्नभक्षणानुमतिपरं वाक्यम् , **प्राण भङ्गप्रसङ्गे स्यात्**—(प्राणोपासकस्य प्राण-रक्षणोत्कटासक्त्यै) प्राणात्ययापत्तावेव (अनुमतिपरं) भवितुमर्हति, **एतत्**—प्राणात्यये सर्वान्न-भक्षणानुज्ञानदर्शनम् , **प्राणनिष्ठात् अधिकमहिमनि**—प्राणोपासकादप्यतिशयितमाहात्म्यवति, **ब्रह्मनिष्ठे**—परब्रह्मोपासके, **उषस्तौ हि**—उषस्तिनाम्नि चाक्रायणे एव, **पश्य**—छान्दोग्य-श्रुत्यवगतं समालोचय ॥ १८ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

सर्वान्नानुमत्यधिकरणे—प्राणविद्याधिकारिणां सर्वान्नानुमतिः, सर्वदा—इत्याशङ्क्य ब्रह्मविद्यानिष्ठानामपि प्राणत्यये एव सर्वान्नानुमतिदर्शनात् , अन्येषामपि सर्वान्नानु-मतिः प्राणात्यये एव—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

नापेक्षेत प्राणविद्या शममाहाररगोचरम् ।
इति सर्वान्नानुमतिन्यायाच्छङ्का व्यपोदिता ॥ १६३ ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

—o—

## (116) विहितत्वाधिकरणम् ॥ ३-४-८ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(166) विद्याविहीनाश्रमकर्मभूता यज्ञादयो नैव विरोधभावात् ।
नित्यं तदन्यच्च फलं कथं स्यान्नैतत्प्रसङ्गो विनियोगभेदात् ॥ ६१ ॥

**यज्ञादयः**—यज्ञ-दान-तपःप्रभृतयो विद्याङ्गत्वेन निर्णीताः, **विद्या...भूताः नैव**—विद्यारहितानां केवलम् आश्रमाङ्गभूतकर्मरूपा नैव भवितुमर्हन्ति, **विरोधभावात्**—एक-विधानामेव कर्मणाम् आश्रम-विद्योभयाङ्गतायाः मिथो विरुद्धत्वात् , **नित्यं तदन्यच्च फलं**

**कथं स्यात् ?**–(विरोधश्चैवं नित्यं फलं भवति विद्याङ्गत्वे; मोक्षरूपस्य तत्फलस्य नित्यतायामविवादात् । अनित्यं फलं भवति आश्रमाङ्गत्वे ; केवलाश्रमिणां स्वर्गावाप्तेः शास्त्रसिद्धत्वात् । तथा च नित्यानित्यफलसमावेशो भविता । अविलक्षणस्य कर्मस्वरूपस्य ईदृशोभयविधफलहेतुता न घटते । सर्वेषां नित्यमेव वा स्यात् फलम् ; सर्वेषमप्यनित्यमेव वेति) कथमिदं युक्तं स्यान्नित्यमनित्यं च फलम् ? स्वर्गापवर्गोभयरूपम् ? (नैव सर्वथा)—इति शङ्कने ; **न एतत्प्रसङ्गः**—एकविधस्यैव कर्मणः विद्याङ्गत्वाश्रममात्राङ्गत्वाभ्यां नित्यानित्यफलसमावेशप्रसङ्गो नैव भविता, **विनियोगभेदात्**—सङ्कल्पवैलक्षण्यादिकृताङ्गभाववैलक्षण्यादेः अवश्यं भावात् . (एकविधस्यैव तन्तोः कार्पासजस्य, पटं प्रति मङ्गलसूत्रं प्रति च अङ्गभावेऽपि, अङ्गतावैलक्षण्यात् कार्यवैलक्षण्यमनपलपनीयं भवति खलु ; तद्वदत्रापीति) ॥ ६१ ॥

—o—

(2) **अधिकरणसारावलिः** ॥

(411) वर्णादेः (यज्ञादेः) कर्मणां हि श्रुतिरभिदधे ब्रह्मविद्याङ्गभाव-<br>
स्तस्मादब्रह्मनिष्ठे तदनुसरणात्स्वैरितैवाऽस्तु मैवम् ।<br>
नित्यत्वस्याऽपि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारात्<br>
तन्त्रं काम्याग्निहोत्रादिवदिह परविन्नित्यवर्गेऽपि योज्यम् ॥ १९ ॥

**हि**—यतः, **वर्णादेः कर्मणाम्**—वर्णान् आश्रमान् प्रति च विहितानां यज्ञ-दानादिक्रियाणाम्, **ब्रह्मविद्याङ्गभावः**—ब्रह्मविद्यानिष्पादकत्वरूपं तदङ्गत्वम्, **श्रुतिभिः**—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने'त्यादिभिरुपनिषद्वाक्यैः, **अभिदधे**–विहितमस्ति, **तस्मात्**—ततः हेतोः, **अब्रह्मनिष्ठे**—अनाश्रितब्रह्मविद्ये केवलाश्रमिणि, **तदनुसरणात्**—ब्रह्मविद्याङ्गत्वेन परिगणितानां यज्ञादीनामननुष्ठानकृता, **स्वैरितैव**—स्वच्छन्दप्रवृत्तैव भवतु नाम, ततश्च तस्मिन् धर्मभ्रंशोऽपि माऽस्तु, (इति शङ्कने) **मैवम्**—एवं रीत्या शङ्कनमनुचितम् । **तदुचितविनियुक्त्यन्यभावानुसारात्**—नित्यत्वानुगुणस्य अङ्गभाववैलक्षण्यस्य आश्रयणतः, **नित्यत्वस्यापि सिद्धेः**—केवलाश्रमङ्गभावे अनित्यत्वस्येव विद्यासहिताश्रमाङ्गभावे नित्यताया अपि श्रुतिसिद्धाया एव लाभात्, **इह**—आश्रमाङ्गे कर्मणि, **तन्त्रम्**—एकेनाऽनुष्ठानेनैवानुष्ठानद्वयलाभः अनेकोद्देश्यकमेकमनुष्ठानं वा, **काम्याग्निहोत्रवत्**—स्वर्गादिकामप्रवृत्तकृते अग्निहोत्राख्ये कर्मणीव, (तत्र हि ! स्वर्गार्थं वर्णाश्रमार्थं चेति अग्निहोत्रद्वयमनुष्ठातुं न हि ! शक्यम् ; काल-देश-कर्त्रादिषु मिथोऽवरोधात्, ततश्चैकमेव काम्यमग्निहोत्रं स्वर्गादिकमपि लम्भयति ;

नित्याग्निहोत्रानुष्ठानमपि सिद्ध्यति) **परविन्नित्यवर्गेऽपि**—परविद्यानिष्ठानां नित्यार्थानुष्ठानजाते क्रियमाणेऽपि, (तेन विद्याङ्गकर्मणः, आश्रमधर्मानुष्ठानस्येत्युभयोरपि कृतत्वम्) **योज्यम्**—न्यायसिद्धार्थपर्यालोचनया निर्वहणीयम् ॥ १९ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

विहितत्वाधिकरणे—विद्याङ्गकर्मणाम् आश्रमाङ्गत्वं नास्ति—इत्याशङ्क्य, विद्याङ्गानामेव आश्रमाङ्गतया विहितत्वात्, आश्रमाङ्गत्वमपि—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

एवं कर्माऽखिलं ज्ञाने विदुषां चेत् समाप्यते ।
अन्येषां स्वैरिताक्षेपापवादो विहितत्वतः ॥ १६४ ॥

इति विहितत्वाधिकरणम् ॥ ८ ॥

—o—

## (117) विधुराधिकरणम् ॥ ३–४–९ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(167) यज्ञादिकर्माङ्गकलापहानेर्विद्याधिकारो न निराश्रमाणाम् ।
तन्नैव रैकादिषु लक्षितत्वाज्जपोपवासाद्युपकारतश्च ॥ ६२ ॥

**निराश्रमाणाम्**—आश्रमरहितानाम्, (अकृतदार-मृतदारादिरूपाणाम्) **यज्ञादि.... हानेः**—यज्ञप्रभृतिकर्मरूपस्य अङ्गजातस्य अनुष्ठानाप्रसङ्गात्, **न विद्याधिकारः**—नास्त्येव मोक्षोपायभूतब्रह्मविद्यानुष्ठानार्हता, (इति शङ्कने) **तत् नैव**—उक्तमधिकाराभावशङ्कनम् नैवोचितम्, **रैकादिषु**—रैक-भीष्म-संवर्तादिषु श्रुत्यादिप्रसिद्धेषु, **लक्षितत्वात्**—विद्यानिष्ठतायाः अनाश्रमित्वस्य च दृष्टत्वात्, **जपोपवासाद्युपकारतश्च**—तेषु विशिष्टमहामन्त्राणां सावित्र्यादीनां जपैः एकादश्युपवासादिभिः अनशनव्रतैश्च आहितमुपकारं प्राप्य विद्यासिद्धेः ॥ ६२ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(412) दारालाभे विरक्तेर्म्रदिमनि च भवेदन्तरेणाऽऽश्रमान् य-
स्तस्मिन्निश्शेषधर्मत्यजि भवतु कथं ब्रह्मविद्येति चेन्न ।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैः सा हि ! तत्राऽपि साङ्गा
भीष्मादौ दृष्टमेतद्भवति तु वृषले गत्यभावादभावः ॥ २० ॥

**दारालाभे**—(वेदाध्ययनसमापनानन्तरं समावर्तने कृतेऽपि) सत्कुलजायाः कन्यायाः अप्राप्तौ सत्याम्, (गार्हस्थ्यालाभतः), **विरक्तेर्म्रदिमनि च**—पारिव्राज्योपयोगिनः दृष्टानुश्रविकभोगवैतृष्ण्यस्य मान्द्ये च सति (संन्यासालाभतः), **आश्रमान् अन्तरेण**—परिगणिताश्रमचतुष्टयवर्जितः, **यः भवेत्**—यो विद्येत नरः, **निःशेषधर्मत्यजि**—सर्वथा आश्रमधर्मान्वयविरहिणि, **तस्मिन्**—तादृशे पुरुषे, **ब्रह्मविद्या**—नियमेनैव आश्रमधर्मोपकार्या, परमात्मोपासनरूपा मोक्षोपायभूता विद्या, **कथं भवतु**—केन वा प्रकारेण अनुष्ठानार्हा वर्तताम् ! अङ्गिनः अङ्गसहभावनैयत्यात्, (तदभावे तदभावात्) **इति चेत्**—एवम् अनाश्रमिणि ब्रह्मविद्यायाः, अभावशङ्कने प्राप्ते, **न**—नैतद्युक्तम्; **हिः**—यतः, **तत्राऽपि**—अकृतदार-मृतदारादौ अनाश्रमित्वेन आश्रमत्वेन आश्रमधर्मसामान्यरहितेऽपि, **गुणनियतियुतैः**—विद्योपकारकत्वौपयिकगुणनियमसंस्कृतैः, **सामान्यैः वर्णधर्मैः**—सर्ववर्णसाधारणैः सत्यवाक्त्व-मितवाक्त्वाचापल्यादिसहितव्रतोपवासादिभिः धर्मैरनुष्ठीयमानैः, **सा**—ब्रह्मविद्या, **साङ्गा**—उपकारकभूताङ्गकलापयुक्तैव भवति, (अतः अङ्गलोपतोऽङ्गिलोपो नैव सम्भावितः) **एतत्**—अनाश्रमित्वेऽपि विद्यानिष्ठत्वम्, **भीष्मादौ दृष्टम्**—भीष्मप्रभृतिके वेदार्थतत्त्वज्ञे पुरुषे साङ्गमवर्ततेति महाभारतादितः परमप्रमाणभूतात् सुस्पष्टमधिगतम्, **वृषले तु**—चतुर्थवर्णीये परम्, **गत्यभावात्**—उपायाभावात्, **अभावो भवति**—विद्याधिकाराभावो निश्चित एवाऽस्ति ॥ २० ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

विधुराधिकरणे—विधुरादीनां ब्रह्मविद्यायामधिकारो नास्ति—इत्याशङ्क्य,

रैक्वादीनाम् अनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वदर्शनात्, विधुरादीनामप्यधिकारोऽस्ति इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

चेद्विद्याऽऽश्रमधर्माङ्गा नाऽधिकुर्यादनाश्रमी ।
इत्याक्षेपोऽपोद्यतेऽथाऽन्तरा चापि न ये पुनः ॥ १६५ ॥

इति विधुराधिकरणम् ॥ ९ ॥

—o—

## (118) तद्भूताधिकरणम् ॥ ३–४–१० ॥

(1) **शारीरकन्यायकलापसङ्ग्रहः ॥**

(168) जपोपवासाद्यनुमोदभावाद्विद्याधि[1]कारो विपरि[1]च्युतानाम् ।
नैतत् स्मृतेस्तत्परिहारहानौ सन्दर्शनाच्छिष्ट[2]बहिष्कृतेश्च[2] ॥ ६३ ॥

**विपरिच्युतानाम्**—नैष्ठिकत्वादितः प्राप्तप्रच्यवानाम् (आश्रमभ्रष्टानाम्), **जपोपवासाद्यनुमोदभावात्**—जपविशेषानशनव्रतादिकरणे शास्त्रानुमतिसद्भावात्, **विद्याधिकारः**—ब्रह्मविद्यानुष्ठानार्हता, अस्त्येव, (इति शङ्कने) **एतत् न**—एवं शङ्कनं नोचितम्, **तत्परिहारहानौ स्मृतेः**—आश्रमभ्रंशप्रायश्चित्तस्य अभावबोधिकायाः स्मृतेः सत्त्वात्, **शिष्टबहिष्कृतेः सन्दर्शनाच**—आश्रमभ्रष्टानां शिष्टैः बहिष्करणीयतायाः दृष्टत्वादपि ज्ञापकात् ॥ ६३ ॥

—o—

(2) **अधिकरणसारावलिः ॥** (श्लो॰ 21–24)

(413) आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनाच-
स्तत्राऽपि ब्रह्मविद्या भवतु सहकृता [3]तदृशार्हैः[3]स्वधर्मैः ।
मैवं यद्यप्यमीच्छन्त्युपपतनमिदं शोधकं चास्त्यनेकं
सर्वार्हं कीर्तनाद्यं तदपि तदुचितो नैष तादृङ्निषेधात् ॥ २१ ॥

**नैष्ठिकादित्रयम्**—नैष्ठिकब्रह्मचर्य-वानप्रस्थ-संन्यासरूपमाश्रमत्रयम् (त्रिष्वन्यतमम्), **आरूढः**—परिगृहीतवान् सन्, **अथ**—पश्चात्, **तत्परावर्तनात्**—तेभ्य आश्रमेभ्यः सकाशात्

---

[1] कारोऽपि परि—ग. [2] परि०कृतेश्च—ख. [3] तत्तदर्हैः—च.

प्रतिनिवर्तनं प्राप्य, **यः पतितः**—यो भ्रंशं प्राप्तवान्, **तत्राऽपि**—आश्रमप्रच्युते तादृशेऽपि, **तद्दशार्हैः**—आश्रमप्रच्युतावस्थायाम् अनुष्ठातुमर्हैः, **स्वधर्मैः**—जपोपवासभगवन्नामसङ्कीर्तनादिरूपैः कायिकवाचिकमानसिकादिकर्मभिः, **सहकृता**—लब्धोपकारा, **ब्रह्मविद्या**—ब्रह्मोपासनात्मिका विद्या, **भवतु**—शास्त्राभिमतानुष्ठानेति स्वीक्रियतां नाम (इति शङ्कने) **मैवम्**—एवमभ्युगमो नोचितः, **यद्यपि**—वस्तुतः, **इदम्**—आरूढपतितत्वम्, **उपपतनमभीच्छन्ति**—उपपातकत्वेन संमन्यन्ते, **सर्वार्हम्**—सर्ववर्णसाधारणम्, **कीर्तनाद्यम्**—भगवन्नामसंकीर्तनादिकम्, **शोधकं च**—शुद्धिकारकमपि, **अनेकमस्ति**—नानाविधं श्रुतिस्मृत्यादिप्रतिपन्नं विद्यते, **तदपि**—तथापि, **एषः**—भगवत्कीर्तनादिः, **न तदुचितः**—भ्रष्टस्य ब्रह्मविद्याधिकारसिद्ध्यर्हः परिहारो न भवितुमर्हति, **तादृङ्निषेधात्**—'प्रायश्चित्तं न पश्यामि' इति आश्रमभ्रंशदोषनिवारकप्रायश्चित्ताभावज्ञापनात् ॥ २१ ॥

(414) प्रायश्चित्तं वदन्ति ह्युपपतन-महापातयोर्ब्रह्मयोगं
प्राप्ते पाते प्रमादाद्विदधति मुनयो योगिनां योगमेव ।
तस्मादारूढपातेऽप्यधिकृतिरिति नाऽचोदनीयं हि शास्त्रं
यावज्जीवं तु तन्निष्कृतिरिति नियमः सूत्रकाराद्यभीष्टः ॥ २२ ॥

**उपपतनमहापातयोः**—उपपातकस्य महापातकस्य च मोक्षविरोधिनः, **प्रायश्चित्तम्**—नाशकमुपायम्, (नाशोपायत्वेन), **ब्रह्मयोगम्**—नैरन्तर्येण परमात्मचिन्तनमेव (परमात्मनिरुद्धचित्तताम्) **वदन्ति**—शास्त्राणि कथयन्ति, **योगिनाम्**—मोक्षार्थयोगानुष्ठानपराणां जनानाम्, **प्रमादात् प्राप्ते**—अबुद्धिपूर्वकप्रवृत्तितः समापतिते, **पाते**—पातकविषये, **मुनयः**—हितोपदेशार्थं प्रवृत्ता महर्षयः, **योगमेव विदधति**—योगानुष्ठानमेव प्रायश्चित्ततया उपदिशन्ति, **तस्मात्**—उक्तात् ज्ञापकद्वयात्, **आरूढपातेऽपि**—नैष्ठिकत्वादौ आरूढस्य आश्रमभ्रंशरूपपातकविषयेऽपि, **अधिकृतिः**—प्रायश्चित्तरूपतया अनुष्ठानाधिकारसत्त्वायत्तं मोक्षार्थोपासनेऽपि अधिकारास्तित्वमपि, **इति न**—इत्येवं शङ्कनमनुचितम्, **हि**—**यतः**, **शास्त्रम्**—चेतनेषु वात्सल्यातिशयेन तत्त्वहितपुरुषार्थावेदनैकप्रवणं शास्त्रम्, **अचोदनीयम्**—अपर्यनुयोज्यम् (अनाक्षेप्यमेव), **यावज्जीवम्**—यावदायुषमपि, **तन्निष्कृतिरिति नियमस्तु**—तत्प्रायश्चित्तनियम एवेति, (यावच्छ्वासावस्थानं भगवच्चिन्तनरूपे प्रायश्चित्त एवाधिकारः ; न तु मोक्षोपायतया श्रुतिविहितविद्यानुष्ठाने कालसिद्धिः अधिकारसिद्धिर्वेति) **सूत्रकाराद्यभीष्टः**—शारीरकसूत्रकर्तुर्द्वैपायनस्य 'प्रायश्चित्तं न पश्यामि' इति प्रायश्चित्ताभावस्मृतिकाराणां च संमतोऽर्थः ॥ २२ ॥

(415) यो बालं हन्ति यः स्त्रीं शरणमुपगतं यश्च यो वा कृतघ्नः
प्रायश्चित्तैर्विशुद्धानपि जगदुरिमान् साधुसंसृष्टयनर्हान् ।
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः
शास्त्रं नः शासनीयं यदि भवति तदा सम्प्लुतो धर्मसेतुः ॥ २३ ॥

**यो बालं हन्ति**—यः पुरुषः शिशुं वियुक्तप्राणं करोति, **यः स्त्रीं हन्ति**—यः पुरुषः स्त्रियं वियुक्तप्राणामापादयति, **यश्च शरणमुपगतं हन्ति**—योऽपि वा पुरुषः आत्मनो रक्षायाचनपूर्वकं स्वं प्रत्यागतमपि निर्घृणतया प्राणैर्वियोजयति, **यो वा**—यश्च पुरुषः, **कृतघ्नः**—परेण कृतस्योपकारस्यास्मरणेन कृतघ्नपदवाच्यः, **इमान्**—बालघ्न-स्त्रीघ्न-शरणागतघ्न-कृतघ्नाख्यान् पातकिनः पुरुषान्, **प्रायश्चित्तैः**—तत्तत्पापनोदकत्वेन शास्त्रसिद्धैः कर्मभिः, **विशुद्धानपि**—निवारितपातकत्वेन व्यवहर्तुमर्हानपि सतः, **साधुसंसृष्टयनर्हान्**—शास्त्रीयविधिनिषेधानुरोधिभिः शिष्टैः ऐहिकामुष्मिकव्यवहारेषु संस्रष्टुमयोग्यान्, **जगदुः**—धर्मज्ञसमयवेदिनो वदन्ति, **इह च**—नैष्ठिक्यादितो भ्रष्टविषयेऽपि, **सूत्रकारैः दर्शिता**—धर्मसूत्र-शारीरकसूत्रादिप्रणेतृभिः निरूपिता, **इयं गतिः**—ब्रह्मविद्याधिकारापादकनिष्कृत्यभावसमर्थनरीतिः, **स्मृत्याचारानुसारात्**—स्मृतिग्रन्थान् समयाचारांश्च अनुरुध्य प्रवृत्ता; **शास्त्रम्**—सर्वेषामपि हितानुशासने अप्रतिहतस्वातन्त्र्यवत् शास्त्रमेव (शासनकर्तृत्ववदेव), **नः यदि शासनीयं भवति**—अस्मत्कर्तृकशासनविषयतया प्रतिहतस्वातन्त्र्यं यदि भवेत्, **तदा**—तर्हि, **धर्मसेतुः**—धर्माधर्ममर्यादानिर्णायकत्वेन अनादिपरम्पराप्राप्तोऽर्थः शास्त्ररूपः, **सम्प्लुतः**—(महाजलाशयगतः सेतुरिव जले) निमग्नप्राय एवेति, न तेन लोकोद्धारनिरीक्षाया अवकाश इति ॥ (अतः शास्त्रम् नियोग पर्यनुयोगानर्हस्वातन्त्र्येण युक्तं सद्विजृम्भमाणमस्मद्विधैः हितकामैस्सद्भिः, केवलमनुरोध्यमेव ; न पुनः शिक्षणीयमिति) ॥ २३ ॥

(416) ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावै-
र्देहैर्योगादनुज्ञा परिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधालेपकक्षोभशान्त्यै
सम्यग्ज्ञातात्मनोऽपि स्वतनुसमुचिता[1]चारतः[1] प्रत्यबोधि ॥ २४ ॥

**ब्रह्मांशत्वे**—परं ब्रह्म प्रति अपृथक्सिद्धविशेषणत्वरूपे अंशत्वे, **समाने**—(सर्वेष

[1] चारता – सा.

चेतनानाम् तद्देहभूतानां सर्वेषामचेतनानां च) अविशिष्टे सति, **प्रेक्षण-स्पर्शनादेः**—(ब्राह्मणादिदेहस्य) दर्शन-स्पर्शनादेः, **अनुज्ञा**—शास्त्राचारादितः अनुमतिः, **परिहरणमपि**—(शूद्रचण्डालादिदेहस्य) दर्शन-स्पर्शनादिवर्जनाज्ञा चेत्युभयमपि, **गुणविषमतया शुद्ध्यशुद्धि-स्वभावैः**—(स्वस्वरूपे निष्पाद्ये आपतितं), यत् सत्व-रजस्-तमसां विसदृशं वैषम्यं तेन सम्प्राप्तैः शुचित्वाशुचित्वाख्यैः स्व-स्वगतैर्गुणैरेव ; नान्यथेति, **इत्येवम्**—ईदृशमर्थतत्वम्, **प्राक्**—अंशाधिकरणीये अनुज्ञापरिहाराविति सूत्रे, **सूत्रितम्**—सूत्रेणैव कण्ठोक्त्या प्रदर्शितम्, (तथापि) **इह**—अस्मिन्नधिकरणे, **पुनः**—भूयोऽपि, **विविधालेपकक्षोभशान्त्यै**—नानाप्रकाराणां स्वस्मिन् विधि-निषेधोत्तीर्णत्वख्यापनतः प्रवृत्तिस्वाच्छन्द्याभ्युपगमपराणां (अलेपकपदेन स्वात्मनो-व्यवहर्तॄणां) क्षोभकरीं प्रवृत्तिं शमयितुम्, **सम्यग्ज्ञातात्मनोऽपि**—आत्मतत्त्वयाथात्म्यविदोऽपि (कृतकृत्यस्यापि) **स्वतनुसमुचिताचारतः**—कर्मप्राप्तस्वस्वशरीरानुगुणः नियतः समयाचारः (अनुल्लङ्घितमर्यादत्वम्) (सार्वविभक्तिकः तसि प्रत्ययः), **प्रत्यबोधि**—प्रतिबोधितः, (न तेन सूत्रकृतः पौनरुक्त्यदोषः) ॥ २४ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

तद्भूताधिकरणे—नैष्ठिकाद्याश्रमेभ्यः प्रच्युतानां, विधुरादिवत् ब्रह्मविद्यायामधिकारो नास्ति—इत्याशङ्क्य,

तेषां पतितत्वात् नाऽधिकारः—इति समाहितम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

आरूढपतितानामप्यधिकारो भवेदिति ।
तद्भूताख्यनये शङ्का वचनेन व्यपोद्यते ॥ १६६ ॥

इति तद्भूताधिकरणम् ॥ १० ॥

—o—

# (119) स्वाम्यधिकरणम् ॥ ३–४–११ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(169) क्रत्वङ्गसम्बन्ध[1]मुपासनं यत्[1] तत् स्वामिनस्तत्फलभोक्तृभावात् ।
नैवर्त्विजां कर्म तदङ्गवत्स्यात् कर्माङ्ग[2]सम्बन्धत एव[2] हेतोः ॥ ६४ ॥

**क्रत्वङ्गसम्बन्धम्**—क्रत्वङ्गभूतैरर्थैः सह आश्रयाश्रयिभावरूपसम्बन्धवत्, **उपासनं यत्**—उद्गीथाद्युपासनं यद्विहितमस्ति (उद्गीथमुपासीतेति) **तत्**—तादृशमुपासनम्, **स्वामिनः**—क्रतुस्वामिनः (यजमानकर्तृकमेव ; न ऋत्विक्कर्तृकम्), **तत्फलभोक्तृभावात्**—याग-तदङ्गाश्रितोपासनानां यत् फलं तद्भोक्तृतायाः यजमाने एव सत्त्वात्, (इति शङ्कने) **नैव**—क्रत्वङ्गाश्रितोपासनेषु यजमानकर्तृकत्वं सर्वथा नोचितम्, **अङ्गवत्**—क्रत्वङ्गानीव, **तत्**—उपासनमपि, **ऋत्विजां कर्म स्यात्**—ऋत्विक्कर्तृकं कर्मैव भवितुमर्हति, **कर्माङ्गसम्बन्धत एव हेतोः**—उपासनेऽपि क्रत्वङ्गसम्बन्धसत्त्वादेव निमित्तात् । (प्रधानं प्रति अङ्गभूतं स्वाङ्गयुतमेव हि अङ्गतां प्रतिपद्येतेति, अङ्गाङ्गस्याप्यङ्गत्वाक्षतेः) ॥ ६४ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(417) उद्गीथादावुपास्तिर्भवति हि फलिना यज्वनैवाऽत्र शक्या
तस्मात् तत्कर्तृकाऽसाविति यदि न परिक्रीतकर्माश्रयत्वात् ॥
ऋत्विक्साध्या यथाऽन्ये गुणफलविधयोऽनूद्यते चैवमेषा
शक्यत्वं न ह्युपाधिर्विधिबल[3]नियते[3] स्वामिभृत्य[4]क्रमोऽत्र[4] ॥ २५ ॥

**अत्र उद्गीथादौ उपास्तिः**—क्रत्वङ्गभूतोद्गीथाद्याश्रिता उपासनरूपा क्रिया, **हि**—यतः **फलिना**—क्रतुफलभोक्त्रा, **यज्वनैव**—यजमानेनैव, **शक्या भवति**—अनुष्ठातुं योग्यास्ति, **तस्मात्**—ततो हेतोः, **असौ**—प्रकृता उद्गीथोपासना, **तत्कर्तृका**—यजमानकर्तृकेत्येव (शास्त्राभिमताऽस्तु) **इति यदि**—एवं शङ्क्यते चेत्, **न**—नैव युक्तमेवं शङ्कनम्, **परिक्रीतकर्माश्रयत्वात्**—दक्षिणादानतः यजमानकार्यनिर्वाहार्थं स्वायत्तीकृतो यः उद्गात्राख्य

[1] मुपासनाय—क. [2] सम्बन्धतयैव—क. [3] नियतेः—च. [4] क्रमेण—पद.पा.

ऋत्विक्, तत्सम्बन्धि कर्मरूपं यदुद्गीथगानम् तदाश्रयकत्वात् (उपासनस्य) **अन्ये गुणफल-विषयो यथा**—फलोद्देशेन विहिताः इतरे गुणभूतकर्मानुष्ठितय इव (पशूद्देशेन विहितप्रणय-नार्थगोदोहनपात्रस्वीकरणमिव अध्वर्युणा), **ऋत्विक्साध्या**—उद्गात्राख्येन ऋत्विजैव अनुष्ठेया ; न यजमानेन, **एवम्**—उद्गानसहचरितसाधनरूपत्वक्लृतोद्गातृकर्तृकत्वेन, **एषा**—उद्गीथाश्रिता उपासना, **अनूद्यते च**—'यदेव विद्यया करोती'त्यादिना श्रौतेन वाक्येन अनूदिता च ज्ञायते, **विधिबलनियते**—ऋत्विग्वरणविधिसामर्थ्यतो व्यवस्थिते, **शक्यत्वं न हि उपाधिः**—कृतिसाध्यत्वं प्रयोजकतया नैवाभ्युपगमार्हम्, (अत्र—उद्गीथाश्रितोपासनविषये), **अत्र**—यजमानसाध्येऽपि ऋत्विजैवानुष्ठेये कर्मणि, **स्वामि-भृत्यक्रमः**—स्वामिना अनुष्ठेयस्य कर्मणः, भृतितः स्वायत्तीकृतेन भृत्येन अनुष्ठानं राजामात्यादौ येन प्रकारेण युक्तं भवति स क्रमः, (यजमानर्त्विजोर्विषयेऽपि) चिन्तनीयः ॥ २५ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

स्वाम्यधिकरणे—उद्गीथादिविद्यानां यजमानकर्तृकत्वं ; 'यदेव विद्यया करोति' इति तत्कर्तृकत्वश्रुतेः—इत्याशङ्क्य,

कर्माङ्गाश्रयत्वात् उद्गीथाद्युपासनस्य, कर्मवत् ऋत्विक्कर्तृकत्वमेव—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

उद्गीथोपासने ऋत्विङ्नाऽधिकुर्यात् फलश्रुतेः ।
इत्याक्षेपोऽपोद्यतेऽथ स्वामिनीतौ प्रसङ्गतः ॥ १६७ ॥

इति स्वाम्यधिकरणम् ॥ ११ ॥

—o—

## (120) सहकार्यन्तरविध्यधिकरणम् ॥ ३–४–१२ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(170) मन्तव्य इत्येव विधानहेतोरनूद्यते मौनमिति त्वसत् स्यात् ।
मौनं प्रकृष्टे मनने हि लोके प्रसिद्ध्यते तेन विधेयमेतत् ॥ ६५ ॥

**मन्तव्य इत्येव विधानहेतोः**—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति बृहदारण्यकवाक्ये दर्शन-निदिध्यासनयोरिव तत्सहकारिभूतस्य मननस्याऽपि 'मन्तव्यः' इति वाक्यभागेन विधानात् ज्ञापकात्, **मौनम्**—विहितमननात्मकमेव मौनम्, **अनूद्यते**—'अथ मुनिः' इत्यनेन सहकारितया पूर्वं ज्ञातमेव पुनः स्मार्यते; न तु नूत्नतया ज्ञाप्यते, **इति तु**—एवं शङ्कनं तु, **असत् स्यात्**—असमीचीनमेव भवेत्, **हि**—येन हेतुना, **मौनम्**—मौनपदम्, **प्रकृष्टे**—अतिशयविशेषशालिनि, **मनने**—मननरूपेऽर्थे उपास्यविषयकाभ्यासात्मके, **प्रसिद्ध्यते**—प्रसिद्धिं (असन्दिग्धप्रयोगताम्) प्राप्तमस्ति, **तेन**—तेन हेतुना, **एतत्**—ईदृशं मौनम्, **विधेयम्**—ध्यानसहकारित्वेन नूत्नतया ज्ञाप्यमेव, (श्रुतार्थस्य युक्त्या चिन्तनस्य, उपास्यविषयकपुनःपुनःसंशीलनस्य च मिथो भेदात्। आश्रमधर्मा इव श्रवण-मनने इव च इदं मौनं बाल्य-पाण्डित्यसहभावेन तृतीयतां सम्पन्नं सत् अपूर्वतयैव विद्यौपयिकतया ज्ञाप्यत इति ॥ ६५ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(418) मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्याऽनुवादः
कश्चिन्न ह्यत्र दृष्टो विधिरिति न पुरः पण्डितत्वस्य लब्धेः।
ऊहापोहार्हता हि! श्रवण-मननतोऽनन्तरं पण्डितत्वं
मौनख्यातिः प्रकृष्टे मनन इति विभो धारणाद्युक्तिरेषा ॥ २६ ॥

**मन्तव्यत्वे**—परमात्मनो मननीयतायाः कर्तव्यत्वे, **श्रुते सति**—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' इति श्रुत्यैव 'मन्तव्यः' इति विधिप्रत्ययघटितेन स्फुटं ज्ञापिते सति, **अथ मुनिरिति वाक्**—'बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिः' इत्यत्र 'अथ मुनिः' इत्युक्तिः, **तस्य अनुवादोऽस्तु**—'श्रोतव्यो मन्तव्यः' इति वाक्यावगतस्यैव मननस्य अनुवादरूपो भवतु; न तु नूतनस्यार्थविशेषस्य विधायको भवतु, **हि**—यतः, **अत्र**—'अथ मुनिः' इत्यत्र, **विधिः कश्चित्**—लिङ्लोड्-तव्यघटितः यः कश्चन शब्दः, **न दृष्टः**—नैव उपलभ्यमानोऽस्ति, **इति न**—एवं शङ्कनं युक्तं न भवति, **पुरः**—'अथ मुनिः' इत्युक्त 'मुनि'शब्दज्ञाप्यान्मौनात् पूर्वम्, **पण्डितत्वस्य लब्धेः**—पाण्डित्यरूपस्य धर्मस्य सम्पाद्यतया श्रुतितोऽवगतेः (श्रुतार्थप्रतिष्ठापकं युक्तितश्चिन्तनरूपं हि मननं न पाण्डित्यानन्तरभावि स्यात्) **हि**—यतः, **ऊहापोहार्हता पण्डितत्वम्**—ऊहापोहाक्षमधीशालित्वरूपं यत् पाण्डित्यमस्ति तत्,

**श्रवण-मननतोऽनन्तरम्**—'श्रोतव्यो मन्तव्यः' इति वाक्यावगताभ्यां श्रवण-मननाभ्यां पश्चाद्भाव्येवेति ; ('मन्तव्य' इत्युक्तं, 'अथ मुनिः' इत्युक्तं च मननम् नैव अभिन्नं स्यात्) **मौनख्यातिः**—मौनत्वेन प्रसिद्धिः, **प्रकृष्टे मनन इति**—प्रकर्षरूपवैलक्षण्यवति मौनविशेष एव विदितचरेति, **एषा**—'अथ मुनिः' इति श्रुता, **विभौ धारणाद्युक्तिः**—योगाङ्गभूतस्य परमात्मविषयकधारणादेः ध्यानौपयिकस्य उपदेशरूपैवोक्तिः (सा च ध्यानालम्बनस्य शुभाश्रय-भगवद्विग्रहस्य पुनः पुनः संशीलनाभ्यासादिरूपेति, तादृशं मौनमेवाऽत्र बाल्य-पाण्डित्यरूप-प्रथमद्वितीयापेक्षया तृतीयं सत् विधेयमेवेति) ॥ २६ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

सहकार्यन्तरविध्यधिकरणे—'बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिः' इत्यत्र, मौनम् अनूद्यते—इत्याशङ्क्य,

न अनूद्यते ; किन्तु सहकार्यन्तरत्वेन विधीयते—इति समाहितम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

कर्माविरोधान्मननं सहकार्यन्तरं मतम् ।
प्राक् पञ्चमनयेनाऽस्य सङ्गतिस्त्वापवादिकी ॥ १६८ ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ २२ ॥

—o—

## (121) अनाविष्काराधिकरणम् ॥ ३–४–१३ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(171) विशेषधेयहानेर्विदुषस्तु बाल्यं सर्वं च कामाचरणादि नैतत् ।
विशेषतो [1]नाऽविरतादि[1]वाक्ये बाल्यं [2]त्वनाविष्करणं[2] कुलादेः ॥ ६६ ॥

**विधेयहानेः**—'बाल्येन तिष्ठासेत्' इत्यत्र वाक्ये विधेयविशेषस्य अश्रवणात् ज्ञापकात्, **विदुषः**—विद्वांसमुद्दिश्य विधीयमानं भवत्, **बाल्यं तु**—उक्तवाक्ये बाल्यपदवाच्यं पुनः,

---

[1] निर्विरतादि—क. [2] च नाऽऽविष्करणं—ग.

**कामाचरणादि सर्वं च**—स्वच्छन्दाचरण-स्वच्छन्दभक्षण-स्वेच्छानुरोधिवचनादिरूपम् सर्वमेव ; न विशेषभूतं यत्किंचित्, (इति शङ्कने) **एतत् न**—इदं न युक्तम्, **नाऽविरतादिवाक्यैः**—'नाऽविरतो दुश्चरितात् नाऽशान्तो नाऽसमाहितः। नाऽशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥' इत्यादिभिरौपनिषदैर्वाक्यैः **विशेषतः**—विद्यौपयिकानां गुणानां दुश्चरितान्निवृत्ति शान्ति-समाहितत्वादीनां विशेषरूपेण कथनात् ज्ञापकात्, **कुलादेः अनाविष्करणं तु**—स्वकुलाभिजनपाण्डित्यादीनां विशिष्टधर्माणामप्रकटीकारेण बालवद्वर्तनमेव, **बाल्यम्**—(विद्वांसं प्रति 'बाल्येन तिष्ठासे'दिति वाक्यतो विधीयमानं) बालस्वभावान्तर्गतम् ; न तु सर्वं बालकर्मभूतम् ॥ ६६ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(419) शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यं तदस्तु

[1]प्राप्तुं[1] बालस्य भावो न तु सुशक इति स्वैरिता[2]ऽस्येति[2] चेन्न।

दुश्चारित्रादमुं नाऽविरत इति वचः संनिरुन्धे [3]ह्यतोऽसौ[3]

माहात्म्यं स्वं निगूहेदिति मुनिविहिते बाल्यविध्याशयः स्यात् ॥ २७ ॥

**विदुषः शिष्टम्**—विद्यानिष्ठमुद्दिश्य 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति श्रुत्या विहितम्, **बाल्येन तिष्ठासनमपि**—अपेक्ष्यमाणं बाल्ययुक्तावस्थानमपि, **तत्**—कौमारे अप्रेर्यतया स्वभावतो लभ्यमानम्, **बालकृत्यमस्तु**—बालस्य-शिशोः कर्मैव (श्रुत्या विद्वदाश्रयणीयतया) विहितमास्तां नाम ; (किमर्थः तत्राशयविशेषकल्पनप्रयासः ?) **बालस्य भावः**—बालगतः वयोवस्थाविशेषप्रयुक्तः स्वभावः, **प्राप्तुम्**—स्वप्रयत्नेन विध्यायत्तेन लब्धुम्, **न सुशक इति**—न सुलभसाध्यः ; (स्थाविरे वयसि बाल्यवयस इव, बाल्यभावस्याऽपि गतत्वेन अलभ्यत्वात्) इत्यतो हेतोः, **अस्य**—विदुषः (आश्रयणीयत्वेन विहिता), **स्वैरिता**—कामचारवादभक्षात्मकस्वच्छन्दचारितैव, बाल्यगतक्रियारूपा, **इति चेत्**—एवं शङ्कनम्, **न**—नैव साधु, (श्रुतितात्पर्यस्यान्यादृशत्वात्) **हि**—यतः, **नाविरत इति वचः**—'नाऽविरतो दुश्चरिता'दित्यादिकं कठवल्लीवाक्यम्, **अमुम्**—ब्रह्मविद्यानुष्ठायिनं पुरुषम्, **दुश्चारित्रात्**—

---

[1] भर्तुं—पद. पा. [2] सेति—(सा.पा.) [3] ह्यतोऽस्मिन्—पद. पा.

असत्कर्मणः सकाशात्, **संनिरुन्धे**—निवारयति, **अतः**—अस्माद्धेतोः, **असौ**—मोक्षार्थ-विद्यानुष्ठानप्रवृत्तः (सिद्धोपासनो वा), **स्वं माहात्म्यं निगूहेत् इति मुनिविहिते**—स्वीयं कुलाभिजनविद्यासम्पत्त्यादिकं महत्त्वापादकं धर्मम् अप्रकटयन्नेव जीवेत्; न तु तेन जनसंमान-नादिकं निरीक्षेत् इत्येवं मुनिभिः, ('अहेरिव जनाद्भीतः संमानान्मरणादिव') उपदिष्टे हितरूपेऽर्थे, **बाल्यविध्याशयः स्यात्**—'बाल्येन तिष्ठासेत्' इति बाल्यविधायकवाक्यस्य अभिप्रायः सम्भावितः; (न तु स्वैरवर्तनरूपेऽर्थे) ॥ २७ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

अनाविष्काराधिकरणे—'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यत्र बाल्यशब्देन कामचारादिकमपि उपादेयतया विधीयते—इत्याशङ्क्य,

'नाऽविरतो दुश्चरितात्' इत्यादिना निषेधात्, स्वमहिमानाविष्करणमात्रमेव विधेयम्—इत्युक्तम् ॥

—o—

### (4) नयसंगतिमालिका ॥

विद्याकर्मविरुद्धत्वात् बाल्यं नैवाङ्गमिष्यते ।
इत्याक्षेपापवादः स्यादनाविष्कृतिनीतितः ॥ १६९ ॥

इति अनाविष्काराधिकरणम् ॥ १३ ॥

—o—

## (122) ऐहिकाधिकरणम् ॥ ३–४–१४ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(172) यज्ञादिकं त्वभ्युदयादिहेतुः सद्यःफलं स्यादविलम्बहेतोः ।
न तद्धलिष्ठैः प्रतिबन्धहानौ तत् स्याद्यदेवेति तु चोदितत्वात् ॥ ६७ ॥

**अभ्युदयादिहेतुः**—मोक्षव्यतिरिक्तफलोद्देशेन प्रवृत्तम्, **यज्ञादिकम्**—यज्ञ-तदङ्गाश्रि-तोपासनप्रभृतिकम्, **अविलम्बहेतोः**—फलसाधनभूतयज्ञाद्यनुष्ठानफलविलम्बे निमित्ताभावात्,

**सद्यःफलं स्यात्**—अनुष्ठानसम्पत्तिप्रयोजकदेहावच्छिन्नानुभवयोग्यफलयोगवदेव भवितुमर्हति ; न देहान्तरावच्छेदेनानुऽभवार्हफलवत्, (इति शङ्कने) **न तत्**—नैव तदङ्गीकार्यम्, **यदेवेति तु चोदितत्वात्**—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्' इत्येवमेव श्रुतौ आम्नातत्वात्, **बलिष्ठैः प्रतिबन्धहानौ**—बलवत्तरपूर्वकर्मप्रयोज्यस्य प्रतिबन्धस्य अभावे सति, **तत् स्यात्**—यज्ञोपासनाद्यनुष्ठानाव्यवधानेन फलसिद्धिः भवेत् ; (प्रतिबन्धस्य उदये तु तन्निरवशेषविलयानन्तरमेवेति देहान्तरेऽपि तत्सम्भवादिति) ॥ ६७ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(420) भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवः स्यात्

स्वर्गादिस्त्वत्र देहे न घटत इह तु स्वान्तशुद्ध्योपपत्तिः ।

स्नानप्रायत्यनीतिस्तत इति [1]न पुरो विघ्नसम्भावनोक्तेः

कारीर्यादौ तदर्हैः सगुणविरचितेऽप्यस्ति विघ्नः कदाचित् ॥ २८ ॥

**भोगार्थोपासनानाम्**—मोक्षेतरफलकानामुपासनानाम् (कर्मवीर्यवत्तरत्वादीनुद्दिश्य प्रवृत्तानाम्), **स्वजनकसुकृतैः**—स्वोत्पादकैः सत्कर्मभिर्हेतुभूतैः, **तत्क्षणादुद्भवः स्यात्**—अविलम्बेनैव निष्पत्तिर्भवितुमर्हति, **स्वर्गादिस्तु**—अभ्युदयरूप एव सन्नपि अतिशयितसुखात्मकः स्वर्गादिः परम्, **अत्र देहे**—स्वर्गादिसाधनयागाद्युत्पत्त्यवच्छेदके देहे, **न घटते**—नैव निष्पत्तुमर्हति, (विशिष्टदेहमात्रसाध्यत्वात् तस्य) **इह तु**—उपासनफले तु, **स्वान्तशुद्ध्या**—चित्तशुचित्वमात्रेण, **उपपत्तिः**—अबाधितसिद्धिकत्वम्, **ततः**—उपासनस्य चित्तशुद्ध्याधायकत्वात्, **स्नानप्रायत्यनीतिः**—स्नानोत्तरक्षण एव देहनैर्मल्यसिद्धिन्यायः युज्यतेऽत्र, **इति न**—एवं शङ्कनमनुचितम्, **पुरः**—भाविनि काले, **विघ्नसम्भावनोक्तेः**—प्रत्यूहस्य आपतिष्यमाणताया उक्तत्वात्, **कारीर्यादौ**—कारीरीष्ट्यादौ कर्मणि, **तदर्हैः**—कारीर्यनुष्ठानानुगुणाधिकारसम्पत्तिमद्भिः, **सगुणविरचितेऽपि**—सकलाङ्गसाद्गुण्येनैव अनुष्ठितेऽपि, (**तदर्हैः**—तत्प्रतिबन्धयोग्यैः **प्रबलैः** पूर्वकर्मभिः हेतुभूतैः), **कदाचित्**—कालविशेषे, **विघ्नः अस्ति**—प्रतिबन्धः सम्भवत्येवेति ॥ २८ ॥

[1] न पुरा—च.

### (3) अधिकरणार्थसंग्रहः ॥

ऐहिकाधिकरणे—ऐहिकफलविद्यानां स्वसाधनभूतकर्मानुष्ठानानन्तरम् उत्पत्तिः—इत्याशङ्क्य,

प्रतिबन्धाभावे अनन्तरमुत्पत्तिः, तद्भावे तद्विगमः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

कर्म नाङ्ग भोगहेतूपासने व्यभिचारतः ।
इत्याक्षेपप्रतिक्षेपः स्यादैहिकनयादिह ॥ १७० ॥

इति ऐहिकाधिकरणम् ॥ १४ ॥

—o—

## (123) मुक्तिफलाधिकरणम् ॥ ३–४–१५ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(173) निःश्रेयसैकार्थ[1]मुपास्तिकर्म[1] सद्यः फलं स्यात् प्रबलत्वहेतोः ।
तच्चाऽपि न [2]ब्रह्मविदग्रिमाणां[2] निन्दादिकस्याऽतिबलोत्तरत्वात् ॥ ६८ ॥

**निःश्रेयसैकार्थम्**—मोक्षैकफलकम्, **उपास्तिकर्म**—उपासनानुष्ठानम्, **प्रबलत्वहेतोः**—शिष्टेतरसर्वकर्माद्यपेक्षया अधिकबलवत्त्वात् निमित्तात्, **सद्यः फलं स्यात्**—(तत्प्रतिबन्धार्हतायाः कस्मिन्नप्यभावेन) उपासनानुष्ठानौपयिकदेहावच्छेदेन (देहान्तराविलम्बेन) फलप्रदं भवितुमर्हति, (इति शङ्कने) **तच्चाऽपि न**—तदपि सद्यःफलप्रदमेवेत्यपि न नियमतो वक्तुमर्हम्) **ब्रह्मविदग्रिमाणां निन्दादिकस्य**—ब्रह्मज्ञाग्रेसराणां गर्हणादिरूपस्य अपचारस्य, **अतिबलोत्तरत्वात्**—अत्यन्तं बलाधिक्यात् (तस्य च निःश्रेयसैकफलकब्रह्मविद्यानिष्पत्तिं प्रत्यपि अन्तरायत्वसम्भवेन विलम्बस्याऽपि सम्भावितत्वात्) ॥ ६८ ॥

—o—

---

[1] मुपायकर्म—क. [2] ब्रह्मविदग्रगाणां—क.

## (2) अधिकरणसारावलिः ॥

(421) अस्त्वन्यत्राऽन्तरायः प्रबलतममिदं सात्त्विकत्यागयुक्तं
कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं तस्माद् बलीयान् यदि भवति परब्रह्म भक्तापराध-
स्तच्छान्तौ तत्प्रसूतिः स न यदि झटिति स्यात् परोपास्तिलाभः ॥ २९ ॥

**अन्यत्र**—प्रवृत्तिधर्मान्तःपातिनि कर्मजाते, **अन्तरायः अस्तु**—फलनिष्पत्तिप्रतिबन्धः प्राप्नोतु नाम, **सात्त्विकत्यागयुक्तम्**—'स त्यागः सात्त्विको मतः' इति गीताचार्योक्तेन सात्त्विकत्यागेन जुष्टम्, **निवृत्त्याह्वयमिदं कर्म**—निवृत्तिधर्मपदाभिधेयम् उपासनाङ्गभूतं कर्म, **प्रबलतमं प्रोक्तमिति**—सर्वापेक्षया बलवत्तमत्वेन श्रुतिस्मृत्यादिषु परिगणितमिति हेतोः, (बलवत्तमस्य दुर्बलैः प्रतिबन्धासम्भवात्) **सपदि**—उपासनोत्तरकालमेव, **ब्रह्मविद्याम्**—मोक्षोपायभूतां आपरोक्ष्येण ब्रह्मावगतिम्, **विदध्यात्**—निष्पादयेत्; न तु प्रतिहतस्वकार्यं भवेत्, (इति शङ्कने) **मैवम्**—एवं मा शङ्क्यताम्, (कुत इति चेत्) **तस्माद् बलीयान्**—निवृत्तिधर्माख्यादुपासनाङ्गभूतात् कर्मणोऽपि बलिष्ठः, **परब्रह्मभक्तापराधः**—परब्रह्मवेत्तृविषयकः अपचारः, **यदि भवति**—प्राप्नोति प्रसज्येत वा यदि, (तदा) **तच्छान्तौ**—तादृशापचार-निरवशेषविलये सति, **तत्प्रसूतिः**—ब्रह्मविद्याया उदयः, **सः**—ब्रह्मविदपचारः, **न यदि**—नैव विद्येत चेत्, **झटिति**—अविलम्बेनैव, **परोपास्तिलाभः**—परब्रह्मविद्यानिष्पत्तिरूपापेक्षितार्थलाभः **स्यात्**—सम्भवेदेव ॥ २९ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

मुक्तिफलाधिकरणे-मुक्तिफलकविद्याङ्गकर्मणां प्रबलत्वेन, तस्याः न प्रतिबन्धः सम्भवतीति, तासां विद्यानां स्वसाधनानुष्ठानानन्तरमेव उत्पत्तिः सम्भवति—इत्याशङ्क्य,

तेषामपि ब्रह्मविदपचारैः प्रतिबन्धसम्भवात्, पूर्ववत् अनियमः—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

एवं मुक्तिफलोपास्तौ प्रोक्तो न्यायोऽतिदिश्यते ।
ततश्चानियमः प्रायः प्रबलं प्रतिबन्धकम् ॥ १७१ ॥

इति मुक्तिफलाधिकरणम् ॥ १५ ॥

—o—

# [तुरीयपादाधिकरणप्रतिपाद्यसङ्क्षेपः ।]

## (1) शारीरकन्यायकलापसंग्रहः ॥

(174) विद्यायाः फलदातृत्वं रसादेश्च विधेयता ।
विद्याङ्गता[1] चाख्यानानां[1] विद्या प्रव्राजिनां तथा ॥ ६९ ॥

(175) गृहस्थानां च विद्याया यज्ञादिप्रत्य(पे)वेक्षणम् ।
तेषां शमाद्यपेक्षत्वमाहारस्य व्यवस्थितिः ॥ ७० ॥

(176) [2]गार्हस्थ्यस्याऽपि कर्मत्वं[2] यज्ञादेः कर्मणस्तथा ।
विधुराणामधिकृतिश्च्युतानां तद्विहीनता ॥ ७१ ॥

(177) [3]क्रत्वङ्गोपासने ऋत्विक्कार्यता[3] मौनिताविधिः ।
बाल्यं त्वस्याऽप्रकाशत्वं शक्ति[4]विद्याभि[4]जन्मनाम् ॥ ७२ ॥

(178) [5]प्रतिबन्धे[5] विलम्बित्वं [6]स्वर्ग[6]-मोक्षार्थकर्मणोः ।
इत्यनेनेतिकर्तव्यसंहतिः परिचिन्तिता ॥ ७३ ॥

1 नित्य-नैमित्तिककर्माङ्गिकायाः परमपुरुषोपासनरूपायाः ब्रह्मविद्यायाः (भगवत्प्रसाद-द्वारा) मोक्षजनकत्वम्, 2 उद्गीथादिषूच्यमानस्य रसतमत्वादेः दृष्टिविधिरूपत्वम्, 3 वेदान्तगतानामाख्यायिकानां विद्याविध्यर्थत्वरूपं विद्याङ्गत्वम्, 4 ऊर्ध्वरेतस्काश्रमिणामपि अग्न्यनपेक्षस्वाश्रमोचितकर्माङ्गकविद्याधिकारवत्त्वम्, 5 गृहस्थाश्रमिणां ब्रह्मविद्यायाः नियमेन स्वाश्रमविहिताग्निहोत्रादिसापेक्षसिद्धिकत्वम्, 6 गृहस्थगतायाः तदाश्रमधर्माङ्गिकाया अपि ब्रह्मविद्यायाः शमदमादिसापेक्षत्वनियमः, 7 विद्यानिष्ठेषु आहारशुचित्वादिव्यवस्थायाः विद्यानिष्पत्त्यौपयिकता, 8 अमुमुक्षोरपि गृहस्थस्य केवलाश्रमकर्मतया यज्ञादिनित्यनैमित्तिकानामवश्यानुष्ठेयता, 9 मृतभार्यादिरूपाणामनाश्रमिणामपि जपोपवासाद्यङ्गकतया ब्रह्मविद्याधिकारः, 10 आश्रमभ्रष्टानां विद्याधिकाराभावः, 11 क्रत्वङ्गाश्रितोद्गीथाद्युपासनानां

---

1 च यज्ञानां — मु पा. 2 गार्हस्थ्यस्यावितर्कत्वं — क. [गृहस्थेनाऽपि कार्यत्वं — इति.
3 क्रत्वङ्गोपासिकर्मत्वमृत्विजां — क. 4 विद्याति — क. 5 मृतिबन्धे — ख.
6 विश्व — ख.

ऋत्विजैवानुष्ठेयत्वम् , 12 ' अथ मुनिः ' इति, श्रवणानन्तरमननविलक्षणतया विद्यासह-कारिभूतमौनिताविधानम् , 13 ' बाल्येन तिष्ठासेत् ' इति विहितस्य बाल्यस्य विद्यानिष्ठगत-शक्ति-विद्या-अभिजनाद्यात्मकमाहात्म्याप्रकटीकाररूपस्यैव विद्यौपयिकता, 14 स्वर्गाख्याभ्यु-दयौपयिककर्मणां निरन्तरायत्वे एव तस्मिञ्जन्मनि स्वर्गादिप्रदत्वं ; सान्तरायत्वे जन्मान्तर-सापेक्षत्वम् , 15 तथैव मोक्षैकफलानां विद्याङ्गभूतानां कर्मणामपि ब्रह्मविदपचारादिभिः प्रतिबन्धे सति विलम्बिततयैव विद्यानिष्पादकत्वम् ; एवंरीत्या अधिकरणपंचदशकयुक्तेनानेन पादेन विद्याङ्गभूतार्थस्तोमविषयिणी चिन्ता निर्व्यूढा ॥ ७३ ॥

सेनेश्वरार्यरचितसन्न्यायकलापसङ्ग्रहस्याऽस्य ।
श्रीरामभद्रकृतिना तार्तीयाध्यायविवृतिरायोजि ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो. 30–39)

[ऐहिक-मुक्तिफलाख्याधिकरणद्वयात् प्रयोजनविशेषः]

(422) विद्यार्थत्वं क्रियाणां व्यभिचरणवशान्नेति शङ्कापनुत्त्यै
प्रत्यूहानां [1]च तूर्णं[1]प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै ।
निष्प्रत्यूहस्य सद्यः फलमिति च सतां तोषहेतोरमुष्मिन्
पादान्ते न्यासिषातामनियमविषयौ शास्त्रकर्त्राऽधिकारौ ॥ ३० ॥

**क्रियाणाम्**—यज्ञ-दान-तपःप्रभृतिकर्मणाम् , **विद्यार्थत्वम्**—विद्याख्यफलाधायकत्वम् , **न**—नैव सम्भवति, **व्यभिचरणवशात्**—विद्यायाः कर्मणश्च कार्य-कारणभावस्य व्यभिचार-दर्शनतो (कर्मणामनुष्ठानेपि विद्याया अनिष्पत्तिदर्शनतः) भग्नत्वात् , **इति शङ्कापनुत्त्यै**—एवं रूपायाः शङ्काया निरासाय, **सर्वदा**—सर्वकालेऽपि, **प्रत्यूहानाम्**—अभीप्सितार्थसिद्धि-विघटकानाम् , **तूर्णं च**—शीघ्रमेव (फलाधायकत्वापत्तेः पूर्वमेव) **प्रशमनम्**—निवारणम् , **उचितमिति**—आवश्यकमिति, **प्रसिद्ध्यै**—अध्यवसायाधानाय, **निष्प्रत्यूहस्य**—निर्विघ्नस्य कर्मणः, **सद्यः फलम् इति च**—विलम्बाव्यवहितं फलमिति च, **सतां तोषहेतोः**—साधकानां स्वान्तप्रसन्नतासम्पादनाय च, **अमुष्मिन्**—तृतीये साधनाध्याये, **पादान्ते**—तुरीयपादावसाने,

---

[1] चतूर्णां—पद.पा.

**अनियमविषयौ**—फले कर्मानुष्ठानानन्तर्यनैयत्याभावबोधकौ, **अधिकारौ**—द्वे अधिकरणे ऐहिक-मुक्तिफलाख्ये, **शास्त्रकर्त्रा**—शारीरकशास्त्रनिर्मात्रा बादरायणेन, **न्यासिषाताम्**—स्थापितावभवताम् ॥ ३० ॥

[ ऐहिकाधिकरणस्याऽनुपयुक्तत्वशङ्का-परिहारौ ]

(423) प्रत्यूहस्य प्रसङ्गः क्षम इह परवित्कर्मणां तद्विधूत्यै
भोगार्थोपास्तिहेतुष्वयमनुकथितः किं मुधाऽत्रेति चेन्न ।
काम्ये निर्विघ्नबुद्ध्या पतति मतिरतस्तत्र वैराग्यभूम्ने
तत्प्रत्यूहप्रसक्तिर्भवति फलवती स्याच्च विद्यार्थकाम्यम् ॥ ३१ ॥

**इह**—शारीरकशास्त्रे, **परवित्कर्मणाम्**—परमात्मोपासनप्रवृत्तैरनुष्ठीयमानानां कर्मणाम्, **प्रत्यूहस्य प्रसङ्गः**—फलजननप्रतिबन्धप्राप्तिं प्रस्तुत्य क्रियमाणो विचारः, **तद्विधूत्यै**—तस्य विघ्नस्य निरवशेषतापादनमुद्दिश्य, **क्षमः**—युक्तः, **भोगार्थोपास्तिहेतुषु**—अभ्युदय-फलकोपासनहेतुभूतेषूक्तविधेषु कर्मसु, **अयम्**—प्रत्यूहः, **अत्र**—शारीरके, **किं मुधा अनुकथितः**—किमर्थं निष्प्रयोजनतया वर्णितः ? **इति चेत् न**—एवं शङ्कनं न साधु, **काम्ये**—केवलाभ्युदयफले कर्मणि, **निर्विघ्नबुद्ध्या**—प्रतिबन्धकराहित्यज्ञानेन, **मतिः पतति**— बुद्धिः प्रवर्तते, **अतः**—तस्माद्धेतोः, **तत्र**—काम्यफले कर्मणि, **वैराग्यभूम्ने**—अतिशयितवैतृष्ण्यजननाय, **तत्प्रत्यूहप्रसक्तिः**—काम्यकर्मस्वपि विघ्नप्रस्तावतः क्रियमाणा चिन्ता, **फलवती स्यात्**—सफला भवेत्, **विद्यार्थकाम्यम्**—विद्यासिद्ध्यौपयिकं यत् नित्यनैमित्तिकेतरत् कर्म, **स्याच्च**—तदेव वा विचारणीयतया प्रस्तुतं भवेत् (विद्यानिष्पत्त्युप-योगितया भगवन्महामन्त्राद्युपासनानामपि काम्यानां करणे तत्रापि प्रत्यूहात्यन्ताभावः दुर्वचः—इति ) ॥ ३१ ॥

[तुरीयपादीयाधिकरणप्रतिपाद्यसंक्षेपः]

(424) विद्या कर्माङ्गिकास्याद्रसतममुखधीश्चोदिता प्राप्त्यभावा-
दाख्यानानां च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
विद्या साङ्गोर्ध्वरेतस्स्वपि गृहवति सा यज्ञदानाद्यपेक्षा
शान्त्याद्यर्हो गृहस्थोऽप्यविपदि विदुषोप्यन्नशुद्ध्यैव सिद्धिः ॥ ३२ ॥

1-**विद्या कर्माङ्गिका स्यात्**—मोक्षोपायभूता ब्रह्मविद्यैव कर्मोपकार्या ; न तु कर्म विद्योपकार्यम् . 2-**रसतममुखधीः**—उद्गीथादिषु रसतमत्वादिदृष्टिः , **प्राप्त्यभावात्**—विधिवाक्यान्तरेणाऽप्राप्तत्वात् , **चोदिता**—' स एष रसानां रसतमः परमः परार्थ्योऽष्टमो यदुद्गीथः' इति वाक्यात् विहितैव ; न अनूदिता , 3-**विद्या ...जुषाम्**—विद्याविधायक-वाक्यसमीपवर्तिनाम् , **आख्यानानां च**—वेदान्तगताख्यायिकाविशेषाणामपि , **तद्विधानार्थतैव**—तत्तद्विद्याविध्यर्थत्वमेव ; न तु पारिप्लवशंसनार्थत्वम् , 4-**ऊर्ध्वरेतस्स्वपि**—पारिव्राज्याद्याश्रमिष्वपि , **साङ्गा विद्या**—तत्तदाश्रमविहितैर्जपोपवासादिभिः सेतिकर्तव्यताका ब्रह्मविद्या, 5-**सा**—ब्रह्मविद्या , **गृहवति**—गार्हस्थ्यवति पुरुषे, **यज्ञदानाद्यपेक्षा**—याग-दान-होमादि-सापेक्षा सत्येव स्वरूपलाभवती मोक्षाधायिका , 6-**गृहस्थोऽपि**—स्वीकृतगार्हस्थ्यः ब्रह्मविद्या-प्रवृत्तः पुरुषोपि , **शान्त्याद्यर्हः**—शम-दमादिसम्पत्तेरर्ह एव सन् साधितविद्यः स्यात् , 7-**विदुषोऽपि**—निष्पन्नोपासनस्याऽपि पुरुषस्य, **अविपदि**—प्राणात्ययरूपायां विपदि असत्याम्, **अन्नशुद्ध्यैव शुद्धिः**—आहारशुचित्वकृतैव विद्यौपयिकी करणकलेवरशुद्धता शास्त्र-संमतेति ।। ३२ ।।

(425) एकं विद्याश्रमार्थं विधुर[1]मपि युतं[1] विद्ययाऽऽहुश्च्युतं न

क्रत्वङ्गे दृष्टिर् ऋत्विक्कृतिरथ मुनिता[2]चोदितध्यान[2]सिद्ध्यै ।

बाल्यं शक्त्यादिगुप्तिर्बलवदभिहतेः कर्मभिर्नान्यविद्या

तद्वन्मुक्त्यर्थविद्या स्वजनकसुकृतैरित्युवाचाऽत्र पादे ।। ३३ ।।

8-**एकम्**—(तन्त्रतः) एकवारमनुष्ठितमेव यज्ञदानादिकं नित्यनैमित्तिकं च कर्म , **विद्याश्रमार्थम्**—विद्योपकारकतया विद्याङ्गम् , आश्रमाङ्गमपि भवति , 9-**विधुरमपि**—मृतभार्यमपि पुरुषम् , **विद्यया युतमाहुः**—विद्यानुष्ठानयोग्यतावन्तं वर्णयन्ति श्रुत्यादीनि , 10-**च्युतम्**—आश्रमभ्रष्टम् , **न**—विद्यायोग्यं न वदन्ति वचनानि , 11-**क्रत्वङ्गे दृष्टिः**—कर्माङ्गाश्रिता उद्गीथाद्युपासना, **ऋत्विक्कृतिः**—ऋत्विजोऽनुष्ठानरूपैव, 12-**अथ**—अनन्त-राधिकरणे, **चोदितध्यानसिद्ध्यै**—श्रुतिविहितोपासननिष्पत्तये सहकारिभूतम् , **मुनिता**—पाण्डित्य बाल्याभ्यामतिरिक्तं तृतीयं प्रकृष्टमननरूपं पुनः पुनरालम्बनसंशीलनात्मकं मौनम् , 13-**शक्त्यादिगुप्तिः**—विद्यानिष्ठेन स्वमहिम्नः अनाविष्करणरूपम् , **बाल्यम्**—' बाल्येन

---

[1] मवियुत—च. [2] चोदिताऽऽध्यान—पा. चोदिता ध्यान—च.

तिष्ठासे'दिति विद्वांसं प्रति विहितबाल्यस्वरूपम्, 14-**कर्मभिः**—विद्याङ्गतया अनुष्ठितैरपि यज्ञादिभिः, **बलवदभिहतैः**—बलवता कर्मान्तरेण प्रतिरुद्धैः, **न अन्यविद्या**—मोक्षेतरफलकविद्याया अनिष्पत्तिः, 15-**तद्वत्**—मोक्षेतरफला विद्येव, **मुक्त्यर्थविद्या**—मोक्षैकफला विद्याऽपि, **बलवदभिहतैः**—स्वापेक्षया अत्यन्तं प्रबलैर्ब्रह्मविदपचारादिभिः प्रतिरुद्धैः, **स्वजनकसुकृतैः**—स्व (विद्या) निष्पादकतया स्वाङ्गभूतैः यज्ञदानादिभिः पुण्यकर्मभिः **न**—नैव निष्पाद्यते, **इति**—एवंरूपान् पञ्चदशार्थान्, **अत्र पादे**—प्रकृते तृतीयतुरीये चरणे, **उवाच**—न्यायतो निर्णीयोक्तवान् कृष्णद्वैपायनः ।। ३३ ।।

[ **'वाक्यार्थज्ञानान्मुक्तिः' इत्यादिसमयानां द्वैपायनासंमतत्वम्** ]

(426) वाक्यार्थज्ञानमात्रं कतिचन कुदृशो मुक्त्युपायं गृणन्ति
ज्ञानं कर्मेति युग्मं करणमिति समुच्चित्य मन्यन्त एके ।
कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां
सर्वे तेऽन्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ।। ३४ ।।

**कतिचन कुदृशः**—केचन श्रौतार्थविपरीतचिन्तकाः अद्वैतवादिनः, **वाक्यार्थज्ञानमात्रम्**—तत्त्वमस्यादिमहावाक्यार्थज्ञानमेव (शाब्दम्), **मुक्त्युपायं गृणन्ति**—मोक्षसाधनं वर्णयन्ति, **ज्ञानं कर्मेति युग्मं समुच्चित्य करणमिति**—ज्ञानं कर्म चेति द्वयं कारणकोटौ समुच्चयभावं (समप्रधानतां) प्रापय्य मोक्षकारणत्वेन, **एके मन्यन्ते**—यादवप्रकाशानुयायिनः अभिप्रयन्ति, **अन्ये**—कर्ममीमांसकाः, **कर्मप्राधान्यम्**—ज्ञान-कर्मणोर्मध्ये कर्मण एव मुख्यत्वम्; ज्ञानस्य तु कर्माङ्गत्वम् (देहातिरिक्तात्मज्ञानस्य शाब्दस्य कर्मानुष्ठाने कारणत्वात्) **निजगदुः**—निश्चित्यावदन्, **अपरे**—साङ्ख्यानुयायिनः, **मुक्तिं**—मोक्षरूपामात्मनोऽवस्थाम्, **असाध्याम् इच्छन्ति**—(मुक्तेः) स्वतः सिद्धत्वात्, तां अयत्नसम्पाद्यां मन्यन्ते, **ते सर्वेऽपि**—अद्वैतवादि-यादवप्रकाशीय-कर्ममीमांसक-साङ्ख्याभिधाश्चत्वारोऽपि दार्शनिकाः, **अत्र**—अस्मिन् अङ्गपादे, **कर्माङ्गकभजनविधिस्थापनोक्त्या**—उपासनविधायकवाक्यानां, वर्णाश्रमधर्मेतिकर्तव्यताकोपासनविधिपरत्वस्य समर्थनप्रवृत्तया शारीरकसूत्रोक्त्या, (पुरुषार्थाधिकरणे ब्र.सू. 3-4-1) **निरस्ताः**—शास्त्राननुरोध्यभिप्रायका इति ज्ञापिताः ।। ३४ ।।

[अपवर्गोपायानुष्ठानस्य सर्वदुःखोच्छेदकत्वसमर्थनम्]

(427) यद्दुःखं वर्तते तत् क्षणभिदुरतया न स्वयत्नोपरोध्यं
नाऽतीतार्थं च यत्नो सुपरिहरं भावि हेतौ समग्रे ।
दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्धरम्यं
प्रायश्चित्त्या कृतानां परमकरणतो दुःखसामग्र्यपोहात् ॥ ३५ ॥

**यत् दुखं वर्तते**—प्रकृतकाले वर्तमानं यत् दुःखाख्यं प्रतिकूलवेदनीयमस्ति, **तत्**—वर्तमानं दुःखम्, **क्षणभिदुरतया**—क्षणमात्रभङ्गुरत्वस्वाभाव्यात्, **यत्नोपरोध्यं न**—पुरुषकृतिनाश्यं न भवति; (नाशनयत्नं विनाऽपि स्वत एव नश्यति) **अतीतार्थं च न यत्नः**—गतस्य दुःखस्य निरासार्थमपि प्रयत्नः कार्यो न भवति, पूर्वमेव नष्टत्वेन, (निवर्तनीयस्यैवाभावात्) **भावि**—आगामि च दुःखम्, **हेतौ समग्रे**—कारणकूटे जाग्रति सति, **न च सुपरिहरम्**—नैव सुलभसम्पाद्यनिवृत्ति भवितुमर्हम्, (यावत्कारणसमूहे सति कार्यावश्यंभावेन दुःखस्यानिवार्यत्वात् । निवार्यत्वे कारणकूटमेव नास्तीत्यापद्येतेति) **अतः**—अतीतवर्तमानागामिरूपाणां त्रिविधानामपि दुःखानामपाकरणीयत्वायोगात्, **दुःखात्यन्तोपरोधे करणविधिः**—दुःखानां निरवशेषक्षयमुद्दिश्य शास्त्रेषूपायविधानम्, **व्यर्थः**—न सप्रयोजनम्, **इति**—एवं शङ्कनम्, **अर्धरम्यम्**—शब्दप्रयोगफलभूतस्य अबाधितार्थबोधपर्यवसानस्याभावेन, केवलशब्दजन्यज्ञानस्य स्वच्छन्दप्रवृत्तिपोषकत्वज्ञानेन च अलसानाम् अविचारितमणीयमित्यर्थः, (उक्तार्थविषयके विचारे क्रियमाणे) **कृतानाम्**—उपायानुष्ठानतः पूर्वमज्ञानतः कृतैः कर्मभिः फलभोगयोग्यतां प्राप्तानां दुःखानाम्, **प्रायश्चित्त्या**—उपासनरूपनिष्कृत्यनुष्ठानेन परिहारात्, **परम्**—आगामित्वेन भाव्यमानानां) उपायानुष्ठानानन्तरकाले, **अकरणतः**—दुःखापादकत्वयोग्यतावतां कर्मणामकरणेन, **दुःखसामग्र्यपोहात्**—यावद्दुःखकारणसमुदायस्य अनुदयापादनेन निवर्तनात्, (दुःखात्यन्तोपरोधस्य सुसाध्यत्वसङ्घटनात्) ॥ ३५ ॥

[उक्तार्थस्य लौकिकनिदर्शनतः दृढीकरणम्]

(428) राजद्विष्टादि सर्पाद्यपि परिहरसि च्छत्रपूर्वं बिभर्षि
प्रायश्चित्ताप्रवृत्तौ फलति दुरितमित्येवमीहामिहेच्छ ।
उत्प्रेक्षारूढभाव्यापज्जयशमनतः स्वोक्तिसाफल्यमिच्छन्
पश्यंश्चाबालतिर्यग् भयचकितगतिं जोषमित्थं जुषस्व ॥ ३६ ॥

**राजद्विष्टादि**—भौतिकस्य नृपस्य अनभिमतं गृहक्षेत्रादिकं स्वीयमन्यदीयं वा वस्तु, **सर्पाद्यपि**—(तथैव) अस्माकमनिष्टकारित्वेन ज्ञातं सर्पवृश्चिक-चोरादिकं च, **परिहरसि**—आगामिदुःखनिराकरणबुद्ध्या वर्जयसि खलु, **छत्रपूर्वम्**—वर्षत्रातपत्रादिकम्, **बिभर्षि**—आगामिवर्षातपजन्यानिष्टदूरीकरणाय धारयसि, **एवम्**—राजद्विष्टसर्पादिविषय इव, **प्रायश्चित्ताप्रवृत्तौ**—दुष्कृतानां प्रायश्चित्तस्याननुष्ठाने, **दुरितं फलतीति**—दुष्कृतं दुःखरूपफलप्रदं भवतीति विभाव्य, **इह**—मोक्षोपायभूतोपासनानुष्ठानेऽपि, **ईहाम् इच्छ**—प्रवृत्तिं संमन्यस्व, **उत्प्रेक्षा....शमनतः**—स्वीयसम्भावनामात्राध्यासितपश्चात्कालावश्यानुभाव्यत्वशङ्कागोचरपराजयपरिहरणतः, **स्वोक्तिसाफल्यमिच्छन्**—अनिष्टप्राप्तेः पूर्वमेव स्वेन प्रयुक्तायाः हितवाचः पत्नीपुत्रादिषु सार्थक्यमाकाङ्क्षमाणो वर्तसे, **आबालतिर्यक्**—शिशुमारभ्य पशुपर्यन्तम्, **भयचकितगतिम्**—आगामिदुःखशङ्कया विह्वलां गमनक्रियाम्, **पश्यंश्च**—स्वचक्षुषैव अवलोकयन्नपि संसरमाणस्त्वम्, **इत्थम्**—वेदान्तोदितसर्वशोकापनोदकरपरमात्मोपासनप्रकारम्, **जोषं जुषस्व**—शास्त्रानुष्ठानपरम्परादिविरुद्धं यत्किंचित् अचिन्तयन् निभृतं सेवस्व ॥ ३६ ॥

(429) साध्यं वा साधनं वा [1]स्वविहत[1]विपथैर्दुर्निरूपं वदन्त-
स्तद्वादे किं प्रवृत्ताः किमिति च विदधत्यन्वहं भोजनादीन् ।
मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत् प्रागसिद्धेः
साङ्ख्यास्त्वत्राऽनुयोज्याः सकरणदशया नित्यमुक्तिं गृणन्तः ॥ ३७ ॥

**साध्यं वा साधनं वा**—कार्यं वा कारणमपि वा, **दुर्निरूपम्**—निरूपणानर्हमिति, **स्वविहतविपथैः**—स्वीयव्यवहारव्याघातवद्भिः दुर्नीतिमार्गैः साधनीकृतैः, **वदन्तः**—प्रतिपादनमिव कुर्वन्तः लौकायतिकाः, **तद्वादे**—तस्य वादभूम्यां कथने, **किमर्थं प्रवृत्ताः**—केनोद्देशेन प्रयतितवन्तः ? (तेन कस्याऽपि कार्यस्यासिद्धेः ; कार्य-कारणभावस्यैव अभावात्) **किमिति च**—कस्मै चोद्दिष्टाय फलाय, **अन्वहम्**—प्रतिदिनम्, **भोजनादीन्**—आहारपरिग्रहादिकान्, **विदधति**—कुर्वन्ति ? (भोजनस्य कारणतायाः तृप्तेः कार्यतायाश्च दुर्वचत्वात्) **मुक्तेः**—मोक्षस्य, **नित्यत्वसिद्ध्या**—यत्ननिष्पाद्यत्वावगमेन, (स्वयं नित्यसिद्धत्वात्) **भजनम्**—मोक्षोपायतया श्रुत्याद्यवगतम्, उपासनम्, **अफलम्**—निरर्थकम्, **इत्यपि**—इति वर्णनमपि, **असत्**—असमीचीनम्, **प्रागसिद्धेः**—(उपायानुष्ठानसाध्यस्य मोक्षस्य) उपायानुष्ठानतः पूर्वं अनिष्पन्नत्वात्, **सकरणदशया**—करणकलेबरादियोगरूपसांसारिकदशासहिततयैव, **नित्यमुक्तिम्**-

[1] स्वविहिता—पद.पा.

नित्यामेव मोक्षदशाम्, **गृणन्तः**—व्याहतं व्याहरन्तः, (संसारदशायाः नित्यायाः मुक्तिदशायाश्च विरोधात्) **साङ्ख्यास्तु**—साङ्ख्या एव, अत्र—अस्मिन् सन्दर्भे, **अनुयोज्याः**—प्रश्नतः आक्षेप्याः ।। ३७ ।।

[मुक्तेःसत्त्वम्, साध्यत्वं स्थिरत्वं, भावात्मकत्वं च] (श्लो. 38–39)

(430) मोक्षाभावे मुधा स्यात् सपरिकरमिदं साधनं चिन्त्यमानं
मुक्तिश्चेद् भ्रान्तिसिद्धा भ्रम इह भविता यावदात्मस्वरूपम् ।
क्षेत्रज्ञं नित्यमुक्तं कथयितुरफलः साधनाध्याय इत्थं
प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिका न ।। ३८ ।।

**मोक्षाभावे**—मोक्षपदार्थस्योपायसाध्यस्य भाविनो मृषात्वे अभ्युपगम्यमाने, (तृतीयेऽध्याये) **चिन्त्यमानम्**—विचार्यमाणम्, **सपरिकरम्**—अङ्गकलापसम्पन्नम्, **इदं साधनम्**—भजनात्मकं मोक्षसाधनम्, **मुधा स्यात्**—विफलं भवेत् (असदर्थचिन्तायाः अफलत्वात्) **मुक्तिः**—मुक्तिपदवाच्या संसारनिवृत्तिपूर्वकनिरतिशयानन्दावाप्तिः, **भ्रान्तिसिद्धा चेत्**!—भ्रमवशात्कल्पितैव साधनचिन्तायाः फलम् न वास्तविकी-इति यद्युच्यते, तर्हि! **इह**—अस्मिन् पक्षे, **यावदात्मस्वरूपम्**—आत्मनः स्वरूपस्य अवस्थानपर्यन्तम् (शाश्वततयेत्यर्थः) **भ्रमो भविता**—असतोऽर्थस्य चिन्तनरूपो भ्रमः आत्मनि सन्ततमनुवर्तेतैव ; (तेनाऽयं जीवः कदाप्यसंसारी नैव भविष्यतीत्यापद्येत) **क्षेत्रज्ञम्**—पुरुषाभिधानं जीवात्मानम्, **नित्यमुक्तं कथयितुः**—स्वाभाविकतया मुक्तमेव वर्णयतः साङ्ख्यादेः, **इत्थं साधनाध्यायः**—प्रकारविशेषसहकारेण उपासनरूपमोक्षसाधनविचारपरः तृतीयोऽध्यायः, **अफलः**—निरर्थक एव स्यात्, **नयविदभिमता**—तार्किकाभ्युपगता, **मुक्तिः**—संसारनिवृत्तिः, **प्रध्वंसात्मा हि**—अशेषविशेषगुणोऽच्छेदरूपैव खलु!, **सा तु**—ध्वंसरूपा मुक्तिस्तु, **भावात्मिका न**—भावपदार्थस्वरूपा न भवति; (ध्वंसस्याऽभावविशेषत्वात्) ।। ३८ ।।

(431) सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयाऽन्यत्र नाशो
धीसङ्कोचप्रणाशो विकसनमतथाभूतमत्रागमात् स्यात् ।
मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिं मुक्तबुद्धेः
सामग्री चेश्वरेच्छा प्रभृतिसमुदयः स्यादनावृत्तिरेवम् ।। ३९ ।।

**अन्यत्र**—विवादास्पदां मुक्तिं विहायाऽन्यत्र घटादौ लोकदृष्टेऽर्थे, **नाशः**—नाशपदाभिधेयः, **कपालप्रभृतिबहुविधावस्थया सन्तत्यात्मा**—उत्तरोत्तरावस्थया घटावयवभूतकपालाद्यात्मिकया नानाविधया सन्तन्यमानस्वरूपतैव ; (नान्योऽस्ति नाशो नाम वैशेषिकादिवत्) **अत्र**—आत्मनः संसारनाशरूपमुक्तिविषये तु, **आगमात्**—आगमप्रमाणमनुरुध्य, **अतथाभूतम्**—घटादिभावप्रतियोगिकनाशविलक्षणं सत्, **विकसनम्**—अपरिच्छिन्ननिरुपाधिकत्वप्राप्त्या सर्वविषयग्राहित्वमेव, **धीसङ्कोचप्रणाशः स्यात्**—आत्मधर्मभूतज्ञानस्य परिच्छिन्नत्वाख्यायाः सङ्कुचितावस्थायाः निरसनमेव नाशपदार्थो भवितुमर्हति, **अन्ये तु**—मुक्तिस्वरूपपरिशीलनप्रवृत्ता इतरे तु, **मुक्तबुद्धेः**—मुक्तात्मनो धर्मभूताया धियः, **धारावहनमतिनयात्**—धारावाहिकबुद्धेः अविच्छेदतोऽनुवृत्तिन्यायात्, **सन्ततिम्**—धारारूपेण सन्ततामनुवृत्तिम्, **मन्यन्ते**—नित्यत्वविधां जानन्ति, **सामग्री च**—मुक्तधियः धारासान्तत्यप्रयोजकं यावत्कारणकूटं तु, **ईश्वरेच्छाप्रभृतिसमुदयः**—भगवत्सङ्कल्पादिघटितकारणस्तोम एव। **एवम्**—उक्तया रीत्या, **अनावृत्तिः**—मुक्तस्यात्मनः पुनः संसारिदशायाः अप्रसक्तिः, **स्यात्**—सम्भवत्येव ('न च पुनरावर्तते' इत्याद्युक्त्या) ॥ ३९ ॥

अधिकृतिसारावल्या वेदान्ताचार्यरचितायाः ।
आयोजिताऽर्थविवृत्तिः तृतीयके साधनेऽध्याये ॥ १ ॥
क्रतुनाथवंशजनुषा श्रीनिवासराघवार्यतनुजेन ।
श्रीरामभद्रनाम्ना त्वध्येतॄणां सुखेन बोधाय ॥ २ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

एवं तृतीयाध्यायस्य तुर्ये पादे सुसङ्गता ।
अधिक्रियापञ्चदशी बहुसङ्कीर्णनिर्णया ॥ १७२ ॥

इति चतुर्थः: पादः ॥

इति तृतीयः साधनाध्यायः ॥

श्रीमते रामानुजाय नमः ।
श्रियै नमः । श्रीधराय नमः ॥
औपनिषदार्थप्रवक्तृपरम्परायै नमः ॥

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

चतुर्थोऽध्यायः । प्रथमः पादः ॥

## (124) आवृत्त्यधिकरणम् ॥ ४-१-१ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

[श्रीमद्भिः सेनेश्वरार्यैर्विरचितः]

[ जगद्वारः सुविन्यस्तः सेनेशे यत्र विष्णुना । तस्याऽवतारमपरं सेनानाथगुरुं भजे ॥ ]

(179) ज्ञानस्योपायत्वात् तस्य च सकृदेव कर्तुमर्हत्वात् ।
सकृदेव वेदनं स्यान्नैतदुपास्तित्वचोदनाज्ज्ञप्तेः ॥ १ ॥

**ज्ञानस्य**—ज्ञानविशेषरूपस्य वेदनस्य, **उपायत्वात्**—मोक्षोपायत्वेन श्रुत्याद्यवगतत्वात् **तस्य च**—ज्ञानस्य च वेदनपदाभिधेयस्य, **सकृदेव कर्तुमर्हत्वात्**—एकवारमेव अनुष्ठातुं शक्यत्वात्, **वेदनम्**—मोक्षोपायभूतं ज्ञानम्, (उपासनाख्यम्) **सकृदेव स्यात्**—एकवारमनुष्ठितमेव विधायकशास्त्रतात्पर्यविषयः, (इति शङ्कने) **नैतत्**—एकवारानुष्ठानं न शास्त्रार्थतां भजते, **ज्ञप्तेः**—मोक्षोपायभूतस्य ज्ञानस्य, **उपास्तित्वचोदनात्**—उपासनरूपताविधानात् ज्ञापकात्, (तस्य च असकृदनुष्ठेयत्वावश्यंभावात्) ॥ १ ॥

### (2) अधिकरणसारावलिः ॥ (श्लो. 1-12)

[श्रीमद्भिः वेदान्ताचार्यैः विरचिता]

[श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥]

[पूर्वोत्तराध्याययोः पादद्विकयोश्च सङ्गतिप्रदर्शनम् ]

(432) इत्युत्पत्तिक्रमेण प्रथममभिहितो मुक्त्युपायः सहाङ्गै-
स्तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।
स्थूले देहेऽस्य सिध्येद् यदिह वदति तत् पादयुग्मेन पूर्वं
निष्क्रान्तस्याऽथ यत् स्यात् परिगणयति तत् पादयुग्मान्तरेण ॥ १ ॥

**इति**—पूर्ववृत्तेन तृतीयेनाऽध्यायेन, **उत्पत्तिक्रमेण**—स्वरूपनिष्पत्तौ विद्यमानं पौर्वापर्यरूपं क्रममनुरुध्य, (आदौ उपासनेन निरन्तरध्यानरूपेण मोक्षोपायभूताया: विद्याया: निष्पत्तिः ; ततः तत्फलभूतस्य मोक्षस्य-अपवर्गस्य प्राप्तिः इति) **प्रथमतः**—आदौ, **अङ्गैः सह**—अग्निहोत्रादिकर्म-शमदमादि-पाण्डित्य-बाल्य-मौनाद्यात्मकैः विद्येतिकर्तव्यताभूतैः सहकारिकलापैः, सह, **मुक्त्युपायः**—संसारनिगडाद्विमोचनरूपस्य मोक्षस्य साधनभूतः विद्यारूपोऽर्थः **अभिहितः**—न्यायनिष्पादनपूर्वकं निरूपितः, **अथ**—ततः परम्, **तत्साध्यम्**—विद्यानिष्पाद्यं मोक्षाख्यं फलम्, **विदुषः**—निष्पन्नोपासनस्य पुरुषस्य, **पर्वभेदैः**—क्रमायत्तसिद्धिभिः पर्वविशेषैः **सूत्रकारः व्यनक्ति**—शारीरकसूत्रकृत् कृष्णद्वैपायनः स्पष्टीकरोति, **अस्य**—विद्यासिद्धिमतश्चेतनस्य, **स्थूले देहे**—इन्द्रियग्राह्यस्थूलदेहावस्थितिकाले, **यत् सिध्येत्**—यत् कार्यं, निष्पन्नं भवेत् (पूर्वोत्तराघाश्लेष-देहादपक्रमणादिकम्) **तत्**—तादृशं कार्यं मोक्षप्राग्भावि, **इह**—चतुर्थेऽध्याये, **पूर्वं पादयुग्मेन**—आदिमचरणद्वयेन, **वदति**—निरूपयति न्यायेन, **अथ**—पश्चात्तनेन, **पादयुग्मान्तरेण**—अवशिष्टेनान्येन पादद्वयेन, **निष्क्रान्तस्य यत् स्यात्**—स्थूलात् देहादुत्क्रान्तस्य यद्भवेत्, **तत्**—तादृशमर्थद्वयम्, (अर्चिरादिपथगमन-परब्रह्मप्राप्तिद्वयम्, **परिगणयति**—चिन्तयति ॥ १ ॥

[फलाध्यायेऽपि विद्याविचारस्य प्रयोजनम्]

(433) सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति ? यद्यस्ति शेषं
ब्रूतामेतच्च पूर्वं न हि तदिह फले सङ्घटेतेति चेन्न ।
मुक्तेरन्यैरसिद्धिं प्रकृततदविनाभावमासन्नसिद्धिं
मुक्तावस्थासमं च स्थिरभजनरसं व्यङ्क्तुमत्राऽनुबन्धात् ॥ २ ॥

**विद्या**—मोक्षोपायभूता उपासनात्मिका विद्या, **प्रागेव**—पूर्वस्मिन् अध्याये एव, **सूक्ता**—सुष्ठु निरूपिता वर्तते, **इमाम्**—निरूपितामेव विद्याम्, **किमिति**—केन हेतुना, **पुनः वक्ति**—मुहुः प्रतिपादयति ? (एकवारं निरूपणतः आवश्यकस्य प्रयोजनस्य सिद्धत्वेन प्राप्तव्याभावात्) **शेषम्**—निरूपणीयं निरूपितावशिष्टम्, **अस्ति यदि**—वर्तते चेत् । **एतच्च**—अद्यावशिष्टतया उच्यमानमप्यर्थजातम्, **पूर्वं ब्रूताम्**—विद्यानिरूपणायैव प्रवृत्ते पूर्वस्मिन्नेव अध्याये निरूपयतु नाम, (तत्र निरूप्यमवशेष्य अत्र अनिरूप्यस्य निरूपणं कस्मै फलाय ?) **हि**—यतः, **तत्**—अवशिष्टविद्यांशनिरूपणम्, **फले इह**—तत्फलभूतार्थरूपणैकफले, अस्मिन् फलाध्याये, **न सङ्घटेत**—नैव सुसम्बद्धतां प्राप्नुयात्, **इति चेत्**—

एवं शङ्कनम्, **न**—नैव विचारपूर्वकम्, **मुक्तेः**—मोक्षरूपस्य फलस्य, **अन्यैः असिद्धिम्**—विद्येतरैः उपायैः सर्वथा अलाभम्, **प्रकृततदविनाभावम्**—प्रस्तुतस्य विद्याख्योपायस्य मोक्षरूपफलायोगव्यवच्छेदम् (मोक्षफलकत्वनैयत्यम्), **आसन्नसिद्धम्**—(उपायभूताया विद्यायाः) अपवर्गरूपफलेन अदूरसंनिकर्षम्, **मुक्तवस्थासमं स्थिरभजनरसं च**—मोक्षदशातुल्यं निरन्तरानुवर्त्यमानोपासनजन्यप्रीतिविशेषं च, **व्यङ्क्तुम्**—विद्यासम्बद्धतया प्रकटीकर्तुम्, **अत्र अनुबन्धात्**—अस्मिन् फलाध्यायेपि विद्यासम्बन्ध्यर्थांशयोजनस्य कृतत्वतः, (पौनरुक्त्यासाङ्गत्याद्यनवकाशात्) ॥ २ ॥

[अधिकरणरचनापरो भागः]

(434) शुद्धैरुत्कृष्टधर्मैः सदनपचरणे ब्रह्मविद्या भवित्री-
त्युक्तं पूर्वाधिकारे विमृशति तु परं तत्स्वरूपं यथावत्।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्ताद्
यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥ ३ ॥

**पूर्वाधिकारे**—प्राक् वृत्ते मुक्तिफलाधिकरणे, **शुद्धैः**—'कार्यमित्येव यत् कर्म' इति गीतोक्तरीत्या सात्त्विकश्रेणिप्रविष्टैः (फलकामना कर्तृत्वाभिमानाद्यसंस्पृष्टैः) **उत्कृष्टधर्मैः**—'तत्कुरुष्व मदर्पणम्' इत्युक्तप्रकारेण भगवदर्पणबुद्ध्याऽनुष्ठीयमानतया उपासनसिद्ध्यनुगुणैः वर्णाश्रमाङ्गभूतैः यज्ञ-दान-तपःप्रभृतिभिः (अन्तरङ्ग-बहिरङ्गैः) श्रुति-स्मृतिसिद्धैर्धर्मैः (साधनभूतैः) **सदनपचरणे**—'सन्तमेनं ततो विदुः' इति सत्पदाभिधेयानां ब्रह्मविदामपचारे अप्रवृत्ते, **ब्रह्मविद्या भवित्री**—ब्रह्मवेदनात्मिका वेदान्तविहिता विद्या निष्पन्ना भवतीति, **उक्तम्**—निरूपितम्, **परम्**—तत्पश्चाद्भाविनि अस्मिन् तुरीयेऽध्याये, **तत्स्वरूपम्**—मोक्षोपायत्वेन सिद्धब्रह्मविद्यास्वरूपम्, **यथावत् तु**—अविपर्यस्तं यथा स्यात् तथा, (श्रुतितात्पर्यानुगुणम्) **विमृशति**—शङ्कनीय-निरसनीय-समर्थनीयविवेचनतः निरूपयति, **प्रत्यक्षं वा स्मृतिर्वा**—मोक्षपायभूतं वेदनं दर्शनात्मकं वा? अनुभूतार्थविषयकसंस्कारप्रभवज्ञानात्मकं वा? (तथा) **इदम्**—प्रकृतं वेदनम्, **सकृत् असकृद्वेति**—एकवारमेवाऽनुष्ठितं सत् मोक्षोपायतां प्रतिपद्यत इति श्रुत्यभिमतं भवति वा? पुनः पुनः बहुवारमनुष्ठितं सत् तादृशं भवतीति श्रुतिसंमतं भवति वा?, इति, **पुरस्तान्नोक्तम्**—साधननिरूपणार्थे तृतीयाध्याये न निर्णीतं वर्तते, (तथैव) **यावज्जीवानुवृत्तिप्रभृति च**—उपासनरूपवेदनस्य यावदायुषमनुष्ठेयतासन्तत्यादिकमपि, नैव निश्चितम्, **तत्**—ततो हेतोः, **इह अपौनरुक्त्यम्**—चतुर्थेऽध्याये (विद्यासम्बन्ध्यर्थ

विशेषनिरूपणे क्रियमाणे) निरूपितार्थनिरूपणनिबन्धनं पौनरुक्त्यं नैव प्रसज्यत इत्येतत्. **सुबोधम्**—सुखेन अवगन्तुमर्हम् ।। ३ ।।

(435) ज्ञानं मुक्तेरुपायः श्रुतिभिरभिहितस्तस्य सङ्ख्या तु नोक्ता
सौकर्यं स्यात् सकृत्त्वे तत इह तु भवेच्चारितार्थ्यं विधीनाम् ।
सम्यक्त्वात् तद्ध्रुवत्वं न पुनरनुगमात् प्रोक्तमित्यप्यसारं
सामान्योक्तेर्विशेषे सति पशुनयतस्तत्र विश्रान्तिसिद्धेः ।। ४ ।।

**ज्ञानम्**—ब्रह्मवेदनम्, **मुक्तेरुपायः**—अपवर्गसाधनमिति, **श्रुतिभिरभिहितः**—'ब्रह्मविदाप्नोति परम्, ज्ञात्वा देवं मुच्यते' इत्यादिभिः वेदान्तवाक्यैः स्पष्टं प्रतिपादितम्, **तस्य**—मुक्त्युपायभूतस्य ज्ञानस्य, **सङ्ख्या तु**—अनावृत्तत्वेन एकसङ्ख्यत्वं वा आवृत्तत्वेन नानासङ्ख्यत्वं वेत्येतत्परम्, **नोक्ता**—वेदनावगमकवाक्ये न स्पष्टीकृतम्, **सकृत्त्वे**—एकवारमात्रमेवानुष्ठेयत्वे श्रुतिसंमते सति, **सौकर्यं स्यात्**—'सकृत्कृतः शास्त्रार्थः' इति मीमांसान्यायस्यानुग्रहलाभो भवेत्, **ततः**—तावन्मात्रादेव, **इह**—मोक्षोपायोपदेशप्रकरणे, **विधीनाम्**—ब्रह्मवेदनविधायकवाक्यानाम्, **चारितार्थ्यं भवेत्तु**—साफल्यं भवेदेव, **तद्ध्रुवत्वम्**—'ध्रुवा स्मृतिः' इति छान्दोग्यश्रुत्युक्तं वेदनगतं ध्रुवपदवाच्यत्वम्, **सम्यक्त्वात् प्रोक्तम्**—ज्ञानान्तरकृतबाधागोचरत्वकृतमेव प्रदर्शितम्, **न पुनः अनुगमात्**—न तु नैरन्तर्येण चिरकालानुवर्तमानताकृतम्, **इत्यपि असारम्**—एवं रीत्या वर्णनमपि फल्गु, **सामान्योक्तेः**—सामान्यधर्मावच्छिन्नार्थप्रतिपादिकाया वाचः, **विशेषे सति**—विशेषधर्मावच्छिन्नावगमकप्रमाणोपलम्भे विद्यमाने, **पशुनयतः**—छाग-पशुन्यायमनुसृत्य, ['छागो वा मन्त्रवर्णात्' (पू.मी.सू. 6-8-31)] **तत्र**—विशेषधर्मावच्छिन्नेर्थे एव, **विश्रान्तिसिद्धेः**—पर्यवसानस्य स्वभावतो लाभात्॥ (अतः असकृदावृत्तनिरन्तरानुवृत्तदर्शनसदृशतापन्नभक्तिरूपज्ञानाख्ये एव वेदने मोक्षोपायताप्रतिपादनस्य सर्ववेदान्तविधितात्पर्यम्) इति ।। ४ ।।

(436) किं चाऽऽग्नेय्यादि[1]नीत्या विदिरिह वदति ध्यानशब्दार्थमेव
ध्याने चोपासनोक्तिः परभजनतया वक्ति सेवात्मकत्वम् ।
ऐकार्थ्ये विद्युपास्योर्व्यतिकरिततया श्रूयते च प्रयोगः
कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्ववादः ।। ५ ।।

---

[1] आग्नेयादि—प.यो.

**किं च**—अपि च, इह **विदिः**—मोक्षोपायोपदेशपरवाक्यस्थो विदधातुः, **आग्नेय्यादि-नीत्या**—ज्योतिष्टोमप्रकरणगतम् 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इतीदं वाक्यं, यथा प्रकृतक्रतुप्रकरण-श्रुताया एव अग्निदेवताकाया ऋचः, तत्क्रतुसम्बन्ध्याग्नीध्राख्यमण्डपोपस्थानाङ्गत्वं विधत्ते ; न तु ऋग्वेदगतमण्डलदशकान्तःपातिन्याः यस्याः कस्याश्चिदग्निदैवत्याया ऋचः, तथैव ; **ध्यान-शब्दार्थमेव वदति**—'ओमित्येवं ध्यायथात्मानम्' इत्येवमादितत्प्रकरणस्थध्यानपदबोध्यमर्थमेव प्रतिपादयति ; न तु यत्किञ्चिद्वेदनम् , (प्राकरणिकाप्राकरणिकयोर्मध्ये प्राकारणिकग्रहणस्यैव न्याय्यत्वात्) [तथा च वेदनं प्रकृते, विजातीयप्रत्ययाव्यवहितनिरन्तरानुवृत्तचिन्तनधारारूपमेव] **ध्याने च उपासनोक्तिः**—तस्मिन्नेव च ध्याने विषये, उत्तरत्र 'उपासते पुरुषं ये ह्यकामाः' इत्येवमादौ उपासनपदव्यवहारः, **परभजनतया**—स्वापेक्षयोत्कृष्टविषयकभजनरूपताबोधनद्वारा, **सेवात्मकत्वं वक्ति**—सेवापरपर्यायभक्तिरूपार्थपर्यवसानं बोधयति, (अतः वेदन-ध्यान-उपासन-सेवा-भक्ति शब्दाः एकार्थपर्यवसिताः) एवमेव च , **विद्युपास्योः**—विदधातोः , उपपूर्वकास्-धातोश्चेत्युभयोः, **व्यतिकरिततया**—मिथः संक्रमेण, **ऐकार्थ्ये प्रयोगश्च श्रूयते**—उपासीते-त्यारभ्य वेदेति, वेदेत्यारभ्य उपासीतेति चैवंक्रमेण समानार्थपर्यवसानप्रतिपत्तिकरः श्रौतः प्रयोगश्च उपलभ्यते, **भक्तेः कार्ये**—भक्तिसाध्ये कीर्तनार्चनादौ , **भक्तेर्हेतौ**—भक्तेः साधने श्रवण-स्मरण-पादसेवनादौ च विषये, **क्वचित् भक्तिभेदत्ववादः**—स्मृतिपुराणादौ भक्ति-विशेषरूपताव्यवहारः, **उपचरितः**—कार्य-कारणयोरभेदानुसन्धानादिरूपोपचारप्रयुक्तः (उपा-सने एव तु मुख्यः) ॥ ५ ॥

(437) योगोद्युक्तेषु यः स्यात् स्ववरणविषयस्तेन लभ्यः परात्मा
ग्राह्यत्वं च प्रियत्वात् तदपि हि गुणतो भक्तिरेव श्रुतैवम् ।
सा च प्रीत्यात्मिका धीः क्वचिदतिशयिते स्मृत्यबाधोऽप्यतः स्यात्
प्रोक्ता चैषा ध्रुवानुस्मृतिरनुवहनात् तैलधाराक्रमेण ॥ ६ ॥

**योगोद्युक्तेषु**—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि-श्रुत्युक्तोपायानुष्ठानप्रवृत्तेषु मध्ये, **यः स्ववरणविषयः स्यात्**—यादृशः अधिकारी परमात्म-कर्तृकस्वीकारस्य गोचरतां प्राप्तो भवेत् , **तेन**— तादृशेनाधिकारिविशेषेणैव, **परमात्मा लभ्यः स्यात्**—उपायानुष्ठानेन प्राप्यतया श्रुतिसिद्धः परतत्त्वभूतोऽर्थः सम्पत्तुमर्हो भवेत् , **ग्राह्यत्वं च**—परमात्मकर्तृकवरणविषयत्वमपि जीवस्य, **प्रियत्वात्**—तस्य भगवन्निष्ठप्रीतिविषयत्वत एव , **तदपि**—भगवद्गतप्रीत्यास्पदत्वमपि जीवे , **गुणतो हि**—निरतिशयप्रियपरमात्मकत्वरूपात् जीवगतात् धर्मादेव खलु सिद्ध्यति, **एवम्**—एतादृशार्थप्रतिपादनप्रवृत्तायाः 'यमेवैष वृणुते तेन

लभ्यः ' इति श्रुतेस्तात्पर्यप्रकारचिन्तने, **भक्तिरेव श्रुता**—जीवगता भगवद्विषयिणी भक्तिरेव भगवत्कर्तृकजीवकर्मकप्रियत्वहेतुकवरणे प्रयोजकत्वेन श्रुतिसिद्धा भवति, **सा च**—भक्तिश्च, **अतिशयिते क्वचित्**—स्वापेक्षया अत्यन्तमुत्कृष्टे कस्मिंश्चन विषये, **प्रीत्यात्मिका धीः**—प्रीतिपदवाच्यावस्थाविशेषापन्नज्ञानविशेष एव, **अतः**—श्रुत्यर्थस्य एवं पर्यवसानात्, **स्मृत्यबाधोऽपि स्यात्**—भक्तेर्मोक्षोपायताबोधिकया 'भक्त्या त्वनन्यया शक्यः' इत्यादिस्मृतेः श्रुतिविरुद्धार्थकत्वकृतो बाधोपि परिहृतो भवति, **एषा**—भक्तिरूपापन्ना धीरेव, **तैलधाराक्रमेण अनुवहनात्**—तैलधारावत् सान्तत्येन अनुवर्तनाद्धेतोः, **ध्रुवानुस्मृतिः प्रोक्ता**—'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इत्यत्र ध्रुवास्मृति ' शब्देनाऽपि व्यवहृता ॥ ६ ॥

(438) रागादादौ [1]प्रवृत्तिः[1] श्रवण-मननयोर्ध्यानमेकं विधेयं
तत्र द्रष्टव्यशब्दो विशदतमतया वक्ति वैशिष्ट्यमात्रम् ।
शब्दोत्थं दर्शनं ये विषयमकथयन् वेदनोक्तेरमीषां
व्याघातादिप्रपञ्चः स्वयमिह निपुणैः सूक्ष्ममन्वेषणीयः ॥ ७ ॥

(साङ्गसशिरस्कवेदाध्ययनजन्यवेदान्तार्थविषयकापातप्रतीतिमतः पुरुषस्य, 'आत्मा वा अरे ' इति श्रुतेषु मध्ये) **श्रवण-मननयोः**—गुरुमुखात् वेदान्ततत्त्वार्थश्रवणे, श्रुतार्थप्रतिष्ठायै उपपत्तितः (न्यायतः) चिन्तने (मनने) च, **प्रवृत्तिः**—प्रयत्नः, **आदौ**—विधिव्यापारात् पूर्वमेव, **रागात्**—इच्छात एव सम्पद्यते, **ध्यानमेकम्**—निदिध्यासनमेकमेव, **विधेयम्**—अन्यतोऽप्राप्तं विधिव्यापारेणैव ज्ञाप्यम् ('निदिध्यासितव्यः' इत्यनेन) **द्रष्टव्यशब्दः**—प्रथमतः श्रुतः 'द्रष्टव्यः' इत्ययं विधिवाक्यस्थः शब्दः, **तत्र**—विधिविषये ध्याने, **विशदतमतया**—अत्यन्तवैशद्यरूपम्, **वैशिष्ट्यमात्रम्**—विशेषमेव केवलम्, **वक्ति**—ध्यानविशेषणतापन्नं बोधयति, (दर्शनपदाभिधानार्हविशदतमत्वापत्तियोग्यं ध्यानं विधीयते इत्यर्थः) **ये**—अद्वैतिनः, **वेदनोक्तेः**—'ब्रह्मवित्' 'ब्रह्म वेद' इत्यादिस्थवेदनवाचिशब्दस्य, **विषयम्**—बोध्यमर्थम्, **शब्दोत्थं दर्शनम्**—शब्दजन्यापरोक्षज्ञानात्मकम्, **अकथयन्**—वर्णितवन्तः **अमीषाम्**—तादृशार्थवर्णनप्रवृत्तानामद्वैतिनाम्, **व्याघातादिप्रपञ्चः**—स्ववचनविरोधमारभ्यापद्यमानो दोषराशिः (शाब्दस्य परोक्षतानैयत्यात् अपरोक्षत्वस्य स्वव्याहतत्वात् इत्यादिः) **निपुणैः**—प्रमाण-प्रमेयतत्त्वचिन्तनकौशलवद्भिः विचारप्रवृत्तैः, **इह**—मोक्षोपायार्थविधानपरवाक्यार्थे, **स्वयं अन्वेषणीयः**—अन्याप्रेरिततया स्वयमेव शोधनेऽपि अवगन्तुमर्हः—इति ॥७॥

---

[1] **प्रवृत्तेः—? (पा)**

(439) ध्याने वैशद्यमात्रादुपचरणवती दृष्टिशब्दप्रवृत्तिः
तुल्यं तत् त्वन्मतेऽपि ह्यभिलषति धियं चाक्षुषीं दृष्टिशब्दः ।
घ्राता स्प्रष्टेति शब्दः करणविरहिते मुख्यवृत्तो न तु स्यात्
तद्ग्राह्यस्त्वस्मदीयो बहुनयगुणवांस्त्याज्य एव त्वदीयः ॥ ८ ॥

**ध्याने दृष्टिशब्दप्रवृत्तिः**—स्मृत्यन्तःपातिनि ध्यानरूपेऽर्थे अभिधेये, दर्शनरूप-चाक्षुषज्ञानबोधनस्वाभाव्यवतो दृश्धातुघटितशब्दस्य प्रयोगः (श्रुत्यादिदृष्टः), **उपचरणवती**—मुख्यप्रवृत्तिनिमित्तरहिते मुख्यार्थसामीप्यकृतः, **वैशद्यमात्रात्**—चाक्षुषज्ञानगतं अत्यन्तस्पष्टत्वमात्रं निमित्तीकृत्य (आगतः), (इदं विशिष्टाद्वैतिमते मुख्यमर्थं विहाय उपचरितार्थस्वीकरणम्) **तत्**—औपचारिकार्थस्वीकरणम्, **त्वन्मतेऽपि**—अस्मन्मते दोषं चिन्तयतामद्वैतिनां मतेऽपि, **तुल्यम्**—समानमेव, **हि**—यतः, **दृष्टिशब्दः**—दृश्धातुघटितशब्दप्रयोगः, **चाक्षुषीं धियम्**—चक्षुःकरणकमतिविशेषम्, **अभिलषति**—अभिप्रैति, **करणविरहिते**—इन्द्रियशून्ये (इन्द्रियाकरणज्ञानधर्मके) ब्रह्मणि प्रयुज्यमानः, **घ्राता स्प्रष्टेति शब्दः**—घ्राणेन्द्रियाधीनज्ञान-वदर्थको घ्रातृशब्दः, त्वगिन्द्रियाधीनज्ञानवदर्थकः स्प्रष्टृशब्दो वा, **मुख्यवृत्तो न तु स्यात्**—पुष्कलप्रवृत्तिनिमित्तयोगेन प्रयुक्तो नैव भवितुमर्हति, **तत्**—तस्माद्धेतोः, **बहुनयगुणवान्**—सामान्यविशेषन्यायादिरूपबहुन्यायसहकारवान्, श्रुतिस्मृत्याद्यनुरोधरूपबहुगुणवांश्च, **अस्मदीयः**—विशिष्टाद्वैत्यनुसृतः पक्ष एव, **ग्राह्यः**—विवेचकैः उपादेयः, **त्वदीयः**—अद्वैतिभिराश्रितः पक्षः परम्, **त्याज्य एव**—अनुपादेय एव ॥ ८ ॥

(440) न द्वार-द्वारिक्लृप्तिः कथमपि घटते विश्रमश्चेद्विशेषे
सामान्यात्मा विशेषैर्लघु न च गुरुभिः कर्तुमैक्ये विकल्प्यम् ।
अर्थैक्ये दर्शनोक्त्या स्मृतिरुपचरिता युज्यते साध्यसिद्ध्यै
स्मृत्युक्त्या दर्शनस्योपचरणमसदित्यन्यदेतत् फलाद्यैः ॥ ९ ॥

**विशेषे विश्रमः घटते चेत्**—(वेदनादेः शब्दस्य ज्ञानसामान्यवाचिनः) ध्यानोपासन-भक्त्यात्मकज्ञानविशेषे पर्यवसानगवृत्त्या अन्वयः सम्भवति यदि, (तदा) **द्वार-द्वारिक्लृप्तिः**—(वेदनं ध्यानं जनयति, ध्यानं ध्रुवां स्मृतिं, ध्रुवा स्मृतिः दर्शनं, दर्शनं भक्तिं जनयतीत्येवं) वेदनस्य ध्यानादिद्वारा भक्तिजनकत्वं निमित्तीकृत्य तादृशशब्दप्रयोगरूपा द्वार-द्वारिभावकल्पना, **कथमपि न घटते**—केनापि प्रकारेण न सङ्गता भवति (कल्पनाया गुरुत्वात्), **सामान्यात्मा**—वेदनरूपज्ञानसामान्यात्मकोऽर्थः, **विशेषैः**—ध्यान-ध्रुवस्मृत्यादिरूपैः ज्ञानत्वावान्तरधर्मवद्भिः सह,

**न विकल्प्यः**—विकल्पितोपायतया विधातुं नैव शक्यः, (समानयोरेव विकल्पात्) **कर्तुरैक्ये**—उपायानुष्ठातुः पुरुषस्य अभेदे सिद्धे, **लघु**—अल्पश्रमादिनिष्पाद्यं साधनम्, **गुरुभिः**—बह्वायासादिनिष्पाद्यैः साधनैः सह, **न च विकल्प्यम्**—विकल्पतो विधानार्हं नैव भवितुमर्हम् (समानयोरेव विकल्पार्हत्वात्), **अर्थैक्ये**—मोक्षोपायभूतज्ञानाभेदे सति, **स्मृतिः**—मोक्षोपायभूता शुभाश्रयभगवद्रूपस्मृतिः, **स्पाष्ट्यसिद्ध्यै**—विशदतमत्वप्रतिपत्तिलाभाय, **दर्शनोक्त्या उपचरिता**—प्रत्यक्षवाचिना शब्देन उपचारतः प्रयुक्ता इत्येतत्, **युज्यते**—सङ्गतं भवति, **स्मृत्युक्त्या**—स्मरणवाचिना शब्देन, **दर्शनस्य**—साक्षात्काररूपस्य ज्ञानस्य, **उपचरणम्**—उपचारतः कथनम्, **असत्**—न साधु (उत्कृष्टोपचारः निकृष्टे युक्तः ; न तु उत्कृष्टे निकृष्टोपचारः) **इति**—अतो हेतोः स्मृतेरेव प्रत्यक्षतापन्नायाः सन्ततध्यानरूपाया एव मोक्षोपायतेति सिद्धम्, **एतत्**—इदं वेदनम्, **फलात्**—फलरूपादर्शनात्, **अन्यत्**—अतिरिक्तमेवोपास्यभूतम् 'द्रष्टव्य' इति विहितं दर्शनमिति, (फलस्य विधेयत्वासम्भवात्, 'द्रष्टव्यः' इति च विधिप्रत्ययस्य स्पष्टं श्रुतेः इति) ॥ ९ ॥

(441) कृच्छ्रादौ शक्तिहीनो दृढपरितपनः संयमार्हश्च कुर्यात्
सर्वार्थां केशवानुस्मृतिमिति घटते तद्विकल्पो यथार्हम् ।
सामान्यात् सर्वदोषेष्वियमुपकुरुते सर्वनैमित्तिकानां
मुक्तेरप्यत्र मूलं मुनिरनुमनुते तादृशध्यानरूपम् ॥ १० ॥

**कृच्छ्रादौ**—कृच्छ्र-चान्द्रायण-सान्तपन-पराकादौ दुष्कृतविशेषनिष्कृतिरूपतया शास्त्रसिद्धे कर्मणि, **शक्तिहीनः**—विधिवदनुष्ठानानुगुणदैहिक-मानसिकादियोग्यताविदूरः (पुरुषः), **दृढपरितपनः**—पश्चात्तापदार्ढ्यवान्, **संयमार्हश्च**—सम्पन्नध्यानयोगतया मनआदीन्द्रिय-नियमनपूर्वकं भगवत्स्मरणाख्ये मानसे व्यापारे कृत्स्नतापादनसामर्थ्यवांश्च जनः, **सर्वार्थाम्**—सर्वविधदुष्कृतप्रायश्चित्तस्थानापत्त्यर्हाम्, **केशवानुस्मृतिम्**—'प्रायश्चित्तान्यशेषाणि, कृष्णानुस्मरणं परम्' इति प्रतिपादिताम्, श्रीकृष्णध्यानरूपां निरन्तरानुवृत्तां स्मृतिम्, **कुर्यादिति**—अनुतिष्ठेत् इति हेतोः, **यथार्हम्**—दुष्कृतप्रायश्चित्तानुगुण्येन (प्रायश्चित्तस्थाने अनुष्ठानरूपः), **विकल्पः**—पाक्षिकानुष्ठानव्यापारः **घटते**—युक्तो भवति, **सामान्यात् सर्वदोषेषु**—अविशेषेण येषु केषुचन किल्बिषेषु प्रसक्तेषु सत्सु तेषु सर्वेष्वपि, **सर्वनैमित्तिकानाम्**—सर्वेषां तन्निमित्तकानां प्रायश्चित्तानामप्यनुष्ठितानाम्, **इयम्**—अन्ते क्रियमाणा कृष्णानुस्मृतिः, **उपकुरुते**—(प्रायश्चित्त) पूर्तिमापादयन्ती अतिशयमाधत्ते, (किंच, **तादृशध्यानरूपां केशवानुस्मृतिम्**—निरतिशयप्रीतिरूपत्व-विशदतमप्रत्यक्षतापन्नत्वाख्यविशिष्टवेषयुक्तां भगवत्स्मृतिसन्ततिम्,

**मुनिः**—बादरायणः, **अत्र**—शारीरकशास्त्रे, **मुक्तेरपि मूलमनुमनुते**—मोक्षस्याप्युपायत्वेन (अनादिसञ्चिताविद्याया अपि प्रायश्चित्तीभूय संसारबन्धनिवर्तिकां संमन्यते (अस्मिन् आवृत्त्यधिकरणे लिङ्गाच्चेत्यनेन पाराशरीं स्मृतिं प्रमाणयन्) ॥ १० ॥

(442) नन्वेवं ये मुकुन्दं शरणमुपगता वर्जिता ध्यानयोगैः
ते चातिक्रम्य मृत्युं यमिन इव परं धाम यान्तीत्युशन्ति ।
सत्यं तेऽपीति शब्दान्नियतविषययोर्गौरवे लाघवेऽपि
प्राप्तार्थं ध्यानशास्त्रं प्रणिधिसहृदशायोगिभिर्योगविद्भिः ॥ ११ ॥

**ननु**—भोः, **एवम्**—कृष्णानुस्मृतिनैरन्तर्यरूपस्य ध्यानयोगस्यैव सर्वप्रायश्चित्तता मोक्षोपायता चेति सर्वसामर्थ्यं निश्चीयते यदि !, **ये**—यादृशाश्चेतनाः, **मुकुन्दं शरणमुपगताः**—मुक्तिदायकं भगवन्तं नारायणं रक्षकत्वेन स्वीकृत्य न्यस्तसमस्तात्मभराः, **ध्यानयोगैः वर्जिताः**—मोक्षोपायतया वेदान्तप्रतिपन्नैः विविधविद्यानुष्ठानकाष्ठाभूतैः ध्यानैर्विरहिताः सन्ति, **ते च**—तादृशा अपि चेतनाः, **मृत्युमतिक्रम्य**—संसारमतिलङ्घ्य, **यमिन इव**—प्राप्तसंन्यासयोगा इव, **परं धाम यान्तीति**—विष्णोः परमं पदं प्राप्नुवन्तीति, **उशन्ति**—शास्त्राणि प्रतिपादयन्ति ('शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥' इति), एवं स्थिते पूर्वमुक्तं कथं वा युज्येतेति शङ्कायाम्, **सत्यम्**—उक्तं सर्वमङ्गीकार्यमेव शरणवरणस्याऽपि मुक्त्युपायत्वे अविवादात, (परम्) **तेऽपीति शब्दात्**—'तेऽपि मृत्युमतिक्रम्ये'त्यत्र ध्यानयोगितौल्येन शरणागतानामप्युल्लेखात्, **गौरवे लाघवेऽपि नियतविषययोः**—प्रणिधानसमर्थे गुरुभूतयोगानुष्ठानविधिः, तदसमर्थे आकिञ्चन्यानन्यगतिकत्वादिमति लघुभूतप्रपत्त्यनुष्ठानविधिरिति रीत्या लब्धविषयव्यवस्थयोः उभयोरप्युपाययोर्मध्ये, **ध्यानशास्त्रम्**—मोक्षोपायतया ध्यानविधायि शास्त्रम्, **प्रणिधिसहृदशायोगिभिः**—अङ्गकलापसम्पन्न (अष्टाङ्गयोग) चित्तप्रणिधानयोग्यकरण-कलेबरसम्पत्तिरूपावस्थाविशेषवद्भिः, **योगविद्भिः**—योगानुष्ठानप्रकारयाथात्म्यवेदनयुक्तैः (ज्ञानानुष्ठानपूर्णैः) महद्भिः, **प्राप्तार्थम्**—सावकाशत्वेन चारितार्थ्यवद्भवति ॥

(443) धर्मो वर्णादियोग्यः कलुषशमनतः सत्त्ववृद्ध्युपकारी
भक्तेस्तद्वत् प्रपत्तिस्त्वगतिकसमयेष्वन्तरायापहन्त्री ।
सानुक्रोशे हि शक्ते शरणवरणतः सर्वसाध्यं सुसाधं
मोक्षाकाङ्क्षी प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतं च ॥ १२ ॥

**वर्णादियोग्यः धर्मः**—तत्तद्वर्णादियोग्यः वेदानुवचन-यज्ञ-दान-तपआदिरूपो विधिविहितो धर्मः, **कलुषशमनतः**—अन्तरायभूतपापनिर्हरणद्वारा, **सत्त्ववृद्ध्या**—आवश्यकप्रमाणेन सत्त्वगुणस्य वृद्ध्यापादनपूर्वकम्, **भक्तेः उपकारी**—मोक्षसाधनभूताया उपासनाख्यायाः भक्तेः स्वरूपनिष्पत्त्यौपयिकः सन् अङ्गं भवति, **तद्वत्**—वर्णाश्रमादिधर्मा इव, **प्रपत्तिस्तु**—स्वाभीष्टे अनन्यसाध्ये सति तत्साधनाय भगवदेकोपायतायाच्ञाऽपि, **अगतिकसमयेषु**—अनन्यगतिकत्ववत्सु अवसरेषु, **अन्तरायापहन्त्री**—भक्तविघ्ननिवारिणी भवति। (भक्त्यङ्गकर्मस्थाने स्थित्वा भक्तिप्रतिबन्धकान् दूरीकृत्य भक्तिनिष्पत्तौ सहकारिणी भवति) **शक्ते**—फलप्रदानसमर्थे, **सानुक्रोशे हि**—परदुःखप्रहाणेच्छावति खलु पुरुषे (क्रियमाणात्) **शरणवरणतः**—रक्षकत्वप्रार्थनात्, **सर्वसाध्यम्**— सर्वविधैस्तैस्तैरुपायैः सम्पाद्यत्वेन लोकशास्त्रसिद्धं सर्वविधमपि प्रयोजनम्, **सुसाधम्**—अश्रमेण सम्पादयितुं शक्यं भवति, **क्वाऽपिमन्त्रे**—श्वेताश्वतरीये 'यो ब्रह्माणं विदधाति पूर्वम्' इति मन्त्रे, **मोक्षाकांक्षी अहम्**—मुमुक्षायुक्तः अहम्, **शरणं प्रपद्ये इति**—रक्षकतावरणपूर्वकं प्रपन्नो भवामीति, **श्रुतं च**—'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति मन्त्रान्तिमभागे आम्नातमपि दृश्यत इति ॥ १२ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

एवम्—अङ्गैः सह विद्यानिरूपणानन्तरम्, चतुर्थे फलाध्याये विद्याफलं चिन्त्यते।

तत्र प्रथमे आवृत्तिपादे—विद्यास्वरूपशोधनपूर्वकं देहावस्थितिसमये सम्भवत् विद्याफलं चिन्त्यते। यद्यपि चतुर्थः फलनिरूपणपर एव; तथापि भक्तिरूपापन्नज्ञानस्य प्रीतिरूपतया फलकोटिनिवेशज्ञापनार्थं, 'अस्य इदं साधनम्' इति, साध्यसाधनसम्बन्धज्ञापनार्थं च, विद्यास्वरूपं विशोध्यते ॥

तत्र आवृत्त्यधिकरणे—'ब्रह्मविदाप्नोति परम्' इति वेदनमात्रस्यैव विधानात्, (तस्य च) असकृदावृत्तौ प्रमाणाभावाच्च, 'सकृत्कृतमेव वेदनं शास्त्रार्थः'—इत्याशङ्क्य,

'मनो ब्रह्मे'त्यादिषु एकविषये वेदनोपासनशब्दयोः प्रयोगादवगतोपासनशब्दपर्यायत्वेन 'वेदन' शब्देनोपदेशात्, 'उपासन' शब्दस्य असकृदावृत्तज्ञानवाचिशब्दत्वात्, 'असकृदावृत्तमेव वेदनं शास्त्रार्थः—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

अथ तुर्याध्यायपादप्रधानार्था मता इमे ।
अश्लेषोत्क्रान्तिमार्गपरब्रह्मोपसम्पदः ॥ १७३ ॥

पेटिकाद्वयमाद्याङ्गावेका विद्याविशोधिनी ।
नीतिषट्काऽपरा नीतिपञ्चका फलबोधिनी ॥ १७४ ॥

शास्त्रार्थस्य सकृत्त्वे तु केयं निष्पत्तिचिन्तना ।
इत्याक्षेपं प्रतिक्षेप्तुमावृत्तिन्यायसम्भवः ॥ १७५ ॥

इति आवृत्त्यधिकरणम् ॥ १ ॥

—o—

## (125) आत्मत्वोपासनाधिकरणम् ॥ ४–१–२ ॥

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

(180) स्वस्माद्विभेदेन परो ह्युपास्यो भेदस्य सर्वत्र समर्थितत्वात् ।
नैवाऽहमित्यात्मतया ह्युपास्यस्त्वं वेति शब्दाच्च तदात्मतश्च ॥ २ ॥

**परः**—परमात्मा, **स्वस्मात्**—उपासकस्वरूपात्, **विभेदेन हि**—भिन्नत्वेनैवाकारेण **खलु, उपास्यः**—मोक्षार्थोपासनगोचरः, **सर्वत्र**—शारीरके सर्वत्र 'अधिकं तु भेदनिर्देशात्' इत्यादौ, **भेदस्य समर्थितत्वात्**—जीवे परमात्मनि च मिथोऽत्यन्तभेदस्य न्यायतः स्थापितत्वात्, (इति शङ्कने) **नैव**—नैवेदं युक्तम्, **अहमिति**—अहं ब्रह्माऽस्मीति, **आत्मतया हि**—स्वशरीरं प्रति चेतनस्य स्वस्येव चेतनभूतं स्वं प्रत्यपि नियामकत्वादिधर्मकृतेनाऽऽत्मत्वेन खलु, **उपास्यः**—परमात्मा मोक्षार्थं भजनीयः, **त्वं वेति शब्दाच्च**—'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते' इति श्रौतात् शब्दादपि उपासनाकाराभिलापकात्, **तदात्मतश्च**—उपासकं प्रति शरीरात्मभावसम्बन्धस्य उपास्ये तादात्म्यप्रतीत्यौपयिकस्य लाभात् ॥ २ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(444) जीवादत्यन्तभिन्नः स विभुरभिदधे लक्षणैः साधनान्तै-
मुक्त्यर्थोपासनेऽस्मिन् मुषिततमसि न ब्रह्मदृष्ट्यादियुक्तिः ।
तत्त्वज्ञे वीतरागे तदिह न घटते सोऽहमस्मीत्युपास्ति-
स्तन्न स्वात्मान्तरात्मन्यहमिति वचसोऽप्यत्र मुख्यप्रवृत्तेः ॥ १३ ॥

**साधनान्तैः लक्षणैः**—साधनाध्यायपर्यन्तैस्त्रिभिरध्यायैः, **स विभुः**—जगत्कारणत्वकृतोपास्यत्ववान् परमात्मा, **जीवात् अत्यन्तभिन्नः अभिदधे**—जीवात्मनः सकाशात् सर्वथा विलक्षणत्वेन निरूपितः, **मुषिततमसि**—तमःकृतभ्रान्त्यादिसम्पर्करहिते, **अस्मिन् मुक्त्यर्थोपासने**—साधनाध्यायेन प्रधानतो निरूपिते मोक्षैकफलके अस्मिन् उपासने, **न ब्रह्मदृष्ट्यादियुक्तिः**—ब्रह्मणि अब्रह्मदृष्टिरूपतायाः अब्रह्मणि ब्रह्मदृष्टिरूपताया वा साङ्गत्यं न सम्भवति, (दृष्टिरूपाया विद्यायाः अतस्मिंस्तद्बुद्धिरूपतया भ्रान्तित्वावर्जनात्, मुक्तिं प्रति च परमार्थविषयकस्य यथार्थज्ञानस्यैवोपायतासम्भवेन, अयथार्थज्ञानात्मिकायाः अन्यस्मिन्नन्यदृष्टेः उपायत्वायोगादित्याशयः) । **तत्**—तस्माद्धेतोः, **तत्त्वज्ञे**—वास्तवार्थज्ञानवति, (अयथार्थज्ञानरहिते) **वीतरागे**—काम्यफलानासङ्गिनि, **इह**—मुमुक्षया प्रवृत्ते उपासितरि, **'सोऽहमस्मी'त्युपास्तिः**—उपास्यभूतः परमात्मैवाऽहमस्मि 'अहं ब्रह्मास्मि' इत्येवमाकारोपासनसम्भवः, **न घटते**—नैव अबाधिता भवति आरोपतापत्तेः (इति शङ्कने), **तन्न**—तदेतच्छङ्कनं नैव युक्तम्, **स्वात्मान्तरात्मनि**—जीवं प्रत्यपि आत्मत्ववत्तया अन्तरात्मभूते, **अत्र**—उपास्ये परमात्मनि, **अहमिति वचसोपि**—अहन्त्वोल्लेखिन्याः स्वाभेदपरवाचोपि, **मुख्यप्रवृत्तेः**—अनौपचारिकतया प्रधानत्वेनैव प्रवृत्तेः स्वाभाविकत्वात्, (उपासनस्याऽपि आरोपत्वादेरनवकाशादिति) ॥ १३ ॥

(445) वस्विन्द्रादेरुपास्तौ प्रकृतिशबलितस्वान्वितेक्षा पुरोक्ता
शुद्धः स्वात्मा च चिन्त्यः क्वचिदिह तु विभुस्तादृशा स्वेन युक्तः ।
व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भावने स्यात् तथापि
ब्रह्मायत्तस्वरूपप्रमितिसुदृढतासिद्धयेऽहङ्ग्रहोक्तिः ॥ १४ ॥

**वस्विन्द्रादेरुपास्तौ**—वसुरुद्रादित्यानामुपासनरूपायां मधुविद्यायाम्, इन्द्रोपासनात्मिकायाम् इन्द्रप्राणविद्यायां च, **प्रकृतिशबलितस्वान्वितेक्षा**—वस्वादिपदवाच्यदेहविशेषशरीरिभूतजीवविशिष्टपरमात्मचिन्तना, इन्द्रपदवाच्यसंस्थानविशेषवद्देहशरीरिभूतजीवविशिष्टपरमात्मचिन्तना च, **पुरा**—आद्याद्यपादे मध्वधिकरणे इन्द्रप्राणाधिकरणे च शारीरकीये

**उक्ता**—न्यायत्तो निरूपिता, **शुद्धः**—अचित्संसर्गायत्तकालुष्यरहितः, **स्वात्मा च**—उपासकी-भूतश्चेतन एव, **क्वचित्**—जीवोपासनात्मकपञ्चाग्निविद्याद्युपासनविशेषे, **चिन्त्यः**—उपास्य-तया श्रुतिसंमतः, **इह तु**—मोक्षोपायभूतब्रह्मोपासनात्मिकायां सर्वस्यामपि परविद्यायाम्, **तादृशा स्वेन युक्तो विभुः**—प्रकृतिसंसर्गरहितत्वरूपशुद्धिमता जीवेन विशिष्टः परमात्मैव, (चिन्त्य-त्वेन वेदान्ततात्पर्यविषयः) **जीवेशभेदे व्यक्तिः**—ईदृशी च जीव-परमात्मभेदघटिता उपासना, **व्यधिकरणपदैः भावने**—'त्वमेवाऽहम्, अहमेव त्वम्' इति उपास्योपासकभूतपर-जीव-वाचकशब्दयोः समानविभक्तिकतां विहाय 'त्वं मम स्वामी, अहं तव स्वभूतः' इत्येवं विरूप-विभक्तिकैः पदैः चिन्तनारम्भे क्रियमाणे सत्येव, **स्यात्**—निष्पन्ना भवेत्, (न तु अभेद-ज्ञापकत्वस्वभावैः समानाधिकरणैः पदैः पूर्वोक्ताकारैः) अतः 'अहं ब्रह्मास्मि, ब्रह्मैवाहमस्मि, त्वं वा अहमस्मि' इत्यादयः शब्दाः उपासनाकाराननुकूलाः इति शङ्कने), **तथाऽपि**—उक्तार्थस्य किंचिदंशे युक्तत्वेऽपि, **ब्रह्मायत्त ...सिद्धये**—उपासितृजीवस्वरूपे सर्वथा परमात्मा-धीनत्वयाथात्म्यज्ञानात्यन्ताविचालनीयत्वलाभाय, **अहङ्ग्रहोक्तिः**—वैयधिकरण्यं विहाय सामानाधिकरण्येन ब्रह्माहमर्थयोः अभेदपर्यवसायित्वावगाहिभावनाजनकाहंशब्दग्रहणपूर्वकोपासन-प्रदर्शनं श्रुतौ युक्तमेवेति ॥ १४ ॥

(445) ऐक्योपास्तावहं त्वं त्वमहमिति मतिर्निर्विशेषे कथं स्याद्?
भेदाभेदाभिलापः करकमणिकतद्व्योमनीत्या न मुख्यः।
मत्तुल्यस्त्वं त्वयाऽहं सम इति वदतां नोपचारोऽपि युक्त-
स्तस्मात् सर्वान्तरात्मन्ययमहमिति धीराकृतिन्यायसिद्धा ॥ १५ ॥

**निर्विशेषे**—(ब्रह्मणि उपास्यभूते) सर्वविशेषरहितत्वेनाभिमते सति, **ऐक्योपास्तौ**—'त्वं वा अहमस्मी' त्याद्यहंग्रहोपासनरूपे ऐक्योपासने, अन्तर्गता, **'अहं त्वम्, त्वम् अहम्' इति मतिः**—अहंशब्दोच्चारयितृत्वोपलक्षितात्मत्ववति सम्बोध्यत्वोपलक्षितात्मवदभेदावगाहिनी, (तथा) सम्बोध्यत्वोपलक्षितात्मत्ववति अहंशब्दोच्चारयितृत्वोपलक्षितात्मत्ववदभेदावगाहिनी च प्रतीतिः, **कथं वा स्यात्**—केन वा प्रकारेण युक्ता भवेत्? (उच्चारयितृत्व-सम्बोध्यत्वादेः विशेषात्मकस्य धर्मस्य चिन्तने अपारमार्थ्यापत्तेः, अचिन्तने उपासनस्याऽनिष्पत्तेः) **करक-मणिकतद्व्योमनीत्या**—(करक-मणिकौ जलधारमृत्पात्रविशेषौ) करक-मणिकयोः मृत्पात्रयोः स्वरूपकृतः भेदः, तद्गताकाशस्वरूपे तु अभेद इतिवत्, **भेदाभेदाभिलापः**—पारमार्थिकः अभेदः कल्पितश्च भेद इति, कल्पितं भेदमुपजीव्य 'त्वमहम् अहं त्व'मिति उपासनप्रवृत्तिः

इति भास्करपक्षोऽपि , अनुचित एव, यतः **न मुख्यः**—विरुद्धयोर्भेद-तदभावयोरेकत्र चिन्तनस्य अन्यतरामुख्यत्वं विना अनिर्वाह्यत्वापत्तिः । (तथा) **'त्वम् मत्तुल्यः अहम् त्वया समः' इति वदताम्**—ऐक्योपास्तिवाक्यस्यायमर्थः ; 'हे उपास्यतत्त्वभूत ! त्वं मत्सदृशः , अहं च त्वत्सदृशः ' इति त्वमहंशब्दयोः त्वत्सदृश-मत्सदृशपरतावादिनां (व्यवहारगतः) , **उपचारोऽपि**—अमुख्यार्थतात्पर्यमपि, **न युक्तः**—न्याय्यतां नावलम्बते, (सम्भवति मुख्येऽर्थे लक्षणाकल्पनस्य अन्याय्यत्वात् ) । **तस्मात्**—इतरेषां कल्पनाविशेषस्य सर्वस्याऽपि दोषग्रस्तत्वात् , **सर्वान्तरात्मनि**—सर्वेषामपि जीवानामन्तःप्रविश्य नियमनशीले , अत एव सर्वप्रकार प्रकारिभूते परमात्मनि (सर्वव्यवहारं प्रत्यपि परमविशेष्ये) , **'अयम् अहम्' इति धीः**—'योऽसौ सोऽहम् , योऽहम् सोऽसौ ' इति, 'त्वमहम् , अहं त्वम् ' इति च परमात्मनि स्वाभेदस्य स्वस्मिन् परमात्माभेदस्य च प्रकार्यैक्यरूपस्य अवगाहनात्मिका श्रुत्युल्लिखिता मतिः , **आकृतिन्यायसिद्धा**—पूर्वमीमांसागतेन आकृत्यधिकरणसिद्धेन न्यायेन अनुपचरितत्वेन निश्चितमुख्यभावैव ।। १५ ।।

(447) अद्वैतं द्वैतहानौ न भवति सुवचं तत्प्रतिद्वन्द्विकत्वाद्
द्वैतं चाऽद्वैतगर्भं द्वितयमिह हि ! तत् स्वस्वरूपादभिन्नम् ।
द्वैताद्वैतं च तादृक् तदुभयनियमानुज्झनादेव सिध्येत्
सर्वं स्थाने स्थितं स्यात् प्रमितिपरवतां नेतरेषां तु किंचित् ॥ १६ ॥

**द्वैतहानौ**—द्वैतपदाभिलप्यस्याऽर्थस्य अनङ्गीकारतस्त्यागे क्रियमाणे, **अद्वैतम्**—द्वैतस्य विरुद्धमद्वैतपदाभिलप्यमर्थस्वरूपमपि, **न सुवचम्**—न सुष्ठु प्रतिपादनार्हम् , **तत्प्रतिद्वन्द्विकत्वात्**—द्वैतप्रतियोगिकत्वात् , (अभावसिद्धौ प्रतियोगिसिद्धेर्हेतुत्वात् ) **द्वैतं च**—द्वैतपदवाच्यमपि, **अद्वैतगर्भम्**—अद्वैतपदवाच्यार्थघटितस्वरूपवत् , **हि**—यतः, **इह**—द्वैतपदार्थे (अन्तः प्रविष्टम् ), **स्वस्वरूपादभिन्नम्**—प्रत्येकं स्वीयस्वरूपप्रतियोगिकभेदानधिकरणम् , **द्वितयम्**—एकैकात्मकावयवद्वयमेव, **तत्**—द्वैतव्यवहारगोचरो भवितुमर्हति, (भेद-द्वैतशब्दयोः पर्यायतया, द्व्यात्मककूटप्रविष्टस्यैकैकस्य, स्वस्मिन् स्वभेदाभावेन अद्वैतस्यावर्जनीयतया, अद्वैतवत्पदार्थद्वयवति समुदाये एव द्वैतव्यवहारप्रवृत्तिसम्भवात् इत्यर्थः) । **तादृक्**—द्वैततुल्यम् तदभावरूपाद्वैततुल्यं च, **द्वैताद्वैतं च**—द्वैताद्वैतपदवाच्यमर्थतत्त्वमपि, **तदुभयनियमानुज्झनादेव**—द्वैतपदार्थसिद्धौ यो नियमः अद्वैतघटितत्वावर्जनरूपः, अद्वैतपदार्थसिद्धौ यो नियमः स्वप्रतियोगिभूतद्वैतावर्जनरूपः तं नियममविहायैव, **सिध्येत्**—लब्धस्वरूपं भवेत् , (अतः इदं

त्रयमपि तत्तन्मताभिनिवेशवतां नाऽनुकूलम्; प्रत्युत प्रतिकूलमेव) **प्रमितिपरवतां तु**—प्रमाण-परतन्त्राणां परम्, **सर्वम्**—उक्तं सर्वमपि, **स्थाने**—योग्ये विषये, **स्थितं स्यात्**— अवस्थान-स्वाभाव्ययुक्तं भवेत्, **इतरेषाम्**—प्रमाणाननुरोधेन स्वच्छन्दानुरोधिनां मतैकशरणानाम्, **न तु किंचित्**—नैव सिध्येत् यत्किञ्चिदप्यर्थतत्त्वम् ॥ १६ ॥

(448) नन्वद्वैते निषेध्यो गगनकुसुमवद् भ्रान्तिसिद्धोऽस्तु भेदः
मैवं सत्यादभिन्नः स यदि ! न खलु तद्भ्रान्तिसिद्धत्वसिद्धिः ।
भिन्नत्वं चाऽस्य तस्माद् यदि भवति मृषा ! विद्धि दत्तोत्तरं तत्
सत्यं चेत् ! सत्यभेदोपगतिरिति मुधा दूरतो धावनं वः ॥ १७ ॥

**ननु**—भोः विवेचनप्रवृत्ताः !, **अद्वैते निषेध्यः**—अद्वैतशब्दार्थघटकनञ्बोध्य-निषेधप्रतियोगिभूतः, **भेदः**—द्वैतपदाभिलप्यो भेदः, **गगनकुसुमवत्**—गगनकुसुमं नास्तीति निषेधे प्रतियोगिभूतं गगनकुसुममिव, **भ्रान्तिसिद्धोऽस्तु**—भ्रममात्रगोचरस्वरूपो भवतु, न तु प्रमागोचरस्वरूपः; (येन तस्याऽपि वास्तविकता अवर्ज्या स्यात्। गगनकुसुमं हि निषिध्य-मानं, निषेधप्रतियोगित्वाय न वास्तवतां प्रतिपद्यते। तद्वत् 'अद्वैत'मित्यत्र न द्वैतमिति निषिध्यमानं द्वैतमपि, अपरमार्थदृष्टीनामज्ञानिनामविद्यावृतमतीनां ग्राह्यतया सिद्धमेवेति, निषेध-प्रतियोगित्वमात्रेण न द्वैतपारमार्थ्यमिति) शङ्कने, **मैवम्**—एवं शङ्कितुं नार्हम्, **सः**—'अद्वैतम्' इत्यत्र निषेध्यो द्वैतरूपो भेदः, **सत्यात् अभिन्नो यदि**—परमार्थाद्ब्रह्मणः सकाशाद-नतिरिक्तो यदि ! तदा, **न खलु तद्भ्रान्तिसिद्धत्वसिद्धिः**—(परमार्थब्रह्मानतिरेकिणो भेदस्यापि, ब्रह्मण इव पारमार्थ्यावश्यंभावेन, भ्रमविदूरताया एव च पारमार्थ्यरूपत्वेन) भेदस्योक्ताया: भ्रान्त्या सिद्धेः नैव युक्त्या सिद्धिः सम्भाव्या, **अस्य**—निषेध्यभूतस्य भेदस्य, **तस्माद्भिन्नत्वं च**—ब्रह्मणः सकाशादतिरिक्तता च, **यदि मृषा भवति**—मिथ्याभूतैव चेत् स्यात्, **तत् दत्तोत्तरं विद्धि**—तदेतत् पूर्वमेव प्रत्युत्तरितं जानीहि, (परमार्थाभिन्नब्रह्माभिन्नताया एव भेदेप्यङ्गीकृतत्वापत्त्या तदभिन्नाभिन्नन्यायेन तस्याऽपि पारमार्थ्यावश्यम्भावात्), **सत्यं चेत्**—भेदस्य ब्रह्मणः सकाशाद्भिन्नत्वं, पारमार्थिकमेव चेदभ्युपगम्यते तदा, **सत्यभेदोपगतिरिति**—ब्रह्मभेदाख्यस्य ब्रह्मातिरिक्तस्यान्यस्य सत्यस्याभ्युपगमापत्त्या ब्रह्मैकमेव सत्यमित्यभ्युपगमस्य निर्विषयत्वापातः—इति हेतोः, **वः**—युष्माकम्, **दूरतोधावनम्**—अद्वैतसमयसिद्धार्थसमर्थ-नाय बहुप्रयासाङ्गीकरणम्, **मुधा**—व्यर्थमेव ; न अभिलषिततसाधकं भवतीति ॥ १७ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

आत्मत्वोपासनाधिकरणे—जीव-ब्रह्मणोर्भिन्नत्वात्, जीवादन्यत्वेन ब्रह्म उपास्यम्—इत्याशङ्क्य,

'त्वं वा अहमस्मि' इत्यादिषु पूर्वोपासकैः 'ब्रह्माऽहम्' इत्यनुसन्धानदर्शनात्, अर्थान्तरभूतस्याऽपि तस्य आत्मनोऽन्तर्यामित्वेन 'अह' मित्यनुसन्धानस्य अविरुद्धत्वाच्च आत्मत्वेनोपासनम्—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

साक्षात् सदाऽऽत्मनः स्फूर्तौ काऽसावावृत्तिसाध्यता ? ।
इत्याक्षेपं प्रतिक्षेप्तुमात्मत्वोपास्त्यधिक्रिया ॥ १७६ ॥

इति आत्मत्वोपासनाधिकरणम् ॥ २ ॥

—o—

## (126) प्रतीकाधिकरणम् ॥ ४–१–३ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(181) तथा प्रतीकेषु यथेतरेषु यस्मात् परोपासनताऽविशिष्टा ।
तन्नैव शङ्क्यं परमात्मदृष्ट्या नामादिकानां समुपास्यभावात् ॥ ३ ॥

**इतरेषु यथा**—अन्यान्येषु उपासनेषु यथा उपास्यस्य आत्मत्वेनानुसन्धानम्, **तथा प्रतीकेषु**—तद्वदेव प्रतिकभूतमन आद्युपासनेष्वपि, उपास्यस्य मन आदेः आत्मत्वेनानुसन्धानमवर्ज्यम्, **यस्मात्**—यतो हेतोः, **परोपासनता**—परमात्मोपासनरूपता, **अविशिष्टा**—द्विविधयोरप्युपासनयोः समा, (इति शङ्कने) **तत् नैव शङ्क्यम्**—प्रतीकोपासनेषु उपास्ये आत्मत्वानुसन्धानस्य करणीयत्वं नैव शंकितुमर्हम्, **नामादिकानाम्**—(निकृष्टानां) नाम-मनःप्रभृतीनां प्रतीकभूतानामर्थानाम्, **परमात्मदृष्ट्या समुपास्यभावात्**—उत्कृष्टपरमात्मभावेनैव उपास्यतयाः श्रुत्या अवगमात्। अतः निकृष्टे उत्कृष्टदृष्टेरेव न्याय्यतया निकृष्टस्य मन आदेः उपासकं प्रति आत्मत्वायोगात् ॥ ३ ॥

—o—

(2) **अधिकरणसारावलिः** (श्लो. 18–19)

(449) नामादिब्रह्मदृष्टावपि तदहमिति प्रत्ययः पूर्ववत् स्याद्
ब्रह्मध्यानत्वसाम्यादिति यदि ! न न खल्वन्तरात्मप्रतीकः ।
न ब्रह्मण्यन्यदृष्टिः कथमपि घटते तस्य सर्वाधिकत्वा-
दन्यस्मिन् ब्रह्मदृष्टौ परमिह नियतैर्लक्षणैस्तद्ग्रहोऽर्थ्यः ॥ १८ ॥

**नामादिब्रह्मदृष्टावपि**—'नाम ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासीत' इत्यादिश्रुतिविहित-नाम-मनआदिविशेष्यकब्रह्मत्वप्रकारकबुद्धिरूपप्रतीकोपासनेऽपि, **तदहमिति प्रत्ययः**—'उपास्यं नामादिमदभिन्नम्' इत्येवंरूपः आत्मत्वोपासनपदाभिधेयः धीविशेषः, **पूर्ववत्**—परविद्यारूप-ब्रह्मोपासनेष्विव, **स्यात्**—सङ्गतो भवेदेव, **ब्रह्मध्यानत्वसाम्यात्**—मोक्षोपायभूतोपासने फलविशेषार्थदृष्ट्युपासने चेत्युभयत्र, ('ब्रह्मेति' इत्यनेन) ब्रह्मोपासनरूपतायां तौल्यात्, **इति यदि**—एवं शङ्क्यते यदि, **न**—नैवोचिता इयं शङ्का, **प्रतीकः**—आरोपात्मकदृष्ट्युपासन-विशेष्यभूतो नाम-मन आदिः, **न खलु अन्तरात्मा**—उपासकस्यान्तःप्रविश्य नियन्तृत्वार्हः आत्मा नैव भवति खलु, **ब्रह्मणि**—परमात्मनि, **अन्यदृष्टिः**—ब्रह्मातिरिक्ताभेदावगाह्यारोपः, **कथमपि**—केनापि प्रकारेण, **न घटते**—नैव युज्यमानो भवति, **तस्य**—ब्रह्मणः, **सर्वाधिकत्वात्**—सर्वोत्कृष्टत्वात्, **इह**—प्रतीकोपासनरूपे, **अन्यस्मिन् ब्रह्मदृष्टौ परम्**—इतरस्मिन् नाम-मनआदौ ब्रह्माभेदारोपे तु, **नियतैः**—अवर्ज्यतया उपस्थीयमानैः, **लक्षणैः**—आरोप्यमाण-ब्रह्मगतैरसाधारणैर्धर्मैः, **तद्ग्रहः**—प्रतीकभूतस्यारोपधर्मिणो ग्रहः, **अर्थ्यः**—फलसिद्धये अपेक्षितः ; (न तु अन्तरात्मत्वादिभिः) ॥ १८ ॥

(450) आत्मन्यब्रह्मभूते भवतु फलवती कुत्रचिद्ब्रह्मदृष्टि-
र्नैषा वस्तुव्यवस्थां शिथिलयति नरे वैनतेयत्वधीवत् ।
एतावन्मात्रमोहादिदमहमिति तु स्थापयन् क्षिप्रमृच्छे-
दिन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम् ॥ १९ ॥

**कुत्रचित्**—क्वचित् श्रुताववगता (त्वं वा अहं, योहं सोऽसौ, सोहमस्मि), **अब्रह्म-भूते आत्मनि**—परमात्मनः सकाशात् सर्वथा पृथग्भूते जीवात्मनि विषये, **ब्रह्मदृष्टिः**—ब्रह्माभेदप्रकारिका चिन्ता, ('अहं ब्रह्मास्मि' इत्येतादृशी) **फलवती भवतु**—मोक्षाख्यफल-साधिका सम्पद्यतां नाम, **एषा**—एवंरूपा जीवे ब्रह्माभेददृष्टिः, **नरे वैनतेयत्वधीवत्**—मानुष-त्ववति गरुडत्वचिन्तावत्, **वस्तुव्यवस्थाम्**—चिन्त्यमानयोः आरोप्यारोपधर्मिणोः नैसर्गिकीं

विविक्तां स्थितिम् , **न शिथिलयति**—नैवापोहितुं प्रभवेत् , (फलविशेषाय क्रियमाणा 'गरुडोहम्' इत्याकारा हि ! आरोपात्मिका स्वस्मिन् गरुडाभेदचिन्ता, न हि चिन्तयितुः गरुडस्य च विद्यमानं स्वाभाविकं भेदं नाशयितुमीष्टे ; तद्वत् , श्रुत्याशयानुरोधेन क्रियमाणा अहं ब्रह्मास्मीति चिन्ताऽपि उपास्योपासकयोर्वास्तविकं भेदमपगमयितुं नैव शक्नुयादित्यर्थः) **एतावन्मात्रमोहात्**—भिन्नयोरभेददृष्टेः फलाधायकत्वदर्शनमात्रकृतात् अज्ञानात् , **इदमहम् इति तु स्थापयन्** 'ध्येयं जगत्कारणत्वादिमत् ब्रह्म अहमेव' इत्येवं मनसि दृढीकर्तुं प्रयतमानो नरः , **इन्द्रत्वारोपदर्पोद्धतनहुषमहाभोगिसंस्थामवस्थाम्**—स्वस्मिन् तात्कालिकतया प्राप्तेन इन्द्रत्वाध्यवसानेन समापतितं गर्वमवलम्ब्य नष्टविवेको यो नहुषनामा मानुषो राजा, (स्वाननुगुणे इन्द्राणीसंश्लेषरूपे महाभोगे प्रवृत्तस्य) तस्य अजगरशरीरावाप्तिपर्यवसायिनीं स्थितिम् , **क्षिप्रम् ऋच्छेत्**—शीघ्रमेव प्राप्नुयात् ; नाऽत्र सन्देहः ॥ १९ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

प्रतीकाधिकरणे—प्रतीकोपासनेऽपि ब्रह्मण एवोपास्यत्वात् , आत्मत्वेनोपासनं कर्तव्यम्—इत्याशङ्क्य ,

उत्कृष्टे निकृष्टदृष्ट्ययोगेन , ब्रह्मणो दृष्टिविशेषणत्वेन प्रतीकानामेवोपास्यत्वात् , न आत्मत्वेनोपासनम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

स्वात्मत्वेनोपास्तिरूपा विद्यौपनिषदी यदि ।
प्रतीकोपासनेऽप्येवमाक्षेपोऽपि व्यपोद्यते ॥ १७७ ॥

इति प्रतीकाधिकरणम् ॥ ३ ॥

—o—

## (127) आदित्यादिमत्याधिकरणम् ॥ ४–१–४ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(182) उद्गीथदृष्टिस्तपने तु नीचे श्रेष्ठं हि कर्मैव फलप्रदत्वात् ।
तन्नैव तस्याऽपि फलप्रदत्वं तत्पूजनत्वादिति नाऽन्यथा स्यात् ॥ ४ ॥

**उद्गीथदृष्टिः**—'य एवाऽसौ तपति तमुद्गीथमुपासीत, इति विहितं दृष्ट्युपासनम्, **नीचे**—यागीयदेवतात्वाख्यरूपत्वकृताप्राधान्यवति, **तपने तु**—आदित्ये एव युक्ता, **हि**—यतः, **फलप्रदत्वात्**—पुरुषापेक्षितफलप्रदानसमर्थत्वात्, **कर्मैव**—यागादिकमेव, **श्रेष्ठम्**—उत्कर्षवद्भवितुमर्हम्, (इति शङ्कने) **तन्नैव**—तदेतत् शङ्कनं नैव साधु भवति, **तस्याऽपि**—कर्मणोऽपि, **तत्पूजनत्वात्**—देवताप्रीत्यापादनहेत्वाकारत्वादेव, **फलप्रदत्वम्**—विध्यवगत-फलसम्पादकत्वम्, **अन्यथा**—देवताप्रीत्यनापादकत्वे तु, **न स्यात् इति**—नैव फलाधायकत्वं स्यादिति (आर्थोत्कर्षस्य देवतागतत्वात् आर्थ-शाब्दप्राधान्ययोर्मध्ये आर्थप्राधान्यस्यैव ज्यायस्त्वात्) आदित्यादिदेवतादृष्टिरेव उद्गीथादौ कर्माङ्गे कार्येति ॥ ४ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(451) तादर्थ्याद् देवतानां फलकरणतया कर्मणश्चोदितत्वा-
दादित्यादौ निकृष्टात्मनि भवतु समुत्कृष्टकर्माङ्गदृष्टिः ।
मैवं कर्मप्रधानं विहितमपि यतस्तत्समाराधनं तत्
तत्प्रीता देवतैव प्रदिशति फलमित्यर्थतः सा प्रधानम् ॥ २० ॥

**देवतानाम्**—कर्मभिः इज्यानां देवतारूपाणामर्थानाम्, **तादर्थ्यात्**—यागीयद्रव्याणामिव यागादिसिद्ध्यौपयिकत्वकृतात् कर्माङ्गत्वात्, **कर्मणः**—यागादेः क्रियात्मकस्यार्थस्य, **फलकरणतया चोदितत्वात्**—यजमानकाम्यमर्थं प्रति साधनत्वेन विधिविहितत्वात्, **निकृष्टात्मनि आदित्यादौ**—अङ्गत्वनिबन्धनाप्राधान्यरूपापकर्षवति आदित्यादिदेवतास्वरूपे, **समुत्कृष्ट-कर्माङ्गदृष्टिः**—साक्षात्फलसाधनत्वनिबन्धनप्राधान्याश्रयभूतयागादिकर्माङ्गोद्गीथत्वादिदृष्टिरेव, **भवतु**—युक्ता स्यात्; (न तु उद्गीथादौ आदित्यादिदृष्टिर्युक्ता भवेत्, प्रधाने अपकृष्टदृष्टे-रन्याय्यत्वात्—इति शङ्कने) **मैवम्**—एवं शङ्कनमनुचितमेव, **यतः**—यस्माद्धेतोः, **कर्म**—यागादिकमर्थस्वरूपम्, **प्रधानं विहितमपि**—प्राधान्यवत्तया विधितोऽवगतं सदपि, **तत्समा-राधनम्**—देवताप्रीणनैकफलकम्, **तत्**—तस्माद्धेतोः, **तत्प्रीता देवतैव**—कर्मणाऽऽराधिता

देवतैव खलु, **फलं प्रदिशतीति**—कर्मसाध्यतया विधिसिद्धं स्वर्गादिरूपं काम्यमर्थं प्रददातीति हेतोः, **सा अर्थतः प्रधानम्**—देवतैव अर्थस्वभावाधीनोत्कर्षवती भवति ; न कर्म, (शाब्द-वास्तविकप्राधान्ययोर्मध्ये वास्तविकस्यैव कार्यकरस्य ग्राह्यत्वात् ॥ २० ॥

(452) अन्यस्मिन् अन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे
याथार्थ्यं सर्वबोधानुगतमिति मते युज्यते नाऽन्यदृष्टिः ।
तन्नाऽत्राद्ये हि न स्याद् विमतिरभिमता भ्रान्तिनीतिः परस्मि-
स्तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात् ॥ २१ ॥

**इह**—'मनो ब्रह्मेत्युपासीत' 'नाम ब्रह्मेत्युपासीत' इत्यादौ, **अन्यस्मिन् अन्यदृष्टेर्विधिः**—मनो-नामप्रभृतिके ब्रह्मातिरिक्तेऽर्थे मनो-नामादीतरब्रह्माभेदचिन्तायाः श्रुतितो विधानमित्येतत्. **अन्यथाख्यातिपक्षे**—भ्रमस्य अन्यथाख्यातिरूपतावादिनां मते, (यत्किञ्चिद्धर्मिविशेष्यक-विशेष्यावृत्तिधर्मप्रकारकख्याति (ज्ञान) विशेषस्यैव भ्रमरूपतावादिनां तार्किकाणां मते), **घटताम्**—युज्यतां नाम, **याथार्थ्यम्**—विशेष्यावृत्तिधर्माप्रकारकत्वमेव, **सर्वबोधानुगतम्**—प्रमाऽप्रमात्मकज्ञानसामान्यसाधारणम्, **इति मते**—इत्यभ्युपगन्तॄणां प्राभाकराणां विशिष्टैक्यवादिनां च मते, **अन्यदृष्टिः**—श्रुत्यवगता मनआदौ ब्रह्मतादात्म्यचिन्ता, **न युज्यते**—नैव सङ्गता भवति, (इति शङ्कने) **तन्न**—तदेतत् शङ्कनं नैव युक्तम्, **अत्र**—द्वयोरनयोः पक्षयोर्मध्ये (अन्यत्रान्यदृष्टिविषये इति वा) **आद्ये**—अन्यथाख्यातिपक्षे, **विमतिः**—विप्रतिपत्तिः, **न हि स्यात्**—न खलु भवेत्, (अविप्रतिपत्त्या निर्वाहः सिध्यति) **परस्मिन्**—पश्चात्तने यथार्थख्यातिपक्षे, **भ्रान्तिनीतिः**—शुक्त्यादौ रजतभ्रमस्थले इव निर्वाहरीतिः, **अभिमता**—यथार्थख्यातिवाद्यभिमता, (मनो-ब्रह्मणोः भेदाग्रहसहकृतमनो-ब्रह्मोभयज्ञानद्वयमेव दृष्ट्युपासनमिति) **तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात्**—शुक्तिरजतभ्रान्तिस्थलीयभेदाग्रहसदृशमनो-ब्रह्मोभयभेदग्रहणाभावसहकृतागृहीतभेदकमनोज्ञान-ब्रह्मज्ञानरूपज्ञानद्वयस्थिरीकरणे एव दृष्टिविधेस्तात्पर्यात् ॥ (उभयथाऽपि श्रौतस्य दृष्टिविधेः न विरोधः) ॥ २१ ॥

(454) दृष्टव्यापह्नवेन भ्रमदनुविहिता दृष्टिरद्वैतमोहः
स्यादुत्कृष्टापराधस्तत इह विहिता तादृशत्वस्य दृष्टिः ।
तादृग्दृष्टौ न दोषस्तत इति कतिचित् तार्क्ष्यदृष्ट्यादिनीत्या
द्वेधाऽन्यत्राऽन्यदृष्टिर्न किमनधिगता व्यक्तितो जातितश्च ॥ २२ ॥

**दृष्टिः**—'मनो ब्रह्म, नाम ब्रह्मे'त्यादौ दृष्टिविधिवाक्ये कर्तव्यत्वेन चोदिता दृष्टिर्नाम, **भ्रमदनुविहिता**—भ्रान्तं पुरुषमनुसृत्य (तदीयभ्रमानुगुण्येन) सम्पादनीयतया श्रुत्युक्ता, **दृष्टव्यापह्नवेन दृष्टिः**—दृष्टिविषयीकार्यस्य मनआदेरर्थस्य अपलापेन (सत्तायाः बुद्धावविषयीकारेण) केवलं ब्रह्मण एवैकस्य चिन्तारूपेति विवरणम्, **अद्वैतमोहः**—('चोर; स्थाणुः' इति व्यवहारे यथा चोरे स्थाणुत्वदृष्टिः चोरापह्नवेन स्थाणुमात्रपारिशेष्येण अद्वैतसिद्धिः ; तथा दृष्टिविधौ मन आद्यपलापेन ब्रह्ममात्रपारिशेष्यरूपाद्वैतसिद्धिर्भवतीति) अद्वैताभिमानमूलम्, **ततः**—उक्ताद्धेतोः, **इह विहिता**—दृष्टिविधिवाक्ये (मनआदौ वा) चोदिता, **तादृशत्वस्य दृष्टिः**—ब्रह्मतादात्म्यस्य (ब्रह्मसादृश्यस्य वा) चिन्ता, **उत्कृष्टा**—अपकृष्टे अतिशयितदृष्टिरूपत्वेन उत्कृष्टा सत्यपि, **अपराधः स्यात्**—असत्येवार्थे ब्रह्मतादात्म्यानुसन्धानरूपत्वापत्त्या, न सत्फलाय कल्पेत ; किन्तु अपराधत्वापत्त्या दोषायैव कल्पेत, (यद्वा) **उत्कृष्टापराधः स्यात्**—अपराधपराकाष्ठां प्राप्तो भवेत्, **तादृग्दृष्टौ**—ब्रह्मसादृश्यमूलकब्रह्माभेदाध्यवसाये विधीयमाने सति, **तार्क्ष्यदृष्ट्यादिनीत्या**—'स्वात्मानं गरुडं जानीयात्' इति विहिते स्वस्य गरुडाभेदचिन्तने इव (विषबाधानिवारणोपयोगिनि), **ततः**—मनआदौ ब्रह्माभेदचिन्तनतोऽपि, **न दोष इति**—अपराधो न भवितेति, **कतिचित्**—केचन अभिप्रयन्ति, **अन्यत्राऽन्यदृष्टिः**—धर्म्यन्तरे धर्म्यन्तरतादात्म्यारोपात्मिका चिन्ता, **व्यक्तितः जातितश्च**—'गरुड एवाह'मिति गरुडव्यक्त्यभेदेन, 'गरुडजातीयोऽहम्' इति तज्जातीयाभेदेन च अवगाह्यमानेन, **द्वेधा**—प्रकारद्वयेन, **किम् अनधिगता**—लोके (अन्यत्र वा) न किम् विदितचरा ?, (ज्ञातपूर्वैवेति श्रौतस्य दृष्टिविधानस्य न किमपि वैयर्थ्यमिति) ॥ २२ ॥

(454) मुख्यं ब्रह्मैकमेवेत्यवहितमनसां ब्रह्मदृष्टिः कथं स्या-
देकत्वेनेति केचिन्न हि बलिनि विधौ शङ्कनीयो विरोधः ।
स्वेच्छापूर्वद्विचन्द्रभ्रमवदिह भिदाकल्पनामाहुरन्ये
बम्भ्रम्यन्ते यथा च श्रुतिषु बहुविधं ब्रह्म भातीति बालाः ॥ २३ ॥

**मुख्यम्**—सर्वव्यवहारप्रकारिभूतम्, **ब्रह्म**—ब्रह्माख्यं तत्त्वम्, **एकमेवेति**—नानाभूतं न भवति इत्येवम्, **अवहितमनसाम्**—अस्खलितचेतसाम् (निश्चितमतीनाम्), **ब्रह्मदृष्टिः**—ब्रह्मेतरस्मिन् मनआदौ ब्रह्मतादात्म्याध्यवसितिः, **कथं स्यात्**—केन वा प्रकारेण घटेत ? **एकत्वेन**—धर्मिण एवैकत्वेन, (धर्म्यन्तरे धर्म्यन्तरारोपाख्यस्य दृष्टिविशेषाश्रयणस्य धर्म्यन्तराभावनिश्चयसमानकालिकत्वायोगकृतात् विरोधात् मनोव्यवहारेऽपि ब्रह्मैव खलु धर्मि । न

हि मनोब्रह्मणी धर्म्यन्तरभूते—इति) **इति केचित्**—एवं विशिष्टब्रह्मैक्यवादिनामुपरि दृष्टिविध्य-साङ्गत्यमुखेन केचन प्रत्यवस्थातारो भवन्ति चेत्! (तत्रेदं समाधानम्)—**विधौ**—मनआदौ ब्रह्मदृष्टिनियोगपरे श्रुतिवाक्ये, **बलिनि**—यौक्तिकसर्वविरोधनिवारकत्वरूपबलवत्तया जाग्रति सति, **विरोधः**—मतिप्रभवयुक्तिव्याघातरूपो विरोधः, **न हि शङ्कनीयः**—शङ्कया उपस्थाप्यो नैव भवितुमर्हः, (विधिप्रामाण्ये दृढाध्यवसायवतां मतिकृतगुण-दोषैः कम्पनासम्भवात्), **इह**—दृष्टिविधिविषये, (आरोप्ये मनआदौ आरोपणीये ब्रह्मणि च वस्तुतोऽभिन्नेऽपि) **स्वेच्छापूर्वद्विचन्द्रभ्रमवत्**—स्वीयापेक्षापूर्वकव्यापाररूपेण नेत्रगोलकमध्ये कराङ्गुलेरवष्टम्भेन आपादिते एकमात्रचन्द्रधर्मिकद्वित्वाख्यप्रकारावगाहिभ्रमे इव, **भिदाकल्पनाम्**—द्वैधीभावारोप-सम्पादनाम्, **अन्ये आहुः**—अपरे केचन तत्त्वैक्यसमर्थनप्रवृत्ताः (प्रकारैक्यकृतं ब्रह्मैकतत्व-वादमनवलम्ब्यैव मुख्यत एव एकतत्त्ववादसमर्थनप्रवृत्ताः अद्वैतिनः) **आहुः**—वर्णयन्ति, (तस्योदाहरणमेतत्—) **बालाः**—अनुपचरितश्रुतिस्वारस्याविरोधिवेदार्थचिन्तने अकुशलाः, **ब्रह्म**—परतत्त्वभूतं अद्वितीयमेव सत् परं ब्रह्म, **श्रुतिषु**—वेदवाक्षु **बहुविधं ब्रह्म भाति इति**—जीव-ब्रह्मात्मकद्वैविध्यवत्तया चिदचिदीश्वरात्मकत्रैविध्यवत्तया एवमेवमन्याभीरीतिभिः नानात्वेन प्रतिपाद्यमानतया भासते इति, **यथा च बम्भ्रम्यन्ते**—अतिशयेन भ्रान्ता भवन्ति यथा तद्वत्—इति, (सर्वमिदं वर्णनं श्रुत्यर्थचिन्तने अनैपुण्यकृतम्; यत् श्रौतेऽर्थे स्वकल्पितार्थेन साकं यौक्तिकं विरोधमाशङ्क्य अन्यथीकरणप्रवर्तनम्। वस्तुतस्तु ब्रह्मप्रतीके ब्रह्मदृष्टिविधानं ब्रह्मसादृश्यादिकृतमभेदाध्यवसानरूपं लोक-वेददृष्टभ्रमव्यवहारानुरोध्यारोपसदृशं फलायोपदिष्टं सुनिर्वहमिति) ॥ २३ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

आदित्यादिमत्यधिकरणे—उद्गीथादीनां फलसाधनतया उत्कृष्टत्वात्, आदित्यादिषु उद्गीथादिदृष्टिः कार्या—इत्याशङ्क्य,

आदित्यादिदेवताराधनद्वारेणैव कर्मणां फलसाधनत्वेन आदित्यादीनामेव उत्कृष्टत्वात्, उद्गीथादौ आदित्यादिदृष्टिः कार्या इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

पुराऽपकृष्टे तूत्कृष्टदृष्टिर्न्याय्येत्युदीरिता ।
आदित्यादाविहोद्गीथदृष्टिशङ्का व्यपोद्यते ॥ १७८ ॥

इति आदित्यादिमत्यधिकरणम् ॥ ४ ॥

—o—

## (128) आसीनाधिकरणम् ॥ ४–१–५ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(183) आसीन इत्येव विशेषहानेः सर्वप्रवृत्तिष्वपि सा विधेया ।
स्यान्नैवमैकाग्र्यविशेषभावाद् ध्यानश्रुतेश्चोपनिषेदुषः सा ॥ ५ ॥

**सा**—मोक्षोपायभूता भगवच्चिन्ता, **सर्वप्रवृत्तिष्वपि**—आसन-स्थिति-गमन-शयनादि-रूपाखिलावस्थास्वपि, **विधेया**—कर्तव्यत्वेन श्रुत्याद्यभिमता, **आसीन इत्येव विशेषहानेः**—उपविष्ट एव कुर्यादिति आसीनत्वावस्थामात्रसमर्पकप्रमाणानुपलम्भात् , (इति शङ्कने) **नैवं स्यात्**—एवं शङ्कनं नैवोचितं भवेत् , **ऐकाग्र्यविशेषभावात्**—चित्तैकाग्रतारूपस्य विशेषस्य तात्पर्यः विषयतायाः अवश्यंभावात् , (यतः) **ध्यानश्रुतेः**—'निदिध्यासितव्यः' इति ब्रह्मचिन्ताया, ध्यानरूपताज्ञापिकायाः श्रुतेः सत्त्वम् , तस्मात् , **सा**—मोक्षोपायत्वेन विहिता ब्रह्मचिन्ता-**उपनिषेदुषः**—उपविष्टस्यैव सतः कर्तव्यतयोपदिष्टा ; (न तु स्थिति-शयनादिमतः ; ऐकाग्र्यासिद्धेः) ॥ ५ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (श्लो· 24–27)

(455) आसीनस्यैव योगः श्रुतिषु न ददृशे ध्यानमाहुः सदेति
न्यासश्चेलाजिनादेर्नियमविधिकृतः पाक्षिकासीनतायाम् ।
तस्मादेतद्घटेत स्थिति-गति-शयनेष्वप्रकम्प्येन्द्रियस्ये-
त्यप्राप्तं यत्ननिद्रान्वयिनि कथमविच्छिन्नधीसन्ततिः स्यात् ॥ २४ ॥

**आसीनस्यैव योगः**—उपविष्टस्यैव पुरुषस्य निरन्तरब्रह्मचिन्तनरूपो मोक्षोपायः नान्यस्येति, **श्रुतिषु न ददृशे**—मोक्षोपायविधानपरश्रुतिवाक्येषु नैव दृष्टम् , **ध्यानम्**—मोक्षोपायभूतं ब्रह्मचिन्तनम् , **सदेति आहुः**—सार्वकालिकमिति 'ध्येयो नारायणः सदा, ध्येयः सदा' इत्येवं श्रुत्यादयो वदन्ति, (न हि जीवतः सर्वोऽपि कालः उपविष्टेनैव क्षेप्तुं शक्यते ; स्थिति-गमन-शयनानामवर्जनीयत्वात् ) **चेलाजिनादेः न्यासः**—'चेलाजिनकुशोत्तरम् । उपविश्यासने युञ्ज्याद्योगम्' इति गीतास्मृतिदृष्टः उपवेशनौपयिकः वस्त्र-मृगचर्मादेः आस्तरणव्यापारस्तु, **नियमविधिकृतः**—'उपविष्टेन चेद्ध्यानं क्रियते, तदा चेलाजिनकुशोत्तरम् आसने उपविश्य कुर्यात् ; न तु यत्र कुत्रचिदुपविश्य कुर्यात्' इति नियमविधिना

प्राप्तः सन्, **पाक्षिकासीनतायाम्**—उपविश्य करणपक्षे अनुष्ठेयतया प्राप्तायां चेलाजिनाद्यधिकरणकासीनतायायेव पर्यवसितो भवति ; (न तु ध्यानसामान्यस्य उपविष्टमात्रेणैव कर्तव्यत्वे), **तस्मात्**—उक्ताद्धेतोः, **एतत्**—मोक्षाद्यर्थतया क्रियमाणं ध्यानम्, **अप्रकम्प्येन्द्रियस्य**—चापल्यविदूरकरणवतः पुरुषस्य, **स्थिति-गति-शयनेषु**—उत्थितावस्थान-गमन-शयनरूपासु देहगतास्ववस्थास्वपि, **घटेत**—युज्येतैवानुष्ठातुम, (एवं शङ्कने) **इत्यप्राप्तम्**—इदं प्रमाणतो लब्धं न भवति, **अविच्छिन्नधीसन्ततिः**—विच्छेदासहकृतचिन्तनानुस्मृतिः, **यत्ननिद्रान्वयिनि**—स्थित्यादौ तदनुगुणयत्नेन शयने निद्रया च व्याप्ते पुरुषे, **कथं स्यात्**—कया वा रीत्या सम्भवेत्? (नैव सम्भावितेति, ध्यानमुपविष्टस्यैव युक्तम्) ॥ २४ ॥

(456) चित्तैकाग्र्योपपत्त्यै विदधति नियतिं देशकालासनादेः
सच्छिद्रं त्वन्यदाऽपि क्षममिति सततं चिन्तनं संस्मरन्ति ।
प्रत्यक्संस्कारभूम्ना परनिहितधियस्तादधीन्यादिबुद्ध्या
जुष्टं व्यासक्तनीत्या भवति हि समये योगिनः कर्म सर्वम् ॥ २५ ॥

**चित्तैकाग्र्योपपत्त्यै**—ध्येयैकप्रवणमनस्कतायाः संसिद्धये, **देश-कालाऽऽसनादेः नियतिम्**—विविक्तं देशम्, कालसन्ध्यादिरूपं कालम्, चेलाजिनाद्यासनम्—इति (उक्तानामेषामवश्याश्रयणीयताम्) नियमम्, **विदधति**—श्रुतयः तत्स्मर्तारो मुनयश्च ध्यानार्थमुपदिशन्ति, **अन्यदा**—ध्यानार्थेतरदैहिकव्यवहारवेलायाम्, **सच्छिद्रमपि**—विजातीयप्रत्ययान्तरसंवलितमपि, **सततं चिन्तनं संस्मरन्ति**—सार्वकालिकं शुभाश्रयभूतध्यानालम्बनसंस्मरणम्, मुनयः स्वीयासु स्मृतिषु ध्यानकाले प्रावण्यौपयिकतया कर्तव्यं ज्ञापयन्ति, **प्रत्यक्संस्कारभूम्ना**—एवं क्रमशः सम्पन्नेन अन्तर्मुखप्रवृत्त्याहितसंस्कारातिशयबलेन, **परनिहितधियो योगिनः**—परे ब्रह्मणि निवेशितमतेः साधकस्य, **सर्वं कर्म**—उपासनाङ्गभूतं नित्य-नैमित्तिकादि कर्म (तथा) दैहिकजीवनोपयोगि कौटुम्बिकादि कर्म चेत्यखिलं क्रियाजातम्, **तादधिन्यादिबुद्ध्या जुष्टम्**—परमात्माहितप्रवृत्तिप्रयोज्यत्व तत्प्रीतिपर्यवसायित्वादिनिश्चयेन पूरितं व्याप्तं सत्, **समये**—विहिते योग्ये च काले, **व्यासक्तनीत्या**—कार्यविशेषोद्यतस्य तत्रैव विशेषेण संबद्धचेतसोऽपि लौकिकस्य जनस्य यथा अवर्जनीयेषु देहधारणार्थेषु कर्मसु प्रवृत्तिः पुत्रमित्रकलत्रादिषु व्यवहारप्रवृत्तिश्च भवति तद्वत्, **भवति हि**—घटत एवेति, (न ध्यानपराणां कर्मासिद्धिप्रसङ्गः) ॥ २५ ॥

(457) कर्मोपास्त्यङ्गभूतं यदिह निगदितं तत्परे पूर्वपादे
योगेन ब्रह्मदृष्टिर्यदपि च परमो धर्म इत्युक्तमाप्तैः ।
तेन प्राधान्यसिद्धावितरदनुगुणं तस्य नेयं तथा च
प्रायः प्रक्रान्तयोगे पटिमलघुतया कल्पितः कालयोगः ॥ २६ ॥

**कर्म**—यज्ञ दान-तपःप्रभृतिकं क्रियाजातम्, **उपास्त्यङ्गभूतम्**—उपासनप्रवृत्तेन पुरुषेण अनुष्ठीयमानोपासनाङ्गतया कर्तव्यमिति, **इह**—शारीरकशास्त्रे, **तत्परे**—उपासनाङ्गनिर्णय-प्रधाने, **पूर्वपादे**—तृतीयतुरीये अङ्गपादे, **यत् निगदितम्**—विचार्य यन्निर्णीतमस्ति, **आप्तैः**—यथावस्थितार्थदर्शन-यथार्थवादित्वोभयवद्भिः, याज्ञवल्क्यादिभिः, **योगेन ब्रह्मदृष्टिः**—ध्यानयोग-माश्रित्य परब्रह्मसाक्षात्करणम्, **परमो धर्मः**—अनुष्ठेयतया शास्त्रसिद्धेषु धर्मेषु मध्ये उत्कृष्टतमो धर्मः, **इति च यदप्युक्तम्**—'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद् योगेनाऽऽत्मदर्शनम् ॥' इत्यादिना यच्च स्फुटं प्रतिपादितम्, **तेन**—न्याय-प्रमाणोभयेन, **प्राधान्यसिद्धौ**—ब्रह्मोपासनस्य अवश्यानुष्ठेयत्वरूपस्य अङ्गितारूपस्य च प्राधान्यस्य निश्चये सति, **इतरत्**—नित्य-नैमित्तिकादिरूपं कर्मजातम्, **तस्य अनुगुणम्**—प्रधानभूतस्योपासनस्यानुकूल्यं विरोधाभावश्च यथा भवेत् तथा, **नेयम्**—यथार्हमनुष्ठेयं भवति, **तथा च**—कर्मणामुपासनोप-कारकफलत्वे दृढे सति, **प्रक्रान्तयोगे**—युञ्जानाख्ये योगारम्भत्वरितमनसि पुरुषे, **पटिमलघु-तया**—पाटवस्याऽल्पीयस्त्वेन हेतुना (पटुत्वातिशयलाभाय), **कालयोगः**—योग्ये काले ध्यानस्यानुष्ठेयतानियमः, **कल्पितः**—शास्त्रेषु विहितो वर्तते ॥ २६ ॥

(458) विद्याङ्गं पूर्वमुक्तं किमिह पुनरसावासनाद्यङ्गचिन्ता
दृष्टार्थांशं विभज्य प्रथयितुमपि न प्राक् शमाद्यङ्गवादात् ।
सत्यं ध्यानाख्यधारावहनमतिदशा त्वन्वहं साधनीया
चित्तैकाग्र्येण सर्वप्रयतनविरहे स्यादितीदं प्रकाश्यम् ॥ २७ ॥

**विद्याङ्गम्**—प्रधानभूतायाः विद्याया उपकारकं सर्वम्, **पूर्वमुक्तम्**—तृतीयचतुर्थे निरूपितमेवेति, **इह**—तुरीयाद्यपादे अत्र, **असौ आसनाद्यङ्गचिन्ता**—क्रियमाणा आसनादि-योगाङ्गानां विचारणा, **पुनः किम्**—किमर्थं पुनः क्रियते? कृतकरत्वापत्तेः, (इति प्रश्ने) **दृष्टार्थांशं विभज्य**—प्रधानं प्रति दृष्टादृष्टोपकारकेषु दृष्टोपकारम् अङ्गं पृथक्कृत्य, **प्रथयितुमपि**—प्रदर्शयितुम् (अत्र आसनाङ्गनिरूपणम्) इत्यपि, **न**—न विवेक्तुं शक्यम्, **प्राक्**—पूर्वमेव (तृतीयतुरीये एव), **शमाद्यङ्गवादात्**—योगं प्रति दृष्टोपकारकाणां शम-दमादीनां निरूपितत्वेन तदनौचित्यापातात् (यतः तदत्रैव निरूप्यं भवेत्) **सत्यम्**—पृष्टमेतद्युक्तमेव,

**अन्वहं चित्तैकाग्र्येण साधनीया**—आप्रयाणात् यावदायुषम् ध्येयैकप्रवणमनस्कतया अहरहर-भ्यासेनाधेयातिशया, **ध्यानाख्यधारामतिवहनदशा तु**—ध्यानपदवाच्यधीसन्तानस्याविच्छिन्न-धारात्वावस्थितिः परम्, **सर्वप्रयतनविरहे**—ध्यानेतरविषयकनिखिलप्रयत्नदूरीकरणे एव, **स्यात्**—सिध्येत्, **इतीदम्**—इत्येतदेवात्यावश्यकम्, **प्रकाश्यम्**—साधकान् प्रति स्फुटीकार्यमभिमतं भगवतः सूत्रकारस्येति ॥ २७ ॥

—o—

(3) **अधिकरणार्थसंग्रहः ॥**

आसीनाधिकरणे—'एवमनुतिष्ठेत्' इति विशेषाभिधानाभावात्, आसीनः तिष्ठन् शयानो गच्छन् वा उपासनमनुतिष्ठेत्—इत्याशङ्क्य,

आसीनस्यैव ध्यानापेक्षितैकाग्रचित्ततासम्भवात्, आसीन एव योगमनुतिष्ठेत्—इत्युक्तम् ॥

(4) **नयसङ्गतिमालिका ॥**

आवर्तव्या यद्युपास्तिः स्वैरमावृत्तिरिष्यते ।
इति शङ्कापवादः स्यादासीनाधिकृतौ पुनः ॥ १७९ ॥

इति आसीनाधिकरणम् ॥ ५ ॥

—o—

## (129) आप्रयाणाधिकरणम् ॥ ४–१–६ ॥

(1) **शारीरकन्यायकलापसङ्ग्रहः ॥**

(184) शास्त्रार्थनिर्वृत्तित एव हेतोः कर्तव्यमेकत्र तु वासरे तत् ।
एतन्न संसिद्ध्यति 'यावदायु'रित्येव शब्दाद्विधितश्च तस्य ॥ ६ ॥

**शास्त्रार्थनिर्वृत्तित एव हेतोः**—शास्त्रविहितस्योपासनरूपस्याऽर्थस्य एकवारमनुष्ठानेऽपि निर्व्यूढत्वसिद्धेरेव प्रयोजकात्, **तत्**—अपवर्गसाधनभूतमुपासनम्, **एकत्र तु वासरे**—एकस्मिन्नेव दिने, **कर्तव्यम्**—अनुष्ठेयं भवति; न प्रतिदिनम्, (एवं शङ्कने) **एतत्**—

एकस्मिन्नेव दिने अनुष्ठेयत्वम्, **न संसिद्ध्यति**—शास्त्रतः सिद्धं नैव भवति, **यावदायुरित्येव शब्दात्**—'स खल्वेवं वर्तयन् यावदायुषम्' इत्येवमाकारादेव यावदायुषपदघटितात् असन्दिग्धार्थकात् श्रुतिवाक्यात्, **तस्य**—आमरणं प्रत्यहकर्तव्यत्वस्य, **विधितश्च**—स्पष्टमेव विधानात्, (एकवासरमात्रकरणे न शास्त्रार्थनिर्वाहसिद्धिः ; किन्तु प्रतिदिनम् आमरणं करणे एवेति) ।६।

—o—

## (2) अधिकरणसारावलिः ॥

(459) एकस्मिन्नेव घस्रे यदि भवति परध्यानरूपा तु भक्ति-
स्तद्विश्रान्तो विधिः स्यादुपरि तु विफला ब्रह्मचिन्तेत्ययुक्तम् ।
छान्दोग्ये यावदायुः सुचरितमुदितं ब्रह्मलोकाप्तिहेतो-
स्तद्धि ध्यानस्य वृद्ध्यै तदपि च विहितं कुत्रचित् प्रायणान्तम् ॥ २८ ॥

**एकस्मिन् एव घस्रे**—एकस्मिन्नहन्येव, **परध्यानरूपा तु भक्तिः**—परमात्मनो ध्यानपदाभिधेयत्वाद्धैव मोक्षोपायभूता भक्तिः, **यदि भवति**—लब्धस्वरूपा भवेद्यदि, **विधिः**—मोक्षसाधनतया ब्रह्मवेदनविधिः (श्रुत्यादिगतः), **तद्विश्रान्तः स्यात्**—एकदिनमात्रकर्तव्यताज्ञापनपर्यवसित एव भवेत्, **उपरि तु**—शास्त्रपर्यवसानसिद्धार्थानुष्ठानानन्तरं तु (आयुश्शेषे), **ब्रह्मचिन्ता**—ब्रह्मोपासना. **विफला**—प्रयोजनशून्यैव, **इत्ययुक्तम्**—एवं शङ्कनमनुचितम्, **छान्दोग्ये**—छान्दोग्यश्रुतौ, **ब्रह्मलोकाप्तिहेतोः**—ब्रह्मप्राप्तिरूपं फलं प्रति हेतुतया, **सुचरितम्**—सुकृतपदाभिधेयसत्कर्मानुष्ठानम्, **यावदायुः उदितम्**—आमरणमेव विहितम् (उक्तम्), ('एवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति) **तत्**—यावदायुषं प्रत्यहं सत्कर्मानुष्ठानम्, **ध्यानस्य वृद्ध्यै हि**—ध्याने अत्यन्तवैशद्यलाभाय खलु, **तदपि**—ध्यानमेव च, **प्रायणान्तम्**—देहादुत्क्रमणपर्यन्तम्, **कुत्रचित्**—श्रुतिविशेषे, **विहितम्**—'प्रायणान्तमोङ्कारमभिध्यायीत' इति स्पष्टमेव अनुष्ठेयतया चोदितम् ॥ २८ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

आप्रयाणाधिकरणे—एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्? उपासनं? तावतैव परिसमापनीयम्—इत्याशङ्क्य,

'स खल्वेवं वर्तयन् यावदायुषम्' इति श्रवणात्, आमरणादनुवर्तनीयम्—इत्युक्तम् ॥

—o—

(4) नयसंगतिमालिका ॥

आवृत्ताऽप्युपसंहार्या स्वेच्छयेत्येष संशयः ।
आप्रयाणाधिकरणेऽपोद्यते श्रुतिदर्शनात् ॥ १८० ॥

इति आप्रयाणाधिकरणम् ॥ ६ ॥

—o—

## (130) तदधिगमाधिकरणम् ॥ ४–१–७ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(185) नाऽभुक्तमित्येव तु संस्मृतत्वादश्लेषनाशौ न हि पातकानाम् ।
तस्याः फलित्वैकसमर्थनत्वादेवंविदीति श्रवणाच्च नैवम् ॥ ७ ॥

**नाभुक्तमित्येव तु संस्मृतत्वात्**—'नाऽभुक्तं क्षीयते कर्म' इति, कर्मणां भोगमप्रदाय क्षयो नैव भवितुमर्हतीत्यर्थस्य स्पष्टं स्मृत्या प्रतिपादनात्, **पातकानाम्**—अपवर्गविरोधिनां पापानाम्, **न हि अश्लेषनाशौ**—अश्लेष-विनाशौ न खलु सम्भविनौ, (इति शङ्कने) **नैवम्**—अनया रीत्या शङ्का नोचिता, **तस्याः**—'नाऽभुक्तं क्षीयते' इति स्मृतेः, **फलित्वैकसमर्थनत्वात्**—कर्मणां फलराहित्यव्यावर्तनैकतात्पर्यकत्वात्, (तथा) **'एवं विदी'ति श्रवणाच्च**—'एवंविदिपापं कर्म न श्लिष्यते' इति श्रुतिकण्ठोक्तेरपि ज्ञापकात् ब्रह्मविदुषः पापानामश्लेष-विनाशयोः अवश्याभ्युपगमनीयत्वादिति ) ॥ ७ ॥

—o—

### (2) अधिकरणसारावलिः

(460) नाऽभुक्तं कल्पबृन्दैरपि सुपरिहरं कर्मगीतं मुनीन्द्रैः
पापाश्लेष-प्रणाशश्रुतिरपि परविद्वैभवोक्तिस्ततः स्यात् ।
मैवं नाऽभुक्तमित्याद्यपि फलजनने कर्मणो दार्ढ्यमाह
प्रायश्चित्तक्रमेण त्विह परभजनं चोदितं कर्मशान्त्यै ॥ २९ ॥

**कर्म**—सुकृत-दुष्कृताख्यं कर्म, **अभुक्तम्**—तत्तत्कर्तृचेतनैः अनुपभुक्तस्वस्वफलं सत्, **कल्पबृन्दैरपि**—युगस्तोमैरपि, **न सुपरिहरम्**—नैव सुसाध्यविनाशम् इति, **मुनीन्द्रैः**—वेदार्थस्मरणशीलैः ऋषिभिः, **गीतम्**—'नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति

पुराणवचनेन स्पष्टीकृतम्, **ततः**—तस्मात् ज्ञापकात्, **पापाश्लेषप्रणाशश्रुतिरपि**—ब्रह्मविदः पुरुषस्य उत्तर-पूर्वाख्यानामघानां लेपाभाव-प्रणाशबोधिनी 'एवंविदि पापं कर्म न श्लिष्यते' 'एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते' इत्यादिरूपा वेदवाण्यपि, **परविद्वैभवोक्तिः स्यात्**—ब्रह्मविद्गतमाहात्म्यातिशयमात्रबोधनतात्पर्यप्रवृत्ता भवितुमर्हति ; न तु यथाश्रुतार्थपरा भवेत्, (इति शङ्कने) **मैवम्**—अनया रीत्या शङ्कनं नैव साधु, **नाऽभुक्तमित्याद्यपि**—'नाऽभुक्तं क्षीयते' इति स्मृतिवचनमपि, **कर्मणः**—सुकृत-दुष्कृताख्यस्य कर्मणः, **फलजनने दार्ढ्यम्**—अनन्देहेन स्वीयफलोत्पादनध्रौव्यम्, **आह**—स्पष्टीकरोति, **इह**—श्रुतिवचसि, **परभजनम्**—परमात्मोपासनम्, **कर्मशान्त्यै**—अपवर्गविरोधिनां सर्वेषां च कर्मणां फलानुत्पादकत्वापादनाय, **प्रायश्चित्तक्रमेण**—अन्यान्यैर्विविधैः शास्त्रैः विविधानां पापानां विषये प्रायश्चित्तानि यथा तथैव, **चोदितम्**—विहितमस्ति, (इति मन्तव्यम्) ॥ २९ ।

(461) निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नं
नाऽत्र स्वर्गादिनीतिः प्रतिहतिविगमे धीविकासः स्वतो हि ।
पापालेपः प्रमादोदितसहनमिति स्थाप्यमाज्ञानुवृत्त्यै
नो चेन्न स्याद्गतिर्नाऽविरत इति गिरो योगिनां च प्रवृत्तेः ॥ ३० ॥

**अस्य**—परमात्मोपासनस्य, **उदितदुरितसमुन्मूलनस्य**—सञ्जातसर्वपापनिर्मूलनकारिणः, **उपपन्नम्**—(तेनैव हेतुना) युज्यमानं भवति, **निष्कृत्यात्मत्वम्**—प्रायश्चित्तरूपत्वम्, **हि**—यतः, **प्रतिहतिविगमे**—प्रतिबन्धकनिरासे सति, **स्वतो धीविकासः**—चेतनस्वभावायत्त एव लभ्यते असङ्कुचितधर्मभूतज्ञानत्वावस्था (ब्रह्मानुभूत्यनुगुणा) ; ततः, **अत्र**—अपवर्गार्थपरमात्मोपासनस्थले, **स्वर्गादिनीतिः न**—काम्यभूतस्य ज्योतिष्टोमादेः स्वर्गाख्यसुखविशेषहेतुत्वमिव अपवर्गहेतुत्वम् इतीयं रीतिः नैव वर्तते, **पापालेपः**—उपासननिष्पत्तिपश्चाद्भाविनां पापानां भजनशीले लेपाभावो यः श्रुतिगदितः सः, **आज्ञानुवृत्त्यै**—उपासनसिद्ध्यनन्तरमपि उपासकस्य यावदायुषम् आज्ञानुज्ञाकैङ्कर्यनैरन्तर्यज्ञापनसिद्ध्यर्थम्, **प्रमादोदितसहनमिति स्थाप्यम्**—प्रमादतः-अवशात् प्राप्तानां पापानामेव परमात्मना क्रियमाणं मर्षणमेवेति (न स्वच्छन्दचारस्यावकाशः इति) समर्थनीयम्, **नो चेत्**—प्रमादतः आपतितानीत्येतद्विहाय असङ्कोचेन सर्वपापाश्लेषपरत्वं श्रुतिसंमतं मन्येत चेत् !, **'नाऽविरत' इति गिरः**—'नाऽविरतो दुश्चरितान्नाऽशान्तो नाऽसमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥' इत्याकारायाः श्रुतिवाचः, **योगिनां प्रवृत्तेश्च**—महायोगिनां जनककेकयादीनां विहितानुष्ठाननिषिद्धवर्जनप्रवणायाः प्रवृत्तेश्च श्रुतिपुराणादिसिद्धायाः, **गतिः न स्यात् इति**—औचित्येन निर्वाहो न भवितेति ।

(सिद्धोपासनानां विधि-निषेधोल्लङ्घनमेव श्रुतिमतं यदि, तदा जनक-केकयादयः कुतो वा शास्त्रमर्यादानुसारिणः शास्त्रे श्रुता भवेयुः ? इति) ॥ ३० ॥

(462) अश्लेषः कर्मशक्तेरनुदय उदये तन्निवृत्तिर्विनाशः
शक्तिः सा च प्रणेतुस्तदुचितफलकृन्निग्रहानुग्रहात्मा ।
प्रायश्चित्तं निमित्ते कथमनुदित इत्यत्र नैवाऽनुयोज्यं
नाऽधर्मस्तस्य तत् स्यादिति खलु हृदयं ग्राह्यमश्लेषवाचः ॥ ३१ ॥

**अश्लेषः**—'एवंविदि पापं कर्म न श्लिष्यते' इत्युक्तः विदुषि पाप्मनामश्लेषः, **कर्मशक्तेः अनुदयः**—कृतेष्वपि पापरूपेषु कर्मसु ज्ञानविरोधिन्याः शक्तेः तत्राऽनुत्पत्तिरेव, **विनाशः**—एवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते' इत्युक्तः विदुषः सर्वपापविनाशो नाम, **उदये तन्निवृत्तिः**—कर्मसु ज्ञानविरोधिन्याः शक्तेः उत्पत्तौ सत्यां, तस्याः शक्तेः निवारणम्, **सा च शक्तिः**—असङ्कुचितज्ञानत्वावस्थाविरोधिनी च शक्तिः (कर्मगता), **तदुचितफलकृत्**—तत्तादृशकर्मणां कर्तुस्तस्य तस्य चेतनस्य यथायोग्यं फलजनिका, **प्रणेतुः निग्रहानुग्रहात्मा**—सर्वनियन्तुः परमेश्वरस्य तत्तज्जीवविषयकनिग्रहानुग्रहसङ्कल्पात्मिकैव ; नान्या अपूर्वादिशब्दवाच्या, **प्रायश्चित्तम्**—'प्रायश्चित्त'पदेन शास्त्रोदितं कर्म, **निमित्ते अनुदिते**—प्रायश्चित्तप्रयोजके निमित्ते अनुत्पन्ने एव सति, **कथम्**—केन वा प्रकारेण स्वरूपं लभते ? ; (पश्चात्तापतत्प्रयुक्तकर्मविशेषाद्याचरणस्य पूर्वमप्रसक्तेः) **इति अत्र नैवाऽनुयोज्यम्**—इत्येवम् उत्तराघाश्लेषविषये नैवाऽऽक्षेप्यम्' (उत्तरस्य अघस्य अकृतत्वात् तं प्रति उपासनस्य प्रायश्चित्तत्वायोग इति), **अश्लेषवाचः**—उत्तराघाश्लेषोक्तेः, **हृदयम्**—तात्पर्यम्, **तत् तस्य नाऽधर्म इति खलु ग्राह्यम्**—प्रामादिकं पापानुष्ठानम्, उपासकस्य पापरूपं न भवतीत्येवमेव खलु ग्रहीतव्यम् (श्रुत्यर्थचिन्तकेनेति) ॥ ३१ ॥

(463) धीपूर्वं तूत्तराघं न सृजति परवित् सर्वदा सावधानो
जातं नैमित्तिकैश्च क्षिपति समुचितैराशु भुञ्जीत वा तत् ।
वृत्रादौ दृष्टमेतन्नियतिविभवतश्चेदिगजादिसिद्धि-
र्युक्त्याद्यैवाऽन्यदा वा मुनिरिह मनुते ब्रह्मनिष्ठस्य मुक्तिम् ॥ ३२ ॥

**परवित्**—परमात्मोपासननैरन्तर्यवान् पुरुषः, **धीपूर्वम्**—बुद्धिपूर्वकतया, **उत्तराघम्**—उपासनपश्चाद्भाविनं पाप्मानम्, **न तु सृजति**—निषिद्धानुष्ठानादिभिर्नैव सम्पादयितुमीहते, (यतः) **सर्वदा सावधानः**—उपासनप्रवृत्तिमारभ्य यावदायुषम् क्षणमपि अविहाय अप्रमत्त एव

जीवति, (यस्तु अवधानरहितः सः) **जातम्**—प्रमादात् उत्पन्नमुत्तराघम्, **समुचितैः**—तत्तत्पापस्वभावस्वरूपानुगुणैः, **नैमित्तिकैश्च**—विहितैः प्रायश्चित्तैरेव परिषदाज्ञप्तैः, क्षमायाचन-शरणवरणादिभिर्वा, **आशु क्षिपति**—शरीरपातावधिके काल एव शीघ्रं विनाशयति, **तत्**—तादृशं पापम्, **आशु भुञ्जीत वा**—इहैव जन्मान्तराननुवृत्त्यनुगुणं भोगेन क्षपयेदेव वा, **एतत्**—परमात्मचिन्तनैकरसस्य चेतनस्य सम्भविनां पापानामुक्तरीत्या निर्हरणम्, **वृत्रादौ दृष्टम्**—वृत्रात्मना लब्धजन्मनि ब्रह्मज्ञेऽपि चेतनविशेषे देवराजेन वध्यत्वप्राप्तिपूर्वकम् अनुपद-मेव मुक्तिसम्पन्ने पुराणादिकथया ज्ञातम्, **नियतिविभवतः**—विधिमहिमवशतः, **चेदिराजादि-सिद्धिः**—शिशुपालादिरूपमापन्नस्य भगवद्भक्तस्य चेतनविशेषस्य मध्ये वैरपूर्वकं भगवदवाप्तिः **युक्ता**—न्याय्यैव श्रूयते, **मुनिः**—सूत्रकृत् बादरायणः, **इह**—शारीरके, **ब्रह्मनिष्ठस्य**—मुमुक्षोः ब्रह्मचिन्तकस्य, **अद्य वा अन्यदा वा**—एतज्जन्मनि वा जन्मान्तरे वा, **मुक्तिम्**—अवर्जनीयमपवर्गम् **मनुते**—शास्त्रसंमततया स्वाभिप्रेतमाविष्करोति ।। ३२ ।।

—o—

## (3) अधिकरणार्थसङ्ग्रहः ।।

तदधिगमाधिकरणे—'एवंविदि पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इत्यादिवाक्योक्तौ, कर्मणामश्लेष-विनाशौ, 'नाऽभुक्तं क्षीयते कर्म' त्यादिना विरोधात्, नोपपद्येते—इत्याशङ्क्य,

'नाऽभुक्त'मिति वचनस्य कर्मणां फलजननशक्तिदार्ढ्यविषयत्वात्, अश्लेष-विनाश-श्रुत्योः विधया उत्पत्स्यमानकर्मशक्तिप्रतिबन्ध-उत्पन्नकर्मशक्तिविनाशकरणविषयत्वाच्च, विरोधा-भावात् उपपद्येते—इत्युक्तम् ।।

—o—

## (4) नयसङ्गतिमालिका ।।

प्राचीनपापानन्त्येन प्रायणान्ताऽप्युपासना ।
फलायाऽनवकाशेति चाऽऽक्षेपोऽपि ततो हतः ॥ १८१ ॥

इति तदधिगमाधिकरणम् ।। ७ ।।

—o—

## (131) इतराधिकरणम् ॥ ४–१–८ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(186) अश्लेष-नाशौ हितकर्मणां तु नैव प्रसक्तौ सुखलाभहेतोः ।
तन्नैव मोक्षप्रतिबन्धकत्वसाम्यान्मुमुक्षोः स्फुटतः प्रसक्तौ ॥ ८ ॥

**हितकर्मणां तु**—सुकृतरूपाणां हितात्मकानां कर्मणां तु (पुण्यकर्मणां पुनः), **अश्लेष-नाशौ**—पापानामिव लेपाभाव-क्षयौ, **नैव प्रसक्तौ**—सर्वथा न सम्भावितौ, **सुखलाभहेतोः**—पुण्यात्मकैः कर्मभिः इष्टरूपसुखस्य लाभात् निमित्तात् (उपासकस्य मुमुक्षोरपि चेतनस्य इष्टफल-जननार्थमपेक्षणीयत्वात्), इति शङ्कने, **तन्नैव**—शङ्कितं यत् तत् नैवोचितम्, **मोक्षप्रति-बन्धकत्वसाम्यात्**—मुक्तिविघटकतायाः पापेष्विव पुण्येष्वपि कर्मसु समानत्वात्, **मुमुक्षोः**—स्वात्मानं संसारनिगडान्मोचयितुमिच्छोः पुरुषस्य, **स्फुटतः**—असन्देहेनैव, **प्रसक्तौ**—पुण्य-कर्मणामप्यश्लेषनाशौ अवश्यमपेक्षणीयौ सम्भावितावेवेति ॥ ८ ॥

—o—

### (2) अधिकरणसारावलिः ॥ श्लो. 33-35

(461) धर्मस्याऽश्लेष-नाशौ न हि परभजनानुग्रहेणोपपन्नौ
तस्याऽघत्वप्रसङ्गाच्छ्रुतिरपि च परं पापनिर्मुक्तिमाह ।
भोगैस्तत्पुण्यनाशोऽस्त्विति यदि न यतः काम्यमप्यस्य पापं
तस्मिंस्तल्लक्ष्मसिद्धेर्न सुकृतमिति च श्रूयते पाप्मताऽस्य ॥ ३३ ॥

**परभजनानुग्रहेण**—परमात्मोपासनोपकारकत्वेन (प्रतिपन्नस्य), **धर्मस्य**—याग-दान-तपो-होमादिजन्यस्य पुण्यकर्मणः, **अश्लेष-विनाशौ**—अलेप-निरवशेषक्षयौ, **न हि उपपन्नौ**—न खलु युक्तौ भवतः, (पुण्यस्याऽपि विनाश्यतायाः शास्त्रीयत्वे) **तस्य**—धर्मस्य (पुण्यस्य) **अघत्वप्रसङ्गात्**—पापपदाभिधेयत्वप्रसङ्गात्, (न हि धर्मस्य पापत्वं केनाऽपीष्यते), **श्रुति-रपि च**—वैदिकी वागपि, **पापनिर्मुक्तिं परम्**—पापकर्मणो निवृत्तिमेव केवलम्, **आह**—'सर्वे पाप्मानोऽतो निवर्तन्ते' इति स्फुटं वदति, **तत्**—ततो हेतोः, **पुण्यनाशः**—पुण्यकर्मणां क्षयः **भोगैः अस्तु**—कर्मफलानुभवैरेव सम्पद्यतां ; न विद्यया, **इति यदि**—एवं शङ्क्यते चेत् ! **न**—नेदं युक्तम्, **यतः**—यस्माद्धेतोः, **अस्य**—मुमुक्षोरुपासकस्य, **काम्यमपि**—ब्रह्मप्राप्तीतरफलसाधनं कर्माऽपि, **पापम्**—पापपदाभिधेयमेव, **तस्मिन्**—पुण्येऽपि कर्मणि,

**तल्लक्ष्मसिद्धेः**—पापलक्षणस्य इष्टतमभगवत्प्राप्तीतरस्वर्गादिक्षुद्रसुखरूपानिष्टलम्भकत्वस्य योगात् । **अस्य**—पुण्यस्याऽपि, **पाप्मता**—पापरूपता, **न सुकृतमिति**—'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति, **श्रूयते च**—श्रुतावेव स्फुटमुल्लिख्यतेऽपि ॥ ३३ ॥

(465) पुण्यं विद्यानुकूलं यदिह सफलता तस्य विद्याप्रदत्वात्
तस्यां यन्नोपयुक्तं तदपि दुरितवद्बन्धकत्वेन वार्यम् ।
कारागारोपरुद्धे निगलयुगलतः सार्वभौमस्य भृत्ये
हैमं कार्ष्णायसं च प्रसदनसमये भञ्जनीयं सहैव ।। ३४ ।।

**इह**—पुण्यपदाभिधेयेषु कर्मसु मध्ये, **यत् विद्यानुकूलं पुण्यम्**—अपवर्गसाधनभूत-विद्यासिद्ध्यौपयिकं यत् नित्य-नैमित्तिकाख्यं पुण्यं कर्माऽस्ति, **तस्य**—तादृशस्य विधिचोदितस्य पुण्यस्य कर्मणः, **विद्याप्रदत्वात्**—निरन्तरभगवदुपासनात्मकविद्यायाः सत्त्वशुद्ध्यापादनद्वारा सम्पादकत्वात्, **इह सफलता**—विद्यानुष्ठानोपयोगिशरीरावच्छेदेनैव सप्रयोजनता (कार्यकरत्वं) सिद्धैव, **यत्**—यादृशं पुण्यम्, **तस्याम्**—भगवदुपासनरूपायां विद्यायाम्, **नोपयुक्तम्**—उपकारकत्वरूपोपयोगराहित्येनाऽवस्थितम्, **तदपि**—तथाविधं पुण्यं कर्माऽपि, **बन्धकत्वेन**—संसारविवृद्धिहेतुत्वेन निमित्तेन, **दुरितवत्**—पापसाम्येन (दुरितं यथा तथैव), **वार्यम्**—त्याज्यम् (दूरीकरणीयमेव) **सार्वभौमस्य भृत्ये**—सम्राजः सेवके कस्मिंश्चन पुरुषे, **निगल-युगलतः**—सौवर्णकार्ष्णायसरूपेण शृङ्खलाद्वयेन, **कारागारोपरुद्धे**—चोराद्यपराधिबन्धनगेहे बन्धिते सति, (सापराधत्वात् कारागृहे नियन्त्रिते सति) **प्रसदनसमये**—शिक्षाकालावधि-पूर्त्यां तस्मिन् राज्ञो विमोचनार्थानुग्रहप्रवृत्तिवेलायाम्, **हैमं कार्ष्णायसं च**—सौवर्ण-लौहात्मक-मुभयविधमपि बन्धकवस्तु, **सहैव भञ्जनीयम्**—युगपदेव मोचनार्हं खलु; न तु सौवर्ण-निगलस्य सौवर्णत्वकृतं स्वीकार्यत्वमिति (एवमेव मोक्षकाले, पुण्य-पापयोरुभयोरपि भवबन्धहेत्वोः सहैव विधूननमवर्ज्यम्) ।। ३४ ।।

(466) काम्यं नेच्छेद् विरक्तो यदि किल कुरुते रागयोगात् फलेत् त-
न्नाऽधीपूर्वं च काम्यं किमपि न च दिशेद् बन्धमज्ञातधर्मः ।
विद्यार्थैर्लिप्यतेऽतः किमितरदिति चेन्नाऽधिकैः सान्तरायै-
रन्यार्थैर्मोहजैः क्वाप्यनुतपनवतो बन्धुजैश्चाऽस्त्वलेपः ॥ ३५ ॥

**विरक्तः**—मुमुक्षुः सन् सांसारिकेषु फलेष्वनिच्छुः पुरुषः, **काम्यम्**—काम्यपदाभिधेयम् ऐहिकफलहेतुभूतं सुकृतम्, **न इच्छेत्**—कर्तुं नैव ईहेत, (नैव ईहेत यदि सुतरां न कुर्यात्;

इच्छाया एवाऽनुत्पत्तौ किमु वक्तव्यं तत्करणविषये), **रागयोगात्**—वासनाधीनात् आकस्मिका-दिच्छासंबन्धात्, (अचिन्तितोपनतादिच्छाविशेषात्), **यदि किल कुरुते**—कदाचित् काम्यमपि पुण्यं कर्म अनुतिष्ठेदेव चेत्!, **तत् फलेत्**—तादृशं सुकृतं जीवितकाले एव उद्देश्यभूतं फलं दत्त्वैव विरतं भवेत्; न आप्रयाणमवशिष्येत; यस्य (मोक्षाप्रतिबन्धाय) अलेपः विधेयः स्यात्; **अधीपूर्वं च**—अबुद्धिपूर्वकमपि, **काम्यम्**—काम्यपदाभिधेयं सुकृतम्, **न किमपि**—नैव यत्किंचित् सम्भवि, (काम्यत्वस्य ज्ञानपूर्वकेच्छाविषयत्वात्मकतया, तत्र अधीपूर्वकतायाः असङ्गतत्वात्), **अज्ञातधर्मः**—मुमुक्षोरुपासकस्य अविदित एव सन् तत्रत्यः सुकृतविशेषः, **बन्धं न च दिशेत्**—मोक्षप्रतिद्वन्द्विनं संसारं नैव अस्मै प्रयच्छेत्, (मोक्षविरोधि सांसारिकफलं मुमुक्षवे अस्मै दत्त्वा न एनं मोक्षायाऽघटमानं कुर्यात्) **विद्यार्थैः**—विद्याङ्गतयाऽनुष्ठितैः सुकृतैः पुनः, **लिप्यते**—लेपं भजते एव; (नो चेत् तान्यपि नैव विद्याप्रदायीनि भवेयुः; हन्त किमतोप्यधिकं हानिकरम्?) **अतः किमितरत्? इति चेत्**—(उक्तविधानां सर्वेषामपि सुकृतानाम् अलेपवचनस्यानुपयुक्तत्वे सिद्धे) एतेभ्योऽन्यत् किंजातीयं वा सुकृतम् (अस्य मोक्षम-प्रतिबन्धुम्) असंश्लेषभाग् वक्तव्यमवशिष्यते?, न किमपीति; अश्लेषवचनमनुपयोग्येवेति शङ्कने **न**—अनुचितं चैतत् शङ्कनम्, **अधिकैः**—विद्यानिष्पत्तये यावदपेक्षितं ततोऽतिरिक्तैः, **सान्तरायैः**—विद्यार्थमेवानुष्ठितैरपि विघ्नप्रतिहततया अकृत्वा विद्योपकारं तथैवावस्थितैः, **अन्यार्थैः मोहजैः**—वस्तुतो विद्येतरफलजनकत्वस्वभावैरपि विद्यार्थानीमानीति मोहेन (भ्रान्त्या) संजातैः, (तथा) **बन्धुजैश्च**—मुक्तस्य स्वबन्धोः देहापक्रमणकाले विधूतसुकृततया तत्प्रियं ज्ञातिभूतं स्वं प्रत्यागतैर्वा सुकृतैः, **क्वाप्यनुतपनवतः**—यादृग्विधेऽपि मोक्षप्रतिबन्धके सुकृते प्राप्तानुतापस्य मुमुक्षोः, **अलेपः अस्तु**—सम्भावितस्य लेपस्याऽभावः सूत्रकृता निर्णीतो भवतु ॥ (इति लिप्यमानसुकृताभावकृतं अलेपवचनानौचित्यं परिहृतं भवतीत्याशयः) ॥ ३५ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

इतराधिकरणे—सुकृतस्य शास्त्रीयत्वात्, तत्फलस्य केषांचिदिष्टत्वदर्शनात्, पुण्यस्य विद्यया न विरोध इति, तदश्लेष-विनाशौ न स्तः—इत्याक्षिप्य,

विद्याफलविरोधित्वसाम्यात्, 'सुकृत-दुष्कृते धूनुते' इति व्यपदेशाच्च, सुकृतस्याऽपि अश्लेष-विनाशौ उक्तौ—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

अश्लेतराधिकरणे पुण्यानन्त्येऽपि पूर्ववत् ।
नाशाश्लेषाविमौ प्रामादिक(दुष्कर्म) सत्कर्मगोचरौ ॥ १८२ ॥

इति इतराधिकरणम् ॥ ८ ॥

—o—

## (132) अनारब्धकार्याधिकरणम् ॥४–१–९॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(187) सर्वस्य वैशेषिकशब्दहानेरश्लेष-नाशौ भवतो हि ! तस्य ।
नाऽऽरब्धकार्यस्य हि ! नैव यस्माद् 'यावन्न मोक्ष्ये'ति विशेषशब्दः ॥ ९ ॥

**तस्य**—सुकृत-दुष्कृतपदाभिधेयस्याऽर्थस्य मुमुक्षूपासकसम्बन्धिनः, **सर्वस्य**—आरब्धानारब्धकार्योभयविधस्यापि, **अश्लेष-नाशौ भवतौ हि**—उत्तरस्याऽश्लेषः, पूर्वस्य क्षयः इत्येतद्ध्रुवम्, **वैशेषिकशब्दहानेः**—अनारब्धकार्यसुकृत-दुष्कृतरूपविशिष्टार्थप्रत्यायकशब्दाभावात्, (इति शङ्कने) **न**—न युक्तमेतच्छङ्कनम्, **यस्मात्**—यतो हेतोः, **'यावन्न मोक्ष्ये'ति विशेषशब्दः**—'यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति देहविमोक्षावधिकत्वरूपविशेषप्रत्यायकः शब्दः श्रुतौ स्फुटं श्रूयत एव अतः, **आरब्धकार्यस्य नैव**—फलप्रदानप्रवृत्तस्य सुकृत-दुष्कृताख्यस्य कर्मणः नैव नाशः ; अन्यथा अवशिष्टे काले देहधारणप्रयोजकाभावप्रसङ्गात् ) ॥ ९ ॥

—o—

### (2) अधिकरणसारावलिः (श्लो. 3६–37)

(467) नश्यत्वारब्धकार्यं परविदि दुरितं न ह्यधीतो विशेषः
'सर्वे पाप्मान'इत्यप्यभिहितमिति चेन्नोपलम्भादिबाधात् ।
सद्विद्या 'तस्य तावच्चिर'मिति च वदत्यस्तरंश्चाऽऽगमज्ञा
जीवन्मुक्त्यादिशब्दोऽप्युपचरणपरो मोहितास्तेन मन्दाः ॥ ३६ ॥

**परविदि**—परब्रह्मवेदनवति पुरुषे, **दुरितम्**—सुकृत-दुष्कृताभिधं कर्म, **आरब्धकार्यम्**—फलवितरणाय प्रवृत्तमपि, **नश्यतु**—उपासननिष्पत्त्यनुपदमेव ध्वस्तं भवतु ; (अनारब्धकार्यमेव कर्म नश्यतीति विशेषे विश्रान्तिर्नोच्यताम्), **हि**—यतः, **विशेषः**—अनारब्धकार्य-

कर्माख्यविशेषगमकः शब्दः, **न अधीतः**—न श्रुतौ पठितः, **'सर्वे पाप्मान' इत्यप्यभिहितम्**—प्रत्युत आरब्धानारब्धोभयकर्मनिवृत्तिबोधकं 'सर्वे पाप्मानः' इति सर्वशब्दघटितमेव वाक्यम् श्रुतौ पठितम्, **इति चेत् न**—एवं शङ्कनमसाधु, **उपलम्भादिबाधात्**—शङ्कितस्याऽर्थस्य प्रत्यक्षादिभिर्विरोधात्, (निष्पन्नोपासनोऽपि हि पुरुषः, अनन्तरं यावदायु देहधारणं करोति, ईप्सित-जिहासितयोः प्रवृत्ति-निवृत्ती लभते। इति प्रत्यक्षेणाऽनुमानेन च विरोधात्, सर्वकर्मक्षयो नैव निर्णेयः; कर्मारब्धं हि शरीरं सर्वकर्मापगमे कथं वा धार्यं स्यात्! इति) **सद्विद्या**—(छान्दोग्यषष्ठप्रपाठकात्मकं) सद्विद्याप्रकरणम्, **तस्य तावच्चिरमिति वदति च**—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतिखण्डेन शरीरपातपर्यन्तकालविलम्बं स्पष्टमेव कण्ठतो वक्त्येव च, **आगमज्ञाः**—उत्सन्न-पठितशाखाविशेषदर्शिनः स्मर्तारो मुनयः, **अस्मरंश्च**—यावच्छरीरपातं शुभाशुभकर्मानुवृत्तिं स्वीयस्मृत्यादिषु स्फुटीचक्रुः, **जीवन्मुक्त्यादिशब्दोऽपि**—शरीरं धारयत एव मोक्षप्राप्त्यादिप्रतिपत्तिकरः 'अमृत इह भवति, अत्र ब्रह्म समश्नुते' इत्यादिकः श्रुत्यादिगतः शब्दोऽपि **उपचरणपरः**—भाविसर्वकर्मक्षयसिद्धवत्कारावलम्बी विशदतमब्रह्मापरोक्ष्यावलम्बी वा सन् औपचारिकः; (न तु कर्मारब्धदेहवत्यपि पुरुषे मोक्षशब्दार्थस्य परिपूर्णतया सिद्धिपरः जीवत्त्व-मुक्तत्वयोः कर्मसम्बन्ध-निरवशेषकर्मक्षयरूपयोः यौगपद्यव्याघातात्) **तेन**—उपचरितामृतत्वादेः इहैव सिद्धवत्कारव्यपदेशेन श्रुत्यादिगतेन, **मन्दाः**—अचतुराः (मुग्धा इति वा), **मोहिताः**—सञ्जातभ्रमाः सन्तः जीवन्मुक्तिवादमङ्गचकार्षुः॥ ३६॥

(468) रोगाद्यारम्भकाणां प्रशमनविधयः सन्ति दानार्चनाद्याः
प्रत्येतुः स्वावताराद्यपि विभुरपुनर्जन्मतामप्यगायत्।
तस्मादारब्धकार्ये फलनियतिवचो दुर्घटं भाति मैवं
प्रायश्चित्तोज्झितानां ननु फलनियतिः सूत्रकाराद्यभीष्टा॥ ३७॥

**रोगाद्यारम्भकाणाम्**—व्याधि-दारिद्र्यादिदुःखभोगाधायकानां प्राक्तनपापानाम्, **प्रशमनविधयः**—स्मृत्यादिचोदिताः निवारणोपायाः, **सन्ति**—वृद्धव्यवहारादिपरिचिता विद्यन्त एव, (के ते?) **दानार्चनाद्याः**—गोभूहिरण्यधान्यवस्त्रादिरूपाणामर्थानां श्रोत्रियेभ्यो दानम्, (तथा) (रोगादिनिवारकतया) भगवतो विशिष्टमर्चनादिकम्, औषधसेवनम्, समिदाज्यचर्वादिभिः होमविशेषः, (इत्यादीनि विशिष्टानि कर्माणि प्रारब्धस्याऽपि कर्मणो नाशकान्यभिमतानि), **विभुः**—भगवान् गीताचार्यः, **स्वावतारादि प्रत्येतुरपि**—भगवतः पुरुषोत्तमस्य स्वस्य अवतारादिदिव्यचारित्रचिन्तनपरस्याऽपि पुरुषस्य, **अपुनर्जन्मतामपि अगायत्**—पुनर्जन्मराहित्यमपि गीतवान्;

'जन्म कर्म च मे दिव्यं....पुनर्जन्म नैति' इत्यनेन वचनेन, **तस्मात्**—उक्तादेतस्माद्धेतोः, **आरब्धकार्ये फलनियतिवचः**—कार्यारम्भोद्युक्ते कर्मणि नियमेनानुभाव्यफलत्ववचनम् (सूत्रोक्तम्), **दुर्घटं भाति**—असङ्गतमित्येव ज्ञायते, (इति शङ्कने) **मैवम्**—एवं मा शङ्क्यताम्, **प्रायश्चित्तोज्झितानाम्**—अकृतप्रायश्चित्तानां (प्रायश्चित्तैरनाशितानाम्) प्रारब्धकर्मणाम्, **फलनियतिः**—भोगैकपरिहरणीयता, **सूत्रकाराद्यभीष्टा ननु**—शारीरकसूत्रकारादिभिः अभ्युपगता खलु ॥३७॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

अनारब्धकार्याधिकरणे—'सर्वे पाप्मानः प्रदूयन्ते' इति अविशेषेण श्रवणात्, आरब्धकार्ययोरप्यश्लेष-विनाशौ—इत्याशङ्क्य,

'तस्य तावदेव चिरम्' इत्यादिश्रवणात्, अनारब्धकार्ययोरेव—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

तथाऽनारब्धातिरिक्तविषयावित्यपि स्थितिः ।
नाऽतोऽध्यक्षविरोधः स्यादित्याक्षेपः प्रशाम्यति ॥ १८३ ॥

इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

—o—

# (133) अग्निहोत्राद्यधिकरणम् ॥ ४-१-१० ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(188) अश्लेष-नाशश्रवणात् कृतानामकार्यता स्वाश्रमकर्मणां च ।
नैतत्तु कार्यं खलु 'यज्ञ'शब्दाद्विद्यासमुत्पादनशक्तितश्च ॥ १० ॥

**कृतानाम्**—सुकृत-दुष्कृताख्यानां सर्वेषामपि कर्मणाम्, **अश्लेष-नाशश्रवणात्**—पापं कर्म न श्लिष्यते इति, 'पाप्मानः प्रदूयन्ते' इति च अश्लेष-क्षीयमाणत्वयोः (विदुषि पुरुषे) श्रुत्या अवगतेः, **स्वाश्रमकर्मणां च**—(कर्तव्यतया श्रुत्युक्तत्वसाम्येन) वर्णाश्रमविहितकर्मणामप्यग्निहोत्रादीनाम् सुकृतरूपतां प्राप्तानाम्, **अकार्यता**—कर्तव्यत्वाभाव एव सिध्यति (इति शङ्कने)

**न**—एवं शङ्कनं तु नैव साधु, **एतत्तु कार्यं खलु**—एतत् अग्निहोत्रादिकर्म परम् अनुष्ठेयमेव हि, **यज्ञशब्दात्**—'विविदिषन्ति यज्ञेन' इति यज्ञादेः वेदनसाधनतया शब्दतो विहितत्वात्, **विद्यासमुत्पादनशक्तितश्च**—अग्निहोत्रादिष्वाश्रमकर्मसु अन्तरायादिनिबर्हणद्वारा विद्यास्वरूपनिष्पत्त्याधायकशक्तिसत्त्वाच्च ॥ १० ॥

—o—

## (2) अधिकरणसारावलिः ॥

(469) श्लेषश्चेदस्य पुण्यैः स तु भवति तदा बन्ध इत्यभ्युपेत्यं
यद्यश्लेषो भवेत्तैः परविदि विफला पुण्यनिष्ठा परस्तात् ।
तस्माद्धर्मोऽप्यधर्मक्रमत इह परित्याज्य एवेत्ययुक्तं
न स्याद् बन्धाय विद्याङ्कुरमुपचिनुते ह्यग्निहोत्रादिधर्मः ॥ ३८ ॥

**अस्य**—ब्रह्मविदः पुरुषस्य, **पुण्यैः श्लेषश्चेत्**—पुण्यपदाभिलप्यैः कर्मभिर्लेपो यदि निश्चितो भवेत्, **तदा**—तादृशसिद्धान्तानुगुण्येन, **स तु**—पुण्यलेप एव, **बन्धो भवतीति**—बन्धपदवाच्यः मोक्षप्रतिभटः संसार आपद्यत इति, **अभ्युपेत्यम्**—अङ्गीकार्यं भवति, **तैः**—पुण्यैः कर्मभिः, **अश्लेषो यदि भवेत्**—विदुषो नैव लेपः स्यात् यदि तदा, **परविदि**—ब्रह्मविद्याप्तिमति पुरुषे, **परस्तात्**—विद्यारम्भतः पश्चात्, **पुण्यनिष्ठा**—अग्निहोत्रादिपुण्यकर्मानुष्ठानासक्तिः, **विफला**—निष्प्रयोजना पर्यवस्यति। **तस्मात्**—उक्तादेतस्मात् हेतोः, **अधर्मक्रमतः**—धर्मेतरः क्रियाकलाप इव, **धर्मोऽपि**—धर्मपदवाच्यः अग्निहोत्रादिरपि, **इह**—विद्यानुष्ठानपरे पुरुषे, **परित्याज्य एव**—अननुष्ठानरूपं परित्यागं प्राप्तुमेवाऽर्हः ; न अनुष्ठेयतां प्राप्तुम्, **इति अयुक्तम्**—एवं शङ्कनं युक्तं न भवति ; (त्यागे युक्तिराहित्यात्) **हि**—यतः, **अग्निहोत्रादिधर्मः**—यावज्जीवमनुष्ठेयतया श्रुत्यादिसिद्धः अग्निहोत्रप्रभृतिको नित्यनैमित्तिककर्मकलापः, **विद्याङ्कुरम्**—आरब्धाम् अङ्कुरस्थानापन्नां विद्याम्, **उपचिनुते**—प्रवृद्धां करोति अतः, **बन्धाय न स्यात्**—अपवर्गविरोधिसंसारबन्धापादिका नैव भवेत् ॥ ३८ ॥

(470) सर्वापेक्षेत्यवोचन्ननु परभजने कर्मणामङ्गभावं
भूयोवक्त्यग्निहोत्रेत्यपि तदिति मुधा ह्येकमत्रेति चेन्न ।
विद्याया नैरपेक्ष्यात् तदपरिकरता शङ्किता प्रागपास्ता
श्लेषाभावप्रसक्ता त्विह पुनरिति तन्नीतिवैषम्यसिद्धेः ॥ ३९ ॥

**सर्वापक्षेति**—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यधिकरणे, **परभजने**—परमात्मोपासनं प्रति, **कर्मणाम् अङ्गभावम्**—अग्निहोत्रादिरूपाणां नित्य-नैमित्तिककर्मणामुपकारकत्वाख्यं शेषत्वम्, **अवोचत् ननु**—सूत्रकारः शारीरके उक्तवान् खलु, (एवं स्थिते) **भूयः**—पुनरपि, **अग्निहोत्रेऽप्यपि**—'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इत्यस्मिन् प्रकृताधिकरणेऽपि, **तत्**—कर्मणां परभजनं प्रत्यङ्गभावमेव, **वक्ति इति**—सूत्रकारो ब्रवीति इत्यतो हेतोः, **अत्र एकम्**—सर्वापेक्षाऽग्निहोत्राद्यधिकरणयोरन्यतरत्, **मुधा**—व्यर्थम्; (एकेनैव इष्टार्थसाधनात्) **इति चेत् न**—एवं शङ्कनं न साधु, **प्राक्**—पूर्वस्मिन् सर्वापेक्षाधिकरणे, **शङ्किता**—शङ्कास्पदीभूता, **विद्याया नैरपेक्ष्यात् तदपरिकरता**—उपासनरूपायाः विद्यायाः इतरसापेक्षत्वं विना स्वसाध्यमोक्षसाधकत्वस्वाभाव्यात् कर्माङ्गकत्वाभावापत्तिः, **अपास्ता**—निराकृता, (उपासनस्य कर्मसापेक्षत्वस्वाभाव्यसमर्थनतः), **इह पुनः**—प्रस्तुते अग्निहोत्राद्यधिकरणे तु, **श्लेषाभावप्रसक्ता तु**—आरब्धोपासने विदुषि कर्मणां पुण्यात्मकानां क्रियमाणानामप्यश्लेषस्वाभाव्यायत्ता अपरिकरतैव निराक्रियते, **इति**—शङ्कावैषम्येन हेतुना, **तन्नीतिवैषम्यसिद्धेः**—विद्यायाः कर्माङ्गकत्वाभावनिराकरणपराधिकरणनिष्पाद्यन्याययोः मिथो वैलक्षण्यसिद्धेः (न पौनरुक्त्यकृता वैयर्थ्यशङ्केति) ॥ ३९ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

अग्निहोत्राद्यधिकरणे—अश्लिष्टफलतया उक्तपुण्यवत् अग्निहोत्राद्याश्रमधर्माणामपि पुण्यत्वाविशेषात फलाश्लेषावश्यंभावेन, निष्फले अनुष्ठाने इच्छाया असम्भवात्, अग्निहोत्रादीनामननुष्ठानम्—इत्याशङ्क्य,

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादौ, अग्निहोत्रादीनां विद्योत्पत्त्यर्थत्वस्य श्रुतत्वात्, फलाश्लेषासम्भवेन विद्याख्यकार्यनिष्पत्तये तानि अवश्यानुष्ठेयानि—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

सुकृतस्याऽप्यसंश्लेषे स्वैराचारः प्रसज्यते ।
इत्याक्षेपस्यापवादो ह्यग्निहोत्रनये पुनः ॥ १८४ ॥

इति अग्निहोत्राधिकरणम् ॥ १० ॥

—o—

## (134) इतरक्षपणाधिकरणम् ॥ ११ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(189) यावन्न मोक्ष्येति विशेषशब्दादारभ्यमाणस्वफलं च कर्म ।
तद्देहपातावधिकं न चैतत् तस्याः श्रुतेस्तत्फलगोचरत्वात् ॥ ११ ॥

**आरभ्यमाणस्वफलम्**—स्वीयफलप्रदानप्रवृत्तस्वरूपम्, **कर्म च**—पुण्य-पापाख्यं द्विविधं कर्माऽपि, **तद्देहपातावधिकं**—तच्छरीरपतनमात्रकालावधिकम्, **यावन्न मोक्ष्येति विशेष-शब्दात्**—'यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति, विशिष्टकालावसानबोधकश्रौतशब्दसत्त्वात्, (इति शङ्कने) न **चैतत्**—इदं शङ्कनं नैव साधु भवति, **तस्याः श्रुतेः**—'यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति श्रुतेः, **तत्फलगोचरत्वात्**—प्रारब्धकर्मफलानुभवार्थमपेक्षितशरीरावसानावधिकत्व-विषयकत्वनिश्चयात् ॥ ११ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(471) निर्दिष्टाऽस्माच्छरीरादिति नियतिरतो यावदित्यादिशब्दः
कर्म प्रारब्धकार्यं कथयति विदुषस्तच्छरीरान्तमेव ।
मैवं प्रारब्धचैत्र्यान्न तदवधिविधौ व्याप्रियेताऽऽन्यपर्या-
द्भूयो देहस्मृतेश्चान्तिमवपुषि दृढोद्यत्समाधेस्तु मोक्षः ॥ ४० ॥

'**अस्माच्छरीरादिति**—अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणा-ऽभिनिष्पद्यते' इति श्रुत्या, **नियतिः निर्दिष्टा**—('अस्माच्छरीरात्' इति) एतच्छरीरपाता-वधिककालमात्रपर्यवसितत्वरूपा नियतिः निष्कृष्य स्पष्टीकृता वर्तते, **अतः**—अस्माद्धेतोः, **यावदित्यादिशब्दः**—'यावन्न विमोक्ष्ये' इत्येवमादिः श्रौतः शब्दोऽपि, **विदुषः**—ब्रह्मो-पासकस्य पुरुषस्य, **प्रारब्धकार्यं कर्म**—फलदानप्रवृत्तं पुण्य-पापाख्यं कर्म, **तच्छरीरावसान-मेव कथयति**—आरब्धफलतद्देहपातमात्रावधिकत्वमेव बोधयति (न देहान्तरानुवृत्तिम्) इति शङ्कने, **मैवम्**—अनया रीत्या शङ्कनं न साधु, **प्रारब्धचैत्र्यात्**—प्रारब्धकर्मणः विचित्र-रूपतायाः शास्त्रसिद्धत्वात्, **तदवधिविधौ**—प्रारब्धकर्मणः तच्छरीरावधिकत्वमात्रज्ञापने, **न व्याप्रियेत**—प्रदर्शितं श्रौतवाक्यं (बोधन) व्यापृतं नैव भवेत्, **आन्यपर्यात्**—श्रुतिवाक्यस्य

तात्पर्यान्तरयुक्तत्वात्, ( अस्माच्छरीरादित्यस्य प्राकृतात् ऐहलौकिकाद्देहादित्येवाऽभिप्रायात् ) **भूयोदेहस्मृतेश्च**—योगानुष्ठानप्रवृत्तानामपि नानादेहसम्बन्धस्य प्रारब्धफलभोगौपयिकतायाः इतिहासपुराणादिस्मृतिसिद्धत्वात्, **अन्तिमवपुषि**—प्रारब्धकर्मणां परिपूर्णसमाप्तेरवच्छेदकीभूते चरमशरीरे, **दृढोद्यत्समाधेस्तु**—अचालनीयप्रादुर्भावापन्नब्रह्मानुभवरूपपूर्णसमाधिमत एव विदुषः, **मोक्षः**—संसारनिगलाद्विमोक्षः सिद्धो भवतीति ॥ ४० ॥

(472) नन्वत्राऽस्मादितीदं वितथमिह पदं स्याच्छरीरे न तु स्यात्
कारागारौपमित्यप्रथनपरतया तस्य साफल्यसिद्धेः ।
त्याज्यत्वव्यक्तये हि प्रभुरसुखमिमं लोकमित्यप्यगायद्
भूतावासं विशिंषन्निममिति च मनुर्हेयभावं व्यनक्ति ॥ ४१ ॥

**ननु**—भोः, **अत्र**—पूर्वमुल्लिखिते 'अस्माच्छरीरात् समुत्थाये'ति वाक्ये, **इह शरीरे**—साधकेन गृहीते उपासनोपयोगिनि देहे, **'अस्मात्' इतीदं पदम्**—विशेषणतयोपात्तम् 'अस्मात्' इत्येतत्पदम्, **वितथं स्यात्**—व्यर्थं स्यात, (इति शङ्कने) **न तु स्यात्**—नैव व्यर्थं भवेत्, **तस्य**—'अस्मा'दिति पदस्य, **कारागारौपमित्यप्रथनपरतया**—( गृहीते देहे ) बन्धनगृहसादृश्यख्यापनतात्पर्यवत्तया, **साफल्यसिद्धेः**—सार्थकतायाः लाभात् **प्रभुः**—सर्वलोकनायकः गीताचार्योऽपि, **त्याज्यत्वव्यक्तये हि**—हेयत्वख्यापनाय खलु, **असुखमिमं लोकमित्यपि**—'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इति स्ववचने (देहमेवंविधमुद्दिश्य) अनित्यत्वासुखत्वादिकमपि, **अगायत्**-उत्कीर्तितवान्, **मनुः**—जगद्भेषजभूतस्ववाक्यतया श्रुत्यैव प्रथितः, स्मर्ता मन्वाख्यो मुनिरपि, **भूतावासम्**—पञ्चभूतानां सततविकारिणामविनाभावेनाश्रयभूतम शरीरमिमम, **विशिंषन्**—विशेषणैः अस्थिस्थूणत्वादिभिः व्यावर्त्य बोधयन्, **इममिति च**—'इमम्' इत्यनेनाऽपि पदेन, **हेयभावम्**—अखिलमलास्पदत्वकृतं त्याज्यत्वम्, **व्यनक्ति**—स्पष्टीकरोति ॥ ४१ ॥

(473) सर्वे जीवाः समानाः स्वत इह विविधं कर्म चाऽनादि तुल्यं
वैषम्यादिश्च दोषो न भवति भगवत्यन्यथा शास्त्रभङ्गः ।
मुक्तौ नाऽतो विलम्बप्रभृति घटत इत्यल्पसारोऽनुयोग-
श्चित्र कर्मप्रवाहे फलसमयभिदा ह्याश्रिता सर्वतन्त्रैः ॥ ४२ ॥

**सर्वे जीवाः**—(अनवशेषेण) अखिला अपि चेतनाः, **सतः**—स्वरूपतः (स्वभावतश्च),

**समानाः**—अवैषम्यवन्तः, **विविधम्**—मिथोविलक्षणनानाप्रकारम, **अनादिकर्म च**—अनिदमाद्यस्वरूपं पुण्य-पापाख्यं जीवसम्बन्धि कर्माऽपि, **इह**—जीवजाते, **तुल्यम्**—समानतया वर्तनशीलम्, **भगवति**—मुक्तिवितरणशीले मुकुन्देऽपि परमपुरुषे, **वैषम्यादिः**—जीवेषु पक्षपातप्रवृत्तिः नैर्घृण्यम् एवमादिकः, **दोषश्च**—दोषोऽपि, **न भवति**—नैव विद्यते, **अन्यथा**—भगवति दोषाभ्युपगमे, **शास्त्रभङ्गः**—भगवतो निरस्तनिखिलदोषत्वाभिधायिनां शास्त्राणां बाधितार्थकता स्यात्, **अतः**—अस्माद्धेतोः, **मुक्तौ**—जीवानां मोक्षदानविषये, **विलम्बप्रभृति**—कस्मैचन कालविलम्बमाश्रित्य कस्मैचन शीघ्रं च (मोक्षदानम्) इति वैषम्यानुसरणम्, **न घटते**—न सङ्गतं भवति, इति **अनुयोगः**—ईदृश आक्षेपकरः प्रश्नः, **अल्पसारः**—अत्यन्तं दुर्बलः, **हि**—यतः, **कर्मप्रवाहे**—अनादितः सन्तन्यमाने कर्मजाले, **चित्रे**—अत्याश्चर्याधायके विभिन्नविलक्षणस्वरूपस्वभावे च निश्चिते सति, **फलसमयभिदा**—तत्तत्कर्मपरिपाकायत्तफलजनककालभेदस्य अवर्जनीयता, **सर्वतन्त्रैः**—निखिलैर्दार्शनिकैरपि, **आश्रिता**—अङ्गीकृतैवेति ॥ ४२ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

इतरक्षपणाधिकरणे—प्रारब्धकर्मणः एकशरीरावसानताम्—आशङ्क्य, तस्य भोगेनैव क्षपयितव्यतानियमेन, एकशरीरावसाननियमो नास्ति इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

अग्निहोत्रादिसुकृतात् प्रारब्धस्य विनाशनम् ।
इत्याक्षेपस्याऽपवादे भोगान्तत्वव्यवस्थितेः ॥ १८५ ॥

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

—o—

# [ प्रत्येकमधिकरणार्थसाराः ]

## (1) शारीरकन्यायकलापसंग्रहः ॥

(190) असकृत् कार्यतोपास्तेरहमित्यप्युपास्यता ।
प्रतीकेष्वन्यथोपास्तिरङ्गेष्वर्कादिदृष्टयः ॥ १२ ॥

(191) उपास्तेरासनाङ्गत्वं प्रत्यहं चाऽप्युपास्यता ।
अघस्याऽश्लेषनाशौ च पुण्यस्याऽपि तथा भवः ॥ १३ ॥

(192) आरब्धस्य फलित्वं च कार्यताऽऽश्रमकर्मणाम् ।
कर्मावधित्वं बन्धस्य पादेनाऽनेन साधितम् ॥ १४ ॥

1-**उपास्तेः**—मोक्षोपायभूतस्योपासनस्य, **असकृत् कार्यता**—अनेकवारमनुष्ठेयता, 2-**अहमित्यपि उपास्यता**—मोक्षार्थं भजनीयस्य परमपुरुषस्य उपासनकाले अहन्त्वेन उपासनविषयता, 3-**प्रतीकेषु**—फलार्थमुपास्येषु ब्रह्मशरीरेषु मनो-नामादिषु, **अन्यथा उपास्तिः**—अहन्त्वं विहायैव उपासनम्, 4-**अङ्गेषु**—कर्माङ्गभूतेषूद्गीथादिषु, **अर्कादिदृष्टयः**—आदित्यत्वादिधर्माध्यासरूपाः दृष्ट्युपासनाः, 5-**उपास्तेः**—ध्यानस्य, **आसनाङ्गत्वम्**—पद्मासनादिरूपासनेनोपकार्यत्वम्, 6-**प्रत्यहं चाऽप्युपास्यता**—प्रतिदिनमपि अविच्छेदेन मोक्षोपायभूतं भगवद्भजनम्, 7-**अघस्य अश्लेष-नाशौ च**—अनादिभगवदाज्ञोल्लङ्घनप्राप्तस्य विद्यारम्भप्राक्तनपापस्य, तत्पश्चात्तनपापस्य च यथाक्रमं ( पूर्वस्य ) निरवशेषक्षयः, ( अनन्तरस्य ) अलिप्तता, 8-**पुण्यस्याऽपि तथा भवः**—सुकृतस्याऽपि भगवदाज्ञानुसरणतो लब्धस्य (स्वर्गाद्याधानस्वरूपयोग्यस्य प्राक्तनस्य नाशः पश्चात्तनस्याऽश्लेषः, 9-**आरब्धस्य फलित्वं च**—फलदानोद्यतस्य कर्मणः फलपर्यवसायित्वावश्यंभावः, 10-**आश्रमकर्मणाम्** आश्रमसम्बन्धितया अनुष्ठानविधिविषयाणामग्निहोत्रादिधर्माणाम्, **कार्यता**—अवश्यानुष्ठेयता, 11-**बन्धस्य**—संसारनिगडस्य, **कर्मावधित्वम्**—बन्धाधायककर्मणां निरवशेषक्षयपर्यन्तमवस्थानशीलत्वम्, (इतीदं विषयजातम्) **अनेन पादेन**—तुरीयाध्यायाद्यचरणेन, **साधितम्**—न्यायतः समर्थितम् ॥ १४ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(474) आ(वर्त्या)वृत्ता ब्रह्मविद्या त्वसकृदहमिति स्याच्च न स्यात् प्रतीके
कर्माङ्गेऽर्कादिदृष्टिः प्रणिधिरपि भवेत् सासनः प्रत्यहं च ।
पापे पुण्ये च नाशादिकमथ तु तयोर्भोग्यताऽऽरब्धकार्ये
कार्यत्वं स्वार्हवृत्तेरिति कथितमिहारब्धशान्तौ च मोक्षः ॥ ४३ ॥

**ब्रह्मविद्या**—ब्रह्मोपासनात्मिका औपनिषदी विद्या, **असकृत् आवृत्ता तु**—अनेकवारमनुष्ठितैव सती मोक्षोपायत्वेन श्रुतिविधेयतां लभते ; न तु सकृदनुष्ठिता, **अहमिति स्याच्च**—ब्रह्मोपासनरूपा विद्या उपास्ये ब्रह्मणि विषये अहन्त्वग्रहवत्येव (अहं ब्रह्मास्मीत्येव) भवेत् ; न तु उपासकादन्यत्वेन (तस्य 'न स वेद अकृत्स्नो ह्येषः' इति अनुपासनरूपत्वोक्तेः) **प्रतीके न स्यात्**—फलविशेषाप्तये उपास्यत्वेनाऽवगते मनो-नामादौ प्रतीकभूते विषये, 'अहं मनः' 'अहं नाम' इति अहन्त्वेनोपासनं नैव युक्तं भवेत्, **कर्माङ्गे अर्कादिदृष्टिः**—कर्माङ्गभूते उद्गीथादौ निकृष्टेऽर्थ एव उत्कृष्टादित्यादिदृष्टिः कार्या भवति ; (न तु आदित्यादौ उद्गीथादिदृष्टिः ; तस्य अन्याय्यत्वात्), **प्रणिधिरपि**—ध्यानरूपो मोक्षोपायोऽपि, **सासनः भवेत्**—योगाङ्गभूतपद्मााद्यासनवानेव भवितुमर्हति ; (न तु गमन-धावन-शयनाद्यवस्थावान्), **प्रत्यहं च भवेत् प्रणिधिः**—यावदायुषं प्रतिदिनमप्यनुष्ठेयो भवेत् ध्यानाख्य उपायः; न त्वेकस्मिन्नेव दिने, **पापे पुण्ये च**—दुष्कृते सुकृते च जीवसम्बन्धिनि, **नाशादिकम्**—प्रणाशः अश्लेषः इत्येतदुभयम्, **अथ तु**—अनन्तराधिकरणे परम्, **तयोः**—पुण्य-पापयोरुभयोरपि, **आरब्धकार्ये**—फलप्रदानोद्युक्तकर्मवति पुरुषे, **भोग्यता**—भोगेनैव क्षपणीयता ; (अनारब्धकार्ये तु पुरुषे अश्लेष-नाशावेव), **स्वार्हवृत्तेः कार्यत्वम्**—उपासकेन पुरुषेण स्वीयवर्णाश्रमानुगुणाग्निहोत्राद्याचरणस्य नियमेनानुष्ठेयता, **आरब्धशान्तौ**—प्रारब्धानां सर्वेषां कर्मणामवसाने च सति, **मोक्षः**—सर्वबन्धविनिर्मोकपूर्वकपरिपूर्णब्रह्मानुभवरूपो मोक्षः सिध्यति इति, **इह कथितम्**—चतुर्थाद्यचरणे निरूपितमभवत् ॥ ४३ ॥

—o—

## (3) नयसङ्गतिमालिका ॥

इत्थं तुरीयाध्यायस्य पादे प्राथमिके पुनः ।
एकादशानां न्यायानां क्रमात् सङ्गतिसङ्ग्रहः ॥ १८६ ॥

इति चतुर्थस्याऽध्यायस्य प्रथमः पादः ॥ १ ॥

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

## (14) द्वितीयः पादः ॥ २ ॥

### (1) अधिकरणसारावलिः ॥ (श्लो. 1–5)

[द्वितीयतृतीयपादतः एतदवधिकस्य शारीरकस्य उत्तरेण सङ्गतिः]

(475) नित्यत्व-ज्ञत्वपूर्वैर्निपुणमभिहितं जीवतत्त्वं द्वितीये
जागर्यादौ च खेदो जगदटविमहाजाङ्घिकस्याऽथ गीतः ।
विद्यारम्भावसानावधि यदपि परं ध्यातुरर्थ्यं तदुक्तं
प्रारब्धस्यावसाने वपुरिह जहतो गत्युपक्रान्तिमाह ॥ १ ॥

**द्वितीये**—अविरोधनामके द्वितीयेऽध्याये, **नित्यत्व-ज्ञत्वपूर्वैः**—उत्पत्ति-विनाशरहितत्व-ज्ञानधर्मकत्वनैयत्यप्रभृतिभिः जीवासाधारणैः धर्मैः, **जीवतत्त्वम्**—चिदचिदीश्वराख्यतत्त्वत्रयान्तर्गतं चित्तत्त्वम्, **निपुणम्**—सम्यक् (उपासनोपयोगि यावद्भवेत् तावत्), **अभिहितम्**—निरूपितम्, **अथ**—तृतीयेऽध्याये, **जगदटविमहाजाङ्घिकस्य**—संसाराख्ये महारण्ये महत्यां पादयात्रायां प्रवृत्तस्य (अविरतभवारण्यसंचरणोद्यतस्य अस्य जीवात्मनः), **जागर्यादौ खेदश्च**—जाग्रत्-स्वप्न-सुषुप्ति-मूर्च्छाख्यास्ववस्थासु भ्रमतोऽस्य जायमानो दुःखराशिरपि (आयासो वा) **गीतः**—निरूपितः (उपायानुष्ठानप्रवृत्तिदार्ढ्याय), **परम्**—ततः परं प्रक्रान्ते अस्मिन् तुरीयेऽध्याये आद्यचरणे, **ध्यातुः**—मोक्षोपायभूते परमात्मध्याने प्रवर्तमानस्य पुरुषस्य, **विद्यारम्भावसानावधि**—विद्यारम्भं पूर्वावधीकृत्य विद्यानिष्पत्तिरूपमवसानम् उत्तरावधीकृत्य च मध्यभावितया सम्भवि, **अर्थ्यं यदपि तत्**—अपेक्षणीयं विद्यानिष्पत्तये यदस्ति तत् सर्वमपि, **उक्तम्**—निरूपितमभवत्, **इह**—चतुर्थद्वितीये उत्क्रान्तिनामके पादे, **प्रारब्धस्याऽवसाने**—फलप्रदानप्रवृत्तकर्मणां निरवशेषक्षये सम्पन्ने, **वपुः जहतः**—अन्तिमं शरीरं परित्यजतः चेतनस्य, **गत्युपक्रान्तिम् आह**—देहात् उत्क्रम्य परमपदप्रयाणस्योपक्रमं वर्णयति ॥ १ ॥

[अत्र चिन्तितस्य मरणप्रकारस्य प्रकृतोपयोगः]

(476) वर्ण्यो वैराग्यपादे तनुकरणगणक्षोभ ईदृक् तथापि
ब्रह्मज्ञस्याऽपि काले भवति मृतिरिति ज्ञप्तयेऽत्राऽनुबन्धः ।
तस्योत्क्रान्तौ विशेषं कथयितुमुचिता चाऽत्र साधारणोक्तिः
मध्ये विद्याफलानां मरणमपि वदन् तत्प्रियं चिन्त्यमाह ॥ २ ॥

**ईदृक् तनु-करणगणक्षोभः**—मरणपदाभिधेयः शरीरे इन्द्रियग्रामे च सम्पद्यमानः क्षोभः, (अस्वस्थताविशेषः) **वैराग्यपादे**—तृतीयाध्यायाद्यपादे एव, (वैराग्यजननौपयिके), **वर्ण्यः**—यद्यपि निरूपयितुमुचितः ; (न तु परमपुरुषार्थप्राप्तिपरे फलाध्याये) **तथाऽपि**—तथा तत्र निरूपणस्य उक्तदृष्ट्या आवश्यकत्वेऽपि, **अत्र अनुबन्धः**—फलाध्याये तन्निरूपणस्य ग्रथनम्, **ब्रह्मज्ञस्याऽपि**—ब्रह्मविदोऽपि पुरुषस्य, **मृतिः**—देहवियोगरूपं मरणम्, **काले**—समयविशेषे, **भवति**—अवर्जनीयं प्राप्नोत्येव ; (न तु ब्रह्मज्ञस्य कुत्रापि कदापि अमरदेहता), **इति ज्ञप्तये**—एवं ज्ञानजननाय, **तस्य**—ब्रह्मविदः पुरुषस्य, **उत्क्रान्तौ**—देहादुत्क्रमणे, **विशेषम्**—देहिसामान्यापेक्षया वैलक्षण्यम् (मूर्धन्यया नाड्या निष्क्रमणरूपम्), **कथयितुम्**—निरूपयितुम्, **अत्र**—अस्मिन् प्रकरणे, **साधारणोक्तिः**—ब्रह्मज्ञाब्रह्मज्ञयोः सामान्यरूपेण सम्भवतः मरणाख्यस्य अवस्थाविशेषस्य कथनम्, **विद्याफलानां मध्ये**—विद्यामाहात्म्यसाध्यभूतानां सुकृत-दुष्कृताश्लेष-विनाशप्रभृतीनां ब्रह्मज्ञासाधारणानां मध्ये, **मरणमपि वदन्**—मरणाख्यमवस्थाविशेषमपि निरूपयन् सूत्रकारः, **तत्प्रियं चिन्त्यमाह**—(परमपदप्राप्तये निरुपाधिकस्वरूपावाप्त्यौपयिकतया) मरणमपि प्रियतया चिन्तनीयं ब्रह्मज्ञेनेत्याह ॥ २ ॥

[एतद्विचारनैरर्थक्यशङ्कानिरासः]

(477) वृत्तिर्वागादिकं वा क्वचन भजतु सम्पत्तिमन्यक्रमां वा
श्रुत्यैवोक्तक्रमां वा न हि फलमिह तच्चिन्तनस्येति चेन्न ।
सम्पत्त्याम्नानमीदृक्क्रमनियतियुतं युज्यते न ह्यपार्थं
तस्मात्तच्चिन्तनं काप्युपकुरुत इति स्थाप्यते तद्यथार्हम् ॥ ३ ॥

**वृत्तिः**—वागादीन्द्रियव्यापृतिरूपावागादेवृत्तिः, **वागादिकं वा**—वृत्तिमत् वागादीन्द्रियमेव वा, **क्वचन**—मन आदौ यत्र क्वचित्, **श्रुत्यैव उक्तक्रमां वा**—श्रुतिवाक्योपदिष्टरीतियुक्तां वा, **अन्यक्रमां वा**—रीत्यन्तरयुक्तां वा, **सम्पत्तिम्**—सम्पत्तिपदवाच्यां संश्लिष्टताम्, **भजतु**—प्राप्नोतु, **इह**—शारीरकीयफलाध्याये, **तच्चिन्तनस्य**—तद्विषयकस्य विचारजातस्य, **न हि फलम्**—न खलु प्रयोजनं वर्तते, **इति चेत्**—इति चोद्यप्रवर्तनम्, **न**—नोचितम्, **ईदृक्क्रमनियतियुतम्**—उपदिष्टक्रमविशेषनियमयुक्तम्, **सम्पत्त्याम्नानम्**—श्रुतिदृष्टं सम्पत्तिवर्णनम्, **अपार्थं न हि युज्यते**—निरर्थकं न खलु भवितुमर्हति, ( नैव श्रुतिर्निरर्थकं किञ्चिदुपदिशति ) **तस्मात्**—श्रुत्युपदिष्टस्य सर्वस्य सार्थकत्वाव्यभिचारात्, **तच्चिन्तनम्**—वागादिवृत्तेः वागादेर्वा ? सम्पत्तिः कीदृशक्रमवती ? सा

लयरूपा वा संयोगमात्ररूपा वा ? इत्यादेः अर्थस्य शारीरकफलाध्याये चिन्तनम्, **क्वापि**—विद्यास्वरूपसिद्धिप्रभृतौ यस्मिन् कस्मिंश्चन कार्ये, **उपकुरुते**—साधकं सत् अङ्गभावं भजते, **इति**—इमं हेतुमाश्रित्य, **तत्**—श्रुत्युक्तक्रमयुतमेतत्सर्वम्, **यथार्हम्**—यथायोग्यम्, **स्थाप्यते**—आवश्यकेन न्यायावलम्बनेन समर्थ्यते ।। ३ ।।

[ उत्क्रान्तिचिन्तनादेः सार्थक्यम् ]

(478) जीवं ये नित्यमुक्तं निजगदुरथ वा जीवतो मुक्तिमाहु-
स्तत्तज्जल्पोपजापप्रचलितनिगमग्रामसङ्क्षोभशान्त्यै ।
उक्त्वा प्रारब्धकार्यं विदुषि च फलवत् प्रायणान्तं च तुल्यं
नाडीभेदप्रवेशप्रभृति समधिकं वक्ष्यति ब्रह्मगत्यै ॥ ४ ॥

**ये**—अद्वैतिनः साङ्ख्या वा, **जीवम्**—जीवात्मानम्, **नित्यमुक्तं निजगदुः**—स्वाभाविकसार्वकालिकमोक्षवन्तं वर्णयन्ति, **अथ**—तथैव, **जीवतो मुक्तिं वा आहुः**—शरीरे अवस्थितस्यैव प्रकृतिबन्धविनिर्मोकरूपं मोक्षं तत्त्वज्ञाननिबन्धनं वा वदन्ति, **तत्तज्जल्पो-...शान्त्यै**—तेषाम् अद्वैति-कपिलाख्यानां वार्तालापरूपाः ये तत्त्वाध्यवसायप्रच्यावका व्यापाराः, तैः अप्रतिष्ठितार्थकतामापादितो यः श्रौतः शब्दराशिः, तद्गतस्य विरोधाभासरूपस्य क्षोभस्य निवारणाय, **विदुषि च**—तत्त्वज्ञेऽपि जीवे, **प्रारब्धकार्यम्**—प्रारब्धाख्यसुकृत-दुष्कृतरूपं फलदानप्रवृत्तं कर्म, **फलवत्**—सप्रयोजनमेव भवति, (सुख-दुःखादिभोगप्रदमेव भवति; न निष्फलम्) **प्रायणान्तं च**—देहादपक्रमणपर्यन्तमपि सर्वम्, **तुल्यम्**—ब्रह्मज्ञ-तदितरयोरुभयोरपि समानम् इति, **उक्त्वा**—निरूप्य, **नाडीभेदप्रवेशप्रभृति**—मूर्धन्याख्यायां ब्रह्मनाड्यां प्रवेशमारभ्य च, **ब्रह्मगत्यै**—ब्रह्मप्राप्त्युपयोगि, **समधिकम्**—ब्रह्मविदः इतरापेक्षया विलक्षणम् अधिकं च, **वक्ष्यति**—निरूपयिष्यति अस्मिन्नध्याये ॥ ४ ॥

(479) आयुस्सीमामनिष्टैरिह बहुभिरसावात्मनः प्रेक्ष्य योगी
यत् कुर्याद् यच्च पुत्रप्रभृतिषु न हि तत् तर्क्यमत्रेत्यनुक्तिः ।
गीतादिष्वन्त्यकाले यदगणि तदपि प्राच्ययोगप्रकारे
तत्तत्प्राप्यानुरूपे नियतमिति यथापूर्वधीरत्र भाव्या ।। ५ ।।

**असौ योगी**—ब्रह्मोपासनरूपयोगपरः पुरुषः, **आत्मनः**—स्वस्य, **आयुस्सीमाम्**—आयुषः अन्त्यावधिरूपं कालम्, (मरणम्) **बहुभिः**—नानाप्रकारैः, **अनिष्टैः**—अनिष्ट-

**सूचकैः** शाकुन-ज्यौतिषादिभिः गमकैः , **प्रेक्ष्य**—निष्कृष्टमवबुध्य , **यच्च कुर्यात्**—आयुरवसाने आत्मनः यत् कर्तव्यमापतेत् , (शास्त्रतः सम्प्रदायतो वा) , **पुत्रप्रभृतिषु च**—पुत्र-कलत्र-मित्रादिषु वा, **यच्च**—वक्तव्य-कारयितव्यादि ऐहिकपारत्रिकादिसम्बन्धि च यत् संभाव्येत , **तत्**—तदपि वा , **अत्र**—शारीरके , **न तर्क्यमिति**—न चिन्तनीयमिति हेतोः , **अनुक्तिः**—तस्य तस्यार्थविशेषस्य अत्रानिरूपणम्, **गीतादिषु**—भगवद्गीताप्रभृतिषु, **अन्त्यकाले यदगणि**—आयुरवसाने कार्यतया यच्च कथितम् , **तदपि**—तथाविधमप्यर्थजातम् , **तत्तत्प्राप्यानुरूपे**—योगारम्भप्रवृत्तेन प्राप्यतया यत् निश्चित्य योग आरब्धः तत्तदनुगुणे, **प्राच्ययोगप्रकारे**—प्राचीनपरम्परागतः प्राप्ते योगानुष्ठानोपदेशपरे ग्रन्थे, साम्प्रदायिके वा व्यवहारे, **नियतमिति**—इदमित्थमित्यवधार्य उपदिष्टमिति हेतोः, **अत्र यथापूर्वधीः**—विचारपूर्वकनिर्णयार्थविचारणमेव अस्मिन् प्रकरणेऽपि शारीरके कार्यमिति निर्णीतिः, **भाव्या**—आलोचनतः सम्पाद्या ॥ ५ ॥

इति पादारम्भोपोद्घातः ॥

—o—

## (135) वागधिकरणम् ॥ ४–२–१ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(193) वाचो मनः कारणकत्वहानेर्वृत्तेर्लयश्चेतसि नैव वाचः ।
तन्नेव तस्याश्च समानभावाद् वाक्छब्दतः सङ्गतिमात्रतश्च ॥ १ ॥

**वाचः**—वागाख्यस्येन्द्रियस्य, **मनःकारणकत्वहानेः**—मनइन्द्रियप्रकृतिकत्वराहित्यात् , **वाचः चेतसि लयः**—'अस्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते' इति श्रुत्युक्तः मनसि वाचो लयः प्रयाणकालिकः, **वृत्तेः**—वाग्वृत्तेः मनसि लयरूप एव, **न वाचः**—न तु वाक्स्वरूपस्य मनसि लयरूपः, (इति शङ्कने) **नैतत्**—इदं शङ्कनं नैव साधु, **तस्याश्च**—वाग्वृत्तेरपि, **समानभावात्**—वाच इव मनः प्रकृतिकत्वाभावस्य समानत्वात् , (वृत्तिलयपक्षेऽपि दोषस्य अविशेषात् ), **वाक्छब्दतः**—' वाङ्मनसि ' इति वाक्स्वरूपलयवाचकशब्दस्यैव श्रुतिस्थत्वात् , (वाग्वृत्तिवाचकपदाभावात् ), **सङ्गतिमात्रतश्च**—वाचो मनसि लयस्य संयोगमात्ररूपतताया एवोक्तत्वात् , (मनस्त्वापत्तेः अनुक्तत्वादिति) ॥ १ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(480) कर्मज्ञानाक्षवर्गो मनसि न विलयं यात्यतत्सम्भवत्वात्
तद्वृत्तेस्तादधीन्यात् तदुपरतिमिह प्राह सम्पत्तिशब्दः ।
इत्येतन्नोपपन्नं तदुभयविलये चोद्यनिस्तारसाम्यात्
सम्पत्तिः श्लेषमात्रं करणविषयवाक्छब्दमुख्यत्वसिद्ध्यै ॥ ६ ॥

**कर्मज्ञानाक्षवर्गः**—कर्मेन्द्रियाणां ज्ञानेन्द्रियाणां च स्तोमः, **मनसि न विलयं याति**—मनोरूपे इन्द्रिये विलयरूपां सम्पत्तिं नैव प्राप्तुमर्हति ; **अतत्सम्भवत्वात्**—(कर्म-ज्ञानेन्द्रिय-वर्गस्य) मन उपादानकत्वाभावात्, (विलयरूपा सम्पत्तिः उपादानकारणे हि ! घटते) **तद्वृत्तेः**—वागादीन्द्रियव्यापाररूपायाः इन्द्रियवृत्तेः, **तादधीन्यात्**—मनोधीनत्वात् , **तदुपरतिम्**—वागादिव्यापारस्योपरमम् (निवृत्तिम् ), **इह**—'अस्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते' इनि उत्क्रान्तिकालिककरणग्रामसम्पत्तिपरायां श्रुतौ, **सम्पत्तिशब्दः**—सम्पन्नता बोधनपरः 'सम्पद्यते' इत्ययं शब्दः, **प्राह**—बोधयति, (न तु वागादिस्वरूपस्य मनसि सम्पत्तिम्) **इत्येतत्**—एवमाकारं शङ्कनम् , **न उपपन्नम्**—न सङ्गतं भवति, **तदुभयविलये**—वागादेः तद्वृत्तेर्वा लयार्थकत्ववर्णनेऽपि, **चोद्यस्य**—(मनःप्रकृतिकत्वायोगात् लयायोगः इति), आक्षेपस्य, मनोधीनत्वात् तद्योगः इति) निस्तारस्य-परिहारस्य च समानयोगक्षेमत्वात् , (आक्षेपविधानस्य परिहारविधानस्य च उभयत्र समत्वात् ) **करणविषय ....सिद्ध्यै**—वाग्रूपेन्द्रिय-वाचकस्य श्रुतिस्थ 'वाक्' शब्दस्य लक्षणां विना मुख्यार्थबोधकत्वलाभाय, ('वाक्' शब्दस्य वाग्वृत्तिबोधकत्वं हि न शक्त्या सम्भवति । अतो लक्षणास्वीकारे मुख्यत्वहानिः) **सम्पत्तिः**—'सम्पद्यते' इत्यत्र धात्वर्थभूता सम्पत्तिः, **श्लेषमात्रम्**—संयोगरूपसम्बन्धमात्रम् ; न तु लयः इति ॥ ५ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

द्वितीये उत्क्रान्तिपादे उत्क्रान्तिप्रकारश्चिन्त्यते । तत्र, वागधिकरणे—'वाङ्मनसि सम्पद्यते' इत्यत्र, 'वाग्वृत्तेः मनसि सम्पत्तिः'—इत्याशङ्क्य,

वाक्छब्दस्य वाग्वृत्तिवाचित्वाभावात् , इन्द्रियस्यैव मनसि सम्पत्तिः—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

अत्र सप्तचतुस्सङ्ख्यैर्न्यायैः स्यात् पेटिकाद्वयम् ।
क्रमेण सामान्यगति-विशेषगतिगोचरम् ॥ १८७ ॥
प्रारब्धान्तेऽप्यनियतोत्क्रान्तौ फलविलम्बनम् ।
इत्याक्षेपं प्रतिक्षेप्तुं वागादिन्यायचिन्तना ॥ १८८ ॥

इति वागधिकरणम् ॥ १ ॥

—o—

## (136) मनोऽधिकरणम् ॥ ४–२–२ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(193) प्राणोऽम्बु तेजः प्रकृतित्वयोगादापोमयः प्राण इति श्रुतेश्च ।
न स्यादहङ्कारकृतं तु चित्तं प्राणो नभः कार्यमतः स एव ॥ २ ॥

**प्राणः**—'मनः प्राणे' इति श्रुतिवाक्ये श्रुतः प्राणशब्दार्थः, **अम्बु**—आप एव; न प्राणः, **तेजःप्रकृतित्वयोगात्**—'प्राणस्तेजसि' इत्येतदनुगुणं 'अग्नेरापः' इत्येतदनुगुणं च तेजःप्रकृतिकत्वस्य अप्सु सङ्गतत्वात्, **'आपोमयः प्राण' इति श्रुतेश्च**—प्राणस्य अम्मयता-बोधकश्रुत्यानुगुण्यादपि, (इति शङ्कने) **न स्यात्**—अपां प्राण' शब्दबोध्यत्वं नैव सुष्ठु भवेत्, **चित्तम्**—मनस्तत्वम्, **अहङ्कारकृतं तु**—अहङ्कारतत्त्वप्रकृतिकमेव, **प्राणः**—प्राणशब्दार्थस्तु वायुः, **नभःकार्यम्**—'आकाशाद्वायुः' इति श्रुत्या आकाशप्रकृतिक एव, **अतः**—उक्ताद्धेतोः, **स एव**—'मनः प्राणे' इत्युक्तः प्राणः, प्राण एव, नैव आपः। मनसश्च प्राणे सम्पत्तिः संयोगरूपैव; न लयरूपेति ॥ २ ॥

### (2) अधिकरणसारावलिः ॥

(481) अन्नस्योक्त विकारो मन इति मनसः प्राणसम्पत्तिवाक्ये
प्राणस्याम्भोमयत्वात् प्रकृति-विकृतितासम्भवात् तल्लयोऽस्तु ।
मैवं तत्तन्मयत्वश्रुतिरभिमनुते तत्तदाप्यायनं तैः
प्राग्वत् संश्लेषमात्रं तत इह हि मनः प्राण इत्यामनन्ति ॥ ७ ॥

**अन्नस्य विकारो मन इति उक्तम्**—'अन्नमयं हि सोम्य मनः' इति वाक्ये अन्नशब्दात् विकारार्थकमयट्प्रत्ययश्रुते मनसः अन्नविकारत्वं कथितम्, **मनसः प्राणसम्पत्तिवाक्ये**—'मनः प्राणे' इत्यस्मिन् मन इन्द्रियस्य (जीवोत्क्रान्तिवेलायां) प्राणे सम्पद्यमानत्वप्रतिपादके श्रुतिवाक्ये, (प्रतिपादिता सम्पत्तिः), **प्राणस्य अम्भोमयत्वात् प्रकृति विकृतितासम्भवात्**—'आपोमयः प्राणः' इति वचनतः प्राणस्य अब्विकारत्वकृतोपादानोपादेयभावस्य अबाधितत्वात्, ('पृथिव्यप्सु प्रलीयते' इति क्रमस्यैवानुसृतत्वलाभात्) **तल्लयोऽस्तु**—स्वप्रकृतिभूते (पृथिवीमयस्वोपादाने) प्राणे (अम्मये) विलयात्मिकैव भवतु; (न तु पूर्ववत् संयोगमात्रात्मिका) इति शङ्कने, **मैवम्**—एवं प्रकारेण शङ्कनं नोचितम्, **तत्तन्मयत्वश्रुतिः**—मनसः अन्नमयत्वश्रुतिः, प्राणस्य अम्मयत्वश्रुतिः, वाचः तेजोमयत्वश्रुतिश्च, **तैः**—पृथिवी-जल-तेजोभिः, **तत्तदाप्यायनम्**—मनः-प्राण-वाचामाप्यायनम् (स्वस्वकार्यकरणक्षमत्वरूपसामर्थ्यस्य व्यञ्जनम्), **अभिमनुते**—अभिप्रैति, तात्पर्यतो बोधयति; (न तु प्रकृति-विकारभावम्), **ततः**—तस्माद्धेतोः, **इह**—प्राणे, **प्राग्वत्**—वाचः मनसीव. **संश्लेषमात्रं हि**—संयुक्ततामात्ररूपं संश्लेषमेव खलु, **मनः प्राण इति**—'मनः प्राणे' इत्यस्मिन् वाक्ये, **आमनन्ति**—श्रुतिमतं वर्णयन्ति न्यायचिन्तकाः ॥ ७ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

मनोऽधिकरणे—'मनः प्राणे' इत्यादिवाक्येन, मनसः प्राणे लयः प्रतिपाद्यते—इत्याशङ्क्य,

प्राणस्य मनःप्रकृतित्वाभावात्, प्राणे संयोगमात्रम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

ततो मनोऽधिकरणं प्रत्युदाहरणागतम् ।
तत् सर्वं फलपूर्वत्वाद्योगिचिन्त्यं विचिन्त्यते ॥ १८९ ॥

इति मनोऽधिकरणम् ॥ २ ॥

—o—

## (137) अध्यक्षाधिकरणम् ॥ ४–२–३ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(195) प्राणो भवेत् तेजसि योगभागी तथैव शब्दश्रवणादितीदम् ।
न स्यात्तु जीवोपगमादिशब्दात् प्राणस्य तेजःश्रवणं तु पश्चात् ॥ ३ ॥

**प्राणः**—प्राणाख्यो वायुः, **तेजसि योगभागी भवेत्**—तेजस्येव संश्लिष्टो भवितुमर्हति ; न अन्यत्र, **तथैव शब्दश्रवणात्**—'प्राणस्तेजसि' इत्येव श्रौतशब्दश्रवणस्य स्पष्टत्वात्, **इतीदं न स्यात् तु**—एवं शङ्कनं नैव सम्भवितुमर्हति, **प्राणस्य जीवोपगमादिशब्दात्**—प्राणस्य जीवोपगमं प्रतिपादयतः 'इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति, इति श्रौतशब्दस्य सत्वात्, **तेजः श्रवणं तु**—तेजसि प्राणसम्पत्तिपरं 'प्राणस्तेजसि' इति वाक्यं तु, **पश्चात्**—प्राणस्य जीवोपगमानन्तरकालिकतेजःसंश्लेषप्रतिपादनपरम् ॥ ३ ॥

—o—

### (2) अधिकरणसारावलिः ॥

(482) प्राणःसैकादशाक्षस्तदनु निविशते तेजसीत्थं श्रुतत्वा-
न्मध्येऽन्यप्राप्तिकॢप्तौ श्रुतिहतिरिति चेन्नाऽत्मयोगस्य चोक्तेः ।
प्राणस्य स्वाप्तजीवे मिलति निजतनोरुद्धृतैर्भूतसूक्ष्मै-
स्तेजःप्राप्तिश्च गङ्गानिपतितयमुनासागरप्राप्तिवत् स्यात् ॥ ८ ॥

**सैकादशाक्षः**—कर्मेन्द्रियपञ्चकेन ज्ञानेन्द्रियपञ्चकेन उभयानुग्राहकेन मनसा चेति एकादशसंख्यैरिन्द्रियैर्युतः, **प्राणः**—प्राणाख्यो वायुः, **तदनु**—सर्वेन्द्रिययुक्तस्य मनसः स्वस्मिन् सम्पत्त्यनन्तरम्, **तेजसि निविशते**—तेजस्तत्त्वे सम्पन्नो भवति, **इत्थं श्रुतत्वात्**—एवमेव 'प्राणस्तेजसि' इति श्रुतितोऽवगमात्, **मध्ये**—तेजः प्राप्तेः पूर्वमेव, **अन्यप्राप्तिकॢप्तौ**—जीवे सम्पत्तेः कल्पने क्रियमाणे, **श्रुतिहतिः**—'प्राणस्तेजसि' इति स्फुटार्थकश्रुतिवाक्यस्वारस्यभङ्गो भविता, **इति चेत् न**—एवं शङ्कनं नोचितं भवेत्, **आत्मयोगस्य चोक्तेः**—(तेजसि योगस्येव) जीवात्मनि योगस्यापि 'आत्मानम्....प्राणा अभिसमायन्ति' इति स्फुटं श्रुतावुक्तेः, **प्राणस्य तेजःप्राप्तिश्च**—'प्राणस्तेजसि' इति श्रुतिप्रतिपन्ना प्राणस्य तेजसि सम्पत्तिः परम्, **स्वाप्तजीवे**—स्वेन-प्राणेन सम्पन्ने जीवात्मनि, **निजतनोरुद्धृतैः भूतसूक्ष्मैः**—स्वकीयात् स्थूलदेहात् ऊर्ध्वं पृथक् हृतैः पञ्चभूतसूक्ष्मैः साकम्, **मिलति**—तेजसि संश्लेषमापन्ने सति,

स्यात्—सम्भविनी, गङ्गानिपतितयमुनासागरप्राप्तिवत्—गङ्गानद्यां निपत्य, तया संश्लिष्टायाः यमुनानद्याः, गङ्गायाः समुद्रसङ्गमे सति तया साकं समुद्रे सङ्गमेन 'समुद्रसङ्गता यमुना' इति पारम्परिकप्राप्तिरिव, पारम्परिकप्राप्त्यायत्ता; न साक्षात्प्राप्त्यायत्ता ॥ ८ ॥

—o—

(3) अधिकरणार्थसङ्ग्रहः ॥

अध्यक्षाधिकरणे—'प्राणस्तेजसी'ति श्रवणात्, प्राणस्य तेजसि सम्पत्तिः—इत्याशङ्कय, 'आत्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति जीवोपगमश्रवणात्, जीवेन सह संयुज्य तेन सह तेजस्सम्पत्तावपि, 'प्राणस्तेजसि' इति निर्देशोपपत्तेश्च, 'प्राणो जीवेन सम्पद्यते'—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

उक्तं श्रौतं क्रमं ज्ञात्वा पूर्वपक्षस्य सम्भवात् ।
आपवादिकसङ्गत्या स्यादध्यक्षनयोदयः ॥ १९० ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

—o—

(138) भूताधिकरणम् ॥ ४–२–४ ॥

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

(196) तेजस्तु तत्तेज इति श्रुतत्वात् तन्मात्रमेवाऽन्यवियुक्तरूपम् ।
न स्यात्तु भूतान्तरसम्प्रविष्टं त्रिवृत्कृतत्वश्रवणादशक्तेः ॥ ४ ॥

**तेजस्तु**—'प्राणस्तेजसि' इति सजीवप्राणसम्पत्तेराश्रयभूतं तेजः परम्, **अन्यवियुक्तरूपम्**—भूतान्तरासंसृष्टस्वरूपम्, **तन्मात्रमेव**—तेजस्तन्मात्रमेव (रूपतन्मात्रमेव), **तत्तेज इति श्रुतत्वात्**—'**तत्तेज ऐक्षत**' इति **श्रुतौ**—स्वोत्तरसृष्ट्यारम्भकतया केवलस्य तेजस एव श्रुतत्वेन तत्रैव प्राणसम्पत्तेर्युक्तत्वात्, (इति शङ्कने) **न स्यात्तु**—केवलं तेजो नैव भवितुमर्हति, **भूतान्तरसम्प्रविष्टम्**—किन्तु इतरैर्भूतैः संसृष्टं तेज एव सजीवप्राणसम्पत्तेः अधिष्ठानतां

भजते, **त्रिवृत्कृतत्वश्रवणात्**—'तासां त्रिवृतत्रिवृतमेकैकां करवाणि' इति श्रुतेः, ('पृथग्भूतास्ततस्ते संहितिं विना । नाऽशक्नुवन् प्रजाः स्रष्टुम् ' इति स्मृतेश्च), **अशक्तेः**—असंहतानां भूतानामेकैकशः कार्याक्षमत्वेन (सर्वभूतमयतया संचरतो जीवस्य सप्राणस्य, केवले तेजसि लयायोगात् ) [अत्र 'तत्तेज इति स्थाने ' स्यात्तेजसीति'स्थिते युक्तमिति भाति ।'

—o—

## (2) अधिकरणसारावलिः ॥

(483) तेजस्येवाऽस्तु युक्तः श्रिततनुभृदनस्तेजसीत्याद्यबाधा-
च्छत्रिन्यायोऽपि नास्मिन्निति यदि न तथाऽन्यत्र भूतान्तरोक्तेः ।
विश्वारम्भाय देवस्त्रिवृतमकृत च प्रागिमं भूतवर्गं
प्राचुर्यात् तत्तदेकव्यवहृतिरिति चाऽसूत्रयत् पूर्वमेव ॥ ९ ॥

**श्रिततनुभृत्**—जीवं सम्पन्नः, **अनः**—प्राणः, **तेजस्येव**—अन्यासंसृष्टे केवले तेजस्येव, **युक्तः अस्तु**—संयुक्तो भवतीति सम्पत्तिश्रुतितात्पर्यविषयो भवतु, **तेजसीत्याद्यबाधात्**—(तथा सत्येव) ' प्राणस्तेजसि ' 'प्राणस्तेजसा युक्तः सहात्मना' इत्यादिश्रुतीनाम् अबाधेन यथाश्रुतान्वयलाभात् , (ताः श्रुतयो हि केवलमेव तेजःप्राणसम्पत्तियोग्यमभिदधति ; न तु भूतान्तरेण संसृष्टम्) **अस्मिन्**—तेजःशब्दनिवेशनविषये, **छत्रिन्यायोऽपि**—छत्र्यच्छत्रिसार्थे गच्छति सति ' छत्रिणो यान्ति ' इति प्रयोग इव तेजस्तदितरघटितसमुदाये तेजः शब्दप्रयोगौचित्यचिन्तनमपि, **न**—न सङ्गतं भवति, (मुख्ये सम्भवति अमुख्यकल्पनाया अन्याय्यत्वात् ) **इति यदि**—एवं शङ्क्यते चेत् , **न तथा**—स प्रकारः न साधुः, **अन्यत्र**—बृहदारण्यकश्रुतौ, **भूतान्तरोक्तेः**—' पृथिवीमय आपोमयस्तेजोमयः ' इत्यादिना, जीवे सर्वभूतमयताया एव स्फुटत्वात् , (तेजोमात्रे सम्पत्तिवर्णने तद्विरोधापातात् , छत्रिन्यायानुगुण्यस्यैवोचित्यादिति) **देवः**—जगन्निर्माणोद्युक्तो भगवान् , **विश्वारम्भाय**—जगन्निर्माणाय, **इमं भूतवर्गम्**—आकाश-वायु-तेजो-जल-पृथिव्याख्यं भूतपञ्चकम् , **त्रिवृतम् अकृत च**—त्रिवृत्कृतमकरोत् , (सृष्टिकार्यानुगुणं मिथोमिश्रितमकरोत ) **तत्तदेकव्यवहृतिः**—'पृथिवी आपः तेजः' इत्येवमादिना पृथिव्याद्येकैकभूतव्यवहारः परम् , **प्राचुर्यात्**—तथा व्यवह्रियमाणेषु तत्तद्भूतांशस्य प्रमाणाधिक्यकृतः, **इति च**—इममाशयं च, **पूर्वमेव**—तृतीय एवाऽध्याये, **असूत्रयत्**—' त्र्यात्मकत्वात्तु भूयस्त्वात् ' इति सूत्रेण ज्ञापितवान् सूत्रकारो द्वैपायनः ॥ ९ ॥

—o—

### (3) अधिकरणार्थसंग्रहः ॥

भूताधिकरणे—'प्राणस्तेजसी'ति श्रवणात् जीवेन संयुक्तस्य प्राणस्य तेजोमात्रेण सम्पत्तिः—इत्याशङ्क्य,

'पृथिवीमयः आपोमयः' इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुतेः, भूतान्तर-संसृष्टे तेजसि सम्पत्तिः—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

यथाश्रुतार्थमादाय पूर्वपक्षसमुद्भवात् ।
भूताधिकरणे चाऽपि प्रोक्ताऽऽशङ्का व्यपोदिता ॥ १९१ ॥

इति भूताधिकरणम् ॥ ४ ॥

—o—

## (128) आसृत्युपक्रमाधिकरणम् ॥ ४–२–५ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(197) एषा त्वविद्यस्य गतिर्भवित्री विद्यावतोऽत्रैव परातिशब्दात्
नैतद्द्वयं स्यादुभयोः समाना गतिः शरीरादितरोऽर्थवादः ॥ ५ ॥

**एषा गतिः**—उत्क्रान्त्यादिका गतिः, **अविद्यस्य तु भवित्री**—विद्यारहितस्यैव पुरुषस्य प्राप्यमाणा ; न विदुषो ब्रह्मज्ञस्य, **विद्यावतः**—ब्रह्मविदः पुरुषस्य, **अत्रैव**—देहादपक्रमणादि-रहितावस्थायामेव (इहैव), **पराप्तिशब्दात्**—परब्रह्मावाप्तिबोधकात्, 'अत्र ब्रह्म समश्नुते' इति श्रुतिवाक्यात् ज्ञापकात् (विदुषः उत्क्रान्तिप्रसङ्गाभावात्—इति शङ्कने) **नैतत् द्वयं स्यात्**—विदुषः उत्क्रान्त्यादिगतेरभावः अत्रैव ब्रह्मावाप्तिश्चेत्युभयं नैव भवितुमर्हम्, **उभयोः**—ब्रह्म-ज्ञतदितरयोः, **शरीरात् गतिः**—देहादुत्क्रान्तिः. **समाना**—अविलक्षणा (देहादुत्क्रमण-मित्येतदुभयोर्वर्तत एव), **इतरः**—'अत्र ब्रह्म समश्नुते' इति श्रुत्युक्तः **इहैव** ब्रह्मावाप्तिव्यवहारः-**अर्थवादः**—उपासनवेलागतस्य ब्रह्मानुभवस्य सांसारिकविषयास्पर्शानिबन्धनमुक्तिसादृश्यप्रशंसां-परः ; न तु उत्क्रान्ति-अर्चिरादिगत्योरभावपरः ॥ ५ ॥

—o—

(484) अत्रैव ब्रह्म विन्दत्यमृत इह भवत्यागमाद् ब्रह्मनिष्ठो
नोत्क्रान्तिस्तस्य युक्तेत्यसदुपनिषदो ह्यस्य गत्याद्युशन्ति ।
नाऽन्यप्राप्त्यर्थमेतत् सगुणसमधिके कुत्रचिन्मानहाने-
स्तस्मादत्राऽमृतत्वप्रभृतिवचनतस्तादृशी तद्दशोक्ता ॥ १० ॥

**ब्रह्मनिष्ठः**—साक्षात्कृतपरतत्त्वः विद्वान्, **अत्रैव**—अस्मिन्नेव शरीरे, **ब्रह्म विन्दति**—ब्रह्म प्राप्नोति, **इह अमृतो भवति**—अस्मिन्देह एव प्राप्तमोक्षो भवति, **आगमात्**—'अत्र ब्रह्म समश्नुते' 'विद्वानमृत इह भवति' इति श्रुतेः, **तस्य**—तादृशस्य विदुषः, **उत्क्रान्तिः**—देहादुत्क्रमणम् इत्ययमर्थः, **न युक्ता**—न प्रामाणिकी, **इत्यसत्**—एवमाशङ्कनम् असाधु, **हि**—यतः, **अस्य गत्यादि**—ब्रह्मविदोऽप्यस्य गति-तदर्थोत्क्रान्त्यादिकं, विरजागमनादिकं च **उपनिषदः**—'तयोर्ध्वमायन् अमृतत्वमेति', 'स आगच्छति विरजां नदीम्' इत्यादयो वेदान्ताः, **उशन्ति**—आमनन्ति, **एतत् अन्यप्राप्त्यर्थं न**—इदमौपनिषदं गत्युत्क्रान्त्यादिवचनम्, अब्रह्मनिष्ठस्य मुख्येतरसगुणब्रह्मप्राप्तितात्पर्यकमेव; न निर्गुणब्रह्मावाप्तितात्पर्यकम्—इति तु न साधु, **सगुणसमधिके कुत्रचित्**—सगुणादतिरिक्ते तस्मादतिशयिते च प्राप्येऽर्थे कस्मिंश्चन, **मानहानेः**—प्रामाणस्यैवाऽनुपलम्भात्, (प्रमाणं विनापि यत्किञ्चिदर्थाभ्युपगमस्य उच्छृङ्खलत्वापादकतया उन्मत्तप्रलापसाम्यात्) **तस्मात्**—उक्ताद्धेतोः, **अत्राऽमृतत्वप्रभृतिवचनतः**—'अमृत इह भवति, अत्र ब्रह्म समश्नुते' इत्यादिभिर्वाक्यैः, **तादृशी**—मुक्तदशासदृशी, **तद्दशा**—उपासननिष्पत्त्यनन्तरकालिकी ब्रह्मविदो दशा, **उक्ता**—स्फुटीकृता ॥ १० ॥

(485) निश्शेषं भोगहेतौ गलति परविदः कर्मणि प्रायणोऽथो
गत्यर्थं सूक्ष्मदेहानुगतिरणुतया निश्चितस्याऽफला स्यात् ।
मार्गे संवादवादस्तदुचितवपुषा त्वस्त्विवतीवानुयोगे
कृत्स्नाविद्यानिवृत्तिः परपदगमनापेक्षिणीत्यादि वाच्यम् ॥ ११ ॥

**परविदः**—ब्रह्मवेदिनः, **प्रायणे**—देहान्ते **भोगहेतौ कर्मणि**—भोगप्रदे पुण्यपापाख्ये कर्मणि, **निश्शेषं गलति**—निरवशेषतया विनष्टे सति, **अथो**—देहपातानन्तरम्, **गत्यर्थम्**—अर्चिरादिगतिसिद्ध्ये, **अणुतया निश्चितस्य**—सूक्ष्मत्वेन अणुपरिमाणवत्तया सिद्धस्य, **सूक्ष्मदेहानुगतिः**—सूक्ष्मस्य शरीरस्यानुवृत्तिः, **अफला स्यात्**—व्यर्था भवेत्, (देशाद्देशान्तर प्राप्तिरूपायाः गतेः अणुरूपे वस्तुन्यबाधात्, विभौ खलु तद्बाधः—इति) **संवादवादः**—

गमनवेलायां मध्ये चन्द्रमसा सह सम्भाषणव्यवहारस्तु श्रुतिदृष्टः, **मार्गे तदुचितवपुषा तु**—अर्चिरादिमार्गे एव उत्पन्नेन संवादानुगुणेन तात्कालिकेन देहेनैव, **अस्तु**—सङ्गतो भवतु, **इतीवाऽनुयोगे**—एवंरूपे प्रश्ने प्रवृत्ते, (तदुत्तरतया) **कृत्स्नाविद्यानिवृत्तिः**—सकलाया अप्यविद्यायाः निरवशेषनिवृत्तिः, **परपदगमनापेक्षिणी**—ब्रह्मपदप्राप्तिसापेक्षा—(भगवत्प्राप्तिपर्यन्तकालकाङ्क्षिणी, **इत्यादि वाच्यम्**—इत्येवमादिकं (प्राप्तस्य प्रश्नस्य समाधानतया) वक्तव्यं भवति ॥ ११ ॥

(486) कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
लिङ्गाख्यं भस्त्रिकान्तः परुवकवदवस्थायि साङ्ख्यैः प्रगीतं
सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्बीजमत्रेष्यते तत् ॥ १२ ॥

**कल्पादौ**—सर्गाद्यकाले, **भूतसूक्ष्मप्रभृतिभिः उदितम्**—पञ्चभूतानां सूक्ष्मांशैः कर्मज्ञानेन्द्रियैः प्राण-मनो बुद्धिभिश्चोत्पन्नम्, **कल्पान्तनाश्यम्**—सर्गावसाने विनश्यत्, **प्राणिभेदे प्रत्येकं नियतम्**—जीवजातविशेषे प्रतिव्यक्ति व्यवस्थितविविक्तस्वरूपम्, **अनियतस्थूलदेहानुयायि**—जन्मभेदेन अव्यवस्थितविविधाकारतया प्राप्नुवत्सु अनेकेष्वपि स्थूलेषु देहेषु एकतया अनुवर्तमानम्, **भस्त्रिकान्तः परुवकवत् अवस्थायि**—चीलकगर्भप्रविष्टपुत्तलिकासादृश्येन निगूढावस्थानशीलम्, **लिङ्गाख्यं वर्ष्म**—लिङ्गपदाभिधेयं सूक्ष्मं शरीरमिति, **साङ्ख्यैः प्रगीतम्**—कापिलैः साङ्ख्यैः आलोच्य वर्णितम्, **अत्र**—वेदान्तिनां मते तु, **तत्**—सूक्ष्मं शरीरम्, **पूर्वमूर्तेः सूक्ष्मांशः**—अतीतस्य प्राक्तनदेहस्य सारतमः स्वल्पो भागः, **उपरितनतनोः**—आगामिनो देहस्य, **बीजम्**—निदानभूतमिति, **इष्यते**—प्रमाणानुरोधेनाऽभ्युपगम्यते ॥ १२ ॥

(487) तत्त्वज्ञानेन बन्धः किल गलति पुरा नोत्क्रमेणेत्यसारं
माता वन्ध्येतिवद्धि स्ववचनविहतिर्जीवतो मुक्तिवादे ।
मुक्तश्चेत् तत्त्वबोधात् तनुभृदिह तदा तत्परं नैष दुःख्ये-
न्मिथ्या दुःखं तदा चेत् कथय तव कदा तस्य सत्यत्वमिष्टम् ॥ १३ ॥

**तत्त्वज्ञानेन**—अनध्यस्तब्रह्मात्मैकत्वविज्ञानेन, **बन्धः**—संसारः, **पुरा किल**—तत्त्वज्ञानोत्पत्त्यनुपदमेव खलु, **गलति**—निवृत्तो भवति, **न उत्क्रमेण**—देहादपक्रमणेन बन्धनिवृत्तिर्न भवति, **इति असारम्**—इत्येतन्मतं न विचारक्षमम्, **हि**—यतः, जीवतो **मुक्तिवादे**—'धृतशरीरस्यैव मोक्षः' इत्यस्मिन् व्यवहारे, **बन्ध्या माता इतिवत्**—'जननी अपत्यप्रजननयोग्यतारहिता' इति व्यवहारे इव, **स्ववचनविहतिः**—स्वोक्तिविरोधः, **तनुभृत्**—देही चेतनः,

**तत्त्वबोधात्**—तत्त्वज्ञानात् हेतुभूतात्, **इह मुक्तश्चेत्**—जीवितकाले एव बन्धाद्विगलितो यदि, **तदा**—तादृशपक्षे समीचीने सति, **एषः**—ज्ञानमात्रेण मुक्तश्चेतनः, **तत्परम्**—तत्त्वज्ञानपश्चाद्भाविनि जीवितकाले, **न दुःख्येत्**—दुःखं नैव प्राप्नुयात्; (क्षुत्-पिपासादिप्रभवं दुःखमनुभूयमानं च न अपलपितुमर्हम्) **तदा**—ज्ञानानन्तरजीवनकाले, **दुःखं मिथ्या चेत्**—दुःखम् अनुभूयमानमप्यवास्तविकं यदि, **तस्य सत्यत्वम्**—दुःखस्य वास्तविकत्वम्, **तव कदा इष्टम्?** **कथय**—भवतः कस्मिन् समये संमतम्? इत्येतत् स्पष्टं ब्रूहि! (ब्रह्मातिरिक्तमिथ्यात्ववादिनस्तव दुःखस्य सर्वदैव मिथ्यात्वात् जीवन्मुक्तौ को विशेषः?—इति ।। १३ ।।

(488) यं यं भावं स्मरन्तो जहति वपुरिदं देहिनो यान्ति तं तं
तस्मादुत्क्रान्तिसाम्यं न घटत इति चेत्! तन्न तन्मात्रसाम्यात्।
विद्याभेदादिनीत्या भवति विषमता ह्यन्तिमप्रत्ययादौ
किञ्चित्साधर्म्यवादे न च नियतिमती सर्वथा साम्यसिद्धिः ।। १४ ।।

**देहिनः**—तनुभृतश्चेतनाः, **यं यं भावं स्मरन्तः**—यादृश-यादृशविषयभावनाभावितान्तःकरणाः सन्तः, **इदं वपुः जहति**—परिगृहीतं शरीरं परित्यजन्ति (म्रियन्ते), **तं तं यान्ति**—उत्तरत्र तत्तत्सदृशमेव देहविशेषं प्राप्नुवन्ति, (इति, 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः ।।' इति भगवद्गीतावचना(सिद्धम्।) **तस्मात्**—उक्ताद्धेतोः, **उत्क्रान्तिसाम्यं न घटते**—विद्वदविदुषोः देहादुत्क्रमणविषये अवैलक्षण्यं यदुक्तं तत्, न सङ्गतं भवति, **इति चेत् तन्न**—इत्येवमाशङ्कने, तत् न युक्तम्, **तन्मात्रसाम्यात्**—'देहादुत्क्रान्तिः' इत्येतावत्यंशे एव समानतायाः स्थापितत्वात् (उत्क्रान्तिगतावान्तरवैलक्षण्यस्य अनिषिद्धत्वात्), **अन्तिमप्रत्ययादौ**—देहावसानचरमक्षणभाविविषयविशेषभावनादौ विषये, **विद्याभेदादिनीत्या**—सद्विद्यात्व-दहरविद्यात्वादिरूपावान्तरविशेषानपलापेऽपि ब्रह्मविद्यात्वेन रूपेण साम्यमिव (वैषम्यमिव च), **विषमता भवति हि**—मिथोवैलक्षण्यं वर्तत एव (उत्क्रान्तित्वरूपसामान्यसहकृतम्) खलु, **किञ्चित्साधर्म्यवादे**—यत्किंचिदंशे समानधर्मताया वर्णनस्थले, **सर्वथा साम्यसिद्धिः**—सर्वांशे समानताया (उक्तितो) लाभः, **न च नियतिमती**—नैव व्यवस्थितः, (नाव्यभिचरितेति) ।। १४ ।।

—o—

### (3) अधिकरणार्थसङ्ग्रहः ।।

आसृत्युपक्रमाधिकरणे—'अथ मर्त्योऽमृतो भवति' इत्य दिवाक्ये, 'अत्र ब्रह्म समश्नुते' इति इहैवाऽमृतत्ववचनात्, 'विदुषः उत्क्रान्तिर्नाऽस्ति'—इत्याशङ्क्य,

'तयोर्ध्वमायन्नमृतत्वमेति' इति विदुषोऽपि उत्क्रान्तेर्दर्शनात्, 'अथ मर्त्यः' इत्यादि-श्रवणस्य अदग्धदेहसम्बन्धस्य जीवस्य उत्तरपूर्वाघयोरश्लेष-विनाशरूपामृतत्वप्रतिपादनपरत्वाच्च, विदुषोप्युत्क्रान्तिरस्तीति, सा च आनाडीप्रवेशात् समाना—इत्युक्तम् ॥

—o—

(4) **नयसंगतिमालिका** ॥

अत्र ब्रह्माऽश्नुते विद्वानिति स्पष्टमनुश्रवात् ।
उत्क्रान्त्याक्षेपसंशान्त्यै आसृतिन्यायचिन्तना ॥ १९२ ॥

इति आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

—o—

## (140) परसम्पत्त्यधिकरणम् ॥ ४–२–६ ॥

(1) **शारीरकन्यायकलापसंग्रहः** ॥

(198) भोगाद्यभावेन निरर्थकत्वाद्यथायथं स्युर्न तु देवतायाम् ।
संयन्ति तानीति न शङ्क्यमेतत् तेजः परस्यामिति चोदितत्वात् ॥ ६ ॥

**तानि**—जीवसंसृष्टानि भूतसूक्ष्माणि, **भोगाद्यभावेन**—सुखाद्यनुभव-प्रवृत्तिनिवृत्त्यादि-प्रयोजनविशेषस्य देहसाध्यस्य उत्तरत्रासम्भवेन, **निरर्थकत्वात्**—जीवसहभावेन वृत्तेः प्रयोजना-भावात्, **यथायथम्**—यथायोग्यम्, **स्युः**—यत्र कुत्रापि गतानि भवेयुः, **न तु देवतायां संयन्ति**—परस्यां देवतायां-परमात्मनि नैव सम्पन्नानि भवेयुः, **इति न शङ्क्यमेतत्**—उक्तमिदं नैवैवं शङ्कनीयम्, **तेजः**—तेजःपदोपलक्षितानि सर्वाणि भूतसूक्ष्माणि, **परस्याम्**—परस्यां देवतायाम् परात्परदेवताभूते परस्मिन् ब्रह्मणि सम्पद्यन्ते, **इति चोदितत्वात्**—इति 'तेजः परस्यां देवतायाम्' इत्येवमाकारया श्रुत्या उपदिष्टत्वात् (सुषुप्ति-प्रलययोरिव विश्रमार्थत्वयोगेन परसम्पत्तिसार्थक्यात् ॥) ॥ ६ ॥

—o—

(2) **अधिकरणसारावलिः**

(489) जीवोत्क्रान्त्युक्तिकाले विदुषि तु घटते तत्प्रतिक्षेपभङ्गो
भूतोत्क्रान्तेस्तु पश्चात् तदुपनिपतने सङ्गतिः स्यात् कथंचित् ।
तस्मात् साधारणोऽपि ह्ययमुपरि ततः स्थाप्यते हार्दयोग-
स्तुल्येऽप्यस्मिन्नतुल्याः सरणिमुखतया प्राप्यभेदेन नाड्यः ॥ १५ ॥

**जीवोत्क्रान्त्युक्तिकाले**—जीवसामान्यस्य शरीरादुत्क्रान्तिचिन्तनवेलायामेव, **विदुषि तु तत्प्रतिक्षेपभङ्गः**—जीवविशेषभूते ब्रह्मविदि परं शरीरादुत्क्रान्त्यभाववादस्य निरासः, **घटते**—सङ्गतो भवति, **भूतोत्क्रान्तेः पश्चात्**—भूतसूक्ष्माणां देहादुत्क्रमणविचारानन्तरम्, **तदुपनिपतने**—विद्वज्जीवोत्क्रान्तिप्रतिक्षेपस्य निरसने क्रियमाणे तु, **सङ्गतिः कथञ्चित् स्यात्**—विचारोपक्षेपसाङ्गत्यं क्लिष्टकल्पनार्हं भवति, **तस्मात्**—उक्ताद्धेतोः, **अयं हार्दयोगः**—प्रतिपादयिष्यमाणः हार्देनाऽऽत्मना योग इत्यंशः, **साधारणोऽपि**—विदुषः अविदुषश्च अविशिष्टोऽपि, **तत उपरि स्थाप्यते**—विदुषोपि जीवस्य देहादुत्क्रान्तिसमर्थनतः पश्चात् उपक्षिप्य समर्थ्यते, **अस्मिन्**—हार्देन परमात्मना योगे, **सरणिमुखतया**—विविधानां मार्गाणां द्वारस्थानापन्नतया, **तुल्येऽपि**—साधारणे सत्यपि, **प्राप्यभेदेन**—गन्तव्यार्थविशेषानुगुण्येन, **नाड्यः**—नाडीपदवाच्याः धमन्यः, **अतुल्याः**—विदुषामविदुषां च मिथो विलक्षणरूपा एव (गन्तव्यनानाध्वद्वारैक्यमात्रेण अध्वनामैक्यस्य अनापादनीयत्वात्) ॥ १५ ॥

(490) प्राप्तुं भोगापवर्गौ प्रयति तनुभृति प्राप्तसूक्ष्मस्वदेहे
सम्पत्त्या किं परस्यां श्रितहृदयसुषौ लभ्यते देवतायाम्।
आतस्तेजः परस्यामिति चिरघटितेऽप्यस्तु सिद्धानुवादो
मैवं मानानुसारात् फलमिति परमे सङ्क्रमः श्रान्तिशान्त्यै ॥ १६ ॥

**प्रयति तनुभृति**—देहान्निष्क्रम्य प्रयाणोद्युक्ते (स्थूलदेहवति) जीवे, **भोगापवर्गौ प्राप्तुम्**—स्वर्गप्रभृतिकं भोगं वा परब्रह्मावाप्तिरूपमपवर्गं वा लब्धम्, **प्राप्तसूक्ष्मस्वदेहे**—देहान्तरनिर्माणहेतुभूतपूर्वदेहसारांशरूपं स्वीयसूक्ष्मदेहमवाप्तवति सति, **श्रितहृदयसुषौ**—हृदयाख्यात्यन्तसूक्ष्मस्थानमाश्रित्यावतिष्ठमानायाम्, **परस्यां देवतायाम्**—परमात्मापरपर्यायायां परदेवतायाम्, **सम्पत्त्या**—सम्पत्तिपदाभिधेयेन संश्लेषेण, **किं लभ्यते**—किं वा पूर्वमलब्धं नूतनं फलं प्राप्तं स्यात्? न किमपि, इत्यतः सम्पत्तिरेव नाङ्गीक्रियताम्), **आतः**—अतः, उक्ताद्धेतोः, **चिरघटितेऽपि**—सदा सङ्गतेऽस्मिन्नेव परमात्मनि, **सिद्धानुवादः अस्तु**—पूर्वसिद्धस्यैव समागमस्य अनुवादरूपो भवतु, **तेजः परस्यामिति**—'तेजः परस्यां देवतायाम्' इत्ययं श्रुतिखण्डः; (न तु 'प्रयाणकाले सम्पत्तिविशेषो भविष्यती'त्यर्थकः—इति शङ्कने) **मैवम्**—ईदृशमाशङ्कनं नैव साधु भवेत्, **मानानुसारात्**—तादृशार्थावगमकं प्रमाणमनुसृत्य **फलमिति**—प्रयोजनं किञ्चिद्भवेदेवेति चिन्तनीयं प्रमाणे श्रद्धावता; (न तु स्वस्याऽनुपलम्भमात्रेण तदभाव एव निर्णयः; येन अन्ततो नास्तिक्यपथ एवाश्रितो भवेत्), **इति, परमे**

**संक्रमः**—परमात्मनि सम्पत्तिरूपः तत्कालप्राप्तः समागमविशेषः, **श्रान्तिशान्त्यै**—देहोत्क्रमणेन जातस्य आयासविशेषस्य निर्हरणरूपं फलं प्राप्तुम् ।। १६ ।।

—o—

### (3) अधिकरणार्थसंग्रहः ।।

परसम्पत्त्यधिकरणे—जीवसंयुक्तानि तेजःप्रभृतिभूतानि, यथाकर्म यथाविधं च स्वकार्याय गच्छन्ति—इत्याशङ्क्य,

'तेजः परस्यां देवतायाम्' इत्यादिश्रवणात्, तानि परमात्मनि सम्पद्यन्ते—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

उत्क्रान्तिमध्ये विश्रान्तेर्वैफल्याक्षेपशान्तये ।
फलस्य कल्पनायैव परसम्पत्त्यधिक्रिया ।। १९३ ।।

इति परसम्पत्त्यधिकरणम् ।। ६ ।।

—o—

## (141) अविभागाधिकरणम् ॥ ४–२–७ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(199) तेषां त्रयाणां तु परत्र पुंसि स्वकारणत्वात् प्रलयस्तु भावी ।
तन्नैव पूर्वैः स्फुटमैकवाक्यात् संश्लेषमात्रं तदबाधतश्च ।। ७ ।।

**तेषां त्रयाणाम्**—जीवपरिष्वक्तानां तेजो-जल-पृथिवीभूतसूक्ष्माणाम्, **परत्र पुंसि**—परमपुरुषे (ब्रह्मणि), **भावि**—सम्भावितः 'परस्यां देवतायाम्' इत्युक्ता सम्पत्तिः, **प्रलयस्तु**—कारणापत्तिरूप एव, **स्वकारणत्वात्**—सम्पत्समानानि सजीवभूतसूक्ष्माणि प्रति परमात्मनः भूतयोनित्वेन कारणत्वात्, (कारणे सम्पत्तेश्च लयरूपत्वे अविरोधात्—इति शङ्कने) **तन्नैव**—तदेतत् सम्पत्तेः प्रलयरूपत्वं नैव साधु, **पूर्वैः स्फुटमैकवाक्यात्**—'वाङ्मनसि, मनः प्राणस्तेजसि' इति प्राक्तनैः वाक्यैः एकवाक्यतायाः अस्मिन्नपि वाक्ये 'तेजः परस्याम्' इत्यत्र स्पष्टत्वेन, (तत्र च स्थलत्रये सम्पत्तेः संश्लेषमात्रत्वेन), **तदबाधतश्च**—तादृशसम्पत्तेः अत्राऽपि बाधाभावाय, **संश्लेषमात्रम्**—अविभागपदवाच्याविश्लेषरूपैव सम्पत्तिः ; न कारणापत्तिरूप इति ॥ ७ ॥

## (3) अधिकरणार्थसंग्रहः ॥

(491) सम्पत्तिर्देवतायां भवतु लय इयं सा हि सर्वस्य योनि-
भूयः स्रष्टुं क्षमा चेत्यसदनुषजतो वाच्यवैरूप्यदोषात् ।
विश्लेषो भूतसूक्ष्मैरिह न च घटते सृष्टिक्लृप्तिस्तु गुर्वी
प्रोक्ता धूमादिमार्गे गतिरपि भविनस्तत्परिष्वञ्जनेन ॥ १७ ॥

**इयं देवतायां सम्पत्तिः**—अन्ते उक्ता 'तेजः परस्यां देवतायाम्' इतीयं सजीव भूतसूक्ष्माणां परदेवतायां सम्पत्तिः, **लयो भवतु**—कारणापत्तिरूपः प्रलय इति अभ्युपगम्यताम्, **हि**—यतः, **सा**—परा देवता, **सर्वस्य**—कार्यात्मकस्याखिलजगतः, **योनिः**—उपादानभूता सती भूतयोनिपदवाच्या, **भूयः**—पुनः, **स्रष्टुं क्षमा च**—उत्तरत्र गत्यर्थं शरीरमुत्पादयितुमपि समर्था वर्तते, (सर्वस्य स्वकारणे लयो हि स्वाभाविको निर्बाधः) **इत्यसत्**—एवं शङ्कनमसाधु, **अनुषजतः**—पूर्वतः प्राप्तानुषङ्गस्य 'सम्पद्यते' इत्यस्य, **वाच्यवैरूप्यदोषात्**—'एकत्र संश्लेषो वाच्योऽर्थः ; अपरत्र प्रलयो वाच्योऽर्थः' इत्येवं वाच्यार्थवैरूप्याभिधाने प्रक्रमभङ्गरूपदोषापातात्, **भूतसूक्ष्मैः विश्लेषः**—तेजआदिभूतसूक्ष्मैः साकं दूरीभावरूपो विभागः परम्, **इह न घटते**—अत्र प्रकरणे न सङ्गतो भवति ; गमनादिव्यापारस्य भविष्यतो बाधापत्तेः, **सृष्टिक्लृप्तिस्तु गुर्वी**—सर्वशक्तया परदेवतया गमनाद्यर्थं पुनर्देहसृष्टिर्वर्ण्यमाना कल्पनगौरवदूषिता स्यात्, **भविनः**—अनतिक्रान्तसंसरणपथस्य जीवस्य, **धूमादिमार्गे गतिरपि**—'धूमो रात्रिस्तथा कृष्णः' इत्याद्युक्तपितृयाणे संचरणविधाऽपि, **तत्परिष्वञ्जनेन प्रोक्ता**—भूतसूक्ष्मपरिष्वङ्गेण सहैवेति 'तदन्तरप्रतिपत्त्यधिकरणे स्थापितेति (तद्वत् देवयानेऽपि गतिः तत्परिष्वङ्गेणैवेति सर्वं सुस्थम्) ॥ १७ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

अविभागाधिकरणे—तेजःप्रभृतीनां सर्वकारणभूते परमात्मनि लयः—इत्याशङ्क्य,

'मनसि सम्पद्यते' इत्यस्य अनुषङ्गात् तस्य च संयोगवाचित्वात्, परमात्मनि तेषां संयोगः—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

परसम्पत्तिसत्वे सा लय एव भविष्यति ।
इति शङ्कापवादायाऽविभागनयनिर्णयः ॥ १९४ ॥

इति अविभागाधिकरणम् ॥ ७ ॥

—o—

# (142) तदोकोऽधिकरणम् ॥ ४–२–८ ॥

## (1) शारीरकन्यायकलापसंग्रहः ॥

(200) मूर्ध्नाऽन्यनाडीभिरिति व्यवस्था न सौक्ष्म्यतः सम्भवशंसि वाक्यम् ।
तन्नैव विद्यामहिमातिरेकात् परप्रसत्तेश्च तथैव यानम् ॥ ८ ॥

**मूर्ध्ना अन्यनाडीभिरिति व्यवस्था**—मूर्धानमभिनिस्सृतया ब्रह्मनाड्या विदुषः, अन्याभिः शतान्तर्गताभिर्नाडीभिः अविदुषां च देहादुत्क्रमणम् इति विभागः, **न**—न सम्भावितः, **सौक्ष्म्यतः**—नाडीनामत्यन्तसूक्ष्मत्वेन प्रयता जीवेन तद्विवेचनस्य दुष्करत्वात्, (अतः) **वाक्यम्**—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' इत्येतत् विभागप्रदर्शकं श्रुतिवाक्यम्, **सम्भवशंसि**—अकस्मात् सम्भविनः नाडीविशेषगमनस्य अनुवादमात्ररूपम्; (न तु प्रयाणकाले नाडीविवेकतः प्रयाणनैयत्यसिद्धिपरम्—इति शङ्कने) **तत् नैव**—उक्तं शङ्कनं नैवौचित्यभाग्भवति, **विद्यामहिमातिरेकात्**—परब्रह्मोपासनात्मिकाया विद्यायाः माहात्म्यातिशयात्, **परप्रसत्तेश्च**—परमात्मनः प्रीतस्य प्रसादलाभेन (प्रयतो जीवस्य नाडीविवेकलाभात्) **तथैव यानम्**—व्यवस्थितविविक्तनाडीपथेनैव विदुषः देहान्निर्गमनं सुदृढमेवेति ॥ ८ ॥

—o—

## (2) अधिकरणसारावलिः ॥ श्लो. 18-19

(492) नाडीजालेऽतिसूक्ष्मे न भवति सुशका मुक्तिनाडी विवेक्तुं
तस्मान्मूर्धन्यनाडीगतिरनियमतो मुच्यमानस्य पुंसः ।
वाक्यं गन्तुस्तयोर्ध्वं प्रवददमृततां सम्भवादस्तु मैवं
विद्यासम्प्रीतहार्दप्रसदनमहसा स्वार्हनाडीप्रवेशात् ॥ १८ ॥

**अतिसूक्ष्मे**—अत्यन्तं दुर्ज्ञेये, **नाडीजाले**—गन्तव्यनाडीनां स्तोममध्ये, **मुक्तिनाडी**—मुक्त्यर्थनिर्गमनमार्गभूता मूर्धन्यनाडी, **विवेक्तुम्**—विविच्य ज्ञातुम्, **न सुशका**—नैव सुसाध्या स्यात्, **तस्मात्**—ततो हेतोः, **मुच्यमानस्य पुंसः**—मोक्षमाप्नुवतः पुरुषस्य, **मूर्धन्यनाडीगतिः**—मूर्धस्थानगन्त्र्यां सुषुम्नाख्यब्रह्मनाड्यां प्रवेशः, **अनियमतः**—अव्यवस्थित एव, न नियतः, **वाक्यम्**—'शतं चैका चे'त्यादिवाक्यं तु, **तया ऊर्ध्वंगन्तुः**—आकस्मिकतया तन्नाडीपथेन ऊर्ध्वयानं सम्पन्नस्य, **सम्भवात् अमृततां प्रवदत् अस्तु**—सम्भावितं मुक्तत्वम् अनुवादविधया ज्ञापयत् स्यान्नाम, (इति शङ्कने) **मैवम्**—नैवमुचितम्, **विद्यासम्प्रीतहार्दप्रसदनमहसा**—ब्रह्मोपासनरूपया विद्यया उपासके प्रीतहृदयस्य परमात्मनो हार्दाभिधानस्य प्रसादायत्तेन हृदयाग्रस्थानप्रकाशेन, **स्वार्हनाडीप्रवेशात्**—परमपदप्राप्तिमभीप्सतः स्वस्य योग्याया मध्यनाड्यां प्रवेशस्य सुखेन लाभात् ॥ १८ ॥

(493) स्वाधीनो हार्दसंज्ञः स्वयमविकलया सम्पदा साकमेकः
स्थित्वा हृत्पद्ममध्ये स्थगितनिजतनुः सप्तलोकीगृहस्थः ।
नाडीचक्रे सुषुम्नां निखिलधृतिकरीं नाभिमूर्धान्तरूपां
भित्त्वा तन्मध्यरन्ध्रप्रहितमिषुमिवोत्क्षिप्य नेता मुमुक्षुम् ॥ १९ ॥

**सप्तलोकीगृहस्थः**—भूरादिसत्यान्तानां सप्तानां लोकानां स्वामी रक्षितृत्वेनावस्थितः परमपुरुषः, **स्वाधीनः**—अकर्मवश्य एव सन्, **एकः**—(आत्मशरीरेन्द्रियसङ्घाते अस्मिन्) प्रधानतमः क्षेत्रज्ञः, **स्वयम्**—स्वसङ्कल्पमात्रप्रेरितः, **अविकलया सम्पदा साकम्**—अन्यूनया-(असङ्कुचितया निरुपाधिकया वा) नित्यनिरवद्यया श्रिया सह, **स्थगितनिजतनुः**—चर्मचक्षुषामवेद्यस्वीयदिव्यविग्रहः, **हृत्पद्ममध्ये**—देहिनां हृदयकमलमध्यकर्णिकायाम्, **हार्दसंज्ञः स्थित्वा**—'हार्द' इति अन्वर्थनाम्ना रक्षितृत्व-नियन्तृत्वादिधर्मैरवस्थाय, ('समोऽहं सर्वभूते'ष्विति निष्पक्षपातेन मध्यस्थतया वा अवस्थाय) **मुमुक्षुं**—संसारनिगडाद्विमोकमिच्छन्तम् स्वाभाविक निरतिशयनिरुपाधिकस्वसायुज्यानन्दमभिलषन्तम् इति वा) चेतनम्, **इषुमिव उत्क्षिप्य नेता**—बाणमिव ऊर्ध्वमसित्वा स्वपदं नेष्यन् (नेतुकामः), **नाडीचक्रे**—असङ्ख्ये नाडीस्तोमे प्रधानतमाम् **निखिलधृतिकरीम्** सर्वविश्वधारकत्वेन देहमध्यावस्थिताम्, **नाभिमूर्धान्तरूपाम्**—देहगतनाभिस्थानमारभ्य मूर्धान्तं व्याप्य सर्वासां नाडीनामुपजीव्यतया इतरनाडीलेपरहिततया च अवस्थिताम्, **सुषुम्नाम्**—सुषुम्नाख्यां ब्रह्मनाडीम्, **भित्त्वा**—अनुपासकानाम् (अयतीनाम्) अप्रवेशाय पिहितद्वारामपि स्वीयेन भक्तानुग्रहसङ्कल्पेन उद्घाटितद्वारां कृत्वा, **तन्मध्यरन्ध्रप्रहितम्**—सुषुम्नामध्यसुषिरान्तःप्रविष्टं कृत्वा, **नेता**—अर्चिरादिपथे गमयिता भवति ॥ १९ ॥

(3) अधिकरणार्थसंग्रहः ॥

तदोकोऽधिकरणे—नाडीनां दुर्विवेचत्वात्, 'तयोर्ध्वमायन्नमृतत्वमेति' इति मूर्धन्यनाड्या उद्गमनम्, अनियतम्—इत्याशङ्क्य,

परमात्मप्रसादेन प्रकाशितद्वारत्वात्, मूर्धन्यनाड्या उद्गमनं नियतम्—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

गतिसामान्येऽपि नाडी दुर्विवेका यदा भवेत् ।
अनैयत्योदिताऽऽशङ्का तदोकोनीत्यपोदिता ॥ १९५ ॥

इति तदोकोऽधिकरणम् ॥ ८ ॥

—o—

## (143) रश्म्यनुसाराधिकरणम् ॥ ४–२–९ ॥

(1) शारीरकन्यायकलापसंग्रहः ॥

(201) निशामृतौ रश्म्यनुसारवारणे नैव व्यवस्था किरणानुसारे ।
न तद्व्यवस्थैव भवेन्निशीथेऽप्यौष्ण्योपलब्धेर्यदमी हि सन्ति ॥ ९ ॥

**निशामृतौ**—म्रियमाणस्य रात्रिमरणे सम्भवति सति, **रश्म्यनुसारवारणे**—आदित्यरश्मीनामनुसरणस्याभावे निश्चीयमाने, (आदित्यस्य रात्रावभावेन तद्रश्मीनामसम्भावितत्वात्), **किरणानुसारे**—विदुषः सूर्यरश्मीनामनुसरणविषये, **व्यवस्था नैव**—नैयत्यं नैव युज्यते, (इति शङ्कने) **न**—नैयत्याभावशङ्का नैव युक्ता, **तद्व्यवस्थैव भवेत्**—विदुष आदित्यरश्म्यनुसरणनैयत्यं सुदृढमेव सिध्येत्, **यत्**—यतः, **निशीथेऽपि**—रात्रावपि, **औष्ण्योपलब्धेः**—ऊष्मणो देहे अनुभूयमानत्वात्, **अमी**—सूर्यस्य रश्मयः, **सन्ति हि**—(रात्रावपि) विद्यन्त एव खलु ॥९॥

—o—

(2) अधिकरणसारावलिः ॥

(494) एतैरेवेति वाक्ये दिनकरकिरणालम्बनेनोर्ध्वयानं
यत् प्रोक्तं योगिनस्तद्दिनमृतिनियतं निश्चयुक्त्येति चेन्न ।
अह्निच्छायासु रात्रिष्वपि हि लघुतरा रश्मयः सन्ति लिङ्गै-
स्तापो वर्षादिरात्रौ न यदि हिमदिनन्यायतो नेयमेतत् ॥ २० ॥

'**एतैरेवे**'ति **वाक्ये**—'अथ यत्रैतस्माच्छरीरादुत्क्रामति ; अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्येतस्मिन् श्रुतिवचने, **दिनकरकिरणालम्बनेन**—सूर्यरश्मीनामाश्रयणेन, **योगिनः**—निष्पन्नोपासनस्य पुरुषस्य, **ऊर्ध्वयानम्**—गन्तव्यमूर्ध्वगमनम्, **यत् प्रोक्तम्**—यत् स्पष्टीकृतमस्ति, **तत्**—सूर्यरश्मीनामाश्रयणत ऊर्ध्वगमनमित्येतत्, **निशि अवृत्त्या**—रात्रौ (सूर्याभावतः) रश्मीनामप्यसम्भवेन, **दिनमृतिनियतम्**—अह्निमरणे एव नियतसम्भवम् ; न मरणसामान्ये. **इति चेत् न**—एवं शङ्का न युज्यते, **हि**—यतः, **अह्नि**—दिवस एव, **छायासु**—अनातपप्रदेशेषु, (तथा) **रात्रिष्वपि**—क्षपास्वपि च (साक्षात्सूर्यदर्शनरहितकालदेशादिषु च), **लिङ्गैः**—स्वेदोष्माद्युपलम्भादिभिर्ज्ञापकैः, **लघुतराः रश्मयः सन्ति**—आतपे यावत्प्रमाणाः तदपेक्षयाऽल्पप्रमाणाः सूर्यांशवः वर्तमानत्वेनानुमेया भवन्त्येवेति निश्चीयते, **वर्षादिरात्रौ**—प्रावृषि निशासमये, **यदि न तापः**—ऊष्मणः स्वेदादेश्च अनुपलम्भो यदि तदा, **एतत्**—ऊष्मोपलम्भराहित्यम्, **हिमदिनन्यायतः**—हेमन्ततौ आतपेऽपि ऊष्मानुपलम्भवत् किरणौष्ण्याभिभावकजलांशबाहुल्यकृतं विचिन्त्य समाधेयम् ॥ ( अतो योगिनो रात्रिमृतावपि सूर्यरश्म्यनुसारोऽस्त्येवेति ) ॥ २० ॥

— o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

रश्म्यनुसाराधिकरणे—'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमती'ति वाक्येनोक्तं रश्म्यनुसारेणैव गमनं न नियतम् ; निशि मृतस्य रश्म्यनुसारासम्भवात्—इत्याशङ्क्य,

निदाघसमये निश्यपि उष्णोपलम्भेन रश्मिसद्भावात्, रश्म्यनुसारेणैव गमनम्—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

रात्रियाने रश्म्यभावादचिन्त्या गतिचिन्तना ।
इत्याक्षेपापवादोऽपि रश्म्यनुन्यायगोचरः ॥ १९६ ॥

इति रश्म्यनुसाराधिकरणम् ॥ ९ ॥

—o—

## (144) निशाधिकरणम् ॥ ४–२–१० ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(202) दिवा मृतस्यैव परोपसत्तिर्विगर्हितत्वान्मरणस्य रात्रौ ।

न स्यादिदं बन्धककर्महानाद् विद्याबलात् तां वदति श्रुतिश्च ॥ १० ॥

**रात्रौ मरणस्य विगर्हितत्वात्**—'दिवा च शुक्लपक्षश्च' त्यारभ्य प्रशस्तान्युक्त्वा, 'विपरीतं तु गर्हितम्' इति रात्रौ देहादुत्क्रमणस्य उत्तमगतिनिरोधकत्वेन निन्दितत्वात्, **परोपसत्तिः**—परब्रह्मावाप्तिरूपो मोक्षः, **दिवा मृतस्यैव**—अहनि प्राणवियोगं प्राप्तस्यैव विदुषः—(इति शङ्कने) **इदं न स्यात्**—ईदृशं शङ्कनं नैव युक्तं भवेत्, **विद्याबलात्**—विद्यागतात् सामर्थ्यात्, **बन्धककर्महानात्**—मोक्षविरोधिनां सर्वेषां कर्मणां विनष्टत्वात्, (निशि मरणस्य मोक्षाप्रतिबन्धकत्वात्), **तां श्रुतिश्च वदति**—विद्यया निरस्तप्रतिबन्धकस्य देहवियोगमात्रविलम्बेन परमात्मोपसम्पत्तिं श्रुतिरेव स्पष्टीकरोति—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति; (अतः रात्रौ प्राणत्यागो विदुषः नैव अपवर्गविरोधी) ॥ १० ॥

—o—

### (2) अधिकरणसारावलिः ॥

(495) सर्वेषामप्रशस्तं रजनिमरणमित्यह्नि योगी म्रियेत

प्रेयाच्चेदेष रात्रौ न चरममरणं तद्भवेदित्ययुक्तम् ।

कर्म प्रारब्धकार्यं ह्यनियतसमयं क्षीयते तावदेवे-

त्युक्तश्चाऽस्मिन् विलम्बोऽहनि निशि च परं विद्यया सोऽश्नुतेऽतः ॥१०॥

**सर्वेषाम्**ः—योगिनाम् अयोगिनां च, **रजनिमरणम्**—निशायां शरीरपरित्यजनम्, **अप्रशस्तम्**—उत्तमगतिविरोधित्वात् अधमगतिहेतुत्वाद्वा निन्दितम्, **इति**—अनेन हेतुना, **योगी**—निष्पन्नोपासनो विद्वानपि, **अह्नि म्रियेत**—दिवस एव प्राणत्यागं कुर्यात्; न रात्रौ, **एषः**—योगीजनः, **यदि रात्रौ प्रेयात्**—शासमनिये मरणं प्राप्नुयाच्चेत्, **तत्**—निशाकालिकं योगिनो मरणम्, **चरममरणं न भवेत्**—मरणान्तरसम्भवरहि (पुनर्जन्मरहितं) अन्तिमं नभवेत्, **इत्ययुक्तम्**—ईदृशं शङ्कनं युक्तिरहितम् हि—यतः, **प्रारब्धकार्यं कर्म**—फलवितरणोद्यतं पुण्य-पापाख्यं कर्म, **अनियतसमयं क्षीयते**—कालनैयत्यं विना दिवा वा निशायां वा अवसितं

भवति (नष्टं भवति), **अस्मिन्**—विदुषो ब्रह्मसम्पदने, **विलम्बः**—शीघ्रकालत्वाभावः, **'तावदेवे'त्युक्तः** 'तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुतौ कथितः, **अतः**—उक्ताद्धेतोः, **सः**—विद्वान् चेतनः, **विद्यया**—परमात्मप्रीत्यापादिकया ब्रह्मोपासनरूपया विद्यया, **अहनि निशि च**—दिवा च रात्रौ च, **परम् अश्नुते**—परं ब्रह्म उपसन्नो भवति न निशामरणमात्रेण पुनर्जन्मवान् भवति ॥ २२ ॥

(496) यत्रैकस्याऽपवर्गः प्रतिनियततया गण्यते जातकज्ञै-
स्तत् स्यादन्त्यं शरीरं ननु भवति ततोऽप्यन्ययोगव्युदासः ।
नह्यत्राऽप्यन्तकाले दिन-रजनिभिदा देशभेदादि चैवं
शव्यं कुर्वन्ति चाऽस्मिन् यदुच यदुचनेत्यादि चैवं विभाव्यम् ॥ २२ ॥

**जातकज्ञैः**—देहिनो जन्मकालमवलम्ब्य तदुत्तरफलचिन्तकैः ज्योतिर्विद्भिः, **एकस्य**—यस्य कस्यचन पुरुषस्य, **यत्र**—यस्मिन् शरीरे अवसिते, **अपवर्गः**—मोक्षः, **प्रतिनियततया**—अवर्जनीयतया, **गण्यते**—गणनतो निश्चीयते, **तत् शरीरम्**—तादृशनिश्चयविषयीभूतजातकवत् शरीरम्, **अन्त्यं ननु**—तद्भोगाश्रयकेषु शरीरेषु चरमं भवतीत्येतत् ध्रुवम्, **ततोऽपि**—जातकगणवतो निश्चयादपि, **अन्ययोगव्युदासः भवति**—तस्य शरीरान्तरसम्बन्धाभावनिश्चयः दृढो भवति, **अत्राऽपि**—ईदृशदेहिचेतनविषयेऽपि, **न हि दिन-रजनिभिदा**—दिवारात्रिमरणयोः प्रशस्तत्व-तदभावकृतं वैषम्यं नैव खलु सम्भावितम्, **एवम्**—उक्तरीत्या, **देशभेदादि च**—उत्तमक्षेत्रे मरणम् अधमक्षेत्रे मरणम् इति देशभेदकृतमरणप्राशस्त्यादि च नैव सम्भवि, **एवम्**—युक्तिरिव श्रुतिवचनमपि **'शव्यं कुर्वन्ति चाऽस्मिन् यदु च यदु च न' इत्यादि**—'यदु चैवाऽस्मिन् शव्यं कुर्वन्ति यदु च न' इति बृहदारण्यकीयं वचनमपि शवसम्बन्ध्युत्तरक्रियाणामभावेऽपि असंदिग्धमोक्षताप्रतिपादनपरं) **विभाव्यम्**—प्रारब्धकर्मणां निरवशेषक्षये योगिनः काल-देशादिवैषम्यमविगणय्यैव परब्रह्मसम्पत्तिज्ञापकं विशेषतश्चिन्तनीयम् ।२२।

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

निशाधिकरणे—'दिवा च शुक्लपक्षश्च' इत्यादौ, 'विपरीतं तु गर्हितम्' इति निशि मरणस्य गर्हितत्वात्, अधोगतिहेतुत्वाच्च, 'निशि मृतस्य ब्रह्मप्राप्तिर्नास्ति'—इत्याशङ्क्य,

विदुषः उत्तर-पूर्वाघयोः अश्लेष-विनाशात्, आरब्धकार्ययोः अनुभवेन विनष्टत्वाच्च, बन्धहेत्वभावात्, 'विपरीतं तु गर्हितम्' इत्यस्य अविद्वद्विषयकत्वाच्च, निशि मृतस्याऽपि ब्रह्मप्राप्तिरस्ति—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

सत्सु सौरेषु तेजस्सु कालदोषनिबन्धनम् ।
प्रतिहन्तुमिहाऽऽक्षेपं निशाधिकरणं मतम् ॥ १९७ ॥

इति निशाधिकरणम् ॥ १० ॥

—o—

## (145) दक्षिणायनाधिकरणम् ॥ ४-२-११ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(203) मृतस्य मुक्तिर्न हि दक्षिणायने शशाङ्कसायुज्यममुष्य हि श्रुतम् ।
न तत्तु विद्यामहिमातिरेकतः श्रुतिस्तु सा विश्रमभूमिगोचरा ॥ ११ ॥

**दक्षिणायने मृतस्य**—दक्षिणायनाभिधे कर्काटकादिधनुरन्ते मासषट्के शरीरवियोगं प्राप्तवतः, **मुक्तिः न हि**—मोक्षो नैव सम्भवी, हि—यतः, **अमुष्य**—दक्षिणायने मृतस्य देहिनः, **शशाङ्कसायुज्यम्**—चन्द्रमसः सयुग्भावः, **श्रुतम्**—'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इति श्रुत्या प्रतिपन्नः, (इति शङ्कने) **तत्तु न**—उक्तं चन्द्रसायुज्यं दक्षिणायने मृतस्यापि विदुषो नैवास्ति, **विद्यामहिमातिरेकतः**—विद्यामाहात्म्यातिशयात् दक्षिणेऽयने मृतस्याऽपि मुक्तिर्ध्रुवैव, **सा श्रुतिस्तु**—'अथ यो दक्षिणे' इति श्रुतिः पुनः, **विश्रमभूमिगोचरा**—विदुषो मध्येमार्गं चन्द्रमसि विश्रान्तिपूर्वकं उत्तरत्र गतिपरा ॥ ११ ॥

—o—

(2) **अधिकरणसारावलिः ॥** (श्लो. 23-24)

(497) देहं योगीश्वरोऽपि त्यजति यदि रवेर्दक्षिणावृत्तिकाले
विन्देत् सायुज्यमिन्दोरिह भवति पुनस्तच्छ्रुतेस्तत्स्मृतेश्च ।
नैवं पूर्वोक्तनीतिस्त्विह न हि विहताऽथाऽस्य सायुज्यमिन्दौ
विश्रान्त्यै सूर्यनीत्या जगदुपकृतये भीष्मकालप्रतीक्षा ॥ २३ ॥

**योगीश्वरोऽपि**—स्वयं योगी सन् अन्येषां बहूनां योगिनां तत्त्वमार्गदेशनेन नियन्ता सन्नपि कश्चन, **रवेः दक्षिणावृत्तिकाले**—सूर्यस्य दक्षिणस्यां दिशि पर्यटनकाले, (दक्षिणायने);

**देहं यदि त्यजति**—शरीरं जहाति चेत्, **इन्दोः सायुज्यं विन्देत्**—चन्द्रं प्राप्तः सन् तत्समानभोगत्वरूपं तत्सायुज्यं प्राप्नुयादेव, **इह पुनर्भवति**—मर्त्ये लोके पुनरावृत्तिमान् संसारी च जायते, **तच्छ्रुतेः तत्स्मृतेश्च**—तदर्थकश्रुतेः 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इत्याकारायाः, तदर्थकस्मृतेः, 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इत्याकारायाश्च सत्वात् (विशिष्य तत्र प्रमाणे उपलभ्यमाने, तदर्थानभ्युपगमे हेत्वभावात्), **मैवम्**—एवमपार्थाभ्युमगमो मास्तु, **हि**—यतः, **पूर्वोक्तनीतिः**—निशि विदुषो मरणे ब्रह्मानवाप्तिशङ्कायाः परिहारो येन न्यायेन कृतः स न्यायः, (सर्वप्रारब्धक्षये निशामरणस्य ब्रह्मप्राप्तिविघटकत्वं न सम्भवती'त्ययम्), **इह**—विदुषो दक्षिणायनमरणविषयेऽपि, **न विहिता**—न दूरीभूतः ; किन्तु वर्तत एव, **अथ**—एवं स्थिते, **अस्य**—दक्षिणायने त्यक्तदेहस्य विदुषः, **इन्दौ सायुज्यम्**—श्रुतिप्रतिपन्नः चन्द्रसयुग्भावः, **सूर्यनीत्या**—उदगयने मृतस्यापि विदुषः अपुनरावृत्त्या ब्रह्म प्राप्नुवतोऽपि आदित्यसयुग्भाव इव ('य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छति' इति श्रुत्युक्त इव) **विश्रान्त्यै**—मध्येमार्गं देहोत्क्रमणादिकृतायासपरिहारपूर्वकं प्रसन्नतायै घटते, **भीष्मकालप्रतीक्षा**—कुरुकुलपितामहेन भीष्माचार्येण कृता देहत्यागायोत्तरायणकालप्रतीक्षा तु, **जगदुपकृतये**—साधारणानां जनानां उत्तरायणमरणप्राशस्त्यपरशास्त्रविश्वासदार्ढ्योपादनरूपोपकाराय, युधिष्ठिरव्याजेन सर्वधर्मरहस्योपदेशतः लोकोपकाराधानाय वा ; स्वच्छन्दमरणतायाः शन्तनुवरसिद्धत्वात्) युज्यते ; (न तावता दक्षिणायनमरणे दोषः) ॥ २३ ॥

(498) किं च प्रारब्धकर्म प्रतिनियतमिदं जाह्नवीसम्भवस्य
स्वेच्छा येनैवमासीत् स च वसुरभवन्नेष साक्षाद्विमुक्तः ।
तस्माद् विन्देत मुक्तिं नर-पितृ दिविषद्रात्रिकालेऽपि योगी
स्यातां प्राशस्त्य-निन्दे तदितरविषये गीतयोक्तौ तु मार्गौ ॥ २४ ॥

**किं च**—विविच्य ज्ञातव्यमन्यदपि किंचिदस्ति, (किमिति चेत्) **इदं प्रारब्धकर्म**—मासषट्कदेहधारणपूर्वकं कालप्रतीक्षणौपयिकं प्रारब्धं कर्म, **जाह्नवीसम्भवस्य**—गङ्गासूनोर्भीष्मस्य, **प्रतिनियतम्**—तद्व्यक्तिमात्रे सीमितम्, (अन्येन केनाप्येवं कर्तुमशक्यत्वात्), **येन**—तन्मात्रनियतेन यादृशेन प्रारब्धकर्मणा, **एवं स्वेच्छा आसीत्**—ईदृशावस्थित्यनुगुणा एवमाकारा असाधारणी स्वतन्त्रेच्छा तस्य समभवत्, **स च**—भीष्मश्च, **वसुरभवत्**—पूर्वम् अष्टसु वसुषु यादृशो वसुरासीत् पुनस्तादृश एवाजायत, **एषः**—भीष्मः, **साक्षात्**—भीष्मनामकाद्देहाद्वि-

निर्गमादेव केवलम्, (अद्वारकतया), **न विमुक्तः**—सर्वबन्धविनिर्मोकपूर्वकं परमपदं प्राप्तवान् न; किन्तु वसुपदप्राप्तिद्वारैव, **तस्मात्**—उक्ताद्धेतुकलापात्, **योगी**—विद्वान् ब्रह्मज्ञः, **नर-पितृ-दिविषद्रात्रिकालेऽपि**—नराणां रात्रिभूतायां दैनन्दिन्यां निशायाम्, पितॄण रात्रिभूते कृष्णपक्षे, देवानां रात्रिभूते दक्षिणायनेऽपि मृतः (अविशेषेण) **मुक्तिं विन्देत**—अर्चिरादियानेन गत्वा परब्रह्मसम्पत्तिं लभेतैव; नात्र संशयः, **प्राशस्त्य-निन्दे**—उत्तरायणां मरणस्तुतितदितरगर्हणं च, **तदितरविषये**—विद्वदितरविषये, (मोक्षेतरकामनया इष्टापूर्ताद्यनुष्ठानशीलस्य स्वमार्गावाप्तौ अनुकूल-प्रतिकूलकालप्रतिपादनैदम्पर्यप्रवृत्ते), **गीतया उक्तौ तु**—'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः' इत्यत्र कालशब्देन निर्दिष्टौ तु, **मार्गौ**—अर्चिरादि-धूमादि पथावेव; न तु कालात्मकौ, (इति सर्वं निरवद्यमेव) ॥ २४ ॥

—o—

### (3) अधिकरणार्थसंग्रहः

दक्षिणायनाधिकरणे—'अथ यो दक्षिणे प्रमीयते' इति वाक्ये, दक्षिणायनमृतस्य चन्द्रप्राप्तिश्रवणात्, चन्द्रं प्राप्तानाम्, 'अथैतमेवाऽध्वानं पुनर्निवर्तन्ते' इति पुनरावृत्तिश्रवणात् - दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्नास्ति—इत्याशङ्क्य,

अविदुषामेव चन्द्रं प्राप्तानां पुनारावृत्तेः, विदुषां तु चन्द्रं प्राप्तानाम्, 'तस्माद् ब्रह्मणो महिमानमाप्नोति' इति वाक्यशेषात् ब्रह्मप्राप्तिश्रुतेः, दक्षिणायनमृतानामपि ब्रह्मप्राप्तिरस्ति—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

दक्षिणायनयाने तु चन्द्रमः प्राप्तिसम्भवात् ।
निर्निरोधगतिस्थित्यै दक्षिणायननिर्णयः ॥ १९८ ॥

इति दक्षिणायनाधिकरणम् ॥ ११ ॥

—o—

# [ पादगताधिकरणार्थसार : ]

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(204) वाक् तु चेतसि तत् प्राणे तत् पुनर्जीवतेजसोः ।
तेजसश्चेतरश्लेषस्तावन्मात्रस्य तुल्यता ॥ १२ ॥

(205) तेषां परस्मिन् गमनं तस्य च श्लेषमात्रता ।
मूर्धन्यनाडीनियमो रश्मिनेति व्यवस्थितिः ॥ १३ ॥

(206) निशायां चाऽपि सन्मोक्षो मोक्षणं दक्षिणायने ।
इत्येतत् सर्वमेतेन पादेनाऽत्र विचिन्तितम् ॥ १४ ॥

(1) **वाक् तु चेतसि**—इतरैरिन्द्रियैर्युतं वागिन्द्रियं (चेत आख्ये) मनसि उत्क्रान्ति समये सम्पद्यमानं भवति, (2) **तत् प्राणे**—तच्च मनः वाचायुतं प्राणवायौ सम्पन्नं भवति, (3) **तत् पुनः जीवतेजसोः**—वागादिप्राणान्तं करणजातं जीवे सम्पद्यमानं भवति, जीवसम्पत्त्यनन्तरं जीवेन सहितं तेजसि सम्पन्नं भवति, (4) **तेजसश्च इतरश्लेषः**—सप्राणेन जीवेन सम्पद्यमानस्य तेजसः न तेजोमात्रता ; किन्तु इतरभूतसंश्लिष्टतेजोरूपता (सर्वभूतसूक्ष्मात्मकता) 5) **तावन्मात्रस्य तुल्यता**—एतावत्पर्यन्तस्य उत्क्रमणस्य विदुषि अविदुषि च जीवे अविशिष्टता, (6) **तेषां परस्मिन् गमनम्**—इन्द्रियादीनां सजीवभूतसूक्ष्मान्तानां परमात्मनि सम्पन्नता, (7) **तस्य सश्लेषरूपता**—सम्पत्तिपदोक्तस्य चार्थस्य केवलं संश्लेषपदाभिधानार्हसम्बन्धमात्ररूपता ; न तु कारणापत्त्यात्मकलयरूपता, (8) **मूर्धन्यनाडीनियमः**—विदुषः मूर्धान्तव्यापिन्या अत एव मूर्धन्यपदवाच्यया सुषुम्नानाड्यैव निर्गम इति व्यवस्था, (9) **रश्मिनेति व्यवस्थितिः**—निर्गमनं सूर्यरश्मीननुसृत्यैव ; नाऽन्यथेति निष्कर्षः, (10) **निशायां चाऽपि सन्मोक्षः**—निशानां मरणेऽपि सतां-विदुषां मोक्षावश्यम्भाव एव (11) **मोक्षणंद क्षिणायने**—विदुषां चेतनानां दक्षिणायनमरणेऽपि मोक्षाविनाभावः (मोक्षस्य प्रारब्धसर्वकर्मक्षयमात्राधीनत्वात् तस्य निशा-दक्षिणायनयोः तौल्यात् **इत्येतत् सर्वम्**—उक्तमिदम् अर्थैकादशकम् , **एतेन पादेनाऽत्र विचिन्तितम्**—शारीरकगतेन तुरीयद्वितीयपादेन एकादशसंख्यैरधिकरणैः विचार्य निर्णीतमस्ति ॥ १२, १३, १४ ॥

—o—

(2) **अधिकरणसारावलिः ॥**

(499) सम्पद्येताऽन्यदक्षं मनसि तदपि तत्संयुतं प्राणवायौ
सोऽध्यक्षे तैः समेतः स च तदखिलवान् भूतवर्गे तु सूक्ष्मे ।
उत्क्रान्तिः स्यात् समाना युतिरथ च परे सा च संश्लेषमात्रं
निर्गच्छेद्ब्रह्मनाड्या घृणिभिरथ निशा-देवराञ्योश्च मोक्षी ॥ २५ ॥

(1) **अन्यत् अक्षम्**—मनसोऽतिरिक्तं कर्म-ज्ञानेन्द्रियदशकम्, **मनसि सम्पद्येत**—(देहादुत्क्रान्तिकाले) मनोरूपे अन्तरिन्द्रिये सम्पत्तिमद्भवति, (2) **तदपि**—मनोरूपमपीन्द्रियम्, **तत्संयुतम्**—स्वस्मिन् सम्पन्नैः कर्म-ज्ञानेन्द्रियैः सहितं सत्, **प्राणवायौ**—प्राणाख्ये वायौ (प्राणनाधारभूते) सम्पद्यते, (3) **सः तैः समेतः**—प्राणाख्यो वायुः इन्द्रिय-मनोभिः सहितः सन्, **अध्यक्षे**—करणाधिपे जीवे सम्पद्यते, (4) **स च तदखिलवान्**—जीवोऽपि इन्द्रिय-मनः-प्राणैर्युक्तःसन्, **सूक्ष्मे भूतवर्गे**—सूक्ष्मदशावस्थिते आकाशादिभूतपञ्चकस्तोमे, सम्पद्यते, (5) **उत्क्रान्तिः समाना स्यात्**—वागादीनां मनआदावारभ्य एतदन्तमुक्ता उत्क्रान्तिः विदुषामविदुषां च जीवानां तुल्यरूपैव, (6) **अथ च**—पश्चाच्च, **परे युतिः**—सजीवस्य भूतपञ्चकस्तोमस्य परे ब्रह्मणि सम्पत्तिः (7) **सा च संश्लेषमात्रम्**—उक्ता च सम्पत्तिःसंश्लेष पदवाच्यं सम्बन्धमात्रमेव ; न तु कारणापत्ति रूपो लयः, 8 (**मोक्षी**—मुक्तिभाग्जीवः), **ब्रह्मनाड्या निर्गच्छेत्**—ब्रह्मनाडीपदाभिधेयया सुषुम्नया द्वारभूतया निष्क्रान्तो भवेत्, 9 **अथ घृणिभिः**—तस्य गमनम् सूर्यरश्मिभिः सह ऊर्ध्वयानम्, (10-11) **अथ निशा-देवराञ्योश्च**—निशायां दैनन्दिन्यां, देवानां रात्रिभूतायां वा मृतोपि, **मोक्षी**—मोक्षार्हो भवति जीवो विद्वान् ॥ इत्येवम् एकादशभिरधिकरणैः एकादशाऽर्थाः श्रुतिमताः स्थापिताः) ॥ २५ ॥

—o—

(4) **नयसङ्गतिमालिका ॥**

एवं चतुर्थाध्यायस्य द्वितीये चरणेऽपि च ।
द्विपेटिकान्तरक्षाधिकारणानि समागमन् ॥ १९९ ॥

इति चतुर्थाऽध्यायस्य द्वितीयः पादः ॥ २ ॥

—o—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

# चतुर्थस्याऽध्यायस्य

## (15) तृतीयः (गति) पादः ॥ ४–३ ॥

## (146) अर्चिराद्यधिकरणम् ॥ ४–३–१ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(207) शाखासु बहुविधत्वाद्गतिश्रुतेरर्चिरादिनियमो न ।
तन्नैव नियमनं स्यात् सर्वत्रार्कादिचिह्नसम्भवतः ॥ १ ॥

**गतिश्रुतेः**—मुक्तात्मनां गतिप्रकारविधायिश्रुतिवाक्यस्य, **शाखासु**—छान्दोग्य-वाजसनेयकादिविविधशाखासु, **बहुविधत्वात्**—अर्चिरादिपथस्य वायुलोकादिपथस्य चेति प्रतिपादनतः नानाप्रकारत्वात्, **अर्चिरादिनियमो न**—मुक्तिप्रापको मार्गः अर्चिरादिक एवेति नैयत्यं नास्ति, (केषांचित् अर्चिरादिः, अपरेषां च अन्यविध इति, अव्यवस्थित एव—इति शङ्कने) **तत् नैव**—अनियमः इत्येतत् सर्वथा नास्ति, **सर्वत्र**—सर्वास्वपि-शाखासु, **अर्कादिचिह्नसम्भवतः**—आदित्यप्रभृतिकस्य अर्चिराद्यन्तर्भूतार्थप्रत्यायकस्य लक्ष्मप्रत्यभिज्ञापकसत्त्वात्, **नियमनं स्यात्**—सर्वेषामर्चिरादिरेव मार्ग इति नियमोऽस्त्येव ॥ १ ॥

[द्वितीयपादार्थसङ्कलितः तृतीयपादार्थः]

### (2) अधिकरणसारावलिः (श्लो. 1–3)

(500) निर्गत्य ब्रह्मरन्ध्रात् तपनकरमथालम्ब्य नाडीनिबद्धं
प्रत्युद्यद्देववृन्दप्रहितबलिरसौ येन योगी प्रयाति ।
मौकुन्दः स्थाप्यतेऽसौ परमिह मुनिना पञ्चभिर्न्यायभेदै-
र्मोहाकूपारपारं पुरमभिगमयन् मुक्तिघण्टापथो नः ॥ १ ॥

**ब्रह्मरन्ध्रात् निर्गत्य**—ब्रह्मरन्ध्राख्यं मूर्धन्यनाडीचरमप्रदेशं द्वारीकृत्य देहादूर्ध्वमुत्क्रम्य, **अथ**—पश्चात्, **नाडीनिबद्धं तपनकरम् आलम्ब्य**—दैहिकमध्यनाडीसम्बन्धानुवृत्तिमन्तं सूर्यरश्मिमाश्रित्य, **प्रत्युद्यद्देववृन्दप्रहितबलिः असौ योगी**—मोक्षमार्गे गच्छन्तं स्वं प्रत्युत्था-

नादिना सत्कुर्वद्भिः मध्येमार्गमवस्थितैर्दैवगणैः अर्पितोपहारः अयं युक्तो मुक्त आत्मा, **येन प्रयाति**—येन मार्गेण गच्छति, **असौ**—तादृशः, **नः मोहाकूपारपारं परं पुरम् अभिगमयन्**—अस्मान् परप्राप्तिकामान् अज्ञानमयस्य प्रकृतिमण्डलाख्यस्य दुस्तरस्य सागरसदृशस्य परस्तात् तीरे विद्यमानं (तमसः परस्तात्) 'याऽयोध्येत्यपराजितेति विदिता नाकं परेण स्थिता' इति गीयमानम् अयोध्यामिधं ब्रह्मपुरं प्रापयन्, **मौकुन्दः मुक्तिघण्टापथः**—मुकुन्दसम्बन्धी मोक्षार्थो राजमार्गः, **इह**—तुरीयतृतीये चरणे, **पञ्चभिः न्यायभेदैः**—पञ्चसंख्यैः अधिकरणविशेषैः, **स्थाप्यते**—विचारपूर्वकं दृढीक्रियते ॥ १ ॥

(501) शाखाभेदेषु भिन्नां गतिमुपनिषदोऽधीयते तन्मुमुक्षो-
विद्यावैषम्यनीत्या गति (सुति) रपि विषमा न व्यवस्थाऽर्चिरादेः ।
नैतत् सर्वत्र तैस्तैरिह तदिदमिति प्रत्यभिज्ञानसिद्धौ
भाव्यं न्यूनाधिकत्वप्रभृति निखिलमप्यत्र सिद्धाविरुद्धम् ॥ २ ॥

**शाखाभेदेषु उपनिषदः**—विभिन्नवेदशाखाविशेषेष्वन्तःपातिनः छान्दोग्य-वाजसनेयक-कौषीतक्याद्याः श्रुतिशिरोभागाः, **मुमुक्षोः**—मोक्षार्थया इच्छया सम्पादितपरब्रह्मवेदनस्य पुरुषस्य, **भिन्नां गतिम्**—मिथोविलक्षणाम् अन्यान्यां परमपदप्रयाणसरणिम्, **अधीयते**—आमनन्ति, **तत्**—तस्माद्धेतोः, **मुमुक्षोः गतिरपि**—मुमुक्षुचेतनस्य परमपदप्राप्तिसरणिरपि, **विद्यावैषम्यनीत्या**—मोक्षार्थानुष्ठेयासु विद्यासु वैलक्षण्यन्यायमनुरुध्य, **विषमा**—विलक्षणतापन्नैव, इति हेतोः, **अर्चिरादेः व्यवस्था न**—सर्वेषामप्यर्चिःप्रभृतिका पद्धतिरेवेति निर्बन्धो नैवास्ति (इति पूर्वपक्षे), **नैतत्**—ईदृशं शङ्कनं नैव साधु भवितुमर्हम्, **सर्वत्र**—सर्वस्मिन्नपि शाखाविशेषे उपलभ्यमानैः, **तैस्तैः**—अग्नि वायुप्रभृतिभिः मार्गासाधारणचिह्नभूतैः, **इह**—मोक्षार्थगन्तव्यमार्गविषये, **तदिदमिति प्रत्यभिज्ञानसिद्धौ**—'तदेवेदं वर्त्म' इत्येवं प्रत्यभिज्ञारूपज्ञानस्यैकत्वप्रत्यायकस्य उपलब्धौ सत्याम्, ('सर्वत्र श्रुतोऽप्येक एव पन्थाः' इति निश्चये च सम्पन्ने), **अत्र न्यूनाधिकत्वप्रभृति निखिलमपि**—अस्मिन् विषये तत्र तत्रोपलभ्यमानं न्यूनत्वमाधिक्यं चेत्यादि सर्वमपि, **सिद्धाविरुद्धं भाव्यम्**—प्रत्यभिज्ञानसिद्धस्यार्थस्य अनुगुणं यथा स्यात् तथा विचार्य निर्णेयम् ॥ २ ॥

(502) चैद्यादीनामयोध्यास्थिरचरजनुषां पुण्डरीकादिकानां
भीष्मादीनामुपास्तिक्रमभवविभवव्यूहलोकस्थितीनाम् ।
धातॄणां तत्सुतानामधिकृतिविगमे ब्रह्म सम्प्राप्स्यताम-
प्यन्येषां प्रस्थितिः सा शितपृथुमतिभिश्चिन्तनीया यथार्हम् ॥ ३ ॥

**चैद्यादीनाम्**—शिशुपालप्रभृतीनाम्, (भगवता प्राप्तमरणानां तत्रैव भगवति लीनत्वेन इतिहासप्रसिद्धानाम्), **अयोध्यास्थिरचरजनुषाम्**—साकेतनगरवृत्तीनां (श्रीरामचन्द्रपरमपदारोहणसमये तेन सहैव गत्वा सान्तानिकलोकगामिनां) स्थावर-जङ्गमात्मकदेहवतां चेतनानाम्, **पुण्डरीकादिकानाम्**—(भगवतैव स्वयं नीतत्वेन पुराणावगतानां) पुण्डरीकमुखानां भक्तविशेषाणाम्, **भीष्मादीनाम्**— (कुरुपितामहत्वेन भारतप्रसिद्ध-ब्रह्मविदग्रगण्य) भीष्मप्रभृतीनां वस्वंशभूततया वसुपदाद्यवाप्तिद्वारा प्राप्तभगवत्स्थानानाम्, **उपास्तिक्रमभवविभवव्यूहलोकस्थितीनाम्**—उपासनानुगुण्येन क्रमिकसम्भवास्पदश्रीराम-श्रीकृष्णादिभगवद्विभवलोकावस्थान-वासुदेवसङ्कर्षणादिभगवद्व्यूहलोकावस्थानभाजाम्, **धातॄणाम्**—विविधब्रह्माण्डनिर्वहणाधिकृतानां अनन्तानां परमेष्ठिनाम्, (स्वलोकत एवान्ते परमपदगामिनाम्), **तत्सुतानाम्**—ब्रह्मपुत्रतया पुराणावगतानां मरीचि-काश्यपादिप्रजापतीनाम्, तथा सनक-नारदादीनां च, **अधिकृतिविगमे ब्रह्म सम्प्राप्स्यताम्**—प्राप्तस्वाधिकारावसाने परं ब्रह्म प्राप्नुवानानाम्, **अन्येषामपि**—उक्तेतरेषां मुमुक्षुचेतनानामपि, **सा प्रस्थितिः**—तत्र तत्र पुराणेतिहासादिभिरवगम्यमाना मोक्षप्रयाणरीतिः, **शित-पृथुमतिभिः**—कुशाग्रवत् सूक्ष्मार्थावगाहनशीलधीभिः, विविधविलक्षणतात्त्विकार्थविस्तारावगाहिबहुज्ञानवद्भिश्च प्राज्ञैः, **यथार्हम्**—यथायोग्यम्, (विषयगतवास्तवानुरोधि यथा स्यात् तथा), **चिन्तनीया**—निष्कृष्य आलोचयितुमर्हा; न तु स्वाच्छन्द्येन निर्णेयेति ॥ ३ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

उत्क्रान्तिः चिन्तिता । अथ तृतीयेन गतिपादेन मार्गश्चिन्त्यते ।

अर्चिराद्यधिकरणे—छान्दोग्य-कौषीतकीप्रभृतिषु बहुधा मार्गाम्नानात्, 'ब्रह्मविदामर्चिरादिनैव गति'रिति नियमो नास्ति—इत्याशङ्क्य,

सर्वत्राऽपि अर्चिरादिमार्गैकत्वप्रत्यभिज्ञानात्, एक एव मार्ग इति, तेनैव सर्वे गच्छन्ति—इत्युक्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

कालदोषप्रशान्तावप्यर्चिरध्वाऽव्यवस्थितौ ।
विक्षेपान्मोक्षलाभस्याऽक्षेपोऽर्चिर्नीत्यपोदितः ॥ २०० ॥

इति अर्चिराद्यधिकरणम् ॥ १ ॥

—o—

# (147) वाय्वधिकरणम् ॥ ४–३–२ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(208) वायुश्च देवलोकः शब्दविभेदात् पृथग् भवतः ।
न स्यात् योऽयं पवते स देवलोक इति तद्विशेषणतः ॥ २ ॥

**वायुः देवलोकश्च**—वायुशब्दबोध्यः देवलोकशब्दबोध्यश्चेतीमावर्थौ, **पृथक् भवतः**—मिथो विभिन्नावेव भवितुमर्हौ **शब्दविभेदात्**—अर्थबोधकयोः तयोर्द्वयोः शब्दयोः विभिन्नरूपत्वात् (शब्दभेदस्य अर्थभेदनियतत्वात्—इति शङ्कने) **न स्यात्**—अर्थयोर्भेदो नैव भवितुमर्हति, **'योऽयं पवते स देवलोक' इति तद्विशेषणतः**—'योऽर्थः वाति तादृशो देवलोकः' इत्येवं वायुगतासाधारणधर्मं विशेषणीकृत्य देवलोकस्वरूपोक्तेः सदागतिशीलत्ववानर्थः वायुरेवेति देवलोकशब्दार्थस्य निश्चयात् ॥ २ ॥

—o—

## (2) अधिकरणसारावलिः ॥

(503) सम्प्राप्तौ देवलोको मरुदपि च समं वत्सरादित्यमध्ये
नैकत्वं रूढिभेदात् तत इह तु तयोस्तुल्यभावाद्विकल्पः ।
नैवं योऽयं प्रसिद्धः पवत इह मरुद्देवतानां गृहत्वं
तस्योक्तं धारकत्वात्तत उचितमिदं निर्विकल्पं तदैक्यम् ॥ ४ ॥

**देवलोको मरुदपि च**—देवलोकरूपोऽर्थः वायुरूपोर्थश्च, **वत्सरादित्यमध्ये**—संवत्सराख्यस्यार्थस्य आदित्यात्मकार्थस्य च अन्तरा, **समं सम्प्राप्तौ**—(अर्चिरादिपथप्रस्तावे एकविध एव स्थाने श्रुतावुल्लिखितौ, 'मासेभ्यो देवलोकं देवलोकादादित्यम्' तथा 'स वायुलोकमागच्छति....तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति च, **रूढिभेदात्**—रूढ्यात्मिकायाः समुदायशक्तेः प्रत्येकं विभिन्नत्वात् हेतोः, **न एकत्वम्**—देवलोकवायुरूपयोरर्थयोः अभेदो नोपपद्यते, **ततः**—तस्माद्धेतोः, **इह**—अस्मिन् स्थाने, (वत्सरादित्ययोरन्तरा) **तयोः तुल्यभावात्**—वायुदेवलोकयोः समानत्वमाश्रित्य ; **विकल्पः**—उक्तान्यतरकल्पाश्रयणरूपो विकल्पोऽभ्युपगन्तव्यः, (इति पूर्वपक्षे प्राप्ते) **नैवम्**—ईदृशी विकल्पशङ्का न युक्ता, **योऽयं प्रसिद्धः पवते**—यः खलु गतिशीलत्वेन ख्यातानामा सः, **मरुत्**—वायुरेव, **इह**—अस्मिन् स्थाने पठितो देवलोकः ; (नान्यः कश्चन देवावासभूतो लोकः) **तस्य**—वायोः, **धारकत्वात्**—धारकत्वमभिप्रेत्य, **देवानां गृहत्वम् उक्तम्**—'योयं पवते एष देवानां गृहाः' इति श्रुत्या देवान् प्रति गृहत्वं

वर्णितम्, **ततः**—तस्मात् उक्तात् अर्थौचित्यात्, **इदम्**—अत्र प्रदर्शितम्, **निर्विकल्पम्**—विकल्पदोषावकाशरहितम्, **तदैक्यम्**—वायुदेवलोकपदार्थयोः अभिन्नत्वमेव, **उचितम्**—न्याय्यम् ॥ ४ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

वाय्वधिकरणे—छान्दोग्ये वाजसनेयके च आदित्यात्पूर्वमभिहितयोः वायु-देवलोकयोः श्रौतक्रमाविशेषात् अनियमेन प्राप्तिः—इत्याशङ्क्य,

वायु देवलोकशब्दाभ्यां सामान्य-विशेषरूपाभ्याम् एकस्यैव प्रतिपादनात्, अर्थभेदाभावेन न अनियमेन प्राप्तिः—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

शाखाविरोधशान्तावप्यवान्तरविकल्पतः ।
विक्षेपस्याऽपवादाय वायुन्यायसमुद्भवः ॥ २०१ ॥

इति वाय्वधिकरणम् ॥ २ ॥

—o—

# (148) वरुणाधिकरणम् ॥ ४–३–३ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(209) श्रुतिभङ्गेऽप्यगतित्वात् पाठाद्वायोः परे तु वरुणाद्याः ।
तन्नाऽर्थवशाद्वरुणस्तटितः स्यादुपरि तदुपरीन्द्राद्याः ॥ ३ ॥

**श्रुतिभङ्गेऽपि**—'देवलोकादादित्यम्' इति वाजसनेयकवाक्यगतायाः पञ्चमीश्रुतेः बाधेऽपि, **अगतित्वात्**—गत्यन्तराभावात्, **पाठात्**—कौषीतकिश्रुतिगतं पाठमनुरुध्य, **वरुणाद्याः**—वरुणेन्द्रप्रजापतयः आदित्यश्च, **वायोः परे तु**—वायोरनन्तरमेव निवेश्याः (इति शङ्कने), **तन्न**—तदेतन्नोचितम्, **अर्थवशात्**—लोक-वेदप्रथितम् तटितो मेघोदरवर्तित्वरूपम् अर्थसिद्धं क्रममाश्रित्य, **तटित उपरि**—विद्युतः पश्चात्, **वरुणः स्यात्**—वरुणः निवेश्यो भवति, **तदुपरि**—वरुणादनन्तरम्, **इन्द्राद्याः**—इन्द्रप्रजापत्यादयो निवेश्या इति ॥ ३ ॥

—o—

## (2) अधिकरणसारावलिः ॥ (श्लो, 5-6)

(504) कौषीतक्यागमोक्ता वरुण-शतमखौ सोऽपि नाथः प्रजानां
क्काऽपि स्थाप्या निपीड्य श्रुतिमपि विफला ह्यन्यथा तच्छ्रुतिः स्यात् ।
तस्मात् ते वायुलोकात् परमनुपठनात् तत्र सन्त्वित्ययुक्तं
सम्बन्धाद्विद्युतोऽन्वग्वरुण इति परौ पाठतस्तत्परौ स्तः ॥ ५ ॥

**कौषीतक्यागमोक्तः**—'स वरुणलोकं, स इन्द्रलोकं, स प्रजापतिलोकम्' इत्येवं कौषीतकिश्रुतिप्रतिपन्नाः, **वरुण-शतमखौ प्रजानां नाथः सोऽपि**—वरुणः इन्द्रः प्रजापतिर्यः श्रुतः सोऽपि, **श्रुतिं निपीड्याऽपि**—अन्यत्रावगम्यमानं श्रुतिसिद्धं क्रमं बाधित्वाऽपि, **क्काऽपि स्थाप्याः**—यत्र कुत्रचित् स्थाने अवश्यं निवेश्या एव, **अन्यथा**—तेषां क्वचिदप्यनिवेशे, **तच्छ्रुतिः**—तेषामर्चिरादाववस्थानबोधिका श्रुतिः, **विफला हि स्यात्**—अर्थहीना खलु भवेत् , **तस्मात्**—उक्ताद्धेतोः, **ते**—वरुणेन्द्रप्रजापतयः, **वायुलोकात् परमनुपठनात्**—वायुलोकतोऽनन्तरमेव क्रमिकपाठस्य सत्त्वात् . **तत्र सन्तु**—वायोरनन्तरमेव निवेशिता भवन्तु, **इत्ययुक्तम्**—एवं शङ्कनम् असाधु, **सम्बन्धात्**—विद्युतो मेघैकस्थरूपात् सम्बन्धात् , **विद्युतोऽन्वक्**—विद्युतोऽनन्तरमेव, **वरुणः इति**—वरुणो निवेश्य इति हेतोः, **परौ**—अनन्तरश्रुतौ इन्द्रप्रजापती, **पाठतः**—पाठक्रममनुरुध्य, **तत्परौ स्तः**—वरुणपश्चाद्भाविनावेव भवतः ॥ ५ ॥

(505) यत्त्वस्याऽमानवस्य श्रुतिमिह परसम्प्रापकत्वं भवेत्तत्
सद्वारत्वेऽप्यबाधं तदपि सहकृतौ तच्छ्रुतौचित्यभूमा ।
यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतु-
स्तस्यान्नेता स नाऽन्यो विदुरतिवहनं वैद्युतेनैव तस्मात् ॥ ६ ॥

**अमानवस्य**—वैद्युताख्यस्य अमानवत्वविशिष्टस्य आतिवाहिकस्य, **परसम्प्रापकत्वम्**—परब्रह्मगमयितृत्वम् , **इह यत् श्रुतम्**—अत्र मुक्तपुरुषातिवहनप्रकरणे 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति श्रुतिवाक्यतो यदवगतम् , **तत्**—अमानवपुरुषस्य ब्रह्मगमयितृत्वम् , **सद्वारत्वेऽपि**—वरुणेन्द्रप्रजापतिद्वारा ब्रह्मगमयितृत्वेपि , **अबाधम्**—यद्यपि नैव बाधितं भवति ; (अमानवपुरुषप्राधान्यसिद्धावपि गमयितृत्वस्य अलोपात् ) **तदपि**—तथाऽपि , **सहकृतौ**—अमानवकर्तृके ब्रह्मगमयितृत्वे वरुणादीनां सहकारित्वस्य सिद्धौ सत्याम् , **तच्छ्रुतौचित्यभूमा**—प्रकरणप्रतिपन्नार्थस्य अतिशयितं साङ्गत्यमस्ति; (अमानवकर्तृकतायाः स्वारस्यात् ) **तटित उपरि तु**—वैद्युतपुरुषादनन्तरमेव , **ब्रह्मलोकाप्तिहेतुः मानसाख्यः य उक्तः**—

ब्रह्मप्रापणहेतुतया मानसनामा पुरुषविशेषः यः 'वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति श्रुत्या प्रतिपन्नः, **तस्मात्**—तादृशात् मानसाख्यपुरुषात्, **स नेता**—गमयितृत्वेन ज्ञातः अमानवः पुरुषः, **न अन्यः**—अतिरिक्तो न भवति (अनन्य एव; अमानव एव मानसः) **तस्मात्**—उक्ताद्धेतोः, **अतिवहनम्**—पूर्वपूर्वसीमामतिक्रम्य उत्तरोत्तरं मुक्तपुरुषप्रापणरूपं कर्म, **वैद्युतेनैव आहुः**—वैद्युतपुरुषेणैवेति दृढं वर्णयन्ति श्रुत्यर्थचिन्तकाः ॥ ६ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

* तटिदधिकरणे—कौषीतकिनाम्, 'स वायुलोकम् स वरुणलोकं' इत्यादिवाक्ये वायोरनन्तरनिर्दिष्टानां वरुणादीनां यथापाठं तत्रैव प्रवेशः—इत्याशङ्क्य,

तटिद्वरुणयोः मेघोदरोपर्यधोभावावस्थानरूपसम्बन्धात्, तटितोऽनन्तरं वरुणादीनां निवेशः—इत्युक्तम् ॥

[* वरुणाधिकरणस्यैव 'तटिदधिकरणम्' इति आचार्याणामुल्लेखः]

—o—

### (4) नयसङ्गतिमालिका ॥

वरुणाधिक्रियाऽप्येवमन्तस्संशयभेदिनी ।
योगाङ्गत्वेनाऽर्चिरादिचिन्तनं निरुपद्रवम् ॥ २०२ ॥

इति वरुणाधिकरणम् ॥ ३ ॥

—o—

## (149) आतिवाहिकाधिकरणम् ॥ ४–३–४ ॥

### (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(210) उपदेशस्य तथात्वाच्चिह्नानि त्वर्चिरादयः सरणेः ।
नैतद् गमयितृशब्दादुपरि परेऽप्यातिवाहिका हि स्युः ॥ ४ ॥

**अर्चिरादयः**—ब्रह्मप्रेप्सोर्विदुषः देहादुत्क्रमणसमनन्तरं, मध्ये आब्रह्मप्राप्ति श्रुतौ परि-

पठिताः 'अर्चिः, अहः, आपूर्यमाणपक्षः' इत्येवमाद्या अर्थाः, **सरणेः चिह्नानि तु**—परमपदप्राप्त्यर्थं गन्तव्यस्याऽध्वनः लक्ष्मभूता अर्था एव, **उपदेशस्य तथात्वात्**—उपदेशकैः पुरुषैः तत्तन्मार्गचिह्नैः सहैवोपदेशस्य क्रियमाणताया लोकदृष्टत्वात्, (इत्येवं शङ्कने) **नैतत्**—नैतद्युक्तम्, **'गमयितृ'शब्दात्**—'स एनान् ब्रह्म गमयति' इति वैद्युतं पुरुषमुद्दिश्य विदुषा ब्रह्मप्रापकतायाः स्पष्टप्रतिपादकशब्दश्रवणात्, **उपरि**—वैद्युतपुरुषानन्तरं श्रूयमाणाः, **परेऽपि**—वैद्युतपुरुषादन्येऽपि अर्चिरादयः सर्वे, **आतिवाहिकाः हि स्युः**—परमपुरुषेण मुक्तात्मनामतिवहने (प्राप्यब्रह्मपदप्रापणे) नियुक्ताः पुरुषा एव भवितुमर्हन्ति ॥ ४ ॥

—o—

## (2) तत्त्वसारः ॥

अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥ १०२ ॥

**अर्चिरहस्सितपक्षान्**—अर्चिरभिमानिनीं देवताम्, अहरभिमानिनीं देवताम्, शुक्लपक्षाभिमानिनीं च देवताम्, **उदक्षायनाब्दमरुदर्केन्दून्**—उत्तरायण-संवत्सराभिमानिदेवते, वायुदेवताम्, सूर्या-चन्द्रमसौ देवते, **अपि**—तथा, **वैद्युतवरुणेन्द्रप्रजापतीन्**—वैद्युताख्यं मानसापरपर्यायम् अमानवं पुरुषम्, (एवं) वरुणेन्द्र-प्रजापत्याख्यानपि, देवतात्मनः, **आतिवाहिकान् आहुः**—मुमुक्षुजनानां ब्रह्मस्थानप्रापकभूतान् देवान् श्रुत्यादयः अभिदधति ॥ १०२ ॥

## (3) अधिकरणसारावलिः ॥ (श्लो. 7–10)

(506) भोगस्थानान्यमूनि ज्वलनदिनमुखान्यध्वचिह्नानि वा स्यु-
र्लोकोक्तिच्छाययैव स्थितमिदमिति नाऽसम्भवात् कालशब्दे ।
स्पष्टे नेतृत्व-पुंस्त्वे क्वचिदतिवहनं तद्वदन्यैश्च कार्यं
सन्दिग्धे वाक्यशेषाद्गतिरिति जगुरम्न्यादिवाचोऽभिमन्तॄन् ॥ ७ ॥

**अमूनि**—'अर्चिषमभिसम्भवन्ति, अर्चिषोऽहः' इत्यादिश्रुत्यवगतानि, **ज्वलन-दिनमुखानि**—अर्चिरहः प्रभृतीन्यर्थतत्त्वानि, **भोगस्थानानि**—ब्रह्मगन्तॄणां मध्ये विश्रम्य सुखविशेषानुभवोपयोगिलोकरूपाणि भवितुमर्हन्ति, **अध्वचिह्नानि वा स्युः**—मार्गविशेषप्रत्यभिज्ञानोपयोगिवस्तुविशेषरूपाणि वा भवितुं योग्यानि, **इदम्**—अर्चिरादिविषयजातवर्णनम्,

**लोकोक्तिच्छाययैव स्थितम्**—'इमां नदीमतिक्रम्य इमं च पर्वतपार्श्वभूभागमाश्रित्य इदं क्षेत्रं लभ्यं युष्माभिः' इत्येवं लौकिकव्यवहारसिद्धमार्गविशेषोपदेशपरवाक्यसाजात्येनैव, **स्थितम्**—श्रुतावपि दृष्टम्, **इति न**—एवं शङ्कनम्, न युक्तिमत्, **कालशब्दे**—कालाभिधानयोग्ये अहः पूर्वपक्षादिशब्दे, **असम्भवात्**—मार्गचिह्नवाचितायाः भौमभूमिवाचकताया वा बाधोपहतत्वात्, **क्वचित्**—वैद्युताख्ये मानसनाम्नि अमानवे, **नेतृत्व-पुंस्त्वे**—ब्रह्मगमयितृत्वं पुरुषत्वं चेत्युभयमपि, **स्पष्टे**—'सः एनान् ब्रह्म गमयति' इति वाक्यतः असन्दिग्धप्रतिपन्नम्; **तद्वत्**—वैद्युतपुरुषेणेव, **अन्यैश्च**—अहरादिभिरपि, **अतिवहनम्**—(परमात्मनियोगमनुसृत्य) तत्समीपप्रापणम्, **कार्यम्**—कर्तव्यमेव वर्तते, **सन्दिग्धे**—अस्पष्टोक्ततया संशयास्पदे विषये, **वाक्यशेषात्**—प्रधानवाक्योपकारकस्वभावात् संनिहितात्तदेकवाक्यतापन्नाद्वाक्यान्तरात्, **गतिः**—निर्वाहः कार्यः, **इति जगुः**—इत्येवं नीतिविदो मीमांसकाः ऊचुः 'सन्दिग्धे तु वाक्यशेषात्' (पू.मी.सू. (1-4-20) इत्यत्र, **अग्न्यादिवाचः**—श्रुत्यादिपठिताः अग्निशब्दप्रभृतयो हि शब्दाः, **अभिमन्तॄन्**—तत्तदभिमानिभूतान् देवताविशेषांश्चैव, **जगुः**—अभिदध्युः ॥ ७ ॥

(507) यां श्रुत्वा धर्मसूनुर्न्यपतदभिपतेत् तामसौ तामसौघो
वर्गस्त्रैवर्गिकाणां पितृसरणिघटीयन्त्रचक्रे विघूर्णेत् ।
वर्तन्येषाऽर्चिरादेः श्रुतिभिरपुनरावर्तिनां संविभक्ता
तत्र ब्रूतेऽतिवोढॄंस्तदितरवदहःपक्षमासादिशब्दः ॥ ८ ॥

**धर्मसूनुः**—धर्मनन्दनो युधिष्ठिरः, **याम्**—यादृशीं केवलपापकारिभिर्गम्यां नारकीं वर्तनीम्, **श्रुत्वा न्यपतत्**—श्रोत्रतः श्रवणं प्राप्यैव (श्रवणमात्रेणैव दुःखेन प्राप्तमूर्च्छः सन्) भूमौ निपतितवान्, **ताम्** तादृशीमचिन्तनीयघोरतमां नारकसरणिम्, **असौ तामसौघः**—अन्धतामसयोग्यः महातामसस्वभावो जनस्तोमः, **अभिपतेत्**—आभिमुख्येन अनुधावेत् (स्वकर्मवात्या नुन्नः), **त्रैवर्गिकाणां वर्गः**—ऐहिकपारत्रिकाख्यविविधभोगतदनुगुणैश्वर्य-तद्योग्यस्थानाद्यभिलाषुकतया धर्माचरणप्रवृत्तानां (केवलं काम्यसक्तानां) चेतनानां समूहः परं, **पितृसरणिघटीयन्त्रचक्रे**—जलोद्धारकघटीयन्त्रवत् चक्राकारेण पुनः पुनरावर्तनप्रत्यावर्तनाभ्यां अविरतभ्रमणकारिणि पितृयानाख्ये, **विघूर्णेत्**—स्वानधीनप्रवृत्तिमत्तया सदा भ्रम्येत्, **एषा अर्चिरादिः वर्तनी**—'तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः' इत्यादिरूपा अर्चिराद्यभिधानेन प्रथिता सरणिः पुनः, **श्रुतिभिः**—त्रय्यन्तवाग्भिः, **अपुनरावर्तिनां संविभक्ता**—जन्मादिचक्रे आवर्तनप्रत्यावर्तनविदूरीकरणसमर्थभक्ति प्रपत्तिरूपोपायसिद्धानामेव चेतनानां संविभज्य वर्णिता, **तत्र**—तादृशवर्त-

न्यन्तःप्रविष्टार्थबोधनपरः, **अहःपक्षमासादिशब्दः**—(अहः) दिन-पूर्वपक्ष-उदगयनषण्मासादिकः शब्दः, **तदितरवत्**—वैद्युतामानवादिशब्दवत्,—**अतिवोढॄन्**—परब्रह्मपदप्रापकान् तत्तदभिमानिदेवताविशेषानेव, **ब्रूते**—स्ववृत्त्या अभिधत्ते ॥ ८ ॥

(508) पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या
सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्यादृगुक्तम् ।
अन्याऽत्राऽर्चिर्मुखानामतिवहनकृतामष्टमस्याऽऽप्तिरिन्दो-
रित्थं सुस्था व्यवस्था प्रणिहितहृदयैरेवमन्यच्च सूह्यम् ॥ ९ ॥

**पूर्वम्**—इष्टादिकारिणां गतिवर्णनपरे प्रकरणे, **सुकृतिषु**—इष्टापूर्त-दत्तादिपुण्यकर्माचरणपरवचेतनविषये, **धूमादिमार्गे कथिता**—'ते धूममभिसम्भवन्ति' इत्यारभ्य 'आकाशाच्चन्द्रमसम्' इत्येवमादिना वर्णिता, **चन्द्रमः प्राप्तिः**—चन्द्रेण समागतिः, **अन्या**—विलक्षणा, (तस्या देवभोग्य सोमराजभावात्मकत्वात्, **न्यासविद्याप्रकरणपठितम्**—'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इत्येवं प्रस्तुते प्रकरणे अधीतम्, **चान्द्रं सायुज्यम्**—चन्द्रसयुग्भावप्रापणम्, **अन्यादृग्**—पूर्वोक्तचन्द्रमःप्राप्त्यपेक्षया विलक्षणम्, **उक्तम्**—'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इति प्रतिपादितं वर्तते' (तच्च विदुषः ब्रह्ममार्गे किञ्चित्कालं विश्रम्य यानौपयिकम्) **अत्र**—छन्दोग्यीये 'तेऽर्चिषमभिसम्भवन्ति' इत्यादिवाक्यमध्ये, **इन्दोः प्राप्तिः**—'आदित्याच्चन्द्रमसम्' इत्युक्ता चन्द्रोपलब्धिः, **अर्चिर्मुखानाम् अतिवहनकृताम् अष्टमस्य इन्दोः प्राप्तिः**—अर्चिःप्रभृत्यातिवाहिकगोष्ठीप्रविष्टस्य तेष्वष्टमस्य आतिवाहिकभूतस्य चन्द्रस्य प्राप्तिरूपा सती, **अन्या**—विसदृशी वर्तते, [अ[1]र्चिर्दिन[2] पूर्वप[3]क्ष षडुद[4]ङ्मासाऽ[5]ब्द वा[6]तांऽशुम[7]द्ग्लौ[8] विद्यु[9]द्व[10]रुणे[11]न्द्र धातृ[12]रूपद्वादशातिवाहिकेषु अष्टमत्वात् चन्द्रस्येति, एषा सर्वातिवाहिकप्राप्त्या अविलक्षणरूपेति] **इत्थम्**—एवं रीत्या, **सुस्था व्यवस्था**—दृढा विविक्ताऽवस्थितिः (चन्द्रप्राप्तिसम्बन्धिनी), **एवम्**—अनयैव रीत्या, **अन्यच्च**—तत्र तत्र असङ्कीर्णतया श्रुत्या प्रतिपादितमपि सङ्कीर्णत्वशङ्कावहं विषयजातम्, **प्रणिहितहृदयैः सूह्यम्**—सावधानचेतोभिः सुष्ठु ऊहतो निश्चेयम् ॥ ९ ॥

(509) भूलोकेशाग्निपूर्वान् कतिचन भविनः केऽपि मन्यन्त एता-
न्छब्दैक्ये ह्यत्र गुर्वी भवति तदभिमन्त्रन्तराणां प्रक्लृप्तिः ।
अन्ये चाऽमानवस्य स्वपदगतपरब्रह्मनेतृत्वदृष्ट्या
नित्यत्वं तद्वदेतान्त्रिजगदुरखिलान् नित्यवैकुण्ठभृत्यान् ॥ १० ॥

**केऽपि**—श्रुत्यर्थपर्यालोचनप्रवृत्ताः केचन विबुधाः, **एतान्**—अर्चिरादीनातिवाहिकान्, **भूलोकेशाग्निपूर्वान्**—पृथिव्यन्तरिक्षद्युव्याख्यलोकत्रयाधिपतिभूताग्निवाय्वादित्यानेव, **कतिचन भविनः**—कांश्चन संसारमण्डलान्तर्गतानेव, **मन्यन्ते**—श्रुत्युक्तानभिप्रयन्ति, (एतन्मते) **शब्दैक्ये हि**—बोधकशब्दस्य समानानुपूर्वीकत्वकृते अभेदे स्फुटे सति हि, **अत्र**—अग्न्यादि-विषये, **तदभिमन्त्रन्तराणां प्रक्लृप्तिः**—सांसारिकाणां तदितरेषां चेति अभिमानिदेवताभेदानां कल्पना परम्, **गुर्वी भवति**—गौरवग्रस्ता भवति (इत्येतदविवादम्), **अन्ये च**—अपरे च श्रुतितत्त्वार्थचिन्तनप्रवणाः, **अमानवस्य**—अमानवाख्यस्यातिवहिकपुरुषस्य, **स्वपदगतपरब्रह्म-नेतृत्वदृष्ट्या**—परमव्योमगतपरमात्मप्रापकत्वस्य श्रुतौ दर्शनेन, **नित्यत्वम्**—असंसारित्वसहकृतं नित्यसूरित्वं तावदवर्जनीयम्, **तद्वत्**—अमानवपुरुषवदेव, **एतानखिलान्**—अर्चिरादीन् सर्वानपि, **नित्यवैकुण्ठभृत्यान्**—निर्विकारं यद्वैकुण्ठाख्यं नाकं परेण विराजमानं स्थानम् तत्रस्थस्य वैकुण्ठाख्यस्य परमपुरुषस्य नित्यभृत्यान् असंसारिस्वभावानेव, **निजगदुः**—निष्कृष्य खचितं वर्णयामासुः ॥ १० ॥

—o—

## (4) अधिकरणार्थसंग्रहः ॥

आतिवाहिकाधिकरणे—अर्चिरादिप्रतिपादकवाक्यानां लौकिकमार्गोपदेशरूपत्वात्, अर्चिरादयो मार्गचिह्नभूताः; अथवा अहरादीनां मार्गचिह्नत्वानुपपत्तेः, लोकशब्दश्रवणात् ते भोगभूमयः—इत्याशङ्क्य,

'तत्पुरुषोऽमानवः, स एनान् ब्रह्म गमयति' इत्युपसंहारे गमयितृत्वश्रवणात्, पूर्व-मप्यविशेषेणैव श्रुतानां तदेव न्याय्यमिति, अर्चिरादिकाः आतिवाहिकाः—इत्युक्तम् ॥

—o—

## (5) नयसङ्गतिमालिका ॥

आतिवाहिकनीतावप्येवं विशयधूननम् ।
आक्षेपो वाऽपवादो वा सङ्गतिस्त्ववधार्यताम् ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

—o—

## (150) कार्याधिकरणम् ॥ ४–३–५ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(211) चतुर्मुखमुपासितुर्गतिरियं सहि प्राप्यते
परस्य परिपूर्णतः सततमेव सम्प्राप्तितः ।
न तत्परमुपासितुः श्रुतित एव तच्चाऽप्यसत्
परं तदनुजीवमप्युभयतः श्रुतेर्दर्शनात् ॥ ५ ॥

**इयं गतिः**—अर्चिरादिका गतिः, **चतुर्मुखमुपासितुः**—कार्यब्रह्मभूतं हिरण्यगर्भमुपासीनस्यैव श्रुतिसंमता, **हि**—यतः, **सः प्राप्यते**—हिरण्यगर्भरूपो ब्रह्मैव खलु पूर्वमप्राप्तः सन् प्राप्तिमर्हति, (परिमितदेशवर्त्तित्वात्) **परस्य**—परब्रह्मरूपस्य नित्यस्य ब्रह्मणः, **परिपूर्णतः**—सर्वत्र परिपूर्णत्वेन हेतुना, **सततमेव**—सर्वदा सर्वत्रैव च, **सम्प्राप्तितः**—प्राप्तेः स्वयमेव सिद्धत्वेन नूनतया गतिपूर्वकं प्राप्यत्वासम्भवात्, **न**—नेदं साधु, **तत्**—अर्चिरादिगत्या गमनमित्येतत्, **परमुपासितुः**—परं ब्रह्मोपासीनस्यैवेति यत्, **तच्चापि**—उभयमपि, **असत्**—असाधु, **श्रुतित एव**—श्रुतिबलादेव, **परम्**—(किन्तु) 'परं ब्रह्मोपासीनम्', **तदनुजीवमपि**—'परमात्मात्मकं प्रकृतिवियुक्तं स्वात्मानमुपासीनमपि च अर्चिरादिकया गत्या आतिवाहिकगणो नयती'त्येतत्साधु, **उभयतः श्रुतेर्दर्शनात्**—'तद्य इत्थं विदुः' इति, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति च द्विधाप्युल्लिख्य, 'अर्चिषमभिसम्भवन्ति' इति अर्चिरादिगतिश्रुतिदर्शनात् ॥ ५ ॥

—o—

### (2) अधिकरणसारावलिः (श्लो. 11–17)

(510) वैधात्रस्थाननेतॄन् समकथयदिमान् बादरिस्तादृशानां
गत्यौचित्यं तदा स्यान्न खलु विभुजुषामत्र वेद्यं न लभ्यम् ।
सामीप्याद् ब्रह्म चोक्तः सरसिजवसतिस्तेन सार्धं च मुक्ति-
र्युक्तेत्येतन्न नानाश्रुतिपठितपरस्थानमत्याद्यबाधात् ॥ ११ ॥

**बादरिः**—बादरिनामा आचार्यः, **इमान्**—अर्चिःप्रभृतीन् आतिवाहिकत्वेनोक्तान् सर्वान्, **वैधात्रस्थाननेतॄन्**—चतुर्मुखस्थानप्रापकान्, **अकथयत्**—अवोचत्, **तदा**—चतुर्मुखस्थानभूतब्रह्मपदप्रापकत्वे एवातिवाहिकानाम्, **तादृशानाम्**—हैरण्यगर्भपदप्राप्त्यर्हाणां कार्यब्रह्मोपासकानाम्, **गत्यौचित्यं स्यात्**—(चतुर्मुखस्य परिमितदेशवृत्तित्वेन) स्थानात् स्थानान्तरप्राप्त्यर्थे गमनव्यापारे युक्तता भवेत्, **विभुजुषाम्**—सर्वव्यापिपरब्रह्मोपासकानाम्, **वेद्यम्**—

उपास्यभूतं ब्रह्मवस्तु, **अत्र**—स्वस्याधारभूते स्थाने, **न खलु न लभ्यम्**—अप्राप्यं नैव भवति खलु, (सर्वगतस्य वस्तुनः सर्वैर्नित्यप्राप्तत्वात्), **सरसिजवसतिः**—कमलासनश्चतुर्मुखः, **सामीप्याच्च**—ब्रह्मणः प्रथमजत्वेन हेतुना तदत्यन्तनैकट्यं निमित्तीकृत्य, **ब्रह्म उक्तः**—'स एनान् ब्रह्म गमयती'त्यत्र स्वकारणभूतब्रह्मत्वेन निर्दिष्टः **मुक्तिः**—(कार्यब्रह्मोपासकानां) सर्वाविद्यानिवृत्त्या अपुनरावृत्तिरूपा मुक्तिः, **तेन सार्धं च**—स्वोपासितेन स्वप्राप्तेन च हिरण्यगर्भेण सहैव, **युक्ता**—'ब्रह्मणा सह ते सर्वे' इत्यादिस्मृत्यवगतत्वात् प्रामाण्ययुक्ता, **इत्येतत् न**—इतीदृशं बादरेर्मतम् न साधुतां भजते, **नानाश्रुति....द्यबाधात्**—बहुश्रुत्याम्नातस्य परमपदाख्यस्य ब्रह्मस्थानस्य तत्स्थानगमनस्य च प्रमाणसंप्रतिपन्नस्य बाधायोगात् ॥ ११ ॥

(511) मार्गोऽसावर्चिरादिर्गमयति परमं धाम गत्यादि योगाद्
ब्रह्मोक्तेर्मुख्यभावादिति तु निरणयज्जैमिनिर्युक्तमेतत् ।
वक्तव्यं त्वत्र किंचिन्नयति परविदः स्वान्वितब्रह्मनिष्ठान्
तद्देहस्वात्मनिष्ठानपि मुखभिदयाऽमी च सम्पूर्णनिष्ठाः ॥ १२ ॥

**असौ**—प्रस्तुतः, **अर्चिरादिः मार्गः**—अर्चिःप्रभृत्यातिवाहकयुक्तो ब्रह्ममार्गः, **गत्यादियोगात्**—ब्रह्मप्राप्त्यर्थगमन.ब्रह्मप्राप्त्यादेर्विषयस्य अबाधितत्वात्, (तथा) **ब्रह्मोक्तेः मुख्यभावात्**—ब्रह्मशब्दव्यपदेशस्य (ब्रह्म गमयती'ति) अनौपचारिकत्वलाभात्, **परमं धाम**—परब्रह्मस्थानमेव, **गमयति**—प्रापयति, **इति तु**—इत्येव, **जैमिनिः निरणयत्**—जैमिनिनामा आचार्यो निर्धारितवान्, **युक्तमेतत्**—जैमिनिना निर्णीतं न्याय्यमेव, **अत्र वक्तव्यं तु किंचित्**—अस्मिन् प्रस्तावे कथनीयं किञ्चिदस्ति, (किमिति चेत्) **परविदः**—परब्रह्मोपासकान्, **स्वान्वितब्रह्मनिष्ठान्**—स्वात्मशरीरकपरमात्मोपासकान्, **तद्देहस्वात्मनिष्ठानपि**—परमात्मशरीरभूतस्वो(प्रत्यगात्मो) पासकानपि (इति द्विविधानपि), **नयति**—परमं धाम प्रापयत्यातिवाहिको गणः, **अमी च**—उक्ता द्विविधा अप्युपासकाः, **मुखभिदया**—परमात्मविशेष्यकत्व-स्वात्मविशेष्यकत्वरूपमुखभेदतः, **सम्पूर्णनिष्ठाः**—कृत्स्नोपासका एव ; (आत्मोपासकत्वाक्षतेः) न तु 'अकृत्स्नो ह्येषः' इत्युक्ताऽकृत्स्नोपासका इति ॥ १२ ॥

(512) ध्यायेयुर्ये च जीवान् प्रकृतिशबलितान् केवलान् वा यथेष्टं
द्वेधाऽपि ब्रह्मदृष्ट्या जडनिवहमपि स्वेन यद्वाऽन्यदृष्ट्या ।
ते सर्वे हि प्रतीकप्रणिहितमनसो नाऽर्चिराद्यध्वयोग्या
ब्रह्मोपास्तेश्च लिङ्गं गतिरियमनघा सूत्रिता पूर्वमेव ॥ १३ ॥

**ये च**—ये पुनरुपासकाः, **प्रकृतिशबलितान्**—अचिन्मिश्रान् वा, **केवलान् वा**—शुद्धान् वा, **जीवान्**—चिद्रूपानर्थान्, **यथेष्टम्**—स्वस्याभिलाषानुगुणम्, **ध्यायेयुः**—उपासीरन्, **द्वेधाऽपि**—प्रकृतिशबलितान् केवलानेव वा तानेव जीवान्, **ब्रह्मदृष्ट्या**—अध्यस्तब्रह्मभावेन, **ये च ध्यायेयुः**—ये वा उपासीरन्, (तथैव) **जडनिवहमपि**—अचेतनवर्गमपि वा, **स्वेन**—स्वरूपेण वा, **यद्वा अन्यदृष्ट्या**—धर्म्यन्तराध्यासतो वा ये उपासीरन्, **ते सर्वे**—उक्तविधाः षट्प्रकारा उपासका अपि, **हि**– यतः, **प्रतीकप्रणिहितमनसः**—शरीरभूतार्थोपासनासक्तचेतसः, **अतः अर्चिराद्यध्वयोग्याः न**—अर्चिराद्यातिवाहिकयुक्तब्रह्मपथयानार्हा न भवन्ति, **अनघा**—अघ(पाप)सम्बन्धविदूरा, **इयं गतिः**—अर्चिरादिपथे यात्रा, **ब्रह्मोपास्तेश्च**—निरन्तरानुष्ठितायाः ब्रह्मोपासनक्रियाया एव, **लिङ्गम्**—अव्यभिचरितं ज्ञापकमिति, **पूर्वमेव सूत्रिता**—प्रागेव 'श्रुतोपनिषत्कगत्यभिधानाच्चे'ति सूत्रतः स्पष्टीकृता ॥ १३ ॥

(513) प्रत्यापत्तिप्रकारः प्रतिनियतिमती कर्मयोगादिनिष्ठा
विद्याभेदाधिकारः परभजनबलान्मुक्तिविघ्नोपशान्तिः ।
अन्त्यावस्थाऽव्यवस्था पृथगयनगतौ विश्रमाप्तिर्विभक्ता
साक्षान्मुक्तिः क्रमाद्वेत्यखिलमगतिकैरप्रणोद्यं परैश्च ॥ १४ ॥

**परैश्च**—सिद्धान्तान्तरालम्बिभिः (अद्वैतमतनिष्ठैरपि), **प्रत्यापत्तिप्रकारः**–(जीवस्य स्वभावसिद्धे अविद्याविनिर्मुक्तेऽवस्थाविशेषे इच्छया) मोक्षोपाये प्रवृत्तिः, **प्रतिनियतिमती**—वर्णाश्रमादिव्यवस्थानुरोधिनी, **कर्मयोगादिनिष्ठा**—कर्मयोगे ज्ञानयोगे वा तत्तदितिकर्तव्यता-कलापयुक्ता अचाल्या अनुष्ठानप्रवृत्तिः, **विद्याभेदाधिकारः**—तस्य तस्य चेतनविशेषस्य श्रुत्युक्तविद्यास्तोमान्तःपातिविद्याविशेषानुष्ठानयोग्यतासम्पत्तिः, **परभजनबलात् मुक्तिविघ्नोपशान्तिः**—परमात्मोपासनरूपविद्यागतात् सामर्थ्यात् मोक्ष-तदुपायानुष्ठानसान्तत्यविरोधिप्रत्यूह-शमनसिद्धिः, **अन्त्यावस्थाऽव्यवस्था**—देहादुत्क्रमणावस्थायाः 'वाङ्मनसि सम्पद्यते' इत्यादि व्यवस्थावत्त्वम्, (यद्वा) विदुषो मरणविषये अहो-रात्रि-दक्षिणायनोत्तरायणादिव्यवस्था-विशेषस्याऽभावः, **पृथगयनगतौ विश्रमाप्तिः**—उदगयने तदितरस्मिन् दक्षिणेऽयने वा गतौ (मृतौ) जातायां आदित्ये चन्द्रमसि च आन्तरालिकविश्रान्तिलाभः, **साक्षात् क्रमात् इति विभक्ता मुक्तिर्वा**—(अद्वारकतया परब्रह्मोपासकानां सद्विद्यादिविद्याविशेषनिष्ठानां) साक्षात् मुक्तिः, (मधुविद्याख्यविशेषनिष्ठानां वस्वादिपदप्राप्तिपूर्विका) क्रमिकी मुक्तिर्वा, **इत्यखिलम्**—इत्येतत् सर्वमपि विषयजातम्, **अगतिकैः**—निर्वाहकान्तररहितैः सद्भिः, **अप्रणोद्यम्**—

वेदान्तगतत्वं निमित्तीकृत्य अनिरसनीयतया कथञ्चित् अवश्याभ्युपगन्तव्यमास्ते । (परं तत्रैव शास्त्रप्रतिपन्नेऽर्थे व्यावहारिकत्व-पारमार्थिकत्वादिकं स्वैरेव कल्पितं सत् तेषां वैलक्षण्यकरमिव भासते) ॥ १४ ॥

(514) पन्थानं देवयानं तमिममधिगतः पश्चिमे देहपाते
तत्त्वस्तोमांस्तमोन्तानतिपतति तरत्यापगां तत्र दिव्याम् ।
दिव्यं देहादि लब्ध्वा जनिलयरहितं याति विष्णोः पदं तत्
पर्यङ्कारोहणान्तां भजति बहुमतिं ब्रह्मसंवादधन्यः ॥ १५ ॥

**पश्चिमे देहपाते**—चरमे देहावसाने, **तमिमम्**—एतावद्दूरं प्रस्तुत्य वर्णितम्, **देवयानं पन्थानम्**—देवयानाभिधानेन श्रुतिसिद्धं ब्रह्ममार्गम्, **अधिगतः**—प्राप्तवांश्चेतनः, **तमोन्तान् तत्त्वस्तोमान्**—'पृथिव्यप्सु प्रलीयते' इत्यारभ्य, 'अक्षरं तमसि लीयते, तमः परे देव एकीभवति' इत्युक्तविधया पृथिव्यादितमःपर्यन्तान् व्यष्टि-समष्टितत्त्वसङ्घातान् स्वबन्धकतया अनादिप्रवृत्तान् सर्वानपि, **अतिपतति**—अतिलङ्घ्योर्ध्वं गच्छति, **तत्र**—परमपदसीम्नि, **दिव्याम् आपगाम्**—दैवीं सरितं विरजाख्याम्, **तरति**—(तत्र स्नानतः निर्मुक्तसमस्तप्रकृतिसङ्गः सन्) तामत्येति, **दिव्यं देहादि लब्ध्वा**—परमपदासाधारणं तनुकरणादिकं प्राप्य, **जनिलयरहितम्**—उत्पत्तिविनाशासंस्पृष्टम्, **तत्**—अवाङ्मनसगोचरज्ञानादिषाड्गुण्यमयम् वाचः परमम्, **विष्णोः पदम्**—जगदादिपूरुषस्य महाविष्णोर्धाम, **याति**—प्राप्नोति, **पर्यङ्कारोहणान्ताम्**—भगवत्पर्यङ्कारोहणाध्यावमानाम्, **बहुमतिम्**—ब्रह्मसंमानसम्पत्तिम्, **भजति**—लभते, **ब्रह्मसंवादधन्यः**—परब्रह्मभूतेन भगवता सहामृतमयेन वार्तालापेन एतदन्तमलब्ध्वालब्धेन धन्यपदाभिधेयश्च भवति ॥ १५ ॥

(515) सङ्घाते नित्यता न क्वचिदपि न पृथिव्यादिभावस्तथात्वे
पर्यङ्काद्यैर्न साध्यं किमपि भगवतः पूर्णनिःसीमशक्तेः ।
व्याप्तप्राप्त्यर्थमूर्ध्वं गतिरपि विफलेत्यादिकान् हैतुकानां
क्षोदिष्ठक्षीबजल्पान् श्रुतिरुपशमयेदद्भुतार्थस्वतन्त्रा ॥ १६ ॥

**सङ्घाते**—(नित्य)वैकुण्ठाभ्युपगन्तृभिः अवश्यमङ्गीकार्ये दिव्ये भूतसङ्घाते (अवयवानां स्तोमे), **क्वचिदपि**—यत्र कुत्राऽपि, **नित्यता न**—अविनाशिस्वरूपता नैवाऽभ्युपेतुमर्हा, (अवयवसंयोगस्य क्रियासाध्यस्य विनाशावश्यभावात्, नाशत्वावच्छिन्नं प्रति जन्यभावत्वस्य प्रयोजकत्वात्) **तथात्वे**—यदि सङ्घाते नित्यत्वमभ्युपगम्येत तर्हि, **पृथिव्यादिभावः न**—

उत्पत्तिविनाशाविनाभाविपृथिवीत्वादिकं नैव युज्येत, (तथैव) **पूर्णनिःसीमशक्तेः**—सर्वत्र पूर्णस्य निरवधिकशक्तिसम्पन्नस्य च, **भगवतः**—परस्य ब्रह्मणः, **पर्यङ्काद्यैः**—(अपूर्णानामल्पशक्तीनां च भोगाधानस्वाभाव्यवद्भिः) पर्यङ्कखट्वातल्पप्रभृतिभिः सामाग्रीविशेषैः (विशिष्टाद्वैतिसंमतैः), **साध्यं किमपि न**—सम्पाद्यं यत्किंचिदपि फलं नैव सम्भवति, **व्याप्तप्राप्त्यर्थम्**—सर्वव्याप्तस्य तस्य प्राप्तये, **ऊर्ध्वं गतिरपि**—अर्चिरादिकया सरण्या उच्चैर्गमनमपि, **विफला**—निष्प्रयोजनमेव, **इत्यादिकान्**—एवमादिरूपेण स्वच्छन्दं प्रवर्तमानान्, **हैतुकानां क्ष्वोदिष्ठक्षीबजल्पान्**—कौतस्कुतप्रवृत्तीनां क्षुद्रतमान् मत्तप्रलापानुकारिणो वार्तालापान्, **अद्भुतार्थस्वतन्त्रा**—आश्चर्यतमापूर्वार्थप्रतिपादने परानपेक्षस्वयम्प्रामाण्यवती, **श्रुतिः**—वेदवाक्, **उपशमयेत्**—निरवशेषीकुर्यात्, (वेदप्रामाण्यस्य सर्वस्वतन्त्रस्य चिन्तने क्रियमाणे, केवलयुक्त्याभासविरुद्धत्वेन निमित्ततामापादितेन तदर्थाक्षेपणं नैव जायेत केषामपीति) ॥ १६ ॥

(516) भावोऽभावश्च यत्राऽनुपधि समुदितौ तत्र भावीविरोधः
प्रज्ञातव्याप्तिरोधेऽप्यधिकनिजबलान्मानतः स्वार्थसिद्धिः ।
दृष्टं सर्वेष्टमेतन्न यदि न हि भवेन्मानमध्यक्षतोऽन्यद्
बाधोऽध्यक्षे मिथो वा वटदलशयनाद्यद्भुतं चैवमूह्यम् ॥ १७ ॥

**यत्र**—यादृशे व्यवहारे, **अनुपधि**—काल-देशाद्युपाधिसम्बन्धमनन्तर्भाव्यैव, **भावः अभावश्च**—विधि-निषेधरूपावर्थौ, **समुदितौ**—समावेशं प्राप्नुतः, **तत्र**—तादृशे व्यवहारे, **विरोधः भावी**—अर्थव्याघातः अवर्जनीयसिद्धिकः, ('गौः सास्नावती, गौः न सास्नावती' इति ; तत्तदभावयोः आत्यन्तिकतया एकाधिकरणत्वाभावध्रौव्यात् । शाश्वतिकविरोधवतोः सामानाधिकरण्यस्य प्रमाणतः प्रतिपत्तेरयोगात्) **अधिकनिजबलात् मानतः**—अतिशयितस्वाभाविकप्राबल्यवतः प्रमाणात्, **प्रज्ञातव्याप्तिरोधेऽपि**—भूयोदर्शनतो गृहीतायाः व्याप्तेः प्रतिरोधस्थलेऽपि, **स्वार्थसिद्धिः**—व्याप्तिप्रतिरोधकप्रबलप्रमाणस्य विषयसिद्धिर्भवति, (यथ श्यामवर्णदेहत्व-मित्रातनयत्वयोर्द्वयोर्धर्मयोः पञ्चषेषु मित्रातनयेषु सहचारदर्शनेन 'यत्र यत्र मित्रातनयत्वं, तत्र तत्र श्यामत्वम्' इति व्याप्तेर्ग्रहेऽपि, सप्तमे मित्रातनये प्रत्यक्षतः, पूर्वगृहीताया व्याप्तेर्बाधपूर्वकं लोहितवर्णत्वादिनिश्चयात् प्रत्यक्षस्य विषयसिद्धिरबाधितैव । एवमेव स्वर्गापवर्गादिसम्बन्ध्यर्थविशेषप्रतिपादकानां मिथः स्वव्याहतिरहितानां लौकिकदर्शनबाधितानामिव अनुमानबाधितानामिव च भासमानानामपि श्रौतवाक्यानां, सर्वोत्कृष्टप्रमाणभूतानां, स्वाभाविकादेव स्वगतात् अर्थनिश्चायनसामर्थ्यात्, लौकिकप्रत्यक्षानुमानादीनामाभासीकरणतः स्वनिर्णेयप्रमेयसिद्धिः

अनपह्नवनीयैवेति नित्यविभूत्यादयो नैव निरासार्हा भवन्ति ॥) **दृष्टम्**—लोकेऽपि विषयविशेषे अनुभूतम्, **सर्वेष्टम्**—सर्वैरपि तत्र तत्र अभ्युगतं च, **एतत्**—सामान्यप्रमाणभूतस्य प्रमाणविशेषेण विषयविशेषावगाहिना तद्विषये आभासीकरणमित्येतत्, **न यदि**—नित्यविभूत्यादिविषयके श्रुतिरूपे प्रमाणे नाभ्युपगम्येत यदि तदा, **अध्यक्षतोऽन्यत्**—प्रत्यक्षेतरत् यत्किमपि आप्तवाक्यादिकम्, **न हि मानं भवेत्**—प्रमाणं नैव भवेत्, **अध्यक्षे बाधः**—प्रत्यक्षेतरस्याप्तवाक्यादेरप्रामाण्ये तन्मूलभूते प्रत्यक्षेऽपि बाधितत्वमवर्जनीयं स्यात, **मिथो वा बाधः**—व्याप्तिमूलकानुमानाप्तवाक्ययोरुभयोरपि वा परस्परं बाधः स्यात्, **वटदलशयनादि**—अनन्तानन्तब्रह्माण्डानि स्वोदरे निगीर्य संस्थाप्य वटपत्रे शयनादिरूपम्, **अद्भुतं च**—भगवतः आश्चर्यचरितमपि इतिहास-पुराणादिप्रसिद्धम्, **एवमूह्यम्**—अनयैव रीत्या शास्त्रैकवेद्ये विषये प्रत्यक्षानुमानादीनां प्रतिरोधकत्वसम्भवं विचार्य साधु निर्णेयम् ॥ १७ ॥

—o—

## (3) अधिकरणार्थसंग्रहः

कार्याधिकरणे—हिरण्यगर्भमुपासीनान् आतिवाहिका गमयन्ति ; तस्यैव देश-कालविशेषवत्तया तत्प्राप्त्यर्थगत्युपपत्तेः—इति बादरिमतमनूद्य, 'स एनान् ब्रह्म गमयति' इति ब्रह्मशब्दस्य परमात्मन्येव मुख्यवृत्तत्वात्, परमात्मनः सर्वगतत्वेऽपि निरवशेषाविद्यानिवृत्त्यर्थं देशविशेषगत्युपपत्तेः, परमेव ब्रह्मोपासीनान् नयति—इति जैमिनिमतेनाऽपोद्य, 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमभिसम्भवन्ति' इति पञ्चाग्निविद्यानिष्ठानां परब्रह्मोपासकानां च अर्चिरादिश्रवणात् प्रतीकालम्बनव्यतिरिक्तान् नयति—इति स्वमतमुपन्यस्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

आतिवाहिकनिर्णीतावप्यतिवाह्याव्यवस्थितौ ।
वैफल्याक्षेपसंशान्त्यै कार्याधिकरणोदयः ॥ २०४ ॥

इति कार्याधिकरणम् ॥ ५ ॥

—o—

चतुर्थाध्यायीयतृतीयपादगताधिकरणानाम्

# अर्थसङ्क्षेपः

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(212) अर्चिरादेस्तु नियमो वायोः स्वर्गस्य चैकता ।
तटितो वरुणप्राप्तिरातिवाहिकता ततः ॥ ६ ॥

(213) फलं जीव-परोपास्त्योरर्चिरादिगतिस्त्वियम् ।
इति सर्वमनेनैव पादेन परिचिन्तितम् ॥ ७ ॥

1) **अर्चिरादेस्तु नियमः**—ब्रह्मप्राप्तियोग्यानां विदुषां चरमशरीरावसाने देहोत्क्रमणानन्तरं अर्चिःप्रभृत्यातिवाहिकगणयुतस्यैव वर्त्मनो ब्रह्ममार्गत्वम्; नान्यस्येति नियमः, 2) **वायोः स्वर्गस्य च एकता**—श्रुतौ क्वचित् वायुशब्देन, क्वचित् देवलोक(स्वर्ग)शब्देन चोक्तस्याऽर्थस्य अभेदः, 3) **तटितो वरुणप्राप्तिः**—विद्युतोऽनन्तरमेव वरुणस्य निवेशः, 4) **आतिवाहिकता ततः**—मध्येमार्गं निर्दिष्टानाम् अर्चिर्दिनादीनां विदुषो ब्रह्मपदप्रापकत्वरूपम् अतिवोढृत्वमेव; न तु मार्गचिह्नत्वम्, न वा भोगभूमित्वम्, 5) **इयम् अर्चिरादिगतिः जीव-परोपास्त्योः फलम्**—उक्ता अर्चिरादिसरणिः परमात्मशरीरतया जीवोपासनस्य शुद्धस्य परमात्मन उपासनस्यैव फलतया लभ्यम्; न तु कार्य-प्रतीकाद्युपासनस्य, **इति सर्वम्**—एवंरूपमर्थपञ्चकम्, **अनेन पादेनैव**—विवृतेन तुरीयाध्यायीयतृतीयचरणेन, **चिन्तितम्**—विचार्य सप्रमाणं निर्धारितम् ॥ ६, ७ ॥

—o—

## (2) अधिकरणसारावलिः

(517) एकत्वं ब्रह्मविद्यापरिषदि सुपथोऽधीयमानस्य तस्मिन्
वायौ स्वःद्देवलोकश्रुतिरपि वरुणाद्यन्वयो विद्युतोऽपि ।
नेतारोऽमानवान्ताः परपदगमने तद्विदां सोऽयमध्वा
तुर्याध्यायस्य पादे सृतिरधिकरणैरित्थमुक्ता तृतीये ॥ १८ ॥

**ब्रह्मविद्यापरिषदि**—मोक्षार्थब्रह्मोपासनप्रतिपादनपरेषु विविधेषूपनिषद्भागेषु, **अधीयमानस्य**—पठ्यमानस्य, **सुपथः**—समीचीनस्यार्चिरादेर्वर्त्मनः, **एकत्वम्**—अभेदः, **तस्मिन्**

**वायौ स्यात् देवलोकश्रुतिः**—अर्चिरादिसरणौ परिपठिते वायुरूपेऽर्थे एव वाचकतयोक्तः श्रुतिस्थः देवलोकशब्दो भवेत्, **विद्युतोऽधि**-तन्मार्गस्थात् विद्युद्रूपादर्थादुपर्येव, **वरुणाद्यन्वयः**—वरुणेन्द्रप्रजापतीनां निवेश्यत्वेनान्वयः, **अमानवान्ताः**—अर्चिराद्याः अमानवपुरुषपर्यन्ताः श्रुत्युक्ताः सर्वे (मध्येमार्गं श्रुताः), **परपदगमने नेतारः**—परस्य ब्रह्मणः स्थानं प्रति प्रयाणे कार्ये विदुषां गमयितारः—अतिवोढारः, **सोऽयम् अध्वा**—एवं प्रक्रान्तोऽर्चिरादिपथः, **तद्विदाम्**—परमात्मोपासकानां गन्तव्यो ब्रह्मपथः; न प्रतीक-दृष्ट्याद्युपासकानाम्, **इत्थम्**—अनेन प्रकारेण, **तुर्याध्यायस्य तृतीये पादे**—चतुर्थाध्यायगते तार्तीयीके चरणे, **अधिकरणैः**—पञ्चसङ्ख्यैरधिकरणैः, **सृतिः उक्ता**—विदुषां ब्रह्मगतिः चिन्तिता वर्तते ॥ १८ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

तृतीयपादे पञ्चाधिकरण्युभयसम्पुटा ।
मार्गातिवाहविशयापुनरङ्कुरशान्तये ॥ २०५ ॥

इति चतुर्थेऽध्याये तृतीयो गतिपादः ॥ ३ ॥

—o—

## (16) चतुर्थः फल(मुक्ति)पादः ॥ ४–४ ॥

# (151) सम्पद्याविर्भावाधिकरणम् ॥ ४–४–१ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(214) नित्योपलब्धेरसुखत्वतश्च केनाऽपि रूपेण सुखैकभाजा ।
मुक्तस्य सम्बन्ध इति त्वसत् स्यात् 'स्वेने'ति शब्दादतिरोहितत्वात् ॥ १ ॥

**नित्योपलब्धेः**—स्वं प्रति स्वात्मनः सदैव लब्धत्वात्, **असुखत्वतश्च**—स्वस्य स्वानुभवकाले आनन्दरूपताया अविषयत्वात्, [अभिनिष्पत्तिः—'स्वेन रूपेणाऽभिनिष्पद्यते' इति श्रुत्युक्तः अभिनिष्पत्तिपदाभिधेयोऽर्थः], **मुक्तस्य**—संसारनिगडात् विमोचनं प्राप्तवतो जीवस्य, **सुखैकभाजा केनापि आकारेण**—आनन्दैकास्पदेन येन केनचित् स्वीयभिन्नेन आकारविशेषेण साकम्, **सम्बन्धः**—मुक्तिदशाकालीनः अन्वय एव; न तु स्वरूपलाभात्मकः सः, **इति तु**—एवं शङ्कनं तु, **असत् स्यात्**—असाध्वेव भवेत्, **अतिरोहितत्वात्**—बन्धावस्थाकालीनतिरोहितत्वविरोध्यतिरोहितत्वावस्थां पुरस्कृत्य, **स्वेनेति शब्दात्**—गुणाष्टके धर्मभूतज्ञानसङ्कोचे च आत्मस्वरूपे 'स्वेने'ति विशेषणशब्दप्रयोगात् स्वीयातिरिक्ताकारान्वयस्य श्रुत्यनभिमतत्वात् 'स्वेन रूपेण अभिनिष्पद्यते' इत्येवंरूपात् छांदोग्यश्रुतिगतात् स्पष्टवचनात् ज्ञापकात्, **अतिरोहितत्वात्**—संसारकाले (मुक्तेः पूर्वं) तिरोहितस्य आनन्दैकरूपस्वरूपस्य मुक्तौ तिरोधाननिवृत्तिमात्रस्यैव श्रुत्यर्थत्वात् ॥ १ ॥

—o—

### (2) अधिकरणसारावलिः ॥ (श्लो. 1–7)

[पादादौ वक्तव्यो विशेषः]

(518) उक्तं पादैरघानामिति पृथुवपुषः सूक्ष्ममूर्तेश्च हानं
निर्धूतोपाधिराशेर्निरुपधिकमहानन्दमन्त्येन वक्ति ।
स्वाविर्भावोऽत्र चिन्त्यस्त्रिभिरधिकरणैश्छन्दवृत्तिस्त्रिभिश्च-
त्येवं द्वे पेटिके स्तः स्वत उभयमिदं नोपधेनार्थनिघ्नम् ॥ १ ॥

**पादैः**—तुरीयाध्यायसम्बन्धिभिः आदितस्त्रिभिश्चरणैः, **अघानां हानम्**—अघपदाभिधेयानां सञ्चितानां कर्मणां निरवशेषक्षयः, **पृथुवपुषः हानम्**—स्थूलशरीराद्विमोकः, **सूक्ष्ममूर्तेश्च हानम्**—सूक्ष्मशरीरसम्बन्धवर्जनम्, **इत्युक्तम्**—इत्येवम् अर्थत्रयं यथाक्रमं निरूपितम्,

**निर्धूतोपाधिराशेः**—निवृत्तकर्मादिनिखिलोपाधिजातस्य चेतनस्य, **निरुपधिकमहानन्दम्**—सर्वोपाधिसम्बन्धविधुरम् अपरिमितमानन्दम्, (मुक्तात्मनो भाविनम्) **अन्त्येन**—चतुर्थेनाऽनेन फल(मुक्ति)पादेन, **वक्ति**—सूत्रकृत् निरूपयति, **अत्र त्रिभिरधिकरणैः**—अस्मिन्नपि पादे सम्पद्याविर्भाव-अविभागेन दृष्टत्व-ब्राह्माधिकरणरूपैः त्रिभिर्न्यायैः, **स्वाविर्भावः**—स्वेन रूपेणाभिनिष्पद्यते इत्युक्तः, स्वस्वरूपस्य मुक्तौ तिरोधानविमोकेन प्रकाशः, **चिन्त्यः**—विचार्य निर्णेयः, **त्रिभिः**—तत्पश्चात्तनैः सङ्कल्प-अभाव-जगद्व्यापारवर्जाख्यैः त्रिभिरधिकरणैः, **छन्दवृत्तिश्च**—'स स्वराड् भवति, सर्वेषु लोकेषु कामचारो भवति' इत्युक्तमोक्षकालिकस्वच्छन्दवर्तनं (भगवदिच्छाधीनस्वेच्छानुगुणवर्तनम्), चिन्त्यं वर्तते, **इत्येवं द्वे पेटिके स्तः**—उक्ताधिकरणत्रयद्विकरूपेण पेटिके द्विधा विभक्ते वर्तेते, **स्वतः**—आत्मस्वरूपानुबन्धि, **इदमुभयम्**—स्वरूपाविर्भाव-स्वसङ्कल्पानुगुणाप्रतिहतसञ्चरणरूपमिदं द्वयमपि, **न उपधेः**—उपाधिनिबन्धनं न भवति, **नाथनिघ्नम्**—शरण्यभूतस्य परमात्मनः सत्यसङ्कल्पायत्तमेव ॥ १ ॥

[अधिकरणीयो विचारः]

(519) अश्रान्तस्वप्रकाशं यदिदमहमिति प्रत्यगात्मस्वरूपं
तस्याऽविर्भावसिद्धौ न तु किमपि फलं स्यात् सुषुप्ताविशेषात् ।
तस्मान्मुक्तः स्वमन्यद् भजति वपुरसौ देववद् रूपशब्दा-
न्नैवं स्वेनेति शब्दो ह्यफल इह भवेद्रूपवाचाऽर्थसिद्धेः ॥ २ ॥

**आश्रान्तस्वप्रकाशम्**—अविरतस्वीयप्रकाशम्, **अहमिति**—अहंशब्दोल्लेख्यस्वरूपम्, **यदिदं प्रत्यगात्मस्वरूपम्**—स्वस्मै भासमानत्वस्वभावं यत् जीवात्मस्वरूपमस्ति, **तस्य**—तादृशस्य जीवीयस्वरूपस्य, **आविर्भावसिद्धौ**—मुक्तिकाले अभिनिष्पत्तिपदाभिधेयाविर्भावसंपत्तौ सत्याम्, **न तु किमपि फलं स्यात्**—मुक्तिमात्रसम्पाद्यं फलं यत्किंचिदपि सम्पन्नं नैव भवेत्, **सुषुप्ताविशेषात्**—निद्रापरपर्यायां सुषुप्त्यवस्थां गतस्य अस्य च मोक्षाख्यां दशां प्राप्तस्य वैलक्षण्यलेशस्याप्यभावात्, **तस्मात्**—(परमपुरुषार्थत्वेन उपासनाद्युपायैकनिष्पाद्यत्वेन च शास्त्रसिद्धस्य) मोक्षकालिकरूपस्य संसारकालिकरूपापेक्षया वैलक्षण्यस्यावश्याश्रयणीयत्वात्, **असौ**—मुक्तश्चेतनः, **देववत्**—स्वर्गादिस्थानलाभवान् चेतन इव, **स्वम् अन्यद्वपुः भजति**—स्वासाधारणं शरीरान्तरं सम्पन्नो भवति, **रूपशब्दात्**—देहवाचिनः 'स्वेन रूपेणे'ति रूपशब्दस्य श्रवणात्, (इति शङ्कने) **नैवम्**—एवमङ्गीकारो नैव साधुः, **स्वेनेति शब्दो हि**—'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिस्थः रूपविशेषणभूतः 'स्वेने'त्ययं शब्दः खलु, **इह**—मोक्षकालिकावस्थाविशेषप्राप्ति-

परवाक्ये, **अफलो भवेत्**—व्यर्थो भवेत्, **रूपवाचा**—'स्वेन'शब्दरहितेनाऽपि केवलेनापि रूपशब्देन, **अर्थसिद्धेः**—मूर्तिविशेषरूपस्यार्थस्य लाभात् ।। २ ।।

(520) नित्यस्वात्मस्वरूपस्थितिरियमभिनिष्पत्तिरित्यूचिवांस-
स्तन्मात्रं स्यान्न विद्याफलमिति न विदुर्नित्यसिद्धं त्वसाध्यम् ।
सिद्धं साध्यानुवेधादपि भवति फलं सात्वविद्यादिभङ्गो
यद्वा सिद्धस्य वित्तिस्तदिह न विहतं मुक्त इत्यादिसूत्रम् ।। ३ ।।

**इयम् अभिनिष्पत्तिः**—'परंज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' इत्युक्ता मोक्षकालिकी स्वरूपाभिनिष्पत्तिः, **नित्य....स्थितिरिति**—अनादिसिद्धं यत् जीवात्मनः स्वस्वरूपं तेन रूपेण अवस्थानमिति, **ऊचिवांसः**—वन्दतः अद्वैतिनः, **तन्मात्रम्**—अनादिसिद्धस्वरूपतः अवस्थानमात्रम्, **विद्याफलं न स्यादिति**—वेदान्तविहितमोक्षोपायानुष्ठानस्य फलं न भवितुमर्हतीति, **न विदुः**—नैव जानीयुः, **नित्यसिद्धं तु**—अनादिसिद्धं परम्, **असाध्यम्**—साध्यभूतेनाऽर्थेन साकं तादात्म्यं प्राप्तुमनर्हम्, (सिद्ध-साध्ययोरभेदायोगात् मिथोव्याहतेः) **सिद्धमपि**—पूर्वसिद्धमपि वस्तु, **साध्यानुवेधात्**—साध्यांशस्य तत्रानुप्रवेशात् (विशिष्टवेषस्य भेदात्) **फलं भवत्यपि**—प्रयोजनतापन्नं (साध्यतापन्नं) भवत्येव, **सा तु**—साध्यरूपतां प्राप्ता अभिनिष्पत्तिस्तु, **अविद्यादिभङ्गः**—अविद्याया कर्मवासनायाः प्रकृतिसम्बन्धस्य (स्थूल-सूक्ष्मात्मना द्विविधाया प्रकृतेरपि सम्बन्धस्य) प्रणाशः एव नित्यात्मरूपविशेषणभूतः, **यद्वा**—अथवा, **सिद्धस्य वित्तिः**—अनादिसिद्धस्याप्यात्मस्वरूपस्य अपहतपाप्मत्वादिमतः ज्ञप्तिरेव अभिनिष्पत्तिः, **तत्**—तस्माद्धेतोः, **इह**—अस्मिन् प्रकरणे, **मुक्त इत्यादिसूत्रम्**—'मुक्तः प्रतिज्ञाना'दित्यादिकं सूत्रम्, **न विहतम्**—न विफलतां प्राप्तम् ॥ (मुक्त्यंशस्य जीवविशेषणभूतस्य अपूर्वतया साध्यत्वान्वयात्, मुक्तिविशिष्टवेषेण अनादेरप्यात्मनः साध्यत्वस्याविरोधादिति) ।। ३ ।।

(512) स्वाकारान्नित्यभातादधिकसुखतया भाति जीवस्तदानीं
सिद्धाविर्भावमात्रेऽप्यनुविदुरभिनिष्पत्तिवाचः प्रयोगम् ।
सङ्कोचात्यन्तहानिर्धिय इयमभिनिष्पत्तिरागन्तुरुक्ता
निष्प्रत्यूहस्वरूपोपधिकमपि तदा 'स्वेन'शब्दः प्रवक्ति ॥ ४ ॥

**जीवः**—प्रत्यगात्मभूतश्चेतनः, **तदानीम्**—मोक्षकाले, **नित्यभातात् स्वाकारात्**—सदा भासमानात् प्रत्यक्त्वानुकूल्यादेः स्वस्वरूपसिद्धात् आकारात्, (आकारापेक्षया) **अधिक-**

**सुखतया**—अतिशयितानुकूलत्वेन (आनन्दमात्ररूपतया), **भाति**—स्वस्मै प्रकाशते, **सिद्धाविर्भावमात्रेऽपि**—पूर्वसिद्धस्याऽपि अनाविर्भूतस्यार्थस्य आविर्भावे(तिरोधानविगमे)ऽपि विषये, **अभिनिष्पत्तिवाचः**—अभिनिष्पत्तिशब्दस्य, **प्रयोगम्**—व्यवहारम्, **अनुविदुः**—अनुजानन्ति प्रयोक्तारः ('अनया युक्त्या अयमर्थोऽभिनिष्पद्यते' इत्यादौ) **इयम् अभिनिष्पत्तिः**—'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिवाक्यप्रतिपन्ना अभिनिष्पत्तिः, **धियः सङ्कोचात्यन्तहानिः**—जीवात्मनो धर्मभूतस्य ज्ञानस्य संसारकाले प्राप्तः यः सङ्कोचः तस्य निरवशेषापगमरूपा सती (असङ्कुचितज्ञानत्वावस्था), **आगन्तुरुक्ता**—संसरणकाले अविद्यमाना मोक्षकाले एव अपूर्वतया प्राप्ता, (अतस्तस्याः साध्यरूपत्वम्) **तदा**—मोक्षकाले, **निष्प्रत्यूहस्वरूपोपधिकमपि**—अविद्याद्यन्तरायरहितशुद्धजीवात्मस्वरूपायत्तमपि ज्ञानाविर्भावम् (अन्यूनतया ज्ञानानन्दाद्याकारवैशिष्ट्येन स्वस्वरूपस्य स्वीयधर्मभूतज्ञानेन ग्रहणमपि, **स्वेनशब्दः**—'स्वेन रूपेणाऽभिनिष्पद्यते' इति वाक्यस्थः स्वेनेत्ययं शब्दः, **प्रवक्ति**—स्पष्टं ब्रूते ॥ ४ ॥

(522) प्रायः स्वस्मिन् स्वदेहिन्यनघगुणनिधौ तद्विभूतिद्वये वा

दृष्टं यत् स्यात् समाधौ भवति पृषतवत्तद्धि मुक्तानुभूतेः ।

कृत्स्नं तच्छर्करौघव्यतिकरितसुधासिन्धुवत् स्वादुभूतं

तस्मात् स्वात्मप्रकाशे न फलमिति वदन् कूपकूर्मो घृणार्हः ॥ ५ ॥

**स्वस्मिन्**—सर्वोपाधिविनिर्मुक्ते शुद्धे स्वस्वरूपे, **अनघगुणनिधौ**—नित्यनिर्दोषगन्धनिखिलकल्याणगुणाकरे, **स्वदेहिनि**—स्वं प्रति निरुपाधिकात्मभूते परमात्मनि, **तद्विभूतिद्वये वा**—नित्यविभूति लीलाविभूत्याख्ये परमात्मनो उभयविधायां विभूतावपि वा विषये, **प्रायः**—बाहुल्येन, **समाधौ**—बहुकालनिरन्तरध्यानसम्पाद्यसमाध्याख्यावस्थाविशेषे **यद्दृष्टं स्यात्**—यद्यदनुभूतं भवेत्, **तत्**—समाध्यनुभूतं सर्वम्, **मुक्तानुभूतेः**—मुक्तात्मकर्तृकानुभवसागरमध्ये, **पृषतवत् भवति**—एकजलबिन्दुसदृशं वर्तते । **तत् कृत्स्नम्**—मुक्तिदशानुभवविषयभूतं सर्वमपि मिलितम्, (जीवस्वरूप-परमात्मस्वरूप तद्गुणस्तोम-विभूतिद्वयात्मकं सर्वम्) **शर्करौघव्यतिकरितसुधासिन्धुवत्**—शर्करास्तोमसंमिश्रितामृतसागर इव, **स्वादुभूतम्**—अत्यन्तसुखास्वाद्यरूपं विजृम्भते, **तस्मात्**—उक्ताद्धेतुजातात्, **स्वात्मप्रकाशे न फलमिति वदन्**—मुक्तिकाले स्वस्वरूपस्याऽऽविर्भावे सति न किमपि प्रयोजनमस्ति इति अज्ञानतः प्रलपन् जनः, **कूपकूर्मः**—अत्यन्तसङ्कुचितजलाधारगतः कमठ इव विद्यमान इति हेतोः, **घृणार्हः**—केवलमनुकम्पाया एव पात्रभूत इति, न विचारादेरर्हः सः ॥ ५ ॥

(523) मल्ली शुद्धं प्रसूनं जनयति समये रञ्जकोपाधिमुक्ते
तद्वन्नाथानुकम्पा फलमुपशमितावग्रहं सूरितुल्यम् ।
तस्मादागन्तुकेऽपि प्रतिहतिविरहात् तादृशे धीविकासे
प्रत्यापन्नस्वदायक्रम इह कथितः प्राप्तसिद्धेः प्रतीचः ॥ ६ ॥

**मल्ली**—मल्लीकाख्या लता, **रञ्जकोपाधिमुक्ते समये**—लौहित्याधायककिंशुकादिरूपोपाधितः विमोकवति काले, **शुद्धं प्रसूनम्**—शुक्लवर्णमेव कुसुमम्, **जनयति**—उत्पादयति, (शुक्लवर्णकुसुमोत्पादनं मल्लीलतायाः स्वभावत एव सिद्धमपि, उपाधिवशात् मध्ये प्राप्तविच्छेदमपि, उपाधेरपगमे सति स्वाभाविकमेव पुनः प्रवर्तते) **तद्वत्**—तथैव, **नाथानुकम्पा**—सर्वलोकशरण्यस्य भगवतः करुणा, **उपशमितावग्रहम्**—निर्मूलितप्रत्यूहम्, (निर्विघ्नतामापादितम्) **सूरितुल्यं फलम्**—अनन्तगरुडादिनित्यसूरिभोग्यफलम्, **रञ्जकोपाधिमुक्ते समये**—जीवस्य सांसारिकफलासक्तिजनकाविद्याकामकर्माद्युपाधिविगमवति काले, **जनयति**—आविर्भावयति, **तस्मात्**—उक्ताद्धेतोः, **धीविकासे**—असङ्कोचेन धर्मभूतज्ञानविकासे मुक्तिकालिके, **आगन्तुकेऽपि**—पूर्वमविद्यमानत्वेन पश्चात् कालविशेषे लब्धस्वरूपे सत्यपि, **प्रतिहतिविरहात्**—नाशकस्याप्रसक्तेः, **तादृशे**—स्वाभाविके नित्यानपाये च सति, **प्रत्यापन्नस्वदायक्रमः**—मध्ये विच्छिन्नः स्वभावतो न्यायलब्धः यः पुत्रस्य पैतृकधनादिदायलाभः तन्न्यायः, **इह**—मोक्षतः स्वाभाविकस्वरूपाविर्भावविषये, **प्राप्तसिद्धेः प्रतीचः**—निष्पन्नमोक्षोपायस्य प्रत्यगात्मनो विषये, **कथितः**—विचार्य निर्णयेनोक्तः ॥ ६ ॥

(524) अर्वाञ्चो मुक्तिभेदं कतिचिदगणयन् स्वात्ममात्रानुभूतिं
तत्र ब्रह्मानुभूतेर्विहतिरुपधितः स्यात् स्वतो वेति चिन्त्यम् ।
सन्ति द्वेधाऽपि दोषास्तत उपचरणान्मुक्तिशब्दोऽत्र युक्तः
सालोक्यादिप्रभेदेष्वपि सरणिरियं सावधानैर्विभाव्या ॥ ७ ॥

**अर्वाञ्चः कतिचित्**—अनन्तरं वेदान्तार्थचिन्तनप्रवृत्ताः केचन, **स्वात्ममात्रानुभूतिम्**—केवलप्रत्यगात्मभूतस्वात्मानुभवम्, **मुक्तिभेदम्**—मोक्षविशेषत्वेन, **अगणयन्**—निर्णीतवन्तः, **तत्र**—तस्मिन् विषये, **चिन्त्यम्**—विचारणीयं किञ्चिदस्ति, **तत्र**—केवलस्वानुभवरूपे मोक्षे (इति वा अर्थः) **ब्रह्मानुभूतेर्विहतिः**—ब्रह्मानुभवस्याभावः, **उपधितः स्यात् स्वतो वा इति चिन्त्यम्**—उपाधिविशेषकृतो भवेत् ? उत स्वाभाविक एव भवेत् ? इति विचारणीयं भवति, **द्वेधाऽपि**—ब्रह्मानुभवाभावस्य औपाधिकत्वपक्षे स्वाभाविकत्वपक्षेऽपि च, **दोषाः सन्ति**—कर्मादेरुपाधेरभावादौपाधिकत्वयोगः, आत्मविशेषस्य केवलं ब्रह्मानुभवाभावस्य स्वाभाविकत्वायोगः

इति उभयत्र दोषाः भवन्ति, **ततः**—तस्माद्धेतोः, **अत्र**—केवलस्वात्मानुभवे, **मुक्तिशब्दः**—मुक्तिपदप्रयोगः **उपचरणात् युक्तः**—गौणार्थनिबन्धनो युक्तः, **सालोक्यादिप्रभेदेष्वपि**—सालोक्य-सामीप्य-सारूप्याख्येषु दशाविशेषेष्वपि, **इयं सरणिः**—मुक्तिशब्दस्य औपचारिकत्वविधा, **सावधानैः**—शास्त्रार्थचिन्ताकुशलैः, **विभाव्या**—अवधार्या भवति (सर्वप्रतिबन्धकविमोकेन परिपूर्णब्रह्मानुभवस्यैव मोक्षपदार्थत्वेन तत्सामीप्यवत्यर्थे तच्छब्दप्रयोगस्य औपचारिकत्वावश्यंभावात् इति) ॥ ७ ॥

—o—

## (3) अधिकरणार्थसंग्रहः ॥

एवम्—अर्चिरादिर्निरूपिता । अथ चतुर्थे मुक्तिपादे—मुक्तैश्वर्यप्रकारश्चिन्त्यते । तत्र, **सम्पद्याविर्भावाधिकरणे**—'परंज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' इति अभिनिष्पत्तिश्रवणात्, साध्येन रूपेण मुक्तः सम्प[म्बध्य]द्यते—इत्याशङ्क्य,

'स्वेन रूपेणे'ति स्वाभाविकत्वश्रवणात्, 'अभिनिष्पत्ति'शब्दस्य अभिव्यक्तावपि प्रयोगात्, स्वाभाविकरूपेणाविर्भवति—इत्युक्तम् ॥

—o—

## (4) नयसङ्गतिमालिका ॥

तुर्याध्याये तुर्यपादे पेटिकाद्वयभूषिते ।
त्रिकद्विकविभागेन मुक्तयै(क्तै)श्वर्यं निरूप्यते ॥ २०६ ॥

मुक्तिः स्वरूपाविर्भावश्चेत्सुषुप्तिरपीदृशी ।
मार्गादिचिन्तावैयर्थ्यं सम्पत्त्रीत्या व्यपोदितम् ॥ २०७ ॥

इति सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

—o—

# (152) अविभागेन दृष्टत्वाधिकरणम् ॥ ४–४–२ ॥

## (1) शारीरकन्यायकलापसङ्ग्रहः ॥

(215) परानुभूतिस्तु विभेदतः स्यात् साधर्म्यशब्दादतिसाम्यशब्दात् ।
न स्यादिदं नाम तदात्मकत्वात्साम्यश्रुतिस्तद्गुणसाम्यलब्धा ॥ ८ ॥

**परानुभूतिः**—मोक्षदशायां परब्रह्मानुभवः, **विभेदतस्तु स्यात्**—स्वस्मात् पृथग्भावेनैव भवितुमर्हति ; न तु ब्रह्मणः स्वात्मनश्च अविभागेन, **अतिसाम्यशब्दात्**—'निरञ्जनः परमं साम्यमुपैति' इति मुक्तस्यात्मनः परमात्मना सह भेदघटितपरमसाम्यस्यैव श्रुतिसिद्धत्वात्, **साधर्म्यशब्दात्**—'मम साधर्म्यमागताः' इति भगवद्गीतायां मुक्तिकाले धर्मसाम्यापत्तेरेव स्पष्टमुक्तेः, (इति शङ्कने) **इदम्**—स्वस्माद्विभक्ततया ब्रह्मणोऽनुभवः इत्येतत्, **न स्यात्**—नैव भवितुमर्हम्, **तदात्मकत्वात्**—मुक्तस्य स्वात्मनः ब्रह्मात्मकत्वात् (शरीरात्मभावसत्त्वेन) **साम्यश्रुतिः**—परमं साम्यमुपैतीतीयं मुण्डकश्रुतिः, **तद्गुणसाम्यलब्धा**—ब्राह्मगुणैः साकं स्वगत-गुणानां समानत्वतो हेतोः प्रवृत्ता ॥ (अतः मुक्तिदशायां जीवेन ब्रह्मणोऽनुभवः 'अहं ब्रह्माऽस्मी'ति स्वापृथग्भावेनैव ; न तु पृथग्भावेनेति) ॥ ८ ॥

—o—

(2) **अधिकरणसारावलिः** ॥ (श्लो. 8–10)

(525) जीवेशौ नित्यभिन्नौ श्रुतिरिह च सहेत्याह मुक्तस्य भोगं
साम्ये पारम्ययुक्तं स्मृतमपि स पृथग्भातु तस्मात् परस्मात् ।
मैवं तत्त्वं हि मुक्तौ स्फुरति तदनयोर्भेदभानांश इष्टः
सिद्धे देहात्मभावे त्विह न हि घटते तत्स्वनिष्ठत्वदृष्टिः ॥ ८ ॥

**जीवेशौ**—प्रत्यगात्मभूतो जीवः, परमात्मा ईश्वरश्चेत्येतौ, **नित्यभिन्नौ**—स्वभावायत्त-भेदवन्तौ, **इह च**—मोक्षगतजीवस्थितिवर्णनप्रस्तावे च, **श्रुतिः**—तैत्तिरीयानन्दवल्लीश्रुतिः, **मुक्तस्य भोगम्**—मुक्तात्मनः आनन्दानुभवम्, **सहेत्याह**—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति, ब्रह्मसहभावेनैव वदति, (सहभावश्च भेदनियतः ; न ह्यभिन्नेऽर्थे कश्चन सहशब्दं प्रयुङ्क्ते) **साम्ये पारम्यमुक्तम्**—'परमं साम्यमुपैति' इति श्रुतौ जीवस्य ब्रह्मसाम्यविषये पराकाष्ठाप्राप्तिरूपं परमत्वं वर्णितम् (साम्ये परमत्वं हि नाऽपृथग्भावरूपं भवितुमर्हम्, साम्यस्य भेदगर्भत्वध्रौव्यात्) **स्मृतमपि**—'मम साधर्म्यमागताः' इति धर्मिभेदेऽवस्थिते एव सजातीयधर्माश्रयणरूपं साधर्म्यमेव गीतायां प्रतिपादितम्, **तस्मात्**—उक्तादेतस्माद्धेतोः, **सः**—मुक्तात्मा, **परस्मात् पृथक्**—जीवाद्भेदेनैव, **भातु**—मुक्तिदशायां अनुसन्धानास्पदो भवतु, (इति शङ्कने) **मैवम्**—एवं शङ्कनं मास्तु, **हि**—यतः, **मुक्तौ**—सर्वोपाधिविगमरूपमोक्षदशायाम्, **तत्त्वम्**—अनारोपितं वस्तुयाथात्म्यमेव,' **स्फुरति**—प्रकाशते ; (न तु अयथावस्थितं रूपम्) **तत्**—तस्मात्, **अनयोः**—जीव-परयोः, **भेदभानांशः इष्टः**—

पृथग्भावविषयकः भानांशः संमतः, **देहात्मभावे**—जीव-परयोः शरीरात्मभावे, **सिद्धे तु**—निश्चिते परम्, **इह**—धर्मभूतज्ञानासङ्कोचयुते काले, **तत्स्वनिष्ठत्वदृष्टिः**—परमात्मापृथक्सिद्धे स्वतन्त्रवस्तुता बुद्धिः, **न हि घटते**—नैव सङ्गता भवति—इति ॥ ८ ॥

(526) मन्त्रोक्तं भोक्तृभावे यदि सहभवनं ब्रह्म न स्यात् प्रधानं
तस्मात्तत् भोग्यभावे भवतु तदुचितं ब्राह्मणव्याकृतेश्च ।
द्वेधाऽपि ब्रह्मतत्त्वात् पृथगितर इह स्यादितीदं च वार्तं
सिद्धे भेदे स्वनिष्ठस्थितिपरिहरणं ह्यत्र सूत्रोपपाद्यम् ॥ ९ ॥

**मन्त्रोक्तम्**—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति मन्त्रवर्णखण्डप्रतिपादितम्, **भोक्तृभावे सहभवनं यदि**—जीवस्य ब्रह्मणा सह भोक्तृत्वमिति साहित्यं यदि संमतं स्यात्; तर्हि, **ब्रह्म प्रधानं न स्यात्**—'पुत्रेण सह गतः पिते'त्यादौ पुत्र इव ब्रह्माप्यत्र न प्रधानं भवेत्, (सर्वनियन्तुः सर्वस्वामिनः परस्य ब्रह्मणः अप्राधान्यं न हि कश्चन वैदिकः अनुजानीयात्), **तस्मात्**—उक्ताद्धेतोः, **तत्**—साहित्यम्, **भोग्यभावे भवतु**—भोक्तारं मुक्तात्मानं प्रति ब्रह्मगुणानां ब्रह्मणश्च भोग्यतेति ब्रह्मणो भोग्यत्वे साहित्यमास्ताम्; न भोक्तृत्वे, **तत्**—उक्तमेतत् भोग्यभावे सहभवनम्, **उचितम्**—युक्तमेव भवति, **ब्राह्मणव्याकृतेश्च**—'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणवाक्यव्याख्यानरूपत्वौचित्यादपि, (ब्रह्मपदार्थव्याख्यानं 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति; 'वित् आप्नोति परम्' इत्यंशस्य व्याख्यानं 'यो वेद.... सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति, इत्येवं सन्दर्भसाङ्गत्यस्य भोग्यसाहित्यपक्षे एव सम्पत्तेरिति) **द्वेधाऽपि**—जीवेन सह भोक्तृत्वमिति, स्वगुणैः साकं भोग्यत्वमिति उभयपक्षेऽपि, **इह**—'सोश्नुते' इत्यत्र, **इतरः**—जीवः, **ब्रह्मतत्त्वात्**—ब्रह्माख्यात् परतत्त्वात्, **पृथक् स्यात्**—पृथग्भूत एव भवेत्; न अपृथग्भूतः, **इतीदं च**—इत्येवं चिन्तनं परम्, **वार्तम्**—वार्तामात्रविश्रान्तं; न वस्तुतत्त्वे, **सिद्धे भेदे**—प्रमाण-तर्कादिभिः निश्चिते जीवब्रह्मणोः पृथग्भावे, **स्वनिष्ठस्थितिपरिहरणं हि**—जीवस्य ब्रह्मणः सकाशात् पृथक्स्थितिप्रतिपत्त्यर्हतादूरीकरणमेव खलु, **अत्र**—अस्मिन्नधिकरणे, **सूत्रोपपाद्यम्**—'अविभागेन दृष्टत्वा'दिति सूत्रेण सङ्गततया प्रतिपाद्यम् ॥ ९ ॥

(527) पारम्यं यच्च साम्ये श्रुतमिह न हि तत् सर्वथेत्यप्यधीतं
ग्राव्णो हेम्नश्च यद्वत् समधरणधृतौ स्यात्तदुक्तिस्तथाऽत्र ।
एवं तद्देहभावे स्थितवति विविधाबाधिताम्नायभूम्ना
ब्रह्मैवेत्यादिवाक्यं प्रथयति समतां तादृगित्यप्यधीतेः ॥ १० ॥

**इह**—मोक्षदशापन्नप्रत्यगात्मविषये, **साम्ये**—परब्रह्मणा साकं समानत्वे, **पारम्यम्**—परां काष्ठां प्राप्तत्वम्, **यच्च श्रुतम्**—'निरञ्जनः परमं साम्यमुपैति' इति यदपि श्रुतौ पठितमास्ते, **तत्**—जीवस्य ब्रह्मणा साम्यम्, **सर्वथेत्यपि**—ब्रह्मगतसर्वविधप्रकारेणाऽपीत्येतदपि, **न हि अधीतम्**—श्रुतौ नाऽऽम्नातं खलु, **ग्राव्णो हेम्नश्च**—शिलाखण्डस्य सुवर्णखण्डस्य च, **समधरणधृतौ**—एकस्यामेव तुलायां तुलापात्रयोः (घटयोः) स्थापितयोः धृतिविषये, **तदुक्तिः**—'इमे ग्राव-हेम्नी समे' इति साम्योक्तिः, **यद्वत् स्यात्**—यथा अबाधितयावत्प्रकारमात्रावगाहिनी भवेत् (परिमाणमात्रकृतसाम्यमात्रविषयिण्येव भवेत्; न तु ग्राव्णि ग्रावत्वप्रहाणेन सुवर्णत्वाश्रयणेन वा, सुवर्णे तत्ताविमोकेन ग्रावत्वाश्रयणेन वा समत्वप्राप्तेरुक्तिरूपा नैव स्यात्, **तथा**—तयैव रीत्या, **अत्र स्यात्**—जीवस्य ब्रह्मणा सह परमसाम्येऽपि अबाधितयावत्प्रकारमात्रसाम्यप्राप्तितात्पर्यिकैव स्यात्; (न तु जीवे जीवत्वप्रहाणेन ब्रह्मत्वप्राप्तितात्पर्यिका भवितुमर्हा स्यात्) **एवम्**—श्रुति-स्मृत्यादिप्रमाणैः प्रतिपादितया रीत्या, **तद्देहभावे**—जीवस्य परमात्मानं प्रति शरीरत्वे, **विविधाबाधिताम्नायभूम्ना**—नानाप्रदेशगतनानाकार-प्रमाणान्तरबाधविदूर-श्रुतिवाक्यबलेन, **स्थितवति**—अप्रकम्प्यतया दृढे सति, **ब्रह्मैवेत्यादिवाक्यम्**—'ब्रह्मैव भवती'त्येवमादिकं ब्रह्मविदि ब्रह्मत्वाप्तिप्रतिपादकमिव भासमानं श्रौतं वाक्यम्, **समतां प्रथयति**—साम्यमेव प्रतिपादयति; न अभेदम्, **'तादृक्' इत्यपि अधीतेः**—'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति' इत्येवं सादृश्यप्रतिपादक तादृक्' शब्दस्याऽपि श्रुतिपाठात् ।। १० ।।

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

अविभागेन दृष्टत्वाधिकरणे—'निरञ्जनः परमं साम्यमुपैती'ति मुक्तस्य परमसाम्यापत्तिश्रवणात्, पृथग्भूतस्यैव साम्यसम्भवात्, मुक्तः स्वस्मात्पृथग्भूतमेव परमात्मानमनुभवति—इत्याशङ्क्य,

प्रत्यगात्मस्वरूपस्य ब्रह्मप्रकारतैकस्वभावत्वात्, तस्य निरस्ताविद्यातिरोधानतया याथार्थ्येन दृष्टत्वात्, प्रकारभूतस्याऽपि गुणाष्टकयोगेन परमात्मापृथग्भावसम्भवाच्च अविभागेनानुभवति—इत्युक्तम् ॥

—o—

(4) **नयसङ्गतिमालिका** ॥

अविभागेनेति नये स्वरूपार्थविनिर्णयात् ।
उपोद्घातप्रक्रियया सङ्गतिर्वेदितुं क्षमा ॥ २०८ ॥

इति अविभागेन दृष्टत्वाधिकरणम् ॥ ९ ॥

—o—

## (153) ब्राह्माधिकरणम् ॥ ४–४–३ ॥

(1) **शारीरकन्यायकलापसङ्ग्रहः** ॥

(216) मुक्तस्वरूपं तु गुणाष्टकं स्यात्तथा श्रुतत्वाद्द्युतिमात्रता वा ।
तथैव विज्ञानघनत्वशब्दात् तन्नोभयं स्यादुभयाविरोधात् ॥ ३ ॥

**मुक्तस्वरूपम्**—मुक्तात्मनः स्वरूपम्, **तथा श्रुतत्वात्**—अपहतपाप्मत्वादिधर्मस्वाभाव्येन श्रुत्युक्तत्वात्, **गुणाष्टकं स्याद्वा**—आविर्भूतापहतपाप्मत्वाद्यष्टगुणमात्रयुक्तं भवेद्वा ? **तथैव विज्ञानघनत्वशब्दात्**—अपहतपाप्मत्वादिमत्त्वमिव 'विज्ञानघन एवे'ति सावधारणश्रौतशब्दात् ज्ञापकात्, **द्युतिमात्रता वा**—ज्ञानापरपर्यायप्रकाशैकस्वरूपमेव वा ? भवितुमर्हम्; उभयरूपताया अयोगात्, (इतरव्यावर्तकैवकारवैयर्थ्यापत्तेः) इति शङ्कने, **तन्न**—उक्तान्यतरात्मकत्वशङ्कनं नैव सुष्ठु, **उभयाविरोधात्**—उभयविधवाक्ययोः अविरोधस्य विषयाविरोधसिद्धत्वात्, **उभयं स्यात्**—गुणाष्टकवत्स्वरूपवत्त्वम्, विज्ञानस्वरूपत्वं चेत्युभयमपि स्यादेव। (अवधारणं तु ज्ञानरूपत्वाभा-वविज्ञानाश्रयत्वाभावयोर्व्यवच्छेदैकतात्पर्यकम्; 'जानात्येवाऽयं पुरुषः इत्यादिश्रुतेः) ॥ ३ ॥

—o—

(2) **अधिकरणसारावलिः** ॥ (श्लो. 11–12)

(528) ज्ञानत्वे किं फलं स्यादिति मिषतु गुणैस्तादृशं ब्रह्मसाम्यं
किं धर्मैरस्वरूपैस्तदिह भवतु चिन्मात्ररूपप्रकाशः ।
इत्थं छात्रोक्तपक्षद्वयमुभयविधश्रुत्युपात्ता(द्)विरोधा-
न्निर्धूयाऽथ द्विधाऽऽविर्भवनमघटयत् सिद्धतत्त्वप्रकाशात् ॥ ११ ॥

**ज्ञानत्वे**—मुक्तात्मनो ज्ञानमात्रस्वरूपतापरिशेषे, **किं फलं स्यादिति**—मुक्तिदशायां पुरुषार्थभूतं फलं किं वा सम्पन्नं स्यात् ? नैव किमपीति हेतोः, **तादृशम्**—'तादृगेव भवती'ति श्रुत्युक्तम्, **ब्रह्मसाम्यम्**—जीवस्य ब्रह्मसाम्यम्, **गुणैः मिषतु**—अपहतपाप्मत्वादिभिरष्टभि-र्गुणैः मिलितं सत्, जीवस्वरूपनिरूपकं भवतु, (इति जैमिनेर्मतम्) **अस्वरूपैः**—जीवस्वरूपे अप्रविष्टैः, **किम्**—किं फलं सम्पन्नं स्यादिति, **तत्**—तस्माद्धेतोः, **चिन्मात्ररूपप्रकाशः**—ज्ञानैकस्वरूपतारूपप्रकाशात्मको भवतु मुक्तौ जीवः, (इत्यौडुलोमिमतम्) **इत्थम्**—एवंरीत्या, **छात्रोक्तपक्षद्वयम्**—स्वशिष्याभ्यां जैमिन्यौडुलोमिभ्यां स्वीकृत्य विवृतमभिप्रायद्वयमपि, (एकैकशः) **उभयविधश्रुत्युपात्ताविरोधात्**—प्रजापतिवाक्यरूपया छान्दोग्यश्रुत्या अपहतपाप्मत्वादेः, बृहदा-रण्यकश्रुत्या विज्ञानघनत्वस्य चेत्यनयोः आत्मनि अविरोधमादाय, **निर्धूय**—निराकृत्य, **अथ**—पश्चात्, **सिद्धतत्त्वप्रकाशात्**—प्रमाणसिद्धं अपहतपाप्मत्वादियोगं ज्ञान-तदाश्रयत्वरूपत्वं चाभ्युपगम्य, **द्विधा आविर्भवनम्**—रूपद्वयसहिततया मुक्तावाविर्भावम्, **अघटयत्**—मुक्तात्मनि अविरुद्धं योजयामास सूत्रकारः ॥ ११ ॥

(529) पर्यायौ नामपाठेष्वनु परिपठितौ मुक्तिकैवल्यशब्दौ
कैवल्यं चाऽन्ययोगत्यजनमिति कथं धर्मि-धर्मान्वयोऽस्य ।
मैवं ब्रह्मस्वरूपादपरमिह न खल्वस्ति किंचित् स्वनिष्ठं
न द्रव्यं चाऽगुणं स्यादधिकरणयुगं तन्निरातङ्कमेतत् ॥ १२ ॥

**नामपाठेषु**—नामलिङ्गानुशासनगतेषु पठ्यमानेषु नामसु, **मुक्ति-कैवल्यशब्दौ**—मोक्षवाची मुक्तिशब्दः कैवल्यशब्दश्च, **पर्यायौ**—एकार्थविशेष्यकबोधजनकशब्दद्वयतया, **अनु परिपठितौ**—क्रमशः प्रयुक्तौ 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इति, **कैवल्यं च**—मुक्तिपर्यायभूतं कैवल्यं नाम, **अन्ययोगत्यजनमिति**—स्वेतरेण धर्मिणा वा धर्मेण वा सम्बन्धस्य विमोक एवेति हेतोः, **अस्य**—मोक्षदशापन्नस्य जीवस्य, **धर्मि-धर्मान्वयः कथम् ?**—धर्मितया ब्रह्मणः धर्मतया ज्ञानादेर्गुणस्य च संसर्गः कथं युज्यते ? (इति शङ्कने) **मैवम्**—एवं न शङ्कनीयम्, **ब्रह्मस्वरूपात् अपरम्**—परमात्मनः स्वरूपाद्भिन्नम्, **इह**—परमात्मविभूतिद्वये, **स्वनिष्ठं किंचित्**—ब्रह्मणः सकाशात् पृथक्स्थिति-प्रतिपत्तियोग्यं यत्किंचिदपि वस्तु, **नास्ति खलु**—नैव विद्यते खलु, (इति पूर्वस्मिन् अधिकरणे) **द्रव्यं च**—द्रव्यपदाभिधेयं किंचिदपि, **न अगुणं स्यात्**—गुणरहितं नैव भवेत्, (इति अस्मिन्नधिकरणे) **तत्**—तस्माद्धेतोः, **एतत् अधिकरणयुगम्**—प्रस्तुतं अविभागेन दृष्टत्व-ब्राह्माख्यम् अधिकरणद्विकम्, **निरातङ्कम्**—बाधितार्थनिर्णायकत्वदोषशङ्काया अविषयभूतं सत् जागर्ति ॥ १२ ॥

### (3) अधिकरणार्थसंग्रहः

ब्राह्माधिकरणे—'स्वेन रूपेणाऽभिनिष्पद्यते' इत्यत्र, अभिनिष्पाद्यतयोक्तं, किम् अपहतपाप्मत्वादिकमेव ? उत ज्ञानमात्रमेव ? उतोभयम् ?—इति विशये ; मुक्तमधिकृत्य अपहतपाप्मत्वाद्युपन्यासात्, तेनैव रूपेणाविर्भवति—इति जैमिनिमतमनूद्य ; 'विज्ञानघन एवे'त्यादिषु ज्ञानमात्रमेवाऽस्य स्वरूपमित्यवगमात्, अपहताप्मादिशब्दानां शोकाद्यभावपरत्वाच्च, ज्ञानमात्रस्वरूपेणाविर्भवति—इत्यौडुलोमिमतमुपन्यस्य पक्षद्वयेऽपि अन्यतरश्रुतिबाधात्, 'विज्ञानघन एवे'त्यवधारणस्य एकदेशजडत्वशङ्काव्युदासपरत्वेन गुणान्तरप्रतिक्षेपकत्वाभावात्, उभयरूपेणाविर्भवतीति स्वमतेन मतद्वयं प्रतिक्षिप्तम् ।।

—o—

### (4) नयसङ्गतिमालिका ।।

ब्राह्माधिकरणे चाऽपि प्रक्रिया प्रागुदीरिता ।
प्रोक्तैव सङ्गतिरपि तत्त्रिकं ह्येकपेटिका ।। २०९ ।।

इति ब्राह्माधिकरणम् ।। ३ ।।

—o—

## (154) सङ्कल्पाधिकरणम् ।। ४–४–४ ।।

### (1) शारीरकन्यायकलापसङ्ग्रहः ।।

(217) मुक्तस्य पित्रादि तु सप्रयत्नात् सङ्कल्पतो भावि तथैव दृष्टेः ।
ब्रह्मादिकेष्वित्यसदेतदेषां सङ्कल्पसत्यत्ववियोगतः स्यात् ।। ४ ।।

**मुक्तस्य**—भगवत्सायुज्यं प्राप्तवतो जीवस्य, **पित्रादि**—'स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ते' इत्यादिश्रुत्युक्तं पित्रादीनां समुत्थानम्, **सप्रयत्नात् सङ्कल्पतो भावि**—प्रयत्नसहितात् सङ्कल्पादेव सेत्स्यत् ; न केवलात् मानसव्यापाररूपात् सङ्कल्पात्, **ब्रह्मादिकेषु**—सृष्ट्यर्थं नियमितेषु ब्रह्माद्याधिकारिकपुरुषेषु, **तथैव दृष्टेः**—प्रयत्नसहितसङ्कल्पबलादेव सृष्ट्यादिकार्यसिद्धेः पुराणादिषु दर्शनात्, **इत्यसत्**—एवं शङ्कनमसाधु, (मुक्तात्मनि प्रयत्नरहितात् सङ्कल्पमात्रादेव पित्रादिसृष्टेः श्रुतिसंमतत्वात्), **एषाम्**—अधिकारनियुक्तानां ब्रह्मादीनाम्, **एतत्**—सप्रयत्नसङ्कल्पतः सृष्ट्यादिकार्यसम्पादनम्,

**सत्यसङ्कल्पत्ववियोगतः स्यात्**—सत्यसङ्कल्पत्वाभावात् सम्भवति ; न तु सत्यसङ्कल्पवत्सु मुक्तात्मसु तत् ॥ ४ ॥

—o—

(3) **अधिकरणसारावलिः** ॥ (श्लो. 13–17)

(530) धात्रादेरप्यपेक्ष्यो ह्युपकरणगणः सत्यसङ्कल्पवृत्ते-
र्मुक्तस्याऽप्येवमेवास्त्विति यदि वितथं तद्विकल्पासहत्वात् ।
इष्टा द्रव्याद्यपेक्षा सुकृत-तदितरापेक्षणं त्वत्र दुःस्थं
न स्यादिच्छाविघातस्त्वनुपधिकतया देववाञ्छैकरस्यात् ॥ १३ ॥

**सत्यसङ्कल्पवृत्तेः**—अप्रतिहतस्वरूपसत्यत्वाश्रयसङ्कल्पाख्यमानसव्यापारवतः, **धात्रादेरपि**—परमात्मनैव सृष्टिकार्ये नियुक्तस्य ब्रह्म-तत्पुत्रप्रजापत्यादेरपि आधिकारिकपुरुषविशेषस्य, **उपकरणगणः**—सृष्ट्यौपयिकसहकारिकारणस्तोमः, **अपेक्ष्यो हि**—स्वसङ्कल्पितकार्यनिर्वाहाय अभीप्सनीय एव खलु श्रूयते स्मृतीतिहासपुराणादिषु, (अतः) **सत्यसङ्कल्पवृत्तेर्मुक्तस्याऽपि**—सत्यसङ्कल्पवृत्तितया श्रुत्युक्तस्य मुक्ताख्यचेतनविशेषस्याऽपि, **एवमेवाऽस्तु**—ब्रह्मादिवदेव उपकरणसापेक्षतया पितृलोकादिस्रष्टृत्वनिर्वाहोऽस्तु ; (किमर्थम् अनपेक्षस्रष्टृत्वसमर्थनप्रयासः ? न हि उपकरणसापेक्षत्वमात्रेण सत्यसङ्कल्पत्वप्रच्युतिः) **इति यदि**—एवमाशङ्क्येत चेत् तर्हि !, **तत् वितथम्**—तादृशमाशङ्कनं युक्तिविदूरं सत् न स्थायितां भजते, **विकल्पासहत्वात्**—अवान्तररूपत्वेन सम्भावितं यत् विरुद्धं कल्पद्वयं तत्सहत्वभावात्, (उपकरणसापेक्षता हि त्रिधा भवितुमर्हा—द्रव्यादिसापेक्षतया, पुण्य-पापाख्यकर्मसापेक्षतया, इच्छाया अप्रतिबन्धसापेक्षतया च । त्रिविधाप्यत्र न आपाद्यकोटिं प्रविशति इत्यर्थः) **द्रव्याद्यपेक्षा इष्टा**—उपकरणभूतद्रव्यादीनां पित्रादिसृष्टौ अपेक्षणीयतायाः श्रुतिसंमतत्वेन-इष्टत्वेन सा न आपाद्या, (अनिष्टं हि आपाद्यते नेष्टमिति) **सुकृत-तदितरापेक्षणं तु**—सृष्ट्युपकरणतया पुण्य-पापापेक्षणं तु, **अत्र दुःस्थम्**—अस्मिन्विषये आपाद्यतां नाश्नुते (सर्वकर्मक्षय-पुण्यपापापेक्षयोः व्याघातात्) क्षीणसर्वकर्माशयत्वस्यैव मुक्तत्वव्यपदेशप्रयोजकत्वात्) **इच्छाविघातस्तु न स्यात्**—कार्यानुगुणायाः इच्छायाः प्रतिबन्धोऽपि न आपाद्यतां भजते, **अनुपधिकतया**—मुक्तिदशायां उपाधिसामान्यस्यैवाभावेन इच्छाप्रतिबन्धकोपाधेरसम्भावितत्वात्, **देववाञ्छैकरस्यात्**—(भगवदिच्छया स्वेच्छाया विघातोऽपि नैव प्रसञ्जनार्हः ;) भगवदिच्छैकरस्येनैव जीवेच्छाया उदयात्, (स्वसङ्कल्पावलम्बिस्वकैङ्कर्योपयोगीच्छां प्रति स्वस्यैव विघातकतायाः अशङ्क्यत्वात्—इति) ॥ १३ ॥

(531) विश्वस्यैतस्य जन्म-स्थिति-लयरचना विश्वकर्तुर्यथा स्या-
दिच्छासन्तानभेदान्नियतिरिह तथा नित्यमुक्तक्रियाणाम् ।
तस्याऽनुच्छेदवृत्त्या प्रतिकलभिदुरास्ताश्च तादृक्प्रवाहा-
स्तद्बुद्धेरापरोक्ष्यं त्वनिशमभिदुरं वर्तते ब्रह्मधीवत् ।। १४ ।।

**एतस्य विश्वस्य**—अस्य जगतः, **जन्म-स्थिति-लयरचना**—सृष्टि-सत्ता-तद्भङ्गानां निर्मितिः, **विश्वकर्तुः यथा स्यात्**—जगत्स्रष्टुः परमात्मनो यथारीत्या अबाधिता सङ्गच्छते, **तथा**—तयैव रीत्या, **नित्यमुक्तक्रियाणाम्**—अनन्तादीनां नित्यसूरीणां, उपायानुष्ठानतो बन्धान्मुक्तात्मनां च याः क्रियाः श्रुतिप्रतिपन्नाः तासाम्, **इच्छासन्तानभेदात्**—उच्छेदराहित्येनानुवर्तमानात् इच्छाविशेषात्, **नियतिः**—अभग्ना व्यवस्था, **इह**—'जक्षत् क्रीडन् रममाणः' 'स यदि पितृलोककामः' इत्यादिमुक्तावस्थाप्रकरणोक्तार्थविषये चिन्तनीया भवति, **तस्य**—इच्छासन्तानस्य, **अनुच्छेदवृत्त्या**—विच्छेदराहित्येनाऽनुवर्तमानतयैव, **प्रतिकलभिदुराः**—प्रतिक्षणं भिन्नभिन्नस्वरूपाः, **ताश्च**—नित्यानां मुक्तानां च क्रिया अपि, **तादृक्प्रवाहाः**—अनुच्छेदेन सन्तन्यमानस्वरूपा एव सत्यः इत्यधिगन्तव्याः, **तद्बुद्धेः**—नित्यानां मुक्तानां च धर्मभूतधियोऽपि, **आपरोक्ष्यम्**—अतिरोहितार्थग्राहित्वरूपं प्रत्यक्षत्वं ; (न तु इन्द्रियायत्तधीत्वम्,) **अनिशम्**—अविरतम्, **अभिदुरं तु**—अविलुप्तमेव सत्, **ब्रह्मधीवत्**—परमात्मज्ञानवत्, विद्यत एव ।। १४ ।।

(532) प्रत्यूहार्हः प्रजेशप्रभृतिसुकृतिनां सत्यसङ्कल्पभावो
मर्त्यारम्भस्पृहादौ तदितरविविधप्राणिसृष्ट्यादिदृष्टेः ।
तेनेच्छासन्ततीनां सफल-विफलते पुण्य-पापैरमीषां
मुक्तस्योक्ता चिकीर्षात्वविहतविषया तारतम्यं न दोषः ।। १५ ।।

**प्रजेश....तिनाम्**—प्रजापतिप्रमुखानां पुण्यविशेषप्राप्तस्वाधिकाराणां चेतनविशेषाणाम्, **सत्यसङ्कल्पभावः**—अप्रतिहतसङ्कल्पत्वरूपो धर्मः, **प्रत्यूहार्हः**—प्रतिबन्धार्हो भवति, **मर्त्यारम्भस्पृहादौ**—मनुजसिसृक्षादौ सत्यपि, **तदितर....दृष्टेः**—मनुजव्यतिरिक्तनानाप्रकारजन्तुसृष्टिप्रसङ्गस्य उपनिषदादौ श्रुतत्वात्, **तेन**—उक्तेन हेतुना, **अमीषाम् इच्छासन्ततीनाम्**—प्रजापत्याद्याधिकारिकपुरुषसम्बन्धिनीनां कार्यानुगुणाभिलाषप्रवाहानुवृत्तीनाम्, **सफल-विफलते**—फलान्वय-तदभावौ, **अमीषां पुण्य-पापैः**—ईदृशपुरुषाणां सुकृत-दुष्कृताख्यैः कर्मभिरेव भवतः, **मुक्तस्योक्ता**—मुक्तात्मानमधिकृत्य श्रुतिषु उपदिष्टा, **चिकीर्षा तु**—

सङ्कल्पाख्या इच्छा परम्, **अविहतविषया**—स्वविषयनिर्वहणांशे विघातशून्यैव (सत्यैव) जागर्ति, **तारतम्यम्**—क्रिया-तन्निष्पाद्यार्थेषु मिथो वैलक्षण्यम्, **न दोषः**—नैव इच्छावैफल्यज्ञापकः (विविधविलक्षणभगवत्सङ्कल्पप्रयोज्यत्वात् तस्य) ॥ १५ ॥

(533) सूत्रे मुक्तोऽप्यनन्याधिपतिरभिहितस्तेन कस्तस्य शेषी
श्रुत्यैवोक्तः स्वराडित्यपि विहतिरतः प्राक् प्रतिष्ठापितानाम् ।
मैवं नाथेतरान् प्रत्यघविहित इह क्षिप्यते शेषभावो
विश्वस्यात्मेश्वरो यः पतिरिति पठितस्तत्पतित्वं त्वबाध्यम् ॥ १६ ॥

**सूत्रे**—'अत एव चाऽनन्याधिपतिः' इत्यस्मिन् शारीरकसूत्रे, **मुक्तोऽपि**—लब्धसंसार-मोक्षः चेतनोऽपि, **अनन्याधिपतिः अभिहितः**—स्वनियामकपुरुषान्तररहित इति प्रतिपादितः, **तेन**—सूत्रसिद्धेन अनन्याधिपतित्वेन ज्ञापकेन, **तस्य कः शेषी ?**—मुक्तात्मनः को वा प्रभुरस्ति; न कोऽपि वर्तते, **स्वराडित्यपि**—स्वयं प्रभुरित्यपि, **श्रुत्यैवोक्तः**—'स स्वराड् भवति' इति उपनिषदा बोधितः, **अतः**—उक्ताद्धेतोः, **प्राक्प्रतिष्ठापितानाम्**—पूर्वं श्रुत्यादिप्रमाणैः समर्थितानां भगवच्छेषत्व-तत्पारतन्त्र्यादीनां चेतनधर्माणाम्, **विहतिः**—मुक्तिकाले विमोक एव ; नाऽनुवृत्तिः, इति शङ्कने) **मैवम्**—एवं शङ्कनं न साधु, **इह**—'अनन्याधिपतिः' इति सूत्रे, 'स स्वराट्' इति श्रुतौ च, **अघविहितः**—दुष्कर्मनिबन्धनः, **नाथेतरान् प्रति शेषभावः**—सर्वशरण्यव्यतिरिक्तान् जीवादीन् प्रति पारार्थ्यभावः, **क्षिप्यते**—निवार्यते मुक्तिकाले, **यः**—यद्विधः पुनः, **आत्मेश्वरः विश्वस्य पतिः इति पठितः**—'पतिं विश्वस्यात्मेश्वरम्' इति श्रुत्या सर्वशेषित्वेन सर्वात्मनियन्तृ-त्वेन चाम्नातः परमपुरुषः, **तत्पतित्वं तु**—तच्छेषित्वनिरूपकत्वं पुनः, **अबाध्यम्**—मुक्तावपि निवार्यं नैव भवति (स्वरूपायत्तस्य स्वभावस्य कदाचिदपि अप्रच्युतेः ॥ १६ ॥

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

सङ्कल्पाधिकरणे—सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां राज्ञां, कार्यनिष्पादने प्रयत्नसापेक्ष-त्वदर्शनात्, मुक्तस्याऽपि प्रयत्नसापेक्षैव पित्रादिसृष्टिः—इत्याशङ्क्य,

'सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति' इत्यवधारणात्, प्रयत्नापेक्षत्वे प्रमाणाभावाच्च, सङ्कल्पमात्रादेव सृष्टिः—इत्युक्तम् ॥

—o—

(4) नयसङ्गतिमालिका ॥

एवं मुक्तस्य चैश्वर्ये सर्वभोगात्मके सति ।
पर्यायेणैष संसार इत्याक्षेपोऽथ वारितः ॥ २१० ॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

—o—

## (155) अभावाधिकरणम् ॥ ४–४–५ ॥

(1) शारीरकन्यायकलापसङ्ग्रहः ॥

(218) मुक्तोऽशरीरस्त्वशरीरशब्दादिच्छाशरीरी बहुधेति शब्दात् ।
नैषा व्यवस्था बहुधा तु शब्दाद्बहु(भोग)श्रुतेश्च स्वयमैच्छिकः स्यात् ॥ ५ ॥

**मुक्तः**—संसाराद्विमोकं प्राप्तश्चेतनः, **अशरीरः**—शरीररहित एव, **अशरीरशब्दात्**—'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति मुक्तस्य अशरीरत्वबोधकश्रुतिसत्त्वात्, (इत्येकः पक्षः) **इच्छाशरीरी**—स्वसङ्कल्पायत्तशरीरपरिग्रहवानेव मुक्तात्मा ; न कर्मायत्तशरीरवान् नाप्यशरीरः, **बहुधेति शब्दात्**—शरीरबहुत्वबोधकात् 'स एकधा भवति त्रिधा भवति' इत्यादिश्रौतशब्दात् ज्ञापकात, (इत्यपरः पक्षः) **एषा व्यवस्था न**—अशरीरत्वमेव, अकर्मायत्तशरीरवत्त्वमेव वेत्युभयमपि न एकैकशो व्यवस्थितम्, **बहुधा शब्दात्**—बहुशरीरसम्बन्धबोधकात् 'त्रिधा भवतीत्येवंरूपात्, **भोगश्रुतेश्च**—'मनसैतान् कामान् पश्यन् रमते' इति शरीरं विनाऽपि मनसैव भोगप्राप्तिश्रुतेरपि, **अयम्**—देहपरिग्रहः, **ऐच्छिकस्तु स्यात्**—साङ्कल्पिक एव भवेत् ; न नियतः ॥ ५ ॥

—o—

(2) अधिकरणसारावलिः (श्लो. 17-24)

(534) मुक्तः प्रोक्तोऽशरीरः क्वचिदथ बहुधासम्भवः क्वाऽप्यधीतो
गानक्रीडादि चोक्तं तदनुगुणमतद्द्वन्द्वमार्षं निरस्यन् ।
स्वच्छन्दस्योभयं तत् क्षममिति वदति स्वं मतं सूत्रकारः
स्याच्चाकर्मोद्भवं तन्निखिलमपि परब्रह्मवत् तत्समस्य ॥ १७ ॥

**मुक्तः**—संसारबन्धनाद्विमोकं प्राप्तश्चेतनः, **क्वचित्**—कस्मिंश्चन 'अशरीरं वावे'ति श्रुतिवाक्ये, **अशरीरः प्रोक्तः**—शरीररहित इति उपदिष्टः, **अथ क्वाऽपि**—श्रुतिवाक्यान्तरे च

'स एकधा भवतीति' **बहुधासम्भवः**—नानाशरीरविशिष्टतया भवनम्, **अधीतः**—आम्नातम्, **गान क्रीडादि च**—सामगानं विहारादिकमपि च, **उक्तम्**—'साम गायन्, जक्षत् क्रीडन्' इत्यादिश्रुतिषु बोधितम्, **आर्षं तदनुगुणमतद्वन्द्वम्**—तादृशश्रुतिद्वयानुरोधिबादरि-जैमिन्याख्य-ऋषिसंमतं आशयद्वयम्, **निरस्यन्**—नियमदूरीकरणेन परिहरन्, **स्वच्छन्दस्य**—अकर्मवश्यस्य मुक्तात्मनः, **तदुभयम्**—अशरीरत्वं सशरीरत्वं चेत्युभयमपि, **क्षममिति**—सम्भावितमेवेति, **स्वं मतम्**—स्वीयमाशयम्, **सूत्रकारः**—शारीरकसूत्रकृद्बादरायणः, **वदति**—'द्वादशाहवदुभयविधम्' इति सूत्रेण व्यक्तं करोति, **तत् निखिलमपि**—मुक्तात्मानमधिकृत्योक्तं सर्वमपि, **परब्रह्मवत्**—परस्य ब्रह्मण इव, **तत्समस्य**—परब्रह्मतुल्यस्य मुक्तस्याप्यात्मनः, **अकर्मोद्भवं स्यात्**—कर्मानधीनमेव भवेत् ॥ १७ ॥

(535) मोक्षे पुण्याद्यभावात् तदुपधिकवपुर्वर्जितत्वं न दूष्यं
तस्मिन् दुःखार्हदेहत्यजि च शुभवपुस्सत्वपक्षोऽप्यबाध्यः ।
इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्या-
न्नैवं स्वच्छन्ददेहग्रहवदनियमस्थापनेऽत्राऽभिसन्धेः ॥ १८ ॥

**मोक्षे**—मोक्षावस्थायाम्, **पुण्याद्यभावात्**—पुण्यपापाभिधयोः कर्मणोरसत्त्वात्, **तदुपधिकवपुर्वर्जितत्वम्**—मुक्तस्य कर्मोपाधिनिबन्धनदेहसम्बन्धराहित्यम् (बादरिमतम्) **न दूष्यम्**—निरसनार्हं न भवति, **तस्मिन्**—मुक्तात्मनि, **दुःखार्हदेहत्यजि च**—दुःखानुभवप्रयोजकदेहसम्बन्धपरित्यागवति च सति, **शुभवपुस्सत्त्वपक्षोऽपि**—मङ्गलमयशरीरवत्तापक्षोऽपि (जैमिनिसंमतः) **अबाध्यः**—बाधनार्हो न भवति, **अत्र**—मुक्तात्मनो देह तदभावविषये, **इत्थं सति**—पक्षद्वयस्याऽपि अदूष्यत्वे सति, **इह**—अस्मिन्नधिकरणे, **मुनिना**—बादरायणेन, **मुक्तस्थितिः**—मुक्तात्मनोऽवस्था, **कीदृशी सूत्रिता स्यात्**—किमाकारा वा सूत्रेण निर्णीता भवेत्? (अत्र कीदृशस्याऽपि निर्णयस्यावकाशो नैव भवेत्? अतः एतदधिकरणारम्भो निष्प्रयोजन एव)—इति शङ्कायाम्, **नैवम्**—एवं शङ्कनमसाधु, **स्वच्छन्द....स्थापने**—स्वसङ्कल्पमात्रायत्तशरीरस्वीकारांशयुक्तस्य सशरीरत्वाशरीरत्वान्यतरपक्षध्रौव्याभावविश्रामस्य समर्थने एव अत्र सूत्रकाराभिसंधिसत्वात्, (अधिकरणसार्थक्यात्) ॥ १८ ॥

(536) नाना देहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंस-
स्तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम् ।
नैतद्धीव्याप्तिसिद्धेर्भवति च जगदावेशवाक् तन्निदाना
सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम् ॥ १९ ॥

**अधिगतब्रह्मसाम्यस्य पुंसः**—ब्रह्मणा साकं परमं साम्यं प्राप्तवतो मुक्तात्मनः, **यदि युगपत् नानादेहाः स्युः**—एकस्मिन्नेव काले अनेकानि शरीराणि यदि नाम भवेयुः तर्हि, **तेषाम्**—तादृशमुक्तात्मसम्बन्धिनामनेकेषां शरीराणाम्, **व्याप्तस्वरूपान्वयः उचित इति**—सर्वैर्देहैः सह युगपदेव व्याप्त्यर्हेण जीवस्वरूपेणैव सम्बन्धः शारीरव्यवहारनिर्वाहकः सन् युक्तो भवतीति हेतोः, **प्राक्तनाणुत्वहानम्**—बन्धकाले जीवीयपरिमाणत्वेन समर्थितस्य अणुपरिमाणस्य मोक्षकाले नाशोऽभ्युपगन्तव्य आपततीति, मोक्षे जीवस्य विभुत्वपरिग्रह एव न्याय्यः (इति शङ्कने), **एतत् न**—जीवस्य मोक्षे स्वाभाविकपरिमाणत्यागाभ्युपगमनं नैव न्याय्यम्, **धीव्याप्तिसिद्धेः**—धर्मभूतज्ञानद्वारा जीवात्मनः सर्वव्याप्तेः 'स चाऽऽनन्त्याय कल्पते' इति श्रुतितः सिद्धत्वात्, **जगदावेशवाक्**—'सर्वमाप्नोति सर्वशः' इत्युक्तसर्वजगत्प्रवेशवाचोयुक्तिः, **तन्निदाना**—व्याप्तिनिबन्धना सती, **भवति च**—साभिप्राया भवति, **ब्रह्मसाम्यम्**—परमं साम्यमुपैतीति श्रुत्यवगतं मुक्तस्याऽऽत्मनः परब्रह्मणा सह समत्वम्, **सौभर्यादौ प्रक्लप्तां गतिम्**—सौभरिप्रभृतौ आत्मविशेषे निर्णीतरूपां अनेकशरीरेष्वेकदा व्याप्तिनिर्वाहरीतिम्, **अपवदितुं**—बाधितुम्, **न क्षमम्**—नैव समर्थं भवेत् ॥ १९ ॥

(537) देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्त-

श्चैतन्यद्वारतश्चेत् सकलमपि सदा धारयेद्व्याप्तबोधः ।

नैवं मुक्तस्य शक्तिर्नियमितविषया त्विच्छया सर्वशक्तेः

प्राक् तादृग्योगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेक्ष्यः ॥ २० ॥

**देहानां यौगपद्ये**—मुक्तात्मसम्बन्धिनामनेकेषां शरीराणामेककालिकत्वे, **अणुः एष मुक्तः**—अणुपरिमाणोऽयं मुक्तात्मा, **बहुषु**—एककालभवेषु नानाशरीरेषु, **कथं धारकोऽस्तु**—केन वा प्रकारेण धारण-नियमनादिकर्ता भवितुमर्हः स्यात्?, **चैतन्यद्वारतश्चेत्**—धर्मभूतज्ञानद्वारा चेत् नानादेहधारण-नियमनादिकर्ता भवेत् तर्हि, **व्याप्तबोधः**—सर्वजगद्व्याप्त्यर्हज्ञानवान् मुक्तश्चेतनः, **सकलमपि**—सर्वमपि जगत्, **सदा**—सर्वकालेऽपि, **धारयेत्**—धारण-नियमनादिना निर्वोढुं शक्नुयात्, (तदा जीवेश्वरयोरविशेषः प्रसज्यते ; तथा च मुक्तौ जीवब्रह्माभेद एव विश्राम्यति—इति शङ्कने), **नैवम्**—अनया रीत्या शङ्कनं न साधु, **मुक्तस्य शक्तिः**—मुक्तात्मनः सङ्कल्पप्रयुक्ता व्याप्तधर्मभूतज्ञानसहभावित्वेन शरीरधारणादिप्रयोजिका शक्तिः, **सर्वशक्तेः इच्छया तु**—सर्वशक्तस्य परमात्मनः सङ्कल्पेनैव प्रयोजकभूतेन, **नियमितविषया**—विषयनियमवत्येव प्रवर्तते ; (न तु सर्वेश्वरवत् सर्वदा सर्वशक्तत्वम्), **प्राक्**—मुक्तेः

पूर्वकाले (संसारदशायाम्), **तादृग्योगशक्त्या**—सर्वशक्तभगवद्दत्तया शक्त्याश्रयसङ्कल्पप्रयोजिकया योगशक्त्या हेतुभूतया, **बहुतनुभजने**—सौभर्यादिभिर्नानाशरीरस्वीकारे कार्ये, **कर्मबन्धोऽपि**—तदनुगुणपुण्यादिकर्मसम्बन्धोऽपि, **अपेक्ष्यः**—नानाशरीरपरिग्रहप्रयोजकत्वेन अपेक्षणीयो भवति, (न हि सर्वेषां योगिनां ऋषीणामपि वा एवं नानाशरीरपरिग्रहः पुराणेतिहासादौ प्रसिद्धः) अपि तु सौभर्यादीनां केषांचिदेव व्यक्तिविशेषाणामिति) ।। २० ।।

(538) शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिः स्वैः
पुंसोऽनंशाऽपि बुद्धिर्बहुविधविकृतिः स्वीकृतैवं स चाऽस्तु ।
वालाग्रेत्यादिवाक्यात् तदयमणुरपि स्यादनन्तोऽपि मुक्तो
न स्याज्जैनादिभङ्गे परिहृतविकृतेरैकरूप्यानपायात् ॥ २१ ॥

**क्षेत्रज्ञसंज्ञा शक्तिः**—जीवात्मरूपा शक्तिः, **स्वैः कर्मभिः**—स्वीयैः (तत्तदीयैः) अविद्यापदवाच्यैः पुण्य-पापाख्यैः कर्मभिः साधनभूतैः, **वेष्टिता**—आवृतेति, **मुनिभिः अभिदधे**—पराशरादिभी ऋषिभिः प्रतिपादितं वर्तते ('यया क्षेत्रज्ञशक्तिः सा वेष्टिता' इति) **पुंसो बुद्धिः**—पुरुषस्य (जीवस्य) धर्मभूतज्ञानाभिधा धीः, **अनंशाऽपि**—निरवयवाऽपि सती, **बहुविधविकृतिः स्वीकृता**—नानाकारविकारवत्तया सङ्कोच-विकासाश्रयतया भवद्भिरभ्युपगता बन्धकाले कर्मायत्तसंकोचवती; मोक्षकाले स्वाभाविकविकासवती इति), **स च**—तादृश्या धियः आश्रयभूतो जीव एव, **एवमस्तु**—स्वयं निरवयवोऽपि सङ्कोच-विकासाद्यात्मकनानाविकाराश्रयोऽभ्युपगम्यतां नाम, (को दोषः ?) **अणुरपि**—अणुपरिमाणस्वाभाव्यवानपि प्रकृतो जीवः, **मुक्तः**—मुक्तावस्थामधिगतः, **वालाग्रेत्यादिवाक्यात्**—'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥' इति श्वेताश्वतरश्रुतेः प्रमाणात्, **अनन्तोऽपि स्यात्**—विभुपरिमाणोऽप्युपेयो भवतु, (इति शङ्कने) **न स्यात्**—अणुर्जीवः नैव विभुर्भवेत्, **जैनादिभङ्गे**—आत्मस्वरूपविकारवादिनां जैनाद्यवैदिकानां निरासपरे एकस्मिन्नसम्भवाधिकरणे, **परिहृतविकृतेः**—निर्विकारत्वेनैव व्यवस्थितस्य जीवस्य, **ऐकरूप्यानपायात्**—निर्विकारत्वैकरूपताया अपायस्य (कदाचित् सविकारतायाः) अनभ्युपगन्तव्यत्वात् ॥ २१ ॥

(539) जीवस्यैकैकशो हि त्यजनत उदितो वृक्षशाखासु शोष-
स्तस्मादद्वारकं स्यादपगतवरणे मुख्यमानन्त्यमस्मिन् ।
मैवं शाखासु भोगाश्रयनियतिकरोपाधिनाशः प्रहाणं
क्षेत्रादिन्यायतोऽसावभिमतिविरहात् स्यादधीतो जहातिः ॥ २२ ॥

**जीवस्य**—वृक्षाधिष्ठातृभावेनाऽवस्थितस्याऽऽत्मनः, **एकैकशः त्यजनतो हि**—वृक्षांशभूतैकैकभागपरित्यागत एव खलु, **वृक्षशाखासु**—वृक्षसम्बन्धिनीष्वेकैकासु अंशात्मिकासु शाखासु, **शोषः**—शुष्कतायाः (नीरसतायाः) सम्भवः, **उदितः**—'यदेकां शाखां जहाति ; अथ सा शुष्यति' इत्यादिना श्रुतिवाक्येनोक्तः, **तस्मात्**—स्वीयशरीरांशत्यागात् अंशान्तरेऽवस्थानाच्च ज्ञापकात्, **अपगतवरणे**—निवृत्तकर्मकृततिरोधाने आविर्भूतस्वरूपे जीवे, **आनन्त्यम्**—'स चाऽऽनन्त्याय कल्पते' इति श्रुत्युक्तम् अपरिच्छिन्नपरिमाणत्वम्, **अद्वारकम्**—धर्मभूतज्ञानरूपं द्वारमनाश्रित्य वर्तमानम्, **मुख्यं स्यात्**—आत्मस्वरूपगतमेव सत् अगौणमेव भवितुमर्हम् ; (इति शङ्कने) **मैवम्**—आत्मस्वरूपपरिमाणतः आत्मनि सविकारत्वशङ्कनं नैवोचितम्, **शाखासु**—वृक्षांशेषु, **प्रहाणम्**—जीवसम्बन्धपरित्यागो हि नाम, **भोगाश्रयनियतिकरोपाधिनाशः**—आत्मनः स्वीयसुख-दुःखानुभवावच्छेदकव्यवस्थासम्पादकस्य पुण्य-पापाख्योपाधिसम्बन्धस्य विमोक एव ; (न तु जीवस्य पूर्णे वृक्षे स्वरूपव्याप्तिः तदेकदेशे व्याप्तिवर्जनतः एकदेशान्तरे अवस्थितिः इत्यादि) **असौ जहातिः**—'शाखां जहाति' इति श्रुतौ हाधातुः, (ओहाक् त्यागे (पा,धा.) **क्षेत्रादिन्यायतः**—देवदत्तादेः पुरुषस्य आराम-केदारादिक्षेत्राणां त्यागव्यवहार इव, **अभिमतिविरहात्**—तद्विषयकस्वीयत्वाभिमानवर्जनात् (स्वयत्नकृतात् ईश्वरेच्छाकृताद्वा) प्रयोजकभूतात्, **अधीतः स्यात्**—श्रुतिपठितः स्यात्, न तु स्वरूपव्याप्ति-तद्वर्जनाभ्याम् इति ॥ २२ ॥

(540) एको नैकः परस्मात् पृथगपृथगपि स्वस्वरूपेण मुक्तः
स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकक्षीबवद् ये भ्रमन्ति ।
तेऽन्वीक्ष्य स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपर्यं
जैनावष्टम्भदृप्यन्मतिकलहमुचः सत्पथं संश्रयन्तु ॥ २३ ॥

**मुक्तः**—संसारबन्धाद्विमोकं प्राप्तवान् चेतनः, (मुक्तावस्थो जीवः), **स्वस्वरूपेण**—स्वीयं धर्मभूतं ज्ञानमद्वारीकृत्य स्वस्वरूपत एव, **एको नैकः**—नानाप्रभेदराहित्येन अभिन्नरूपः, तद्वत्त्वेन भिन्नरूपश्च, **परस्मात् पृथक् अपृथगपि**—परमात्मनः सकाशात् पार्थक्यवान् तद्रहितश्च, **स्वयम्**—परमात्मसङ्कल्पानधीनस्वसङ्कल्पवशादेव, **स्वाभीष्टाशेषभोक्ता**—स्वाभिलषितनिखिलविषयकर्मकभोक्तृत्ववान्, **इति**—उक्तरीत्या मुक्तिकालिकजीवस्वरूपनिर्णयतः, **पृथुकक्षीबवत्**-बाल-मत्तसादृश्येन, **ये भ्रमन्ति**—ये वा केचन दार्शनिकंमन्याः अप्रतिपत्त्यन्यथाप्रतिपत्तिमन्तो वर्तन्ते, **ते**—तादृशा दार्शनिकाः, **स्वोक्तिबाधम्**—स्ववचनगतमेव मिथोविरोध-

कृतमुपमर्दम्, **श्रुतिशतविहतिम्**—जीवेषु नानात्वं, जीव-ब्रह्मणोः ईशेशितव्यत्वादिकृतं भेदं, जगद्ब्रह्मणोश्च सृज्य-स्रष्टृभावादिकृतमनैक्यं च घोषयन्तीभ्यो बह्वीभ्यः श्रुतिभ्यः सम्पद्यमानं स्वमतस्य स्पष्टं भङ्गम्, **तत्तदुक्त्यान्यपर्यम्**—जीवेष्वभेदपरश्रुतीनां ज्ञानैकाकारत्वादिकृतस्वरूपा-वैलक्षण्ये तात्पर्यं, जीवब्रह्माभेदपरश्रुतीनां ज्ञानानन्दाद्यवैलक्षण्यकृतसाजात्य-शरीरात्मभावादि-कृताभेदव्यवहारार्हत्व-ब्रह्मापृथङ्निष्ठत्वेषु तात्पर्यं, जगद्ब्रह्माभेदपरश्रुतीनां नियतविशेषणविशेष्य-भावकृतवैशिष्ट्यतात्पर्यं चेति स्वासंमतमेव तात्पर्यान्तरं आग्रहगृहीतिकां विहाय सम्यग्विवेकत आलोच्य, **जैनावष्टम्भदृप्यन्मतिकलहमुचः**—मिथोविरुद्धधर्माभ्युपगमे प्रथमोदाहरणभूतानां जैनानामादर्शाश्रयणेन तत्त्वानवगाहिमतिमतां तत्तद्दार्शनिकानां मिथो घर्षणं दूरीकृतवन्तः, **सत्पथं संश्रयन्तु**—भगवद्रामानुजप्रवर्धितां सद्वस्तुलाभौपयिकीं सरणिमेवाऽऽश्रिताः शान्ता भवन्तु ॥ २३ ॥

(541) सर्वं सङ्कल्पमात्राल्लभत इति समाम्नायते सूत्रितं च
स्वेच्छातो देहयोगाद्यनियतिकथनं स्यादतः पिष्टपेषः ।
तन्नाऽन्योन्योपरुद्धश्रुतिगतिनियतिः कामतोऽनेकदेह-
स्वीकारप्रक्रियेत्याद्यनियतिकथने सूत्रकाराभिसन्धेः ॥ २४ ॥

**सर्वम्**—पितृलोकादिकमभीप्सितं सर्वम्, **सङ्कल्पमात्रात्**—प्रयत्नाद्यनपेक्षात् केवलादेव सङ्कल्पात्, **लभत इति**—प्राप्नोतीति, **समाम्नायते**—'स यदि....सङ्कल्पादेवास्य पितरः' इत्यादिकया श्रुत्या परिपठ्यते, **सूत्रितं च**—तदेतत् 'सङ्कल्पादेव तच्छ्रुतेः' इति सूत्रात् विचार्य सहेतुकं निर्णीतमप्यास्ते, **अतः**—एतदधिकरणसम्पाद्यार्थस्य पूर्वमेव निर्णीतत्वात्, **स्वेच्छातो देहयोगाद्यनियतिकथनम्**—स्वसङ्कल्पात् मुक्तात्मनो देहसम्बन्ध-तदभावयोरन्यतर-नियमभावस्य अस्मिन् अभावाधिकरणे स्थापनम्, **पिष्टपेषः**—पूर्वं पिष्टस्यैव पुनः पेषणसदृशः कृतकरणव्यापार एव; न नूतनोऽगतार्थः, (इति शङ्कने) **तन्न**—शङ्कारूपेण यदुक्तं तत् न साधु, **अन्योन्यो....नियतिः**—मिथोविरुद्धवद्भासमानानां श्रुतीनां (सशरीरत्वाशरीरत्वादौ विषये) तात्पर्यव्यवस्था, **कामतः**—स्वेच्छया भगवत इच्छया वा, **अनेकदेह....क्रिया**—नानाशरीर-परिग्रहप्रकारः, **इत्याद्यनियतिकथने**—एवमाद्यंशेषु एकतरनैयत्याभाववर्णने, **सूत्रकाराभि-सन्धेः**—शारीरकसूत्रकृतो द्वैपायनस्य परमतात्पर्यात् ॥ २४ ॥

—o—

### (3) अधिकरणार्थसङ्ग्रहः ॥

अभावाधिकरणे—शरीरस्य दुःखहेतुत्वात्, 'मुक्तस्य शरीरं ने'ति बादरिमतमनूद्य, 'स एकधा भवती'त्यादिषु मुक्तस्य अनेकधाभावश्रवणात्, अच्छेद्यस्य निरवयवस्य शरीरेण विना अनेकीभावानुपपत्तेः कर्मकृतशरीरस्यैव दुःखहेतुत्वाच्च, 'सशरीर एवाय'मिति जैमिनि-मतेन प्रतिक्षिप्य, सत्यसङ्कल्पत्वश्रुत्या इच्छानुरोधेन कदाचित्सशरीरः, अशरीरश्च कदाचित्—इति स्वमतमुपन्यस्तम् ॥

—o—

### (4) नयसङ्गतिमालिका ॥

अविघातेच्छमैश्वर्यं सङ्कल्पनयबोधितम् ।
अनन्तरनये प्रायेणान्तरातङ्कशोधनम् ॥ २११ ॥

इति अभावाधिकरणम् ॥ ५ ॥

—o—

## (156) जगद्व्यापारवर्जाधिकरणम् ॥ ४–४–६ ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(219) मुक्तस्य भोगः खलु साम्यशब्दान्निर्वोढृता स्याद्भुवनस्य तद्वत् ।
नैतत् परस्यैव तथात्वशब्दाद्भोगोऽनुभूतिः सगुणस्य तस्य ॥ ६ ॥

**मुक्तस्य भोगः**—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' इति मुक्तात्मानं प्रकृत्योक्तः मोक्षकालीनो मुक्तस्यैश्वर्यानुभवः, **तद्वत्**—परमात्मन इव, **भुवनस्य निर्वोढृता खलु स्यात्**—जगतः सृष्ट्यादिना निर्वाहकत्वमेव खलु भवितुमर्हम्, **साम्यशब्दात्**—'निरञ्जनः परमं साम्यमुपैति' इति मुक्तात्मनः ब्रह्मणा समं परमसाम्यस्यैव श्रुत्या उक्तेः, (ब्रह्मगतधर्माणां सर्वेषां मुक्ते अनभ्युपगमे परमसाम्यानिर्वाहात्), इत्येवं पूर्वपक्षे, **नैतत्**—जगत्स्रष्टृत्वादिना मुक्तात्मनि ब्रह्मसाम्यचिन्तनं नैव साधु, **परस्यैव**—परमात्मन एव, **तथात्वशब्दात्**—'यतो वा इमानि भूतानि जायन्ते' इत्यादिना जगत्स्रष्टृत्वादिबोधकश्रुतेः मुक्ते जीवे तदभ्युपगमायोगात्, **भोगः**—मोक्षकालीनः मुक्तात्मगतः 'सोऽश्नुते' इत्युक्तो भोगः, **सगुणस्य तस्य अनुभूतिः**—अखिल-हेयप्रत्यनीकसमस्तकल्याणगुणपूर्णस्य भगवतः (गुण-गुणिनोरुभयोरपि) निरन्तरः निरुपाधिकः अनुभव एव ॥ ६ ॥

## (1) अधिकरणसारावलिः ॥ (श्लो. 25-33)

(542) यद्यप्युक्तो विमुक्तः परतनुरपृथक्सिद्ध इत्यत्र पूर्वं
व्यापारांशे तथाऽपि श्रुतमिह परमं साम्यमक्षोभणीयम् ।
सङ्कल्पादेव सर्वोत्थितिरपि हि ततः स्यादिति प्रत्यवस्थां
कृन्तत्यन्त्येऽधिकारे कृतिमदितरयोः स्थापयन् भोगसाम्यम् ॥ २५ ॥

**यद्यपि**—वस्तुतः, **विमुक्तः**—लब्धसंसारविमोकश्चेतनः, **परतनुः अपृथक्सिद्ध इति**—परमात्मशरीरभूतः, शरीरत्वकृततदपृथक्सिद्धिमांश्चेति, **अत्र पूर्वम्**—एतत्पादीये प्राक्तने अविभागेन दृष्टत्वाधिकरणे, **उक्तः**—विचार्य स्थापितः, **तथाऽपि**—तस्यांशस्य सिद्धत्वेऽपि, **इह श्रुतम्**—उपनिषदि मुक्तप्रकरणे (' निरञ्जनः परमं साम्यमुपैति ' इति) **परमसाम्यम्**—जीवस्य मुक्तस्य परमात्मना सह सर्वात्मना साम्यम् , **व्यापारांशेऽपि**—जगत्सृष्टि-तन्नियमनादौ भगवद्व्यापाररूपेंशेऽपि अन्वीयमानम् , **अक्षोभणीयम्**—अवर्जनीयमेव भवति (न हि किंचिदंशपरित्यागे परमसाम्यं सिध्यति ; अन्यथा परमत्वविशेषणनैरर्थक्यात् ), **ततः**—उक्ताद्धेतोः (जगद्व्यापारस्याऽपि मुक्तात्मनि सत्त्वात् ) , **सर्वोत्थितिरपि**—मनोरथगोचरपित्रादिसर्वार्थपूर्तिरपि, **सङ्कल्पादेव हि स्यात्**—भगवत इव अस्यापि इच्छामात्रादेव हि सिध्येत् , **इति प्रत्यवस्थाम्**—एवमाकारां पूर्वपक्ष्याशङ्काम् , **अन्त्ये अधिकारे**—शारीरकशास्त्रस्य अन्तिमभूते अस्मिन् जगद्व्यापारवर्जाधिकरणे, **कृतिमदितरयोः**—जगद्व्यापारवतः ईश्वरस्य तदभाववतोऽपि जीवस्य च, **भोगसाम्यं स्थापयन्**—भोगांशे—परमात्मस्वरूप-तद्गुणानां निरन्तरानुभवांशे अवैलक्षण्यकृतं श्रुत्युक्तं परमसाम्यं अबाधितं समीकुर्वन् , **कृन्तति**—निर्मूलयति ॥ २५ ॥

(543) सायुज्यं भोगसाम्यं समगणि निपुणैः शब्दशक्त्याद्यबाधात्
तच्च व्यापारसाम्ये त्वसति न घटते स्वक्रियास्वादहानेः ।
तस्मान्मुक्तस्य सृष्टिप्रभृतिरपि जगद्व्यापृतिर्ब्रह्मतुल्या
मैवं तल्लक्षणं सा कथमनुगमतस्तस्य चाऽन्यस्य च स्यात् ॥ २६ ॥

**सायुज्यम्**—सायुज्यशब्दार्थः , **शब्दशक्त्याद्यबाधात्**—तच्छब्दावयवव्युत्पत्तेः अबाधनेन सिद्धिं निमित्तीकृत्य, (युज्यत इति युक्—भोगाय पुरुषेण सम्बध्यमानं भोग्यभूतं वस्तु । समानं-अवैलक्षणं, युक्-भोग्यं येषां ते सयुजः । तेषां भावः सायुज्यम्—इति शब्दलभ्यो यौगिकोऽर्थः) **निपुणैः**—शब्दार्थव्युत्पत्तिकुशलैः, **भोगसाम्यं समगणि**—भोगांशे अवैलक्षण्यरूपमेवेति निश्चितम् ; न तु स्वरूपाभेदरूपमिति, **तच्च**—भोगसाम्याभिधं सायुज्यं च, **व्यापार-**

**साम्ये असति तु**—जीव-परमात्मनोः व्यापारांशे समत्वे अविद्यमाने पुनः, **न घटते**—नैव सङ्गतं भवति, **स्वक्रियास्वादहानेः**—स्वव्यापारं विचिन्त्य आनन्दानुभवस्याऽपि भोगान्तर्गततया स्वीयव्यापारस्यैव मुक्तात्मन्यभावे तच्चिन्तनपूर्वकानन्दस्याप्यभावेन भोगसाम्यस्य असिद्धेः, **तस्मात्**—भोगसाम्यस्य निर्वहणीत्वात्, **मुक्तस्य**—ब्रह्मसायुज्यं प्राप्तवतश्चेतनस्य, **सृष्टिप्रभृतिः**—सृष्टि-नियमनादिरूपा, **जगद्व्यापृतिरपि**—जगत्सम्बन्धिव्यापारसिद्धिरपि, **ब्रह्मतुल्या**—परमात्मसाम्यावहा अवश्याभ्युपगम्या—(इति शङ्कने), **मैवम्**—जगद्व्यापृत्यन्वयेनाऽपि ब्रह्मतुल्यत्वनिर्वहणं नैव साधु, **तल्लक्षणं सा**—परमात्मलक्षणभूता जगद्व्यापृतिः, **तस्य अन्यस्य च**—तल्लक्षणलक्ष्यभूतस्य परमात्मनः, लक्ष्येतरस्य मुक्तात्मनो जीवस्य च, **अनुगमतः**—अनुगतेनैव रूपेण, **कथं च स्यात्**—कथं वा भवितुमर्हति ! ('यतो वा इमानी'त्यादिलक्षणस्य जीवब्रह्मोभयसाधारणत्वे ब्रह्मलक्षणत्वच्युतिः ; असाधारणस्यैव लक्षणत्वात् । ब्रह्मलक्षणत्वेऽपि जीवान्वये अतिव्याप्तिरिति वैघट्यात्) ॥ २६ ॥

(544) कथ्यन्ते सृष्टिवाक्ये क्वचिदपि न जगत्कारणत्वेन मुक्ताः

प्राधीतः कामचारो भवतु न जगदारम्भकत्वं ततः स्यात् ।

सर्वाकारोपभोग्येश्वरविषयधियः साम्यतो भोगसाम्यं

युज्येताऽऽनन्दवल्ल्यां समगणि विभुनाऽऽनन्दमात्रे समत्वम् ॥ २७ ॥

**क्वचिदपि सृष्टिवाक्ये**—श्रुत्यन्तःपातिनि जगत्सृष्टिकारणाभिधायिनि कस्मिन्नपि वाक्ये, **मुक्ताः**—निवृत्तसंसाराश्चेतनाः, **जगत्कारणत्वेन न कथ्यन्ते**—जगत्सृष्टिनिर्वाहकतया नैव प्रतिपाद्यन्ते, **कामचारः**—मुक्तात्मनाम् अकर्मवशः स्वच्छन्दः लोकेषु विशिष्टः सञ्चारः, **प्राधीतो भवतु**—'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्येवं श्रुतौ स्फुटमाम्नातोऽस्तु नाम, **ततः**—कामचारस्य श्रुतावाम्नानमात्रेण, **जगदारम्भकत्वं न स्यात्**—मुक्तानां जगत्कारणत्वं नैव सिध्येत् ; (न हि जगति स्वच्छन्दः सञ्चारो जगत्सर्गे हेतुतामापादयति सञ्चरतः ; तादृशान्वय-व्यतिरेकयोरभावात्) **सर्वाकारो....धियः**—स्वस्वरूपेण स्वगतैरखिलैर्गुणैरपि च अनुभाव्यानन्दस्वरूपस्य परमात्मनो विषयिण्याः बुद्धेः, **साम्यतः**—परमात्मनि मुक्तात्मनि च अविलक्षणत्वतः, **भोगसाम्यम्**—जीव-परयोर्भोगावैलक्षण्यम्, **युज्येत्**—निर्व्यूढं भवति, **आनन्दवल्ल्याम्**—आनन्दवल्लीनामके तैत्तिरीयोपनिषद्भागे, **विभुना**—परमात्मना सह, **आनन्दमात्रे समत्वं समगणि**—'ब्रह्मण आनन्दः, श्रोत्रियस्य च' इत्येवम् आनन्दांशे एव अवैलक्षण्यं निरूपितं वर्तते ; न अन्यांशेऽपि ॥ २७ ॥

(545) निष्कामश्रोत्रियस्याऽप्यतिदिशति सुखं मानुषानन्दतुल्यं
साऽऽनन्दान् वक्तुकामा शतगुणमधिकानाविरिञ्चं क्रमेण ।
तत्तद्भोगात् त्वदिष्टं कथमिदमवरं कष्टमिष्टं(हि) च मुक्ते
नित्यानन्दे मुकुन्दप्रियजनसदृशे ह्येकदेशानुवादः ॥ २८ ॥

**आविरिञ्चम्**—मनुष्यमारभ्य प्रजापतिपर्यन्तम्, **क्रमेण**—उत्तरोत्तरम्, **शतगुणमधिकान्**—एकैकस्य शतगुणने यावन्तो भवन्ति तावन्तः अतिशयितान्, **आनन्दान्**—सुखविशेषान्, **वक्तुकामा**—प्रतिपादयितुं प्रवृत्ता, **सा**—तैत्तिरीयानन्दवल्ली **निष्कामश्रोत्रियस्याऽपि**—अकामहतश्रोत्रियस्याऽपि (औपाधिकप्राकृतसर्वसुखाशाविदूरस्य अनौपाधिकमहानन्दमग्नस्य मुक्तात्मनोऽपि) **मानुषानन्दतुल्यं सुखम्**—मनुष्यानन्दसदृशमानन्दम्, **अतिदिशति**—तत्सदृशवचनाद्बोधयति ; न तु साक्षात्तत्स्वरूपं वदति, **तत्तद्भोगात्**—शतगुणितमनुष्याद्यानन्दापेक्षया, **अवरम् इष्टम्**—न्यूनत्वेन संमन्यमानम्, **इदम्**—मनुष्यानन्दादिपदाभिधेयं सुखजातम्, **कष्टम्**—न्यूनत्वादेव दुःखरूपम्, **मुक्ते**—मुक्तात्मनि अनौपाधिकपरमानन्दभागिनि, **कथं त्वदिष्टम्**—मुक्तावानन्दतारतम्यवादिनस्तव संमतं कथं वा युक्तं स्यात्?, (मुक्ते अवरानन्दस्यायोगात् । वैषम्य-तारतम्यादिकं सर्वम् उपाध्यनुषङ्गवत एव खलु युक्तम् । वैषम्यप्रयोजकसर्वोपाधिविधुरस्य, अत एव मुक्तस्य वैषम्यादेरप्रसक्तेः । प्रसक्तौ वा मुक्तत्वायोगादिति । अतः अतिदेशार्थः एवं वर्णनीयः) **मुकुन्दप्रियजनसदृशे**—कालदेशापरिच्छेदेन भगवतो नित्यप्रियाणां नित्यसूरीणां समाने, **नित्यानन्दे**—अविनाश्यानन्दभागिनि मुक्तात्मनि, **एकदेशानुवादः**—शतेपञ्चाशन्न्यायेन सागरे जलबिन्दुवत् समुदाये एकदेशभूतस्यानन्दस्यावयुत्य पृथक्कृत्य अनुवादरूपा सती श्रुत्युक्ता सङ्गच्छते—इति ॥ २८ ॥

(546) आनन्दानन्त्यमाह श्रुतिरिह हि यतो वाच इत्यादिकाऽस्याः
विश्रान्तिः श्रान्तिमात्रादिति च निगदितं यामुनाचार्यवर्यैः ।
न ह्यानन्दो मितः स्याद्विधिशतवचनेष्यस्य यद्वा नभोवत्
तच्चोक्तं भूभृदण्वोरुदधिपतितयोर्मज्जने को विशेषः ॥ २९ ॥

**हि**—यतः, **इह**—ब्रह्मानन्दपरिगणनार्थे प्रकरणे, **यतो वाच इत्यादिका श्रुतिः**—'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्' इत्येवमादिरूपा तैत्तिरीयश्रुतिः, **आनन्दानन्त्यमाह**—भागवतः आनन्दस्य कालतो देशतो वा वाङ्मनसाभ्यां वा केनाप्युपाधिना अपरिच्छिन्नतां वदति, **अस्याः विश्रान्तिः**—भगवद्गुणवर्णनप्रवृत्ताया वेदवाचो विरतिः, **श्रान्तिमात्रात्**—वर्णनव्यापारायत्तात् आयस्तत्वादेव केवलं ; न तु वर्णनपूर्तेः

**इति**—इत्येवम्, **यामुनाचार्यवर्यैः**—भगवद्रामानुजपरमाचार्यैः ' आळवन्दार् ' अपरनामधेयैः, **निगदितं च**—निष्कृष्योक्तं च वर्तते (' यद्वा श्रमावधि ' इति स्तोत्ररत्ने श्लो. 8) **विधिशतवचनेऽपि**—शतसंख्यान् प्रजापतीन् निदर्श्य तच्छतगुणितानन्दवत्तायाः ब्रह्मणि कथने कृतेऽपि, **अस्य आनन्दः**—प्रस्तुतस्य ब्रह्मण आनन्दातिशयः, **न हि मितः स्यात्**—नैव खलु परिमाणतः इयत्तया प्रदर्शितो भवेत्, **यष्टया नभोवत्**—केनचन दण्डेन आकाशं प्रमातुं यत्नः कृतश्चेत् ! तादृशैः कोटिकोटिसंख्याकैः दण्डप्रमाणैरतिदिष्टैरपि यथा वा आकाशस्य इयत्ता नैवोक्ता भवेत् तद्वदेव परमात्मनोऽपीति, **तच्च उक्तम्**—तस्मिन्विषये निदर्शनमपि स्फुटीकृतम्, **उदधिपतितयोः**—महाजलौघे सागरे प्राप्तपतनयोः, **भूभृदण्वोः**—पर्वत-परमाण्वोः, **मज्जने**—अन्तर्निमज्जनतः स्वरूपतिरोधानविषये, **को विशेषः**—तरतमभावः कीदृशो वाऽस्ति, न कोप्यस्ति, (' को मज्जतोरणुकुलाचलयोर्विशेषः ' स्तोत्ररत्ने श्लो. 8) ॥ २९ ॥

(547) विश्वं मुक्तस्य देहो न खलु तदपृथक्सिद्ध्यभावोपलम्भा-

न्नोपादानं ततोऽसौ कथयितुमुचितः सर्वशक्तित्वहानेः ।

नाऽऽत्माऽशक्यं चिकीर्षेत्तदितरविषये निर्विघाता तदिच्छा

व्यापारे भिद्यमानेऽप्यविषमरसता दृश्यते क्वाऽपि लोके ॥ ३० ॥

**विश्वम्**—जगत्, **मुक्तस्य**—प्राप्तमोक्षस्य चेतनस्य, **न खलु देहः**—नैव आधेयत्वविधेयत्वशेषत्वैः शरीरभावं प्राप्तः, **तदपृथ.........लम्भात्**—तच्छरीरत्वनिश्चायिकायाः तदपृथक्सिद्धेः (पृथक्स्थितिप्रतिपत्त्यनर्हत्वे सति तत्सहभावेनैव स्थितिप्रतिपत्तिमत्तायाः) राहित्यस्यैव जगति दर्शनात्, विश्वं हि चेतनाचेतनात्मकं परमात्मापृथक्सिद्धिनैयत्यवत् । अतो हि परमात्मोपादानकं च) **ततः**—स्वापृथक्सिद्धविश्वकत्वाभावान्मुक्तस्य, **असौ**—मुक्तात्मा, **न उपादानं कथयितुमचितः**—नैव जगत उपादानकारणत्वेन वक्तुमर्हः, **सर्वशक्तित्वहानेः**—मुक्ते, उपादानत्वनियतस्य सर्वशक्तत्वस्य अभावात्, (एवं स्थिते) **आत्मा**—मुक्तश्चेतनः, **अशक्यम्**—स्वेनासाध्यम्, **न चिकीर्षेत्**—नैव कर्तुमभिलषेत्, **तदितरविषये**—अशक्येतरस्मिन् अर्थे (अर्थेऽर्थे) **तदिच्छा**—मुक्तसमवेता इच्छा, **निर्विघाता**—परमात्मना अन्येनाऽपि च न प्राप्य प्रतिबन्धा, **व्यापारे भिद्यमानेऽपि**—गृहकृत्येषु पाकव्यापारे, तदन्यस्मिन् क्षेत्ररक्षणादौ वा व्यापारे गृहवर्तिनां जनानां अन्यान्यस्मिन् विद्यमानेऽपि, **अविषमरसता**—पक्वान्नभोजनादौ विषये **ऐकरस्यम्**—रसतारतम्याभावः, **लोके क्वापि दृश्यते**—लौकिकेषु यवहारेष्वपि क्वचन अनुभूयते ॥ ३० ॥

(548) तत्तत्सेवाविशेषस्थिरपरिणमितः सार्वभौमप्रसादः
सूते भृत्यस्य साम्यं स्वयमनभिमतस्वामिचिह्नैकवर्जम् ।
एवं देवं दयालुं शरणमुपगतैर्लभ्यतेऽनन्यलभ्या
निर्धूतावृत्तिशङ्का निरुपधिकरसा सव्यवस्थात्ववस्था ॥ ३१ ॥

**भृत्यस्य**—सेवाप्रवृत्तस्य, **तत्तत्सेना....मितः**—महाराजनियोगतः प्राप्तस्य तस्य तस्य सेवारूपस्य कार्यविशेषस्य निरपराधानुष्ठानेन लब्धरूपः, **सार्वभौमप्रसादः**—अतिशयितः राजानुग्रहविशेषः, **अनभि····वर्जम्**—राज्ञः तद्भृत्यभूतस्य स्वस्य च असंमतं यत् छत्रचामरादि-सार्वभौमलाञ्छनं तद्विहाय, **साम्यम्**—विहारासनभोजनादौ विषये राज्ञा समानभोगत्वम्, **स्वयं सूते**—विशिष्टजनप्रेरणादिकं विनाऽपि स्वत एव सम्पादयति, **एवम्**—भृत्यः सार्वभौममिव, **दयालुं देवम्**—करुणैकरसं श्रियः पतिं परमात्मानम्, **शरणमुपगतैः**—रक्षकतया गतित्वेन च प्रपन्नैश्चेतनैः, **अनन्यलभ्या**—इतरैर्दुष्प्रापा, **निर्धूतावृत्तिशङ्का**—(भवमरुकान्तारं प्रति) पुनरावृत्तिसम्भावनागन्धविदूरा, **निरुपाधिकरसा**—सर्वोपाधिविनिर्मुक्तानन्दैकस्वभावा, **सव्यवस्था**—अनतिक्रान्तमर्यादा, **अवस्था**—विशिष्टा स्वस्वभावायत्ता दशा, **लभ्यते**—स्वयमेव संपद्यते ॥ ३१ ॥

(549) अत्राहुः सूत्रमन्त्यं पृथगधिकरणं केचिदाञ्जस्यलाभा-
दस्त्यावर्ते निषेध्ये त्विममिति हि पदं तेन शङ्कोत्थितेति ।
भाष्यादौ तन्न दृष्टं भवति च सुगमं पूर्वशेषत्वमस्य
स्यादावृत्तिप्रसङ्गादपि निखिलजगन्निर्मितौ साम्यशङ्का ॥ ३२ ॥

**केचित्**—शारीरकार्थचिन्ताप्रवृत्ताः केचनाऽचार्याः, **अत्र अन्त्यं सूत्रम्**—अस्मिन्नधिकरणेऽन्तिमं अनावृत्तिसूत्रम्, **आञ्जस्यलाभात्**—सूत्रप्रवृत्तिसामञ्जस्यलाभं विचिन्त्य, **पृथगधिकरणम्**—सप्तममधिकरणम्, **आहुः**–वर्णयन्ति, हि—यतः, **निषेध्ये आवर्ते**–मुक्तात्मनः आवृत्त्यविषयतया बोध्ये आवर्तरूपेऽर्थे, **इममिति पदम् अस्ति**—'इमं मानवमावर्तं नाऽऽवर्तन्ते' इति यत्किंचिदावर्तविशेषपरं इमामितिपदं श्रुतौ उपलभ्यते, **तेन शङ्का उत्थितेति**—तेन हेतुना मन्वन्तररूपे आवर्ते पुनरावृत्तिः सम्भावितेति शङ्का उद्भूतेति अधिकरणान्तरावश्यकतायां हेतुमपि वदन्ति, **तत्**—अधिकरणान्तरत्वम्, **भाष्यादौ न दृष्टम्**—श्रीभाष्ये तद्व्याख्यादौ वा नैव प्रस्तुतमस्ति, **अस्य**—अनावृत्तिसूत्रार्थनिर्णयौपायिकस्वरूपं तच्छेषत्वम्, **सुगमं च भवति**–सुष्ठु ज्ञेयं च वर्तते, **आवृत्तिप्रसङ्गादपि**–मुक्तस्य पुनरावृत्तिप्रसङ्गात् प्रासादपि'

**निखिलजगन्निर्मितौ साम्यशङ्का स्यात्**—प्रकृतिमण्डलं प्राप्तस्य मुक्तस्य सत्यसङ्कल्पेन परमपुरुषेण साकं निखिलजगन्निर्माणांशे समत्वापत्तिशङ्का प्रवर्तेतेति, (तन्निवारणाय पुनरावृत्तिरेव निर्मूल्यते अस्मिन् सूत्रे पूर्वसूत्रार्थध्रौव्यायेति) ।। ३२ ।।

(550) सर्गाद्यावर्तलीलारससहचरिते दण्डरासे नियुक्तं
जीवं देवो विमुच्य क्रमत इति सयुग्भावधन्यं भुनक्ति ।
कर्मात्यन्तोपशान्तेरिह न च पुनरावर्तयत्येनमित्य-
प्याम्नातेः कर्ममूलाक्षयफलकथनाद्युत्थशङ्कोपशान्तिः ॥ ३३ ॥

**सर्गाद्यत्र .... रिते**—पुनः पुनरावर्त्यमानसृष्टिस्थितिसंहारात्मकानन्यप्रेरितस्वप्रीत्यर्थव्यापारजनितसुखविशेषसहभाविनि, **दण्डरासे**—दण्डक्रीडाकर्मसदृशे कर्मणि संसारावर्ते **नियुक्तम्**—योजितम्, **जीवम्**—जीवात्मानम्, **देवः**—जगल्लीलाधुरन्धरः ईश्वरः, **क्रमतः**—यथायोग्यं नियतया रीत्या, **विमुच्य**—आवर्तभ्रमणाद्विमुक्तं कृत्वा, **सयुग्भावधन्यम्**—स्वानुगृहीतेन सायुज्येन कृतार्थमापाद्य च, **भुनक्ति इति**—तं स्वयमेव पालयतीति, **एनम्**—प्रापितसायुज्यं मुक्तात्मानम्, **कर्मात्यन्तोपशान्तेः**—सर्वेषामपि कर्मणां संसारप्रवेशहेतूनां निरवशेषोन्मूलितत्वाद्धेतोः, **इह**—प्रकृतिमण्डले, **पुनः नावर्तयति**—भूयः परिवृत्त्याश्रयं न करोति भगवान्, **इत्यपि आम्नातेः**—इत्येवमपि श्रुतौ पाठात् ज्ञापकात्, **कर्ममूला....शान्तिः**—'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' इत्यादिरूपेण चातुर्मास्यादिक्रियाजन्यफलानां अक्षय्यताप्रतिपादनपरेण श्रुतिवाक्यादिना उपचरितार्थेन चिरकालावस्थायित्वमात्रतात्पर्यकेण उत्पन्ना 'न च पुनरावर्तते' इत्यादावपि दीर्घकालान्तरभाव्यावृत्तितात्पर्यकत्वशङ्कायाः अनुपचरितमुख्यरूपवास्तविकानावृत्तिप्रतिपादनतः परिहारः अनेन सूत्रेण क्रियत इति, न अधिकरणान्तरत्वप्रसक्तिरिति ॥ ३३ ॥

## (3) अधिकरणार्थसंग्रहः ॥

जगद्व्यापारवर्जाधिकरणे—मुक्तस्य भगवता परमसाम्यापत्तिश्रवणात्, जगन्नियमनादिकमपि मुक्तस्यैश्वर्यम्—इत्याशङ्क्य,

जगन्नियमनप्रतिपादनपरेषु परमात्मनः प्रकृतत्वात्, मुक्तस्य असन्निहितत्वाच्च, भोगमात्रसाम्यलिङ्गाच्च, जगद्व्यापारवर्जमित्युक्तम् ॥

अनावृत्त्यधिकरणे—भगवत्स्वातन्त्र्यात् मुक्तस्य पुनरावृत्तिः सम्भवति—इत्याशङ्क्य,

'इमं मानवमावर्तं नाऽऽवर्तन्ते' इति तदनावृत्तिश्रवणात्, आश्रितव्यामुग्धस्य भगवतः तन्निवर्तनसङ्कल्पासम्भवाच्च, न मुक्तस्य पुनरावृत्तिः—इत्युपसंहृतम् ॥

[ इति श्रीमहाचार्यैरुपन्यस्तः अधिकरणार्थसंग्रहः ]

—o—

### (4) नयसङ्गतिमालिका ॥

जगद्व्यापारविरहे सम्पत् सावधिका भवेत् ।
इत्याक्षेपप्रतिक्षेपो जगद्व्यापारनीतितः ॥ २१२ ॥

एवं षण्णीतयः पादे तुरीये तुर्यलक्षणे ।
समागमन्शास्त्रसारनिरूपणपरे शुभम् ॥ २१३ ॥

षट्पञ्चाशद्युतशतमिताधिकरणावलेः ।
आचार्यसूक्तिकुसुमपूर्णा सङ्गतिमालिका ॥ २१४ ॥

इमां श्रीभाष्यनिर्णीतनयसंङ्गतिमालिकाम् ।
समर्पितां मोदते स्म प्रतिगृह्य श्रियः पतिः ॥ २१५ ॥

मालैषा संग्रहेच्छूनां मोदाय समगृह्यत ।
लक्ष्मीपुरं श्रीनिवासविपश्चिच्चक्रवर्तिना ॥ २१६ ॥

॥ इति नयसंङ्गतिमालिका समाप्ता ॥

इति जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

—o—

## एतत्पादियाधिकरणार्थसङ्क्षेपादि ॥

### (1) शारीरकन्यायकलापसंग्रहः ॥

(220) (1) आविर्भवत्स्वरूपत्वं (2) परानुभवरूपणम् ।
(3) मुक्तस्वरूपनिष्कर्षः (4) सत्यसङ्कल्पता तथा ॥ ७ ॥

(221) (5) स्वेच्छया सर्वसम्भोगः (6) मोक्षस्य च फलोदयः ।
इत्येवमर्थजातं स्यात् पादेनानेन चिन्तितम् ॥ ८ ॥

(1) मुक्तौ चेतनस्य, पूर्वम् अनादिकर्मणा तिरोहितस्य गुणाष्टकविशिष्टस्वस्वरूपस्यैव आविर्भाव एव 'स्वेन रूपेणाऽभिनिष्पद्यते' इत्युक्ताभिनिष्पत्तिशब्दार्थः ; न तु स्वस्मिन्नविद्यमानरूपान्तरस्य परिग्रहः, (2) मुक्तात्मना परमात्मनोऽनुभवः, स्वात्मनोऽप्यात्मतया स्वस्मादविभागेनैव ; न पृथग्भावेन, (3) मुक्तस्यात्मनः स्वरूपम् , अपहतपाप्मत्वादिभिर्गुणैः ज्ञानेन च स्वाभाविकेन विशिष्टमेव ; न एकैकात्मकम् , (4) मुक्तस्यात्मनः श्रुत्युक्ते जक्षण-क्रीडनादिके पित्रादिसम्पन्नत्वे च, प्रयत्नान्तरनिरपेक्षा भगवत्प्रसादायत्ता सत्यसङ्कल्पतैव प्रयोजिका, (5) मुक्तात्मनः श्रुत्युक्तः सर्वविधोऽपि भोगः, भगवत्सङ्कल्पानुगुणस्वसङ्कल्पायत्तशरीरसम्पत्तिकृतः, (तथैव अशरीरतया ब्रह्मानुभवश्चोभयमपि) (6) मुक्तस्य सर्वबन्धविनिर्मोकस्य फलभूतः यः भगवदसाधारणजगद्व्यापारादीतरेषां मुक्तैश्वर्याणां लाभः तद्योगः, अपुनरावृत्तिसहितः—इतीदम् अर्थषट्कम् तुर्यतुर्येण फलपादेन सम्यग्विचार्य निर्णीतमिति ॥ ७, ८ ॥

इति श्रीमत्सेनेश्वराचार्यविरचितः शारीरकन्यायकलापसङ्ग्रहः
रामभद्रार्यग्रथितविवरणसहितः समाप्तः ॥

सेनेश्वरार्यरचितशारीरकसन्न्यायसङ्ग्रहस्याऽस्य ।
श्रीरामभद्रविबुधरचिता विवृतिरियं समाप्तिमगात् ॥
विद्यार्थिजनतोषाय रचिता विवृत्तिः शुभा ।
श्रीहरेः प्रीतये भूयात् सर्वेषां च सदा शुभम् ॥

—o—

## (2) तत्त्वसारः ॥

शेषत्वं ननु दुःखमीक्षितमतो मुक्तेषु युक्तं न तत् .
मैवं माधवदास्यमौपनिषदं जागर्ति भूयः प्रियम् ।
धर्मिग्राहकमानबिक्कृतमतस्तद्दुःखतासाधनं
यद्वा तद्व्यतिरिक्तदास्यमसुखं साध्येत सिद्धं हि तत् ॥ १०२ ॥

**शेषत्वम्**—इतरदास्यम्, **दुःखम् ईक्षितं ननु**—प्रतिकूलतां प्रतिपद्यमानमेव सर्वत्र लोके दृष्टम्, **अतः**—शेषभावस्य प्रतिकूलत्वेनैव ध्रुवमनुभूतत्वात्, **मुक्तेषु**—सर्वदुःखविनिर्मुक्तत्वरूपमुक्तत्ववत्सु चेतनेषु, **तत् न युक्तम्**—भगवच्छेषत्वमपि नाऽभ्युपगमार्हम्, (इति शङ्कने) **मैवम्**—मुक्तिदशायां भगवच्छेषत्वस्य दुःखरूपत्वं, ततः मुक्तात्मनि तच्छेषत्वानभ्युपगमश्चेत्युभयं न साधु, **औपनिषदम्**—उपनिषदवगतम्, **माधवदास्यम्**—श्रियः पत्यौ शेषत्वम्, **भूयः प्रियं जागर्ति**—अत्यन्तं प्रीत्यास्पदं सत् विजृम्भते, **अतः**—अस्माद्धेतोः, **तद्दुःखतासाधनम्**—भगवद्दास्ये प्रतिकूलताकल्पनम् (आनुमानिकम्), **धर्मिग्राहकमानधिक्कृतम्**—निर्दुःखत्वेन मोक्षात्मकार्थग्रहजनकेन 'न रोगं नोत दुःखताम्' इति श्रुतिप्रमाणेन प्राप्तबाधम्, **यद्वा**—यदि च, **तद्व्यतिरिक्तदास्यम्**—भगवदन्यं प्रति शेषत्वम्, **असुखं साध्येत**—दुःखरूपमिति अनुमानतः कल्प्येत तदा, **तत्**—भगवदितरशेषत्वस्य दुःखरूपत्वम्, **सिद्धं हि**—लोके अवगतमेव खलु! (लोकावगतविषये अनुमानस्याप्रवृत्तिः; न हि जलशैत्यवह्न्यौष्ण्यादिकमनुमानेन साध्यम्, सिद्धसाधनतापातात्)

[ कृत्स्नशारीरकार्थसंग्रहः ]

* सद्-ब्रह्माऽऽत्मादिशब्दैरभिहितमजडं छागपश्वादिनीत्या<br>
तत्त्वं नारायणाख्यं निरधिकमसमं सेव्यमेकं मुमुक्षोः ।<br>
आरभ्यैको ह वा इत्युपनिषदि महत्यां यतो जायते चे-<br>
त्यन्तान्नारायणस्योपनिषदि विधिपूर्वात्मसृष्टत्वबोधः ॥ १०४ ॥

**सद्ब्रह्मात्मादिशब्दैः**—'सदेव सोम्येदमग्र आसीत्' इत्यादौ सच्छब्देन, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादौ ब्रह्मशब्देन, 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादौ आत्मशब्देन, (एवम् अक्षरपरतत्त्व-परमात्मादिशब्दैरपि) **छागपश्वादिनीत्या अभिहितम्**—'अग्नीषोमीयं पशुमालभेते'ति सामान्याकारं पशुत्वमाश्रित्य पशुशब्देन प्रतिपन्नो योऽर्थः स एव, 'छागस्य वपाया मेदसः' इति मन्त्रवर्णे छागशब्देनोक्त इति हेतुना छागाख्यः पशुरेव अग्नीषोमीयालम्भनविषय इति यथा मीमांसकैर्निश्चितः; तद्वत्, सामान्याकारेणोक्त्वा विशेषे प्राप्तपर्यवसानम्, **निरधिकम् असमम्**—स्वोत्कृष्टस्वसदृशवस्त्वन्तररहितम्, **नारायणाख्यम् अजडम् एकं तत्त्वम्**—नारायणपदवाच्यं स्वयंज्योतिरूपम्,

---

* [ अयं श्लोकः व्याख्यात्रयेपि न व्याख्यातः; अथाऽपि 'उभयवेदान्तसभा—बेङ्गलूरु' इत्येतैः मुद्रापिते तत्त्वसारमूलमात्रपुस्तके निवेशित इति अस्माभिर्विवृतः ]

प्रधानमेकमेव परं तत्त्वम् , **मुमुक्षोः सेव्यम्**—संसारनिगडात् स्वात्मानं मोचयितु-कामस्य चेतनस्य स्वाभिलषितमोक्षसाधन ( भक्ति-प्रपत्तिरूप ) सेवाविषयभूतम् , **महत्यामुपनिषदि**—महोपनिषदि **' एको ह वा '** **इति आरभ्य**—' एको ह वै नारायण आसीत् ' इति प्रकृत्य, **जायते चेत्यन्तात्**—' पुरुषो जायते ' इत्येतदन्तात् भागात् , (तथा) **नारायणस्योपनिषदि**—नारायणोपनिषदाख्ये ' अम्भस्यपारे ' इत्यादिप्रश्ने च , **यतः**—यस्माद्धेतोः **विधिपूर्वात्मसृष्टत्वबोधः**—ब्रह्मादिसमस्तचेननानाम् नारायणादेवोत्पन्नत्व-निर्णयो भवति ।। (सर्वकारणस्यैव च वस्तुनः ' कारणं तु ध्येयः ' इति मोक्षार्थोपासनविषयत्व-सिद्धिरिति ) ।। १०४ ।।

[ ग्रन्थानां निगमनम् ]

वरदाह्वयमण्डनो मनीषी यतिबृन्दारकभागिनेयपौत्रः ।

निगमान्तपयोधिकर्णधारो विदधे विश्वहिताय तत्त्वसारम् ॥ १०४ ॥

**वरदाह्वयमण्डनः**—महद्भिः कृतं ' वरद ' इति स्वनामधेयं मण्डनवत् शिरोधार्यतया ज्ञातवान् , **यतिबृन्दा....पौत्रः**—यतिराजस्य रामनुजार्यस्य (पूर्वाश्रमीययोः भूमा-कमला-नाम्न्योः सोदर्योर्मध्ये ) भूमिनाम्न्यां भगिन्यां जातस्य वरदविष्णुनाम्नः पुत्रस्य देवराजार्यस्य पुत्रः , **निगमान्तपयोधिकर्णधारः**—वेदान्ताब्धेः पारनयने महानाविकतामाप्तः , **मनीषी**—शास्त्रार्थतत्त्वज्ञः , **विश्वहिताय**—सर्वेषां तत्त्वार्थजिज्ञासुजनानां हितं सम्पादयितुकामः . **तत्त्वसारम्**—तन्नामानं प्रबन्धम् , **विदधे**—निर्मितवान् ।। १०४ ।।

इति वात्स्यवरदाचार्यैः नडादूर अम्माळ्नामभिर्गुरुभिः अनुगृहीतः

तत्त्वसारग्रन्थः श्रीराम भद्रदाससङ्ग्रथितया शब्दार्थविवृत्या सहितः

समाप्तिमगात् ॥

।। श्री हरिः प्रीयताम् ।।

—o—

## (3) अधिकरणार्थसङ्ग्रहः ॥

(551) स्वाविर्भावोऽपवर्गे निरुपधिनियतस्वप्रकार्यन्तदृष्टि-
श्चिद्रूपस्यैव तद्वच्छ्रुतिमकुटमितैः स्वप्रकारैः सहेक्षा ।
सङ्कल्पादेव सिद्धिस्तनुषु च नियमोन्मुक्तता ब्रह्मसाम्य-
प्राप्तौ तल्लक्षणांशोज्झनमिति चरमाध्यायतुर्याङ्घ्रिसारः ॥ ३४ ॥

**अपवर्गे**—मुक्तिदशायाम्, **स्वाविर्भावः**—स्वस्वरूपस्यैव तिरोहितस्य तिरोधानापगमेन प्रकाशः न अन्यरूपस्य, **निरुपधि....दृष्टिः**—जीवस्य निरुपाधिकतया नियततया च यः स्वं प्रति प्रकारिभूतः परमपुरुषः तत्पर्यन्तस्य स्वात्मस्वरूपस्य **मुक्तिकाले** अनुभवः—परमात्मविभक्त-स्वस्वरूपदर्शनम्, **तद्वत्**—स्वं प्रति नियतप्रकारिणः परमात्मनो दर्शनमिव, **चिद्रूपस्यैव**—ज्ञानरूपस्यैव सतः स्वस्य, **श्रुतिमकुटमितैः स्वप्रकारैः सह**—वेदान्तप्रमेयभूतैः स्वप्रकारभूतैः अपहतपाप्मत्वादिभिः ज्ञानेन च स्वगुणैः सहिततया दर्शनम्, **सङ्कल्पादेव सिद्धिः**—श्रुत्युक्तानां जक्षण-क्रीडनादीनां पित्रादिसमुत्थानादीनां च भोगानां सहकार्यन्तरनिरपेक्षात् सङ्कल्पादेव सम्पत्तिः, **तनुषु च नियमोन्मुक्तता**—मुक्तस्य विविधेषु देहेषु परिगृह्यमाणेष्वपि तन्नियमाभावः (सशरीरत्वमशरीरत्वं च यथायोग्यम्), **ब्रह्मसाम्यप्राप्तौ तल्लक्षणांशोज्झनम्**—मुक्तस्य परमात्मना साकं परमसाम्यलाभे, परब्रह्मासाधारणचिह्नानि विहाय तदितरांशे एव (परब्रह्म-तद्गुणानां निरुपाधिकानुभवे एव) परिपूर्णं समत्वम्, **इति चरमा....सारः**—इत्येवं शारीरकान्तिमाध्यायान्तिमपादा (मुक्तिपादा)र्थसारसङ्ग्रहः अर्थषट्करूपः चिन्तनीयः ॥ ३४ ॥

**[अद्वैतिमते शारीरकचतुर्थाध्यायासाङ्गत्यप्रदर्शनम्]**

(552) ध्यानादिं तत्प्रभावं करणभृत इतो देहकाराकुटीरा-
न्निष्क्रान्तिं ब्रह्मनाड्या गतिमपि सुपथा स्वप्रकाशं च साध्यम् ।
इच्छातः स्वेष्टसृष्टिं परममपि परब्रह्मणा भोगमात्रे
साम्यं मायामतस्थः कथमिव घटयेदन्तिमाध्यायसाध्यम् ॥ ३५ ॥

**ध्यानादिम्**—मोक्षोपायतया ध्यानाभ्यासत आरभ्य यावदायुषमसकृदावर्त्यमानोपासन-सान्तत्यम्, **तत्प्रभावम्**—सन्ततोपासननिष्पत्तितः साध्यं मुमुक्षोश्चेतनस्य उत्तरपूर्वाघयोरश्लेष-विनाशादिरूपं तत्प्रभावम्, **करणभृतः**—इन्द्रियाधिपस्य जीवात्मनः, **इतः देहकाराकुटीरात्**

**ब्रह्मनाड्या निष्क्रान्तिम्**—अनुभूयमानादस्मात् (स्वात्म-परमात्मप्रकाशावरणत्वतः) शरीरात्मकात् कारा(बन्धन)गृहात् सकाशात् सुषुम्नया मोक्षार्थनिर्गमनम्, **सुपथा गतिमपि**—अर्चिरादिरूपेण सन्मार्गेण ब्रह्मस्थानार्थं गमनं च, **स्वप्रकाशं च साध्यम्**—तिरोहितस्यैव स्वात्मनः स्वरूपस्य मुक्तावाविर्भावम्, **इच्छातः स्वेष्टसृष्टिम्**—स्वसङ्कल्पमात्रेण मुक्तस्य स्वाभिलषितार्थसम्पत्तिम्, **परब्रह्मणा भोगमात्रेण परमं साम्यमपि**—मुक्तप्राप्येण परमात्मना साकं मुक्तस्य ब्रह्म-तद्गुणानुभवांश एव परमसाम्यम्—इत्येवंरूपम्, **अन्तिमाध्यायसाध्यम्**—शारीरकीयफलाध्यायप्रतिपाद्यमर्थजातम्, **मायामतस्थः**—अद्वैतसमयश्रद्धालुः, **कथमिव घटयेत्**—केन वा प्रकारेण सङ्गतं चिन्तयेत्? न कथमपि ॥ ३५ ॥

[अद्वैतिनां समयस्य काण्डत्रयार्थविरोधः]

(553) मानामानप्रभेदप्रभृतिविभजनादादिमे कर्मभागे
नाना वा देवतेत्याद्यनुपरिपठनान्मध्यमे देवतांशे ।
भागेऽस्मिन् भेदधर्मप्रभृतिकथनतः सौगतादेश्च भङ्गा-
न्मीमांसायां त्रिकाण्ड्यां क्वचिदपि न मृषावादगन्धावकाशः ॥ ३६ ॥

**आदिमे**—कर्म-देवता-ब्रह्मकाण्डात्मकस्य आद्यभूते, **कर्मभागे**—कर्ममीमांसाभागे, **मानामान....विभजनात्**—प्रमाणतदितरादिविषयविभागकरणात्, **मध्यमे**—काण्डद्वयमध्यपातिनि, **देवतांशे**—देवताकाण्डे, **नाना वा ...पठनात्**—'नाना वा देवतापृथक्त्वात्' इत्यादिना देवतानां भेदस्यैव स्पष्टं निरूपणात्, **अस्मिन् भागे**—शारीरकचतुरध्यायीरूपे ब्रह्मभागे च, **भेदधर्मप्रभृतिकथनतः**—जीवपरमात्मभेदस्य परमात्मासाधारणधर्मस्येत्यादेः अर्थविशेषस्य निरूपणतः, **सौगतादेश्च भङ्गात्**—संवृतिवादिनां बौद्धानां स्पष्टं निराकरणादपि हेतोः, **त्रिकाण्ड्यां मीमांसायाम्**—काण्डत्रयवत्यां कर्ममीमांसायाम्, देवतामीमांसायां, ब्रह्ममीमांसायामपि च, **क्वचिदपि**—कस्मिन्नपि भागे, **मृषावादगन्धावकाशो न**—मिथ्यावादवासनाया अपि न प्रसङ्गः ॥ ३६ ॥

[शारीरकस्यास्य दिग्दर्शनतया तोष्टव्यत्वम्]

(554) त्रय्यन्तोदन्वदन्तस्स्तुतिरियमुदिता देशिकैः कर्णधारै-
र्मुक्त्यर्थज्ञानपारं गमयति विशदं त्वन्यदीक्ष्यं विमुक्तौ ।
कर्तव्ये कल्पकारैः क्वचिदभिदधिरे कृत्यसन्देहभेदा-
स्तत्त्वेऽप्येवं क्वचित् स्यात् तदपि न वितथः स्वोपयुक्तांशबोधः ॥ ३७ ॥

**कर्णधारैः**—नाविकतुल्यैः, **देशिकैः**—आचार्यप्रवरैः मार्गदर्शनप्रवृत्तैः, **इयम्**—शारीरकमीमांसाप्रतिपादितार्थरूपा, **त्रय्यन्तो.... सृतिः**—वेदान्तमहोदधेः अन्तः प्रयाणौपयिकी सरणिः, **उदिता**—एवं प्रकटीकृता (वर्तते सा च), **मुक्त्यर्थज्ञानपारम्**—मोक्षोपयोगितत्त्वज्ञानस्य परमावधिं, **गमयति**—मुमुक्षून् प्रापयति, **अन्यत्**—उक्तावशिष्टं प्रमेयं यदस्ति तत्, **विमुक्तौ तु**—मोक्षदशायां परमे व्योम्नि एव, **विशदमीक्ष्यम्**—सुस्पष्टं दर्शनीयं भवति, (सर्वांशस्याऽप्यत्रैव निरवशेषज्ञानं दुःसम्पादम्; निरवशेषतः सर्वांशज्ञानाभावमात्रेण न कोऽपि मोक्षोपायानुष्ठानभगवत्प्रसादलाभादेः विघातः) **कल्पकारैः**—श्रौतार्थानुष्ठानप्रक्रियानिष्कर्षणप्रवृत्तैः कल्पसूत्रकृद्भिः बोधायनापस्तम्बादिभिरपि, **क्वचित् कर्तव्ये**—अनुष्ठेयार्थविषये कस्मिंश्चन, **कृत्यसन्देहभेदाः**—अनुष्ठानानिर्णयेन एवं वा एवं वेति संशयविशेषा एव, **अभिदधिरे**—उक्ताः सन्दृश्यन्ते कल्पसूत्रेषु, **तत्त्वेऽपि**—वेदान्तवेद्यतत्त्वार्थविषयेऽपि, **क्वचित्**—स्थलविशेषे, **एवं स्यात्**—सन्देहविशेषो भवेन्नाम, **तदपि**—तथाऽपि, **स्वोपयुक्तांशबोधः**—उपायपरिज्ञानतदनुष्ठानाद्युपयोगिनोंऽशस्य विप्रतिपत्त्यादिरहितः निष्कृष्टो बोधः, **न वितथः**—नैव विफलो भवितुमर्हति (यावल्लाभं सन्तोषस्य विवेकिजनसम्पाद्यत्वात्) ॥ ३७ ॥

[शारीरकीयस्य तर्कस्य सर्वोत्कृष्टत्वम्]

(555) श्रुत्यन्तैकान्ततर्कक्रमगरिमधृतौ तूलवच्छैलवर्ग-
स्तत्सिद्धब्रह्मबोधद्युमणिरुचि तमस्स्तोमकल्पोऽन्यजल्पः (कल्पः) ।
मोक्षोपायैकराज्ये तदितरविधयः किङ्करत्वं भजन्ते
मुक्तानन्दामृतैकोदधिपृषतकणस्पर्धिनोऽन्ये पुमर्थाः ॥ ३८ ॥

**श्रुत्यन्तैका....धृतौ**—उपनिषदर्थनिर्णयैकफलाः ये तर्काः शारीरकनिष्पन्नाः, तद्गतस्य रीतिविशेषस्य धारणे चेतसि क्रियमाणे, **शैलवर्गः**—शिलास्तोमवत् केवलपारुष्यप्रधानः परमपुरुषार्थसाधनापर्यवसितः दार्शनिकान्तरसम्बन्धी तर्कवर्गः निःसारत्वात् कार्पासतूलसदृश एव, **तत्सिद्धब्र....रुचि**—तादृशशारीरकनिष्पन्नतर्कबलाहित (औपनिषद) ब्रह्मज्ञानरूपस्य भास्करस्य कान्तौ बाह्यान्तरकरणेषु व्यापृतायां सत्याम् ('रुक्' शब्दात् सप्तमी 'रुचि' इति) तत्सन्निधौ, **अन्यजल्पः**—शारीरकार्थप्रावण्यरहितानां इतरेषां वाक्प्रसरः (विविधः पक्षाडम्बरो वा), **तमःस्तोमकल्पः**—अन्धतमससदृश एव; (स्वाभाविकान्तर्बाह्यकरणप्रवृत्तेरपि तैः पक्षैः तेषां वाग्भिश्च मालिन्यापादनात्) **मोक्षोपायैकराज्ये**—परमपुरुषार्थभूतापवर्गोपायानुष्ठानसाम्राज्ये प्रवर्तमाने सति (क्षुद्राणां सामन्तानामिव क्षुद्राणां स्वर्गस्वाराज्याद्यल्पपुमार्थानां साधनानुष्ठाने एकान्तिभिर्दूरीक्रियमाणे), **तदितरविधयः**—मोक्षोपायविधिभिन्नाः यज्ञदानादिविधयः सर्वे, **किङ्करत्वं भजन्ते**—

मोक्षोपायभूतभक्त्यादिसाधनोपकारकाः सन्तः मोक्षोपायविशिष्टतां आश्रयन्ति ; न स्वातन्त्र्येणाऽवस्थितिं लभन्ते, **अन्ये पुमर्थाः**—अपवर्गादितरे सर्वेऽपि पुरुषार्थाः, **मुक्तानन्द…स्पर्धिनः**—मुक्तचेतनानुभाव्यविशिष्टानन्दरूपामृतमयसागरसम्बन्धिबिन्द्वेकदेशभूतशीकरतुल्या एव; येन केनाऽपि प्रकारेण न मोक्षानन्दसमाः ॥ ३८ ॥

[शारीरकार्थावगतिः ब्रह्मानुभवपर्यवसायिनी]

(556) पारावर्यं विविच्य प्रथममवितथैरागमैस्तत्त्ववर्गे
संसारे तीव्रभीतिः परसमधिगमेऽतीव (तीव्र)निष्पन्नरागः ।
कश्चिद्विद्याविशेषं सपरिकरमधिष्ठाय शान्तान्तरायः
सम्पद्य ब्रह्म भुङ्क्ते निरुपधिकमनावृत्तिरित्थं श्रुतार्थः ॥ ३९ ॥

**श्रुतार्थः**—गुरुसकाशे सनियमश्रवणतः तत्त्वहितपुरुषार्थविषयकसम्यग्ज्ञानसम्पन्नः पुरुषः, **इत्थम्**—शारीरकोक्तया रीत्या, **प्रथमम्**—आदौ, **अवितथैः**—अविपरीतार्थवेदकैः, **आगमैः**—श्रुत्यादिभिः प्रमाणैः, **तत्त्ववर्गे**—चिदचिदीश्वराख्यतत्त्वत्रयसमुदाये, **पारावर्यम्**—परभावम् अवरभावं च, (उत्कर्षापकर्षौ) **विविच्य**—स्वरूप-स्वभावाभ्यां निष्कृष्य सन्धार्य, (ईश्वरो भगवान् नारायणः परं तत्त्वम् ; चिदचितौ अवरतत्त्वे इति निर्णीय) **संसारे तीव्रभीतिः**—जन्म-जरा-मरणमये अविरतं सन्तन्यमाने चक्रे अपरिहार्यसाध्वससम्पन्नः, **परसमधिगमे अतीव निष्पन्नरागः**—परमात्मप्राप्तिविषये अदम्याभिलाषवांश्च सन् (संसारस्य अवरतत्त्वसमागमरूपत्वाद्भीतिः ; परमात्मनः प्राप्तेः परतत्त्वसमागमरूपत्वेन तीव्राभिलाष इति) **कंचित् विद्याविशेषम्**—सद्विद्या दहरविद्यादिष्वन्यतमां विशिष्टां विद्यां (दृष्टिविद्येतराम्), **सपरिकरम्**—अङ्गकलापेन सह, **अधिष्ठाय**—मोक्षसाधनतयाऽऽश्रित्य, **शान्तान्तरायः**—निरस्तसुकृत-दुष्कृताख्यसमस्तप्रतिबन्धकजातः, **ब्रह्म सम्पद्य**—परंब्रह्म अवाप्य, **अनावृत्तिः**—संसारचक्रे पुनः प्रवेशरूपया आवृत्त्या रहितः, **ब्रह्म निरुपधिकम् भुङ्क्ते**—निरतिशयदीप्तियुक्तं परं ब्रह्म सर्वोपाधिराहित्येन निरन्तरमनुभवन्नानन्दमग्नो विराजते ॥ ३९ ॥

[ अधिकरणसारावलिग्रन्थजं फलम् ]

(557) साऽसौ सासूयतत्तत्कुमतिमतसमुन्मूलनी मूलनीति-
श्रेणीनिश्श्रेणिकल्पा त्रियुगपथरथारोहसूतं सुवीन ।
सन्तः सन्तापवर्गप्रशमनपटुना तत्त्वबोधेन सन्तं
सन्तोषं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः ॥ ४० ॥

**हे सन्तः**—परमात्मप्रावण्यकृतसाधुत्ववन्तः हे सज्जनाः !, **सा असौ**—भगवदनुगृहीतवेदान्ताचार्याख्यमहासंज्ञान्वर्थनप्रतिज्ञया ! प्रवृत्ता एतावदन्तं सम्पन्नस्वरूपा चेयम्, **ब्रह्मसूत्रा····वलिः**—शारीरकीयपञ्चचत्वारिंशदुत्तरपञ्चशतसूत्राणां, तद्गतानामधिकरणानां षट्पञ्चाशदुत्तरशतसङ्ख्याकानां (१५६) षोडशचरणानां (१६) चतुर्णा(४)मध्यायानां च सारसङ्ग्राहिका स्रग्धरात्मकपद्यानामावलिः, **साङ्ख्य····न्मूलनी**—गुणेषु दोषारोपणपराः ये अन्यान्ये श्रुत्यन्तमार्गविमुखा दार्शनिकाः तद्दर्शनानां निरवशेषतापादनपाटववती, **मूलनीति....कल्पा**—अनुपचरिततया सर्वश्रुत्यर्थपूर्णार्थनिर्वाहकतया मूलभूतानां न्यायानां बुद्ध्यारोहणे सोपानमालासदृशी सती, **त्रियुग····सूतम्**—ज्ञानशक्तिप्रभृतिगुणद्वयत्रिकसम्पन्नस्य (षड्गुणैश्वर्यपूर्णस्य) भगवतः अवगमकः प्रापको वा यो मार्गः अर्चिरादिः तत्प्रापकसाधनानुष्ठानात्मकरथारोहणे कार्ये, सारथिसदृशम् (सारथियुतं रथमेव खल्वारोहति प्रेक्षावान्) उत्साहविशेषम् (अकुण्ठितप्रवृत्तिकम्) **सुवीत**—अवश्यं जनयेदेव, (तथा) **सन्तापवर्गप्रशमनपटुना**—शारीरकशास्त्राध्ययनसमये तदा तदा जायमानः यो बुद्धिक्लेशगणः तन्निर्मूलनसामर्थ्यवता, **तत्त्वबोधेन**—शास्त्रप्रमेयभूतार्थस्य यथावदवबोधेन (स्वोत्पन्नेन), **सन्तम्**—चिरावस्थायिनम्; न तु तात्कालिकम्, **सन्तोषम्**—मानसिकमुल्लासम्, **वः सुवीत**—मुमुक्षूणाम् अत एव तत्त्वबुभुत्सूनां युष्माकं जनयेत् ॥ ४० ॥

[स्वीयकृतिविषये स्तुति-निन्दाप्रवृत्तेषु स्वस्यौदासीन्यम्]

(558) षट्पञ्चाशच्छतं चेत्यधिकरणगणैर्व्यक्तसीमाविभागे
काण्डेऽस्मिन्नस्मदुक्तं कतिचिदनुविदुः क्षेपधन्यैः किमन्यैः ।
पश्यन्तो विश्वमेतत्त्रिगुणगुणनिकायन्त्रितस्वान्तनिघ्नं
नाथे नः साक्षिभूते न वयमिह मुधा कुर्महे नर्महेलाम् ॥ ४१ ॥

**शतं षट्पञ्चाशच्चेति**—शतं सङ्ख्यानि तदुत्तरं षट्पञ्चाशत् सङ्ख्यानि चेत्येवम्, **अधिकरणगणैः**—न्यायनिष्पादनपराणां शारीरकीयाधिकरणानां स्तोमैः, **व्यक्तसीमाविभागे**—स्पष्टतापन्नविभागेयत्तायुते, **अस्मिन् काण्डे**—निरूपिते शारीरकाख्ये ब्रह्मकाण्डे, **अस्मदुक्तम्**—अस्माभिरुपपादितप्रकारं विषयजातम्, **कतिचित्**—शारीरकार्थचिन्तनप्रवणाः केचन विद्वांसः, **अनुविदुः**—अनुरुध्यैव अविरुद्धयैव च जानन्ति, (यथावस्थितार्थावधारणैदम्पर्यात्), **क्षेपधन्यैः अन्यैः किम्**—अन्योक्ताधिक्षेपमात्रेणैव स्वस्य धन्यतां मन्यमानैः इतरैः सह अस्माकं को वा व्यवहारः करणीयोऽस्ति ? **एतत् विश्वम्**—इदं जगत्, **त्रिगुणगुणनिकायन्त्रितस्वान्तनिघ्नं पश्यन्तः वयम्**—सत्त्व-रजस्-तमोरूपया गुणनिकया—सर्ववस्तूनामुत्कर्षादेः (कालविशेषे

व्यक्तिविशेषे च) उद्भवाभिभवरूपेण निम्नोन्नतभावप्रदर्शिन्या सामग्र्या, तात्त्विकस्वभावादिग्रहो यथा भवेत्, यथा च न भवेत् तथा नियन्त्रितं यत् ग्रहीतॄणां मनः तदायत्तसौन्दर्यादिमदिति त्रैगुण्यस्वभावावधारणस्वभावाः वयम्, (कुत्रापि व्यक्तिविशेषे पापमपराधं वा विशेषतो भावयितुमप्रवृत्ताः सन्तः), **नः—ईदृशे** श्लाघ्यतमे तत्त्वार्थविशदीकरणकर्मणि (भगवदाज्ञां पुरस्कृत्यैव) प्रवर्तमानानामस्माकम्, **साक्षिभूते**—साक्षादेव अतिरोहितं द्रष्टरि, **नाथे**—श्रीरङ्गनाथे जाग्रति सति, **इह**—स्तावक-निन्दकपुरुषविषये, **नर्महेलाम्**—परिहासवाक्यप्रयोगलीलामपि, **मुधा**—व्यर्थम्, **न कुर्महे**—नैव कर्तुं प्रवर्तामहे (व्यर्थायाः क्रियायाः अस्मासु भगवत्परत्वान्तरायत्वात्, शौरिचिन्तावैमुख्यकरस्य कर्मणः सर्वथा त्याज्यत्वात्) ॥४१॥

(559) विश्वं द्रव्यादिभेदाद्विशदमभिहितं तत्त्वमुक्ताकलापे

व्यूढं शारीरकस्य त्विह दृढघटितं रूपमापादचूडम् ।

तस्मादस्मच्छुताब्धेरमृतमिव समुद्भ्रान्तमश्रान्तबद्ध-

श्रद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥ ४२ ॥

**तत्त्वमुक्ताकलापे**—एतन्नामके अस्मदीये प्रबन्धे, **विश्वम्**—निश्श्रेयसार्थिभिः विविच्य अवधार्यं प्रमेयजातम्, **द्रव्यादिभेदात्**—द्रव्यत्वाद्रव्यत्वादिकं प्रकारवैविध्यमवलम्ब्य, **विशदमभिहितम्**—सुस्पष्टं सम्यङ् निरूपितम्, **इह तु**—अस्मिन् अधिकरणसारावल्याख्ये प्रबन्धे तु, **शारीरकस्य**—शारीरकनाम्नो ब्रह्मकाण्डस्य, **रूपम्**—तत्साध्यार्थैदम्पर्यगर्भं स्वरूपम्, **आपादचूडम्**—आदितः आसमाप्ति, **दृढघटितम्**—अचालनीयतया पौर्वापर्येण सुसंगतं सत्, **व्यूढम्**—असन्दिग्धसुविभक्ताकृति निर्व्यूढम्, (सम्पन्ननिर्वाहम्), **तस्मात्**—तत्त्वमुक्ताकलापस्य निर्णयप्रमेयावधारणहेतुत्वात्, अस्य च शारीरकार्थनिर्वहणहेतुत्वाच्च, **अस्मच्छुताब्धेः**—अस्माभिर्गुरुमुखाच्छुतः सागरसदृशः यः अर्थराशिः ततः सकाशात्, **अमृतमिव**—अत्यन्तसारतया अमृतौपम्येन युक्तं सत्, **समुद्भ्रान्तम्**—कुशाग्रया धिषणया आलोडनतः प्रकटतामापादितम्, **अन्योन्यहस्तप्रदम्**—मिथोऽत्यन्तनैकट्येन परतत्त्व-परमहित-परमपुरुषार्थानां निश्शङ्कनिश्चयोपयोगितया एकप्रयोजनसाधकम्, (परस्पर सहकार्येकरूपम्) **इदमुभयम्**—उक्तप्रबन्धद्वयमस्मन्निबद्धम, **अश्रान्तबद्धश्रद्धैः**—अशिथिलश्रद्धादार्ढ्यवद्भिः आस्तिकजनैः, **आचार्यवद्भिः**—अविचलिततत्त्वार्थोपदेशैदम्पर्यवद्गुरु (कृपाकटाक्ष) सम्पत्ति-निरुपाधिकतदुपसत्त्यादिमद्भिः सद्भिः, **धार्यम्**—(सम्यक्) मनसि वाचि च सदा अविगलितं धारणीयम्; येन ध्येयार्थनिष्पत्तिरवश्यं भविता ॥ ४२ ॥

[स्रग्धराणामासां दिव्याप्सरः साम्यम्]

(560) इत्थं शारीरकोक्ते पथि समुपनताः स्रग्धराः श्रद्दधानं
पारे मायापयोधेः प्रहितमभिमुखैः सूरिभिः शुद्धभावैः ।
ब्रह्मालङ्कारकल्पैर्बहुभिरुपनिषत्सूत्रतात्पर्यशिल्पै-
र्देवार्हत्वाय दिव्याप्सरस इव परिष्कृत्य सम्भावयन्ति ॥ ४३ ॥

**इत्थम्**—उक्तेन प्रकारेण, **शारीरकोक्ते पथि**—शारीरकाख्येनानेन शास्त्रेण प्रतिपादिते मार्गे, **समुपनताः**—(तदर्थविशदीकारसाधनतया भगवत्कृपया) सम्पन्नरूपाः, **स्रग्धराः**—स्रग्धराच्छन्दसा विराजमानाः कारिकाः (कर्तृभूताः), **श्रद्दधानम्**—शास्त्रगुरूपदेशादौ अविचाल्यविश्वासपूर्णम्, (अत एव) **अभिमुखैः**—अनुग्रहमय्या दृष्ट्या सच्छिष्याभिमुख्यपरैः, **शुद्धभावैः**—निरुपाधिकशिष्यवात्सल्यमयस्वान्तैः, **सूरिभिः**—(शिष्योत्तारणयोग्यतया स्वगतया साधनभूतया) शिष्यं सदर्थबोधनद्वारा परमार्थं प्रापयितुमेव चेष्टमानैराचार्यैः, **मायापयोधेः पारे प्रहितम्**—भगवत्स्वरूपतिरोधानकरस्य अगम्यपारस्य प्रकृतिमण्डलस्य परं पारं प्रति प्रेषितम्, (आदौ तीव्रमुमुक्षापूरितान्तःकरणम् अनन्तरं च मुक्तमात्मानम्) **ब्रह्मालङ्कारकल्पैः**—विरजातरणानन्तरं मुक्तात्मनां क्रियमाणाः ये ब्रह्मालङ्काराः तत्सदृशैः, **उपनिषत्सूत्रतात्पर्यशिल्पैः**—उपनिषदां—साक्षाद्ब्रह्मपराणां (तथा) तदर्थसूचना-तद्ग्रथनपराणां वैयासिकसूत्राणां च यत् परमं लक्ष्यं तस्य (चेतने) सम्यग्योजनरूपैः शिल्पकर्मभिः, **परिष्कृत्य**—पुनः प्रकृतिविकाराभिमुख्यं यथा नोदियात् तथा शुद्धान्तरङ्गं कृत्वा, **पथि**—अर्चिरादौ मार्गे, **समुपनताः**—परमपुरुषनियोगेन स्वयमागताः, **स्रग्धराः**—मालाहस्ताः, **दिव्याप्सरस इव**—अप्राकृतपरमव्योममण्डलस्थाः दिव्यस्त्रियो यथा तथैव, **देवार्हत्वाय**—परमपुरुषभोगयोग्यत्वापादनाय, **सम्भावयन्ति**—समीचीनभावयुक्तमापाद्य सन्मान्यं कुर्वन्ति ॥ ४३ ॥

[प्रबन्धस्य भगवदाविर्भावितत्वम्]

(561) प्रज्ञाधम्मिल्लमल्लीपरिमलमिलितप्राज्ञसेवासमुद्य-
च्छुद्धालोकोज्ज्वलं मां श्रुतिपरिषदुपस्कारिसौभाग्यवद्भिः ।
पद्यैरेतैः स्वहृद्यैः प्रणवमहिमवत्पाञ्चजन्यक्रमेण
स्वाध्मातं रङ्गनाथः स्वयमिति मुखरीकृत्य संमोदते स्म ॥ ४४ ॥

**रङ्गनाथः**—श्रीरङ्गस्थानाध्यक्षः भगवान्, **प्रज्ञा ....ज्ज्वलम्**—प्रज्ञारूपाः तत्त्वयाथात्म्यज्ञानरूपाः, याः धम्मिल्लमल्ली—चूडाधार्या मल्ली तत्सौगन्ध्येन सम्पृक्ताः (अत एव) प्राज्ञाः ये,

तेषां प्रणिपात-परिप्रश्न-शुश्रूषादिपरिचरणेन स्वरसतयैव सम्पन्नः अपनीत्यकम्प्यः यः तत्त्वार्थ प्रकाशः तेन प्राप्तप्रकाशम् ; (न तु प्रभूणां धनिनां वा आश्रयणेन) **माम्**—वेदान्ताचार्याभिधानं माम्, **श्रुतिपरि....वद्भिः**—अपौरुषेयवाणीश्रेण्यां प्रविश्य तदर्थविशदीकरणाख्यालङ्करणार्हतारूपासाधारणसौभाग्यसम्पन्नैः, **एतैः**—एतावदन्तं लब्धरूपैः, **स्वहृद्यैः पद्यैः**—स्वस्य हृदयस्थाने अवस्थापयितुं योग्यैः श्लोकस्तोमैः, **स्वाध्मातम्**—स्वेनैव पूरितं कृत्वा, **प्रणवमहिमवत्पाञ्चजन्यक्रमेण**—अन्तः बहिश्च ओङ्कारतुल्यमाहात्म्यवन्तं पाञ्चजन्याख्यं स्वीयं शङ्खमिव, **स्वयम्**—स्वयमेव साक्षात्, **इति मुखरीकृत्य**—उक्तया रीत्या शब्दायमानं कृत्वा, **स्वयं संमोदते स्म**—स्वयं परं हर्षमाप्नोति स्म (हर्षमवाप) ॥ (भगवतो बलेनेत्यादिरीत्या स्वस्मै स्वप्रीतये स्वयमेव कारितवान् इति आचार्यवर्याणामभिसन्धिः) ।। ४४ ।।

(562) पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतः सारभूतं
निर्मथ्याऽऽदत्त सूत्रैरवितथनिगमाचार्यनामा मुनीन्द्रः ।
यत्तन्निष्कृष्टमित्थं यतिपतिहृदयारूढमारूढतार्क्ष्य-
स्तद्वक्ता वाजिवक्त्रः सह मम गुरुभिर्वादिहंसाम्बुवाहैः ॥ ४५ ॥

[कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ।।]

**पाराशर्यः**—चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीनां पुराणरत्नतः सन्दर्शयितुः पराशरस्य सत्यवत्यां जातः सत्यवाक् पुत्रः, **अवितथनिगमाचार्यनामा**—अत्यन्तसार्थकतापन्नवेदाचार्याभिधानः, **मुनीन्द्रः**—तत एव सर्वर्षीणामग्रगण्यः यः कृष्णद्वैपायनो मुनिः, **प्रभूतात्**—अनन्तपारात्, **अमृतोदन्वतः**—अमृतत्वरूपपरमपुरुषार्थवितरणपरात् महोदधिसदृशात श्रुतिस्तोमात् सकाशात्, **निर्मथ्य**—निरवशेषेण मथनपूर्वकम्, **सूत्रैः यत् आदत्त**—शारीरकसूत्रैः यत् अर्थतत्त्वं उद्धृत्य प्रकाशितवान्, **यतिपतिहृदयारूढं तत्**—यतिराजस्य रामनुजार्यस्य हृद्गतं तदर्थतत्त्वम्, **इत्थं निष्कृष्टम्**—अनया रीत्या 'इदमित्थम्' इति असन्दिग्धं निष्कृष्य प्रदर्शितं वर्तते, **तद्वक्ता**—प्रदर्शितस्यास्य वक्ता ग्रन्थात्मना रचयिता, **आरूढतार्क्ष्यः**—गरुडारूढः (वेदमय्यां गरुडमूर्तौ अवस्थापितस्वविग्रहः), **मम गुरुभिः**—मम साक्षादाचार्यभूतैः, **वादिहंसाम्बुवाहैः सह**—तदपराभिधानैः 'किडाम्बि अप्पुल्लार' महाशयैः सहितः, **वाजिवक्त्रः**—हयवदनो भगवानेव ॥ (स्वाचार्य-निगमार्य-निगमवेद्यानां

विशिष्टात्प्रयत्नादेवायं ग्रन्थः समुद्भूतः ; नाऽत्र मम आभिमानिकः सम्बन्धो वर्तते इत्याशयः) ।। ४५ ।।

इति श्रीमद्भिर्वेदान्ताचार्यैरनुगृहीतस्य अधिकरणसारावलीनामकस्य पूर्णस्य
प्रबन्धस्य रामभद्रदासेन सङ्ग्रथिता प्रतिपदार्थविवृतिनाम्नी द्विषष्ट्युत्तर-
पञ्चशतश्लोकव्याख्या समाप्ता । श्रीहरिः प्रीणातु ।।

श्रीः



॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ॥

## द्वितीये अनुबन्धे

# प्रमाणार्थकोषः

**श्रीभाष्ये तृतीय-चतुर्थाध्याययोः उदाहृतप्रमाणानां आकरनिर्देशपूर्वकः संग्रहः ॥**

क्रमसंख्या — पृ. सं.

1 I ‘अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत’ (बृ.उ. 3–4–7) 296

II ‘अकृत्स्नो ह्येषः’ ( ,, ) 296

यः पुरुषः सर्वनामरूपविशिष्टं परमात्मानं विहाय एकैकनामरूपविशिष्टं जीवमुपास्ते, सः नैवोपासनं कृतवान्। तेन क्रियमाणं उपासनमेव न भवति। अतः सर्वनामरूपभाजं परमात्मानमेवोपासीत। न स्वापृथक्सिद्धविशेष्यत्वरूपेणात्मत्वेन उपासीत। यतो जीवोऽयं एकैकनामरूपत्वादपूर्णः ॥

2 I ‘अक्षरात्परतः परः’ (मुण्ड. उ. 3-1-2) 79

II ‘अक्षरात्परतः परः’ ( ,, ) 82

( द्युस्थानसम्बन्धित्वेन दिव्यः, विभुत्ववत्तया अमूर्तः, सर्वात्मतया पुरुषः, जन्मराहित्येन अजः, अनिन्द्रियत्वतः अप्राणः अमनाश्च, निर्विकारत्वतः शुभ्रो यः परमात्मा ) सः अक्षरपदाभिधेयाव्याकृतापेक्षया अतिशयितात् समष्टिपुरुषादतिशायितस्वरूपः। परस्मात्सर्वस्मात्परः ॥

3 I ‘अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥’ (भ. गी. 8-24) 148

II ‘अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥’ ( ” ) 356

(इष्टापूर्तादिकारिणो जीवस्य स्वर्गादिभोगभूमौ सुखाधायककर्मविशेषं यावत् स्थित्वा, तत्फलानि चानुभूय कर्मान्ते मर्त्यभूमिमवरोहतो) व्रीह्यादिस्थावरभावप्राप्त्यनन्तरं तद्भावान्निर्गमनं विलम्बिततरमेव भवेत्। (यतो मानुषादिशरीरसंयोजनं दुर्लभतमम्) (दुर्निष्प्रपतरम्–दुर्निष्प्रपततरम्, एकस्य तकारस्य लोपश्छान्दसः)॥

9 अत्त्यन्नं पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले। य एतमेवमात्मानं वैश्वानरमुपास्ते। मूर्धा त्वेष आत्मन इति’

(छां. उ. 5–12–2) 198

(वैश्वानरात्मोपासकः) उपासनगतेनाऽतिशयेन लौकिकमपि भोग्यजातमनुभवति, मनःप्रीतिकरं पुत्रपौत्रादिबन्धुजातं प्राप्य तद्दर्शनजं सुखमनुभवति। उपासितुः कुले चिरानुवर्तिनी ब्रह्मतेजोवृद्धिः सम्पद्यते; यः पुरुषः प्रस्तुतं वैश्वानरात्मानं उक्तरीत्या उपासितवान्। हे औपमन्यव! वैश्वानरबुद्ध्या त्वयोपास्यमानः एषः द्युलोकः, उपास्यस्य वैश्वानरस्य मूर्धाख्योऽवयव एव; न तु पूर्णो वैश्वानरः। तवोपासनमेतावदेव चेत्! अपूर्णमेव भवेत्।

10 ‘अत्र ब्रह्म समश्नुते’ (कठ. उ. 3–6–14) 336

(प्र. ‘यदा सर्वे’ इत्यत्र)

11 ‘अथ नामधेयं ‘सत्यस्य सत्य’ मिति। प्राणा वै सत्यम्। तेषामेष सत्यम्’ (बृ. उ. 4–3–6) 69

अथाद्य परमात्मन इदमभिधानमुच्यते–‘सत्यस्य सत्यम्’ इति। प्राणपदाभिधेयाः जीवात्मानः, यतः स्वरूपान्यथाभावलक्षणविकारस्यायोगतो निमित्तात् सत्यमित्युच्यन्ते। तस्याऽपि ज्ञानसङ्कोचविकासलक्षणस्वभावविकारवत्त्वात्, तदपेक्षया अत्यन्तं सत्यपदव्यपदेश्यो भवति परमात्मा; यतः सः स्वरूप-स्वभावाभ्यामुभाभ्यामप्यविकृतः; कदापि ज्ञान-सङ्कोचादेरभावात्॥

क्रमसंख्या | | पृ. सं.
---|---|---

12 **'अथ परा ; यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण-मचक्षुःश्रोत्रं तदपाणिपादम्'** (मुण्ड.उ. 1–1–5) 149

साङ्गसशिरस्कसोपबृंहणस्वाध्यायश्रवणजन्यज्ञानात्मिकायाः परोक्ष-भूतायाः अपराख्याया विद्यायाः प्रतिपादनानन्तरं, पराख्या विद्या प्रति-पाद्यते । यया च विवेकादिसाधनसप्तकसम्पाद्यया अपरोक्षज्ञाना-त्मिकया विद्यया दर्शनसमानाकारध्यानतापन्नया, ज्ञान-कर्मेन्द्रियागोचर-स्वरूपम् , गुणकर्मादिविभागनिबन्धनकुलवर्णादिवैषम्यविदूरम् , स्वयं च ज्ञानकर्मेन्द्रिययोरनाश्रयभूतम् , (कालदेशाद्यायत्तपरिच्छेदातीतम् अत्यन्तसूक्ष्मत्वात् सर्वान्तःप्रविष्टम्) अक्षरपदव्यपदेश्यं परं तत्त्वं साक्षात्क्रियते ॥

13 I **'अथ मुनिः'** (बृ.उ. 5–5–1) 270

II **'अथ मुनिः'** ( ,, ) 272

(प्र. 'तस्माद्ब्राह्मणः' इत्यत्र)

14 **'अथ य आत्मा स सेतुर्विधृतिः'** (छां.उ. 8–4–1) 75

अमृताभयब्रह्मभूतः सत्यपदाभिधेयो यः परमात्माऽस्ति, सः सर्वलोक-मर्यादासंरक्षणेन असाङ्कर्यापादनेन च हेतुना, सेतुरिव विधारकः । (सिनोति—बध्नाति स्वस्मिन् चिदचिद्वस्तुजातमसङ्कीर्णतयेति सेतुः) ॥

15 I **'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति'** (छां.उ. 5–10–3) 10

II **'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते'** (छां.उ. 5–10–3) 22

पूर्वोक्तोपासकविलक्षणाः ये पुरुषाः श्रौतस्मार्ताः क्रियानुष्ठानपरा अपि सन्तः, स्वर्गादिफलकं यागादिकर्म, लोकोपकारफलकं वापी-कूप-तटाकादिनिर्माणं , दैनन्दिनजनजीवनोपयोगिधान्यवस्त्रगृहक्षेत्रा-रामादिदानं च कुर्वाणाः, ग्राम-नद्गतगृहाद्यवलम्बिन एव सन्तो जीवन्ति; ते पुनः स्वप्राप्यस्वर्गादिस्थानप्रापकातिवाहिकतया आदौ धूमाभिमानि-देवतां प्रतिपद्यन्ते । तेषां च 'धूमो रात्रिः' इत्याद्युक्तः पन्था एव ; न त्वर्चिरादिः ॥

16 **'अथ य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्; तेषां सर्वेषु लोकेष्वकामचारो भवति'** (छां.उ. 8-1-6) 169

('तद्य इहाऽऽत्मानमननुविद्य' इति उपनिषत्कोशे)। ये पुनः पुरुषाः अपहतपाप्मत्वादिगुणकं दहराकाशरूपिणं परमात्मानं, तद्गतांश्च नित्यमङ्गलान् कल्याणगुणानपि च अनुपास्यैव आयुर्नीत्वा, देहादस्मान्निष्क्रान्ताः सन्तः, परं लोकं गच्छन्ति; तेषां यस्य कस्याऽपि वा लोकस्य प्राप्तावपि कर्मवश्यत्वनैयत्यात् पारतन्त्र्यं दुर्निवारमेवेति, परमात्मना परमसाम्यरूपा मुक्तिः नैव लभ्यते ॥

17 **'अथ यत्रैतदस्माच्छरीरादुत्क्रामति; अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते'** (छां.उ॰ 8-6-5) 351

यदा पुनरयं जीवः, कर्मायत्तादस्माद्देहात् उत्क्रमणं प्राप्नोति; तदा पूर्वोक्तैरेव आदित्यरश्मिभिः (वाहकतया आश्रयीकृतैः) स्वप्राप्यम् ऊर्ध्वं स्थानम् आक्रम्य प्राप्नोति ॥

18 **'अथ यत्रैतत्सुप्तः (तद्यत्रैतत्सुप्तः) समस्तः सम्प्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति)** (छां.उ. 8-6-3) 42

तस्माद्धेतोः पूर्वोक्तात्, अयं देही यदा उपसंहृतकरणग्रामः, अत एव च बाह्यविषयसम्पर्कायत्तकालुष्यशून्यः सन् स्वाप्नमप्यनुभवं न प्राप्नोतीति यदस्ति तदेव सुषुप्तिरित्युच्यते। प्राप्तनिद्रस्य स्वप्नादर्शनं हि सुषुप्तिः। तदा च पुरीतद्गतब्रह्मगमनाय नाडीषु प्रविष्टो भवति ॥

19 **'अथ यदा सुषुप्तो भवति, यदा न कस्यचन वेद, हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते। ताभिः प्रत्यवसृप्य पुरीतति शेते'** (बृ.उ. 4-1-19) 42

जीवस्य स्वप्नावस्थानिरूपणानन्तरं, तदीया सुषुप्तिनाम्नी अवस्था निरूप्यते। यस्मिन् काले, देही अत्यन्तज्ञानसङ्कोचरूपां सुषुप्तिं प्रतिपद्यते, बाह्यमान्तरं न किंचिदपि जानाति, तदा जीवहितौपयिकत्वेन

हिताख्यां प्राप्ताः द्विसहस्राधिकसप्ततिसहस्रसङ्ख्याः देहगताः सिराः, हृदयाख्यं जीवाधिष्ठानस्थानं प्रविश्य, तदन्तःस्थितं 'पुरीतत्' पदाभिधेयं मांसपिण्डमभिमुखीकृत्य प्रस्थिता भवन्ति। ताश्च नाडीः द्वारीकृत्य जीवात्मा, स्वीयस्वाभाविकस्थानभूतं पुरीतदधिष्ठितं परमात्मानं प्रत्याभिमुख्येनाऽऽगत्य, तत्र परमात्मनि स्वस्थः शेते—प्राप्तविश्रामो भवति। अतः सुषुप्तजीवस्य परं ब्रह्मैव आधारस्थानम् ॥

20 **'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यम्'** (छां.उ. 8–1–1) 165

दहरविद्याख्यं विद्यान्तरं प्रस्तूयते। मोक्षार्थमुपासितव्यस्य परस्य ब्रह्मणः अधिष्ठानत्वेन हेतुना 'ब्रह्मपुर'शब्दाभिधेयेऽस्मिन् मानुषदेहे, योगिभिः साक्षात्कार्यं सूक्ष्मतया दहरपदव्यपदेश्यं यद्ब्रह्मसदनं वर्तते पद्ममुकुलाकृति, तस्मिन् हृदयाख्ये सदने अन्तर्वर्तमानो यः अग्र्यया सूक्ष्मया बुद्ध्या दृश्यमानतया दहरपदाभिधेयः, सर्वतोमुखप्रकाशवत्तया आकाशपदवाच्यश्च परमात्मा सः, तदन्तर्वर्ति च यत् तदीयं मङ्गलगुणजातं, तदुभयमपि धर्मधर्म्यात्मकम् अन्वेषणीयं मुमुक्षुभिः श्रवणमननाभ्यामवगन्तव्यं, (ध्यातव्यं च मोक्षसिद्ध्यै) ॥

21 **'अथ यदु चैवाऽस्मिञ्छव्यं कुर्वन्ति यदु च न; अर्चिषमेवाऽभिसम्भवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासान् तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः।**

**स एनान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमानाः इमं मानवमावर्तं नावर्तन्ते'** (छां.उ. 5–15–5, 6) 361

प्रकृतोपकोसलविद्यानुष्ठातरि पुरुषे, (ब्रह्मविद्यासामान्यानुष्ठातरि च) तदीयाः पुत्रादयो ज्ञातयः तन्मरणानन्तरं तदीयदेहस्य शव्यसंस्कारादिकं प्रेताद्यौर्ध्वदैहिककर्मविशेषं आचरन्तु वा मा वा; उभ-

यथाऽपि ते अर्चिरादीन् परमपदप्रापकानातिवाहिकान् प्राऽप्नुवन्त्येव । अर्चिर्नामानं प्राप्य, ततो दिनाभिमानिदेवतां, ततः क्रमेण शुक्लपक्षोत्तरायणसंवत्सरादित्यचन्द्राभिमानिनो देवान् प्राप्य, ततोऽमानवनामानं वैद्युतं पुरुषं प्रतिपद्यते । स चामानवः स्वं प्रतिपन्नान् परं ब्रह्म प्रापयति । एतैर्नीयमानो मार्गः देवैर्नीयमानत्वात् देवयानाभिधः सन् ब्रह्मप्रापकतया ब्रह्ममार्ग एव । अनेन पथा प्रयान्तः पुरुषाः एतावदन्तं स्वाभाविकगुणाविर्भावप्रतिबन्धकतया स्थितं मनुप्रवर्तितं संसारचक्रं नैव पुनः प्रतिपद्यन्ते ।। उत्तरावधिराहित्येन परमपदस्था एव भवन्ति ।।

22　**'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति'**　( तै. ना. उ. 80 )　355

यस्तु फलाभिसन्धाता सन् इष्टापूर्तादिकृत् पुरुषः (न तु मोक्षार्थोपासनकृत् ) दक्षिणायने वर्षपश्चार्धभागे देहवियोगं प्राप्नोति ; सः पितृलोकवैभवमनुभूय ततः चन्द्रसमानभोगतामश्नुते ।।

23　**'अथ योऽन्यां देवतामुपास्ते, 'अन्योऽसावन्योऽहमस्मी' ति ; न स वेद**　( बृ. उ. 3–4–10)　296

यः उपासकः पुरुषः, स्वोपास्यां देवतां स्वस्माद्भिन्नतया चिन्तयन्नुपास्ते ( स्वापृथक्सिद्धिधर्मितया न चिन्तयति ) सः उपासनप्रकारं नैव जानाति स नैवोपासितवान् ।।

24　**'अथ रथान् रथयोगान् पथः सृजते'**　( बृ. उ. 6–3–10 )　408

**अथ रथान् रथयोगान् पथः सृजते'**　''　38

(प्र. ' न तत्र रथाः ' इत्यत्र )

25　**'अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते ; स हि कर्ता'**

(बृ. उ. 6–3–10)　39

' अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते ; स हि कर्ता '
( बृ. उ. 6–3–10 ) 408

(प्र. ' न तत्र रथाः ' इत्यत्र )

26 ' अथ स्व (प्नाः)प्ने पुरुषं (कृष्णं)कृष्णदन्तं पश्यति स एनं हन्ति '
(ऐत. आर. उ. 3–2–4) 41

यः कश्चन जीवः, स्वप्नावस्थायां (यदि) कृष्णवर्णं कृष्णरदनवन्तं च कञ्चन पुरुषं पश्येचेत् !, स स्वप्नः तं तादृशस्वाप्नार्थानुभवितारं पुरुषं हन्यमानं (म्रियमाणं) सूचयति ॥

27 I ' अथ ह य एवाऽयं मुख्यः प्राणः तमुद्गीथमुपासांचक्रिरे '
( छां. उ. 1–2–7) 101

II ,, ,, ,, 103

III ,, ,, ,, 105

IV ,, ,, ,, 105

यदा देवा असुराश्च मिथो युयुधिरे, तदा देवाः असुरानभिभवितुम् उद्गीथोपासनमुपायतयाऽऽश्रित्य, प्राणादिमनोन्तप्रकारेण उद्गीथमुपास्य, तेष्वसुरैः पापसंयोजनं दृष्ट्वा, स्वोपासनवैफल्यं विचिन्त्य, अन्ते उद्गीथावयवमोङ्कारं मुख्यप्राणतयोपास्य, असुरपरिभवं कृतवन्तः ॥

28 I ' अथ हेममासन्यं प्राणमूचुः, त्वं न उद्गायेति, तथेति तेभ्य एष प्राण उदगायत् ' (बृ.उ. 3–3–7) 103

II ,, ,, ,, 103

III ' अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाय ' ,, 105

IV ' अथ हेममासन्यं प्राणमूचुः ' ,, 101

अनन्तरं चेमं मुख्यप्राणमुद्दिश्य देवा उक्तवन्तः—त्वमस्माकमपेक्षित-

मुद्गानं कुरु ! इति । तदपेक्षामभ्युपगम्य मुख्यः प्राणः उद्गानकर्म निर्वर्तितवान्—( देवाः उद्गतरि मुख्यप्राणदृष्टिं कृतवन्तः ) ।।

29 'अथ हेमा देवताः (?) प्रजापतिं पितरमेत्याब्रुवन्—को वै नः श्रेष्ठः ? (छां. उ. 5-1-6 ) 110

[ ते ह प्राणाः प्रजापतिं पितरमेत्योचुः—भगवन् ! को नः श्रेष्ठः ? इति छान्दोग्ये दृश्यते ]

वागादिषु प्राणेषु स्वोत्कर्षख्यापकविवादसमाप्त्यनन्तरं, वागाद्याः देवाः ( इन्द्रियाणि ) स्रष्टरि प्रजापतौ विवादपदनिर्णयं चिन्तयन्तः, विवादविषयं प्रजापतौ उपसृत्य ख्यापितवन्तः । भो ब्रह्मन् ! अस्माकं मध्ये कतमो वा प्रशस्ततमः ? इत्येतन्निर्णीय अस्माकं विवादं शमय—इति ।।

30 'अथ हैनं वागुवाच-यदहं वसिष्ठोस्मि, त्वं तद्वसिष्ठोऽसि'
(छां. उ. 5-1-13) 110

(प्रजापत्युक्तया रीत्या परीक्षायां प्रवृत्तायां सत्यां, स्वेषां सर्वेषां प्रवृत्तेः मुख्यप्राणाधीनतां संविद्य ) तं प्राणं वागुवाच—भोः प्राण ! अहं तावत् वाग्मिनां विदुषां वसु (धनादि ) सम्पादकत्वतः वसिष्ठत्वेन व्यवह्रियमाणाऽस्मि । इदं च वसिष्ठत्वं वस्तुतो भवदीयमेव भवत्प्रसादात् मयि सङ्क्रान्तमस्ति । भवानेवाऽस्माकं मध्ये वसिष्ठः इति ॥

31 I 'अथाऽकामयमानः, योऽकामो निष्काम आप्तकाम आत्मकामः; न तस्य प्राणा उत्क्रामन्ति; ब्रह्मैव सन् ब्रह्माप्येति'
( बृ. उ. 6-4-6 ) 340

II 'अथाऽकामयगानः' " 341

अविदुषः पुरुषस्य सांसारिकजीवननिरूपणानन्तरं, संसरणपथे वीतरागः पुरुषो निरूप्यते-कृतकार्थविषयकानां कामानां दूरीकरणेन, नित्यसिद्धात्मरूपकाम्यार्थतया च अकामत्वादिगुणगणवान् चेतनो यदा

मरणं प्राप्नोति-वियुक्तदेहो भवति ; तदा तस्माच्चेतनात् सकाशात् तत्सम्बन्धिनः प्राणाः उत्क्रमणरूपं वियोगं नैव प्राप्नुवन्ति । स विद्वान् चेतनः कर्मतिरोहितस्वाभाविकाष्टगुणाविर्भावतः ब्राह्मगुणसम्पन्नः सन् ब्रह्मणा परमसाम्यमाप्त्वा, ब्रह्मविविक्तया दर्शनानर्हो भवति ।।

32 I 'अथाऽत आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत् परमस्ति'

(बृ. उ. 3-4-6) 64

II ' अथात आदेशो नेति नेति , " 69

'द्वे वाव ब्रह्मणो रूपे' इत्यादिना मूर्तामूर्ताख्यरूपद्वयवत्तायाः ब्रह्मण्युक्त्या इतररूपवत्साधारण्येन प्राप्तस्य इयत्तालक्षणस्य परिच्छेदस्य निषेधः, ब्रह्मणो विषये उपदिश्यते श्रुत्या 'नेति नेति' इति शब्देन । अत्र ' इति न ' इत्यनेन परिच्छेदरहिततया प्रतिपादितं यत् ब्रह्म, एतस्मात् ब्रह्मणोऽपेक्षया परं—स्वरूप-स्वभावाभ्यामतिशयितं ब्रह्मण्येन्यत् चेतनाचेतनान्तर्गतं वस्तु नैव प्रसिद्ध्यति । प्रत्यक्षादिसिद्धं सर्वमपि ब्रह्मापेक्षया अपकृष्टमेव ; न उत्कृष्टम् । अतः शरीरवत्साधर्म्यमादाय ब्रह्मणि इयत्ता नैव भाव्या ; स्वेतरसमस्तविलक्षणत्वाद्ब्रह्मणः ॥

33 I ' अथैतमेवाऽध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् , आकाशाद्वायुं , वायुर्भूत्वा धूमो भवति , धूमो भूत्वाऽभ्रं भवति , अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति (छां. उ. 5-10-5) 26

II ' अथैतमेवाऽध्वानं पुनर्निवर्तन्ते ' " 355

भोगाधानप्रवृत्तानां यावतामपि कर्मणामवसानपर्यन्तं देवलोके देवभोग्यभावेनाऽवस्थाय, पश्चात् पुनः संसरणमार्गे एव निवर्तन्ते । अवरोहन्तो हि चेतनाः, आरोहणक्रमानुगुण्येन चन्द्रादाकाशम् अभिसम्भवन्ति ( आरोहणे हि आकाशादनन्तरं चन्द्रप्राप्तिरासीत् ; अवरोहणे तद्वैपरीत्यम् आकाशप्राप्तौ अविशेषः ) ततः क्रमेण वायुभाव धूमभाव–अभ्रभाव–मेघभावानां प्राप्तिः, ततो वर्षणेन जलधारया

साकं भूमिप्राप्तिः इति ॥ ( अत्राकाशभावादयः आकाशादिसंश्लेषेण तत्तत्सादृश्यप्राप्तय एव ; न तु तच्छरीरकत्वादि ) ॥

34 **'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति ; जायस्व म्रियस्वेति । एतत्तृतीयं स्थानं, तेनाऽसौ न सम्पूर्यते'** ( छां. उ. 5–10–8 ) 23

चतुर्थस्य प्रश्नस्य प्रत्युक्त्यारम्भः अथेति । देवयान-पितृयानाख्ययोः द्वयोर्वर्त्मनोः प्रापके ये विद्या-कर्मणी, तयोरननुष्ठानेन हेतुना, ये चेतनाः उक्तयोरन्यतरस्मिन् वर्त्मनि गन्तुमनर्हाः, ते सर्वे दंशमशककीटादिशरीरभाजः सन्तः क्षुद्रजन्तवो भूत्वा, अपरिहार्यं जननमरणप्रवाहं प्राप्नुयुः । तादृशाश्च जीवाः विहितवर्जन–निषिद्धकरणेषु अविरतप्रवृत्तयो भूत्वा, तृतीयस्थानशब्दाभिलप्या भवन्ति । तद्विधैश्च चेतनैः द्युशब्दाभिधेयः परलोकः कदापि नैव प्राप्यो भवति ॥

35 I **'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते'** ” 361

II **'अथैतैरेव रश्मिभिः'** ( छां. उ. 8-6-5 ) 352

( यदा अयं देही जीवः एतदन्तमधिष्ठानतयाऽवस्थितात् देहात् उत्क्रान्तिमाप्नोति ) तदा, अनुपदमेव च पूर्वोक्तैः आदित्यरश्मिभिः साधनतयाऽऽश्रितैः, ऊर्ध्वम् अर्चिरादिकं पथमाक्रान्तो भवति ॥

36 **'अदितिः पाशान्'** (पू. मी. अधि. 9–3–5 उद्धृतः ) 378

['अदितिः पाशं प्रमुमोक्तु' इति ( तै. सं. 3–1–4–11) पाठः]
आदिना पृथिवी, देवमाता वा अस्य यज्ञीयपशोः पाशान् मोचयतु ॥

37 **'अद्भिः परिदधति'** ( छां. उ. 5–2–2) 121

(प्र. 'तस्माद्वा एतदशि' इत्यत्र )

38 **'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ'** ( तै. ना. उ. 1–12) 80

'विद्युतः पुरुषादधि' इति पुरुषशब्दबोध्ये विद्युद्वर्णत्वलिङ्गात्,

क्रमसंख्या पृ. स.

53 अन्योऽन्तर आत्मा प्राणमयः ' (तै.उ.आन. 2–9) 116

अन्नरसमयात् पार्थिवविकाररूपात् शरीराद्विलक्षणः यः प्राणमयो वर्तते स एव, सर्वोपादानत्ववादिना आत्मत्वेन निर्दिष्टः। (प्राणः पञ्चवृत्तिः। स च प्राणनवृत्तिप्राचुर्यात् प्राणमयः ॥

54 अन्योऽन्तर आत्मा मनोमयः ' (तै.उ.आन. 3–2) 116

उक्तात् प्राणमयाद्विलक्षणः प्राणमयस्यान्तर अभौतिकः सन् यो मनोमयः, अन्नमय-प्राणमययोः व्यापकत्वात् धारकत्वात् आत्मत्वेन निर्देश्यः। (मनो-बुद्ध्यहङ्कारचित्ताख्येषु अन्तःकरणावस्थाविशेषेषु मनोवृत्तेः प्रचुरत्वात् मनोमयत्वम्) ॥

55 I ' अप पुनर्मृत्युं जयति ' (बृ.उ. 5–2–10) 340

II ,, ,, 343

(' यदिदं सर्वं मृत्योरन्नम्, कास्वित् सा देवता यस्या मृत्युरन्नम् ' इति याज्ञवल्क्यं प्रति आर्तभागस्य प्रश्नः। तस्योत्तरं याज्ञावल्क्यस्य —' अग्निर्वै मृत्युः सोऽपामन्नम्। अप पुनर्मृत्युं जयति, य एवं वेद ' इति ॥) [सर्वान्नकस्यास्य मृत्योः अग्निरूपत्वेन (कालाग्निरुद्रत्वेन) अग्नेश्च सामान्यतः अद्भिर्नाशात्, मृत्युरूपस्याग्नेरपि मृत्युर्भवति आपः। अप् शब्देन अप्तत्वाभिमानी भगवान् नारायणः स्मार्यते। कालाग्निरुद्रस्याऽपि संहर्ता जलशायी महाविष्णुः इति प्रघट्टकाशयो वक्तुं शक्यः।] अपाम् अग्न्यन्नकत्वचिन्तको विद्वान्, पुनर्मृत्युं अपजयति, अपमृत्युं जयत्येव ॥

56 ' अपः प्रणयति। श्रद्धा वा आपः ' (तै.ब्रा. 3–2–4–2) 9

गार्हपत्याग्नेरपरभागे चमसाख्यं यज्ञियं पात्रं पवित्रान्तर्हितं निधाय, तस्मिन् अपो गृहीत्वा, पृथिवीध्यानेन सह प्रणीतापात्रं प्रति नयति। (आप.श्रौ. 1–5–16–2) इदमेवाऽपां प्रणयनमित्युच्यते। आपः खलु सर्वैः श्रद्धेयत्वेन हेतुना ' श्रद्धा ' शब्दाभिलप्या भवन्ति ॥

पाण्डित्यं, तदिदं द्वयम् अमौनात्मकम्; तथा ध्यानालम्बनस्य शुभाश्रयस्य पौनःपुण्येन संशीलनलक्षणं च यत् मौनाख्यम्, इदं द्वितयं (मौनामौने) लब्ध्वा, तदनन्तरमेव ब्रह्मवेदनार्हो भवति ॥

64 'अयमात्मा ब्रह्म' (बृ.उ. 6–4–5) 394

देवादिचतुर्विधशरीरप्रवेशतः अचिदभिमानेन संसरणार्होऽयं जीवः, वस्तुतो ब्रह्मगुणस्वाभाव्यकृतब्रह्मपदव्यपदेश्यतावान् ॥

65 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'
(कठ.उ. 2–6) 20

इन्द्रियगम्यः मर्त्यलोक एव वास्तवः, अमर्त्यलोकस्तु नैव वास्तवः' इत्येवं यः केवलं स्वकपोलकल्पनया चिन्तयति; ततश्च शास्त्रमर्यादामतिलङ्घ्य व्यवहरति, सः प्रतिजन्मावसानेऽपि दण्डधरस्य मृत्योर्मम वशं प्राप्तः सन् दण्ड्यो भवति ॥

66 I 'अयं वाव लोक एषोऽग्निश्चितः। तस्याऽऽप एव परिश्रितः'
(अग्नि.ब्र. 10–5–4–1) 188

II 'अयं वाव लोक एषोऽग्निश्चितः' ,, 194

अयम् इष्टकानिर्मितस्थण्डिलरूपोऽग्निः (अग्निनिधानस्थानरूपः), भूलोकत्वेन (पृथिवीत्वेन) चिन्तनीयः। तस्याग्नेः परितः सेचनतः सम्पन्नाः आपः, समुद्राख्यजलराशित्वेन चिन्तनीयाः (पृथिव्या परितः समुद्रस्य सत्त्वेन, तस्य सागराम्बरत्वत्) ॥

67 I 'अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यपक्षाद्यान् षडुदङ्ङेति मासांस्तान्'
(छां.उ. 4–15–5) 365

II ,, ,, ,, 368

'तेऽर्चिषमभिसम्भवन्ति' इति एतद्वाक्यपूर्वखण्डः।

ये खलु ग्रामवासादिकं दूरीकृत्य अरण्यवासरुचयः सन्तः विश्वासास्तिक्यबुद्ध्याद्यपरपर्यायां श्रद्धां सहकारितयाऽऽश्रित्य, तपश्शब्दाभिलप्यं

तत्रस्थं वाक्यम्) । प्रस्तुतानि वागादीनीन्द्रियाणि स्वस्वश्रैष्ठ्यप्रकटन-कामनया उद्यम्य अन्ततः अहमर्थस्यात्मनः सर्वश्रैष्ठ्यपर्यवसानाय मिथो-विवादं कुर्वाणानि सन्ति, ब्रह्माणं स्वेषां सर्वेषामुत्पादकं विवादपद-निर्णयाय अभिजग्मुः ॥

79 **'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'** (भ.गी. 9–24) 88

यतो हि वासुदेवोऽहमेव सर्वकर्मसमाराध्यः सर्वकर्मफलप्रदश्च, (अतः च्यवनधर्मणः केवलानिन्द्रादीन् कर्माराध्यत्वेन कर्मफलप्रदत्वेन चाऽविभाव्य, तत्तत्सर्वदेवताशरीरिणं मामेव त्रैवर्गिकाः आपवर्गिकाश्च आराधयेयुः) ॥

80 I **'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांऽशुमान् ॥'** (याज्ञ.प्रा. 144) 61

II **'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्'** ( ,, ) 63

घटादिषु (गृहादिषु वा) सावकाशेषु पदार्थेषु पृथक्पृथक् संयुज्य वर्तमानमाकाशं यथा घटादिगतदोषाश्लिष्टं अविपर्यस्तस्वभावमेव भवति; यथा चैक एव सूर्यः वापीकूपतटाकादिषु विविधेषु जलाशयेषु पृथक् पृथक्प्रतिबिम्बितो न विभिन्नस्वरूपः; तथैव परमात्मा चेतनाचेतनात्मक-सर्ववस्तुगतोऽपि तत्तदर्थगतदोषैरसंस्पृष्टतया अविपर्यस्तैकस्वभाव एव वर्तते ॥

81 **'आकाशो ह वै नाम-रूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म'**
(छां. उ. 8–14–1) 57

स्वयंज्योतिस्वरूपः सन् स्वपरप्रकाशनैकस्वभावः परमात्मैव, जगतो नामरूपयोः—सर्वतत्तदर्थाभिधायकशब्दस्य तत्तदाकारस्य च सम्पादकः । यच्च वस्तु आकाशशब्दाभिलप्यम् उक्तविधजगद्गत-नामरूपाभ्यामसंस्पृष्टम्, तत् असङ्कुचितज्ञानस्वरूपब्रह्मत्ववत् ॥

82 I **'आख्यानानि शंसन्ति'** ( ? ) 242

II **'आख्यानानि शंसन्ति'** ,, 242

औपनिषदकथानकरूपाण्याख्यानानि पत्नीपुत्रामात्यादिपरिवृताय राज्ञे कथयन्ति ॥

क्रमसंख्या　　　　　　　　　　　　　　　　　　　　　　　　　　पृ. सं.

83 **'आचारहीनं न पुनन्ति वेदाः'** (व.स्मृ. 6-3) 16

शास्त्रोक्तसन्ध्यादिकर्मानुष्ठानरहितं पुरुषं जपपारायणाद्युपयोगितया अधीता अपि वेदाः न क्षीणपापं कुर्वन्ति । अतो वेदेन पापक्षयेप्सुः सन्ध्यादिकमाचारं कुर्यादेव ॥

84 **'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्माऽतिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे'** (छां.उ. 8-15-1) 223

आचार्यस्य कुलं—गृहम् आश्रमं वा स्वाध्यायाध्ययनार्थं प्राप्याऽत्र-स्थितो माणवकः, तत्र गुरुकुले गुरुशुश्रूषार्थं विनियुज्यमानं कालं विहाय अवशिष्टे समये वेदग्रहणविधिमनुसृत्य गुरोः सकाशाद्वेदं गृहीत्वा, साङ्गवेदाध्ययननिर्वृत्त्यनन्तरं गुरुकुलान्निवृत्य, स्वगृह्योक्तेन विधिना स्वीकृतगृहस्थाश्रमः शुद्धियुक्ते गृहाश्रमादौ स्वीये स्थाने, (आचार्यादधिगतस्य स्वीयवेदशाखाविशेषस्य जप-पारायणादिरूपपुनः पुनराम्नाये तथा गार्हस्थ्योचिते कर्मानुष्ठाने च निरतः सन्, स्वीयान् पुत्र-शिष्यादीन् योग्यानधिकारिणः धार्मिके लोकशास्त्रादिसिद्धे कर्मणि नियुञ्जानः, इन्द्रियाणां उच्छृङ्खलप्रवृत्तिं निवारयन्, भूतहिंसादिकं वर्जयित्वा, स्वकर्मनिघ्ने पूर्णे आयुषि भगदुपासनादविचलितस्वभावः आयुः क्षपयन्, ध्यानरूपेणोपायेन साक्षात्क्रियमाणं परंब्रह्म, प्राप्नोति; नैव च पुनः संसारे आवर्तते) ॥

85 **'आण्डजं जीवजमुद्भिज्जम्'** (छां.उ. 6-3-1) 25

(प्र. 'तेष्वेषाम्' इत्यत्र)

86 **'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहि'**

(छां.उ. 5-11-6) 198

" " " " 200

हे अश्वपते ! केकय ! त्वमधुना अस्माभिर्जिज्ञासितं वैश्वानराख्यमात्मानमेव उपासीनो वर्तसे । अतः त्वयोपास्यमानं अस्माभिर्जिज्ञासितं च वैश्वानरमात्मानमेव अस्माकमुपदिश ॥

संसाराध्वनः परपारभूतं यत् वैष्णवं पदं, तत्प्रेप्सुः शरीरी चेतन एव रथित्वेन विवक्षितः । चेतनाधिष्ठानभूतं शरीरमेव प्राप्य प्राप्तिसाधनभूतोपायानुष्ठानप्रयोजकत्वात् रथत्वेन अभिधित्सितम् । अध्यवसायापरपर्याया बुद्धिरेव सारथिवत् नियन्तृत्वस्वाभाव्यात् सारथित्वेन अभिजिगमिषितम् । मन एव चान्तरं बुद्धिसाध्यनियन्त्रणनिर्वाहकत्वेन प्रग्रहसादृश्येन प्रग्रहः—रशना इत्येवं जानीहि नचिकेतः ! ॥



पति जाया-वित्तादीनां लोकभोग्यानामर्थानां प्रियत्वं यत्सङ्कल्पायत्तं, तादृशसङ्कल्पाश्रयः निरुपाधिकात्मत्ववान् परमात्मैव श्रवणमनननिदिध्यासनैः उपास्यः दर्शनसमानाकारज्ञानपर्यवसायिना ध्यानेनोपास्यः ॥



प्रत्यक्षादिप्रमाणगम्यमिदं विश्वम् , सृष्टेः प्राक् सर्वात्मभूतेन परब्रह्मणा साकमविभक्तं सत् अविभक्ततमोवस्थावस्थितं सत् आत्मपदैकव्यपदेश्यमासीत् । अविभक्तनामरूपत्वेन पृथक्स्थिति-प्रतिपत्त्यनर्हतया निर्व्यापारं सत् निर्निमेषमिवाऽवर्तत । तदा स परमात्मा लोकान् स्रष्टुं सङ्कल्पितवान् । मया सह अविभक्ततापन्नमिदं मत्तो विभज्य पृथक् स्थितिप्रतिपत्त्यौपयिकव्यवस्थितनामरूपवत् करवाणि ॥

क्रमसंख्या | पृ. सं.

96 I ' आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ (भ.गी. 8-16) 422

II ' आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।' ,, 376

ब्रह्मलोकान्तानि सर्वाण्यपि भोगस्थानानि, क्षयस्वाभाव्यात्, पुनरावृत्तिहेतुभूतान्येव । अक्षय्यशाश्वतामृतस्वरूपं मां वासुदेवं प्राप्य तु अस्मिन् संसारे पुनर्जन्मादिः नैव सम्भवति ॥

97 ' आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥'
(आग्ने.पु. 16-5-23) 263

नैष्ठिकः—यावज्जीवं ब्रह्मचर्यव्रतनिष्ठां प्रतिज्ञातवान् । तादृशं नैष्ठिकत्वं स्वीकृतवान् यो द्विजः, प्रतिज्ञातद्धर्मात् स्खलितो भवति ; तस्य स्वात्मघातकस्य तादृशात्महत्यादोषनिवारकं निष्कृतिरूपं कर्म कुत्राऽपि शास्त्रे नोपलब्धवानस्मि ॥ तच्छोधकप्रायश्चित्ताभावात् ब्रह्मचर्यव्रतलोपः अपरिहार्यपापकरः ॥

98 ' आवृत्तिरसकृदुपदेशात् ' (ब्र.सू. 4-1-1) 247

मोक्षोपायतया शास्त्रविहितस्य परमात्मवेदनस्य नैरन्तर्य-पौनःपुन्याभ्यां बहुवारकर्तव्यतैव शास्त्राभिमता ; न तु प्रपत्तिवत् सकृत्कार्यता । मोक्षोपायप्रतिपादनपरवाक्ये प्रत्यक्षतापत्त्यनुगुणतैलधारावदविच्छिन्नस्मृतिसन्तानरूपध्यानोपासनपर्यवसाय्यर्थकस्य विद्धातोः (उपदेशात्-) प्रयोगात् ॥

99 I ' आहरशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ' (छां.उ. 7-26-2) 253

II आहारशुद्धौ सत्त्वशुद्धिः ' ( ,, ) 277

[illegible] सेवने । क्रियमाणे [illegible]
[illegible] विजातीयप्रत्ययान्तराव्यवहित[illegible]स्मृति-
सन्ततिरूपस्य ध्यानस्य मोक्षोपायभूतोपासनस्य निष्पत्तिर्भवति ॥ [illegible]

क्रमसंख्या | | प्र. सं.

100 ‘**इतरपरामर्शात् स इति चेन्नाऽसम्भवात्**’ (ब्र.सू. 1-3-17) 219

दहरविद्याप्रकरणमध्यवर्तिनि ‘स एष सम्प्रसादः’ इति वाक्ये परमात्मभिन्नस्य जीवस्य प्रतिपादनदर्शनात्, एतत्प्रकरणस्थदहराकाशशब्दवाच्योऽर्थः जीव एव; न परमात्मा, इति न शङ्कितव्यम्; दहराकाशगततया एतत्प्रकरणावगतानां गुणानां निरुपाधिकानां, अविद्यातिरोहितस्वरूपे जीवे असम्भवात्, तस्य दहराकाशत्वायोगात्। अतः दहराकाशशब्दबोध्योऽर्थः, निरुपाधिकापहतपाप्मत्वाद्याश्रयः परमात्मैव; न जीवः॥

101 ‘**इतरस्याऽप्येवमसंश्लेषः पाते तु**’ (ब्र.सू. 4-1-14) 316

102 ‘**इति तु पञ्चम्या माहुतावापः पुरुषवचसो भवन्ति**’ (छां.उ. 5-9-1) 4

„ „ ( „ ) 8

‘**इति तु पञ्चम्याम्**’ ( „ ) 8

‘अयं वाव लोको गौतमाऽग्निः’ इत्यारभ्य ‘गर्भः सम्भवति’ इत्येतदन्तमुक्तया रीत्या श्रद्धा-सोम-वृष्टयन्नरेतोरूपाणामाहुतीनां मध्ये प्रविष्टायां रेतोरूपायामाहुतौ ‘अप्’ शब्दितानि भूतसूक्ष्माणि पुरुषशब्दाभिलप्यानि भवन्ति॥

103 ‘**इतो निष्क्रम्याऽमुकं वृक्षममुकां नदीम् अमुकं पर्वतपार्श्वं गत्वा अमुकं ग्रामं गच्छ**’ (लौकि.प्र.) 370

पुरः परिदृश्यमानादस्मात् स्थानात् निर्गत्य, अस्मिन्नध्वनि किंचिद्दूरगमनानन्तरं प्राप्स्यमानं (न्यग्रोधादि) वृक्षमुपलभ्य, ततः परं किञ्चिद्दूरं याते सति उपलभ्यमानां (कावेर्यादि) सरितं प्राप्य, पश्चाच्च किञ्चिद्दूरप्रयाणतोऽवाप्यमानस्य पर्वतस्य (यदुगिर्यादेः) पार्श्वभागं चावाप्य, ततोऽपि किंचिद्दूरगमनानन्तरमुपलभ्यमानं ग्रामविशेषं (नागमण्ड(ङ्ग)लाख्यं) प्राप्नुहि॥ इत्येवमादिरीत्या)

104 ‘**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥**’ (भ.गी. 14-2) 393

'परं भूयः प्रवक्ष्यामि' इति वक्ष्यमाणतया प्रतिज्ञातं परिशुद्धात्मस्वरूपज्ञानं मन्तव्यतयाऽवलम्ब्य (ततो ध्यानेन तल्लब्ध्वा च) ततो वासुदेवाख्यस्य मम समानधर्मतां प्राप्तवन्तः (अजरत्वामृतत्वे लब्धवन्तः), सृष्टिकाले उत्पत्तिभाक्त्वं, प्रलयकाले संह्रियमाणतां च नैव आपद्यन्ते। (निरुपाधिकस्वरूपभूतस्य ब्राह्मगुणस्य आविर्भावतः मत्सदृशीभूय, आनन्दैकभाजोऽवतिष्ठन्ते। शोकं तीर्त्वा वीतशोकपदवाच्या भवन्ति)॥

105 **'इदमपि वेदव्रतेन व्याख्यातम्'** (आथ.समा) 97

प्रस्तुतमेतद्व्रतमपि पूर्वमुपदिष्टेन शिरोव्रताभिधानेन आथर्वणिकेन वेदव्रतविशेषेण विशदीकृतं वेदितव्यम्॥ वेदव्रतभूते शिरोव्रते यः प्रकार उपदिष्टः तमत्रादिश्य इदं समग्रतामापाद्य ज्ञातव्यम् इत्यर्थः॥

106 **'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे'** (तै.सं. 2-3-6-2) 176

तत्रेयं श्रुत्यानुपूर्वी—'यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाऽधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजायमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराट्' इति॥ पुरोडाशत्रयवत्यां त्रैधातवीयाख्यायामिष्टौ राजत्वाधिराजत्वस्वराट्त्वस्वरूपभिन्नभिन्नविशेषणविशिष्टवेषेण उद्देश्यभूतेन्द्रदेवताकायाम्, तत्तद्विशेषणयुतमिन्द्रं पृथक्पृथगुद्दिश्य गार्हपत्येऽग्नौ एकादशसु कपालेष्वधिश्रित्य संस्कृतं पुरोडाशं हविष्ट्वेनोपादाय यजेत॥

107 **'इन्द्रो ह वै वृत्रं हत्वा महानभवत्'** (ऐत.म.ब्रा. ) 132

देवानामीशिता इन्द्रः खलु देवैरसुरैश्चाजय्यममितबलं वृत्रं नाम पुरुषं वधेन नाशयित्वा, 'अयं महान्, सर्वैरवध्यस्य वृत्रस्य वधात्' इति स्तूयमानोऽभवत्॥

अग्नि-वायु-सूर्यचन्द्राद्याः देवता अपि सर्वकर्मेज्यस्य परमात्मनः शरीरतयैव स्थिताः तत्तत्कर्माराध्या इव वर्तन्ते । यथा देहे तदधिष्ठातुर्जीवस्य सत्ताकाले देहो भक्ष्यमाणाहारस्वीकर्तेव लक्ष्यते ; वस्तुतः देहद्वारा स्वीकर्ता जीव एव ; तथा परमात्मापि अग्न्यादिदेवताद्वारा सर्वकर्मस्वीकर्ता ॥

112 **'ईशावास्यमिदं सर्वम्'** (ईशो. 1) 230

('यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्' इति मन्त्रशेषः) । प्रत्यक्षादिप्रमाणसिद्धं चेतनाचेतनात्मकं सर्वमपि जगत्, स्वविलक्षणेन सर्वनियामकेन परमात्मना पुरुषोत्तमेन व्याप्यं सत् व्याप्तमेव वर्तते । सर्वत्र व्याप्ततया वर्तमानत्वादेव तस्य व्यापकत्वाभिज्ञानं नाम 'वासुदेव' इति शास्त्रसिद्धमस्ति । तादृशेऽस्मिन् जगति, अस्मान् प्रत्येव भोग्यताज्ञानं, तथा अस्मत्स्वामिकत्वज्ञानं, अस्मासु च नियततादर्थ्य-तादधीन्यवत्सु स्वार्थत्व-स्वाधीनत्वज्ञानादिकं च सर्वं भ्रान्तिविजृम्भितमेव । अतः एतत्तत्वज्ञानेन 'सर्वं भवदीयमेव नाऽस्माकमत्र स्वातन्त्र्यम्' इति मनसा त्यक्तमिदं भोग्यजातं भगवदुपासनसाधनभूतशरीरयात्रोपयोगितया विचिन्त्य भुञ्जीथाः । शास्त्रमर्यादामतिलङ्घ्य केवलमदीयत्वभ्रान्त्या मा भुञ्जीथाः। स्वेतरस्य बन्धोरन्यस्य बाधने स्वीयत्वापादनलोभं मा कुरु । कस्य—परमात्मनो धनं, स्वीयं धनमिति चौर्यात्मिकां बुद्धिं मैव कुर्वीथाः इत्यप्यर्थश्चिन्त्यः ॥

113 **'उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थम्, इयमेव पृथिवी'** (ऐत.उ. 2–1–2) 194

कर्माङ्गभूतं किञ्चन शस्त्रं, उक्थमिति नाम्ना वैदिक्यः प्रजा अभिलपन्ति । देवतानुग्रहोत्थानप्रयोकत्वात् शस्त्रे (स्तुत्यर्थायामृचि) उक्थपदप्रयोगः । शस्त्रं नाम अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम् । कर्माङ्गतया विहिते च तस्मिन् शस्त्रे पृथिवीत्वदृष्टिः कार्या ;

पृथिव्या अपि चेतनापेक्षितौषधिवनस्पत्याद्यखिलोत्थानहेतुत्वेन उक्थ-
पदवाच्यत्वयोगात् ॥

114 'उच्छिष्टं वै मे पीतं स्यात्' (छां.उ. 1–10–4) 252

('हन्ताऽनुपानम्' इति पूर्ववाक्यम्) प्राणात्ययसंशयाधायिकया क्षुधा आक्रान्तः उषस्तिश्चाक्रायणः कस्यचन चतुर्थवर्णीयस्य ग्रामाधिपस्य सकाशे कुल्माषान् भिक्षितवान् । तेन दत्तांश्च कुल्माषान् भक्षितवांश्च । कुल्माषदाता ग्रामाधिपः अनुपानमपि गृह्णीष्व तृष्णाशमनायेति यदा जलं दातुमुद्युक्तः तदा चाक्रायण उषस्तिः ग्रामाधिपमाह—त्वद्दत्तं जलं यद्यहं पीतवान् स्याम् ! तदा अहमुच्छिष्टाशी भवेयम् । तदा च मम दोष आपद्येत इति ॥

115 'उत तमादेशमप्राक्ष्यः' (छां.उ. 6–1–3) 158

(हे श्वेतकेतो ! पुत्र ! श्रुतेन मतेन विज्ञातेन, अश्रुतममतमविज्ञातं च सर्वं श्रुतं मतं विज्ञातं भवति तादृशं सर्वप्रशासितारं परमात्मानं विषयीकृत्य, प्रश्नपूर्वकम् आचार्यसन्निधौ किं ज्ञातवानसि ? (इति स्वपुत्रं श्वेतकेतुं पृष्टवान् पिता उद्दालकः) ॥

116 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥' (भ.गी. 15–17) 60

'द्वाविमौ पुरुषौ' इत्यादिना पूर्वमुक्ताभ्यां क्षराक्षरपदाभिधेयाभ्यां बद्धमुक्तावस्थाचेतनाभ्यां विलक्षणतया तदर्थान्तरभूतः पुरुषविशेषः, शास्त्रेषु पुरुषोत्तमः' 'परमात्मा' इत्यादिभिः शब्दैः व्यपदिश्यते । स एव च पृथिव्यन्तरिक्षद्युनामानि त्रीण्यपि भुवनान्यनुप्रविश्य, तेषु विनश्यत्स्वपि स्वयमविनाश्येव स्थित्वा, तानि धारयति पोषयति च स एव तेषामीशिता च वर्तते ॥

117 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (ब्र.सू. 1–3–18) 390

दहरविद्याप्रस्तावादनन्तरं प्रवृत्तात् प्रजापतिवाक्यात्, जीवः अपहतपाप्मत्वादिगुणवत्तया प्रतिपन्न इति, स जीव एव दहरविद्यागताकाशपदार्थो भवितुमर्हः इति तु शङ्कनं नैव साधु ; परंज्योतिरुपसम्पद्य

स्वरूप-स्वभावाभ्यामत्यन्तं विलक्षणतया मिथोभिन्नेषु असङ्ख्यातेषु चेतनाचेतनराशिषु अपरित्यक्तस्वीयस्वरूपस्वभावः अवतिष्ठते । गगन-मण्डले एकस्यैव चन्द्रमसः विराजमानताध्रौव्येऽपि, विविधेषु जलाशयेषु तद्गततरङ्गादिषु च स चन्द्रः बहुधैव खलु दृश्यते ; तद्वत् ॥

134 I **'एकधैवाऽनुद्रष्टव्यमेतदप्रमेयं ध्रुवम्'** (बृ.उ. 5-4-10) 167

II **'एकधैवाऽनुद्रष्टव्यम्'** ,, 169

इत्थमेवेति परिच्छेत्तुमनर्हं निश्चलं चैतत् सर्वभूतात्मभूतं परं ब्रह्म, श्रवण-मननाभ्यामनन्तरम् एकत्वेनैव ध्यानदर्शनयोर्भावनीयम् ; न नानात्वेन । (यद्वा) ब्रह्मातिरिक्तं सर्वमपि, परमात्मप्रकारत्वेन तत्परतन्त्रत्वेन च एकरूपमेव ; न तद्विषये किञ्चिद्वैलक्षण्यं वर्तते ॥

135 **'एकं वा संयोग-रूप-चोदनाख्याविशेषात्'** (पू.मी.सू. 2-4-9) 95

विध्यादिभिरवगतस्य कर्मणि फलसम्बन्धस्य, कर्मरूपभूतयोर्द्रव्यदेवतयोः कर्मविधिस्वरूपस्य, कर्मनामधेयस्य चेत्येतेषामभेदाज्ज्ञापकात्, स्थानान्तरशाखान्तरपठितं कर्म एकमेवेति निश्चयम् । यथा ताण्डके पञ्चविंश-षड्विंशब्राह्मणयोः ज्योतिष्टोमाख्यस्य क्रतोः आम्नान-पौनरुक्त्येऽपि, स्वर्गाख्यफलस्य सोमरसाख्यद्रव्य-इन्द्रवाय्वादिदेवतयोः, 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति विधेः, ज्योतिष्टोम इत्यस्य कर्म-नाम्नः इत्येतेषामैक्यात् कर्मस्वरूपमप्येकमेव ; न विभिन्नम् ॥

136 **'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।**
**तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः ॥'** (वि पु. 1-6-39) 235

चित्तप्रवृत्तिवैविध्यनिरोधेन निरन्तरब्रह्मध्यानैकपरायणाः ये योगिनो वर्तन्ते तेषां सर्वेषामपि, नित्यसूरिभिरनुभाव्यं परम्पदं अवश्यमनुभवार्हं भवत्येव ॥

137 **'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाऽग्निर्न सूर्यः । स एकाकी न रमेत । तस्य ध्यानान्तस्थस्य....एका कन्या दशेन्द्रियाणि ॥** (महो. 1-1) 415

सृष्टेः प्राक् भगवान् नारायण एक एवाऽवर्तत। ब्रह्मरुद्रादयो देवाः, द्यौः, पृथिवी, नक्षत्राणि च नैवाऽवर्तन्त। तथा जलाग्निसोमसूर्यादयोऽपि च नैवासन्। तदा नारायणः एकाकित्वेन हेतुना नैव सन्तोषमलभत। ततः सृष्टिविषयकसङ्कल्परूपध्यानैकतानस्वान्तस्य तस्य, कन्यापदाभिलापयोग्यनिर्विकारत्वावस्थं मनः, ज्ञान-कर्मेन्द्रियाणि दश च अजायन्त॥

138 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सराः (?) 371

दिवस-निशारूपाण्यहोरात्राणि, पञ्चदशाहोरात्रात्मकाः पक्षापरपर्यायाः अर्धमासाः, त्रिंशदहोरात्रात्मकाः पक्षद्वयाभिधाः मासाः, तादृशमासद्वयात्मका ऋतवः, तादृशर्तुषट्करूपाः द्वादशमासपरिमिताः वर्षापरपर्यायाः संवत्सराश्चेत्येवं कालावयवतया लोकसिद्धाः अर्थाः ये सन्ति ; त एवैते श्रुतिषु लोकपदव्यपदेश्याः भोगभूमयो भवन्ति॥

139 'एतं देवयानं पन्थानमापद्य' (कौषी.उ. 1-21) 142

(प्र. 'स एतं' इत्यत्र)

140 I 'एतमेव तदनमनग्नं कुरुते' (बृ.उ. 8-1-14) 120

II ' ,, ,, ' ,, 121

(प्र. 'आपो वास इति' इत्यत्र)

141 I 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.उ. 6-4-22) 232

II ,, ,, ,, 245

सर्वनियन्तृत्वादिना सर्वात्मभूतं सर्वपालकं चैतमेव परमात्मानं साक्षाच्चिकीर्षवः, तदितरसर्वैषणापरित्यागपूर्वकं सन्यस्यन्ति॥

142 I 'एतं सेतुं तीर्त्वा अन्धः सन् अनन्धो भवति' (छां. उ. 8-4-2) 70

143 'एतं सेतुं तीर्त्वा' (छां·उ· 8-4-2) 75

एतं संसारपरपारप्राप्त्युपायभूतं असाङ्कर्येण सर्वलोकमर्यादारक्षकं च अत एव 'सेतु'पदव्यपदेश्यं सर्वविधारकं परमात्मानं प्राप्य, उपासकावस्थायाम् अन्धदेहवानपि जीवः, आन्ध्यादिदोषरहितदिव्यदेहवान् सञ्जायते॥

क्रमसंख्या  पृ. सं.

144 I 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. 5–8–8) 149

II 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. 5–8–8) 225

III 'एतस्य वा अक्षरस्य प्रशासने ! गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. 5–8–8) 419

145 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः' (बृ.उ. 5–8–8) 225

हे गार्गि ! 'अस्थूलमनणु' इत्यादिना, यत् अव्याकृतस्याकाशस्याप्याधारभूतं क्षरणरहितत्वादक्षरं ब्रह्म उक्तं, तत्कर्तृके अप्रतिहते शासने निरुपाधिके सर्वव्यवस्थाहेतुभूते आज्ञाजाते सत्येव, सर्वप्रकाशहेतुतया जगन्नेत्रभूतौ दिवाकर-निशाकरावुभौ, द्यावा-वृथिव्याख्यावुभौ लोकावपि च अप्रच्युतस्वीयस्वरूपस्वभावौ प्रतिष्ठितस्वस्वस्थानौ मर्यादा-नियन्त्रितौ जगद्धारकौ सन्तौ चिरं स्थिरं च लब्धसत्ताकौ वर्तेते ॥

146 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छां.उ. 8–9–3) 389

हे मघवन् ! पूर्वं भवते उपदिष्टमेवाऽऽत्मानं भवदुक्तदोषरहितं यथा भवति तथा पूर्वोक्तार्थाविरुद्धमेव पुनरपि सम्यग्विशदीकरवाणि तत्त्वबुभुत्सवे तुभ्यम् , शृणु ॥

147 'एतद्वै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्ति ; अस्थूलमनणु, अह्रस्वमदीर्घम् , अलोहितमस्नेहम् , अच्छायमतमः अवाय्वनाकाशम् , असङ्गम् अगन्धम् अचक्षुष्कमश्रोत्रमवागमनः, अतेजस्कमप्राणमसुखम् अमात्रम्, अनन्तरमबाह्यम् न तदश्नाति किञ्चन'। (बृ.उ. 5–8–7) 149

हे गार्गि ! तदेतदेव सर्ववेदान्तवेद्यम् अक्षराख्यं ब्रह्माऽभिमुखीकृत्य, ब्रह्मविदः स्पष्टमविप्रतिपन्नं च कथयन्ति ;—यद्ब्रह्म स्थूलत्वाणुत्वरूपपरिच्छिन्नपरिमाणवन्न भवति, ह्रस्वत्वदीर्घत्वाख्येयत्तावदपि

न, लौहित्यादिरूपतत्तद्द्रव्यप्रतिनियतरूपवदपि न, स्नेहादिप्रतिनियत-गुणवदपि न, (निरवयवत्वात्) छायातमो विदूरम्, कर्मकृतप्राणादि-सम्बन्धरहितम्, सरन्ध्रत्वादिकृतावकाशरहितम्, बन्धकारिसङ्गशून्यम्, रस-गन्धादिसम्बन्धायत्तभौतिकत्वरहितम्, चक्षुःश्रोत्रवागादिज्ञान-कर्मेन्द्रियानधीनस्वाभाविकज्ञानसम्पन्नम्, मनोऽनधीनज्ञानव्याप्तिमत्, ऊष्म-प्राणाद्यनधीनस्वायत्तस्वसत्तावत्, दुःखसहचरितसुखानाश्रयः, अत एव परिच्छिद्य ज्ञातुमनर्हम्, (इन्द्रियमर्यादातिलङ्घिस्वरूप-स्वभावं वा), स्वाव्याप्तप्रदेशाभाववत्। एतदक्षराख्यं परं ब्रह्म अवाप्त-समस्तकामतया, जीववत् अशनाया-पिपासादिरहितत्वात् न वैषयिक-भोगावलम्बितृप्तिमत् ॥

148 **'एतस्यैवाऽक्षरस्योपव्याख्यानं भवति'** (छां.उ. 1-1-10) 104

(' इति खलु ' इति एतद्वाक्यारम्भे)। ' रसानां रसतमः ' इत्युक्तं रसतमत्वं, ' आपयिता ह वै कामानां भवति ' इत्युक्तं कामितार्थ-प्रापकत्वं, 'समर्धयिता कामानाम्' इत्युक्ता समृद्धिः, इतीदृशमुपासन-फलम्, उपासनं, विभूतिः—इत्युक्तं सर्वमपि, ओङ्काराख्याक्षरविषयक-मेव भवति ॥

149 **'एतांश्च सत्यान् कामान्'** (छां.उ. 8-1-6) 175

(ये तावत् निरुपाधिकैरपहतपाप्मत्वादिगुणैर्जुष्टं परमात्मानं), तद्गतांश्चैतान् नित्यान् मुमुक्षुभिर्मुक्तैश्च काम्यमानान् कल्याणगुणानुपास्य (निष्पन्नमोक्षोपायाः देहावसाने परं स्थानं व्रजन्ति ; ते भगवद्विभूति-भूतेषु सर्वेषु लोकेषु अकर्मवश्याः सन्तो यथाकामं चरित्वा पूर्णकामा भवन्ति) ॥

150 **[(' एता ह वै देवताः ')** (कौषी.उ. 2-14)]

**' अहं श्रेयसि व्यूदिरे'** (छां.उ. 5-1-6) 109

['अथ ह प्राणा अहं श्रेयसि व्यूदिरे ' इति छान्दोग्ये, 'एता ह वै देवता अहं श्रेयसे विवदमानाः ' इति कौषीतक्यां च दृश्यते]।

वागादिकर्मज्ञानेन्द्रियरूपाः प्राणाः (तत्तदभिमानिदेवताः) मिथः स्वस्वोत्कर्षख्यापनं निमित्ततयाऽवलम्ब्य, 'अहं सर्वेभ्यः श्रेष्ठः, अहमेव सर्वेभ्यः श्रेष्ठः' इति विप्रतिपत्तिजनकं वादं कृतवन्तः। (अहं श्रेयसे—अहमर्थस्य प्रत्यगात्मनः उत्कर्षख्यापनपर्यवसानाय—इति वा अर्थः)।

151 **'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति'** (बृ.उ. 4–4–12) 412

'विज्ञानघन एव' इति, अस्य वाक्यस्यादिमो भागः।

महद्भूतशब्दितः परमात्मा, विज्ञानघनशब्दवाच्यजीवशरीरक एव सन्, (जीवशरीरकतया सर्वाणि भूतान्यनुप्रविश्य) सर्वभूतगतोत्पत्तिविनाशानुविधाय्युत्पत्तिविनाशवानिव लक्ष्यमाणो भवति(अनात्मदृशाम्)॥

152 **'एतेषां मे देहि'** (छां.उ. 1–10–3) 252

(क्षुत्क्षामः उषस्तिश्चाक्रायणः, इभ्यमुपसृत्य, कुल्माषान् खादन्तं तं दृष्ट्वा स्वक्षुधो निवारणाय) 'त्वया भक्ष्यमाणेषु मध्ये मह्यमपि किंचित् कुल्माषभागं देहि' (इति याचितवान्)॥

153 **'एवं क्रतुर्हाऽमुं लोकं प्रेत्याऽभिसम्भविताऽस्मि'** (अग्निर. 1–10–6) 193

पूर्वोक्तसत्यत्वविशिष्टब्रह्मोपासकः खलु! एतस्मिन् शरीरे अवस्थानदशायाम्, यादृशमुपासनं कृतवान्, उपास्यतावच्छेदकतादृशगुणविशिष्टं परमात्मानं प्राप्य, तत्सायुज्यभाग्भवति॥

154 **'एवं त्वयि नाऽन्यथेतोऽस्ति न कर्म लिप्यते नरे'** (ईशो. 2) 230

लब्धविद्याधिकारे त्वयि विषये गुरुणा ज्ञापयितव्योऽर्थः एवं वर्तते– 'कर्मप्राप्ते सम्पूर्णे आयुषि (जीवितकालं यावत्) शास्त्रोक्तनित्यनैमित्तिककर्माचरणवतैव भवता वर्तितव्यम्। नान्यः प्रकार आश्रयणीयोऽस्ति'—इति॥ विहितानामनुष्ठाने निषिद्धकाम्ययोर्वर्जने च जागरूके त्वयि फलसङ्गकर्तृत्वादित्यागेन कर्मसु प्रवृत्ते, भगवदाज्ञानुवर्तनैकलक्ष्यत्वादिभिः स्वदीयैर्भावैः, कर्मलेपो नैव भविता इति च; (येन कर्मणा बन्धकत्वशङ्का नोदियात्)॥

क्रमसंख्या पृ. सं.

उक्ता मनश्चिदादयः सर्वेऽपि विद्योद्देशेन चिता एव; न तु क्रियोद्देशेन चिताः। एतांश्च मनश्चिदादीन् एवं चितान्, एतत्स्वरूपयाथात्म्यानुसन्धानवते पुरुषाय, जाग्रत्स्वप्नादि यादृशयादृशावस्थामाश्रित्य वर्तमानायाऽपि, सर्वाण्यपि भूतानि सर्वेष्वपि कालेषु अग्निचयनसिद्धिमेव कुर्वाणानि भवन्ति। सर्वभूतानां व्यापारोऽपि ईदृशस्य पुरुषस्य अग्निचयनात्मनैव पर्यवसितो भवति। एवं विदः पुरुषस्य विद्यारूपप्रयोजनाप्तये एव मनश्चिदादयोऽग्नयः चिता भवन्ति ॥

159 **'एवंविद्ध वै ब्रह्मा, यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति'** (छां.उ. 4–17–10) 213

प्रजापतिना कृतं पृथिव्यन्तरिक्षद्युसंज्ञेभ्यो लोकेभ्यः अग्निवाय्वादित्यरूपरसं सारभूतार्थानामुद्धारं, तेभ्यः ऋग्यजुः सामरूपाणां सारभूतार्थानामुद्धारं, तेभ्यश्च 'भूर्भुवः स्वः' स्वरूपसाराणामुद्धारं च याथार्थ्येन ज्ञातवान् ब्रह्माभिधः ऋत्विक्, स्वस्याऽध्यक्ष्ये अनुष्ठीयमानं यज्ञं भ्रंशरहितं करोति। यजमानं—यज्ञफलभोक्तारं च अप्रत्यवायिनं साद्गुण्यवद्यज्ञकारिणमापादयति। तथैव यज्ञनिर्वाहार्थं प्रवृत्तान् ऋत्विजश्च अविगुणकर्मानुष्ठातॄन् करोति ॥

160 **'एवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते'** (छां.उ. 5–24–3) 309
(प. 'तद्यथेषीक' इत्यत्र)

161 **'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः'** (छां.उ. 8–1–5) 168

अयमेव च दहराकाशशब्दितः परमात्मा, अश्लिष्टपापत्व-जरामरणवर्जितत्व-शोकरहितत्व-अशनायापिपासाविदूरत्व-उभयविभूतिनायकत्व-अप्रतिहतसङ्कल्पत्वाख्यसमस्तकल्याणगुणविशिष्टः ॥

162 I **'एष तु वा अतिवदति यः सत्येनाऽतिवदति'** (छां.उ. 7–16–1) 199
II ,, ,, ,, 201

यः पुरुषः सततैकरूपतया विकारास्पृष्टम्, अत एव सत्यपदाभिधेयं

क्रमसंख्या पृ. सं.

172 ‘ओषधीर्लोमानि वनस्पतीन् केशाः’ (बृ.उ. 5-2-13) 7

(‘यत्राऽस्य मृतस्य पुरुषस्याऽग्निं वागप्येति’ इति एतद्वाक्यारम्भः)। पुरुषे म्रियमाणे सति तदीयो देहः तत्सम्बन्धीनीन्द्रियाणि च निर्व्यापारतां प्राप्नुवन्ति । तेषां निर्व्यापारत्वावस्थाप्राप्तिश्च, तत्तदभिमानिदेवताभूतानामग्न्यादीनां व्यापारयितृत्वाभावप्रयुक्ता । एवंभावे प्रवर्तमाने, देहस्य लोमाभिमानिनी देवता, लोमाभिमानितां विहाय ओषध्याभिमानितामात्रेणावतिष्ठते । तथा केशाभिमानिनी च देवता, तदभिमानितां विसृज्य वनस्पत्यभिमानित्वेनावस्थिता भवति ।।

173 ‘औदुम्बर्यः कुशाः’ ( ? ) 138

स्तोत्रीयासु ऋक्षु गीयमानासु (ऋचां) गणनार्थं, उद्गात्राख्यऋत्विक्क्लृप्ताः शलाकाः, ‘कुशाः’ इत्युच्यन्ते । ताश्च शलाकाः उदुम्बरवृक्षप्रकृतिकाः कार्याः ; न तु वृक्षसामान्यप्रकृतिकाः।।

174 I ‘कर्मणैव हि संसिद्धिमास्थिता जनकादयः’ (भ.गी. 3-20) 221

II ‘ ,, ,, ’ ( ,, ) 230

ज्ञानिनामग्रेसराः जनकादयो राजर्षयः, (स्वयं ज्ञानयोगशक्ताः सन्तोऽपि) अनुवृत्तकर्मयोगा एव भूत्वा, आत्मलाभं प्राप्तवन्त इति इतिहासादिभिरवगताः । न तु ज्ञानयोगानुष्ठानाय स्वीकृतजन्मान्तराः इति शुश्रुमः ।

175 ‘कस्मिन्नुत्क्रान्त अहमुत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि’ (प्रश्न.उ. 6-9)

शरीरान्तःस्थः षोडशानां कलानां भोक्ता जीवसंज्ञः पुरुषः, एवमभिसंहितवान्—‘मदुत्क्रान्तिसहभूतोत्क्रान्तिमान् मत्प्रतिष्ठासहभावि प्रतिष्ठावांश्च को वा स्यात्—इति ।।

176 ‘कामं कामं पुरुषो निर्मिमाणः’ (कठ.उ. 5-8) 38

क्रमसंख्या | पृ. सं.

वनस्पतिप्रकृतिकाः (दारुमय्यः) शलाकाः) स्थ। तादृशाः यूयम् (अस्मिन् देवप्रीणनपरे कर्मणि प्रवृत्तं) मां रक्षत ॥

182 **'को ह्येवाऽन्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्'** (तै.उ.आव. 7–1) 158

आकाशवत्सर्वत्र व्याप्तस्वरूपः अपरिच्छिन्नसुखैकतानः परमात्मा यदि न स्यात्! तदा जगति यः कोऽपि चेतनः, स्वयं निःश्वासोच्छ्वासयोरपि करणे नैव शक्तो भवेत् ॥

183 **'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे'** (मुण्ड.उ. 2–2–8) 308

शुभाश्रयनिरन्तरध्यानसौष्ठवेन तत्पौनःपुन्येन च परमात्मनि विशदतमप्रत्यक्षविषयतामापादिते सति, आत्मनि अनादिकालतः सन्तन्यमानानि सर्वाण्यपि मोक्षविरोधिभूतानि कर्माणि निरवशेषं क्षयं यान्ति ॥

184 **'गुण-मुख्य व्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः'** (पू.मी.सू. 3–3–9) 152

कर्मसु विनियोज्यस्य मन्त्रस्य तन्मन्त्रविनियोगवतः कर्मणश्च, अन्यत्राऽन्यत्र शाखाविशेषे विहितत्वे दृश्यमाने, मन्त्रविधायकवेदसम्बन्धिनः कर्मविधायकवेदसम्बन्धिनश्च मिथोविरुद्धस्य विविधस्य स्वरस्य उच्चैष्ट्वोपांशुत्वरूपस्य एकत्र प्राप्तौ सत्यां, अङ्ग-प्रधानस्वरयोर्विरोधे आपतिते गुणभूतस्य (अङ्गस्य) प्रधानशेषतैकस्वाभाव्यात् मुख्यद्वारक एव स्वरस्य वेदसम्बन्धः न तु अमुख्यद्वारकः—इति (भा.द.) ॥

185 I **'गोदोहनेन पशुकामस्य प्रणयेत्'** (आप.श्रौ.सू. 1–5–16–2) 209

II ,, ,, ,, 210

श्रौते कर्मणि अपां प्रणयनं हि 'चमसेनाऽपः प्रणयेत्' इति चमसाख्येन पात्रेण कर्तव्यतया विहितम्। यदि यजमानः स्वस्य पशुसम्पत्तिमभीप्सति ; तर्हि तदीये दर्शपूर्णमासप्रयोगे गोदोहनाख्येन पात्रेण साधनभूतेन अपां प्रणयनं कुर्यात् ; न चमसेन। (प्रणयनाङ्गभूतेन गोदोहनपात्रेण पशु भावयेत्) इति विध्यर्थः ॥

क्रमसंख्या | पृ. सं.

186 **'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन'** (भ.गी. 7–16) 278

'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' इति अस्योत्तरार्धम्। हे भरतश्रेष्ठ! अर्जुन! आर्त-जिज्ञासु-अर्थार्थि-ज्ञानिभेदेन चतुष्प्रकारा अपि चेतनाः पुण्यकर्माणः, स्वाभीसितसिद्धये मामेव शरणतया उपगम्य मामुपासते। सुकृतिषु चातुर्विध्यं सुकृततारतम्यायत्तम्॥ (आर्तः—प्रतिष्ठाया भ्रंशं प्राप्तः पुनः प्रतिष्ठाकामो जनः। भ्रष्टैश्वर्यः सन् ऐश्वर्यकाम इत्यर्थः। जिज्ञासुः—ज्ञानैकाकारप्रकृतिवियुक्तस्वात्मस्वरूपलाभकामः। अर्थार्थी—अप्राप्तैश्वर्यः सन् ऐश्वर्यकामो जनः। ज्ञानी—भगवच्छेषत्वैकरसप्रत्यगात्मस्वरूपवित्-भगवन्तमेव प्राप्यं परमपुरुषार्थभूतं मन्वानः)॥

187 I **'चतुष्पाद् ब्रह्म'** (छां.उ. 3–18–2) 75

II ,, ,, 77

('मनो ब्रह्मेत्युपासीत' इत्यारभ्य, 'तदेतच्चतुष्पाद् ब्रह्म'; वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः 'इत्यध्यात्मम्' इति छान्दोग्ये)। ब्रह्मदृष्ट्या उपास्यत्वेनोपदिष्टं मन आख्यं वस्तु, वाक्-प्राण-चक्षु-श्रोत्राख्यपादचतुष्टयवत्। (वागादीनां चतुर्णामपि मनोनियाम्यत्वात् मनःपादत्वाध्यासः उपासनाङ्गत्वेनोक्तः)॥

188 **'जक्षत् क्रीडन् रममाणः'** (छां.उ. 8–12–3) 397

(प्र. 'स उत्तमः' इत्यत्र)

189 **'जनकस्य कुले जाता देवमायेव निर्मिता'** (वा.रा.बा. 1–27) 38

अस्यार्धस्य, 'रामस्य दयिता भार्या' इति पूर्वार्धगतेनाऽन्वयः। भगवतो रामचन्द्रस्य मनोनन्दिनी सीतादेवी निमेःपुत्रस्य जनकनाम्नो राज्ञोऽन्ववाये आविर्भूता। सा जनकस्य यज्ञविशेषानुष्ठानवेलायां देवयजनलाङ्गलपद्धतौ लब्धा। तस्या आविर्भावादीनामचिन्त्याश्चर्यरूपत्वात् मायारूपत्वेनाभिलप्या सती, भगवत्कार्यनिर्वाहाकांक्षिभिर्देवैः आविर्भाविता॥

क्रमसंख्या | पृ. सं.

190 ‘जप्येनाऽपि च संसिध्येद्ब्राह्मणो नाऽत्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥’ (म.स्मृ. 2–87) 259

ब्राह्मणः, विधियज्ञ-पाकयज्ञाख्यानि वेदविधिविहितानि कर्माणि कर्तुं शक्नोतु वा मा वा। साविन्याख्यमहामन्त्रजपरूपेण यज्ञेनैव मोक्षावाप्त्यनुगुणां सिद्धिं लभते ; नैवाऽत्र संशयः । ब्राह्मणः खलु सर्वसुहृत् सन् यज्ञियहिंसायामप्यप्रवृत्तस्वभावो भवेत् । तस्य यज्ञादेः सर्वस्याऽपि स्थाने अनुष्ठीयमानो जप एव सर्वसिद्धिलम्भको भवति ॥

191 ‘जलाधारेष्विवांऽशुमान्’
(प्र. ‘आकाशमेकं’ इत्यत्र)

192 ‘ज्ञात्वा देवं मुच्यते सर्वपाशैः’ (श्वे.उ. 1–8) 291

स्वप्रकाशज्ञानस्वरूपं देदीप्यमानदिव्यमङ्गलविग्रहयुक्तं परंब्रह्म, निरन्तरध्यानेन साक्षात्कृत्य, संसारबन्धापादकैः अविद्याकामकर्मभिः विमुक्तो भवति ॥

193 ‘ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः’
(मुण्ड.उ. 3–1–8) 67

चक्षुर्वागादिभिः ज्ञान-कर्मेन्द्रियैः, तपोयागादिभिश्च केवलैः कर्मभिः-गृह्यमाणस्वरूपं परमात्मानं, उपनिषदुक्तेनोपासनविधिना आराध्य, ज्ञानोदयप्रधानहेतुभूतस्य ध्यानप्रीतस्य परमात्मनः प्रसादेन विशुद्धान्तःकरणः सन्, प्रत्यक्षतापन्नया ध्यानधारया विषयीकरोति ॥

194 ‘ज्यायान् पृथिव्याः’ (छा.उ. 3–.4–3) 128

(सर्वजगदुत्पत्तिस्थितिलयहेतुत्वकृतसार्वात्म्यवान् परमात्मा, असद्हृदयाख्याल्पपरिमाणदेशाधिष्ठितोऽपि अधिष्ठानभूतदेशपरिमाणानियन्त्रितस्वपरिमाणतया) अस्याः महत्तरायाः पृथिव्या अपि अधिकपरिमाण इति हेतोः, अपरिच्छिन्नपरिमाण एव ॥

195 ‘त इह व्याघ्रो वा सिंहो वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति’ (छां.उ. 6–10–2) 46

ये जीवाः सुषुप्त्याख्ये दशाविशेषे, सति (सद्रूपब्रह्मणि) सम्पन्नाः, ते सुषुप्तेरुत्थाय जाग्रद्दशां प्राप्ताः सन्तः सुषुप्तेः प्राक् व्याघ्र-सिंह-वृक-वराहादियादृशदेहवन्तः आसन्, तादृशतादृशे देहे अहन्त्वाभिमानिन एव जीवाः, (न अन्ये) पूर्ववासनावासितान्तःकरणा एव उत्थिता भवन्ति ॥ न सुषुप्तो जीवः मुक्तः ॥

196 **'त एते सर्व एव समाः सर्वेऽनन्ताः'** (बृ.उ. 3-5-13)

उक्ताः वाङ्मनःप्राणाः सर्वेऽपि, मशकमातङ्गादिषु तत्तच्छरीर-परिमाणानुगुणसङ्कोचविकासवत्त्वेऽपि, तत्तच्छरीरसमपरिमाणस्वरूप-साम्यवन्तः, आकल्पस्थायित्वरूपानन्त्यवन्तश्च ।

197 **'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते । तत् चक्रवदुभयोर्लोकयोः सुख एव वर्तते'** (आप.ध.सू. 2-1-2-3)

(चातुर्वर्ण्ये प्रविष्टानां सर्वेषामपि, इह स्वस्ववर्णाश्रमधर्माणां शास्त्रानुरोध्यविगुणानुष्ठानेन, पारत्रिकं सुखमक्षय्यं लभ्यते) तादृशसुखानु-भवानन्तरं च पुनर्मर्त्यलोके जन्मसम्पत्तौ सत्यां, उपभुक्तकर्मावशिष्टेन अन्येन कर्मणा (शिष्टनानाविधफलोपभोगाय) ब्राह्मण्यादिरूपोत्कृष्टजाति-उत्कृष्टकुल-तेजोविशेष-बलातिशयादियुक्तदेहप्राप्तिपूर्वकं, विरोधिनिर-सनक्षमसामर्थ्यविशेषविशिष्टार्थविशिष्टवागादिग्रहणधारणपाटवशालिमति लाभ-विशिष्टभोगोपकरणभूतधनकनकादिवस्तुवाहनगृहारामक्षेत्रादिपूर्णत्वैः सह शास्त्रोदितसद्धर्मानुष्ठानसम्पत्तिरपि लब्धा भवति । ततश्च पुनः पुनः सान्तत्येन ऐहिकामुष्मिकयोः सुखमयेनैव चक्रभ्रमणसदृशेन परिवर्तनेन युक्तः ईदृशश्चेतनः दुःखानुवृत्तिविदूरतया शोभनजीवनः सन् श्लाघ्य एव भवति ॥

198 **'ततस्तु तं पश्यति(ते) निष्कलं ध्यायमानः'** (मुण्ड.उ. 3-1-8) 290

नैरन्तर्येण शुभाश्रयध्यानशीलः पुरुषः, ध्यानपूर्त्यनन्तरं, स्वेन ध्यान-गोचरीकृतं निरवयवं तत एव सर्वत्र पूर्णं परमात्मानं साक्षात्करोति ॥

| क्रमसंख्या | | पृ. सं. |
|---|---|---|
| 199 I | 'ततो यदुत्तरतरं तद्रूपमनामयम्। य एतद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवाऽपियन्ति ॥' (श्वे.उ. 3–10) | 81 |
| II | 'ततो यदुत्तरतरं तद्रूपमनामयम्' ,, | 76 |
| III | 'ततो यदुत्तरतरं' ,, | 80 |
| IV | 'ततो यदुत्तरतरं' ,, | 79 |

पुरुषशब्दाभिलप्यं, उक्तं ब्रह्मैव, कर्मायत्तरूप तदायत्तामयादि-विकाररहितत्वात्, यतः सर्वापेक्षयोत्कृष्टं, तत एव हेतोः, इदं पुरुष-शब्दितं ब्रह्म ये नैरन्तर्येणोपासते ; ततः साक्षात्कुर्वन्ति च ; ते अमृता-परपर्यायमोक्षभागिनो भवन्ति । ये च अतादृशाः भगवदुपासन-प्रावण्यरहिताः, ते दुःखप्राचुर्यवत्तया दुःखशब्दितं जन्म-जरा-मरणा-ख्यदुःखबहुलं संसारचक्रमेव पुनः पुनराविशन्ति ; न शोकादुत्तीर्णा भवन्ति ॥

| | | |
|---|---|---|
| 200 | 'तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयति' (छां.उ. 4–15–5, 6) | 368 |
| | ,, ,, ,, | 371 |
| | ,, ,, ,, | 372 |
| | ,, ,, ,, | 375 |
| | ,, ,, ,, | 377 |

(प्र. 'अथ यदु' इत्यत्र)

| | | |
|---|---|---|
| 201 | 'तत्राऽपि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (तै.ना.उ. 10–23) | 98 |

देहमध्यावस्थितस्य पुण्डरीकाकारस्य अत्यल्पपरिमाणस्य दहराख्यस्य हृदयदेशस्य मध्येऽपि, परमसूक्ष्मत्वाद्दहरशब्दाभिधेयम्, आकाशवद-परिच्छिन्नस्वरूपत्वादाकाशशब्दाभिलप्यं च यत् परब्रह्माभिधानं शोकाद्य-तीतं वस्त्वस्ति तत्, तदन्तर्वर्ति च यत् तदीयं मङ्गलगुणजातं वर्तते (संसारोत्तारकं) तदेतद्वयं धर्म-धर्म्युभयं निरन्तरं ध्यातव्यम् ॥

क्रमसंख्या प्र. सं.

202 ‘तत्त्वं नारायणः परः’ (तै.ना.उ. 11–4) 179

श्रुत्यादिषु उत्तारकेषु शास्त्रेषु ‘नारायण’ शब्देन विदितोऽर्थ एव सर्वस्मात्परः, निरवधिकोत्कर्षातिशयकाष्ठां गतः। स एव काल-देशादिभिर्यैः कैरपि उपाधिभिः अविपर्यस्तस्वरूपादिमत्तया सर्वो-पाध्यतीतया ‘तत्त्व’ शब्दाभिलप्यः ॥

203 I ‘तत्त्वमसि’ (छां.उ. 6–16–3) 162

II ” ” 394

अचिद्विशिष्टजीवशरीरकं ब्रह्म, सर्वज्ञ-सत्यसङ्कल्प-जगत्कारणभूतपर-ब्रह्माभिन्नम्। (इदं सामन्यतः, विशेषतस्तु) हे श्वेतकेतो! त्वच्छरीरकः परमात्मा, सर्वज्ञत्वादिविशिष्टपरमात्माभिन्नः। [त्वं सर्वशरीरक-परमात्मशरीरतया तदभिन्नोऽसि]

204 I ‘तत्सुकृत-दुष्कृते धूनुते’ तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्’ (कौषी.उ. 1–37) 135

II ‘तत्सुकृत-दुष्कृते धूनुते’ (कौषी.उ. 1–37) 142

III ‘ ” ’ ” 312

मोक्ष्यमाणस्य अर्चिरादौ प्रयास्यतः पुरुषस्य पुण्यापुण्ये, तदीयाः पुत्रादयो बन्धवः, दायरूपतया परिगृह्णन्ति। तत्र सुहृदो ज्ञातयः पुण्यम्, दुर्हृदो ज्ञातयः अपुण्यं स्वीकुर्वते ॥ अतः स चेतनः निरस्तपुण्यपापः, निर्धूतकल्मषो भवति ॥

205 ‘तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते ॥’
(वि. ध. 104–57) 391

(रत्न-तदीयप्रभयोः जलाशय-तत्स्थाकाशयोश्च साम्यस्य जीवात्म-तद्गुणेषु चिन्तनतः), जीवात्मनः स्वभावसिद्धा एव ज्ञानादिगुणाः, ज्ञानाभिव्यक्तिविरोधिभूतानां हेयगुणानां दूरीकरणेन प्राकाश्यं नीता भवन्ति; न उत्पाद्यन्ते। यतस्ते गुणाः तस्य नित्यसिद्धा एव; न आगन्तुका इति सिध्यति ॥

प्रस्तुतं परंब्रह्मैव, अनन्यतन्त्रतया स्वपरप्रकाशकम्, तदेव च निरुपाधिकब्रह्मत्वामृतत्वाभ्यां नित्ययोगि ॥ तस्मिन्नेव च परे ब्रह्मणि सर्वे लोकाः (रथनाभौ अराख्याः काष्ठा इव) आश्रित्यावतिष्ठन्ते । तदतिक्रम्य यः कोऽपि नैव अवस्थातुं शक्नोति ॥

210 'तं देवा भक्षयन्ति' (छां.उ. 5–10–4) 10

इष्टापूर्तादिकारिणं स्वर्गोपभोग्यशरीरलाभवन्तं चेतनं, स्वर्गस्था देवाः, स्वभोगायोपयुञ्जते ॥

211 I 'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' (छां.उ. 6–2–3) 225

II ,, ,, ,, 225

पूर्वप्रकृतं सच्छब्दाभिधेयं परं ब्रह्म, 'विचित्रानन्तचिन्मिश्रव्यष्टि-जगद्रूपेण अहमेव बहु भवेयम् , तदर्थं च तेजोजलपृथिव्यादिसमष्टिरूपेण प्रकर्षेण प्राप्ताविर्भावो भवेयम्' इति सङ्कल्पमकरोत् । ततश्च तदेव तेजोरूपं भूतं ससर्ज ॥

212 I 'तद्ध देवा उद्गीथमाजह्रुः ; अनेनैनानभिहष्यामः' (छां.उ. 1–2–1) 101

II ,, ,, ,, 101

III ,, 107

प्रजापतेः सुताः देवा असुराश्च यदा मिथो युयुधिरे ; तदा देवाः 'उपासितेनोद्गीथावयवेनोङ्कारेण असुरान्विजेष्यामः' इति विचिन्त्य, उद्गीथावयवं (प्राणम्) प्रणवम् असुरपराजयसाधनतया परिगृहीतवन्तः ॥

213 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च'

(बृ.उ. 3–4–10) 68

उपास्यभूतं इदं परं ब्रह्म उपासीनः वामदेवाभिधः ऋषिः, स्वात्मनः आत्मभूतः परमात्मैव मया अहंपदेन व्यवहार्यः ।

स एव-मदात्मभूत एव मन्वादीनां सूर्यादीनां चेतनानां च आत्मभूत इति, सर्वत्रात्मैक्यं साक्षात्कुर्वन् स्वस्मिन् मनु-सूर्याद्यभेदम् अनुसंहितवान्, ' अहमेव मनुः अहमेव सूर्यः ' इति ॥

214 I 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छां.उ. 5-10-1) 147

II ,, ,, ,, 381

III ,, ,, 22

प्रक्रान्तं च जीवात्मनः स्वरूपं ये उपासितारः पञ्चाग्निविद्योक्तप्रकारेण जानन्ति; येऽपि च लोकपुत्रवित्तेषणाः वर्जयित्वा, अरण्यवासिनो भूत्वा, श्रद्धां चावलम्ब्य, तपःशब्दाभिलप्यं परं ब्रह्मोपासीना भवन्ति, त इमे द्वयेऽप्युपासकाः (परमात्मशरीरभूतस्वात्मोपासकाः, स्वात्मशरीरकपरमात्मोपासकाश्च) भगवन्मार्गप्रापणे आदिममातिवाहिकम् अर्चिःपदाभिधेयं देवताविशेषमेव स्वप्राप्यपदप्रापकतया आश्रयन्ति (अर्चिरादिका गतिः उभयेषामपि समैव ॥

215 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा। अथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' (छां.उ. 5-10-7) 13

जीवेषु मध्ये कर्मफलभोगं परलोके समाप्य, तस्माल्लोकादिहाऽभ्यागन्तारो भवन्ति; (अभ्याशः—अभि आ अश्) ते खलु जीवाः यदा भुक्तशिष्टपरिपक्वसुकृतशालिनः, तदा ते स्वीयसुकृतानुगुणां सुकृताख्यपुण्यकर्माचरणयोग्यां ब्रह्मक्षत्रवैश्याख्यत्रैवर्णिकान्यतमदेहसम्पत्तिं लभन्ते। ये तु पुनः भुक्तशिष्टकुत्सितकर्माणः तादृशाः जीवाः; स्वीयनिकृष्टकर्मानुगुणां पुनःपुनर्निकृष्टकर्माचरणापादिकां श्व सूकरचण्डालादि योनिसम्बन्धिनीं देहसम्पत्तिं लभन्ते ॥

क्रमसंख्या | पृ. सं.

216 I ‘तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति’ (छां.उ. 8–1–6) 168

II ‘तद्य „ „’ „ 170

III ‘तद्य „ „’ (कामान्) 175

(‘अथ य इहात्मान’मित्यादिः उपनिषदि दृश्यते’।) तस्मात्, ये जीवाः इह लोके लब्धदेहाः, परं ब्रह्म सर्वात्मभूतं तद्गतांश्च अपहतपाप्मत्वादीन् मङ्गलगुणान् यथाविधि सम्यगुपास्य इमं लोकं त्यक्त्वा परं लोकं गच्छन्ति, तादृशानां जीवानां ब्रह्मविभूतिभूतसर्वलोकस्थितभोगानुभवः अकर्मवश्यस्वतन्त्रावस्थानं च सिध्यति ॥

217 I ‘तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्’ 124

II „ „ „ 163

व्योम्नि विद्योतमाने सूर्यमण्डले, ‘य एषोऽन्तरादित्ये हिरण्मयः पुरुषः’ इति, पुरुषस्य दक्षिणे नेत्रमण्डले, ‘य एषोऽन्तरक्षिणि पुरुषो दृश्यते’ इति च श्रुत्यवगतः आदित्याख्यः पुरुषः, अक्षिस्थपुरुषश्चेति यदस्ति, तत् निर्विकारत्वात् सत्यपदाभिधेयम् ॥

218 ‘तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते’ (छां.उ. 4–14–3) 307

यथा पद्मपत्रे पतिताः सलिलबिन्दवः नैव लिप्ता भवन्ति, तथैव भगवदुपासके पुरुषे सुकृत-दुष्कृताख्यं मोक्षविरोधित्वात् पापपदाभिधेयं सर्वमपि कर्म नैव लिप्तं भवति। आत्मलाभान्तरायतापन्नं नैव भवति ॥

219 ‘तद्यत्रैतत् सुषुप्तः’ (छां.उ. 8–11–1) 46

‘यस्मिन् कालविशेषे स एष पुरुषः सम्प्राप्तस्वापः सन्, संहृतस्वीयकरणग्रामः बाह्यविषयसम्पर्कजनितकालुष्यरहितः स्वाप्नानुभवशून्यो वर्तते, एष एव आत्मत्वेन चिन्त्यः, एष एव च अमृतत्वाभयत्वब्रह्मत्वानामाश्रयभूतः’ इति प्रजापतिः इन्द्रविरोचनयोरुपादिशत् ॥

क्रमसंख्या प्र. सं.

220 ' तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चाऽमुं च ; एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च । अमुष्मादादित्यात् प्रतायन्ते, त आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते ; तेमुष्मिन्नादित्ये सृप्ताः ' (छां.उ 8-6-2) 352

तस्मात् , यथा दीर्घः (महाध्वा) पन्थाः, सम्बद्धं सन्निकृष्टं ग्रामं विप्रकृष्टं ग्रामान्तरं चेति ग्रामद्वयं सङ्गतो भवति ; अत एव स्थानद्वयं व्याप्य वर्तते; तथैव प्रसृताः सूर्यस्य मरीचयोऽपि, अस्मदाश्रितं इमं मर्त्यलोकं अप्राप्तं प्रेप्सितं आदित्याख्यं परं लोकं च सम्बध्य वर्तमानाः लोकद्वयव्याप्ता भवन्ति । विप्रकृष्टादादित्यलोकात् सर्वत्र प्राप्तप्रसरा भवन्ति। ते च सूर्यमरीचयः हृदयसम्बन्धिनीषु नाडीषु सम्बद्धाः । तथा ताभ्यो नाडीभ्यो निष्क्रम्य प्रसृताः विप्रकृष्टे आदित्येऽपि सम्बद्धस्वरूपाः ।।

221 ' तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते ' (छा.उ. 5-24-3) 308

तस्मात् वह्निस्पृष्टम् इषीकायाः तूलं स्पर्शमात्रेणैव दग्ध नाममात्रावशेषं भवेत् , न स्वरूपावस्थानम् ; तथैव ब्रह्म विदुषः ज्ञानिनः सर्वाण्यपि पापानि विद्यारूपेणाग्निना निरवशेषं दग्धा भवन्ति ।।

222 ' तद्योऽहं सोऽसौ योऽसौ सोऽहम् ' (ऐत.आर.उ. 2-2-4) 162

उपासको योऽहं प्रत्यगात्माऽस्मि, सोऽहम् मदुपास्यपरमात्मनः सकाशात् अभिन्न एव । तथा मदुपास्यः परमात्मा योऽस्ति, सः उपासकात् प्रत्यगात्मनो मत्तः सकाशात् अभिन्न एव ; उपास्योपासकभूतयोर्जीवपरयोः स्वरूपभेदेऽपि, शरीरात्मभावकृतस्याभेदस्य अनपायात् ; यथा ' अहं देवदत्तः ' इति देवदत्तपदाभिलप्यस्य देहस्य अहमर्थस्यात्मनश्च अभेदो व्यवह्रियते ।।

223 ' तद्रूपप्रत्यये चैका सन्ततिश्चाऽन्यनिःस्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा ।।' (वि.पु. 7-6-91) 492

शुभाश्रयभूतभगवद्दिव्यमङ्गलविग्रहविषयिणी विजातीयप्रत्ययान्तराव्यवहितसन्ततधारारूपा स्मृतिसन्ततिः ध्यानशब्देनोक्ता भवति ।

तच्च ध्यानं योगोपकारकैः यमनियमासनप्राणायामप्रत्याहारधारणाख्यैः षड्भिः लब्धस्वरूपं भवति। एतैरङ्गैः निष्पन्नम् अङ्गि ध्यानम्। तदेव सप्तमम्। अष्टमः समाधिस्तु ध्यानपर्यवसानभूमिः ॥

224 **'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्'** (ब्र.सू. 3-3-41) 209

225 **'तद्विद्वांसः श्रोत्रियाः अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति। एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते। तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्। एतमेव तदनमनग्नं कुरुते'**

(बृ.उ.मा.पा. 8-1-14) 120

उक्तया रीत्या अपां प्राणं प्रति वासस्स्थानीयतया आच्छादकत्वगुणयोगचिन्तनात्, वेदार्थचिन्तन-तदनुष्ठानपरायणाः शिष्टाः, भोजनात् प्राक्पश्चादपि च अद्भिराचमनं कुर्वन्ति। तेन च प्राणस्याच्छादनं भावयन्तः, तं प्राणमनग्नं कुर्वाणाः स्मो वयमिति जानन्ति। अतः लोके यः कोऽपि एतत्तत्त्ववेत्ता पुरुषः, प्राणस्यानग्नतायै भोजनं करिष्यन् कृत्वा च आचमनमवश्यं कुर्यात् ॥

226 **'तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य'** (प्रश्न.उ. 1-10) 260

(अस्य वाक्यस्य 'अथोत्तरेण' इति आदिमो भागः। 'आदित्यमभिजयन्ते' इति अन्तिमो भागः।) ये पुनः उक्तविलक्षणाः भोगवैमुख्यलक्षणेन तपसा, ग्राम्यसुखप्रवृत्तिवैमुख्यरूपेण ब्रह्मचर्येण, श्रौते मोक्षोपाये अप्रकम्प्यविश्वासाख्यया श्रद्धया च सहिताः, परमात्मशरीरभूतस्वात्मशुद्धस्वरूपविषयकोपासनरूपया विद्यया, सर्वात्मभूतं परमात्मानमुपास्य, तत एव च हेतोः उत्तरायणाख्येन अर्चिरादिवर्त्मना गताः, ब्रह्मप्राप्तिद्वारभूतम् आदित्याख्यं स्थानं प्राप्नुवन्ति ॥

227 **'तं पृथिव्यब्रवीत्'** (तै.सं. 5-5-2-4) 371

('प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीत्' इति तत्रत्यं वाक्यम्) प्रजापत्याख्यो देवताविशेषः पृथिव्यामाधारे अग्निं चेतुमैच्छत्। तदा तमुद्दिश्य पृथिव्यभिमानिनी देवता कथितवतीत्यर्थः ॥

क्रमसंख्या | प्र. सं.

तपः, उपवासादिनियमयुतं कालदेशादिनियतमाहारसेवनं चेत्यादिकान् चोदितान् धर्माननुतिष्ठन्ति ॥

232 ‘तमेव विदित्वाऽतिमृत्युमेति’ (श्वे. उ. 38) 288

सर्वकारणं परमपुरुषमेव, निरन्तरध्यानरूपेणोपासनेन अपरोक्षीकृत्यैव मुमुक्षुश्चेतनः, मृत्युपदाभिलप्यं प्रमादबहुलं संसाराध्वानमतिक्रम्य गच्छति परमं पदम् ॥

233 I ‘तं यथा यथोपासते तथैव भवति’ (मुद्गलो. 3) 192

II ” ” 191

III ” ” 382

प्रस्तुतमेतं परमात्मानं, तदीययादृशयादृशगुणप्रकारेण निरन्तरमुपासते मुमुक्षवो जनाः, (तं प्राप्य) तादृशतादृशप्रकारवत्तया तम् अनुभवन्त्येव ॥

234 I ‘तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति’

(कठ. उ. 6–16) 349

II ” 376

(प्र. ‘शतं चैका च’ इत्यत्र)

235 I ‘तं विद्याकर्मणी समन्वारभेते’ (बृ.उ. 6–4–2) 223

II ” ” ” 228

III ” ” ” 227

(‘पूर्वप्रज्ञा च’ इति, एतद्वाक्यावशेषः) देहादुत्क्रमणानन्तरं प्राप्तव्यदेहयोनिचिन्तनयुक्तं स्वानुगतप्राणवर्गं चेतनं, तेन पुरुषेण सम्पादितं ज्ञानम् अनुष्ठितं कर्म पूर्ववासना चेतीमेऽर्थाः, (उत्तरत्र देहे भोग्यविषय-तद्भोक्तृत्व-कर्मविशेषकर्तृत्वानां सम्पत्तये) अनुवर्तमाना भवन्ति ॥

236 ‘तस्मादुपशान्ततेजाः (अ) पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः’

(प्रश्न. 3–3–9) 326

(उदानशब्दाभिधेयोन्नयनप्रयोजकतायाः तेजोमात्र एव सत्त्वात् ) शरीरोष्ण्यापगमोपलक्षितमुमूर्षुतावान् जीवः, मरणप्राक्कालिकेप्सानुगुण्येन पुनर्जन्म लब्धुं, मनसा संश्लेषविशेषं प्राप्तैर्वागादिभिः कर्मज्ञानेन्द्रियैर्युक्तं प्राणमुपगच्छति (सर्वैः सहोत्क्रमणाय) ॥

237 'तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' (बृ.उ. 6-4-23) 250

ब्रह्मविदि पुरुषे कर्मनिबन्धनयोरुत्कर्षापकर्षयोरभावात्, तादृशब्रह्मवित्स्वरूपाभिज्ञः पुरुषः, आत्मनोऽपि तादृशं महिमानमाकाङ्क्षमाणः, आन्तरबाह्यात्मकानि करणानि निगृह्य, काम्य-प्रतिषिद्धरूपेभ्यः कर्मभ्यः, उपरम्य, क्षमा-समाधानाभ्यां सम्पन्नः, (चित्तक्षोभं दूरीकृत्यावस्थितः) स्वात्मन्येवावस्थितं परमात्मानं ध्यानयोगेन पश्येत् ॥

238 'तस्माद् ब्रह्मणो महिमानमाप्नोति' (तै.ना.उ. 80) 356

(ब्रह्म विद्वान् चेतनः देहादुत्क्रम्य अर्चिरादिवर्त्मना ऊर्ध्वं गत्वा, सूर्याचन्द्रमसोर्महिमानमवाप्य) ततः परब्रह्मसायुज्यरूपं वैभवमनुभवति ॥

239 I 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्।
बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिः' (बृ.उ. 5-5-1) 269

II 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' ,, 160

III ,, ,, ,, 276

IV ,, ,, 271

V ,, ,, 274

मुमुक्षोः ऐहिकामुष्मिकविषयवैतृष्ण्यस्यात्यावश्यकत्वात्, ब्रह्मजन्म लब्धवान् पुरुषः, विवेकनिर्वेदवैराग्याधायकं ऊहापोहक्षमधीविशेषसम्पत्तिरूपं पाण्डित्यं प्राप्य, स्वीयस्य पाण्डित्य-कुल-अभिजन-विवेक-वैराग्यादेर्महिम्नः अनाविष्काररूपं बालभावमाश्रित्य स्थितः सन्, ब्रह्मनिष्ठामधिगच्छेत्। ते अवाप्य च, शुभाश्रयविषयकसंशीलनपौनःपुन्यरूपं मननमवलम्बेत ॥

क्रमसंख्या प्र. सं.

240 ‘ तस्माद्ब्राह्मणः सुरां न पिबति ; पाप्मना नोत्सृजा इति ’
(कठसंहिता) 254

अनापदि निषिद्धाहारसेवनस्य प्रत्यवायकरत्वात्, अग्रजन्मा यः कोऽपि जनः, ‘ पापसंसृष्टो न भवेयम् ’ इति विचिन्त्य, सुरापानाख्यं निषिद्धं कर्म नैव कुर्यात् ॥

241 ‘ तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति ’
(छां. उ. 5–2–2) 121

अपां प्राणवासस्त्वादेव हेतोः, अद्यत्वेऽपि शिष्टाः, भोजनं करिष्यमाणाः कृतभोजनाश्च, अद्भिराचमनं कुर्वाणाः लक्ष्यन्ते। तेन च प्राणमद्भिराच्छादयन्तो भवन्ति ॥

242 I ‘ तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ’
( तै.उ.आन. 1–2) 77

II ” ” ” 118

सत्यत्वादिरूपनिरूपकधर्मयुक्तात् परस्माद् ब्रह्मणः आकाशः संजातोऽभवत् ॥

243 I ‘ तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा सम्भवति (छां.उ. 5–4–2) 4

II ” ” 8

प्रस्तुते ‘असौ लोकः’ इत्युक्ते द्युलोकाख्ये अग्नौ, जीवसम्बन्धीनीन्द्रियाणि (कर्तृभूतानि) श्रद्धाभिलप्याः अपः भूतसूक्ष्माणि प्रक्षिपन्ति द्युलोकान्ता गतागतिः जीवस्य सेन्द्रियस्यैव सभूतसूक्ष्मस्यैव भवति) एवं कर्मानुगः सन् द्युलोकं इन्द्रियैर्भूतसूक्ष्मैश्च सह गतो जीवः, सोमराजभावं—स्वर्भोगोपभोगार्हं दिव्यं देहमवाप्नोति ॥

244 I ‘ तस्मिन् यदन्तस्तदन्वेष्टव्यम् ’ (छां. उ. 8–1–1) 98

II ” ” ” 168

(प्र. ‘ अथ यदिदम् ’ इत्यत्र)

क्रमसंख्या पृ. सं.

गृह्णन्ति । तदप्रीतिभागिनस्तत्सुताः, तदीयं दुष्कृताख्यं कर्मजातं, दायतया स्वीकुर्वन्ति ॥

250 'तस्य प्राण एव शिरः' (तै. उ. आन. 2-3) 115

अन्नमयशब्दितस्य स्थूलशरीरपर्यन्तस्य धारकत्वेन हेतुना आत्मत्वेन निर्दिष्टो यः प्राणमयः पुरुषविधः तस्य, प्राणशब्दवाच्योऽर्थ एव शिरस्स्थानापन्नः सन् प्रधानभूतः ॥

251 'तस्य प्रियमेव शिरः' (तै. उ. आन. 5-2) 112

अन्नमयादिविज्ञानमयान्तस्य सर्वस्याऽपि निरुपाधिकधारकत्वादिना वस्तुत आत्मभूतः यः आनन्दमयशब्दितः परमात्मा पुरुषविधः, तस्यास्य, प्रियपदाभिलप्यं सुखमेव शिरःस्थानापन्नम् ॥

252 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 7-25-2) 417
(प्र. 'स स्वराट्' इत्यत्र)

253 'तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासः' (बृ.उ. 4-3-6) 64

मूर्तामूर्ताख्यचेतनाचेतनशरीरकस्य परस्य ब्रह्मणः देदीप्यमानो दिव्यमङ्गलविग्रहः, (कौसुम्भवस्त्र) हरिद्रारञ्जितवस्त्रसदृशः कमनीयः ध्यानमङ्गलभूतो वर्तते ॥

254 'तस्याऽन्ते सुषिरं सूक्ष्मम्' (तै.ना.उ. 11-8) 167

(नाडीभिः सन्ततस्य देहमध्यगतहृदयपुण्डरीकस्य मध्ये अन्तभागे वा सूक्ष्मतमं रन्ध्रमेकमस्ति ॥

255 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥'
(तै.ना.उ. 11-11) 180

उक्ताया अणीयोर्ध्वायाः मध्यस्थनीलतोयदविद्युन्निभायाः तन्व्याः वह्निशिखायाः हृदयस्थानगायाः मध्ये, ब्रह्मरुद्रेन्द्रशरीरकतया तदभेदव्यपदेश्यः मुक्तात्मनां परमगतिः तेषां स्वसायुज्यप्रदः अकर्मवश्यः

सर्वाधिकः परमात्मा, उपासकानुग्रहार्थं विशेषेणावस्थितः सन् विराजते ॥

256 **'तस्येदमेव शिरः'** (तै.उ.आन. 1-1) 115

पुरुषविधतां प्रतिपन्नस्य अन्नरसमयस्यास्य पुरुषस्य शिरःस्थानापन्नं प्रधानभूतमङ्गम्, प्रत्यक्षतोऽनुभूयमानं शिर एव। (नात्र रूपणस्यावश्यकता) ॥

257 **'तस्यैतस्य तदेव रूपं यदमुष्यरूपम्'** (छां.उ. 1-7-5) 126

अक्ष्यन्तर्वर्तिनः परमपुरुषस्याऽपि, आदित्यान्तवर्तिन उक्तं यत् हिरण्मयत्वादियुक्तं रूपं तदेव रूपं ज्ञेयम् ॥

258 I **'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः'** (तै.ना.उ. 80) 129

II **'तस्यैवं विदुषः'** ,, 131

उक्तन्यासविद्यानिष्ठस्य चेतनस्य सम्बन्धी यः जीवनरूपः अङ्गपञ्चकसम्पन्नन्यासविद्यामयोवा यज्ञः, तत्र विद्यानिष्ठः आत्मैव यागीयकर्तृत्व-तत्फलभोक्तृत्वरूपयाजमान्यवान्, न्यासविद्योपास्ये परमोपायभूते ब्रह्मणि परमपुरुषार्थरूपमोक्षप्रदत्वनैर्भर्याख्या श्रद्धैव, यजमानपत्नीस्थानीया; यष्टुरात्मनः यागकाले उपास्येऽग्नौ प्रक्षेप्यमिध्मं तु, इन्द्रियाणामात्मनश्च आश्रयभूतं शरीरमेव; यागोपास्यस्याग्नेः यागोपकरणानां यष्टुश्च स्थानभूता यज्ञवेदिका पुनः, हृदयाधिष्ठानरूपमुरःस्थानमेव, यज्ञोपकरणभूतः दर्भस्तोमस्तु, देहगतानि लोमान्येवेति। (बाह्यानर्थाननपेक्ष्यैव शरीरगतेष्वेव यज्ञसामग्रीत्वपरिपूर्तिश्चिन्त्या) ॥

259 **'तस्यैवात्मा पदवित्तं विदित्वा। न कर्मणा लिप्यते पापकेन'** (तै.काठउ. 3-12-18) 308

ब्रह्मणः पदं विद्वान् पुरुषः ब्रह्मवेदनसिद्धेः पश्चात्, मोक्षप्राप्तिप्रतिबन्धकभूतेन पुण्य-पापाख्येन कर्मणा नैव लिप्तो भवति ॥

क्रमसंख्या | प्र. सं.

260 'तस्योपनिषदहमिति' (बृ.उ. 7-5-3) 30

'भू'रिति व्याहृतिशिरस्कत्वादिना धर्मेणोपास्यतया चोदितस्य शरीरगतदक्षिणाक्षिमण्डलस्यस्य, सत्यपुरुषस्य, रहस्यभूतं नाम 'अहमि'त्येतत् ॥ इदं च देहगतस्थानसम्बन्धिविषयकत्वात् अध्यात्ममुपासनं भवति। (अत्रात्मशब्दार्थो देह एव)।

261 'तस्योपनिषदहरिति' (बृ.उ. 7-5-3) 124

'भूरि'ति व्याहृतिशिरस्कत्वादिना अनुसन्धानपूर्वकमुपास्यत्वेन श्रुतिचोदितस्यास्य आदित्यमण्डलस्थस्य रहस्यं नाम 'अह'मिति। इदं च आकाशस्थादित्यदेवताविषयकत्वात् अधिदैवतमुपासनं भवति ॥

262 'ता अन्नमसृजन्त' (छां.उ. 6-2-4) 327

अप्तत्त्वशरीरकं परं ब्रह्म, पृथिव्याख्यं भूततत्त्वं ससर्ज ॥

263 'तान् हैतानेवंविदे सर्वाणि भूतानि चिन्वन्ति, अपि स्वपते'

(अग्निर. ब्रा. 10-5-3-12) 185

विद्यामयक्रतूपसंहारवते जाग्रत्स्वप्नसुषुप्त्यादियादशयादशावस्थामाश्रित्य स्थितायाऽपि पुरुषाय, चराचराणि सर्वाणि भूतानि च कालत्रयेऽपि अग्निं चिन्वन्ति। (सर्वभूतकर्तृकाः सार्वकालिका अपि व्यापाराः अग्नित्वदृष्टिविशिष्टा विद्यावत्पुरुषशेषभूताः चयनरूपा एव भवन्ति ॥

264 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छां. उ. 6-3-4) 6

सेयं तेजोबन्नाभिमानिनी परमात्माख्या परा देवता, स्वीयसङ्कल्पानुसारेण, तेजोजलपृथिवीष्वेकैकामपि, सृष्ट्युपयोगिसामर्थ्याधानानुगुणमिथःसंयोगवतीं चकार ॥

265 I 'तेजः परस्यां देवतायाम्' (छां. उ. 6-8-6) 345

II " " " 346

III " " " 411

IV " " " 162

(प्र. 'अस्य सोम्य' इन्यत्र)

क्रमसंख्या पृ. सं.

I ‘तेजस्वि नावधीतमस्तु मा विद्विषावहै’ (तै.उ.आन. शान्तिपाठः) 134

II ,, ,, 134

‘शिष्याचार्यतापन्नयोरावयोः अध्ययनं वीर्यवत्तरं भवतु। ईदृशावावामुभावपि प्रमादादपि अधर्मसंसर्गायत्तद्वेषभागिनौ माभूव’ इति गुरुशिष्ययोर्द्वयोः प्रार्थना ॥

266 ‘तेजोवलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः’

(वि. पु. 6-5-85) 53

परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे,

क्लेशकर्मादिभिरखिलैर्दोषैरसंस्पृष्टः, सकलजगतामधीश्वरः परमात्मा, नित्यातिशायिनां निरवधिकानां तेजोबलादीनां महागुणानां (जलानां वारिधिरिव) असदृश एकैक आश्रयः। अतः स सर्वाधिकः ॥

267 ‘ते धूममभिसम्भवन्ति’ (छां. उ. 5-10-3)

(प्र. ‘अथ य इमे’ इत्यत्र)

268 I ‘तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः’ (बृ. उ. 6-4-2) 335

II ‘तेन प्रद्योतेनैष आत्मा निष्क्रामति’.........तमुत्क्रामन्तं प्राणोऽनूत्क्रामति’ 339

म्रियमाणचेतनसम्बन्धिनो हृदयप्रदेशस्य अग्रभूतं निर्गमनद्वारं, उपसंहृतकरणतेजःप्रज्वलितं सत् प्रदीप्तं भवति। तेन प्रकाशेन प्रकाशितनिर्गमनद्वारश्चेतनः, चक्षुःशिरःप्रभृतिभ्यः स्वशरीरभोगेभ्यः (द्वारीकृतेभ्यः), देहान्निष्क्रामति।....निष्क्रामन्तं च तं जीवमनुसृत्य, प्राणोऽपि देहान्निष्क्रामति ॥

269 ‘तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति’

(बृ. उ. 7-10-1) 365

(प्र. यदा वै पुरुषोऽ’ इत्यत्र)

क्रमसंख्या | प्ट. सं

270 I 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.उ. 3-9, तै.ना.उ. 10-20) 76

II ,, ,, ,, 82

सर्वमिदं जगत्, पूर्वप्रस्तुतेन असदृशेनाऽद्वितीयेन विभुना परमात्मना सर्वथा व्याप्तमास्ते ।।

271 'तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति' (छां. उ. 1-1-9) 211

उपास्यतयोक्तेन अनेन उद्गीथावयवभूतेनोङ्कारेण, ऋग्यजुः-सामात्मकं वेदत्रयमपि स्वविहितकर्मद्वारा प्रवर्तमानं दृश्यते । यतो ह्यध्वर्युः याजुर्वेदिकम् आश्रवणम् (प्रतिज्ञापनम्), बाह्वृचं शंसनम् होता, सामनमुद्गानमुद्गाता च ओङ्कारेणैव कुर्वते ।।

272 I 'तेनोभौ कुरुतो यश्चैवं वेद यश्च न वेद' (छां. उ. 1-1-10) 173

II ,, ,, 209

य इममोङ्कारम् उक्तप्रकारेणोपास्ते, यश्च नोपास्ते, द्वावप्येतौ ओङ्कारेणैवानेन सर्वं कर्मानुतिष्ठतः ।।

273 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' (तै.ना.उ. 24) 376

विशेषतो वेदान्तार्थचिन्तनेन निश्चिततत्त्वार्थाः पुरुषाः सर्वेऽपि, चरमदेहावसाने परब्रह्माख्यं सर्वाधिकं स्थानं तत्त्वं वा प्राप्य निरुपाधिकममृतं सम्पद्य, समस्तसांसारिकबन्धाद्विगलिता भवन्ति ॥

274 'तेभ्य एष प्राण उदगायत्' (बृ.उ. 3-3-7) 103

इन्द्रियाख्यैर्देवैः असुरपराभवाय 'त्वमस्माकमुद्गानं कुरु' इति प्रार्थितो मुख्यः प्राणः तेभ्य उद्गानं कृतवान् । (उद्गातरि वागादि-दृष्टिं विहाय मुख्यप्राणदृष्टिं कृतवन्तः) ॥

275 I 'तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽह्नः' (छां.उ. 5-10-1) 22

II ,, ,, 357

(ये पुनर्वनवासरुचयो दूरीकृतग्राम्यव्यापाराः श्रद्धादिकमाश्रित्य ब्रह्मोपासीना भवन्ति) ते स्वप्राप्यपरमपदप्राप्तये आतिवाहिकतया आदौ अर्चिरभिमानिनीं देवतां प्राप्नुवन्ति ; पश्चाच्च दिनाभिमानीनीं-देवतां लभन्ते ॥

276 I **'तेषामेकैक एव तावान् यावानसौ पूर्वः'** (अग्निर.ब्रा. 10–5–3–3)　183

II　　" 　　" 　　"　186

मनश्चिदादिः एकैकोऽपि, विद्यामयक्रतुद्वारेण तादृशफलवान् चिन्तनीयः ; पूर्वोक्त इष्टकचिताग्निः स्वक्रतुद्वारेण यादृशफलवानिति श्रुत्या प्रतिपन्नः ॥

277 I **'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्'** (मुण्ड.उ. 3–2–10)　94

II　　" 　　"　97

(ये खलु स्वस्ववर्णाश्रमानुगुणनित्यनैमित्तिकाख्यविहितकर्मानुष्ठानपराः अधीतस्वशाखाः परंब्रह्मोपासिसिषवः श्रद्धया एकर्षिशब्दितं एकर्षिङ्मात्रसाध्यमग्निहोत्रं च जुह्वानाः सन्ति) तथा अङ्गारपात्रस्य शिरसि धारणरूपम् आथर्वणिकं वेदव्रतं यथाविध्यनुतिष्ठन्तः सन्ति ; तादृशान् अधिकारिण उद्दिश्यैव इमां मुण्डकोपनिषत्प्रतिपादितां ब्रह्मविद्यां बोधयेत् ; न त्वन्यस्मै अनधिकारिणे ॥

278 **'तेषां यदा तत् पर्यवैति'** (बृ.उ. 8–2–16)　355

पुण्यपापमये संसाराध्वनि भ्रमणपौनःपुन्यशीलानां कर्मावृतस्वरूपाणां चेतनानां सुखदुःखानुभवसाधनभूतं कर्म, यस्मिन् काले क्षीणतामुपैति ; तदा भोगापादनपरकर्मभारप्रक्षयात्, चेतनाः आकाशनिभाः लघुभूताः सन्तः अवरोहणोन्मुखा भवन्ति ॥

279 **'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्'** (छां.उ. 6–3–1)　24

पूर्वप्रस्तुतानां तेजोजलपृथिव्याख्यभूतजानां भूतानां सम्बन्धीनि, व्यष्टिसृष्टिनिदानभूतानि प्रकृतिद्रव्याणि त्र्यात्मकानि भवन्ति—पक्षि-सर्पादिसृष्टिहेतुभूतानि, पुरुषपश्वादिसृष्टिहेतुभूतानि, स्थावराख्य-तरुगुल्मादिसृष्टिहेतुभूतानि च । तत्र तत्र यान्येव बीजपदाभिलप्यानि भवन्ति, तज्जातानि च लोके अण्डज-जीवज-उद्भिज्जाख्यानि प्रथन्ते, शास्त्रे च । (अण्डम्—पक्ष्याद्युत्पत्तिहेतुभूतः कोशः । जीवः—गर्भाशयः । उद्भित्—ऊर्ध्वं भूमिं भित्त्वा उत्पत्तौ हेतुभूतं सूक्ष्मतमधानारूपम् ) एषां सर्वेषां तेजोबन्नान्येव बीजानि ॥

280 **'ते(षु) मनसैवाऽधीयन्त मनसैवाऽचीयन्त मनसैषु ग्रहा अगृह्यन्त। मनसाऽस्तुवन्त मनसाऽशंसन् । यत्किंच यज्ञे कर्म क्रियते, यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत'** (अग्निर. 10-5-3-3) 184

'मनश्चितः' इत्यादिनोक्ताः अग्नयः, (अथवा) तादृशाग्निषु, मनः करणकमाधानं, मनःकरणकं चयनम्, मनः करणकग्रहणम्, मनः करणस्तवनम्, मनः करणकशंसनम्, इत्येतदास्पदा अभवन्, (अथवा) इत्येतत्सर्वं समपद्यत । यज्ञप्रयोगे प्रधानभूतम् अङ्गभूतं वा यत् कर्मजातमस्ति तत्सर्वमपि, मनश्चिदादिषु मनसैव सम्पद्यमानं मनोमयमेव अकारि ॥

281 I **'ते ह देवा ऊचुः, हन्ताऽसुरान् यज्ञ उद्गीथेनाऽत्ययाम'**
(बृ.उ. 3-1-1) 101

II ,, ,, ,, 103

असुरविजिगीषाप्रयुक्ता (प्रेरिताः) देवाः, स्वयूथे हर्षेणेदमुक्तवन्तः-अस्मिन् यज्ञाङ्गभूतेनोद्गीथेन—अध्यस्तप्राणभावेन उद्गात्रा साधनतयाश्रि-तेन-उद्गातरि प्राणदृष्टिरूपेणोपासनेन, अस्मद्विजिगीषूनसुरान् जयेम इति ॥

क्रमसंख्या | पृ. सं.



वृक्षवत् छेदार्ह-भङ्गुरम् एकमेव शरीरं समाश्रित्य, द्वौ चेतनौ अवतिष्ठेते । उभावपि तौ समानगुणधर्मिणौ मिथः सहचरितौ प्रवृत्ति-निवृत्तिप्रयोजकत्वतः पक्षसदृशज्ञानादिगुणाश्रयौ । तयोरन्यतरो जीवः, अश्वत्थफलसदृशं कर्मफलं आस्वाद्य भुंक्ते । अपरश्च परमात्मा, कर्मफलमभुञ्जान एव असङ्कुचितस्वीयज्ञानप्रकाशः सन् एकरूपेणैव विराजते ॥



परमात्मनो ब्रह्मभूतस्य द्वे खलु शरीरे भवतः—कठिनम् अकठिनं च। तथा नश्वरमनश्वरं, व्यापकमव्यापकं, चाक्षुषमचाक्षुषं च ॥



कर्तृत्व-फलाभिसन्ध्यादिवर्जनतोऽनुष्ठितेन यागदानादिना श्रुत्यादि-चोदितेन कर्मणा कर्मानुष्ठाता पुरुषः पुण्य-पापपदाभिधेयं ज्ञानोत्पत्ति-विरोधिभूतं सर्वमपि प्राचीनं कर्म क्रमेण दूरीकरोति ॥



धूम-रात्रि-कृष्णपक्ष-दक्षिणायनाभिमानिनीर्देवताः आतिवाहिकत्वेन प्राप्य तद्युक्त वर्त्मनि गत्वा तत्र चन्द्ररूप्यं ज्योतिः अधिगम्य, इष्टा-पूर्तादिरूपोपायप्रावण्यवांश्चेतनः, संसाराध्वनि आवृत्तिमानेव भवति ; (न तु अर्चिरादिवर्त्मवत् अनावृत्तिपदप्राप्तिमान् स्यात् ॥

क्रमसंख्या | पृ. सं.

306 'ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः ध्यायन्तीवाऽऽपः ध्यायन्तीव पर्वताः' (छां. उ. 7-6-1) 303

भूम्यन्तरिक्ष-द्युजलपर्वतानां या निष्कम्पावस्था सा, ध्यातृपुरुषगतध्यानावस्थासदृशी दृश्यते। पृथिव्यादयः निष्कम्पतया ध्यानस्थितिमभिनयन्तीव भासन्ते ॥

307 'न चक्षुषा गृह्यते नाऽपि वाचा' (मुण्ड. उ. 3-1-8) 66

पूर्वमन्त्रप्रतिपादितं ब्रह्मतत्त्वं, घट-पटादि बाह्यार्थग्राहकेण मांसचक्षुषा नैव ग्रहीतुं शक्यम्; नापि गृहीतार्थग्राहकशब्दयुतेन वागिन्द्रियव्यापारेणाऽपि बोधयितुं शक्यम्। अतो ज्ञान-कर्मेन्द्रियैः अगृह्यमाणस्वरूपमेव तत् ॥

308 'नटस्य शृणोति' (लौकिकः प्रयोगः) (का. वृ. 1-4-29) 341

(नटात् गाथादिकं शृणोति ॥ नटसम्बन्धिश्रवणाश्रयो भवति। (अत्र अपादानत्वस्य नटगतस्य सम्बन्धसामान्यरूपेण विवक्षया अयं प्रयोगः) ॥

309 I 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति। अथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्ति। अथ वेशान्तान् पुष्करिण्यः सृजते। स हि कर्ता' (बृ.उ. 6-3-10)

II 'न तत्र रथा न रथयोगा न पन्थानः' ,, 36

स्वप्नावस्थावस्थितस्य जीवस्य, तस्यां दशायामनुभूयमानानि यानि रथ-तद्योजनार्हहय-तत्सञ्चरणार्हरथवर्त्मप्रभृतीनि वस्तूनि, तानि स्वप्नावस्थात उत्थाय जाग्रद्दशायामनुभवार्हाणि नैव भवन्ति। तथा तद्दशानुभाव्याः सुखविशेषाः आनन्दादयः, तत्साधनभूताः निर्झरिणी-पल्वल-वापी-कूप-तटाकादयश्च, नैव जाग्रद्दशानुभवार्हा भवन्ति। तान् सर्वानप्यर्थान् तत्तत्कर्मानुगुणफलदो भगवान्, तत्तत्पुरुष-तत्तत्कालमात्रविश्रान्तान् सतः सृजति ॥

क्रमसंख्या पृ. सं.

314 'न वा अजीविष्यमिमानखादन्....कामो म उदपानम्'
(छां.उ. 1-10-4) 252

हे ! इभ्य ! त्वया दत्तान् कुल्माषान् यद्यहं नैव भक्षितवान् स्याम् ! तदा अहं नैव जीवितवान् स्याम् । अतः कुल्माषभक्षणम् अद्यकृतं नैव दोषावहम् । जलपानेऽकृतेऽपि मम प्राणच्युत्तिर्नैव भविता । अथाऽपि यदि जलपानमिच्छया कुर्याम् ! उच्छिष्टप्रतिग्रहकृतो दोष आपतेत् ॥

315 'न वा उवेतन्म्रियसे नरिष्यसि देवान् इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नाऽपि दुष्कृतस्तत्र त्वा देवः सविता दधातु
(तै. ब्रा. 3-7-7-18) 32

हे यज्ञोद्देशेनाऽभिमन्त्र्यमाण ! पशो ! त्वद्विशसनपूर्वकं यागीय-देवतायै समर्पणरूपेणाऽनेन कर्मणा, त्वं केवलां मृतिं नैव प्राप्स्यसि; नाप्यस्माभिः हिंस्यमानो वा भविष्यसि । किंतु सुगमेन पथा ध्रुवं देवान् प्राप्स्यसि । अस्माकं च इयं प्रार्थना त्वद्विषये - शास्त्रोक्त-केवलसाधुकर्मप्रवणाः येन पथा गत्वा शाश्वतं यत् स्थानं प्राप्य सुखिनः अवतिष्ठन्ते; दुष्कर्मकारिणां यत्र प्रवेश एव नास्ति, तादृशे स्थाने सर्वकर्मणां प्रेरयिता भगवान् त्वां स्थापयतु - इति ॥

316 'न वा विशेषात्' (ब्र. सू. 3-3-21) 163

'न (ह) वै देवा अश्नन्ति न पिबन्ति, एतदेवाऽमृतं दृष्ट्वा तृप्यन्ति' (छां. उ. 3-6-1) 11

वस्वादयो हि देवाः पूर्वोक्तानि रोहितादीन्यमृतानि उपभुज्य जीवन्ति । तच्चोपजीवनं तत्तदमृतस्वरूपदर्शनजतृप्तिरूपमेव; न तु तदशन-पानादिकम् । यतो हि देवाः दर्शनतः तृप्यमाणैकस्वभावाः; न तु मर्त्या इव भोजन-पानस्वभावाः ॥

317 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'
(श्वे. 3-4-20, तै. ना. उ. 1-11) 66

सर्वोत्कृष्टं वस्तु, नैव किञ्चिद्वर्तते । स्वरूप-स्वभावाभ्यां सर्वातिशायि ब्रह्मणो भिन्नं किमपि नास्त्येव । परमात्मनो हि 'सत्य' मिति नामधेयं निर्विकारत्वनिमित्तकं भवति । तच्च स्वरूपान्यथाभावराहित्यकृतं जीवेऽपि । अतः जीवाः प्राणाभिधानाः सत्यभूताः । स्वरूपेणेव स्वभावेनाऽप्यविकारः, असङ्कोचेन सत्यभूतः परमात्मैति, सः सत्यस्य सत्यम् । जीवस्तु कादाचित्कज्ञानसङ्कोचवत्त्वात् अतथाविध इति ॥

323 'नाऽध्वर्युरुपगायेत्' (तै.सं. 6-3-1-11) 139

याजुषं कर्माऽचरन् ऋत्विक्, अध्वर्युरुच्यते । तद्व्यतिरिक्ताः ऋत्विज एव उपगानं कुर्युः । उपगानं नाम–उद्गातृषु सामगायत्सु सत्सु 'भो' इत्युच्चारणम् । अध्वर्युभिन्नाः ऋत्विजः तत्कर्म कुर्युः ॥

324 'नाना वा देवता पृथक्त्वज्ञात्' (पू.मी.सङ्कर्षः) 176

त्रिपुरोडाशायां त्रैधातवीयेष्टौ यष्टव्या देवता इन्द्रात्मिका नानाप्रकारैव भाव्या । हविस्त्यागोद्देश्यभूतदेवताविशेषणानां राजत्वअधिराजत्वस्वराट्त्वानां भिन्नत्वात्, तादृशविशेषणविशिष्टायां देवतायामपि धर्मिणो भेदस्यावर्जनीयत्वात् । तत्र हि विधिरेवं श्रूयते 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे' इति ॥

325 **'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।**
**नाऽशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥**
**समेत्याऽन्योन्यसंयोगं परस्पर समाश्रयाः ।**
**महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥**
(वि.पु. 1-2-52, 53) 332

मिथोविभिन्नस्वभावाः महदादयोऽर्थाः, प्रत्येकं वर्तमानाः–पृथक् स्थिति प्रतिपद्यन्तर्हसर्वांशसंश्लेषमप्राप्य वर्तमानाः (मिथोऽमिलिता एव सन्तः) सृज्यं जगत् स्रष्टुमसमर्था अभवन् । ते च महत्तत्वमारभ्य

भूतपञ्चकाख्यविशेषपर्यन्तास्ते न्यूनाधिकभावेन परस्परं मिलिताः मिथः आश्रयाश्रयिभावमापन्नाः ब्रह्माण्डोत्पत्तौ कारणतामाप्नुवन्ति ॥

326 I ' नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ' (ब्र.वै.प्र.ख. 2(-70) 308

II ' नाऽभुक्तं क्षीयते कर्म ' 309

जीवकृतं सुकृत-दुष्कृताख्यं कर्म, तत्फलभूते सुख-दुःखे अननुभूय अनन्तकालेनाऽपि स्वयं नैव क्षयमाप्नोति ॥

327 I ' नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ' ॥
(कठ.उ. 2–23) 67

II ' नायमात्मा………….श्रुतेन । यमेवैष…………तनूं स्वाम् ' 79

III ' नायमात्मा प्रवचनेन लभ्यः 272

उक्तोऽयं परमात्मा, अत्यन्तं नियमतोऽनुष्ठितैरपि श्रवण-मनन-निदिध्यासनैः भगवदाराधनैकदेषतारहितैः नैव प्राप्तुमर्हः स्यात् । अपितु-स्वोपासनप्रवृत्तं यमेव चेतनं, एष परमात्मा तस्मिन्निरवधिकप्रीत्या स्वात्मानं प्रापयितुं स्वयमेवेच्छति, तं स्वरूपगुण-विग्रह-विभूत्यादिभिः सह स्वात्मानमनुभावयति स्वम् ॥ अतः प्रीतिरूपापन्नध्यानैकलभ्यः परमपुरुषः ॥

328 I ' नाऽविरतो दुश्चरितान्नाऽशान्तो नाऽसमाहितः ।
नाऽशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ '
(कठ.उ. 3–2–24) 277

II ' नाविरतो दुश्चरितात् ' 311

मोक्षोपायभूतज्ञानोत्पत्तिविरोधिभ्यः अत एव शास्त्रनिषिद्धेभ्यः असाधुकर्मभ्यः अनुपरतस्वभावः, कामादिकृताद्वेगादनिवृत्तचेताः, उपासनोपयोग्यक्षुब्धचित्ततामसम्पादितवान् । अनुगृहीतान्तःकरणश्च पुरुषः, मुमुक्षुः सन्नपि; स्वानुष्ठितेनोपासनेन परमात्मानं नैव लभेत ॥

क्रमसंख्या प्र. सं.

373 I 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे । इति तु कामयमानः
(बृ.उ. 6-4-6) 13

II 'प्राप्यान्तं....त्ययम् । तस्मा....कर्मणे । इति तु कामयमानः' ,, 340

III ,, ,, ,, 317

मर्त्योऽयं चेतनः कर्तृत्व-फलसङ्गादितः अल्पं बहु वा इह लोके यद्यत्कर्म कृतवान्, तादृशस्य कर्मजातस्य फलम् अमुष्मिन् लोके अनुभूय, ततः पुनः कर्मैव कर्तुं मर्त्यं लोकमेवाप्नोति । एवं वर्णितश्चेतनः फलकामनायां सक्तः ॥

374 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ (भ.गी. 7-17)
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥
आस्थितः स हि युक्तात्मा मामेवाऽनुत्तमां गतिम् ॥' (भ.गी. 7-18) 423

यतो मदेकप्राप्यस्य ज्ञानिनः अहमत्यर्थप्रियः ; अत एव स ज्ञानी क्षणार्धमात्रेऽपि मद्विरहासहिष्णुः । तदत्यर्थप्रियत्वादहमपि क्षणेऽपि तद्विरहासहः । पूर्वोक्ता आर्तादयः सर्वेपि भक्ताः यतो मामेवोपासते ; न अन्यस्यां देवतायां किंचिदपेक्षन्ते, अतः मदौदार्यनिरूपकत्वात् वदान्या एवैते । एतेषु मध्ये मदत्यर्थप्रियः मद्विरहासहो ज्ञानी परं ममाऽपि धारकत्वात् ममाप्यात्मवदेव वर्तते इति मदभिमतोऽर्थः । यतः स ज्ञानी परमप्राप्यत्वबुद्ध्या मां वासुदेवमेवावलम्ब्य मय्येव सदावस्थितः ॥

375 'फलमत उपपत्तेः' (ब्र. सू. 3-2-37) 289

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥' (भ.गी. 7-9) 423

चेतनः खलु, नैकेषां पुण्यजन्मनामवसाने कस्मिंश्चन पुण्यतमे जन्मनि, स्वीयस्वरूपस्वभावयोः परमात्मभूतमदीयस्वरूपस्वभावयोश्च याथात्म्य-

मधिगम्य ज्ञानी भूत्वा, परमात्मभूतं मामेव शरणत्वेन अवगच्छति च। स एव च महात्मा। सः मामेव परमप्राप्यं पुरुषार्थं मन्वानः। तद्विधश्च पुरुषः अत्यन्तं दुर्लभतमः॥

376 **'बाल्यं च पाण्डित्यं च निर्विद्य, अथ मुनिः'** (बृ. उ. 5-5-1) 272
(प्र ' तस्माद् ब्राह्मणः) इत्यत्र)

377 **'बाल्येन तिष्ठासेत्'** (बृ. उ. 5-5-1) 277
प्र. ' तस्मात् ब्राह्मणः ' इत्यत्र)

**'ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्। गृहाद्वा वनाद्वा। यदहरेव विरजेत् तदहरेव प्रव्रजेत्'** (जाबा. उ. 4-17)

स्वाध्यायाध्ययनं गुरुकुले निर्वर्त्य, तत्फलं च ब्रह्मचर्यं परिसमाप्य, स्वीकृतगृहस्थाश्रमः स्यात्। ततः वानप्रस्थाश्रमं स्वीकृत्य सर्वसङ्गपरित्यागफलं सन्न्यासं स्वीकुर्यात्। केचनैवमाहुः—गार्हस्थ्यमद्वारीकृत्यैव, ब्रह्मचर्याश्रमादेव मोक्षाश्रमं गृह्णीयात-इति॥ वस्तुतस्तु यस्मिन् क्षणे तीव्रतरवैराग्योदयः तदैव यस्मात्कस्मादपि आश्रमात् मोक्षाश्रमं गच्छेत्॥

378 **'ब्रह्मचार्याचार्यकुलवासी तृतीयः, अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्'** (छां. उ. 2-23-1) 262

धर्मसाधनमार्गभूतेषु त्रिप्रकारेष्वाश्रमेषु, आचार्यकुलवासयुक्तः आश्रमः तृतीयः प्रकारः। तत्र चावतिष्ठमानो ब्रह्मचारी, गुरुकुले एव स्वीयं देहं सर्वात्मना गुरुशुश्रूषयैव क्षयमापादयन् स्यात्॥

379 **'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माऽग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमो (ह्रि) त जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः॥'**
(तै. ब्रा. 2-4-7-26 127

परब्रह्मणा सर्वेश्वरेण, सर्वोत्कृष्टानि तेजोबलादीनि वीर्याणि स्वभावत एव धृतानि। अत एव सर्वातिशायीदं ब्रह्म, लोकेश्वरतया

प्रसिद्धानां इन्द्रादीनामपि स्थानभूतं स्वर्गादिकं व्याप्यावातिष्ठत। यतो हि सर्वेषां प्रजापतीनामप्याविर्भावात् पूर्वमेव स्वयमेव प्रादुर्भूतमभवत्॥ ईदृशात्यद्भुतमहामहिमवता ब्रह्मणा सह को वा स्पर्धितुं यतेत॥

380 **'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।**
**परस्याऽन्ते कृतात्मानः प्रविशन्ति परंपदम्'॥**
(कूर्म. पू. ख. 12-269) 377

ये पुनः कार्यकोटिप्रविष्टहिरण्यगर्भोपासकाः, ते सर्वे पराख्यस्य चतुर्मुखायुःकालस्यावसाने, महाप्रलये सम्प्रवृत्ते, मोक्षोपायभूतविद्याधिगमेन कृतकृत्याः सन्तः, स्वोपासितेन हिरण्यगर्भेण सहैव, अपुनरावृत्तिपदं वैकुण्ठाख्यं वैष्णवं पदं प्राप्नुवन्ति॥

381 **'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत'** (तै ना. उ. 63) 130

'परंज्योतिःस्वरूपिणे ब्रह्मणे तुभ्यमेवाहमात्मानं समर्पये' इति सङ्कल्प्य, ओंकाररूपेण साधनेन स्वात्मानं तस्मै ब्रह्मणे समर्पयेत् (तस्मिन् योजयेत्)॥

382 **'ब्रह्मणो महिमानमाप्नोति'** (तै.ना.उ. 63) 131

भगवति सर्वेश्वरे न्यस्तात्मात्मीयभरः न्यासविद्यानिष्ठः पुरुषः, तेनैव मोचितसांसारिकसमस्तबन्धः स्वस्मिन् ब्रह्मगुणाविर्भावरूपं ब्रह्मणो महिमानं प्राप्नोति॥

383 **'ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥'** (भ.गी. 14-27) 420

यतोऽहं वासुदेव एव परमपुरुषार्थभूतस्याऽक्षयस्य जीवीयब्राह्मरूपाविर्भावस्य प्रधानतमो हेतुः, सर्वातिशायिनो नित्यैश्वर्यस्य निरन्तरभगवदनुभवस्य मुख्यं साधनं च, अत एव ब्रह्मभूयाय अहमेव सेव्यः॥

384 **'ब्रह्मलोकान्'** (बृ. उ. 8-2-15) 378
(प्र. 'य एवमेतद्विदुः' इत्यत्र)

क्रमसंख्या | पृ· सं·

385 ' ब्रह्म वा इदमेकमेवाऽग्र आसीत् । तदेकं सन्नव्यभवत् । तच्छ्रेयो-
रूपमत्यसृजत क्षत्रम् । यान्येतानि देवत्रा क्षत्राणि । इन्द्रो
वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति ॥ '
(बृ. उ. 3-4-11) 415

इदं विश्वं, सृष्टेःप्राक् अविभक्तनामरूपं सत्, ब्रह्मापृथक्सिद्धं ब्रह्मपदैकव्यपदेश्यमेवाऽभवत् । यत एकात्वावस्थमासीत्, अतः वैविध्य-वैचित्र्यादिकृतवैभवरहितमासीत् । तादृग्विधं तत् ब्रह्म, स्वशरीर-भूतमेव क्षत्राख्यं श्रेष्ठं रूपं सर्वाधिकतया ससर्ज । यानीमानि देवान्तर्गतानि क्षत्ररूपाणि, इन्द्र-वरुण-सोम-रुद्र-पर्जन्य-यम-मृत्यु-ईशानाख्यानि ॥

386 I ' ब्रह्मविदाप्नोति परम् ' (तै. उ. आन. 1-1) 115
II ,, ,, 206
III ,, ,, 217
IV ,, ,, 218
V ,, ,, 288
VI ,, ,, 290
VII ,, ,, 309

ब्रह्मोपासकश्चेतनः स्वोपास्यं सर्वोत्कृष्टं परं ब्रह्मैव अवाप्नोति 'परप्राप्तिकामः ब्रह्म विद्यात्' इति विधौ पर्यवसितम् ॥

387 I ' ब्रह्म वेद ब्रह्मैव भवति ' (मुण्ड. उ. 3-2-9) 288
II ,, ,, 288
III ,, ,, 291
IV ,, ,, 309

यः पुरुषः ब्रह्मोपासनप्रवृत्तः, निष्पन्नोपासनः सन् दर्शनसमानाकारेण वेदनेन ब्रह्मापरोक्ष्यं विन्दते ; ब्राह्मगुणाविर्भावनिबन्धनब्रह्मपद-व्यपदेश्यतावान् भवति ॥ ब्रह्मसायुज्यतः ब्रह्मापृथक्स्थितिप्रतिपत्त्यर्हो भवति ॥

क्रमसंख्या प्र. सं०

393 'भगवांस्त्वेव मे तद्ब्रवीत्विति' (छां.उ. 6–1–7) 158

मम पिता आचार्यभूतो भवानेव, ज्ञातव्यं सर्वप्रशासितृ वस्तु उपदिशतु ; न तु पुनः गुरुकुलं प्रेषयतु ॥

394 'भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवंवेद' (ऐत.आर. 2–1–8)

यः उद्गातरि प्राणदृष्ट्या उपास्ते सः, सुसंस्कृतमनस्कः सर्वोत्कृष्टो भवति। ईदृशं पुरुषं द्विषन् जनः, पापाख्यःशत्रुर्वा पराभवं प्राप्नोति।॥

(बृ.उ. 3–3–7) 101

395 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छां.उ. 3–18–3) 290

यः उक्तेन प्रकारेणोपास्ते, सः वितरणजन्यया, प्रथया विक्रमजन्यया प्रसिद्ध्या च प्रकाशते, तथा वृत्ताध्ययनसमृद्ध्या उज्वलो भवति, स्वकार्ये उत्साही च भवति ॥

396 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे'॥

मुण्ड. उ. 2–2–8) 231

सर्वदेवाधिदैवते परमात्मनि साक्षात्कृते सति, अस्य साक्षात्कर्तुः अन्तःकरणगताः ग्रन्थिवत् दुर्मोचाः रागद्वेषादयः सर्वे दोषाः सुखेन विमुक्ता भवन्ति। तत्त्वाध्यवसायविरोधिनः सर्वेपि संशयाः निरवशेषं विनष्टा भवन्ति। तथैव अनेकजन्मार्जितानि सर्वाण्यपि कर्माणि क्षीणानि भवन्ति ॥

397 I 'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः'॥ (तै.उ.आन. 8–1) 225

II 'भीषाऽस्मा.........पवते। भीषो–सूर्यः। भीषा ...श्चेन्द्रश्च। मृत्यु....पञ्चमः'॥ 419

नियतप्रवृत्तिमन्ति चक्षुरादीनि बहिरिन्द्रियाणि, अन्तःकरणभूतं मनोऽपि च, भाविनि देहान्तरे उपयोगाय आकर्षति, आकृष्य स्वे वशे नयन् गच्छति ; न तु तैर्विना ॥

403 'मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किंचन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (बृ.उ. 6-412) 167

उक्तं ब्रह्म श्रवण-मननसंस्कृतेन मनसैव निधिध्यासनाहितया ध्रुवया स्मृत्या विषयीकार्यम् । ईदृशे ब्रह्मणि सर्वाधारभूते, स्वाधेयनानात्वकृतं नानात्वं नैव सम्भावितम् ; ब्रह्मात्मकत्वेन रूपेण सर्वस्याप्यभेदात् । अत्र च आत्मभूतब्रह्माभेदकृतमभेदमविभाव्य यो भेदमल्पमपि वा चिन्तयति, सः पुनः-पुनः संसारमेवाऽधिगच्छति ; न मुक्तिभाग्भवति ॥

404 'मनुर्वैवस्वतो राजा' (?) 242

विवस्वतोऽपत्यं वैवस्वतनामा मनुः आदिमो राजाऽभवत् ॥

405 'मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्'
(अग्नि.ब्रा. 10-5-3-3) 186

एतेषु मनश्चिदादिषु मनोमात्रनिष्पाद्येष्वग्निषु (तादृशाग्निकेषु) 'ग्रह' शब्दाभिधेयानि यज्ञपात्राण्यपि (मनसैव गृहीतान्यभवन्) । उद्गाने प्रवृत्ताश्च मनसैव स्तोत्रकर्माण्यपि निष्पादितवन्तः ; शंसनप्रवृत्ताः शस्त्रमपि मनसैव सम्पादितवन्तः ॥

406 'मनोऽनुकूले' (श्वे.उ. 2-10) 305

मनसो ध्येयैकाग्र्यवर्धके देशे उपविश्य ध्यानकर्माऽनुतिष्ठेत् ॥

407 I 'मनो ब्रह्मेत्युपासीत' (छां. उ. 3-18-1) 289
II ,, ,, 297
III ,, ,, 297

मनोरूपमिन्द्रियं ब्रह्मत्वेन प्रकारेणाध्यस्य उपासनं कुर्यात् (दृष्ट्युपासनमेतत्) ॥

408 'मनोमयोऽयं पुरुषो भाः सत्यः । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा । स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ।' (बृ.उ.7-6-1) 122

विशुद्धचेतोग्राह्यस्तेजोमयोऽयं पुरुषः, स्वस्याधिष्ठानभूतहृदयाधारस्य देहादेर्ध्वंसेऽपि अविकृतस्वरूपत्वात् सत्य इत्युच्यते । अल्पाधिष्ठानाधिष्ठेयत्वतः व्रीहियवादिसाम्येन अल्पपरिमाण इव लक्ष्यते । एषः स्वाधीनसर्वचेतनाचेतनवर्गकः । सर्वनियन्ता । सर्वशेषी । भूतं भवद्भविष्यच्च सर्वं स्वकर्तृकेण प्रशासनेन धारयति ॥

409 I 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥ (भ.गी. 9-10) 60

II मयाऽध्यक्षेण....सचराचरम् । हेतुनाऽनेन....परिवर्तते' 419

सर्वेषामपि भूतानामध्यक्षभूतेन सर्वप्रधानेन परमात्मना मया सत्यसङ्कल्पेन कटाक्षिता मदीया प्रकृतिः, जङ्गमाजङ्गमाख्यं विश्वं प्रसौति । सर्वक्षेत्रकर्मानुगुणमत्कटाक्षेण निमित्तेन इदं विश्वं सदा अन्यानियन्त्रितपरिणामशीलं विजृम्भते ॥

410 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥'
(भ.गी. 14-26) 419

निःश्रेयसकामनया प्रवृत्तो यः पुरुषः, सत्यसङ्कल्पत्वाश्रितवात्सल्यादिपूरितस्वभावं मां सर्वेश्वरं ऐकान्त्ययुक्तेन साङ्गभक्तिरूपेणोपायेन निषेवते ; स साधकः अनतिक्रमणीयान् सत्त्वादीन् त्रीन् गुणानप्यतिक्रम्य निरुपाधिकस्वभावसिद्धब्राह्मगुणाविर्भावभोग्यो भवति ॥

411 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥' (भ.गी. 8-15) 42

स्वयं च संसारातीतस्वभावं अन्येषां च संसारादुत्तारकं परवासुदेवं मां प्राप्य, निरस्तसमस्तसांसारिकदोषाश्चेतनाः, निखिलदुःखाकरभूतं

अत्यन्तास्थिरस्वरूपस्वभावं सांसारिकं पुनर्भवं नैव प्राप्नुवन्ति ; एते चेतनाः, मय्यत्यन्तमासक्तचेतस्कतया मदत्यर्थप्रियाः सन्तः, नैरन्तर्ययुतेन मदुपासनेन साधानतापन्नेन, परमपुरुषार्थभूतं मामेव प्राप्तवन्तः ॥

412 **'मासेभ्यो देवलोकं देवलोकादादित्यम्'** (बृ.उ.6–2–15) 364

(प्र. 'य एवमेतद्विदुः' इत्यत्र)

413 **'मासेभ्यः संवत्सरं संवत्सरादादित्यम्'** (छां.उ, 4–15–5) 364

प्र. 'अथ यदुचैवा' इत्यत्र)

414 **'मुख्ये सम्भवति लक्षणा न न्याय्या'** (पू.मी.न्या. 3–2–1) 17

यस्य कस्यचन शब्दस्य प्रवृत्तिनिमित्तपौष्कल्यवत्यर्थे योग्ये समुपलभ्यमाने, मुख्यर्थोपजीव्या, प्रस्तुतक्रियाया मुख्यार्थान्वयविघटनकरी मुख्यार्थसम्बद्धार्थान्वयाधायिनी लक्षणाख्या शब्दवृत्तिः समाश्रयितुं न न्याय्या ; अगतावेव तदाश्रयणात् ॥ (अतः मुख्येऽर्थे शब्दव्यापारचिन्तया मुख्यार्थान्वय एव न्याय्यः ; न गौणे) ॥

415 **'मूर्धा ते व्यतिष्यत्, यन्मां नाऽऽगमिष्यः'** (छां.उ. 5–12–2) 200

वैश्वानरविद्याग्रहणाय माम् (अश्वपतिं केकयम्) उद्दिश्य त्वं यदि नैवाऽऽगतवान् स्याः, तदा त्वदीयं शिरः पतितं स्यात् ; (वैश्वानरस्यात्मनः मूर्धात्मकेऽवयवे समस्तवैश्वानरबुद्धिकरणरूपाद्दोषात्) ॥

416 **'मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते'** (छां उ. 5–10–6) 29

पुण्यलोके सुकृतफलान्युपभुज्य तस्माल्लोकादवरोहन् जीवः चन्द्राकाशवायुधूमाभ्र रूयाः अवस्थाः प्राप्य, ततः सेचनावस्थारूपं मेघत्वमाप्नोति, ततो वर्षधारा प्राप्य भूमौ पतति ; तथा वर्षसंश्लिष्टभूतसूक्ष्मपरिष्वक्ता जीवाः, व्रीह्यादिधान्यरूपतापन्ना भवन्ति ॥

417 I **'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं**

योऽर्थः आदित्येऽन्तरवस्थितः इत्यादिसर्वं 'य आत्मनि' इतिवत् ॥

420 'य इत्थं विदुः' (छां. उ. 5-10-1) 147
(प्र॰ 'तद्य इत्थं' इत्यत्र)

421 I 'य एवमेतद्विदुर्ये (चाऽमी अ) चेमेऽरण्ये श्रद्धां सत्यमुपासते, तेर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण पक्षाद् यान् षण्मासानुदङ्ङ आदित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषो (मानस) ऽमानव एत्य ब्रह्मलोकान् गमयति (ब्र. उ. 8-2-15) 361

II 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते, तेर्चिषमभीसम्भवन्ति (बृ. उ. 8-2-15) 147

ये खलूपासकाः उक्तया रीत्या द्युपर्जन्यैतल्लोकपुरुषयोषिदाख्येषु पञ्चाग्निषु श्रद्धासोमवृष्ट्यन्नरेतोनुषक्ततया सञ्चरन्तं चेतनं ब्रह्मात्मकतया उपासते; ते, तथा ये च पुरुषाः ग्रामवासवर्जनपूर्वकं वनस्थाः सन्तः श्रुत्यवगतेऽर्थे अचाल्यविश्वासवन्तो भूत्वा, निर्विकारतया सत्यशब्दितं परमात्मानं प्रत्यगात्मात्मकमुपासते, त एते द्विविधा अप्युपासकाः, अस्माद्देहादपक्रम्य स्वप्राप्यस्थानप्राप्तौ आतिवाहिकतया आदावर्चिरभिमानिनीं देवतां सम्पद्यन्ते । ततः अहरभिमानिनीं, ततश्च शुक्लपक्षाभिमानिनीं, ततः उत्तरायणाख्यषण्मासाभिमानिनिं पश्चात् संवत्सराभिमानिनीं ततो देवलोकशब्दितवाय्वभिमानिनीं, तत आदित्यं, (ततश्चन्द्रं द्वारीकृत्य) विद्युदभिमानिनीं च देवतां प्राप्नुवन्ति ॥ विद्युदभिमानिदेवताच वैद्युतपुरुषाख्यः भगवता मनोद्वारा सृष्टत्वात् आविर्भावितत्वात् ) मानसनामा अमानवः पुरुषः। सचागत्य पूर्वोक्तानुभयविधानप्युपासकान्, ब्रह्मविभूतितया ब्रह्मशब्दितान् अप्राकृतान लोकान् प्रापयति ॥

क्रमसंख्या पृ. सं.

436 I ‘यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥’ (भ.गी. 8–23) 356

II ‘यत्र काले तु’ ,, 357

कालाभिमानिदेवताख्यान् यादृशान् आतिवाहिकान् लब्ध्वा, तैर्नीयमाने पथि गत्वा प्रयाणं कुर्वाणाः पारत्रिकोपायप्रवणाः, ब्रह्मविद्यानिष्ठाः इष्टादिकारिणश्च, यथाक्रमं संसारावर्ते पुनरावृत्तेरभावं पुनरावृत्तिं चाऽऽप्नुवन्ति ; तमर्चिराद्युपलक्षितं मार्गं धूमाद्युपलक्षितं मार्गं च तुभ्यं बोधयामि व्यामोहनिवर्तनाय । अर्जुन ! अवहितमनाः शृणु ॥

437 ‘यत्राऽस्य मृतस्य पुरुषस्याऽग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्’ (बृ.उ. 5–2–13) 7

यदा म्रियमाणस्याऽस्य जीवस्य वाग्रूपं कर्मेन्द्रियं, स्वाभिमानिन्यग्नौ अप्ययमवाप्नोति ; न तु स्वव्यापारे प्रेरितं भवति ; तथा प्राणाख्यः शरीरधारको वायुः सामान्ये महावायौ, चक्षुराख्यं च ज्ञानेन्द्रियम् स्वाभिमानिन्यादित्ये च संश्लिष्टे भवितुमर्हतः ; नैव स्वीये तत्तद्व्यापारे योजितौ भवतः, तदा अयं चेतनः कं वा आश्रयमवलम्ब्यावतिष्ठते ? इति याज्ञवल्क्यमुद्दिश्यार्तभागः पप्रच्छ ॥

438 ‘यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति’ (छां.उ. 6–8–1) 42

यस्मिन् काले अयं जीवः स्वापमवाप्त इति व्यवह्रियमाणो भवति ; तदा सच्छब्दितेन परमात्मना संश्लिष्टो भवति ॥

439 ‘यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति’ (छां.उ. 8–6–3) 42

यदा स्वापाख्यामवस्थां प्राप्तो जीवः उपरतकरणग्रामः तस्मादेव बाह्यविषयसम्पर्कनिबन्धनमालिन्यरहितश्च, तेनैव हेतुना स्वाप्नदर्शनमपि न प्रतिपद्यते ; तस्मिन् काले पुरीतद्गतब्रह्मसम्पत्तये तदनुगुणासु नाडीषु स प्रविष्टो वर्तते ॥

क्रमसंख्या — पृ. सं.

440 I ‘यत् साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व’ (बृ.उ. 5-4-1) 154

II ” ” ” 157

यद्वस्तु ब्रह्मशब्दमुख्यार्थभूतं, (परंब्रह्म) यदेव च सर्वेषु देशकालेषु संनिहितं, तत् मुमुक्षुभिः मोक्षोपायतया द्रष्टव्यं सर्वान्तर्यामि निरुपाधिकात्मभूतं च मह्यमुपदिश—इति याज्ञवल्क्यमुद्दिश्य उषस्तश्चाक्रायणः प्रार्थितवान् ।।

441 ‘यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि’ (तै.ना.उ. 80) 130

न्यासविद्यारूपे यज्ञे यजमानभूतः तद्विद्यानिष्ठः पुरुषः, प्रातर्मध्याह्नसायंकालेषु यादृशं यादृशं कर्मानुतिष्ठति ; तत् त्रैकालिकं त्रिविधमपि कर्मैव, प्रकृतयज्ञाङ्गभूतं सवनत्रयम् ।

442 I ‘यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति’ (छां.उ. 3-14-1) 191

II ” ” ” 192

III ” ” ” 294

IV ” ” ” 382

उपासकः पुरुषः अस्मिन्देहे उपासनकाले, स्वोपास्यं यादृशधर्मप्रकारेणोपास्ते ; अस्माद्देहादपक्रम्य स्वोपासिततत्त्वाधिगमकालेऽपि उपासितधर्मप्रकारकस्वोपास्यानुभववान् भवति ।।

443 ‘यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः’
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ।।’ (वि.ध. 104-55) 391

यथा धूल्यावृते रत्ने आवरणभूतो धूलिर्यदा अपसार्यते, तदा मणेः स्वाभाविक एव प्रकाश आविर्भवति ; न तु धूल्यपसारणेन मणौ प्रकाशः असन्नुत्पाद्यते ; तथा आत्मगतानामाविद्यकदोषाणां दूरीकरणे, आत्मस्वभावसिद्ध एव ज्ञानादिः प्रकाशमापाद्यते ; न तु नूतनतया उत्पाद्यते ।।

444 **यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।**
(मुण्ड.उ. 3-2-8) 217

गिर्यादिभ्य उच्चस्थानेभ्यः अधोधः प्रवहन्त्यो गङ्गाद्याः सरितः, स्वीयं गङ्गादिनाम शुक्लादिवर्णांश्च परित्यज्यैव महासागरं प्रविशन्ति खलु । तथैव निष्पन्नविद्यः पुरुषः जीवनकाले स्थितं स्वीयमौपाधिकं रूपं नाम च वर्जयित्वा, ज्योतिर्मयविग्रहं परमपुरुषं सयुग्भावेनाऽधिगच्छति ।।

445 **'यथा पशुः एवं सदेवानाम्'** (बृ. उ. 3-4-10) 11

यः स्वोपास्यां देवतां स्वात्मतया नोपासितुं प्रभवति; स तत्त्वज्ञो न भवति । अत एव च अनात्मभूतां देवतामेवोपास्य.यज्ञादिना केवलेनाराध्य, स्वर्गादिकं भोगस्थानं प्राप्य तत्र स्थितानां देवानां पशुवत् भोगोपकरणीभवति; न तु मुक्तिभाजनं भवति ।।

446 **'यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते,'** (छां. उ. 4-14-3) 360

यथा जलमध्य एव स्थितेऽपि पद्मपत्रे, जलं न लिप्तं भवति; तथैव प्रकृतविद्यानिष्ठे पुरुषेऽपि, विद्यामाहात्म्यात् पापकर्माणि न लिप्तानि भवन्ति; मोक्षप्रतिबन्धकानि न भवन्ति ।।

447 **'यथाऽश्मानमाखणमृत्वा विध्वंसते ; एवं हैव स विध्वंसते**
**य एवंविदि पापं कामयते'** (छां.उ. 1-2-8 ) 101

आखणम् - मृत्पिण्डाख्यं वस्तु, यथा दृढतरं शिलाखण्डं प्राप्य-सङ्घट्टितं भूत्वा, स्वयमेव नष्टं भवति, धूलितामापद्यते; न तु शिलाखण्डं विरूपयितुं प्रभवति ; तथैव उद्गीथविद्यानिष्ठं पुरुषं हिंसितुमपेक्षमाणो जनः, स्वयमेव नष्टस्वरूपो भवति ।।

448 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति' (छां उ. 6-9-1) 162

प्रियदर्शन हे श्वेतकेतो ! मधुमक्षिकाः (सरघाः) नानाविधानां वृक्षादिरसानां मेलनतः एकरसतापादनेन यथा मधु निष्पादयन्ति ; (वृक्षरसानां मधुभावानन्तरं च तेषु वृक्षरसेषु अहमहं अस्याऽस्य वृक्षस्य रसः इति विवेको नैव विद्यते ; एवमेव सर्वासां प्रजानामपि सच्छब्दिते परमात्मनि सम्पत्तौ जातायां, सत्सम्पन्नासु प्रजासु प्राक्तनं मिथो-विभेदज्ञानं नैवावशिष्यते) ।।

449 'यथेतमनेवं च' (ब्र.सू. 3-1-8) 26

450 'यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ? ।।' (विध. 104-56) 391

केनचित्पुरुषेण जलाशये निर्मिते सति, जलाशयगतोऽवकाशः तत्रस्थं जलं वा यथा न अनेन निर्मितं भवति ; किं तु पूर्वं स्थितमेव व्यक्ततामापद्यते ; तद्वत् सर्वत्रापि कारकव्यापारेण पूर्वं स्थितमेव प्रकटीकृतं भवति ; न असदेवोत्पादितं भवति ।।

451 'यदष्टाकपालो भवति' (तै.सं. 2-2-5) 200

जातेष्टौ द्वादशकपालः पुरोडाशो वर्तते प्रासनिर्वापः । तदन्तर्गतेन अष्टाकपालेन पुरोडाशरूपेण हविषा, अष्टाक्षरां गायत्रीं साधनतया परिगृह्य, तद्द्वारा ब्रह्मवर्चसं बालस्य सम्पाद्य बालमेनं पवित्रीकरोति ॥

452 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽनुपश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ।।
(छां. उ. 5-2-8) 41

फलाभिसन्धानपूर्वकं कर्मणामनुष्ठाने प्रवृत्ते सति, कर्मानुष्ठाता पुरुषो यदा स्वप्नदशायां स्त्रियं पश्यति ; तदा उत्तरत्र काम्यार्थ-समृद्धिर्भवित्रीति सूच्यते तेन स्वप्नेन ।।

क्रमसंख्या | पृ. सं.

453 I 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति ॥'
(मुण्ड. उ. 3-1-3) 206

II 'यदा पश्यः ... म्यमुपैति' ॥

III 'यदा पश्यः पश्यते रुक्मवर्णम्' 288

ब्रह्मदर्शनप्रवृत्तः पुरुषः, उपासनदशायां, यदा सुवर्णमयदेदीप्यमानविग्रहं परमात्मानं साक्षात्करोति ; तदा निष्पन्नोपासनःसन्, सर्वपुण्य-पापविधूननपूर्वकं परमात्मना सह परमसाम्यमधिगच्छति ॥

454 I 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति, स वायुमागच्छति, तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं, तेन स ऊर्ध्वमाक्रमते, स आदित्यमागच्छति, तस्मै स तत्र विजिहीते, यथा आडम्बरस्य खं, तेन स ऊर्ध्वमाक्रमते, स चन्द्रमसमागच्छति, स तत्र विजिहीते, यथा दुन्दुभेः खम्, (बृ. उ. 7-10-1) 362

II 'यदा वै पुरुषोऽस्मा .... स आदित्यमागच्छति'

ब्रह्मवेदी पुरुषः, यदा देहादस्मादपक्रम्य परं पदं प्राप्तो भवति; तदा (अर्चिरादिकानातिवाहिकान् प्राप्य) वाय्वभिमानिनीं देवतामवाप्नोति ; स च वायुः तस्मै ब्रह्मविदे (स्वद्वारा ऊर्ध्वगमनाय) स्वावयवान् रथचक्रपरिमितावकाशसम्पन्नान् करोति । तद्द्वारा च सः ऊर्ध्वं स्थानमाक्रम्य आदित्यलोकं गच्छति । स चादित्यः तस्मै स्वस्मादूर्ध्वं गन्तुं स्वस्यावयवान् आडम्बराख्यवाद्यपरिमितावकाशवतः करोति । तद्द्वारा चाऽयं ब्रह्मवित्, चन्द्रमण्डलाभिमानिनं पुरुषं प्रतिपद्यते । सच चन्द्रः तस्मै स्वोर्ध्वगमनाय स्वावयवान् दुन्दुभिपरिमितावकाशवतः करोति । तद्द्वारा चाऽयमूर्ध्वमाक्रम्य, निरामयं ब्रह्मस्थानं प्राप्य, निरवधिकं तत्रैव मोदते ॥

क्रमसंख्या पृ. सं.

455 I 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (कठ.उ. 6–14) 334

II 'यदा सर्वे प्र.........मश्नुते' (बृ.उ. 6–4–7) 338

III ,, ,, 336

उपासकस्याऽस्य पुरुषस्य यदा हृद्गताः सर्वेऽप्यभिलाषाः अनवशेषेण शमं याताः, ततोऽयमुपासको मानवः, विश्लिष्टाश्लिष्टपूर्वोत्तरसमस्तदुरितभरो भूत्वा, एतद्देहधारणसमये एव, उपासनायाः परां काष्ठामधिरूढो ब्रह्मानुभवति ॥

456 I 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ॥ यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ॥'
(तै.उ आन. 7–2–1) 39

II 'यदा ह्येवैष एत... ऽभयं गतो भवति' ,, 418

अयमुपासको यदा यादृगस्थितौ वा, कर्मायत्तशरीररहिते अत एवेन्द्रियागम्ये, अनिर्वचनीयाश्चर्यस्वरूपस्वभावे, स्वे महिम्न्येव प्रतिष्ठिते परमात्मनि, स्वस्याभयतासिद्ध्यौपयिकीं दृढां निष्ठामधिगच्छति ; तदैव वस्तुतोऽभयं लभते । यदा पुनः स्वोपास्ये ब्रह्मणि ध्याननिष्ठां शिथिलीकरोति ; तदनुपदमेव तस्य महद्भयं सम्प्राप्तं भवति ॥

457 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' (कठ.उ. 2–12) 245

यादृशं ब्रह्म प्राप्यभूतं प्राप्तुकामाः मुमुक्षवः, गुरुकुलवास-ग्राम्यभोगासक्तिवर्जनादिकं ब्रह्मचर्याभिधमनुतिष्ठन्ति ; (तस्य ब्रह्मणो वाचकं सङ्क्षेपेणोपदिशामि भवते मुमुक्षवे नचिकेतसे—'ओम्' इति) ॥

(प्र. 'य आत्मनी'त्यत्र, आत्मपदस्थाने ' पृथिवी ' पदं निवेश्य)

467 I ‘यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते ; स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति’
(छां.उ. 5-18-1) 199

II ‘यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते’ 198

य एवोपासकः, विभुत्वतः अपरिच्छिन्नस्वरूपं, विश्वेषां नराणां नेतृत्वेन वैश्वानरपदाभिधेयं परमात्मानं, द्युप्रभृतिप्रदेशपरिच्छिन्नमुपास्ते; सः सर्वलोक-सर्वभूतसर्वात्मवर्तिनिरतिशयभोग्यभूतम आनन्दैकतानं ब्रह्मानुभवति ॥ (बुद्धिसौकर्याय द्युप्रभृतिप्रदेशावच्छिन्नत्वकीर्तनम्) ॥

468 I ‘यस्मात् परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्तिकश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्’ ॥
(तै.ना.उ. 10-20) (श्वे.उ. 3-9) 79

II ‘यस्मात्परं नापर........न ज्यायोऽस्ति कश्चित्’ ,, 81

यस्मात् परस्माद् ब्रह्मणोऽन्यत् सर्वाधिकं वस्तु नैवाऽस्ति, सर्वान्तः प्रवेशानुगुणसूक्ष्मतमत्व-सर्वदेशसम्बद्धत्वौपयिकमहीयस्त्ववच्च यतोऽन्यत् नैवास्ति, य एव चैकः पुरुषाभिधः अकम्प्यः सर्वोच्छ्रितश्च सन् द्युरूपे सर्वोन्नते स्थाने सर्वदेवेभ्योप्युत्कृष्टस्थितिमान् विराजते, तेन परमपुरुषेण सर्वमिदं विश्वं व्याप्तं सत् तदात्मकं तदधीनं चास्ति ॥

469 ‘यस्य देवे परा भक्तिः’ (श्वे.उ. 6-23) 272

यस्य चेतनस्य भगवति परमात्मनि निरतिशया प्रीतिः, (तस्य शास्त्रोक्तास्तत्त्वार्थाः स्फुटमवभासन्ते) ॥

470 ‘याज्ञवल्क्येति होवाच—यत्राऽयं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो न? (बृ.उ. 5-2-11) 340

जारत्कव आर्तभागः याज्ञवल्क्यं सम्बोध्य पप्रच्छ—अयं जीवो यदा अस्माद्देहादुत्क्रामति, तदा अस्मादुत्क्रममाणाज्जीवात् (जीवं विहाय) एतदीयाः प्राणाः यथायथं यत्र कुत्रचित् गच्छन्ति? उत जीव एव सम्बद्धाः सन्तः तेन सहैवोत्क्रामन्ति?—इति ॥

492 I ‘**रमणीयचरणाः……..कपूयचरणाः**’ (छां.उ. 5-10-7) 30

II ” ” ” 30

III ‘**रमणीयचरणाः**’ ” ” 15

(प्र. ‘तद्य इह’ इत्यत्र)

493 ‘**रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति**’ (तै.उ.आन. 7-1) 386

‘**रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति**’ (तै.उ.आन. 7-1) 418

‘सुकृत’ शब्देन निर्दिष्टं ब्रह्मैव खलु आनन्दः। आनन्दभूतं ब्रह्म प्राप्यैव यतः अयं जीवः आनन्दवान् भवति ॥

494 ‘**लोकेषु पञ्चविधं सामोपासीत**’ (छां.उ. 2-2-1) 194

हिङ्कार-प्रस्ताव-उद्गीथ-प्रतिहार-निधनाख्येषु क्रत्वङ्गभूतसामसम्बन्धिषु विभक्तेषु पञ्चसु प्रकारेषु यथाक्रमं पृथिवी-अग्नि-अन्तरिक्ष-आदित्य-द्युरूपलोकपञ्चकदृष्टिकमुपासनं कार्यम्। (इदमारोहक्रमे)। (अवरोहक्रमे तु) हिङ्कारादिनिधनान्तेषु यथाक्रमं द्यु-आदित्य-अन्तरिक्ष-अग्नि-पृथिवीदृष्टयः कार्याः ॥

495 ‘**वचनानि त्वपूर्वत्वात्**’ (पू.मी.सू. 3-5-21) 186

श्रुत्यादिगतानि वचनानि, क्वचित् अनुवादस्वरूपाणि सन्त्यपि, विधायकान्येव भवन्ति। यतः तद्वाक्ययोऽर्थः, पूर्वं प्रमाणान्तरेण न प्राप्तः। अप्राप्तार्थप्रापको हि विधिरेव ॥ ‘विधिरत्यन्तमप्राप्ते’ इति मीमांसकमर्यादा ॥

496 ‘**वर्णा आश्रमाश्च स्वकर्मनिष्ठाः, प्रेत्य कर्मफलमनुभूय, ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते। विष्वञ्चो विपरीता भवन्ति ॥**’

(गौत.ध.सू. 2-11-12, 13) 14

चातुर्वर्ण्य-चातुराश्रम्यप्रविष्टाः पुरुषाः, विहितेषु स्वस्वकर्मस्वस्खलित-वृत्तयः सन्तः, जीवितान्ते कर्मानुगुणानि भोगस्थानानि प्राप्य, यथायोग्यं फलानि चोपभुज्य, फलदकर्मणां क्षये सति पुनर्मर्त्यं लोकमवरोहन्तः, भुक्तशिष्टेन कर्मणा रमणीयेन, उत्तमदेश-जाति-सत्कुल-सुरूपदेहसम्पत्ति-मन्तो भूत्वा, दीर्घं चायुरवाप्य, गुरुषु सच्छास्त्रश्रवणं लब्ध्वा, धर्माचरण-भोगोपयोगि विपुलं धनमपि प्राप्य, अनुष्ठीयमानसाधुकर्माणः, भोगं च समीचीनमनुभूय, स्वपरहितकरीं मेधां चावाप्तवन्तो यथा स्युः तथा जन्म लभन्ते । विपरीतास्तु विपरीतम् ॥

497 **'वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय ।**
**कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ? ॥'** (वि.पु. 2-6-45) 55

लोके हि गृहारामपत्नीपुत्रस्रक्चन्दनादिरूपमेकविधमेव वस्तु, कस्यचन सुखं कस्यचिद्दुःखं च जनयतीत्येतत् सर्वविदितम्। तथैव कस्यचन ईर्ष्यारोषादि, कस्यचन प्रसन्नभावश्च तैर्जायत इत्येदपि अवगतम् । अतः किमपि वस्तु ईदृशमेवेति निर्णीतस्वभावं न भवति ॥

498 **'वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः'** (छां.उ. 3-18-1) 78

मनोरूपं ब्रह्म, वाक्प्राणचक्षुःश्रोत्राख्यपादचतुष्टयोपेतमिति, मनः चतुष्पाद् ब्रह्म । एतेषु मनःपादता च मनोनियाम्यत्वात् । सर्वस्याऽपि हि पादाः नियाम्या भवन्ति ॥

| | | | |
|---|---|---|---|
| 499 I | **'वाङ्मनसि सम्पद्यते, मनः प्राणे'** | (छां.उ. 6-8-6) | 329 |
| II | **'वाङ्मनसि सम्पद्यते'** | ,, | 325 |
| III | ,, | ,, | 325 |
| IV | ,, | ,, | 326 |
| V | ,, | ,, | 347 |
| VI | ,, | ,, | 411 |

522 ‘शब्दान्तरे कर्मभेदः’ (कृतानुबन्धत्वात्) (पू.मी.सू. 2-2-1) 204

श्रुत्यादिगतेषु वाक्येषु, विधेयप्रतिपादकशब्दानां मिथोभेदे उपलभ्यमाने, तत्तच्छब्दविधेयस्वरूपेऽपि मिथोवैलक्षण्यं स्वीकार्यम् । विधेयभेदज्ञापनौपयिकानां धात्वर्थादीनामनुबन्धानां विधेयवाक्ये कृतत्वात् ॥

523 शरीरजैः कर्मदोषैः याति स्थावरतां नरः’ (म.स्मृ. 1-2-9) 32

चेतनः स्वीये शरीरे उत्पन्नैः क्रियादोषैः, लतागुल्मवृक्षादिस्थावरभावं प्राप्नोति ॥

524 ‘शरीरं यदवाप्नोति यच्चाऽप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥’ (भ.गी. 15-8) 6

स्वीयशरीरस्य नियमनसमर्थत्वात् तत्रेश्वरभूतो जीवः, यदा पूर्वं देहं परित्यज्य देहान्तरं गृह्णाति, यदा च अधिष्ठानतया स्थिताद्देहादुत्क्रान्तो भवति ; तदा भोगसाधनभूतानि कर्मज्ञानेन्द्रियाणि, तदाहिता वासनाश्च परिगृह्यैव गमनशीलो भवति ; वायुर्यथा सुरभ्यसुरभिगन्धयोराश्रयभूतात्कुसुमात् दूरे प्रसरन् कुसुमगतान् विविधानपि गन्धान् गृहीत्वैव प्रसरति तथा ॥

525 ‘शान्तो दान्तः’ (बृ.उ. 6-4-23) 271

(प्र. ‘तस्मादेवंवित्’ इत्यत्र)

526 ‘शास्त्रफलं प्रयोक्तरि’ (पू.मी.सू. 3-7-18) 268

फलविशेषार्थम् कर्तव्यविशेषविधायकं शास्त्रम्, विहितस्यार्थस्य अनुष्ठातर्येव तदनुष्ठानफलं प्रयोजयति ; नत्वन्यत्र । कार्य-कारणयोः ऐकाधिकरण्यस्य लोकवेदसिद्धत्वात् । तस्मात् फलकामी तत्साधनभूतं कर्म स्वयमेवाऽनुतिष्ठेत् ॥

527 I ‘शुक्रं प्रविध्य हृदयं प्रविध्य’ (आथर्व) 132
II ,, ,, 134

(हे देवते ! मयाहूता त्वं पूजिता प्रार्थिता च सती), अस्मच्छत्रोः

क्रमसंख्या | पृ. सं.

चतुष्टयम् , प्रकाशवान्नामैकः पादः । षष्ठे—'पृथिवी-अन्तरिक्षं-द्यौः-समुद्रः' इत्येवं कलाचतुष्टयम् , अन्तवान्नामैकः पादः । सप्तमे—'अग्निः सूर्यः-चन्द्रः-विद्युत्' इत्येवं कलाचतुष्टयम् , ज्योतिष्मान् नामैकः पादः । अष्टमे—'प्राणः-चक्षुः-श्रोत्र-मनः' इत्येवं कलाचतुष्टयम् , आयतनवान्नामैकः पादः इत्युक्तम् । उक्तैरीदृशैश्चतुर्भिः पादैः सम्भूय ब्रह्म षोडशकलया उन्मितं भवति (भा.द.)

538 **'स आगच्छति विरजां नदीं । तां मनसाऽत्येति । तत् सुकृत-दुष्कृते धूनुते ॥'** (कौषी.उ. 1–37) 140

ब्रह्मवेदी जीवः, देहादुत्क्रान्तः, प्रकृतिमण्डलादुपरि विद्यमानां विरजानाम्नीं नदीं प्राप्नोति । तां च नदीं मनसैवोलङ्घ्य तस्याः परं पारं लभते । देहादुत्क्रमणकाले एव च पुण्य-पापात्मकानि कर्माणि स्वस्माद्विधूय परिशुद्धो भवति ॥

539 **'स आत्मानमुपासीत ; मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्प-माकाशात्मानम्'** (अग्नि.ब्रा. 1–10–6) 122

विशुद्धमनोमात्रग्राह्यं, प्राणस्याऽपि धारकं, निरतिशयदीप्तियुक्त-दिव्यविग्रहोपेतम् , अप्रतिहन्यमानस्वसङ्कल्पम् , अव्याकृताकाशस्यापि धारकं सर्वात्मभूतं परमात्मानं ध्यायीत ॥

540 **'स आपः प्रदुघे उभे इमे'** (तै.ना.उ. 1–9) 80

सृष्टिकर्मणि प्रवृत्त ईश्वरः अपः—तदुपलक्षितं निखिलं भूतजातं, तथैव स्वर्गान्तरिक्षे द्वे अपि स्थाने धेनुः क्षीरमिव लीलयैव ससर्ज ॥

541 **'स उत्तमः पुरुषः । स तत्र पर्येति, जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा । नोपजनं स्मरन्निदं शरीरम् ।'** (छां.उ. 8–12–3) 171

अवाप्तभगवत्प्रसादेन ब्रह्म विदुषा चेतनेन प्राप्यः, पुरुषोत्तमः ।

प्राप्तो चेतनश्च तस्मिन् पुरुषोत्तमे वए सर्वांशानुभवेन संलग्नो भवति । स्त्री यान-ज्ञात्यादीन्युपकरणीकृत्य जक्षण-क्रीडन-रन्तृत्वादियुक्त इव भासमानोऽपि, भगवदनुभवैकतान एव सः । तस्मिन् समये, जीवनकालीनाहं-ममत्वाद्यास्पदानि स्वशरीर-बन्ध्वादीन्यपि नैव स्मरति ॥

542 I **'स एकधा भवति त्रिधा भवति पञ्चधा। सप्तधा'** (छां.उ. 7–26–2) 406

II **'स एकधा भवति त्रिधा भवति'** ,, 143

ब्रह्मप्राप्तो जीवः, भगवत्सङ्कल्पानुरोधिस्वसङ्कल्पेन एक-द्वित्रि-पञ्च-सप्तादि विविधदेहानवाप्तः सन् भगवत्कार्यनिर्वहणव्यग्रो भवति ॥

543 I **'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाऽकामहतस्य'** (तै.उ.आन. 8–4)

II ,, ,, ,, 206

III ,, ,, 60

IV ,, ,, 225

मानुषानन्दमारभ्य शतगुणितोत्तरक्रमेणाऽभ्यस्यमानो यः प्रजापतेरानन्दः तस्यापि शतगुणितत्वोपलक्षितः, वाङ्मनसापरिच्छेद्यः परस्य ब्रह्मण आनन्दो भवति । सः अकामहतस्य ब्रह्मनिष्ठस्याऽपि समानः । ब्रह्मान्यूनानन्दवान् भवति मुक्तात्मा ॥

544 I **'स एतं देवयानं पन्थानमापद्याऽग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स आदित्यलोकं स ब्रह्मलोकम्'** (कौषी.उ. 1–2) 361

II **'स एतं दे.... स ब्रह्मलोकम्'** 367

III **'स एतं....स वायुलोकम्'** ,, 365

IV **'स एतं देव....मागच्छति'** ,, 140

देहादपक्रमणकाले एव निर्धूतसमस्तकर्मा ब्रह्मविद्वरः, अग्नि-वायु-

वरुण-आदित्य-इन्द्र-प्रजापतिलोकान् (अर्चिरादिपथेन) लब्ध्वा, ततः प्राप्य काष्ठाभूतं ब्रह्मलोकं प्रतिपद्यते ।

545 **'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवाऽन्ववक्रामति'** (बृ. उ. 6-4-1) 339

प्रस्तुत एष चेतनः, (मरणकाले) तेजोमात्रा (किंचिन्मात्र-प्रकाशक) रूयानीन्द्रियाणि सवासनं परिगृह्णन् देहमध्यगतं हृदय-स्थानमेव अनुधावन् क्रामति । (इदमेव स्वप्नवैलक्षण्यम्)

546 **'स एतान् ब्रह्म गमयति'** (छां. उ. 4-15-6) 372

(प्र. 'अथ यदु चैवे' स्यत्र)

547 **'स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः'** (अग्नि. ब्रा. 10-5-2-13) 187

य एष आदित्यमण्डले पुरुषो वर्तते, स एव सर्वसंहर्तृत्वरूपेण मृत्युसदृशःसन् मृत्युपदव्यपदेश्यो भवति ॥

548 I **'स एष नेति नेत्यात्मा'** (बृ. उ. 6-4-22) 167

II ,, ,, 170

उदानप्रतिष्ठाया आधारभूतस्य समानस्य प्रतिष्ठाया आधारभूतः परमात्मा, (लौकिकसर्ववस्तुविलक्षणत्वात्), परमात्मसत्ताया इतर-वस्तुविलक्षत्वेन इतरवस्तुवत् अस्तीति इन्द्रियैर्ग्रहणानर्हत्वतः नेति नेत्येव ग्राह्यो भवति ।

549 **'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः'** (छां. उ. 1-1-3) 238

सोऽयमुद्गीथावयवः प्रणवः, भूतानां रसमारभ्य, सामरसभूतो-द्गीथरूपत्वात् सर्वसारभूतः, सारेषु पृथिव्यादिष्वष्टमः । अतः सर्वोत्कृष्टत्वादवश्यमुपास्यः ॥

577 I 'स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति' (छां. उ. 8-2-1) 403

II 'स यदि पितृलोककामो भवति' ,, 170

दहरोपासनतः मुक्तानामकर्मवश्यानां जीवानां, सङ्कल्पो यदि भवेत् ' प्राचीनानेकपितृदर्शनं मम भूयादिति, तदा तावन्मात्रेण सर्वे पितरोऽस्य समुत्थिताःदृष्टिविषया भवन्ति ॥

578 'स यो नाम ब्रह्मेत्युपास्ते' (छां. उ. 7-1-5) 297

यः पुरुषः नाम-(शब्दजातं) ब्रह्मदृष्ट्या उपासीनो भवति ; तस्य, नाम्नां-व्याप्तिर्यावति देशे, तावदन्ते देशे अप्रतिहतः सञ्चारो भवति ॥

579 I 'स यो है (ह वै तन्महद्यक्षं प्रथमजं वेद, सत्यं ब्रह्मेति, जयतीमान् लोकान्' (बृ. उ. 7-4-1) 163

II 'स यो... सत्यं ब्रह्म' ,, 164

य उपासकः, महत्त्वगुणविशिष्ट पूजार्हं सर्वेभ्यःप्रथमजातं हृदयं 'सत्यं ब्रह्म' इत्युपास्ते, सः सर्वानिमान् लोकान् स्वायत्तीकरोति ॥

580 'स यो हैतदेवं लोकम्पृणामेनं भूतमेतत् सर्वमभिसम्पद्यते' (अग्नि. ब्रा. 10-5-4-18) 188

यःखलूक्तया रीत्या, प्रस्तुतमग्निं लोकम्पृणात्वेन - सर्वलोकपूरकत्वयुक्ततया उपास्ते, तादृशमुपासकं, सर्वमप्येतद्भूतजातम् शेषभावेनाश्रयति ॥

581 'सर्वकर्मा सर्वगन्धः सर्वरसः' (छां.उ. 3-14-2, 4) 152

उक्तः परमात्मैषः, सर्वजगन्निर्माता (सर्वैः कर्मभिः समाराध्यो वा) अप्राकृतस्वासाधारणनिरतिशयदिव्यगन्धरसादियुक्तः ॥

582 I 'सर्वं खल्विदं ब्रह्म तज्जलानिति' (छां.उ. 3-14-1) 295

II ,, ,,

III ,, ,, 219

क्रमसंख्या पृ. सं.

IV ‘सर्वं खल्विदं ब्रह्म’ (छां.उ. 3-14-1) 394

ब्रह्माधीनसृष्टिस्थितिलयवत्त्वात् हेतो, इदं सर्वं जगत्, ब्रह्मतादात्म्यवदेवे ति शान्त सन् उपासीत ॥

583 ‘सर्वज्ञः सर्व(कृत) वित् सर्वशक्तिज्ञानबलर्द्धिमान्’ (वि.पु 5-1-46) 60

**अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो बुद्धिमान् वशी ।**

**क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ।** (वि.पु. 5-1-47)

**निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः ॥’** (वि.पु. 5-1-48)

विश्वगताखिलतत्तदर्थ-तद्गत तत्तत्सर्वप्रकारोभयविषयकास्खलितज्ञानवान्, (सर्वनिर्माणकारणभूतः) सर्वविधाचिन्त्याश्चर्यशक्ति-ज्ञानबलैश्वर्यपूर्णः, वृद्धि-क्षयाख्यविकारास्पृष्टः, स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिः, इतरानधीनस्वीयस्वरूपस्वभावादिः, जगत्कारणत्वानुगुणसार्वज्ञ्यवान्, सर्वप्रशासितृत्वप्रयोज्यसर्वधारकत्ववान्, ग्लान्यालस्यभीतिकोपाभिलाषादिसांसारिकदोषदूरः, अपुरुषार्थभूतहेयसम्बन्धविधुरः, प्राप्यपराकाष्ठारूपः, (कर्मज्ञानेन्द्रियागोचरवैभवो वा) स्वे महिम्नि प्रतिष्ठितत्वादाधारान्तरशून्यः, क्षरणस्वाभाव्यवच्चेतनविलक्षणः, अप्रतिरुद्धव्याप्त्युत्साहवृद्ध्यादिमान्, पादाक्रान्तलोकत्रयः, (सर्वमर्यादारक्षको वा) ; भगवान् परब्रह्मभूतो नारायणः ॥

584 ‘सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद’ (बृ.उ. 6-5-7) 296

यः खलु, इदं जगत् तदन्तर्गतं वस्तुजातं च, परमात्मनः पार्थक्येन स्वनिष्ठतयाऽवस्थितमिति भ्राम्येत्; तं चेतनं, सर्वशरीरकत्वात् स्वापृथक्सिद्धविश्वकं परं ब्रह्म, अभिभवेत्—दूरीकुर्यात् । (न स्वोपासकतया परिगृह्णीयात्) ॥

585 ‘सर्ववर्णानां स्वधर्मानुष्ठाने परम् अपरिमितं सुखम्’

(आप.ध.सू. 2-1-22) 32

चातुर्वर्ण्यप्रविष्टानां सर्वेषामपि, विहितधर्माचरणतः सर्वातिशायि अनवधिकं सुखमामुष्मिकं सिद्ध्यति ।

क्रमसंख्या पृ. सं

594 'स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके' (छां.उ. 8-12-5) 411

प्रस्तुतोऽयं जीवो देहेन्द्रियादिभ्यो विलक्षण:, कर्मकृतशरीरादिविमुक्तः सन्, 'मन:' शब्दितेन दिव्यज्ञानेन, ब्रह्मलोकाख्ये दहराकाशे विद्यमानान् सर्वानपि कल्याणगुणान् अनुभवन्, आनन्दी भवति ।।

595 'स वा एष महानज आत्माऽन्नादो वसुदानः' (बृ.उ. 6-4-24) 85

निरूपित एष परमात्मा, व्यापको जन्मादिविकारास्पृष्टस्वरूपः, स्वोपासकानां चेतनानामैहिकामुष्मिकभोग-तत्साधनप्रद:, स्वात्मन एव प्रदाता च ।।

596 'स वा एष महानज आत्माऽमरः' (बृ.उ. 6-4-25) 73

वर्णित एष परमात्मा, व्यापको जन्मादिविदूरः ।।

597 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते । सर्वस्य वशी सर्वस्येशानः' (बृ. उ. 6-4-22) 165

प्रक्रान्तनिरूपणविषयः परमात्मा, सर्वव्याप्तस्वरूपः, जन्माद्यनन्वितः, इन्द्रियमुख्यप्राणयोर्मध्यगे विज्ञानमयशब्दिते (ज्ञानरूपे ज्ञानधर्मके च) हृदयान्तःस्थानगे स्वयंप्रकाशे जीवे अन्तर्यामिभावमाप्तः, गुप्तोऽवतिष्ठते । स च स्वाधीनसकलदेवताकः सर्वधारकः, प्रशासनतः सर्वनियन्ता च ।।

598 'स वायुमागच्छति, तस्मै स तत्र' (बृ. उ. 7-10-1) 366

(प्र. 'यदा वै. पुरुषः' इत्यत्र)

क्रमसंख्या — पृ. सं.

599 I 'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति' (छां. उ. 7-25-2) — 143

II ,, ,, ,, — 171

III ,, ,, ,, — 199

IV ,, ,, ,, — 416

V ,, ,, ,, — 404

श्रवण-मनन-निदिध्यासनैः साधनैः, भूमाख्यात्मसाक्षात्कार-निष्ठश्चेतनः, विधिनिषेधाकिङ्करस्वरूपमकर्मवश्यत्वमधिगतो भवति । एवंविधां मुक्तावस्थामधिगतः सन् ब्रह्मविभूतिभूतान् विकारलोकानप्यनुभूय यथाकामं तृप्यति ॥

600 'सह नाववतु' (तै. उ. आन. शां. पा) — 133

अधीतः अध्येष्यमाणश्च वेदः, अध्येत्रध्यापयितारौ शिष्याचार्यभूतौ आवां, सहैव आयुः - अध्ययन-विद्यादीन् अविच्छेदेन प्रदाय संवर्ध्य च रक्षतु ॥

601 I 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥' (तै. ना. उ. 11-1) — 177

II 'सहस्रशीर्षम्' ,, — 177

सर्वेषु चेतनेष्वन्तःप्रवेशात् (स्वयमेव वा) असङ्ख्यातशिरसं, नित्यनिरन्तरस्वप्रकाशैकस्वभावम्, (सर्वप्रकाशकं च) सर्वेष्वप्यर्थेषु अप्रतिहतदृष्टिकम्, विश्वक्षेमङ्करम्, सर्वतादात्म्यकृतविश्वरूपत्ववन्तं, सर्वचेतनाचेतनशरण्यैकस्वरूपस्वभावम्, षड्भावविकारातीतं, सर्वस्वामिनं परमात्मानं नारायणमुपासीत ॥

क्रमसंख्या | पृ. सं.

602 'स होवाच । किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवति । अनग्नो भवति ॥' ( छां. उ. 5-2-2 ) 119

मुख्यः प्राणः इतरान् प्राणान् (इन्द्रियाणि) उद्दिश्य पृष्टवान्– हे प्राणाः ! मम आच्छादनोपयोगि किं वा भवितुमर्हति ? - इति । त ऊचुः–आप एव भवत आच्छादनार्था भवन्तीति । तत एव हेतोः इदानींतने कालेऽपि, भोजनकर्मप्रवृत्ताः शिष्टाः, भोजनात् प्राक् पश्चाच्च अद्भिराचम्य, प्राणमाच्छादितं कुर्वते । एतादृशार्थचिन्तनेन च, लब्धवासाः सन्, जीवनकाले अनग्नो जीवति ॥

603 I 'सुहृदः साधुकृत्याम्' ( शाट्यायनकम् ) 317

II ,, ,, 319

उपासानिर्वृत्या मोक्ष्यमाणस्य पुरुषस्य देहादपक्रामतः, सुकृताख्यानि सर्वाणि कर्माणि, तस्य प्रिया जनाः स्वीकुर्वन्ति ॥

604 'सृजते स हि कर्ता' (बृ. उ. 6-3-10) 36

(प्र. 'न तत्र रथाः' इत्यत्र)

605 'सेयं देवतैक्षत' ( छां. उ. 6-3-2 ) 162

प्रक्रान्तनिरूपणा सच्छब्दाभिहिता परमात्मरूपा सर्वातिशयिता देवता, वक्ष्यमाणप्रकारेण सङ्कल्पितवती ॥

606 I 'सोऽकामयत । बहु स्यां प्रजायेय' ( तै. उ. आन. 6-2 ) 117

II ,, ,, ,, 77

III ,, ,, ,, 118

आनन्दमयः परमात्मा, स्वस्य नानारूपेण बहुभवनं, प्रकर्षेण जनिं च ऐच्छत् ॥

क्रमसंख्या — पृ. सं.

III ' स्वेन रूपेणाऽभिनिष्पद्यते ' (छां.उ. 8-12-2) 389

IV ' स्वेन रूपेण ' ,, 387

V ,, ,, 388

(प्र. ' अस्माच्छरीरात् ' इत्यत्र)

614 'हन्ताऽसुरान् यज्ञ उद्गीथेनाऽत्ययाम ' (बृ.उ. 3-3-1) 105

अस्मत्प्रतिपन्थिनोऽसुरान् (प्रजापतिप्रसूतान्), यज्ञाङ्गभूतेनोद्गीथेन अध्यस्तप्राणभावेनोद्गात्रा—उद्गातरि प्राणदृष्टिरूपेणोपासनेन साधनतयाश्रितेन, अतितरेम इति, उपायस्फूर्तिकृतहर्षपुरःसरं देवा उक्तवन्तः ।

615 ' हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य ' (छां.उ. 6-3-2) 71

सेयं सच्छब्दिता परा देवता परमात्मरूपा, सङ्कल्पितवती—इमाः पृथिव्यप्तेजोरूपाः तिस्रो देवताः (साभिमानिदेवताकानि पृथिव्यप्तेजांसि), जीवसमष्टिविशिष्टेनात्मना-स्वेन अनुप्रविष्टाः कृत्वा, ततः देवादिविविधवैचित्र्यसृष्टिं, तत्तदनुगुणानि तत्तन्नामधेयानि च, सम्पादयानि—इति ॥

616 I ' हन्ति पाप्मानं जहाति च य एवं वेद ' (बृ.उ. 7-5-2) 163

II ' हन्ति पाप्मानं जहाति ' 7-5-3 164

आदित्यमण्डलान्तर्वर्तिनं सत्यपुरुषं, यः अहरिति अहमिति च रहस्यनाम्ना उपास्ते ; सः ज्ञानविरोधि निखिलं पापं नाशयति । अपुनस्संश्लेषं दूरतो जहाति च ॥

617 ' हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति ' ( ? ) 32

देवोद्देशेन यागीयहवीरूपेणोपयुक्तः पशुः, तेजोमयीं दिव्यां मूर्तिमाश्रितः सन्, सुकृतफलानुभवयोग्यं स्वर्गाख्यं दिव्यं स्थानं प्रति, ऊर्ध्वाभिमुख्येन प्रयाति ॥

क्रमसंख्या | पृ. सं.

618 ‘ **हिरण्येन षोडशिनः स्तोत्रमुपाकरोति** ’ ( ? ) 138

हिरण्यनिधानेन, षोडशिनामकग्रहसम्बन्धिस्तोत्रं गातुमारभते ॥

619 ‘ **हृदयं प्रविध्य** ’ (आथर्व) 134

(प्र. ‘ शुक्रं प्रविध्य ’ इत्यत्र)

620 ‘ **होतृषदनाद्धैवाऽपि दुरुद्गीथमनुसमाहरति** ’ (छां.उ. 1-5-5) 210

वेदनेन—उपासनेन रहितं उद्गीथं—(दुरुद्गीथं), होतृकर्तृक-प्रणवोद्गीथाभेदज्ञानमाहात्म्यात् समाहरति-निर्दोषमापादयति ॥

ऋतुनाथान्वयजनुषा रचिता श्रीरामभद्रविदुषेयम् ।
विवृतिः शुभाय भूयात् श्रीभाष्यगतप्रमाणजातस्य ॥

श्रीहरिः प्रीयताम्

अस्मद्गुरुभ्यो नमः ॥

—o—

# ३–४ अध्याययोः पदार्थकोषः

1 **अकामकारः**—प्रवृत्तिस्वाच्छन्द्यनिवर्तनम्

2 **अकृत्स्नः**—अपूर्णः

3 **अक्षमत्वम्**—सामर्थ्याभावः

4 **अग्नयः**—अग्न्याधाराः इष्टकचिताः स्थण्डिलविशेषाः

5 **अग्नीन्धनम्**—श्रौताग्निसिद्ध्यौपयिकम् आधानकर्म

6 **अग्नीषोमीयः (पशुः)**—ज्योतिष्टोमाङ्गः अग्नीषोमदेवताकः पशुः

7 **अघस्य विनाशकरणम्**—उत्पन्नाया अघ (पाप)शक्तेर्विनाशनम् (भा)

8 **अघस्याऽश्लेषकरणम्**—(उत्पन्ने अघे) वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्ति

प्रतिबन्धकरणम् (भा)

9 **अङ्गत्वम्**—नियतोपकारकत्वम्

10 **अचोदनम्**—अविहितत्वम्

11 **अतिक्रान्तः**—भूतः, प्राक्तनः

12 **अतिग्रहाः**—यज्ञियपात्रस्थद्रव्याणि (इन्द्रियार्थाः शब्दादयः)

13 **अतिदेशः**—सादृश्यादितः प्रापणम्

14 **अतिवदति**—स्वोपास्यं सर्वोत्कृष्टत्वेन वदति

15 **अतिवहनम्**—गन्तॄणां गमयितृत्वम्

16 **अतिशयः**—उत्कृष्टता

17 **अत्ययाम**—जयेम, सर्वानतिक्रम्य वर्तामहे

18 **अधिकः**—अर्थान्तरभूतः

19 **अधिकारः**—अतिदेशः

20 ,, —फलापेक्षाप्रयोज्यः कर्मसु सम्बन्धः

21 ,, —शास्त्रसिद्धा कर्मादियोग्यता

22 **अधिकारलक्षणम्**—अधिकाररूपार्थनिरूपणप्रवृत्तः पूर्वमीमांसागतः षष्ठोऽध्यायः

23 अधिकारापादनम्—कर्मादियोग्यताधानम्

24 अधिकृत्य—विषयीकृत्य

25 अध्यक्षः—करणाधिपो जीवः (भा)

26 अध्ययनविधिः—' स्वाध्यायोऽध्येतव्यः ' इति विधिः

27 अध्वर्युः—यज्ञाङ्गस्य याजुषकर्मणो निर्वाहकः ऋत्विग्विशेषः

28 अनदनीयत्वम्—अत्तुमनर्हत्वम्

29 अनन्तत्वम्—देश.काल-वस्तुकृतपरिच्छेदरहितत्वम्

30 अनपियद्भिः—अप्ययरहितैः, असंश्लिष्टैः

31 अनभिभवः—उत्पत्तिप्रतिबन्धाभावः

32 अनभिव्यक्तम्—अनाविर्भूतम्

33 अनभ्युदयः—एतेन देहेनैवानुभाव्यमनिष्टफलम्

34 अनवद्यानि कर्माणि—शास्त्रसिद्धानि श्रेयः-प्रेयःफलानि कर्माणि

35 अनवसादः—अक्षीणस्वरूपता

36 अनात्मवित्—आत्मस्वरूपयाथात्म्यावबोधरहितः

37 अनात्म्यः—कर्मकृतशरीररहितः

38 अनामयम्—रोगादिदोषासंस्पृष्टम्

39 अनारब्धकार्यत्वम्—अप्रवृत्तफलत्वम् (भा)

40 अनिरुक्तः—परिच्छिन्नार्थकैर्देवादिशब्दैरनिर्देश्यः परमात्मा

41 अनिलयनम्—आधारान्तरानपेक्षस्वावस्थिति परं ब्रह्म

42 अनिष्टादिकारिणः—विहिताकरण-निषिद्धकरणप्रवणाः पापकर्माणः

43 अनुगतिः—अनुसृत्य उत्क्रमणम्

44 अनुगमयितव्यः—अन्वितार्थतां सम्पाद्यः

45 अनुग्रहः—उपकारः

46 अनुपादेयता—कृतिसाध्यत्वाभावः

47 अनुपानम्—आहारस्वीकरणात् पश्चात्सेव्यं जलादि

48 अनुपोष्य—अदग्ध्वा (भा)

49 अनुबन्धभेदः—धात्वर्थादिभेदः, विधेयतावच्छेदकवैजात्यं वा

50 अनुबन्धाः—यज्ञानुबन्धिग्रहस्तोत्रशस्त्रादयः

51 अनुमतिः—अभ्यनुज्ञा

52 अनुमानम् —स्मृतिः (वेदानुरोधि धर्मनिश्चायकम्)

53 अनुविधानम् —अनुवृत्तिः

54 अनुशयः—उपभुक्तशिष्टं कर्म (भा) भुक्तशिष्टमैहिकफलं कर्म

55 अनुशयिनः—भुक्तशिष्टकर्मवन्तः स्वर्गादितो अवरोहन्तश्चेतनाः

56 अनुषङ्गः—पूर्ववाक्यस्थपदस्य प्रकृतवाक्यान्वितत्वम्

57 अनुस्मृतिः—प्रत्यभिज्ञा, प्रतिसन्धानं, प्रत्यवमर्शो वा

58 अनूयाजाः—आग्निमारुतादूर्ध्वमनूयाजैश्चरति' इति विहिताः; 'देवं बर्हिः' इत्यादिभिः पाशुकहौत्रकाण्डपठितैर्मन्त्रैः (एकादशसङ्ख्यैः) साध्या होमाः

59 अनेवम्—प्रकारान्तरेण

60 अनैकान्तिकम्—अनियतम्, अव्यापकम्

61 अन्तरम्—विच्छेदः (ध्यानादेः)

62 अन्तरा वर्तमानाः—अनाश्रमिणः

63 अन्नम्—पृथिवी

64 अन्नादः—अन्नदाता

65 अन्यत्वम् (आत्मनस्सकाशात्)—अहमर्थवैयधिकरण्यम्, (शरीर-शरीरिभावाभावः)

66 अन्यथानुपपत्तिः—प्रकारान्तराश्रयणे आवश्यकसम्प्रतिपन्नार्थासिद्धिः

67 अन्याधिपतित्वम्—विधिनिषेधयोग्यत्वम्

68 अन्याधिष्ठितत्वम्—जीवान्तरं प्रति शरीरत्वम्

69 अपरिच्छिन्नत्वम्—इयत्ताराहित्यम्

70 अपरोक्षत्वम्—सर्वदेशकालसम्बन्धित्वम्

71 अपवदति—निन्दति

72 अपवर्गः—स्वरूपाविर्भावरूपो मोक्षः

73 अपवादश्रुतिः—आहिताग्नेः अग्निविसर्जननिन्दकश्रुतिः

74 अपहतपाप्मत्वम्—पापासंश्लेषः, पापगतफलजननशक्तिप्रतिभटत्वस्वाभाव्यम्

75 अपापश्लोकश्रवणम्—अकीर्तिकरवाक्यश्रवणप्रसङ्गाभावः

76 अपाश्रयः—उपविष्टस्य शरीरावस्थानसहकारी कुड्योपधानादिः

77 अपीतिः—अप्ययः, ब्रह्मप्राप्तिः (भा)

78 अपुरुषार्थः—पुरुषैः (चेतनैः) अनभ्यर्थनीयः अर्थः, पुरुषार्थेतरः

79 अपूर्वम्—पूर्वमनवगतम्, प्रमाणान्तरेणाज्ञातं वा

80 अप्ययः—स्वकारणे लयः-संश्लेषः

81 अभ्रम्—वारिवाहः (जलधारणावस्थावान्) ' अपो बिभर्ति ' इति

82 अभिचारः—शत्रुविध्वंसकं कर्म

83 अभिधानवैरूप्यम्—एकस्यैव पदस्य अर्थबोधनव्यापारे वैषम्यम्

84 अभिनिवेशः—गृहीतार्थग्राहिता, स्वाभिमतार्थसमर्थनैकप्रवणता

85 अभिनिष्पत्तिः—स्वरूपाविर्भावः (भा)

86 अभिलापः—ज्ञातार्थस्य बोधकशब्दोच्चारणम्

87 अभिसम्भवन्ति—प्राप्नुवन्ति

88 अभिसम्भाव्यः—प्राप्यः (परमात्मा)

89 अभेदश्रुतयः—गुणभूतस्य वस्तुनः स्वनिष्ठत्वेनावस्थितिनिषेधपराः श्रुतयः

90 अभ्यर्हितम्—उत्कृष्टम्, अन्तरङ्गम्

91 अभ्यासः—पौनःपुन्यम्

92 ,, —अविशेषपुनःश्रवणम्, यजतीत्यादेः शब्दस्य पृथक्पृथगुक्तिः

93 अभ्यासाधेयः—असकृदनुष्ठानतो निष्पाद्यः

94 अभ्युदयः—प्रेयोऽपरपर्यायम् ऐहिक-पारलौकिकं सुखम् , समृद्धिः

95 अमलत्वम्—समस्तहेयप्रतिभटस्वभावत्वम्

96 अमृतत्वम्—उत्तर-पूर्वाघयोरश्लेषविनाशरूपम्

97 अमौनम्—मौनेतरः विद्यानिष्पत्तेः सहकारिकलापः

98 अयथोपासनम्—अयथावस्थितोपासनम्

99 अरम्—अल्पम्

100 अरण्येऽनुवाक्यत्वम्—अरण्ये एव पठनार्हत्वम्

101 अरूपम्—कर्मकृतशरीररहितम्

102 अर्चिरादिगतिः—'अग्निर्ज्योति' रित्याद्युक्ता ब्रह्मप्रापिका देवयानगतिः

103 अर्थवादमात्रम्—वाच्यार्थतात्पर्यरहितं विध्युक्तार्थस्तावकं वाक्यम्

104 अर्थविप्रकर्षः—(लिङ्गादिप्रमाणगतः) स्वकार्यविलम्बः

105 अर्थसमानाः—अर्थस्वरूपनिरूपणधर्मत्वेन अर्थप्रतीत्यनुबन्धिनो गुणाः

106 अर्थान्तरत्वम्—भिन्नस्वरूपत्वम्

107 अर्थाभेदः—एकरूपप्रयोजनवत्त्वम्

108 अलौकिकम्—लोकानवगतम्

109 अल्पान्तरः—किंचिदंशे विलक्षणः

110 अवकीर्णी—भग्नब्रह्मचारिव्रतः

111 अवघातः—व्रीह्याद्देर्द्रव्यस्य वैतुष्यापादकः मुसलव्यापारः

112 अवरोधः—सङ्ग्रहः, (व्याप्तता)

113 अवसिताधिकारः—समाप्ताधिकारः

114 अवान्तरसङ्गतिः—पादाध्यायादिसाङ्गत्यरहितस्याप्यर्थस्य आन्तरालिकी सङ्गतिः

115 अविगानम्—अविप्रतिपत्तिः, अर्थसम्प्रतिपत्तिः

116 अविभागः—अपृथग्भावः पृथग्व्यवहारानर्हसंसर्गः (भा)

117 **अविवाक्यम् अहः**—विविधवाग्व्यवहाररहितं ज्योतिष्टोमसम्बन्धि दशममहः

118 **अविशिष्टम्**—विशेषांशरहितम , तुल्यम्

119 **अविशिष्टफलत्वम्**—प्राप्यैकरूप्यम्

120 **अविशेषः**—1 भेदकाकाराभावः 2 सामान्यं रूपम्

121 **अविशेषपुनःश्रवणम्**—अनन्यथासिद्धम् एकाकारं पुनः श्रवणम्

122 **अव्यक्तम्**—प्रमाणान्तरागोचरः ?

123 **अशरीरत्वम् - (मुक्तेश्वरादौ)**—कर्मकृतशरीराभावः

124 **अंशत्वम्**—विशिष्टवस्त्वेकदेशत्वम्, अपृथक्सिद्धविशेषणत्वम्,

125 **अशुद्धत्वम्**—पापमिश्रत्वम्

126 **अश्लेषः - (पाप्मनाम्)**—उत्पत्स्यमानस्य पाप्मनः स्वकार्यकरणशक्तिप्रतिबन्धः

— भगवतः उत्तरकालिककर्मफलदित्साप्रतिबन्धः

127 **असकृदावृत्तिः**—बहुवारमनुष्ठानम्

128 **अह**—आश्चर्ये

129 **अहमसि - (त्वम्)**—अहंशब्दबुद्धिपर्यवसानभूमिरसि त्वम्

130 **आकाशादिभावः**—आकाशादिशरीरकत्वम् (अवरोहति जीवे)

131 **आखणः**—लोष्टः, मृत्पिण्डः

132 **आख्या**—(कर्मसु विद्यासु च) अग्निहोत्राक्षरादिनाम

133 **आख्यानानि**—आख्यायिकाः, श्रुत्यादिगताः कथाविशेषाः

134 **आचारः**—वेदार्थविदामनुष्ठानम् , शीलम्

,, अनुष्ठानप्रवृत्तिः

,, शिष्टकर्तृकं विहिताचरणं निषिद्धवर्जनं च

135 **आडम्बरम्**—वाद्यविशेषः

136 **आण्डजम्**—अण्डद्वारा जातं पक्षिसर्पादि

137 **आतिवाहिकाः**—परमपदगन्तॄणां गमयितारः परमपुरुषनियुक्ता देवताविशेषाः

138 आत्मत्वम्—अहमर्थसामानाधिकरण्यम्, जीवं प्रति शरीरत्वम्

139 आत्मना भवति—स्वरूपसत्तां लभते

140 आत्मविदः—ज्ञानैकाकारात्मस्वरूपयाथात्म्यज्ञाः

141 आधानम्—' अग्नीनादधीते 'ति श्रुतिविहितं श्रौताग्निसम्पादकं कर्म

142 आधिकारिकाः—भगवता सृष्ट्यादौ कर्माधिकारे नियुक्ता हिरण्यगर्भादयः

143 आध्मातः—बाह्येन वायुना पूरितः

144 आध्यानम्—अनुचिन्तनम्, उपासनम्

145 आनन्दः—अनुकूलविषयजा प्रीतिः

146 आनन्दत्वम्—सुखैकतानत्वम्

147 आनन्दरूपता—सुखरूपता

148 आपत्तिः—प्राप्तिः

149 आपूर्यमाणपक्षः—शुक्लपक्षः - चन्द्रमसो वृद्धिपक्षः

150 आप्यायनम्—पोषणम्, ( तत्तत्कार्यक्षमत्वापादनम् )

151 आप्रयाणात्—आमरणात्

152 आभवन्ति—पुनरप्यवतिष्ठन्ते

153 आमननम्—आभिमुख्येन मननम्, अनुचिन्तनम्

154 आम्नायते—श्रुतौ व्यपदिश्यते

155 आयतनादीनि—हृदयायतनत्व - सेतुत्व - विधरणत्वादयो भगवदसाधारणगुणाः

156 आयस्तम्—प्राप्तायासम्, श्रान्तम्

157 आयामशब्दः—भगवतः सर्वव्याप्तत्ववाची श्रुतिगतः शब्दः

158 आर्जिजीषा—धनादिसम्पादनेच्छा

159 आर्त्विज्यम्—ऋत्विग्भिरनुष्ठेयं यज्ञीयं कर्म

160 आविर्भावः—स्थितस्यैव आच्छादननिवृत्तिप्रयोज्यः प्रकाशः

161 आश्चर्यत्वम्—अपूर्वतयानुभूयमानत्वे सति पूर्वानुभूतविलक्षणत्वम्

162 आश्रावणम्—प्रतिज्ञापनम्

163 आश्लिष्यन्ति—केवलं संसक्ता भवन्ति

164 आसन्यः प्राणः—आस्यभवः मुख्यः प्राणः

165 आसादनम्—(यज्ञियस्य पात्रस्य) यागाङ्गभूतवेद्यां स्थापनम्

166 आस्कन्दति—स्वविषयतामापादयति

167 आहङ्कारिकम्—अहङ्कारोपादानकम्

168 इतरो ब्रह्मचारी—नैष्ठिकेतरः उपकुर्वाणाख्यो ब्रह्मचारी

169 इतरेतराश्रयत्वम्—साक्षात् परस्परापेक्षा

170 इतिकर्तव्यता—अङ्गकलापः (कर्तव्यार्थप्रकारभूतः)

171 इभ्याः—हस्तिपालकाः, आढ्या वा

172 इष्टादिकारिणः—श्रुति - स्मृतिसिद्धकर्मणां फलकाम्ययाऽनुष्ठातारः

173 इष्टापूर्तदत्तानि—फलाभिसन्धितः क्रियमाणानि श्रौतानि यागादीनि, स्मार्तानि वापीकूपतटाकादीनि; गृहक्षेत्रादिदानानि च

174 इहाभ्याशाः—इहागन्तारः, पुण्यफलभोगानन्तरं इमं लोकमवरोहन्तः

175 उक्थम्—यतो यत्किञ्चिदुत्तिष्ठति तत्, देवताप्रसादोत्थितिहेतुः

176 उच्छ्वयति—पृथुर्भवति

177 उत्कर्षः—अतिशयितत्वम्

178 उत्क्रान्तिः—जीवस्य देहं विहाय गतेरुपक्रमः

179 उत्क्रामन्ति—विश्लिष्यन्ति

180 उत्सर्गापवादन्यायः—सामान्यशब्दस्य शब्दोपात्तविशेषव्यतिरिक्तविषयकत्वपर्यवसायी अर्थसङ्कोचः (विरोधपरिहारफलकः)

181 उत्सर्गापवादभावः—सामान्य. विशेषाश्रितो बाध्य-बाधकभावः

182 उदपानम्—जलाशयः, तडागादिः

183 उद्गाता—यज्ञान्तःपातिनः सामशाखीयकर्मणो निर्वोढा ऋत्विक्

184 उद्भिज्जम्—तरुगुल्मादि ओषधि - वनस्पतिजातम्

185 उद्वासयते अग्निम्—आत्मन्यग्नीन् समारोप्य आहितमग्निं विसृजति

186 उन्मानम्—परिच्छेदकः परिमाणविशेषः

187 उपकरणम्—कारकैः कार्यजनने सहकारिजातम्

,, अङ्गिनः अतिशयाधायकम् अङ्गजातम्

188 उपक्रमः—प्रकरणारम्भः, प्रतिपाद्यविषयप्रक्रमः

189 उपगच्छन्ति—उपासते

190 उपगमः—सम्बन्धः समीपगमनम्

191 उपगानम्—उद्गातृषु गानं कुर्वाणेषु 'भो' इति शब्दोच्चारणम्

192 उपजनम्—स्त्रीपुंसयोरुपगमेनोत्पन्नं मर्त्यशरीरम्

193 उपजननम्—उत्पादनम्

194 उपदेशः—अज्ञातस्य अपूर्वार्थस्य ज्ञापनव्यापारः

195 उपनिषत्—उपनिषच्छ्रवणेन जातं कर्तृभूतात्मज्ञानम् (ब्रह्मात्मकत्वज्ञानं च)

,, रहस्यनाम

196 उपपन्नम्—सङ्गतम् यौक्तिकबाधादिरहितम्

197 उपपातकानि—महापातकान्यानि तत्संनिकृष्टानि पतनहेतुभूतानि कर्माणि

198 उपपूर्वम्—उपशब्दपूर्वकपातकशब्दाभिधेयं कर्म

199 उपबन्धः—ग्रथनम् , निबन्धनम्

200 उपमर्दः—विनाशनम् , निरसनम्

201 उपरतम्—निवृत्तव्यापारम्

202 उपरोधः—प्रमाणान्तरतः कस्यचन प्रमाणस्य निरवकाशत्वापातः

203 उपलक्षणम्—शक्तितः प्रतिपादनं विना लक्षणया प्रतिपादनम्

204 उपसदः—दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कार्या होमाः

205 उपसंहारः—प्रकरणसमाप्तिः, समापनम्

उपसंहारः—अन्ते विधानम्

,, उक्तार्थस्य निगमनम्

,, समाहृत्य योजनम्

206 उपस्थितः—परं ब्रह्मोपसम्पन्नः

207 उपाकरोति—प्रस्तौति, आरभते

208 उपादेयत्वम्—इष्टसाधनतया कृतिसाध्यत्वम्

209 उपायनम् (पुण्यपापयोः)—अन्यत्र संक्रमः

210 उपांशुत्वम्—वर्णोच्चारणे विद्यमानः स्वरविशेषः

211 उपासनम्—एकाग्रचित्तवृत्तिनैरन्तर्यम् (भा)

212 उपासिः—उपेत्युपसर्गपूर्वकः आसधातुः

213 उपासिसिषा—उपासितुमिच्छा

214 उपोद्बलयति—समर्थने सहकारीभवति

215 उभयं लिङ्गम्—निरस्तसमस्तदोषत्व - कल्याणगुणाकरत्वात्मकधर्मद्वयं परमात्मासाधारणचिह्नभूतम्

216 उषित्वा—वासं कृत्वा

217 ऊर्ध्वरेतसः—सन्यासिनामाश्रमाः

218 ऋणश्रुतिः—ऋणत्रयप्रतिपादकश्रुतिः 'जायमानो वै ब्राह्मणस्त्रिभिर् ऋणैवा जायते' इति श्रुतिः

219 ऋत्वा—प्राप्य (ऋगतौ धातुः)

220 ऋत्विक्—यज्ञियकार्यनिर्वहणाय यजमानेन वृतः पुरुषः

221 एकतानः—अनन्यवृत्तिः

222 एकवद्भावः—वाच्यार्थबाहुल्यवति शब्देऽपि अनुशासनसिद्धमेकार्थशब्द-सादृश्यम्

223 एकाग्निः—त्रेताग्निविलक्षणः आथर्वणप्रक्रियासिद्धः एकोऽग्निः

224 एकान्तदेशः—योगविघातकस्वरहितो देशः

225 एतावत्त्वम्—इयत्ता, परिच्छिन्नता

226 ऐकार्थ्यम्—समानतात्पर्यकत्वम्

227 ऐश्वर्यम्—ईश्वरभावः, अप्रतिहतं सर्वनियन्तृत्वम्

228 ऐहिकम्—अभ्युदयैकफलकमुपासनम्

229 ओषध्यः—ओषध्यभिमानिन्यो देवताः

230 औदार्यम्—पात्रलाघव - देयगौरवयोरनादरेण दायविभागन्यायमनुसृत्य प्रत्युपकारनिरपेक्षं वितरणैकरसिकत्वम्, प्रभूतं दत्त्वाप्यतृप्तिः

231 औपचारिकम्—उपचारतः - लक्षणामाश्रित्य प्रवृत्तम्, - अमुख्यम्

232 औपसदाः—उपसन्नामककर्माङ्गभूता मन्त्राः

233 कन्या—मनः (सर्वविषयप्रकाशहेतुत्वात् - 'कनी दीप्तौ' इति धातुः)

234 कपूयचरणाः—कुत्सितकर्माणः

235 कपूया योनिः—कुत्सितकुले जन्म

236 कर्मनिष्ठाः—विहितकर्मानुष्ठानप्रवणाः

237 कर्माङ्गाश्रयाणि—प्रस्तावोद्गीथप्रतिहाराख्याः ये कर्माङ्गभूताः सामभागाः तदाश्रयाणि

238 कल्प्यते—अनुमीयते

239 कल्याणरूपम्—अनुकूलतमं रूपम्

240 कामं कामम्—सङ्कल्प्य

241 कामकारः—स्वच्छन्दप्रवृत्तिः

242 कामचारः—कर्मानधीनः भगवत्सङ्कल्पाधीनः सञ्चारः

243 कामचारादि—स्वाच्छन्द्येन वर्तन - वचन - भक्षणादि

244 कामाः—काम्यमानाः पुरुषार्थरूपाः पुत्रादयः

245 कामादि—सत्यकामत्वादिविशिष्टं ब्रह्म

246 कामिनः—मोक्षेतरफलार्थिनश्चेतनाः

247 कारणापत्तिः—कारणभूतपरब्रह्मतादात्म्यापत्तिः

248 कारुण्यम्—स्वार्थनिरपेक्षा परदुःखासहिष्णुता

249 कार्याख्यानम्—अप्राप्तस्यार्थस्याख्यानम्

250 कात्स्न्र्येन—निरवशेषतया

251 कीर्तिः—परत्वविषयप्रथा

252 कृतात्ययः—फलानुभवायत्तः कर्मणो विनाशः, कर्मफलावसानं वा

253 कृत्स्नभावः—सर्वाश्रमिष्वपि मोक्षार्थविद्यायाः अनुष्ठेयत्वसद्भावः

254 कुल्माषाः—कुत्सिता माषाः (उप.भा.) 'कुल्माषा यवपिष्टकाः' (वैज)

255 कुशाः (स्त्री)—स्तोत्रीयऋग्गणनार्थाः दारुमय्यः

256 क्रतुशेषत्वम्—क्रतूपकारकत्वम्, क्रत्वतिशयाधायकत्वम्

257 क्षपणम्—क्षीणतापादनम्

258 खट्वा—मञ्चकः

259 खद्योतः—'खद्योतो ज्योतिरिङ्गणः' इत्यमरः 'खे द्योतते' इति

260 खिलम्—प्रकृतार्थस्यानवशेषेण अप्रतिपादकः (प्रसिद्धपाठागोचरो वा) वेदभागः

261 गमनानुपपत्तिः—गमनश्रुत्यन्यथानुपपत्तिः

262 गाम्भीर्यम्—भक्तानुग्रह-वदान्यत्वादेः आमूलतो दुरवगाहत्वम्, आश्रितापराधेषु प्रतिग्रहीतृनिकर्षादिषु च सतोऽपि स्वज्ञानस्य गोपनम्

263 गुणः—(ब्रह्मणः) उपास्ये वस्तुनि उपासनप्रकारभूत आकारः

264 गुण-फलाधिकारत्वम्—(विधेः) कर्मोपासनयोः प्रकारविशेषस्य फलविशेषस्य च सम्बन्धसमर्पकविधित्वम्

265 गुणानां विकल्पः—उपासनविशेषे उपास्यप्रकारभूतानां गुणानां असार्वत्रिकत्वम्

266 गुणाष्टकम्—अपहतपाप्मत्व-विजरत्व-विमृत्युत्व-विजिघत्सत्व-सत्यकामत्व-सत्यसङ्कल्पत्वानि

267 गुणोपसंहारः—विद्यान्तरप्रकरणावगतानां ब्रह्मगुणानां विद्यान्तरेष्युपयोजनम् अन्यत्रोक्तस्य अन्यत्रोपयोगार्थं स्वीकारः

268 गो-बलीवर्दन्यायः—शब्दोपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य सङ्कोचः (वैयर्थ्यपरिहारफलकः)

269 गोदोहनम्—गोः सकाशात् क्षीरस्य दोहनायोपयुज्यमानः पात्रविशेषः

270 ग्रहः—यज्ञियाः पात्रविशेषाः। इन्द्रियाणि

271 ग्रहणम्—यज्ञियस्य पात्रस्योपादानम्

272 ग्राहयन्ति—उपपन्नतया बोधयन्ति

273 चरणम्—शीलम्, वृत्तम्, आचारः (पू) सुकृत-दुष्कृते (सि)

274 चितितन्मात्रम्—विकारसुखदुःखाद्यविद्यात्मकधर्मरहितं (जीवस्य) रूपम् (भा)

275 चीर्णम्—अनुष्ठितम्

276 चोदना—धात्वर्थविशेषस्य विधिः

277 चोद्यम्—अनुपपत्त्युद्घाटनेन अर्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनम्; (शङ्कितोऽश.)

278 छन्दः—इच्छा

279 छन्दतः—यथेच्छम्

280 छन्दोगाः—सामशाखिनः

281 जगद्व्यापारः—निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम् (भा)

282 जप्यम्—जपार्हं मन्त्रजातम्, मन्त्राणां जप एव वा

283 जागरणम्—अनिद्रितावस्था (व्यापृतबाह्येन्द्रियता)

284 जातिः—अनुवृत्ताकारः (उदुम्बरत्वादिः)

285 जीवजम्—गर्भाशयाज्जायमानस्वभावं मनुष्यादिशरीरम्

286 जीवविशेषणतैकस्वरूपः—चेतनांशे प्रकारभावं विहायावस्थातुमनर्हः देवादिदेहः

287 जुहूः—यज्ञपात्रविशेषः

288 ज्ञानत्वम् (ब्रह्मणः)—नित्यासङ्कुचितज्ञानैकाकारत्वम्

289 ज्ञानव्यपाश्रयः—आगमोत्थज्ञाने प्रतिष्ठितः

290 ज्यायस्त्वम्—वैशिष्ट्यम्, उत्कर्षः

291 **तत्क्रतुन्यायः**—'उपासनानुगुण्येन फलावाप्तिः' इति न्यायः

292 **तत्स्वाभाव्यापत्तिः**—तत्सादृश्यापत्तिः

293 **तथ्यम्**—यथावस्थितम् सत्यम्, अबाधितम्

294 **तदन्तरप्रतिपत्तिः**—जीवस्य देहाद्देहान्तरप्राप्तिः

295 **तदोकः**—तस्य-जीवस्य आवासस्थानभूतं हृदयम्

296 **तद्भावभावित्वम्**—तद्रूपप्राप्तिः

297 **तद्भूय एव भवति**—तद्योगी भवति

298 **तपः**—पापक्षयकरो देहक्लेशः

299 **तरति**—लभते, प्राप्नोति

300 **तिरोहितम्**—स्थितमपि आच्छादनतः अप्रकटावस्थां प्राप्तम्

301 **तिष्ठासेत्**-(ब्रह्मणि)-निरन्तरावस्थितिलक्षणां प्राप्तुं यतेत

302 **तृतीयं स्थानम्**—केवलपापकर्मि जीवजातम्

303 **तृष्णा**—रागः, फलस्पृहा

304 **तेजोमात्राः**—भूतसूक्ष्मांशाः

305 **त्र्यात्मकत्वम्**—त्रिवृत्कृतभूतत्रयमयत्वम्

306 **दमः**—बाह्येन्द्रियजयः

307 **दक्षिणा**—यज्ञनिर्वहणोपयोगिऋत्विगानतिकरं द्रव्यम्

308 **दारालाभः**—गृहिणीत्वार्हायाः विवाह्यकन्यायाः अलाभः

309 **दिवाऽकीर्त्यत्वम्**—रात्रावेव पाठार्हत्वम

310 **दुरुद्गीथम्**—आवश्यकेन वेदनेन हीनमुद्गीथम्

311 **दुर्धर्षणत्वम्**—अप्रतिक्षेप्यत्वम्

312 **दुर्निष्प्रपतरम्**—दुःखनिष्क्रमणतरम्

313 **दुर्विवेचम्**—विविच्य ग्रहीतुमशक्यत्वम्

314 **दुष्कृतम्**—शास्त्रनिन्दितं भगवदप्रीतिपर्यवसायिकर्म

315 **दृष्टम्**—श्रुतिवाक्यम्

316 दृष्टिविशेषणम्—आरोपगर्भोपासने उपास्यप्रकारभूतम्

317 देवमाया—देवानामप्याश्चर्यकरी शक्तिः

318 देवयानम्—मुक्तानां परप्राप्त्यौपयिकः अर्चिरादिर्मार्गः

319 देवलोकः—देवगृहत्वेन प्रतिपन्नो वायुः

320 देवाः—इन्द्रियाणि

321 देशिकाः—प्राप्यप्रापौ मार्गोपदेष्टारः

322 द्योतनम्—अवाचकत्वे सति प्रतिपत्तिजननम्

323 द्वादशाहः—द्वादशभिर्दिनैर्निर्वर्त्यः (ज्योतिष्टोमाङ्गभूतः) सत्रविशेषः

324 द्विपरार्धकालः—स्रष्टुश्चतुर्मुखस्य पूर्ण आयुःकालः (परार्धाख्यकालद्वयम्)

325 धर्मस्कन्धाः—धर्मानुष्ठान-वृद्धिहेतव आश्रमाः

326 धूमादिः (मार्गः)—'धूमो रात्रिः' इत्याद्युक्तः पितृयाणमार्गः

327 ध्यानम्—स्मृतिचिन्तनरूपं चिन्तनम् (भा)

,, विजातीयप्रत्ययान्तराऽव्यवहितमेकचिन्तनम् (भा)

328 ध्यायतिः—ध्यै धातुः

329 नातिचिरम्—ईषद्विलम्बः, अतिविलम्बाभावः

330 नात्यन्ताय सन्ति—अत्यर्थं सन्त्येव

331 नाभिः—आधारभूतः (फलप्रदानतः कर्ममार्गधारकः परमात्मा)

332 निगमनम्—प्रक्रान्तस्य विचारस्य समापनम्

333 नित्यानित्यसंयोगविरोधः—कर्मसु आश्रमाङ्गत्वकृतनित्यत्वस्य विद्याङ्गत्वकृतानित्यत्वस्य च समावेशचिन्तया प्राप्तः विरोधः

334 निदाघसमयः—ग्रीष्मकालः

335 निबन्धनम्—प्रयोजकम्

336 नियच्छति—नियमयति

337 निरवद्यम्—निर्दोषम्

338 निरालम्बनप्रतिषेधः—धर्मिणं प्रतियोगिनं वा विनैव निषेधः

339 **निरूढानुष्ठानानि**—नियमेनाऽनुष्ठेयतया निश्चितानि

340 **निरूपणम्**—प्रतिवचनम् (भा)

341 **निर्धारणम्**—चित्तस्य निश्चयेनावस्थापनम्, ध्यानम्। निर्णयः

342 **निर्ज्ञातः**—निर्धारितः, असन्दिग्धतया ज्ञातः

343 **निर्विद्य**—प्राप्य, अधिगम्य

344 **निषादस्थपतिन्यायः**—षष्ठीतत्पुरुषाश्रयणे लक्षणापत्तिचिन्तया कर्मधारयाश्रयणम्

345 **निषिद्धत्वम्**—अननुष्ठेयतया शास्त्रबोधितत्वम्

346 **निषेध्याः**—नास्तीति ज्ञाप्याः

347 **निष्कलम्**—कलाः-अवयवाः, तद्रहितम्

348 **निष्पत्तिः**—कार्यकरत्वावस्थाप्राप्तिः, नितरां विकासो वा

349 **निःसम्बोधत्वम्**—सम्बोधनानर्हः स्थितिविशेषः (निद्रा-मरणादौ)

350 **नेया**—लक्षणया बोधिकेति कल्पनीया

351 **नैष्ठिकाः**—यावदायुषं गुरुकुल एवावस्थाने स्वीकृतव्रताः

352 **पक्षः**—आदरेण परिग्रहः

353 **पञ्चमी आहुतिः**—पुरुषस्य चरमधातोः रेतसः योषिद्गर्भप्रवेशः

354 **पञ्चाग्निविदः**—द्युलोकपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपपञ्चप्रकाराहुतिभिः पुरुषसृष्टिविदः

355 **पदाहवनीयादिवत्**—'पदे जुहोति' इति विहितपदातिरिक्तस्थानविषयकत्वम् 'आहवनीये जुहोति' इति विधेः इतिवत्

356 **परविद्याः**—मोक्षैकफला ब्रह्मोपासनरूपा विद्याः

357 **परान्तकालः**—परनाम्नः ब्रह्मायुःकालस्य अवसानकालः

358 **पराभिध्यानम्**—परमपुरुषसङ्कल्पः (भा)

359 **परामर्शः**—अनुवादः

360 **परार्ध्यः**—सर्वोत्कृष्टः (परस्य-उत्कृष्टस्य ब्रह्मणः अर्ध-स्थानमर्हतीति)

361 **परिकरः**—सहकारिकलापः

362 परिकर्म—सज्जीकरणम्

363 परिकरपरिकर्म—सहकारिकलापसंयोजनम्

364 परिक्रयणम्—भृत्या नियतकालं स्वीकरणम्

365 परिच्छिन्नः—अवधिना नियन्त्रितः

366 परिणेयम्—निर्वाह्यम्

367 परिदधति—वेष्टयन्ति-आच्छादितं कुर्वन्ति

368 परिवृत्तिः—पुनरावृत्तिः (अमुत्रफलभोगावसाने पुनर्जन्माभिमुख्यम्)

369 परीक्ष्यते—वास्तवार्थावधारणाय विचार्यते

370 परोवरीयस्त्वम्—वरीयसां-श्रेष्ठानां मध्ये परत्वम्-उत्कृष्टत्वम् (सर्वातिशयितत्वम्)

371 पर्णता (जुह्वाम्)—पलाशवृक्षप्रकृतिकत्वम्

372 पर्यङ्कः—शय्या

373 पर्यनुयुक्तः—प्रश्नविषयीकृतः (पृष्टः)

374 पर्यायता (शब्देषु) —शक्यतावच्छेदकैक्ये सति विभिन्नानुपूर्वीकत्वम्

375 पर्युषितम्—यातयामत्वादिदोषदूषितम्

376 पश्चार्धः—देहपृष्ठभागः

377 पश्चिमः—अन्तिमः

378 पश्यति (परमात्मानम्)—परज्ञानेन विषयीकरोति

379 पाठक्रमः—श्रुत्याम्नानक्रमायत्तः पूर्वापरभावः

380 पाण्डित्यम्—उपास्यस्य ब्रह्मणः पूर्णं वेदनम्

381 पापम्—भगवदाज्ञातिक्रमजा भगवदप्रीतिः ?

382 पाप्मसु फलजननशक्तिः—निषिद्धस्य कर्मणोऽनुष्ठानेन जनितो भगवन्निग्रहः

383 पारदौर्बल्यम् (लिङ्गादौ)—अङ्गत्वनिश्चायकत्वे स्वपूर्वापेक्षया स्वस्मिन् विलम्बः

384 पारिप्लवः—अश्वमेधाङ्गशंसनोपयोगी शस्त्रविशेषः

385 पारिव्राज्यैकान्तधर्मः—सर्वसङ्गपरित्यागनियतः सन्यासिधर्मः

386 पितृयाणम्—धूमादिमार्गः

387 **पुण्यम्**—भगवदाज्ञानुसरणजं भगवत्प्रीतिकरं कर्म (प्रीतिरेव वा)

388 **पुत्रेषणा**—प्रजा-तत्साध्यफलयोरपेक्षा

389 **पुनरावर्तनम्**—अमुत्र फलभोगतः कर्मक्षये पुनर्मर्त्यलोकप्रवेशः

390 **पुनर्भवः**—पुनर्जन्मावाप्तिः

391 **पुरीतत्**—हृदयान्तःस्थः मांसपिण्डविशेषः, अन्तःस्थं ब्रह्म च

392 **पुरुषः**—देहः

393 **पुरुषवचसः**—पुरुषशब्दाभिलप्याः

394 **पुरुषविधत्वम्**—पुरुषसादृश्यम्

395 **पुरुषार्थाः**—चेतनैरपेक्ष्याः सुख-तत्साधनरूपा अर्थाः

396 **पुष्करिण्यः**—वाप्यः (पद्माश्रयभूता जलाशयाः)

397 **पूर्वकाण्डम्**—कर्म-देवताविचारपरं जैमिनीय-साङ्कर्षणरूपम् शास्त्रम्

398 **पूर्वपक्षबीजानि**—पूर्वपक्षोत्थापकाः अंशाः

399 **पूर्वभावः**—पूर्वोक्तगुणानां विद्यमानता

400 **प्रकरणम्**—ययोर्मिथोन्वयः-तदुभयगता अन्योन्याकांक्षा

401 **प्रकरणान्तरम्**—प्रस्तुतेतरकर्मादिसम्बन्धि प्रकरणम्

402 **प्रकारत्वम्**—विशेष्यताप्रतिसम्बन्धिनी विषयता

403 **प्रकुप्येयुः**—निरवकाशा भवेयुः

404 **प्रकृतिः**—प्रत्ययोत्पत्तेरवधितया अनुशासनसिद्धः धात्वादिः

405 **प्रक्रियाभेदः**—प्रकरणान्तरम्

406 **प्रक्षिपन्ति**—अस्यन्ति, स्थापयन्ति

407 **प्रच्युतिः**—भ्रंशः, स्खलनं वा

408 **प्रजापतिवाक्यम्**—छान्दोग्ये इन्द्रविरोचनौ प्रति चतुर्मुखोक्तं आत्मस्वरूपपरं वाक्यम्

409 **प्रज्ञान्तरम्**—विद्यान्तरम्

410 **प्रतायन्ते**—सन्तता भवन्ति

411 **प्रतारकः**—वञ्चकः विप्रलम्भकः

412 प्रतिक्षेपः—अयुक्तत्वख्यापनम्

413 प्रतिपत्तिः—प्राप्तिः, गमनम्

414 प्रतिपत्तृभेदः—वेदशाखाध्येतृगतो भेदः (वैलक्षण्यम्)

415 प्रतिपद्यन्ते—प्राप्नुवन्ति

416 प्रतिब्रुवन्—प्रत्युत्तरं दास्यन्

417 प्रतिसञ्चारः—प्रलयः

418 प्रतिषेधरूपाः—अभावात्मकाः (नञुल्लेख्यस्वरूपाः)

419 प्रतिष्ठा—दृढः सम्बन्धः (स्मृतिनैरन्तर्यम्)

420 प्रतीकालम्बनः—कार्यं हिरण्यगर्भादिकमुपासीनः, नामादिषु ब्रह्मदृष्ट्योपासीनश्च

421 प्रतीकोपासनम्—अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम्

422 प्रत्यक्षानुमाने—श्रुतिस्मृती

423 प्रत्यनीकः—प्रतिभटः, विरुद्धः

424 प्रत्यभिज्ञायते—तदेवेदमिति प्रतिसन्धीयते

425 प्रत्यभिसन्धिः—अनुसन्धानम्

426 प्रत्ययः—प्रतीतिः, तदेवेदमित्येकत्वप्रतीतिः

427 प्रत्ययावृत्तिः—उपासनापरपर्यायं ध्यानम् (शुभाश्रयचिन्तने पौनःपुन्यम्)

428 प्रत्यवसृप्य—प्रत्यागत्य

429 प्रत्यवरूढाः—अमुष्माल्लोकात् मर्त्यलोकं प्राप्ताः

430 प्रत्यवायः—आज्ञातिक्रमजन्यो भगवन्निग्रहः (अधोगतिहेतुः)

431 प्रत्याहरणम्—·?

432 प्रत्येकम्—प्रतिपर्यायम्

433 प्रथितिः—प्रसिद्धिः, प्रत्यभिज्ञानम् (भा)

434 प्रदुघे—प्रकर्षेण अदुहत्, उत्पादितवान्

435 प्रद्योतः—प्रकाशः

436 प्रबोधः—जागरितावस्थाप्राप्तिः

437 प्रभुः—फलदानसमर्थः (कर्मोपासनादेः)

438 प्रमाणम्—अर्थनिश्चायकम्

439 प्रमुत्—स्वकीयत्वेनावगतार्थस्य (स्वयं) विनियोगजा प्रीतिः

440 प्रयत्नः—सङ्कल्पव्यतिरिक्तो व्यापारः

441 प्रयोगविधिः—कर्मणां प्रयोगे अनुष्ठाने प्राशुभावबोधको विधिः

442 प्रवर्ग्यः—ज्योतिष्टोमाङ्गभूतं द्वादशस्वहःसु प्रवर्त्यमानं कर्मजातम्

443 प्रव्राजिनः—परित्यक्तसर्वसङ्गाः सन्न्यासिनः

444 प्राणाः—मुख्यः प्राणः, ज्ञानकर्मेन्द्रियाणि च। जीवात्मानः

445 प्राणात्ययापत्तिः—सम्भावितप्राणापगमा दैहिकी अवस्था

446 प्राणिता—प्राणनेन जीवन् देही

447 प्राप्तिः—विधायकं श्रुतिरूपं प्रमाणम्

,, —विधिसिद्धोऽवगमः। उपक्रमः

448 प्रामाणिकाः—अबाधितप्रमाणलब्धार्थावधारणाः

449 प्रामादिकम्—अनवधानेनापतितम्

450 प्रायश्चित्तम्—समापतितदोषनिवर्तकतया शास्त्रावगतं कर्म, विनष्टस्य कर्मणः सन्धानं येन क्रियते तादृशं कर्म

451 प्रारब्धं कर्म—फलप्रदानप्रवृत्तं पुण्यापुण्यात्मकं कर्म

452 फलश्रुतिः—कर्मोपासनादेः फलसमर्पकं वाक्यम्

453 प्रेत्य—अस्माल्लोकादमुं लोकं गत्वा

454 फलाभिसन्धिः—कृतस्य कर्मणः भगवत्प्रीत्यतिरिक्तफलाशंसा

455 फली—यागादेः कर्मणः फलस्वामी यजमानः

456 बन्धः—स्वरूपतिरोधायकः संसारः

457 बलीयस्त्वम् (प्रमाणे)—स्वविरोधिजन्यबोधे अप्रामाण्यनिश्चयजननयोग्यता

458 बाधगर्भो विकल्पः—फलसाधनत्वप्रतिपत्तिबाधः, अनुष्ठानबाधः, अपूर्वोत्पत्तिबाधः फलबाधश्चेति एकैकशिरसि दोषचतुष्टयवान् आहत्य दोषाष्टकवान् विकल्पः

459 **बाधः**—निषेधावगाहिनी बुद्धिः

460 **बाल्यम्**—स्वगतोत्कर्षानाविष्करणरूपबालसदृशस्वभावाश्रयणम्

461 **बुद्ध्यर्थः**—उपासनार्थः

462 **ब्रह्मचर्यम्**—ब्रह्मचारिणमुद्दिश्य विहितः धर्मकलापः

463 **ब्रह्मलोकः**—ब्रह्मैव लोकः, साक्षात्क्रियमाणं ब्रह्म

464 **ब्रह्मविदपचारः**—ब्रह्मज्ञानामप्रीतिकरो व्यापारः

465 **ब्रह्मविद्या**—वेदविद्या

466 **ब्रह्मविद्याप्राप्तिः**—साक्षात्कारावस्थापन्नब्रह्मवेदनसिद्धिः

467 **ब्रह्मैकनिष्ठत्वम्**—ब्रह्मण्येव पर्यवसितत्वम्

468 **भक्ष्यत्वम् (देवैः जीवानाम् )**—देवभोगोपकरणताप्राप्तिः

469 **भक्तत्वम्**—शक्यार्थे तात्पर्यप्रहाणेन लक्ष्यार्थतात्पर्यवत्त्वम् , औपचारिकत्वम्

470 **भावशब्दः**—साध्यावस्थापन्नार्थबोधकः 'उपासीत, यजेते 'त्यादिः शब्दः

471 **भीषा**—भयेन (सहितः)

472 **भूतग्रामवान्**—पाञ्चभौतिकदेहवान् जीवः

473 **भूतसूक्ष्माणि**—(भोगाधायक) देहारम्भौपयिकानि पञ्चभूतानि

474 **भूमा**—विपुलः, समस्तः

475 **भूयस्त्वम्**—आधिक्यम्

476 **भेदश्रुतयः**—गुण-गुणिरूपार्थद्वयसद्भावाभिप्रायाः श्रुतयः

477 **भोगः**—इहाऽमुत्र च पुण्यापुण्यकर्मफलभूतसुखाद्यनुभवः

478 **भ्रष्टाः**—आश्रमधर्मात् प्रच्युताः

479 **भ्रातृव्यः**—अरातिः, शत्रुः

480 **मटची**—अश्मवृष्टिः

481 **मण्डलानि**—लोकाः

482 **मरणम्**—सर्वप्राणदेहसम्बन्धोपरतिः

483 मन्त्रसामर्थ्यं—मन्त्रावगतवस्तुसामर्थ्यम्

484 महापातकानि—ब्रह्महत्या-सुरापान-सुवर्णस्तेय-गुरुतल्पगमन-एतत्कर्तृसंसर्गाः

485 महाव्रतम्—सत्रयागाङ्गकर्मविशेषः

486 मानसग्रहः—मननैकसम्पाद्यः यज्ञपात्रविशेषः

487 मायामात्रम्—आश्चर्यैकरूपम्

488 माहाराजनम्—कौसुम्भवस्त्रम , हरिद्रमयं वा वस्त्रम्

489 मुख्यत्वम् (शब्दे)—प्रवृत्तिनिमित्तपौष्कल्येनार्थबोधनम्

490 मुग्धः—मूर्च्छावस्थापन्नः

491 मुत्—वस्तुनि स्वकीयत्वबुद्ध्याहिता प्रीतिः

492 मुनिः—प्रकृष्टमननशीलः

493 मुमूर्षवः—आसन्नमरणाः

494 मूर्तिः—देहः

495 मूर्च्छा—सूक्ष्मप्राणदेहसम्बन्धेनावस्थितिः

496 मेघः—वर्षोन्मुखावस्थावान् जलदः (मिह-सेचने)

497 मोक्षसाधनं ज्ञानम्—शुभाश्रयविषयकविशदतमप्रत्यक्षतापन्नस्मृतिरूपं ज्ञानम्

498 मौनम्—ध्यानालम्बनस्य शुभाश्रयस्य तद्भावभावनारूपं पुनः पुनः संशीलनम्

499 यक्षम्—पूज्यम् (यज-पूजायाम्)

500 यथेतम्—यथागतम्, गमनक्रममेवानुरुध्य, (इण्-गतौ, इतम्)

501 यशः—सौलभ्यप्रथा

502 याथातथ्यम्—स्वरूप-स्वभावाविपर्यासः

503 याथात्म्यवेदनम्—यथावस्थितावगतिः, अविपर्यासेन ज्ञानम्

504 यादृच्छिकी—आकस्मिकी

505 यावज्जीवश्रुतिः—'यावज्जीवमग्निहोत्रं जुहोती'ति श्रुतिः

505 यावत्सम्पातम्—फलभोगाधायकादृष्टावस्थितिपर्यन्तम्

506 ये यजामहकरणम्—'आश्रावय, अस्तु श्रौषट्, यज, ये यजामहे, वषट्' इति सप्तदशाक्षरमन्त्रोच्चारणम्। 'यजतिषु ये यजामहं करोति' इति विहितम्

507 रथयोगाः—रथेषु युज्यमानाः अश्वानडुदादयः

508 रमणीयचरणाः—पुण्यकर्माचरणशीलाः

509 रसतमः—सारतमः

510 रंहति—याति, गच्छति

511 रागः—इच्छा (फलाभिलाषः)

512 रागप्राप्तः—इच्छाधीनकृतिविषयः

513 रात्रिसत्रन्यायः—विधिवाक्ये फलाश्रवणेऽपि विधिवाक्यगतफलाकाङ्क्षानुगुण्येन अर्थवादश्रुतस्यैव फलस्याश्रयणम् (पू.मी. 4-3-8)

514 रूपम् (यागोपासनयोः)—द्रव्य-देवते ; उपास्याकारः

515 रूपणम्—धर्मिण्यसतो धर्मस्यापि कल्पनम् (बुद्ध्यारोहफलकम्)

516 लक्ष्यते—अनुमीयते

517 लम्भुकः—प्राप्तुमर्हः

518 लाक्षणिकत्वम्—प्रवृत्तिनिमित्तैकदेशेन शक्यसम्बन्धेन वा अर्थबोधकत्वम्

519 लिङ्गम्—ज्ञापकम्-अनुमापकम्,

,, श्रुतिकल्पकम् अङ्गत्वग्राहकं प्रमाणम् (सामर्थ्यरूपम्)

,, स्मृतिः श्रुतिमूला (भा)

520 लिङ्गभूयस्त्वम्—ज्ञापकत्वाभिमतचिह्नस्याधिक्यम्

521 लोकम्पृणा—चयनार्थस्य भूप्रदेशस्य पूरकः इष्टकाविशेषः

522 लोकैषणा—जाया-प्रजा-वित्तसाध्यानां लोकानां सम्पिपादयिषा

523 लोहितम्—रक्ताख्यो देहधातुः

524 लौकिक-वैदिकसाधारणत्वं (कर्तुः)—अशन-पानादिषु अग्निहोत्रादिषु च अन्वयित्वम्

525 वर्तमानापदेशः (वाक्ये)—विधित्वज्ञापकं लिङादिकं विना 'भवति करोति' इति निर्देशः
526 वस्तिः—मूत्राशयजं जलम्, (मूत्राशय एव वा)
527 वाक्यम्—उद्देश्योपादेयवाचकपदसमभिव्याहाररूपं विनियोजकं प्रमाणम्
528 वाक्यभेदः—प्रघट्टस्य एकार्थ (एकक्रिया) पर्यवसायित्वाभावः
529 वाक्यशेषः—विधिवाक्योपकारकं तत्प्रकरणगतं वाक्यान्तरम्
530 वाग्वृत्तिः—वागिन्द्रियव्यापारः
531 वाचोयुक्तिः—वचनस्वरूपम्
532 वाजसनेयिनः—शुक्लयजुःशाखिनः
533 विकल्पः—विरुद्धयोर्द्वयोः पक्षयोर्मध्ये पर्यायेणैकैकपक्षाश्रयणम्
,, विविधः कल्पः, वैविध्यम्
534 [विकल्पतः अष्टौ दोषाः—स्वीकृतप्रमाण्यत्यागः, अप्रामाण्यस्वीकारः, स्वीकृता-
,, प्रामाण्यत्यागः, त्यक्तप्रामाण्यस्वीकारः (पर्यायेण द्वयोः पक्षयोः)]
535 विकारलोकाः—कार्यभूताः लोकाः, (विकारः-कार्यम्)
536 विकासः—स्वकार्यकरत्वक्षमावस्थाप्राप्तिः
537 विजिहीते—स्वावयवान् छिद्रीकुरुते
538 विततः—विशेषतो व्याप्तः (विततिः-विस्तारः)
539 वित्तैषणा—धनार्जनतः यज्ञदानादिनिर्वर्तनकामना
540 विद्या—उपासनात्मको ज्ञानविशेषः (यावदायुषं शुभाश्रयध्यानम्)
541 विद्याधिकारः—विद्याप्रस्तावः
542 विद्यानुग्रहः—विद्यानिष्पत्तौ सहकारिभावः
543 विद्यार्थवादः—विद्यास्तुतिपरं वाक्यम्
544 विद्यासामर्थ्यम्—विद्यापौष्कल्यम्, (विद्यायाः स्वसाध्ये उपायत्वदार्ढ्यं वा)
545 विधिः—अज्ञातज्ञापकः चोदनापरपर्यायः शब्दः

546 **विधि-निषेधशास्त्राणि**—हितार्थप्रवृत्ति-अहितार्थनिवृत्तिपराणि श्रुत्यादीनि

547 **विधिप्रत्ययः**—'यजेत, उपासीत' इत्यादिशब्दगतः लिङादिः

548 **विधुरः**—मृतपत्नीकः । रहितः

549 **विधेयभेदः**—साङ्गप्रधानभेदः

550 **विध्यादिः**—यज्ञाद्याश्रमधर्मः, शमदमादिश्च

551 **विनाशः**—अदर्शनम्

552 **विनाशः पाप्मनाम्**—उत्पन्नकर्मगतस्वकार्यकरणशक्तिविघटनम् । भगवतः विद्योत्पत्ति-प्राक्कालिककर्मफलदित्सानिवृत्तिः

553 **विनियोगः**—अङ्गत्वग्रहणम्

554 **विनियोगपृथक्त्वम्**—अनुष्ठितस्यैकस्यैव कर्मणः उपकारद्वयाधानेन पृथक्पृथगङ्गता-सिद्धिः

555 **विपरीताः**—त्यक्तस्वकर्माणः

556 **विपर्ययः (बन्धस्य)**—बन्धविरोध्यवस्थाविशेषः (मोक्षावस्था)

557 **विभागः**—पृथग्भावः, विविक्तस्वरूपता

558 **विरोधः**—अनुपपन्नता

559 **विशिष्टता**—अतिशयः, उत्कर्षः

560 **विशिष्टो देशः**—स्वेतरसर्वस्थानविलक्षणः अप्राकृतो देशः

561 **विशेषः**—व्याप्यधर्मवान् (सामान्याक्रान्तः)

562 **विशेषणम्**—स्वाश्रयं धर्मिण व्यावर्तयन् धर्मः

563 **विशेषितः**—विशेषवत्तया ज्ञापितः

564 **विष्वञ्चः**—निकृष्टनानायोनिभाजः

565 **वीर्यवत्तरत्वं (कर्मसु)**—निरन्तरायतया अविलम्बेन स्वीयफलप्रदानक्षमत्वम्

566 **वृद्धिः**—उपचयः

567 **वेदनम्**—उपासनम्, ध्येयवस्तुचिन्तननैरन्तर्यम्

,, असकृदावृत्तस्मृतिसन्ततिः (भा)

568 वेशान्ताः—पल्वलानि (अल्पसरांसि)

569 वैखानसः—वनी, वानप्रस्थः

570 वैतृष्ण्यम्—विरागता, (क्षुद्रार्थतृष्णावर्जनम्)

571 व्यतिकरः—मिथः स्थानाक्रान्तिः

572 व्यतिहारः—स्वकीयस्यार्पणपूर्वकमन्यदीयग्रहणम्

573 व्यतिहारानुसन्धानम्—अन्योन्यतादात्म्यभावनारूपमनुसन्धानम्

574 व्यवच्छिद्यते—इतरव्यावृत्ततया बोध्यते

575 व्यवतिष्ठेरन्—व्यवस्थां प्राप्नुयुः

576 व्यस्तोपासनम्—विशिष्टान्तर्गतैकैकांशोपासनम्

577 व्यावर्तनम्—भेदकं रूपम्

578 व्याहृतयः—भूरादिसत्यान्ताः सप्त, (तिस्रो वा भुर्भुवस्सुवरिति)

579 शक्तिः—विशेष्यापृथक्सिद्धं विशेषणम्

,, (कर्मगता)—इष्टानिष्टफलदित्सालक्षणपरमपुरुषप्रीत्यप्रीतिरूपो धर्मः

580 शब्दभेदः—विधायकशब्दे भेदः, अपर्यायो धातुः (यजति-जुहोति)

581 शब्दानुमाने—श्रुति-स्मृती

582 शमः—अन्तरिन्द्रियजयः

583 शव्यम्—शवसंस्कारः

584 शंसति—देवतास्तुतिरूपामृचं पठति (शस्त्रं पठति)

585 शाखान्तराधिकरणन्यायः— ?

586 शिरोव्रतम्—शिरसि अङ्गारपात्रधारणादि आथर्वणिकानां व्रतमध्ययनाङ्गम्

587 शिष्टाः—शास्त्रप्रतिपन्नार्थस्य अवैकल्येनानुष्ठातारः

588 शिष्टिः—शासनम्, विधानम्

589 शुक्रम्—प्रकाशकम्

590 शेषी—उपकार्यः, आधेयातिशयः

591 श्रद्धा—आपः, जीवसम्बन्धी मनोवृत्तिविशेषः

,, —भूतसूक्ष्मावस्थाविशेषः, आस्तिक्यबुद्धिः

592 श्रुतिः—अङ्गत्वग्राहकं निरपेक्षरवात्मकं प्रमाणम् (द्वितीयाविभक्त्यादिः)

,, —आवश्यकार्थस्य साक्षात्प्रमापकः शब्दः

593 श्रोत्रियाः—अविप्रतिपत्त्या श्रौतार्थानुष्ठानतदितरवर्जनप्रवणमनसः

594 श्रौतक्रमः—विभक्तिश्रुत्यादिना सिद्धः अनुष्ठेयेषु पूर्वापरभावः

595 षोडशी (ग्रहः)—एतन्नामा यज्ञपात्रविशेषः

596 सकृत्कृतम्—एकवारमनुष्ठितम्

597 सङ्कोचः—स्वकार्यकरणाक्षमत्वेनावस्थितिः (ज्ञानादेः) अप्रसरणं वा

598 सङ्ख्या—द्वित्व-त्रित्वादिका (तिस्र आहुतीर्जुहोतीत्यादौ) कर्मभेदप्रमाणम्

599 संज्ञपनम्—यागोपयोगिपशुशरीरविशसनम्

600 सत्यम्—स्वरूपान्यथाभावरहितम् । निरुपाधिकसत्तायोगि

601 सत्यकामत्वम्—कल्याणगुणगणवत्त्वम् , नित्यविभूतिनायकत्वम्

602 सत्यसङ्कल्पत्वम्— अप्रतिहतप्रतिज्ञत्वम्

603 सन्देहः—मध्यकायः

604 सन्ध्यम्—स्वप्नावस्था

605 समन्वारम्भणम्—साहित्यम्

606 समवायः (श्रुत्यादीनां)—स्वप्रमेयार्थविरोधसहभावी समावेशः

607 समष्टिपुरुषः—चतुर्मुखः, हिरण्यगर्भः

608 समस्तोपासनम्—सर्वांशयुक्तमुपासनम्

609 समाख्या—अवयवशक्त्या अङ्गत्वग्राहकः शब्दः

610 समाहारः—आपतितस्य दोषस्य समाधानम्

611 समाहारद्वन्द्वः—उभयपदार्थघटितसमुदायप्रधानो द्वन्द्वः

612 समुच्चयः—प्रसक्तस्य सर्वस्य अविरोधतोऽभ्युपगमः

613 सम्पत्तिः—मरणम् (भा।

614 सम्पद्यते—संयुज्यते

615 सम्परिष्वक्तः—संश्लिष्टः, सहितः

616 सम्पातः—भोगाधायकं कर्म ('सम्पतत्यनेन स्वर्गम्' इति)

617 सम्प्रति—यथावत् (इदानीं)

618 सम्प्रसन्नः—बाह्यविषयसम्पर्कजन्यकालुष्यरहितः

619 सम्प्रसादः—प्राज्ञात्मना परिष्वङ्गदशा, सुषुप्तिः, (तद्वान् जीवोऽपि)

620 संयमनम्—यमशासनम्

621 संयेतिरे—युयुधिरे

622 संयोगः—विहितस्य कर्मणः फलसम्बन्धः

623 संयोगचोदना—फलसम्बन्धविधिः

624 संराधनम्—देवतायाः सम्यक्प्रीणनम्, भक्तिरूपापन्नं ध्यानम्

625 सवाः—सप्तसूर्यादयः शतौदनपर्यन्ताः आथर्वणिकैकाग्निसम्बन्धिनो होमविशेषाः

626 संसारः—अचिद्भिः सहात्मानमेकीकृत्य व्यवहारः, देहसम्बन्धः

627 संस्कारः—संनिपत्योपकारकं कर्म

628 सर्ववेदान्तप्रत्ययन्यायः—दहर-वैश्वानरादिकाया विद्यायाः अन्यान्यसर्वोपनिषद्गतत्वेऽपि प्रत्यभिज्ञापकसत्त्वे ऐक्यमेव ; न नानात्वम्

629 सर्वशाखाप्रत्ययन्यायः—नानाशाखाप्रतिपन्नानामपि क्रतूनां अभेदे प्रमिते सति, तदङ्गानामप्येकत्रावगतानामन्यत्राप्युपसंहारो न्याय्यः

630 सर्वान्नीनत्वम्—(आपदि) सर्वान्नभक्षणार्हत्वम् तत्कृतदोषाभागित्वं च

631 सहभावः—अङ्गभावः

632 साक्षात्—अव्यवधानेन

633 साङ्कर्षः काण्डः—सङ्कर्षाभिधः देवताकाण्डः (काशकृत्स्नीयः)

634 सादृश्यापत्तिः—भेदकाकारविमोकः

635 साद्गुण्यम् (क्रत्वादौ)—आवश्यकगुणपूर्णता

636 सानुशयाः—भुक्तशिष्टकर्माश्रिताः

637 साम्परायः—देहादपक्रमणकालः

638 साम्पादिकत्वम्—काल्पनिकत्वम्, आरोपतः सिद्धत्वम्

639 सिसाधयिषितम्—साध्यत्वप्रकारकेच्छाविषयभूतम्

640 सुकृतम्—शास्त्रोदितं भगवत्प्रीतिकरं कर्म, पुण्यं वा कर्मसाध्यम्

641 सुचरितानि—शिष्टाचारानुमितश्रुतिसिद्धानि कर्माणि

642 सुषिरम्—रन्ध्रम्

643 सुषुप्तिः—निद्रावस्था (प्राज्ञात्मसम्परिष्वङ्गावस्था)

644 सूचकः—देशतः कालतश्चासंनिकृष्टस्याप्यर्थस्य ज्ञापकः

645 सृतिः—मार्गः

646 सृत्युपक्रमः—गत्युपक्रमः, नाडीप्रवेशः (भा)

647 सृप्तः—प्रविष्टः, सर्पणतः-गमनतः प्राप्तसम्बन्धाः

648 सेतुः—(नद्यादौ) कूलान्तरप्राप्तिसाधनभूतः

,, —परमात्मा) सिनोति बध्नाति स्वस्मिन् असङ्कीर्णं चिदचिद्वस्तुजातम्—इति

649 सोमो राजा—(दिव्यभोगानुभवयोग्यः) अमृतमयो देहः (भा)

650 सोमराजानः—दिव्यदेहवन्तः स्वर्गभाजश्चेतनाः

651 स्तोत्रम्—प्रगीतमन्त्रसाध्यं गुणिनिष्ठगुणाभिधानम्

652 स्थानम्—(अङ्गत्वग्राहकं प्रमाणम्) संनिधानरूपम्

653 स्थावरभावः—ओषधि-वनस्पत्यादिभावः (यस्य सञ्चारो नास्ति)

654 स्थेमा—स्थैर्यम्, दार्ढ्यम्

655 स्मृतिः—श्रुतिप्रभवं श्रुत्यनुमापकं च आर्षं वचनम्

656 स्रवन्त्यः—नद्यः निर्भरिण्यो वा

657 स्वप्नः—उपरतबाह्येन्द्रियव्यापृतेः मनसैव ऐन्द्रियकार्थानुभवावस्था

658 स्वप्नाध्यायविदः—स्वप्नसूच्यार्थावेदनपरवेदभागज्ञाः

659 स्वरः—शब्दोच्चारणगतः उच्चैस्त्वोपांशुत्वादिः

660 स्वराट्—अकर्मवश्यः

661 स्वरूपगुणाः—वस्तुस्वरूपाश्रिताः यावदाश्रयभाविनो गुणाः

662 स्वाध्यायः—सुषुप्तिः (भा)

663 स्वाभाविकम्—स्वरूपसिद्धम्

664 स्वामी—यागादेः कर्ता, कर्मजन्यफलभोक्ता

665 स्वासाधारणः—स्वेतरावृत्तिः स्ववृत्तिः

666 स्वेदजाः—देहोष्मजलप्रभवाः कृम्याद्याः

667 हितानाड्यः—जीवस्य हितौपयिकाः दैहिक्यः सिराः

668 हेत्वाभासाः—व्याप्तिपक्षधर्मताशून्याः हेतुत्वप्रकारकभ्रमविषयाः

669 ह्रासः—अपचयः, क्षयः

670 हृदयपुण्डरीकम्—पद्ममुकुलाकृति देहमध्यगतं हृदयाख्यं स्थानम्

शारीरकभाष्यगताः क्लिष्टाः शब्दा यथायथं विवृताः ।
अध्येतृसुकरतायै विदुषा श्रीरामभद्रवर्येण ॥

॥ श्रीकृष्णार्पणमस्तु ॥

—o—

॥ श्रीः ॥

# सूत्रतद्भाष्ययोरुपलब्धानि ऋष्यादिनामानि

—o—

# स्मर्तव्यार्थानि पदानि

(श्रीभाष्यम्)

श्रुति-स्मृती
वर्णाश्रमा:
पितृलोक:
पितृयाणम्
चन्द्रमा:
अपरपक्ष:
दक्षिणायनम्
आचार:
वेदा:
सुकृत-दुष्कृते
पुण्य-पापे
सन्ध्यावन्दनम्
नरका:
यमसदनम्
देवयानम्
स्वर्ग:
अग्नीषीमीय:
नित्यकर्माणि
स्वधर्मानुष्ठानम्
परमपुरुष:
पुरुषोत्तम:
वेदान्तगण:
सत्यस्य सत्यम्
संराधनम्

कर्मकाण्डम्
वैश्वानर:
वेदव्रतम्
ब्रह्मविद्या
एकाग्नि:, त्रेताग्नय:
देवासुरा:
क्रतुसाद्गुण्यम्
प्रणव:
उपव्याख्यानम्
उद्गीथ:
उद्गाता
हिरण्मय: पुरुष:
अग्निहोत्रम्
अन्नमय-प्राणमय-मनोमय-विज्ञानमया
नन्दमया:
स्मृत्याचारौ
आदित्यमण्डलम्
आतिवाहिका:
अधिदैवताधिभूताध्यात्मानि
उपनिषत्
प्रातस्सवन-माध्यन्दिनसवन-सायंसवनानि
यज्ञ:, दीक्षा, यजमान:, पत्नी
अनुवाक:
अभिचार:

छन्दांसि
स्तोत्र-शस्त्रे
ऋत्विज:
होता-अध्वर्यु:
साम्पराय:
विरजा नदी
ब्रह्मलोक:
सम्प्रसाद:
स्वराट्
कामचार:
क्षीणकर्माण:
विद्यामाहात्म्यम्
साक्षात्कृतपरतत्त्वा:
ज्ञानिन:
सूक्ष्मं शरीरम्
कर्मणां निरवशेषक्षय:
प्रारब्धं कर्म
भोग:
अर्चिरादिगति:
अक्षरब्रह्म
प्रत्यगात्मा
याजुर्वेदिक:
गुणाष्टकम्
अकामचार:

अहिकुण्डलन्यायः
प्रामाणिकाः
राजा भृत्यश्च
अग्नि-वायू
शिरोव्रतम्
सर्वबन्धविनिर्मुक्तः
अपापश्लोकश्रवणम्
दहराकाशः
हृदयपुण्डरीकम्
ब्रह्मा, नारायणः, शिवः
क्रियामयः क्रतुः
विद्यामयः क्रतुः
प्रतिवेदं स्वरभेदः
समस्तोपासनम्
व्यस्तोपासनम्
दर्शपूर्णमासौ
पूर्वं काण्डम्
अकामहतः श्रोत्रियः
अनादिकर्माविद्या
क्रत्वर्थ-पुरुषार्थौ
आचार्यकुलम्
मोक्षैकफला ब्रह्मविद्या
ज्योतिष्टोमः
ऊर्ध्वरेतसः
त्रयो धर्मस्कन्धाः
ब्रह्मसंस्थः
गृहस्थाश्रमः

स्वाध्यायः
दिवाकीर्त्यम्
अरण्येनुवाक्यम्
ज्ञातयः
हानोपायने
यज्ञदानतपांसि
वैखानसः
पारिव्राज्यम्
ब्रह्मचर्यम्
केवलाश्रमिणः
ब्रह्मनिष्ठाः
दिष्टाग्निहोत्रम्
अग्नीन्धनम्
अनाशकम्
मनीषिणः
शम-दमादीनि
चित्तसमाधानम्
सर्वान्नानुमतिः
प्राणात्ययापत्तिः
याजनेनाऽऽर्जिजीषा
चत्वार आश्रमिणः
विधुराः
अन्तरा वर्तमानाः
उपवासः
देवताराधनम्
विद्यानुग्रहः
ब्राह्मणः, द्विजः

प्रतारकः
संसारचक्रपरिवर्तनम्
सत्यं ब्रह्मपुरम्
परविद्याः
ब्रह्मोपसम्पन्नः
सत्त्वविवृद्धिः
नैष्ठिकः
परिव्राजकः
प्रायश्चित्तम्
आत्महा
महापातकम्
उपपातकम्
उपकुर्वाणः
बहिर्भूताः
शिष्टाः
कर्मविधयः
बाल्य-पाण्डित्य-मौनानि
श्रवण-मनन-निदिध्यासनानि
मुनिः
विद्याकाष्ठा
पुत्र-वित्त-लोकैषणाः
पारिव्राज्यधर्मः
भिक्षाचरणम्
स्वभावानाविष्कारः
ब्रह्मविदपचारः
मुक्तिफलमुपासनम्
नित्य-नैमित्तिकसर्वकर्माणि

—o—

# सिद्धान्तोक्तयः

निखिलजगदेककारणं निरस्तनिखिलदोषगन्धम् अपरिमितोदारगुणसागरं सकलेतरविलक्षणं परं ब्रह्म, मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्ति ॥ (3–1–1)

उपासनारम्भाभ्यर्हितो गयश्च-प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा च ॥

जीवः देहान्तरगमने देहहेतुभूतैः भूतसूक्ष्मैः सह सम्परिष्वक्तः तत्र तत्र याति—इति गम्यते ॥ (3–1–2)

देहाद्यारम्भाय हि ! 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणम् ॥ (3–1–3)

उत्क्रामति जीवे, प्राणानां तदनुगतिः श्रूयते । न च निराश्रयाणां गतिरुपपद्यते इति, तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिः अभ्युपगन्तव्या ॥ (3–1–4)

जीवमरणकाले चक्षुराद्यप्ययश्रुतिः, अधिष्ठातृदेवतापक्रमणपरा ॥ (3–1–5)

'भूतान्तरसंसृष्टाभिरद्भिः सम्परिष्वक्तो जीवो रंहती' त्युपपन्नम् ॥ (3–1–6)

श्रद्धावस्थदेहविशिष्टो (जीवः) सोमरूपदेहविशिष्टो भवती' त्युक्तमिति गम्यते । देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दः, विशेष्ये जीव एव पर्यवस्यति ॥ (3–1–7)

इष्टादिकारिणः अनात्मवित्त्वात्, सः देवानां भोगोपकरणत्वेन इहाऽमुत्र च वर्तते । इह इष्टादिना तदाराधनं कुर्वन् उपकरोति । आराधनप्रीतैर्देवैः दत्तम् अमुं लोकं प्राप्य, तत्र तत्समानभोगः तदुपकरणं (—तृप्तिसाधनं) भवति ॥ (3–1–8)

अमुं लोकं गताः, (केवलेष्टापूर्तकारिणः) सानुशया एव आरोहणप्रकारेण—(धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण) प्रकारान्तरेण च—(चन्द्रमसः स्थानात् आकाशवायुधूमाभ्रमेघक्रमेण) पुनर्निवर्तन्ते ॥ (3–1–9)

सुख-दुःखे हि ! पुण्यपापरूपकर्मफले ॥ (अतः) 'रमणीयचरणाः कपूयचरणाः' इति चरणश्रुतिः कर्मोपलक्षणार्थेति, 'चरण'शब्देन पुण्य-पापरूपं कर्माऽभिधीयते ; केवलादाचारात् सुख-दुःखप्राप्त्यसम्भवात्—इति कार्ष्णाजिनिराचार्यो मन्यते ॥ (3–1–10)

आचारवत एव पुण्यकर्मस्वधिकारः ; 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । आचारहीनं न पुनन्ति वेदाः' इत्यादिवचनेभ्यः ॥ (3–1–11)

सुकृत दुष्कृते एव 'चरण'शब्दाभिधेये, 'पुण्यं कर्माचरति' इति कर्मणि चरतेः प्रयोगात् । आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकारापादनं फलम्—इति बादरिराचार्यो मन्यते ॥ (3–1–17)

अनिष्टादिकारिणां, यथा विद्याविधुरत्वात् देवयानेन पथा गमनं न सम्भवति ; तद्वदेव इष्टापूर्तदत्तविधुरत्वात् पितृयाणेन चन्द्रगमनमपि न सम्भवति ।। (3–1–18,19)

तृतीयस्थानस्य, (केवलपापकर्मणां चेतनानां, द्युलोकारोहावरोहाभावेन द्युलोका-संपूर्तिवचनात्, अस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा ॥

पुण्यकर्मणामपि केषांचित् पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदी-धृष्टद्युम्नप्रभृतीनाम् ।। (3–1–25)

अतिशयिताभ्युदयसाधनभूतो व्यापारः, अल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव । चिकित्सकं च नाद्यात्विकाल्पदुःखकारिणमपि, रक्षकमेव वदन्ति ; पूजयन्ति च तज्ज्ञाः ।। (3–2–3)

(स्वप्ने हि रथादयः) सकलेतरपुरुषानुभाव्यतया न भवन्ति । (परमपुरुषः) स्वप्न-दृगनुभाव्यतया तत्कालमात्रावसानान् (रथादीन्) सृजते । एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते ; न जीवस्य ; (तस्य) संसारदशायां कार्त्स्न्येन अनभि-व्यक्तस्वरूपत्वात् ।। (3–2–4, 5)

अनादिकर्मपरम्परया कृतापराधस्य हि अस्य जीवस्य स्वाभाविकं कल्याणरूपं परमपुरुषः तिरोधापयति ।। तत्सङ्कल्पादेव अस्य बन्धमोक्षौ श्रुतौ ।।

सः तिरोधानभावः सृष्टिकाले देहावस्थेन अचिद्वस्तुना संयोगात्, प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात् भवति ।। अतः जीवानाम् अल्पाल्पकर्मानुगुण-फलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यान् अर्थान् (परमपुरुष एव) उत्पादयति ।। (3–2–7)

(जीवस्य) सुषुप्तिः नाडीषु पुरीतति आत्मनि च भवति । तत्र नाडी-पुरीततौ प्रासादखट्वा-स्थानीयौ । ब्रह्म तु पर्यङ्कस्थानीयम् । अतो ब्रह्मैव साक्षात् सुषुप्तिस्थानम् ॥ (3-2-9)

सुषुप्तः, संसरन्नेव आयस्तसर्वकरणः ज्ञानभोगाद्यशक्तः, विश्रमस्थानं परमात्मानमुप-सम्पद्य आश्वस्तः पुनर्भोगायोत्तिष्ठति । (यतः) सुषुप्तेन पूर्वकृतं पुण्यपापरूपं कर्म तेनैव भोक्तव्यम् ; य एवाऽहं सुप्तः स एव प्रबुद्धोऽस्मीति अनुस्मृतिरपि (वर्तते), शब्दोऽपि च (श्रौतः) सुप्तप्रबुद्धं स एवेति दर्शयति (अतः) सुषुप्त एव प्रबोधसमये उत्तिष्ठति ; (नाऽन्यः) ॥ (3-2-11)

पूय-शोणितादिमज्जनं हि । स्वेच्छाकारितमपि अपुरुषार्थ एव ॥

यतः श्रुति-स्मृतिषु परं ब्रह्म, निरस्तनिखिलदोषत्व-कल्याणगुणाकरत्वलक्षणोपेतं उभय-लक्षणमभिधीयते ; (अतः) पृथिव्यात्मादिस्थानतोऽपि, परस्य ब्रह्मणः अपुरुषार्थगन्धो न सम्भवति ॥ 'स त आत्माऽन्तर्याम्यमृतः' इति अन्तर्यामिणः अमृतत्ववचनेन, स्वेच्छया नियमनं कुर्वतः (तस्य) तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् ॥ 3-2-12, 13)

कर्मवश्यानां कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पात् एकमेव वस्तु कालभेदेन पुरुष भेदेन च सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये, सर्वं सर्वदा सर्वस्य, सुखायैव दुःखायैव वा स्यात् । न चैवं दृश्यते । अतः, जीवस्य कर्मवश्यत्वम् तत्तत्कर्मानु-गुण्येन तत्तद्वस्तुसम्बन्ध एव अपुरुषार्थः स्यात् । परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धः, तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात् ॥

एके शाखिनोऽपि, 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थम्, परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च अधीयते ॥ (3-2-14)

जीवस्य तत्तज्जन्यसुख-दुःखभाक्त्वेन यथा तत्तद्रूपसम्बन्धः ; परस्य तथा तदभावात् अरूपवत्त्वम् । जीववत् शरीरित्वनिबन्धनं कर्मवश्यत्वम् अस्य (परस्य ब्रह्मणः) न विद्यते । विधि निषेधशास्त्राण्यपि कर्मवश्यत्वमेवाऽधिकुर्वन्ति । ब्रह्मणः सर्वानुप्रवेशोऽपि नाम-रूप-कार्यास्पर्शेन नाम-रूपयोर्निर्वोढृत्वमेव ब्रह्मणः (शास्त्रं) प्रतिपादयति । तस्मात् अरूपतुल्यमेव ब्रह्म । ततश्चाऽन्तर्यामिरूपेणाऽवस्थितमपि ब्रह्म, निरस्तनिखिलदोषत्व कल्याणगुणाकरत्वरूपो-भयलिङ्गमेव ॥ (3-2-17)

दर्शयति च वेदान्तगणः, कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च ।

अतः सर्वत्राऽवस्थितस्याऽपि ब्रह्मणः उभयलिङ्गत्वात, स्थानप्रयुक्ता दोषाः न परं ब्रह्म स्पृशन्ति ।। (3-2-17)

यतः, नानाविधेषु स्थानेषु स्थितस्याऽपि परस्य ब्रह्मणः न तत्प्रयुक्तदोषभाक्त्वम्, अत एव 'जल-दर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्र तत्रावस्थितोऽपि निर्दोषः' इति शास्त्रेषूपमा क्रियते ।। (3-2-18)

यथा घट-करकादिषु वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं, वृद्धिह्रासादि-दोषैर्न स्पृश्यते ; यथा च जलाधारेषु विषमेषु दृश्यमानोंऽशुमान्, तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते ; तथा अयं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु च स्थितः, तद्गतवृद्धि-ह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽप्येक एव—अस्पृष्टदोषगन्धः कल्याणगुणाकर एव ॥ (3-2-20)

यत् ब्रह्मणः प्रकृतविशेषवत्त्वं, 'नेति नेती'ति प्रतिषिध्यते—इति ; नैतदुपपद्यते ; तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ! ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं, तद्विशेषणत्वेनोपदिश्य, पुनस्तदेव अनुन्मत्तः प्रतिषेधति । यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति ; अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति ।। 3-2-21

जीवास्तावत् सत्यम् ; वियदादिवत् स्वरूपान्यथाभावरूपपरिणामाभावात् । तेभ्यो जीवेभ्योप्येष परमपुरुषः सत्यम् । जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते । परमपुरुषस्य तु अपहतपाप्मनः तौ न विद्येते । अतः तेभ्योऽप्येष सत्यम् ॥

भक्तिरूपापन्नमेवोपासनं (तस्य परब्रह्मणः) सम्यक्प्रीणनम् । (तादृशे) निदिध्यासने एवाऽस्य साक्षात्कारः ; नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते । (3-2-23)

यतः साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने, ज्ञानानन्दादिस्वरूपवत् मूर्ता-मूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वाविशेष्यं प्रतीयते ; इतश्च (नेति नेतीति) प्रकृतै-तावत्त्वमेव प्रतिषेधति, न मूर्तामूर्तादिविशिष्टत्वम् ।। (3-2-24)

अचिद्वस्तुनः जीववत् पृथक्सिद्ध्यनर्हविशेषणत्वेन, ब्रह्मांशत्वम् । विशिष्टवस्त्वेकदेश-त्वेन अभेदव्यवहारः, विशेषणविशेष्ययोः स्वरूप-स्वभावभेदेन भेदव्यवहारश्च मुख्यः ।

तदेवं मणिं प्रति प्रकाशस्य, व्यक्तिं प्रति जातेः, गुणिनं प्रति गुणानां, आत्मानं प्रति शरीरस्य च यथा अपृथक्सिद्धिलक्षणविशेषणतया अंशत्वम् ; तथा इह जीवस्य अचिद्वस्तुनश्च ब्रह्म प्रति अंशत्वम् ॥ (3-2-28)

अंशांशिभावः विशेषण-विशेष्यत्वेनैव ।। अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म । स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्म इति कारणात् कार्यस्यानन्यत्वम् । कारण-भूतब्रह्मविज्ञानेन कार्यस्य ज्ञातता-इत्यादि सर्वमुपपन्नम् , ब्रह्मणो निर्दोषत्वं च रक्षितम् ।।
(3-2-29)

(परमात्मा) सर्वं चिदचिद्वस्तुजातं स्वस्मिन् असङ्कीर्णं सिनोति बध्नातीति सेतुरुच्यते । जगत्कारणस्य ब्रह्मणः 'अनन्तम्' इति अपरिच्छिन्नत्वावगमात , स्वत उन्मितत्वासम्भवात् , उन्मानव्यपदेशः उपासनार्थः ; यथा विततस्य प्रकाशाकाशादेः वातायन-घटादिस्थानभेदैः परिच्छिद्याऽनुसन्धानसम्भवः (तथा) ।। (3-2-31, 3-2-36)

प्राप्यस्य परमपुरुषस्य, स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः, 'अमृतस्यैष सेतुः' इति प्राप्य प्रापकसम्बन्धव्यपदेशः । 'यमेवैष वृणुते तेन लभ्यः' इति अनन्योपायत्वश्रवणात् ।।

'तेनेदं पूर्णं पुरुषेण सर्वम्' इति सर्वव्याप्तिवाचिशब्देभ्यः अवगम्यमानं, अनेन ब्रह्मणा सर्वस्य जगतो व्याप्तत्वम् , परं नास्तीत्यवगमयति ॥ अतः इदं परं ब्रह्मैव सर्वस्मात् परम् ।। (3-2-31, 3-2-26)

स एव हि सर्वज्ञः सर्वशक्तिर्महोदारः, याग-दान-होमादिभिः उपासनेन च आराधितः ऐहिकामुष्मिकं भोगजातम , स्वस्वरूपावाप्तिरूपम् अपवर्गं च दातुमीष्टे । न हि ! अचेतनं कर्म क्षणध्वंसि, कालान्तरभाविफलसाधनं भवितुमर्हति ।। (3-2-37)

लोके च कृष्यादिभिः विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य, तैः राजानं भृत्यद्वारेण साक्षाद्वा अर्चयन्ति । अर्चितश्च राजा, तत्तदर्चनागुणं फलं प्रयच्छन् दृश्यते । वेदान्तास्तु —अतिपतितसकलेतरप्रमाणसम्भावनाभूमिं, निरस्तसमस्ताविद्यादिदोषगन्धं, स्वाभाविका-नवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य, तदाराधनरूपाणि यागदानहोमात्मकानि स्तुति-नमस्कारकीर्तनार्चनध्यानानि तदाराधनानि, आराधितात् परस्मात् पुरुषात् भोगापवर्ग-रूपं फलं च वदन्तीति सर्वं समञ्जसम् ।। (1-2-पादौ) (3-3-40)

अतः एभिः (संयोगरूपचोदनाख्याभिः) प्रत्यभिज्ञानात् शाखान्तरेपि विद्यैक्यम् ।। (3-3-1)

यत्र हि एकस्मिन् प्रतिपत्तरि पुनः श्रुतिः प्रकरणान्तरं च विद्यते ; तत्रान्यथानुपपत्त्या विधेयभेदात् विद्याभेदः । प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनः श्रुत्याद्युपपत्तेः तत्र न विधेयान्तरसम्भवः ।। (3-3-4)

एवं सर्ववेदान्तेषु उपासने समाने सति वेदान्तान्तराम्नातानां गुणानां वेदान्तरे उपसंहारः कर्तव्यः । यथा एकस्मिन् वेदान्ते श्रुतो वैश्वानर-दहरादिविद्याविशेषः गुणः तद्विद्यासम्बन्धात् तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते ; तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्यः ॥ (3-3-5)

प्रधानस्य गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदात् गुणानां गुण्यपृथग्भावात्, सर्वत्र आनन्दादयस्तद्गुणाः उपसंहर्तव्याः । (3-3-11)

ये तु अर्थस्वरूपनिरूपणधर्मत्वेन अर्थप्रतीत्यनुबन्धिनः, ते अर्थस्वरूपवत् सर्वत्रानुवर्तन्ते, ते च सत्यज्ञानानन्दामलत्वानन्तत्वानि, उपास्यस्वरूपावगमाय सर्वत्रानुवर्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः, तेषां गुण्यपृथक्स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात् ये यत्र श्रुताः ते तत्रोपसंहार्याः ॥ (3-3-13)

दहराकाश एक एव अपहतपाप्मत्वादिगुणानां गुणी । स च प्रथमं चिन्तितः स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात्, गुणविशिष्टतया च उपास्यत्वेन विहितत्वात्, स्वरूपेणाऽनुसंहितस्य अपहतपाप्मत्वादिविशिष्टतया अनुसन्धानार्थम् आवृत्तिः कर्तव्या ॥ (3-3-42)

अस्य (सहस्रशीर्षमित्यनुवाकस्य) निखिलपरविद्योपास्यनिर्धारणपरत्वे भूयांसि लिङ्गानि दृश्यन्ते । परविद्यासु अक्षर-शिव-शम्भु-परब्रह्म-परज्योतिः-परतत्त्व परमात्मादिशब्दनिर्दिष्टम् उपास्यं वस्तु, इह तैरेव शब्दैरनूद्य, तस्य नारायणत्वं विधीयते । भूयसीषु विद्यासु श्रुताननूद्य नारायणत्वविधानभूयस्त्वं, नारायण एव सर्वविद्यासूपास्यम् अस्थूलत्वादि विशेषितानन्दादिगुणकं परं ब्रह्म—इति निर्णये बहुतरं लिङ्गं भवति ॥ (3-3-43)

इष्टकचितेष्वग्निषु यत् क्रियामयं यज्ञीयं कर्म क्रियते, तत् मनोनिर्वर्त्येषु मनश्चिदाद्यग्निषु मनोमयमेवाक्रियत—इति वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥ एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्ति ।। (3-3-46)

प्रत्यगात्मनोऽपि उपास्यभूतपरब्रह्मशरीरतया उपास्यकोटिनिक्षिप्तत्वात्, अस्य मोक्षदशायां यादृशं रूपं तादृग्रूप एव उपासनवेलायामात्मा अनुसन्धेयः। 'यथाक्रतुः अस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति यथोपासनमेव हि प्राप्तिः श्रूयते। अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरकपरमात्मोपासनस्य तथारूपमेव प्राप्यम् इति प्राप्याकार एव प्रत्यगात्मा अनुसन्धेयः ।। (3-3-52)

तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषय(क) प्रत्ययावृत्त्यवबोधिनः 'वेद, उपासीत' इत्यादयः शब्दाः, प्रत्ययावृत्तिरूपाः विद्याः भिन्दन्ति। ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि, प्रतिप्रकरणं विलक्षणविद्याभिधायीनि—इति निश्चीयते ॥ (3-3-56)

ब्रह्म हि स्वस्य परस्य स्वयमनुभूयमानम् अनवधिकातिशयमानन्दं भवति, स च तादृशो ब्रह्मानुभवः, एकया विद्यया अवाप्यते चेत्! किमन्ययेति, न समुच्चयसम्भवः। स्वर्गादेर्हि देशतः, कालतः, स्वरूपतश्च परिमितत्वेन, तत्र देशाद्यपेक्षया भूयस्त्वसम्भवात्, तदर्थिनः समुच्चयः सम्भवति ।। सर्वाश्च विद्याः ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इति, अविशिष्टफलत्वात् सर्वासां विकल्प एव। (3-4-57)

कर्मसु कर्तृर्जीवात् हेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेन अधिकस्य-अर्थान्तरभूतस्य परस्य ब्रह्मणः वेद्यतया उपदेशात् विद्यातः फलमित्येव बादरायणस्य मतम् ।। (3-4-8)

गृहस्थाश्रमवत् आश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते; उपादेयतयाभिमतगृहस्थाश्रमसाम्यं हि! तेषामप्याश्रमाणां श्रूयते ।। अतः गृहस्थाश्रमतुल्याः ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। (3-4-19)

यज्ञादिना विविदिषन्ति—यज्ञादिभिः वेदनं प्राप्तुमिच्छन्ति-इति यज्ञादीनां ज्ञानसाधनत्वमवगम्यते, 'असिना जिघांसति' इति व्यपदेशवत्। ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियम्, अहरहरभ्यासाधेयातिशयम् आप्रयाणादनुवर्तमानं मोक्षसाधनम् ॥ एवंरूपं ध्यानम् अहरहरनुष्ठीयमानैः नित्यनैमित्तिककर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायत इति

'यज्ञादिना विविदिषन्ती' ति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्य-नैमित्तिकसर्वकर्मापेक्षा विद्या ॥ (3-4-26)

विद्योत्पत्तेः चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वात् शमादीनां, विद्यानिर्वृत्तये शमादीनामप्यवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि । न च करणव्यापार-तद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः; विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति भिन्नविषयत्वात् ॥ अतः गृहस्थस्य शमादयोऽप्यनुष्ठेयाः ॥ (3-4-27)

अतः सर्वाश्रमेषु स्थितस्य विदुषः यज्ञादिस्वाश्रमधर्मवत् मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते; 'अथ मुनिः' इति ॥ (3-4-46)

विद्वान् स्वभावानाविष्काररूपं यत् बालस्य कर्म तदुपाददानो वर्तेत ॥ बाल्यस्य वयोवस्थाविशेषस्य अनुपादेयत्वात् , इतरेषां (कामचारादिकानां) विद्याविरोधित्वश्रवणात् ॥ (3-4-49)

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैः अतिशयितकर्मभिः उत्पत्तौ एवमेव काला-नियमः ; तस्यापि पूर्ववत् प्रतिबन्धाभाव प्रतिबन्धसमाप्तिरूपावस्थावगतेः । तत्रापि पूर्वकृतानां प्रबलानां ब्रह्मविदपचाराणां सम्भवात् प्रतिबन्धसम्भव इति ॥ (3-4-51)

# सिद्धान्तोक्तयः अध्याय-४

'तमेव विदित्वा अतिमृत्युमेति' 'ब्रह्म वेदाप्नोति परम्' इत्यादिषु वेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनम् असकृदावृत्तमेव शास्त्रार्थः, ध्यानोपासनपर्यायेण वेदन-शब्देनोपदेशात । 'निदिध्यासितव्यः' 'ध्यायमानः' इत्यादिषु ध्यायतिना वेदनमभिधीयते । ध्यानं च स्मृतिरूपं चिन्तनम् ; न स्मृतिमात्रम् । उपास्तिरपि तदेकार्थः ; एकाग्रचित्तवृत्ति-नैरन्तर्ये प्रयोगदर्शनात् । तदुभयैकार्थ्यात् , 'ब्रह्मवेद ब्रह्मैव भवति, ज्ञात्वा देवं मुच्यते सर्वपाशैः ' इत्यादिषु वेदनादिशब्दैःअसकृदावृत्ता स्मृतिरभिधीयते इति निश्चीयते ॥ (4-1-1 )

'तद्रूपप्रत्यये चैका सन्ततिश्चाऽन्यनिस्पृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा' ॥ इति, स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम् । तस्मात् असकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ ( 4-1-2 )

उपास्यं ब्रह्म उपासितुरात्मत्वेनोपास्यम् । उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा; तथा परं ब्रह्म स्वात्मनोऽप्यात्मेति, उपास्यं ब्रह्म आत्मेत्येवोपासीत सर्वस्य चिदचिद्वस्तुनः, 'सर्वं खल्विदं ब्रह्म तज्जलानिति, तज्जत्वात् तल्लत्वात् तदनत्वात् तन्नियाम्यत्वात् तच्छरीरत्वाच्च, सर्वस्य अयं (परमात्मा) आत्मा । यथा स्वशरीरं प्रति प्रत्यगात्मन आत्मत्वात् 'देवोऽहं, मनुष्योऽहम्' इत्यनुसन्धानम् ; तथा परमात्मनः, प्रत्यगात्मनोऽप्यात्मत्वात्, तस्यापि 'अहम्' इत्येव अनुसन्धान युक्तमिति ॥

एवं-शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वम् अभ्युपगच्छन्तः, 'त्वं वा अहमस्मि भगवो देवते ! अहं वै त्वमसि भगवो देवते ! ' इति व्यतिकरेणोक्तवन्तः ॥

एवं चपा आत्मेत्येवोपासीत' इति । 'आत्मत्वाननुसन्धाननिषेधः, 'पृथगात्मानं प्रेरितारं च मत्वा' इति पृथक्त्वानुसन्धानविधानं च अविरुद्धम् । 'अहम्' इति स्वात्मतया अनुसन्धानात्, 'अथ यः अन्यां देवतामुपास्ते....न स वेद' इति अन्यत्वानुसन्धाननिषेधो रक्षितः । स्वशरीरात् स्वात्मनोऽधिकत्वानुसन्धानवत्, स्वात्मनोऽपि (सकाशात्) परमात्मनः अधिकत्वानुसन्धानात्, पृथक्त्वानुसन्धानविधानं च रक्षितम् ॥

अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्, तस्य च ब्रह्मशरीरत्वात्, निषेधकवाक्ये 'अकृत्स्नो ह्येषः' इत्युक्तम् । अतः उपासितुरात्मत्वेन ब्रह्म उपास्यम् — इति स्थितम् ॥

(4-1-3)

'मनो ब्रह्मेत्युपासीत' 'नाम ब्रह्मेत्युपास्ते' इत्यादिप्रतिकोपासनेषु, प्रतीके न आत्मत्वानुसन्धानं कार्यम् । न हि उपासितुरात्मा प्रतीकः । प्रतीकोपासनेषु, प्रतीक एवोपास्यः ; न ब्रह्म । ब्रह्म तु तत्र दृष्टिविशेषणमात्रम् । प्रतीकोपासनं हि नाम-अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम् । तत्र उपास्यस्य प्रतीकस्य उपासितुरात्मत्वाभावात्, न तथाऽनुसन्धेयम् ॥

(4-1-4)

(प्रतीकोपासनेषु) मन आदिषु ब्रह्मदृष्टिरेव युक्ता; न ब्रह्मणि मन आदिदृष्टिः ; ब्रह्मणो मन आदिभ्यः उत्कर्षात् । उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी । भृत्ये तु राजदृष्टिः अभ्युदयाय ॥ (4-1-5)

आदित्यादीनामेव (उद्गीथाद्यपेक्षया) उत्कृष्टत्वोपपत्तेः, कर्माङ्गे उद्गीथादौ आदित्यादिदृष्टय एव कार्याः ; (न तु उद्गीथादिदृष्टिरादित्यादौ) । आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम् ॥ ( 4-1-6 )

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ध्यानोपासनादिशब्दवाच्यं ज्ञानम् असकृदावृत्तस्मृतिसन्ततिरूपम् आसीनः अनुतिष्ठेत् । आसीनस्यैव हि एकाग्रचित्ततासम्भवः ; स्थितिगत्योः प्रयत्नसापेक्षत्वात् , शयाने च निद्रासम्भवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ।।

उपासनस्य ध्यानरूपत्वात् एकाग्रचित्तता अवश्यंभाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यहितम् एकचिन्तनम् । एकाग्रचित्ततया निश्चलत्वम् (पृथिवी-पर्वतादिवत् ) आसीनस्यैव उपासकस्य सम्भवेत् ॥ स्मरन्ति च आसीनस्यैव ध्यानम्—'शुचौ देशे....एकाग्रं मनः कृत्वा....उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति ॥ एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात्, एकाग्रतानुकूलो यो देशः कालश्च, स एव उपासनस्य (योग्यः) देशः कालश्च । 'मनोऽनुकूले' इति वाक्यशेषात् ।। (4-1-7-4-1-11)

अपवर्गसाधनम् उक्तलक्षणमुपासनम् , उपासनोद्योगप्रभृति आप्रयाणात् मध्ये यः कालः तत्र सर्वत्राऽपि, ( 'स खल्वेवं वर्तयन् यावदायुषम्' इति) दृष्टमिति, आप्रयाणादनुवर्तनीयम् ।।
( 4-1-12 )

विद्याप्राप्तौ, पुरुषस्य उत्तर पूर्वाघयोरश्लेषविनाशौ, विद्यामाहात्म्यादुपपद्येते । विद्यामाहात्म्यम् एवंविधं ह्यवगम्यते; 'एवंविदि पापं कर्म न श्लिष्यते, एवं ह अस्य सर्वे पाप्मानः प्रदूयन्ते । इत्यादिव्यपदेशात् । 'नाऽभुक्तं क्षीयते कर्म' (इति) हि! कर्मणां फलजननसामर्थ्यद्रढिमविषयम् । ( न श्लिष्यते, प्रदूयन्ते' ) इत्येतत्तु, उत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम्, उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोः भिन्नविषयत्वात् , न कश्चिद्विरोधः ।

अघस्य अश्लेषकरणम्-वैदिककर्मायोग्यता-वासना-प्रत्यवायहेतुकशक्त्युत्पत्तिप्रतिबन्धकरणम् । अघानि हि कृतानि;-पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिप्रत्यवायं च कुर्वन्ति ।। अघस्य विनाशकरणम्-उत्पन्नायाः तच्छक्तेः विनाशकरणम् ।

शक्तिरपि परमपुरुषाप्रीतिरेव ।। तदेवं विद्या, वेदितुः वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती, वेद्यभूतपरमपुरुषाराधनस्वरूपा, पूर्वकृताघसंचयजनितपरमपुरुषाप्रीतिं विनाशयति । सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति ।।

(4-1-13)

उक्तेन न्यायेन पुण्यस्याऽपि विद्यया अश्लेष-विनाशौ स्याताम्; विद्याफलविरोधित्वसामान्यात्, 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति, सुकृतस्याऽपि पाप्मशब्देन व्यपदेशात् ।। मुमुक्षोरनिष्टफलत्वात्, सुकृतस्याऽपि पाप्मशब्देन व्यपदेशः ।। शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीति ।। (4-1-14)

विद्योत्पत्तेः पूर्वे सुकृत-दुष्कृते, अप्रवृत्तफले एव विद्यया नश्यतः, [न तु] अविशेषेण । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये इति शरीरपातविलम्बावधित्वश्रुतेः । न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ।।

(4-1-15)

अग्निहोत्राद्याश्रमधर्मा फलाश्लेषासम्भवात् अनुष्ठेया एव । विद्याख्यकार्यायैव विदुषः अग्निहोत्राद्यनुष्ठानमिति, तेषां तत्कार्यार्थत्वात् तद (फला) श्लेषासम्भवः । दृश्यते हि अग्निहोत्रादीनां विद्यासाधनत्वम् , तमेतं वेदानुवचनेन' इत्यादिना ।। आप्रयाणात् अभ्यासाधेयातिशयायाः विद्यायाश्च अहरहरुत्पाद्यत्वात् , तदुत्पत्त्यर्थम् आश्रमकर्माऽपि अहरहरनुष्ठेयमेव । अन्यथा आश्रमकर्मलोपे, दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ।।

(4-1-16)

तदेवं-ब्रह्मविद्यायाः प्रागनुष्ठितम् अभुक्तफलम् अनारब्धफलं पुण्य-पापरूपं कर्म अनादिकालसञ्चितम् अनन्तम् , विद्यामाहात्म्याद्विनश्यति । विद्यारम्भोत्तरकालमनुष्ठितं च, न श्लिष्यति । तत्र पुण्यरूपं सर्वं, विदुषः सुहृदो गृह्णन्ति । पापं च द्विषन्तः—इति निरवद्यम् ।। (4-1-19)

'पुरुषस्य प्रयतः वाङ्मनसि सम्पद्यते' इति वाचो मनसि सम्पत्तिश्रुतिः, वाक्स्वरूपस्य मनसि सम्पत्तावेव उपपद्यते; न वृत्तिमात्रसम्पत्तौ । मनसा वाक् संयुज्यते; न तु तत्र लीयते । मनसः वाक्प्रकृतिकत्वाभावात् ।। ( 4-2-1 )

(तथैव) सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते; न मनोवृत्तिमात्रम् । 'मनः प्राणे' इति वाक्यात् ॥ (4-2-3)

स च प्राणः करणाधिपे जीवे सम्पद्यते । (4-2-4)

जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिः, सर्वेषु भूतेषु; जीवस्य संचरतः सर्वभूतमयत्वश्रुतेः ॥ (4-2-5)

इयम् उत्क्रान्तिः नाडीप्रवेशनात् प्राक् विद्वदविदुषोः समाना । तत्प्रवेशदशायां च विशेषः श्रूयते । मूर्ध्नो निष्क्रमणं विद्वद्विषयम् : 'अत्र ब्रह्म समश्नुते' इति च उपासनवेलायां यो ब्रह्मानुभवः, तद्विषयम् ॥ ( 4-2-7,8 )

विद्वान्, शताधिकया मूर्धन्यया नाड्यैव उत्क्रामति । विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततया आत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेण अनुगृहीतो भवति । ततश्च तस्य जीवस्य स्थानं हृदयम् अग्रज्वलनं भवति । परमपुरुषप्रसादात् प्रकाशितद्वारो विद्वान्, तां नाडीं विजानातीति, तया विदुषो गतिरुपपद्यते ॥ (4-2-16)

लक्ष्यते हि निश्यपि निदाघसमये (सूर्य) रश्मिसद्भावः ) तस्मात् निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिः अस्त्येव ॥ (4-2-17)

अनारब्धकार्याणाम् अधोगतिहेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशात्, उत्तरेषां च अश्लेषात्, प्रारब्धकार्यस्य चरमदेहावधित्वात्, विदुषो निशामृतस्यापि ब्रह्मप्राप्तिः सिद्धैव ॥
(4-2-18)

निशि मृतस्यापि विदुषः ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एवहेतोः दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा ॥ (4-2-19)

आभिः (सर्वाभिः) श्रुतिभिः अर्चिरादिः एक एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति अर्चिरादिनैव गच्छति विद्वान् ॥ (4-3-1 )

ये परं ब्रह्मोपासते, ये च आत्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते, तानुभयविधान् अर्चिरादिः अतिवाहिको गणो नयतीति भगवान् बादरायणो मन्यते ॥ ( 4-3-14)

अपहतपाप्मत्वादिस्वरूप एवाऽयमात्मा संसारदशायां कर्माख्यया अविद्यया तिरोहितस्वरूपः, परंज्योतिरुपसम्पद्य आविर्भूतस्वरूपो भवति । अतः अपहतपाप्मत्वादयः प्रत्यगात्मनः स्वाभाविका गुणाः परं ज्योतिरुपसम्पन्नस्य आविर्भवन्ति; न उत्पद्यन्ते ॥ अतः ज्ञानानन्दादिगुणानां कर्मणा आत्मनि सङ्कुचितानां परंज्योतिरुपसम्पद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावोनाऽनुपपन्न इति सुष्ठूक्तं 'सम्पद्य आविर्भावः' इति ॥ (4-4-3)

परब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य (चेतनस्य) याथातथ्येन स्वात्मनो दृष्टत्वात्, मुक्तः परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतं स्वात्मानं परस्माद्ब्रह्मणोऽविभागेन 'अहं ब्रह्मास्मि' इत्येवानुभवति ॥ (4-4-4)

निरस्तनिखिलतिरोधानस्य मुक्तस्य निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम्—जगद्व्यापारं वर्जयित्वा निर्व्याजब्रह्मानुभवरूपमैश्वर्यम् ॥ (4-4-17)

यथा 'निखिलहेयप्रत्यनीककल्याणैकतानः जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिकः निरस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः परमपुरुषः अस्ति' इति शब्दादवगम्यते; एवम् 'अहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः, उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य, स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयति' इत्यपि शब्दादेवावगम्यते ॥ (4-4-22)

सिद्धान्तवाचः श्रीभाष्ये सङ्गृहीता यथायथम् ।
विदुषा रामभद्रेण तेन प्रीणातु माधवः ॥



॥ श्रीः ॥

## तृतीय चतुर्थाध्यायस्थशारीरकीयाधिकरणाकाराद्यनुक्रमः

—o—

## 3-4 अध्यायगतानां ब्रह्मसूत्राणामकाराद्यनुक्रमणिका

## ( ब्रह्मसूत्रार्थपद्यमालिकायाः अकाराद्यनुक्रमणिका )

[ शारीरकन्यायकलापसङ्ग्रहस्थश्लोकाकाराद्यनुक्रमः ]

—o—

( तत्त्वसारस्थश्लोकानामकाराद्यनुक्रमः )

—o—

## [ नयसङ्गतिमालिकाकारादिः ]

—o—

## [ अधिकरणसारावलीश्लोकानामकारादिः ]

श्रीरस्तु



# श्रीभाष्यचतुर्थसम्पुटस्य शोधनिका

| शुद्धम् | पृ. | पं. | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|
| ३–१–१ ॥(सि) | 1 | 16 | कात्स्न्र्येनाऽनभि | 37 | 15 |
| गुणाकरत्वं | 2 | 12 | ,, | ,, | 25 |
| प्रतिक्षिप्तः | 4 | 24 | स्वप्नः | 40 | 23 |
| ओषध्यभिमानिनी | 7 | 15 | सूचनकार्यपि | ,, | 24 |
| रोपपत्तेः | 8 | 23 | परमात्मान- | 42 | 2 |
| इत्यारभ्य | 10 | 5 | श्रूयन्ते | ,, | 14 |
| ३-१–७ ॥ (सि) | 11 | 3 | बोढृत्वमेव | 57 | 6 |
| ३–१–८ ॥ (सि) | 12 | 3 | आर्थगुण | 58 | 16 |
| भुक्तोच्छिष्टेन | 12 | 24 | ब्रह्मणः | 59 | 1 |
| प्रेत्य कर्म | 14 | 5 | निरस्तनिखिल | ,, | 2 |
| इष्टादिकारिप्रेत | 18 | 13 | प्रकाशरूपता | ,, | 19 |
| कतरेणचन | 23 | 8 | तस्य हैतस्य | 64 | 5 |
| द्युलोका | 23 | 11 | व्याचष्टे-[प्रमाणान्तरेणेति] | 66 | 17 |
| कतरेणचन | ,, | 15 | प्रमाणेन | ,, | 20 |
| त्वचिर्दृश्यते | 24 | 10 | साक्षात्कारस्य | ,, | 23 |
| तत्रापि | 25 | 11 | कुण्डलितावस्थानमिव | 69 | 19 |
| आकाशादिशरीरकत्वं | 26 | 20 | नास्ति चेति | 79 | 23 |
| दुर्निष्क्रमणतरम् | 28 | 16 | (नृ.सिं.उ.ता.उ 7,3) | 83 | 2 |
| जीवान्तरेण | 29 | 16 | तदधिकतरत्वाभावे | 83 | 13 |
| भोक्तृत्व | 30 | 2 | साधनमिति | 86 | 19 |
| स्वर्गादि | 31 | 10 | वैश्वानर | 93 | 10 |
| रेतः सेक्तरीव | 33 | 1 | प्रतिबन्धकत्वात् | 94 | 19 |
| मरणायार्धसम्पत्तिः | 34 | 13 | तदुपकाराविशेषात् | 99 | 4 |
| सन्ध्ये-स्वप्नदशायां स्वाप्ना | 35 | 18 | चक्षुः | 101 | 23 |

| शुद्धम् | पृ. | पं |
|---|---|---|
| तत्र ज्यैष्ठ्य-श्रैष्ठ्य | 108 | 11 |
| श्रैष्ठ्यं प्रति | ,, | 13 |
| ब्रह्म | 113 | 8 |
| सुनिश्चेयम् | 117 | 19 |
| स्यात्-निश्चयः सम्भवेदेव | 117 | 24 |
| भवति (छां.उ. 5–2–2) | 119 | 11 |
| वशित्वाद्युपास्य | 123 | 3 |
| (पू.मी.सू. 4–4–33) | 131 | 9 |
| वेधाद्यर्थ | 132 | 21 |
| समयविधिते | 135 | 25 |
| यस्य स्यादद्धा | 136 | 17 |
| उपाकरणम् | 138 | 21 |
| वाक्यशेषः | 139 | 10 |
| एव ? इति | 140 | 10 |
| श्रवणम् ? उत | ,, | 20 |
| स्वाभाव्याविरोध | 142 | 18 |
| किं अर्चिरादिगतिः तत्सन्निधि | 146 | 12 |
| अक्षरपरब्रह्म | 149 | 21 |
| अन्यथा | 156 | 5 |
| सद्विद्यायां सर्वत्रानुवृत्ता | 161 | 22 |
| ना वर्तनीयम् | 175 | 14 |
| मयत्वातिदेशः | 187 | 21 |
| न्यायोऽवतारितः | 203 | 15 |
| इह तदुप | ,, | 17 |
| समुच्चित्य | 207 | 12 |
| फलश्रुते | 218 | 1 |
| चेतनेनापि | 220 | 16 |
| ३–४–१२ | 227 | 12 |
| वैदिके | 233 | 1 |
| उद्गीथाद्युपा | 239 | 3 |
| -सर्वान्नानुमतिः | 251 | 9 |
| ब्रह्मविद्यो | 253 | 4 |
| कर्मान्तरत्वमस्ति | 255 | 15 |
| कर्तव्यताक | 258 | 11 |
| द्विद्याधिकार | 262 | 10 |
| तात्पर्य | 273 | 15 |
| शब्दोपादानेन | 290 | 26 |
| विहितक्तिनन्तः | 291 | 15 |
| प्रतीके | 297 | 13 |
| आदित्यादिषु | 300 | 8 |
| प्रामादिकस्यैव | 310 | 12 |
| भुक्तशिष्ट | 317 | 13 |
| आरब्धकार्य | 320 | 2 |
| प्रारब्ध | 354 | 14 |
| तदर्थं | 364 | 6 |
| देवयानं | 365 | 10 |
| संवत्सरादित्य | 366 | 4 |
| वायुश्च | ,, | 12 |
| न नियमोऽस्ति | 374 | 17 |
| रूपेणेति | 385 | 20 |
| वचनमनर्थकम् | 388 | 11 |
| समानबुद्धि | 394 | 18 |
| तत्पर्यन्त | ,, | 21 |
| अद्वैतिना | 401 | 2 |

| शुद्धम् | पृ. | पं. |
|---|---|---|
| तच्छ्रुतेः | 403 | 6 |
| ५३४, ४.४११ | 406 | 10 |
| विकारलोकानु | 413 | 13 |
| प्रक्रमाच्चैवं | ,, | 23 |
| ४–४–१९ | 417 | 9 |
| जगद्व्यापार | 420 | 12 |
| स्वरूप-रूप-गुण | 430 | 10 |
| भृदधिकरो | 431 | 4 |
| यथा तद्वदेव | 432 | 8 |
| तद्रूपेण | 432 | 12 |
| गगनमपि | 435 | 23 |
| तिमिरव | 436 | 2 |
| चिन्त्यमाचार | ,, | 17 |
| पुण्यपापे (स्त्व) | 439 | 15 |
| इत्यस्मात् | 443 | 13 |
| न्तैरात्म्यं | 444 | 16 |
| स्वर्गिणः सतो | ,, | 22 |
| प्रयुंक्ते | 445 | 8 |
| श्रुत्यन्तरसिद्धम् | 446 | 13 |
| श्रित्य न बाधते | ,, | 14 |
| यः अहङ्कारः | 448 | 25 |
| तत्प्रतिद्वन्द्वि | 453 | 12 |
| यथाजागरम् | 455 | 4 |
| सम्बध्नाति | ,, | 15 |
| कर्तृकत्वाव | 458 | 12 |
| कर्मणोः | 460 | 14 |
| -व्यवस्थापन्नेऽपि | 461 | 14 |
| पुनः अस्मिन् | 462 | 12 |
| मरणेषु | 464 | 2 |
| मूर्च्छा प्रसिद्धयु | ,, | 4 |
| -कल्याणगुणैक | 465 | 2 |
| दोषवर्गात् | 465 | 5 |
| कार्यस्य | 470 | 2 |
| इत्यस्यानन्तर | ,, | 5 |
| बृहदारण्यक | ,, | 11 |
| प्रभावत्प्रभयोः | 471 | 20 |
| रूपमंशत्वम् | 472 | 4 |
| भगवानित्यनर्था | ,, | 10 |
| जगत्कारणात् | 474 | 7 |
| तारवानेव | 475 | 19 |
| तैत्तिरीय | 476 | 5 |
| कारणत्वपरा दृश्यते | ,, | 15 |
| इत्यादिका | ,, | ,, |
| कारणत्वस्य | 478 | 4 |
| पूरुष इति | 480 | 1 |
| श्वेताश्व | ,, | 25 |
| विवृत्त्यात्मनि | 481 | 9 |
| मात्मत्वभ्रमेण | 482 | 12 |
| प्रथममासम् | 484 | 26 |
| चातुष्पद्यं च | 492 | 3 |
| पश्चम्यन्त | 493 | 6 |
| द्रष्टृत्वे | 496 | 7 |
| शास्त्रं | 497 | 5 |
| रीतिकं चिन्तनं | 501 | 12 |

| शुद्धम् | पृ. | पं. | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|
| प्रतिपत्तॄणां | 501 | 12 | राविर्भूत | 554 | 17 |
| परिहर्तुम् | 503 | 25 | पृथगदृष्टेः | 555 | 9 |
| पृथग्विद्या | 505 | 20 | मनश्चिताद्यग्नि | ,, | 11 |
| उद्गीथाख्या | 508 | 13 | मनश्चितादि | 557 | 12 |
| ब्रह्मविद्यो | 509 | 20 | दृष्टभोगार्थयत्ने- | 559 | 16 |
| वासिष्ठ्य | 512 | 2 | बोध्यतावान्) | 560 | 20 |
| गुणात्मके | ,, | 10 | शरीरेभावा | 561 | 2 |
| भिन्नप्रकारामेव | 513 | 21 | (पू.मी. 6-8-9) | 562 | 19 |
| दनवगतेः | 516 | 2 | व्यस्तसमस्तो | 563 | 7 |
| मनश्चितवाक्चितादौ | ,, | 5 | ' | ,, | 13 |
| ब्रह्मणि | ,, | 22 | क्यायैव | 570 | 2 |
| गत्यभावा | 518 | 15 | बाधात् | ,, | 7 |
| कार्यरूपा | 520 | 2 | प्रकाराभेद | 574 | 14 |
| विरहतः | ,, | 16 | तायाः पुरुषविद्यायाः | 577 | 8 |
| अग्निरहस्येऽपि | ,, | ,, | —श्रुते, गुणफलविधिः- | ,, | 24 |
| सफलेति) | 521 | 10 | निर्णयौपयिक्याः | 579 | 9 |
| पठिताया | ,, | ,, | सुकृतं स्यात् | 583 | 2 |
| अनन्यथासिद्धं | 525 | 4 | विहितानां | 585 | 10 |
| यनं प्रति शेषत्व | 529 | 11 | जुह्वादिस्तोत्र | 588 | 19 |
| हानोपायनो | 531 | 20 | स्यात्तु | 589 | 24 |
| तल्लक्षण | 532 | 2 | सम्बद्धाः | 592 | 2 |
| (प्रतियोगि) | 540 | 5 | नामके शस्त्रे | ,, | 7 |
| यातीतत्वप्रभृति | 541 | 4 | मोक्षाश्रम इति नाम | 594 | 7 |
| रन्यभावोऽपि | 542 | 11 | भजनविधेरूर्ध्वं | ,, | 12 |
| कार्यतया विहितेषु | 549 | 6 | करणकत्वस्य | ,, | 25 |
| अनपायि | 554 | 15 | इच्छा सान्तत्य | 597 | 5 |

| शुद्धम् | पृ. | पं. | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|
| रूपतया | 598 | 6 | तात्पर्यविषयतायाः | 649 | 8,9 |
| हि-यतः गम्यते | 600 | 18 | चिन्तायाः | ,, | 9 |
| प्राणात्यये | 601 | 9 | तादधीन्या | 650 | 21 |
| श्रुतिभिरभि | 602 | 11 | (प्रश्नार्थकचिन्हद्वयं नास्ति) | 653 | 22 |
| प्रवृत्तैव | ,, | 19 | यावदायुः | 662 | 4 |
| केवलाश्रमाङ्ग | ,, | 22 | प्युपासना | 669 | 5,14 |
| (आश्रमत्वेन इति त्याज्यम्) | 604 | 13,14 | –तथाभवः | ,, | 6,17 |
| ह्युपपतन | 606 | 11 | काप्युपकुरुत | 672 | 18 |
| सर्वेषां | 607 | 25 | बागाद्वृत्तिः | ,, | 19 |
| मधिकारोऽस्ति | 608 | 14,15 | बन्ध | 673 | 12 |
| संशीलनस्य | 611 | 9 | परम्परातः | 674 | 8 |
| लोट्-तव्य | ,, | 22 | प्राणो नभः | 676 | 10 |
| विधेयहाने | 612 | 18 | नत्वापः | ,, | 17 |
| कारीर्यादौ | 615 | 20 | संहतिं | 680 | 2 |
| ब्रह्मभक्तापराध | 617 | 4 | अत्र.... भाति इतिपङ्क्तिः त्याज्या | ,, | 4 |
| इत्याक्षिप्य | ,, | 20 | | | |
| पराध्यौ | 621 | 3 | प्रायणेथो | 682 | 19 |
| कर्तव्यताका | ,, | 7 | वचनात्सिद्धम् | 684 | 15 |
| यत्नो न च सुपरि | 623 | 3 | देहान्निष्क्रम्य | 686 | 16 |
| भङ्गुरत्व | ,, | 7 | भोगं वा लब्धुम् | ,, | 17 |
| विवृतिः | 625 | 25 | भावी | 687 | 16 |
| नयसङ्गतिमालिका | ,, | 18 | सम्पद्यमानानि | ,, | 17 |
| घ्राणेन्द्रिया | 633 | 12 | मनः प्राणे, प्राण | ,, | 19 |
| पर्यवसानवृत्त्या | ,, | 23 | अधिकरणसारावलिः | 688 | 1 |
| वोपायभूतम् | 634 | 11 | अव्यवस्थितित | 690 | 4 |
| अघाश्लेषो | 637 | 3 | योग्यायां | ,, | 10 |

| शुद्धम् | पृ. | पं. | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|
| तावदेव चिरं | 693 | 11 | शरीरस्य विमोकः | 719 | 24 |
| रजनि मरणम् | ,, | 18 | अश्रान्त | 720 | 17 |
| रात्रौ प्रेयात् | ,, | 21 | रहितेन केवले | 721 | 1 |
| निशासमये | ,, | ,, | वदन्तः | ,, | 9 |
| चरममरणं, रहितं, अन्तिमं | ,, | 22 | नित्यात्मस्वरूप | ,, | 15 |
| विहता | 696 | 9 | मात्मनः | 722 | 18 |
| स्तुतिः तदि | 697 | 6 | मल्लिकाख्या | 723 | 5 |
| धूमादिपथा | ,, | 9 | भोग्यसदृशं फलम् | ,, | 10 |
| (आवरणं त्याज्यम् ) | 699 | 15 | मुक्तौ स्फुरति | 725 | 13 |
| लक्ष्मणः प्रत्यभि | 700 | 14 | सहागतः | 726 | 10 |
| ज्ञापकस्य | ,, | 15 | –घटयोः | 727 | 5 |
| तादृशः पन्थाः | 701 | 2 | युक्तत्वं | 728 | 10 |
| स्मृतिरपि | ,, | 9 | स्वरूपत्वमेव वा | ,, | 12 |
| श्रुतमिह | 705 | 16 | धात्रादे | 731 | 8 |
| कौषीतकि | 706 | 7 | यया रीत्या | 732 | 6 |
| विदुषां | 707 | 4 | धीवत् वर्तते- | ,, | 15 |
| उदगयनाब्द | ,, | 13 | विश्वस्यात्मे | 733 | 17 |
| वात्यया नुन्नः | 708 | 21 | स्तत्रैष मुक्त | 736 | 14 |
| परचेतन | 709 | 9 | नियमाभावस्य | 739 | 20 |
| शब्दैक्ये | 710 | 4 | इति मुक्त स्मानं | 740 | 15 |
| वर्तित्वात् | 711 | 9 | इति) श्रुतिज्ञापितम् | 741 | 9 |
| गत्याद्य | ,, | 21 | वर्णनीयः | 743 | 16 |
| स्वस्व भिलाषा | 713 | 2 | व्यवहारे | 744 | 27 |
| रोहणावसानाम् | 714 | 17 | तत्तत्सेवा | 745 | 5 |
| मलब्ध्वा अद्य लब्धेन | ,, | 18 | निरुपधिक | 745 | 12 |
| ज्ञानासङ्कोचे | 719 | 12 | एतत्पादीया | 747 | 17 |

| शुद्धम् | पृ. | पं. |
|---|---|---|
| दितरेषां | 748 | 11 |
| पतिं प्रति शेषत्वम् | 749 | 6 |
| वह्न्यौष्ण्यादि | ,, | 12 |
| चेतनानाम् | 750 | 6 |
| रामानुजा | ,, | 13 |
| अधिकरणसारावलिः | 751 | 1 |
| परमात्माविभक्त | ,, | 8 |
| सहेक्षा | ,, | 10 |
| तूलवत्-निःसार | 753 | 21 |
| अपवर्गादितरे | 754 | 2 |
| ब्रह्म भुंक्ते | ,, | 9 |
| शतसङ्ख्यानि | 755 | 20 |
| प्रदमिदमुभयं | 756 | 12 |
| रामानुजा | 758 | 20 |
| निगमाचार्य | ,, | 25 |
| पूर्वकः अर्थसङ्ग्रहः | 761 | 5 |
| [ नकारः त्याज्यः | ,, | 12 |
| न स्वात्मानम् यतो | ,, | 13 |
| कृत्यं त्वं | 762 | 12 |
| र्निष्प्रपतरम् | ,, | 25 |
| स्मार्ताख्यक्रिया | 764 | 22 |
| स्वापृथक्सिद्ध | 767 | 18 |
| कामयमानः | 769 | 22 |
| विविक्ततया | 770 | 4 |
| णोऽन्यत् | ,, | 13 |
| कत्वादिरूपाः | 771 | 2 |
| अदितिः पृथिवी | 771 | 20 |
| प्राणमयो | 775 | 2 |
| मृत्यवो भवन्ति | ,, | 16 |
| पृथिव्याः परितः | 778 | 18 |
| तस्याः सागराम्बरत्वात् | ,, | 19 |
| अहरह आपूर्य | ,, | 20 |
| आतिवाहिक | 779 | 2 |
| स्वरूपवान् | 781 | 12 |
| जिगमिषिता | 784 | 5 |
| पर्वक्रम | 785 | 7 |
| ज्ञाताद्धर्मात् | 786 | 11 |
| पर्यवसाय्यर्थ | ,, | 19 |
| आहार | ,, | 21 |
| पार्श्व | 782 | 22 |
| मत्रातिदिश्य | 788 | 11 |
| देवताद्वारा | 790 | 4 |
| रन्यस्य च बाधनेन | ,, | 18 |
| द्रव्यस्य | 794 | 16 |
| द्यावा-पृथिव्या | 797 | 12 |
| कर्मणां | 799 | 27 |
| रूपाणां सार | 801 | 11 |
| इति व्याहृतिस्वरूप | ,, | 13 |
| सर्वोत्कृष्टतां | 802 | 1 |
| यं आत्मान त्वमुपासीनो वर्तसे | ,, | 8 |
| परमात्मात्मकत्व | 803 | 17 |
| ब्रह्मवेदन | 805 | 11 |

| शुद्धम् | पृ. | पं. |
|---|---|---|
| चक्षुः-श्रोत्रा | 807 | 16 |
| अगृह्यमाण | 808 | 17 |
| प्रविष्टैः सर्वै | 809 | 13 |
| तदेतद्द्वयं | 810 | 25 |
| स तत्त्व | 811 | 5 |
| वा क्षत्रिय वा वैश्य | 814 | 16 |
| स्वसम्बद्धं | 816 | 5 |
| स्वविप्रकृष्टं | ,, | 6 |
| स्वरूपावस्थानम् | ,, | 15 |
| नियमस्तद्दृष्टेः | 817 | 4 |
| निर्विद्याऽथ | 820 | 16 |
| माहारजनं | 823 | 13 |
| शरीरभागेभ्यः | 826 | 20 |
| मनश्चितादयः | 830 | 5 |
| (छां. 6-3-1) (तेषां खलु इत्यत्र | 831 | 4 |
| प्रेरकः | 832 | 7 |
| द्वादशाहाख्येन | 833 | 22 |
| कुर्यां तदा मम | 837 | 6 |
| प्रतिग्रहकृतो | 838 | 6 |
| स्वरूपरूपगुण | 840 | 15 |
| अनिगृहीता | ,, | 24 |
| अब्रह्मनिष्ठाः | 845 | 13 |
| स्वभोगोप | ,, | 17 |
| प्रक्रान्तः | 846 | 14 |
| अमुमुक्षूणां | 848 | 5 |
| स्वीयस्वरूप | 849 | 25 |
| विन्दते, सः ब्राह्म | 852 | 25 |
| ब्रह्मसंस्थो | 853 | 1 |
| ब्रह्मैवेदं | ,, | 5 |
| साक्षात्कर्तुः | 854 | 17 |
| भूय एव मा | 855 | 6 |
| प्राणचितादयो | ,, | 23 |
| ध्रुवया | 856 | 6 |
| दमुं लोकं | 881 | 5 |
| आयतनवा | 886 | 5 |
| सत्तादिविविध | 887 | 9 |
| ( अग्नि॰. ब्रा | 888 | 11 |
| श्रुतावुप | 889 | 20 |
| सच्छब्दिता | ,, | 23 |
| स तया | 890 | 9 |
| त्वोपयोगितया सर्वपूर्णत्ववत् | ,, | 26 |
| जातं भवेयम् | 892 | 1 |
| विघटकक्षुद्र | 893 | 9 |
| सर्वापेक्षा च यज्ञादि | 896 | 10 |
| सुकृता | 899 | 12 |
| अधिकारः-प्रस्तावः, प्रकरणम् | 903 | 21 |
| अध्यापकम् | 905 | 16 |
| चेतनैः | 906 | 10 |
| सङ्कल्प्य सङ्कल्प्य | 913 | 17 |
| दारुमय्यः शलाकाः | 914 | 14 |

| शुद्धम् | पृ. | पं. | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|
| त्रोक्तस्य गुणविशेषणस्य | 914 | 25 | प्रतिसञ्चरः | 921 | 6 |
| ग्रहाः— | 915 | 3 | प्रत्याहरणम्-मनसो विषय वैमुख्यापादनम् | ,, | 20 |
| लक्षणां दशां प्राप्तुं | 916 | 11 | आत्मनः सङ्कल्प | 922 | 4 |
| ग्रहीतुमशक्यम् | ,, | 23 | भाक्तत्वम् | 923 | 11 |
| स्मृतीत्यादि पंक्तिः त्याज्या | 917 | 12 | हरिद्रामयं | 924 | 6 |
| शस्त्रविशेषः | 919 | 23 | | | |
| देहः, जीवात्मा परमात्मा च (पुरुषाधिष्ठितत्वात्, पुरि शयनात् पूर्णत्वात्) | 920 | 6 | | | |

—o—